# THE

# BHÁSHÁ PARICHCHHEDA,

AND

## SIDDHÁNTA MUKTÁVALI.

AN ELEMENTARY TREATISE

ON THE TERMS OF

## LOGIC,

*WITH ITS COMMENTARY*

BY

## Viswanátha Panchánana Bhatta.

EDITED BY

**LAKSHMÍ NÁRÁYANA VASÁKA.**

WITH THE ASSISTANCE OF

PANDITA AJITA NÁTHA NYÁYARATNA OF NUDDEA.

CALCUTTA:

PRINTED AND PUBLISHED BY BABU BHUVANA CHANDRA VASAKA.

AT SANGBADA JNANARATNAKARA PRESS.

No. 8. NIMTOLLAH GHAT STREET.

1871.

पृष्ठाङ्क

पृष्ठाङ्काः

| पृष्ठाङ्कः | पङ्क्त्यङ्कः | अशुद्धं | शुद्धं |
|---|---|---|---|
| १८३ | १८ | सम्बलित | संवलित |
| १८७ | ४ | सम्विभाग | संविभाग |
| १८८ | ४ | बिडौजः | विडौजः |
| १९३ | १५ | नवल | नभव |
| १९५ | १५ | युक्तान्तर | युक्त्यन्तर |
| २०८ | ११ | नुकूला | नुकूल |
| २१८ | ९ | धुमावलि | धूमावलि |
| २३५ | १३ | विभ्रता | बिभ्रता |
| २३७ | ४।६।१३ | दीपाया। निष्कक-रुणारस | दीपया। निष्काक-रुणारस |
| " | १३ | करुणारस | करुणारस |
| २५२ | १४ | अकालिक | आकालिक |
| २७० | १६ | उदीता | उदीरिता |
| २७७ | ६ | [illegible] | बबाधे |
| २९५ | १२ | परस्येरेण | परस्परेण |
| २९७ | ९ | सर्व्वाऽपि | सर्व्वा अपि |
| २९९ | १७ | घम्र | घस्र |
| ३०१ | ५ | विभागाः | बिभागाः |
| ३३५ | २३ | ईत्यनुमान | इत्यनुमान |
| ३४० | २१ | अभाच्युत् | अभोच्युत |
| ३५६ | २० | कुर्व्वत् | कुर्व्वन् |
| ३५८ | ५ | विधुत्वती | विधुन्वती |
| ३६१ | ३ | धुनर्विद्या | धनुर्विद्या |
| " | १० | हासितुर्वच्चसि | हसितुर्वर्चसि |
| ३६५ | १७ | ऊर्द्धीकृत | ऊर्द्धीकृत |
| ३६२ | १४ | यर्वधेन | यर्बधेन |
| ३७६ | ७ | एवंम्भूतेन | एवम्भूतेन |
| ३८१ | १२ | काराठक | कारीटक |
| ३८४ | ६ | तहृय | तद्धृय |
| ३८४ | १५ | वह्ननि | बह्ननि |

| पृष्ठाङ्कः | पंक्त्यङ्कः | अशुद्धं | शुद्धं |
|---|---|---|---|
| ५६९ | ७ | म्रद्धा | म्रद्धा |
| ५७४ | ११ | मलयोर्रते | मलयोरते |
| ५७९ | ११ | बाद्यविशेष | वाद्यविशेष |
| ५८२ | ६ | ग्रथितैः | ग्रथितैः |
| ५८५ | ४ | र्रति | रति |
| ५८७ | ३ | न प्राप्तं अत्यल्पं प्रापीत्यर्थः। | प्राप्तं अत्य[illegible] न प्रा[illegible] |
| ५९८ | १ | मृलदसीय | मृलमद[illegible] |
| ६०८ | २ | वागपमर्दं | वाक्[illegible]र्द |
| ६१६ | १५ | स तेन | सा ते[illegible] |
| ६२० | १५ | धृनति | धृति |
| ” | १८ | विश्रंस्य | विश्रस्य |
| ६२२ | ११ | [illegible]युक्तेर्रम्भा | दिव्ययुवतेरम्भा |
| ” | १२ | [illegible]ति | सेति |
| ६३५ | १४ | केलतीमदनयोर्रतिकामयो | केलतिमदनयोरतिकामयो |
| ६४२ | २० | यस्याः | यस्य |
| ६४३ | [illegible]४ | वीणात् | वील्लणात् |
| ६[illegible]८ | [illegible]५ | ध्वाच्चाणां | ध्वाङ्क्षाणां |
| ६९६ | ११ | क्ष्वि | च्क्ष्वि |
| ७५० | १० | नञाः | नञः |
| ” | ९ | वा | चा |
| ७५५ | १३ | विच्छेता | विच्छेत्ता |
| ७७२ | ९ | मैव | सैव |
| ७७६ | २२ | दृष्टु | द्रष्टु |
| ७७९ | २० | हृदस्य | हृदयस्य |
| ७९६ | १५ | स्याप | स्यप |
| ८१० | १७ | दन्त्वादेशा | द[illegible]ादेशा |
| ८१४ | ५ | स्पृष्ठु | स्प्रष्टु |
| ८२४ | २१ | मुखास् | मुखात् |

| पृष्ठाङ्कः | पंक्त्यङ्कः | अशुद्धं | शुद्धं |
|---|---|---|---|
| ८३२ | ५ | पूर्णा | पूर्णा |
| ८४२ | १ | बधित | बन्धित |
| ८६० | १२ | गन्धः | गन्धिः |
| ८७२ | १ | निवेये | निबेद्ये |
| ८७७ | १८ | व्यत | व्यत |
| ८९३ | १ | दज्ञ | प्राज्ञ |
| ८९९ | ४ | बतन्य | बबन्ध |
| ९०० | १ | नहुं | नहुं |
| ९०२ | १३ | रज्ञ | भ्रज्ञ |
| ९०५ | १८ | विभ | बिभ |
| ९०७ | १६ | छलि | छलि |
| ९०८ | १७ | वज्र | बज्र |
| ९१६ | ६ | यय | यद् |
| ९५१ | ६ | समोद्धृत | समोद्धृतं |
| ९६३ | १२ | नयमान्दकारिणं | नयमानन्दकारि |
| ९६६ | ९ | गन्तु | गन्तुं |
| ९६९ | १९ | त्वद्भवो | त्वद्[illegible] |
| ९७४ | ३ | रज्वा | [illegible]ज्वा |
| " | १२ | विप्रो | [illegible] |
| ९७९ | १० | भिन्दतीति | भिन्दन्तीति |
| ९८३ | १४ | मृगमतां | मृगयतां |
| ९८५ | २ | रागग | रागे[illegible] |
| १०११ | १३ | चोज्वलैः | चोज्ज्वलैः |
| १०२७ | ९ | उपयानन्तर | उदयानन्तर |
| १०३१ | ६ | वत्वा | बत्त्वा |
| १०३५ | १८ | उपचिचापि | उपचितापि |
| १०३८ | [illegible] | पौष्टिकाति | पौष्टि[illegible] |
| १०४५ | [illegible] | विभर्सि | [illegible] |
| १०४७ | २ | विधिना | विधुना |
| १०४८ | १८ | याथात्म्य | याथात्म्यं |

| पृष्ठाङ्कः | पंक्त्यङ्कः | अशुद्धं | शुद्धं |
|---|---|---|---|
| ,, | ,, | सुखे | मुखे |
| १०३९ | [illegible] | त्वम्भुव | त्वक्पुवं |
| १०५० | १ | सुनि | स्तुनि |
| १०५६ | १६ | पद्रा | पद्मा |
| १०७१ | ६ | ध्यमाज्ञ | ध्यमानज |
| १०७४ | ५।१७ | त्रिभ | विभ्र |
| १०८७ | १७ | मन्यनुभवे | मन्वनुभवे |
| १०८८ | ५ | तुबलापे | त्यबलापे |
| १०९१ | १ | खल | खलु |
| ११०३ | २० | मनुभूत | मननुभूत |

नमोगणेशाय ॥

# भाषापरिच्छेदः ॥

नूतनजलधररुचये गोपवधूटीदुकूलचौराय ।
तस्मै नमः कृष्णाय संसारमहीरुहस्य वीजाय ॥१॥
द्रव्यं गुणास्तथा कर्म्म सामान्यं सविशेषकम् ।
समवायस्तथाभावः पदार्थाः सप्त कीर्त्तिताः ॥२॥
क्षित्यप्तेजोमरुद्व्योमकालादिग्देहिनो मनः ।
द्रव्याण्यथ गुणारूपं रसोगन्धस्ततः परम् ॥३॥
स्पर्शः संख्यापरिमितिः पृथक्त्वञ्च ततः परम् ।
संयोगश्च विभागश्च परत्वञ्चापरत्वकम् ॥४॥
वुद्धिः सुखं दुःखमिच्छा द्वेषोयत्नोगुरुत्वकम् ।
द्रवत्वं स्नेहसंस्कारावदृष्टं शब्दएव च ॥५॥
उत्क्षेपणं ततोऽवक्षेपणमाकुञ्चनं तथा ।
प्रसारणञ्च गमनं कर्म्माण्येतानि पञ्च च ॥६॥
भ्रमणं रेचनं स्यन्दनोर्द्ध्वज्वलनमेव च ।
तिर्य्यग्गमनमप्यत्र गमनादेव लभ्यते ॥७॥
सामान्यं द्विविधं प्रोक्तं परञ्चापरमेव च ।
द्रव्यादित्रिकवृत्तिस्तु सत्तापरतयोच्यते ॥८॥

परभिन्ना च या जातिः सैवापरतयोच्यते ।
द्रव्यत्वादिकजातिस्तु परापरतयोच्यते ॥९॥
व्यापकत्वात्पराऽपि स्याद्व्याप्यत्वादपराऽपि च ।
अन्त्यो नित्यद्रव्यवृत्तिर्व्विशेषः परिकीर्त्तितः ॥१०॥
घटादीनां कपालादौ द्रव्येषु गुणकर्म्मणोः ।
तेषु जातेश्च सम्बन्धः समवायः प्रकीर्त्तितः ॥११॥
अभावस्तु द्विधा संसर्गान्योन्याभावभेदतः ।
प्रागभावस्तथा ध्वंसोऽप्यत्यन्ताभाव एव च ॥१२॥
एवं त्रैविध्यमापन्नः संसर्गाभाव इष्यते ।
सप्तानामपि साधर्म्यं ज्ञेयत्वादिकमुच्यते ॥१३॥
द्रव्यादयः पञ्च भावा अनेके समवायिनः ।
सत्तावन्तस्त्रयस्त्वाद्या गुणादिर्निर्गुणक्रियः ॥१४॥
सामान्यपरिहीनास्तु सर्व्वे जात्यादयो मताः ।
पारिमाण्डल्यभिन्नानां कारणत्वमुदाहृतम् ॥१५॥
अन्यथासिद्धिशून्यस्य नियता पूर्व्ववर्त्तिता ।
कारणत्वं भवेत्तस्य त्रैविध्यं परिकीर्त्तितम् ॥१६॥
समवायिकारणत्वं ज्ञेयमथाप्यसमवायिहेतुत्वम् ।
एवं न्यायनयज्ञैस्तृतीयमुक्तं निमित्तहेतुत्वम् ॥१७॥
यत्समवेतं कार्य्यं भवति ज्ञेयन्तु समवायिजनकं तत् ।
तत्रासन्नं जनकं द्वितीयमाभ्यां परं तृतीयं स्यात् ॥१८॥
येन सह पूर्व्वभावः कारणमादाय वा यस्य ।
अन्यं प्रति पूर्व्वभावे ज्ञाते यत्पूर्व्वभावविज्ञानम् ॥१९॥

आसत्तिराश्रयाणान्तु सामान्यज्ञानमिष्यते।
तदिन्द्रियजतद्धर्म्मबोधसामग्र्यपेक्ष्यते ॥६४॥
विषयी यस्य तस्यैव व्यापारो ज्ञानलक्षणा।
योगजो द्विविधः प्रोक्तो युक्तयुञ्जानभेदतः ॥६५॥
युक्तस्य सर्व्वदा भानं चिन्तासहकृतोऽपरः।
व्यापारस्तु परामर्शः करणं व्याप्तिधीर्भवेत् ॥६६॥
अनुमायां ज्ञायमानं लिङ्गन्तु करणं नहि।
अनागतादिलिङ्गेन न स्यादनुमितिस्तदा ॥६७॥
व्याप्यस्य पक्षवृत्तित्वधीः परामर्श उच्यते।
व्याप्तिस्तु साध्याभाववदवृत्तित्वं प्रकीर्त्तितम् ॥६८॥
यद्वा साध्यवदन्यस्मिन्नसम्बन्ध उदाहृतः।
अथवा हेतुमन्निष्ठविरहाप्रतियोगिना ॥६९॥
साध्येन हेतोरैकाधिकरण्यं व्याप्तिरुच्यते।
सिषाधयिषया शून्या सिद्धिर्यत्र न विद्यते ॥७०॥
सपक्षस्तत्र वृत्तित्वज्ञानादनुमितिर्भवेत्।
अनैकान्तो विरुद्धश्चाप्यसिद्धः प्रतिपक्षितः ॥७१॥
कालात्ययोपदिष्टश्च हेत्वाभासास्तु पञ्चधा।
आद्यः साधारणस्तु स्यात् स्यादसाधारणोमतः ॥७२॥
तथैवानुपसंहारी त्रिधानैकान्तिकोभवेत्।
यः सपक्षे विपक्षे च भवेत्साधारणस्तु सः ॥७३॥
यस्तूभयस्मात् व्यावृत्तः सचासाधारणोमतः।
तथैवानुपसंहारी केवलान्वयिपक्षकः ॥७४॥

संयोगश्च विभागश्च वेगश्चैते तु कर्मजाः ।
स्पर्शान्तपरिमाणैकपृथक्त्वस्नेहशब्दके ॥९७॥
भवेदसमवायित्वमथ वैशेषिके गुणे ।
आत्मनः स्यान्निमित्तत्वमुष्णस्पर्शगुरुत्वयोः ॥९८॥
वेगेऽपि च द्रवत्वे च संयोगादिद्वये तथा ।
परापरत्वद्वित्वादिद्विपृथक्त्वादिके पुनः ॥९९॥
द्विधैव कारणत्वं स्यादथ प्रादेशिको भवेत् ।
वैशेषिको विभुगुणः संयोगादिद्वयं तथा ॥१००॥
चक्षुर्ग्राह्यं भवेद्रूपं द्रव्यादेरुपलम्भकम् ।
चक्षुषः सहकारि स्यात् शुक्लादिकमनेकधा ॥१०१॥
जलादिपरमाणौ तन्नित्यमन्यत्सहेतुकम् ।
रसस्तु रसनाग्राह्यो मधुरादिरनेकधा ॥१०२॥
सहकारी रसज्ञाया नित्यतादि च पूर्ववत् ।
घ्राणग्राह्यो भवेद्गन्धो घ्राणस्यैवोपकारकः ॥१०३॥
सौरभश्चासौरभश्च स द्वेधा परिकीर्त्तितः ।
स्पर्शस्त्वगिन्द्रियग्राह्यस्त्वचः स्यादुपकारकः ॥१०४॥
अनुष्णाशीतशीतोष्णभेदात्स त्रिविधो मतः ।
काठिन्यादिः क्षितावेव नित्यतादि च पूर्ववत् ॥१०५॥
एतेषां पाकजत्वन्तु क्षितौ नान्यत्र कुत्रचित् ।
तत्रापि परमाणौ स्यात्पाको वैशेषिके नये ॥१०६॥
नैयायिकानान्तु नये द्व्यणुकादावपीष्यते ।
गणनाव्यवहारे तु हेतुः संख्याभिधीयते ॥१०७॥

नित्येषु नित्यमेकत्वमनित्ये नित्यमिष्यते ।
द्वित्वादयः परार्द्धान्ता अपेक्षाबुद्धिजा मताः ॥१०८॥
अनेकाश्रयपर्य्याप्ता एते तु परिकीर्त्तिताः ।
अपेक्षाबुद्धिनाशाच्च नाशस्तेषां निरूपितः ॥१०९॥
अनेकैकत्वबुद्धिर्या सापेक्षाबुद्धिरुच्यते ।
परिमाणं भवेन्मानव्यवहारस्य कारणम् ॥११०॥
अणु दीर्घं महद्ध्रस्वमिति तद्भेद ईरितः ।
अनित्ये तदनित्यं स्यान्नित्ये नित्यमुदाहृतम् ॥१११॥
संख्यातः परिमाणाच्च प्रचयादपि जायते ।
अनित्यं द्व्यणुकादौ तु संख्याजन्यमुदाहृतम् ॥११२॥
परिमाणं घटादौ तु परिमाणजमुच्यते ।
प्रचयः शिथिलाख्यो यः संयोगस्तेन जन्यते ॥११३॥
परिमाणं तूलकादौ नाशस्त्वाश्रयनाशतः ।
संख्यावत्तु पृथक्त्वं स्यात् पृथक्प्रत्ययकारणम् ॥११४॥
अन्योन्याभावतो नास्य चरितार्थत्वमुच्यते ।
अस्मात्पृथगिदं नेति प्रतीतिर्हि विलक्षणा ॥११५॥
अप्राप्तयोस्तु या प्राप्तिः सैव संयोग ईरितः ।
कीर्त्तितस्त्रिविधस्त्वेष आद्योऽन्यतरकर्म्मजः ॥११६॥
तथोभयक्रियाजन्यो भवेत्संयोगजोऽपरः ।
आदिमः श्येनशैलादिसंयोगः परिकीर्त्तितः ॥११७॥
मेषयोः सन्निपातो यः स द्वितीय उदाहृतः ।
कपालतरुसंयोगात्संयोगस्तरुकुम्भयोः ॥११८॥

तृतीयः स्यात्कर्म्मजोऽपि द्विधैव परिकीर्त्तितः ।
अभिघातोनोदनञ्च शब्दहेतुरिहादिमः ॥११९॥
शब्दाहेतुर्द्वितीयः स्याद्विभागोऽपि द्विधा भवेत् ।
एककर्म्मोद्भवस्त्वाद्योद्वयकर्म्मोद्भवोऽपरः ॥१२०॥
विभागजस्तृतीयः स्यात्तृतीयोऽपि द्विधा भवेत् ।
हेतुमात्रविभागोत्थोहेत्वहेतुविभागजः ॥१२१॥
परत्वञ्चापरत्वञ्च द्विविधं परिकीर्त्तितम् ।
दैशिकं कालिकञ्चापि मूर्त्तएव तु दैशिकम् ॥१२२॥
परत्वं सूर्य्यसंयोगभूयस्त्वज्ञानतोभवेत् ।
अपरत्वं तदल्पत्वबुद्धितः स्यादितीरितम् ॥१२३॥
तयोरसमवायी तु दिक्संयोगस्तदाश्रये ।
दिवाकरपरिस्पन्दपूर्व्वोत्पन्नत्वबुद्धितः ॥१२४॥
परत्वमपरत्वन्तु तदनन्तरबुद्धितः ।
अत्रत्वसमवायी स्यात्संयोगः कालपिण्डयोः ॥१२५॥
अपेक्षाबुद्धिनाशेन नाशस्तेषामुदाहृतः ।
बुद्धिः प्रकारः प्रागेव प्रायशोऽपि निरूपितः ॥१२६॥
अथावशिष्टोऽप्यपरः प्रकारः परिदर्श्यते ।
अप्रमाच प्रमा चेति ज्ञानं द्विविधमुच्यते ॥१२७॥
तच्छून्ये तन्मतिर्य्या स्यादप्रमा सा निरूपिता ।
तत्प्रपञ्चोविपर्य्यासः संशयोऽपि प्रकीर्त्तितः ॥१२८॥
आद्योदेहे यात्मबुद्धिः शङ्खादौ पीततामतिः ।
भवेन्निश्चयरूपा या संशयोऽथ प्रदर्श्यते ॥१२९॥

किंस्विन्नरो वा स्थाणुर्वेत्यादिबुद्धिस्तु संशयः ।
तदभावाप्रकारा धीस्तत्प्रकारा तु निश्चयः ॥१३०॥
स संशयो मतिर्या स्यादेकत्राभावभावयोः ।
साधारणादिधर्मस्य ज्ञानं संशयकारणम् ॥१३१॥
दोषोऽप्रमाया जनकः प्रमायास्तु गुणो भवेत् ।
पित्तदूरत्वादिरूपो दोषो नानाविधः स्मृतः ॥१३२॥
प्रत्यक्षे तु विशेष्येण विशेषणवता समम् ।
सन्निकर्षो गुणस्तु स्यादथ त्वनुमितौ गुणः ॥१३३॥
पक्षे साध्यविशिष्टे च परामर्शो गुणो भवेत् ।
शक्ये सादृश्यबुद्धिस्तु भवेदुपमितौ गुणः ॥१३४॥
शाब्दबोधे योग्यतायास्तात्पर्यस्याथवा प्रमा ।
गुणः स्याद्भ्रमभिन्नन्तु ज्ञानमत्रोच्यते प्रमा ॥१३५॥
अथवा तत्प्रकारं यज्ज्ञानं तद्वद्विशेष्यकम् ।
तत्प्रमा न प्रमा नापि भ्रमः स्यान्निर्विकल्पकम् ॥१३६॥
प्रकारतादिशून्यं हि सम्बन्धानवगाहि तत् ।
प्रमात्वं न स्वतो ग्राह्यं संशयानुपपत्तितः ॥१३७॥
व्यभिचारस्याग्रहोऽपि सहचाराग्रहस्तथा ।
हेतुर्व्याप्तिग्रहे तर्कः क्वचित् शङ्कानिवर्त्तकः ॥१३८॥
साध्यस्य व्यापको यस्तु हेतोरव्यापकस्तथा ।
स उपाधिर्भवेत्तस्य निष्कर्षोऽयं प्रदर्श्यते ॥१३९॥
सर्व्वे साध्यसमानाधिकरणाः सदुपाधयः ।
हेतोरेकाश्रये येषां स्वसाध्यव्यभिचारिता ॥१४०॥

व्यभिचारस्यानुमानमुपाधेस्तु प्रयोजनम् ।
शब्दोपमानयोर्नैव पृथक्प्रामाण्यमिष्यते ॥१४१॥
अनुमानगतार्थत्वादिति वैशेषिकं मतम् ।
तन्न सम्यग्विना व्याप्तिबोधं शाब्दादिबोधतः ॥१४२॥
द्वैविध्यन्तु भवेद्व्याप्तेरन्वयव्यतिरेकतः ।
अन्वयव्याप्तिरुक्तैव व्यतिरेकादथोच्यते ॥१४३॥
साध्याभावव्यापकत्वं हेत्वभावस्य यद्भवेत् ।
अर्थापत्तिस्तु नैवेह प्रमाणान्तरमिष्यते ॥१४४॥
व्यतिरेकव्याप्तिबुद्ध्या चरितार्था हि सा यतः ।
सुखन्तु जगतामेव काम्यं धर्म्मेण जन्यते ॥१४५॥
अधर्म्मजन्यं दुःखं स्यात्प्रतिकूलं सचेतसाम् ।
निर्दुःखत्वे सुखे चेच्छा तज्ज्ञानादेव जायते ॥१४६॥
इच्छा तु तदुपाये स्यादिष्टोपायत्वधीर्यदि ।
चिकीर्षा कृतिसाध्यत्वप्रकारेच्छा च या भवेत् ॥१४७॥
तद्धेतुः कृतिसाध्येष्टसाधनत्वमतिर्भवेत् ।
बलवद्द्विष्टहेतुत्वमतिः स्यात्प्रतिबन्धिका ॥१४८॥
तदहेतुत्वबुद्धेस्तु हेतुत्वं कस्यचिन्मते ।
द्विष्टसाधनताबुद्धिर्भवेद्द्वेषस्य कारणम् ।
प्रवृत्तिश्च निवृत्तिश्च तथा जीवनकारणम् ॥१४९॥
एवं प्रयत्नत्रैविध्यं तान्त्रिकैः परिदर्शितम् ।
चिकीर्षाकृतिसाध्येष्टसाधनत्वमतिस्तथा ॥१५०॥

उपादानस्य चाध्यक्षं प्रवृत्तौ जनकं भवेत् ।
निवृत्तिस्तु भवेद्द्वेषाद्द्विष्टसाधनता धियः ॥१५१॥
यत्नोजीवनयोनिस्तु सर्वदातीन्द्रियोभवेत् ।
शरीरे प्राणसञ्चारे कारणं परिकीर्त्तितम् ॥१५२॥
अतीन्द्रियं गुरुत्वं स्यात्पृथिव्यादिद्वये तु तत् ।
अनित्ये तदनित्यं स्यान्नित्ये नित्यमुदाहृतम् ॥१५३॥
तदेवासमवायि स्यात्पतनाख्ये तु कर्म्मणि ।
सांसिद्धिकद्रवत्वं स्यान्नैमित्तिकमथापरम् ॥१५४॥
सांसिद्धिकन्तु सलिले द्वितीयं क्षितितेजसोः ।
परमाणौ जले नित्यमन्यत्रानित्यमुच्यते ॥१५५॥
नैमित्तिकं वह्नियोगात्तपनीयघृतादिषु ।
द्रवत्वंस्यन्दने हेतुर्निमित्तं संग्रहे तु तत् ॥१५६॥
स्नेहोजले सनित्योऽणावनित्योऽवयविन्यसौ ।
तैलान्तरे तत्प्रकर्षाद्दहनस्यानुकूलता ॥१५७॥
संस्कारभेदोवेगोऽथस्थितिस्थापकभावने ।
मूर्त्तमात्रे तु वेगः स्यात्कर्म्मजोवेगजः क्वचित् ॥१५८॥
स्थितिस्थापकसंस्कारः क्षितौ केचिच्चतुर्ष्वपि ।
अतीन्द्रियः सविज्ञेयः क्वचित्स्पन्देऽपि कारणम् ॥१५९॥
भावनाख्यस्तु संस्कारोजीववृत्तिरतीन्द्रियः ।
उपेक्षानात्मकस्तस्य निश्चयः कारणं भवेत् ॥१६०॥
स्मरणे प्रत्यभिज्ञायामप्यसौ हेतुरुच्यते ।
धर्माधर्मावदृष्टं स्याद्धर्मः स्वर्गादिसाधनम् ॥१६१॥

गङ्गास्नानादियागादिव्यापारः परिकीर्त्तितः।
कर्मनाशाजलस्पर्शादिना नाश्यस्त्वसौ मतः॥१६२॥
अधर्मोनरकादीनां हेतुर्निन्दितकर्मजः।
प्रायश्चित्तादिनाश्योऽसौ जीववृत्ती त्विमौ गुणौ॥१६३॥
इमौ तु वासनाजन्यौ ज्ञानादपि विनश्यतः।
शब्दोध्वनिश्च वर्णश्च मृदङ्गादिभवोध्वनिः॥१६४॥
कण्ठसंयोगादिजन्यावर्णास्ते कादयोमताः।
सर्वः शब्दोनभोवृत्तिः श्रोत्रोत्पन्नस्तु गृह्यते॥१६५॥
वीचीतरङ्गन्यायेन तदुत्पत्तिस्तु कीर्त्तिता।
कदम्बकोरकन्यायादुत्पत्तिः कस्यचिन्मते॥१६६॥
उत्पन्नः कोविनष्टः कइति बुद्धेरनित्यता।
सोऽयं कइति बुद्धिस्तु साजात्यमवलम्बते॥१६७॥
तदेवौषधमित्यादौ सजातीयेऽपि दर्शनात्॥

इति भाषापरिच्छेदः समाप्तः॥



नमो गणेशाय ॥

# सिद्धान्तमुक्तावली ।

चूडामणीकृतविधुर्वलयीकृतवासुकिः ।
भवो भवतु भव्याय लीलाताण्डवपण्डितः ॥
निजनिर्मितकारिकावलीमतिसंक्षिप्तचिरन्तनोक्तिभिः ।
विशदीकरवाणि कौतुकान्ननु राजीवदयावशंवदः ॥
सद्द्रव्या गुणगुम्फिता सुकृतिनां सत्कर्मणां ज्ञापिका
सत्सामान्यविशेषनित्यमिलिता भावप्रकर्षोज्ज्वला ।
विष्णोर्वक्षसि विश्वनाथकृतिना सिद्धान्तमुक्तावली
विन्यस्ता मनसो मुदं वितनुतां सद्युक्तिरेषा चिरम् ॥

विघ्नविघाताय कृतं मङ्गलं शिष्यशिक्षायै निबध्नाति नूतनेत्यादि । ननु मङ्गलं न विघ्नध्वंसं प्रति न वा समाप्तिं प्रति कारणं विनापि मङ्गलं नास्तिकादीनां ग्रन्थे निर्विघ्नपरिसमाप्तिदर्शनादिति चेन्न अविगीतशिष्टाचारविषयत्वेन मङ्गलस्य सफलत्वे सिद्धे तत्र च फलजिज्ञासायां सम्भवति दृष्टफलकत्वेऽदृष्टफलकल्पनाया अन्याय्यत्वात् उपस्थितत्वाच्च समाप्तिरेव हि फलं कल्प्यते । इत्थञ्च यत्र मङ्गलं

न दृश्यते तत्रापि जन्मान्तरीयं तत्कल्प्यते यत्र च
सत्यपि मङ्गले समाप्तिर्न दृश्यते तत्र बलवत्तरोवि-
घ्नोविघ्नप्राचुर्य्यं वा बोध्यं, प्रचुरस्यैव बलवत्तर
विघ्ननिराकरणकारणत्वं,विघ्नध्वंसस्तु मङ्गलस्य द्वार
मित्याहुः। नव्यास्तु मङ्गलस्य विघ्नध्वंसएव फलं स
माप्तिस्तु बुद्धिप्रतिभादिकारणकलापात्। न च स्वतः
सिद्धविघ्नविरहवता कृतमङ्गलस्य निष्फलत्वापत्ति
रिति वाच्यं। इष्टापत्तेः, विघ्नाशङ्कया तदाचरणात्,
तथैव शिष्टाचरणात् न च तस्य निष्फलत्वे तद्बोधक
शिष्टाचारानुमितवेदाप्रामाण्यापत्तिरिति वाच्यं स
ति विघ्ने तन्नाशस्यैव वेदबोधितत्वात् अतएव पाप
भ्रमेण कृतप्रायश्चित्तस्य निष्फलत्वेऽपि न तद्बोधक
वेदाप्रामाण्यं मङ्गलन्तु विघ्नध्वंसविशेषे कारणं वि
घ्नध्वंसविशेषे च विनायकस्तवपाठादि। क्वचिच्च
विघ्नात्यन्ताभावएव समाप्तिसाधनं प्रतिबन्धकसंसर्गा
भावस्यैव कार्य्यजनकत्वात् इत्यञ्च नास्तिकादिकृत
ग्रन्थेषु जन्मान्तरीयमङ्गलजन्यदुरितध्वंसः स्वतःसि
द्धविघ्नात्यन्ताभावो वास्तीति न व्यभिचारइत्याहुः।
संसारेति संसारएव महीरुहोवृक्षस्तस्य बीजाय
एतेन ईश्वरे प्रमाणमपि दर्शितं भवति तथाहि
घटादिकार्य्यं कर्तृजन्यं तथा क्षित्यङ्कुरादिकमपि न
च तत्कर्तृत्वमस्मदादीनां सम्भवतीत्यतस्तत्कर्तृत्वेने

त्वसिद्धिः न च शरीराजन्यत्वेन कर्त्रजन्यत्वसाधकेन सत्प्रतिपक्ष इति वाच्यम् अप्रयोजकत्वात् मम तु कर्तृत्वेन कार्य्यत्वेन कार्य्यकारणभावएव अनुकूलतर्कः द्यावाभूमी जनयन्देवएकआस्ते विश्वस्य कर्त्ता भुवनस्य गोप्ता इत्याद्यागमाअप्यनुसन्धेयाः॥

पदार्थानामुद्देशमाह। द्रव्यंगुणाइत्यादि। सप्तमस्याभावत्वकथनादेव षण्णां भावत्वं प्राप्तं तेन भावत्वेन पृथगुपन्यासोन कृतः एते च पदार्थावैशेषिकप्रसिद्धानैयायिकानामप्यविरुद्धाः प्रतिपादितञ्चैवमेव भाष्ये अतएव उपमानचिन्तामणौ सप्तपदार्थभिन्नतया शक्तिसादृश्ययोरतिरिक्तपदार्थत्वमाशङ्कितम्। ननु कथमेतएव पदार्थाः शक्तिसादृश्यादीनामप्यतिरिक्तपदार्थत्वात्तथाहि मण्यादिसमवहितेन वह्निना दाहोन जन्यते तच्छून्येन तु जन्यते तत्र मण्यादिना वह्नौ दाहानुकूला शक्तिर्नाश्यते उत्तेजकेन मण्याद्यपसरणेन च जन्यतइति कल्प्यते एवं सादृश्यमप्यतिरिक्तपदार्थः तद्धि न षट्पदार्थेष्वन्तर्भवति सामान्येऽपि सत्त्वात् यथा गोत्वं नित्यं तथा अश्वत्वमपीति सादृश्यप्रतीतेः नाप्यभावः सत्त्वेन प्रतीयमानत्वादिति चेन्न मण्याद्यभावविशिष्टवह्न्यादेर्दाहादिकं प्रति स्वातन्त्र्येण मण्यभावादेरेव वा हेतुत्वकल्पनेन सामञ्जस्ये अनन्तशक्तितत्प्रागभा

वच्छं सकल्पनानौचित्यात् नचोत्तेजके सति मणिप्रतिबन्धकसद्भावेऽपि कथं दाहइति वाच्यम् उत्तेजकाभावविशिष्टमणिसामान्याभावस्य हेतुत्वात् सादृश्यमपि न पदार्थान्तरं किन्तु तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वं यथा चन्द्रभिन्नत्वे सति चन्द्रगताह्लादकत्वादिमत्त्वं मुखे चन्द्रसादृश्यमिति॥

द्रव्याणि विभजते। क्षित्यबिति एतानि नव द्रव्याणि इत्यर्थः नतु द्रव्यत्वजातौ किम्मानं न हि तत्र प्रत्यक्षं प्रमाणं घृततैलः प्रभृतिषु द्रव्यत्वाग्रहादिति चेन्न कार्य्यसमवायिकारणतावच्छेदकतया संयोगस्य विभागस्य वा समवायिकारणतावच्छेदकतया तत्सिद्धिरिति नतु दशमं द्रव्यन्तमः कुतोनोक्तं तद्धि प्रत्यक्षेण गृह्यते तस्य च रूपवत्त्वात् कर्मवत्त्वाच्च द्रव्यत्वं तच्च गन्धशून्यत्वात् न पृथिवी नीलरूपवत्त्वाच्च न जलादिकं तत्प्रत्यक्षे चालोकनिरपेक्षं चक्षुः कारणम् इति चेन्न आवश्यकतेजोऽभावेनोपपत्तौ द्रव्यान्तरकल्पनाया अन्याय्यत्वात् रूपवत्ताप्रतीतिस्तु भ्रमरूपा कर्मवत्त्वप्रतीतिरपि आलोकापसारणौपाधिकी भ्रान्तिरेव तमसोऽतिरिक्तत्वेऽनन्तावयवादिकल्पनागौरवञ्च स्यात् सुवर्णं यथा तैजसन्तर्भावस्तथा वक्ष्यते॥

गुणान् विभजते॥ अथ गुणाइति। एते

गुणाश्चतुर्विंशति संख्यकाः कण्ठेन कण्ठतश्चशब्देन च दर्शिताः। तत्र गुणत्वादिजातिसिद्धिरग्रे वक्ष्यते॥

कर्माणि विभजते॥ उत्क्षेपणमिति कर्मत्व जातिस्तु प्रत्यक्षसिद्धा एवमुत्क्षेपणत्वादिकमपि नन्वत्र भ्रमणादिकमपि पञ्चकर्माधिकतया कुतो नोक्तमत आह भ्रमणमित्यादि॥

सामान्यं निरूपयति। सामान्यमिति तल्लक्षणन्तु नित्यत्वे सत्यनेकसमवेतत्वम् अनेकसमवेतत्वं संयोगादीनामप्यस्त्यत उक्तं नित्यत्वे सतीति नित्यत्वे सति समवेतत्वं गगनपरिमाणादीनामप्यस्त्यत उक्तम् अनेकेति नित्यत्वे सत्यनेकवृत्तित्वमत्यन्ताभावेऽप्यस्तीति वृत्तित्वसामान्यं विहाय समवेतत्वमित्युक्तम् एकमात्रव्यक्तिवृत्तिस्तु न जातिः तथाचोक्तं व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः। रूपहानिरसम्बन्धो जातिबाधकसंग्रहः। एकव्यक्तिकत्वादाकाशत्वं न जातिः तुल्यव्यक्तिकत्वात् घटत्वं कलसत्वं न जातिद्वयं सङ्कीर्णत्वात् भूतत्वं मूर्त्तत्वं न जातिः अनवस्थाभयात् सामान्यत्वं न जातिः विशेषस्य व्यावृत्तस्वभावस्य रूपहानिः स्यात् अतो विशेषत्वं न जातिः समवायसम्बन्धाभावात् समवायोन जातिः॥

द्रव्यादीति। परत्वम् अधिकदेशवृत्तित्वम् अपरत्वम्

अल्पदेशवृत्तित्वं सकलजात्यपेक्षयाऽधिकदेशवृत्ति-त्वात् सत्तायाः परत्वम् एतद्बोधनायैव द्रव्यादित्रिक वृत्तिरित्युक्तं,तदपेक्षया चान्यासां जातीनामपरत्वं प रमिन्नासत्ता भिन्ना,व्यापकत्वादिति पृथिवीत्वाद्यपे क्षया व्यापकत्वादधिकदेशवृत्तित्वात् द्रव्यत्वादेः प रत्वं,सत्तापेक्षया व्याप्यत्वात् अल्पदेशवृत्तित्वाच्च द्रव्यत्वस्यापरत्वं तथाच धर्मद्वयसमावेशादुभयम विरुद्धम्॥

विशेषं निरूपयति। अन्त्यइति अन्ते अवसा ने वर्त्ततइत्यन्त्यः यदपेक्षया विशेषोनास्तीत्यर्थः एक मात्रवृत्तिरिति फलितार्थः घटादीनां द्व्यणुकपर्य्यन्ता नां तत्तदवयवभेदात् परस्परं भेदः परमाणूनां पर स्परभेदकोविशेषएव स तु स्वत एव व्यावृत्तः तेन तत्र विशेषान्तरापेक्षा नास्तीति भावः॥

समवायं दर्शयति ५ – घटादीनामिति।अवयवा वयविनोर्जातिव्यक्त्योर्गुणगुणिनोः क्रियाक्रियावतो र्नित्यद्रव्यविशेषयोश्च यः सम्बन्धः स समवायः। सम वायत्वं नित्यसम्बन्धत्वं। तत्र प्रमाणन्तु गुणक्रियादि विशिष्टबुद्धिर्विशेषणविशेष्यसम्बन्धविषया विशिष्टबु-द्धित्वात् दण्डीपुरुषइति विशिष्टबुद्धिवत् इत्यनुमाने संयोगादिबाधात् समवायसिद्धिः न च स्वरूपसम्बन्धे न सिद्धसाधनम् अर्थान्तरं वा अनन्तस्वरूपाणां सम्ब

न्यत्वकल्पने गौरवात् लाघवादेकसमवायसिद्धिः न च समवायस्यैकत्वे वायौ रूपवत्ताबुद्धिप्रसङ्गः तत्र रूपसमवायसत्त्वेऽपि रूपाभावात् न चैवम् अभावस्य वैशिष्ट्यं सम्बन्धान्तरं सिध्येदिति वाच्यं तस्य नित्यत्वे भूतले घटानयनानन्तरमपि घटाभावबुद्धिप्रसङ्गात् घटाभावसम्बन्धस्य तत्र सत्त्वात् तस्य नित्यत्वात् अन्यथा देशान्तरेऽपि तत्प्रतीतिर्न स्यात् वैशिष्ट्यस्य च तत्र सत्त्वात् मम तु मते घटे पाकरक्ततादशायां श्यामरूपस्य नष्टत्वान्न तद्वत्ताबुद्धिः वैशिष्ट्यस्यानित्यत्वे त्वनन्तवैशिष्ट्यकल्पने तत्रैव गौरवम् इत्यञ्च तत्तत्कालीनतत्तद्भूतलादिकं तत्तदभावानां सम्बन्धः ॥

अभावं विभजते । अभावस्त्विति । अभावत्वं द्रव्यादिषट्कान्योन्याभाववत्त्वं । संसर्गेति । संसर्गाभावान्योन्याभावभेदादित्यर्थः । अन्योन्याभावस्यैकविधत्वात्तद्विभागाभावात् ॥ संसर्गाभावं विभजते ॥ प्रागभावइति । संसर्गाभावत्वम् अन्योन्याभावभिन्नाभावत्वम् । अन्योन्याभावत्वं तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वं । विनाश्यभावत्वं प्रागभावत्वं । जन्याभावत्वं ध्वंसत्वं । नित्यसंसर्गाभावत्वम् अत्यन्ताभावत्वं । यत्र तु भूतलादौ घटादिकमपसारितं पुनरानीतञ्च तत्र घटकालस्य सम्बन्धाघटकतया अत्यन्ताभावस्य

नित्यत्वेऽपि घटकाले न घटात्यन्ताभाववुद्धिः तत्र उत्पादविनाशशाली चतुर्थोऽयमभावइति केचित् अत्र ध्वंसप्रागभावयोरधिकरणे नात्यन्ताभावइति प्राचीनमतं श्यामघटे रक्तोनास्तीति रक्तघटेश्यामो नास्तीति धीश्च प्रागभावध्वंसञ्चावगाहते न तु तद त्यन्ताभावं नव्यास्तु तत्र विरोधे मानाभावात् ध्वंसा दिकालावच्छेदेनाप्यत्यन्ताभावोवर्त्ततइति प्राहुः। नन्वस्तु अभावानामधिकरणात्मकत्वं लाघवादिति चेन्न अनन्ताधिकरणात्मकत्वकल्पनामपेक्ष्यातिरिक्तक ल्पनायाएव लघीयस्त्वात् एवञ्च आधाराधेयभावो ऽप्युपपद्यते एवञ्च तत्तच्छब्दगन्धरसाद्यभावानां प्रत्यक्षत्वमुपपद्यते अन्यथा तत्तदधिकरणानां तत्त दिन्द्रियाणामग्राह्यत्वादप्रत्यक्षत्वं स्यात् एतेन ज्ञान विशेषकालविशेषाद्यात्मकत्वमत्यन्ताभावस्येति प्रत्यु क्तम् अप्रत्यक्षत्वापत्तेः॥

इदानीं पदार्थानां साधर्म्यं वैधर्म्यञ्च व[illegible] प्र क्रमते सप्तानामित्यादि। समानोधर्मोयेषां ते स धर्माणः तेषां भावः साधर्म्यं समानोधर्मइति फलि तार्थः एवं विरुद्धोधर्मोयेषां ते विधर्माणः तेषां भा वः वैधर्म्यं विरुद्धोधर्मइति फलितार्थः ज्ञेयत्वं ज्ञान विषयता सा च सर्व्वत्रैवास्ति ईश्वरादिज्ञानविषयता याः केवलान्वयित्वात् एवम् अभिधेयत्वप्रमेयत्वादिकं

र्षो ध्येयम् । द्रव्येति द्रव्यगुणकर्मसामान्यविशेषाणां सा धर्म्यमनेकत्वं समवायित्वञ्च यद्यप्यनेकत्वम् अभावेऽप्यस्ति तथाप्यनेकत्वे सति भावत्वं पञ्चानां साधर्म्यं तथाच अनेकभाववृत्तिपदार्थविभाजकोपाधिमत्त्वं फलितार्थः तेन घटादौ प्रत्येकं नाव्याप्तिः समवायित्वं समवायसम्बन्धेन सम्बन्धित्वं न तु समवायवत्त्वं सामान्यादावभावात् तथाच समवेतवृत्तिपदार्थविभाजकोपाधिमत्त्वं फलितार्थः तेन नित्यद्रव्येषु नाव्याप्तिः सत्तावन्त इति द्रव्यगुणकर्मणां सत्तावत्त्वमित्यर्थः । गुणादिरिति यद्यपि गुणक्रियाशून्यत्वमाद्यक्षणे घटादावतिव्याप्तं क्रियाशून्यत्वञ्च गगनादावतिव्याप्तं तथापि गुणवद्वृत्तिधर्म्मवत्त्वं कर्मवद्वृत्तिपदार्थविभाजकोपाधिमत्त्वं तदर्थः नहि घटत्वादिकं द्रव्यत्वं वा गुणवद्वृत्ति कर्मवद्वृत्ति वा किन्तु गुणत्वादिकं तथा आकाशत्वादिकन्तु न पदार्थविभाजकोपाधिः यद्वा गुणवृत्तित्वे सति कर्मवृत्तित्वे सति वा सत्ताव्याप्यजातिशून्याभावत्वं विवक्षितं गुणकर्मणोरव्याप्तिवारणाय गुणवद्वृत्तिकर्मवद्वृत्तीति वा पुनस्तत्रैवाव्याप्तिवारणाय सत्ताव्याप्येति व्याप्तिश्च भेदगर्भानिवेशिता इत्यतोन दोषः द्रव्यगुणान्यतरत्वमादाय तत्रैवाव्याप्तिवारणाय जातीति अभावेऽति

व्यभिचारवारणाय भावत्वमिति गुणवद्वृत्तिः सत्ताख्या जातिर्द्रव्यत्वं तच्छून्यत्वं पञ्चानामस्त्येव॥

सामान्येति। सामान्यानधिकरणत्वं सामान्यादीनामित्यर्थः पारिमाण्डल्येति पारिमाण्डल्यम् अणुपरिमाणं कारणत्वं तद्भिन्नानामित्यर्थः अणुपरिमाणं न तु कस्यापि कारणं तद्धि स्वाश्रयारब्धद्रव्यपरिमाणारम्भकं भवेत् तच्च न सम्भवति परिमाणस्य स्वसमानजातीयोत्कृष्टपरिमाणजनकत्वात् महदारब्धस्य महत्तरत्ववत् अणुजन्यस्याणुतरत्वप्रसङ्गात् एवं परममहत्परिमाणम् अतीन्द्रियसामान्यं विशेषाश्चेति बोध्यम् इदमपि योगिप्रत्यक्षे विषयस्य न कारणत्वं ज्ञायमानसामान्यं न प्रत्यासत्तिः ज्ञायमानं लिङ्गं नानुमितिकारणम् इत्यभिप्रायेण मानसप्रत्यक्षे आत्ममहत्त्वस्य कारणत्वात् महत्परिमाणं कालादेर्बोध्यं तस्यापि न कारणत्वमित्याचार्य्याणामाशयः इत्यन्ये तन्न ज्ञानातिरिक्तं प्रति कारणतायाः आवश्यकत्वात्। ननु कारणत्वं किमत आह अन्यथेति तस्य कारणत्वस्य तत्र समवायिकारणे आसन्नं प्रत्यासन्नं कारणं द्वितीयमसमवायिकारणमित्यर्थः अत्र यद्यपि तुरीतन्तुसंयोगानां पटासमवायिकारणत्वं स्यात् एवं वेगादीनामपि अभिघाताद्यसमवायिकारणत्वं स्यात् एवं ज्ञानादिकमिच्छाद्य

समवायिकारणं स्यात् तथापि पटासमवायिकारण लक्षणे तुरीतन्तुसंयोगभिन्नत्वं देयं तुरीतन्तुसंयोगस्तु तुरीपटसंयोगं प्रत्यसमवायिकारणं भवत्येव एवं वेगादिकं वेगस्पन्दाद्यसमवायिकारणं भवत्येवेति तत्तत्कार्य्यासमवायिकारणलक्षणे तत्तद्भिन्नत्वं न देयम् आत्मविशेषगुणानान्तु कुत्राप्यसमवायिकारणत्वं नास्ति तेन तद्भिन्नत्वं सामान्यलक्षणे देयमेव अत्र समवायिकारणप्रत्यासन्नं द्विविधं कार्य्यैकार्थप्रत्यासत्त्या कारणैकार्थप्रत्यासत्त्या च आद्यं यथा घटादिकं प्रति कपालसंयोगादिकं तत्र कार्य्येण घटेन सह कारणस्य कपालसंयोगस्य एकस्मिन् कपाले प्रत्यासत्तिरस्ति द्वितीयं यथा घटरूपं प्रति कपालरूपमसमवायिकारणं तत्र घटरूपं प्रति कारणं घटः तेन सह कपालरूपस्य एकस्मिन् कपाले प्रत्यासत्तिरस्ति तथाच क्वचित्समवायसम्बन्धेन क्वचित्स्वसमवायिसमवायसम्बन्धेनेति फलितार्थः इत्यञ्च कार्य्ये कार्य्यकारणैकार्थान्यतरप्रत्यासत्त्या कारणं ज्ञानादिभिन्नमसमवायिकारणमिति सामान्यलक्षणं पर्य्यवसन्नम् आभ्यां समवायिकारणासमवायिकारणाभ्यां भिन्नं कारणं तृतीयं निमित्तकारणमित्यर्थः ॥

इदानीमन्यथासिद्धत्वमेव कियतां पदार्थानां तदाह येन इत्यादिना यत्कार्य्यं प्रति कारणस्य पूर्व्व

र्त्तिता येन रूपेण गृह्यते तत्कार्य्यं प्रति तद्रूपम न्यथासिद्धमिति भावः यथा घटं प्रति दण्डत्वमिति। द्वितीयमन्यथासिद्धमाह कारणमिति यस्य स्वातन्त्र्ये णान्वयव्यतिरेकौ न स्तः किन्तु स्वकारणमादायैव अन्वयव्यतिरेकौ गृह्येते तदन्यथासिद्धं यथा दण्ड रूपं तृतीयमाह अन्यं प्रतीति अन्यं प्रति पूर्व्ववर्त्ति त्वं गृहीत्वैव यस्य यत् कार्य्यं प्रति पूर्व्ववर्त्तित्वं गृह्य ते तस्य तत्कार्य्यं प्रत्यन्यथासिद्धत्वं यथा घटादिकं प्रत्याकाशस्य आकाशस्य हि घटादिकं प्रति आकाश त्वेन कारणत्वं स्यात् आकाशत्वं शब्दसमवायिका रणत्वम् अतःशब्दं प्रति जनकत्वं गृहीत्वैव घटादिकं प्रति जनकत्वं ग्राह्यमतस्तदन्यथासिद्धं शब्दाश्रय त्वेन कारणत्वे कान्यथा सिद्धिरिति चेत् पञ्चमीति गृहाण अथाकाशस्य शब्दं प्रतिजनकत्वे किमवच्छेद कमिति चेत् कवत्वादिकं विशेषपदार्थो वेति। च तुर्थमन्यथासिद्धमाह जनकं प्रतीति यत्कार्य्यजनकं प्रति पूर्व्ववर्त्तित्वं गृहीत्वैव यस्य यत्कार्य्यं प्रति पूर्व्व वर्त्तित्वं गृह्यते तस्य तत्कार्य्यं प्रत्यन्यथासिद्धत्वं यथा कुलालपितुर्घटं प्रति तस्य कुलालपितृत्वेन घटं प्रति जनकत्वेऽन्यथासिद्धिः कुलालत्वेन जन कत्वे त्विष्टापत्तिः कुलालमात्रस्य घटं प्रति जनक त्वात्। पञ्चममन्यथासिद्धिमाह अतिरिक्तमिति

नियतावश्यकपूर्व्वभाविनः अवश्यक्लृप्तनियतपूर्व्ववर्त्तिनएव कार्य्यसम्भवे तद्भिन्नमन्यथासिद्धमित्यर्थः अतएव प्रत्यक्षे महत्त्वं कारणमनेकद्रव्यवत्त्वमन्यथासिद्धं तत्र हि महत्त्वमवश्यं क्लृप्तं तेनानेक द्रव्यवत्त्वमन्यथासिद्धं न च वैपरीत्ये किं विनिगमकम् इति वाच्यं महत्त्वत्वजातेः कारणतावच्छेदकत्वे लाघवात् । रासभादिरिति यद्घटव्यक्तिं प्रति रासभस्य नियतपूर्व्ववर्त्तित्वमस्ति तत्रापि घटजातीयं प्रति सिद्धकारणभावैर्द्दण्डादिभिरेव तद्व्यक्तेरपि सम्भवे रासभोऽन्यथासिद्धइति भावः । एतेष्विति एतेषु पञ्चस्वन्यथासिद्धेषु मध्ये पञ्चमोऽन्यथासिद्ध आवश्यकः तेनैव परेषां चरितार्थत्वात् तथा हि दण्डादिभिरवश्यक्लृप्तनियतपूर्व्ववर्त्तिभिरेव कार्य्यसम्भवे दण्डत्वादिक मन्यथासिद्धं न च वैपरीत्ये किं विनिगमकम इति वाच्यं दण्डत्वस्य कारणत्वे दण्डघटितपरम्परायाः सम्बन्धत्वकल्पने गौरवात् एवमन्येषामप्यनेन चरितार्थत्वसम्भवात् ।

गुणकर्म्मेति असमवायिकारणत्वं गुणकर्म्मभिन्नानां वैधर्म्यं नतु गुणकर्मणोः साधर्म्यम् इत्यत्रापि तात्पर्य्यम् अथवा असमवायिकारणवृत्तिसत्ताभिन्नजातिमत्त्वं तदर्थः तेन ज्ञानादीनामपि असमवायिकारणत्वविरहेऽपि न क्षतिः ।

अन्यत्रेति नित्यद्रव्याणि परमाण्वाकाशादीनि विहायाश्रितत्वं साधर्म्यमित्यर्थः आश्रितत्वन्तु सम वायादिसम्बन्धेन वृत्तिमत्त्वं विशेषणतया नित्यानामपि कालादौ वृत्तेः कालिकसम्बन्धान्यसम्बन्धेन तेषामवृत्तित्वमिति परमार्थः तेन समवायेनावृत्तावपि न क्षतिः ॥

इदानीं द्रव्यस्यैव विशिष्य साधर्म्यं वक्तुमारभते । क्षित्यादीनामिति क्षितिर्जलमिति पृथिव्यप्तेजोवायुमनसां परत्वापरत्ववत्त्वं मूर्त्तत्वं क्रियावत्त्वं वेगवत्त्वञ्च साधर्म्यं न च यत्र घटादौ परत्वमपरत्वं वा नोत्पन्नं तत्राव्याप्तिरिति वाच्यं परत्वादिसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् मूर्त्तत्वम् अपकृष्टपरिमाणवत्त्वं तच्च तेषामेव गगनादिपरिमाणस्य कुतोऽप्यपकृष्टत्वाभावात् पूर्ववत् कर्म्मवत्त्वं कर्म्मसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वं वेगवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वञ्च बोध्यम् ।

कालेति । कालाकाशात्मदिशां सर्व्वगतत्वं सर्व्वमूर्त्त संयोगित्वं परममहत्त्वञ्च परममहत्त्वत्वं जातिविशेषः अपकर्षानाश्रयपरिमाणत्वं वा । क्षित्यादीति पृथिव्यप्तेजोवाय्वाकाशानां भूतत्वं तच्च वहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम् अत्र ग्राह्यत्वं लौकिकप्रत्यक्षस्वरूपयोग्यत्वं बोध्यं तेन ज्ञातो घट इत्यादिप्र

त्वचे ज्ञानस्याप्युपनीतभानविषयत्वात् तद्वति आत्मनि नातिप्रसङ्गः न वा प्रत्यक्षाविषयरूपादिमति परमाण्वादावव्याप्तिः तस्यापि स्वरूपयोग्यत्वात् महत्त्वलक्षणकारणान्तरासन्निधानाच्च न प्रत्यक्षम् यद्वा आत्मावृत्तिविशेषगुणवत्त्वं तत्त्वम्। चत्वारीति पृथिव्यप्तेजोवायूनां स्पर्शवत्त्वं द्रव्यारम्भकत्वं च। तत्रेति पृथिव्यप्तेजोवायुषु चतुर्षु द्रव्यारम्भकत्वं न च द्रव्यानारम्भके घटादावव्याप्तिः द्रव्यसमवायिकारणवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्। आकाशशरीरिणामिति आकाशात्मनामव्याप्यवृत्तिक्षणिकविशेषगुणवत्त्वम् आकाशस्य विशेषगुणः शब्दः सचाव्याप्यवृत्तिर्यदा किञ्चिदवच्छेदेन शब्द उत्पद्यते तदन्यावच्छेदेन तदभावस्यापि सत्त्वात् क्षणिकत्वञ्च तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वम्। योग्यविभुविशेषगुणादीनां स्वोत्तरवर्त्तिगुणनाश्यत्वात् प्रथमशब्दस्य द्वितीयशब्देन नाशः एवं ज्ञानादीनामपि ज्ञानादिकं हि आत्मनि विभौ शरीराद्यवच्छेदेनोत्पद्यते घटाद्यवच्छेदेन तदभावोऽस्त्येव। एवं ज्ञानादिकमपि क्षणद्वयावस्थायि इत्यव्याप्यवृत्तिविशेषगुणवत्त्वं क्षणिकविशेषगुणवत्त्वञ्चार्थः पृथिव्यादौ रूपादिर्विशेषगुणोऽस्तीति अतोऽव्याप्यवृत्तिरित्युक्तं पृथिव्यादावव्याप्यवृत्तिसंयोगादिरस्तीति अतो विशेषगुणइत्युक्तं न च

रूपादीनामपि कदाचित् तृतीयक्षणे नाशसम्भवात् क्षणिकविशेषगुणवत्त्वं क्षित्यादावतिव्याप्तमिति वाच्यं चतुर्थक्षणवृत्तिजन्यावृत्तिजातिमद्विशेषगुणवत्त्वस्य विवक्षितत्वात् अपेक्षाबुद्धिः क्षणत्रयं तिष्ठति क्षणचतुष्टयन्तु किमपि ज्ञानादिकं न तिष्ठति रूपत्वादिकन्तु क्षणचतुष्टयस्थायिन्यपि रूपादौ वर्त्तत इति व्युदासः। ईश्वरज्ञानस्य चतुःक्षणवृत्तित्वात् जन्येत्युक्तं यद्याकाशजीवात्मनोः साधर्म्यं तदा जन्येति न देयं द्वेषत्वादिकमादाय लक्षणसमन्वयात् परममहत्त्वस्य तादृशगुणत्वाच्च चतुर्थक्षणे द्वित्वादीनामपि नाशाभ्युपगमात् द्वित्वादीनामपि तथात्वात् तद्वारणाय विशेषेति विक्षणवृत्तित्वं वा वाच्यं द्वेषत्वादिकमादायात्मनि लक्षणसमन्वयात्। रूपेति पृथिव्यप्तेजसां रूपवत्त्वं द्रवत्ववत्त्वं प्रत्यक्षविषयत्वञ्चेत्यर्थः। न च चक्षुरादीनां भर्जनकपालस्थवह्नेरूष्मणश्च रूपवत्त्वे किं मानमिति वाच्यं तत्रापि तेजस्त्वेन रूपानुमानात् एवं वाय्वानीतपृथिवीजलतेजोभागानामपि पृथिवीत्वादिना रूपानुमानं बोध्यम्। न च घटादौ द्रुतसुवर्णादिभिन्ने तेजसि च द्रवत्ववत्त्वमव्याप्तमिति वाच्यं द्रवत्ववृत्ति द्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् घृततैलजतुनिषु पृथिवीषु जलेषु द्रुतसुवर्णादौ तेजसि च द्रवत्वस

त्वात् तत्र च पृथिवीत्वादिमत्त्वामादाय सर्व्वत्र लक्षणसमन्वयः । न च प्रत्यक्षविषयत्वं परमाण्वादावव्याप्तम् अतिव्याप्तञ्च रूपादाविति वाच्यं चाक्षुषप्रत्यक्षविषयवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् आत्मन्यतिव्याप्तिवारणाय चाक्षुषेति गुरुणो इति गुरुत्ववत्त्वं रसवत्त्वं पृथिवीजलयोरित्यर्थः । न च घ्राणेन्द्रियादीनां वाय्वानीतपार्थिवादिभागानाञ्च रसादिमत्त्वे किं मानमिति वाच्यं तत्रापि पृथिवीत्वादिना तदनुमानात् । द्वयोरिति पृथिवीतेजसोरित्यर्थः न च नैमित्तिकद्रवत्ववत्त्वं घटादौ वह्न्यादौ चाव्याप्तमिति वाच्यं नैमित्तिकद्रवत्वसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् आत्मानइति पृथिव्यप्तेजोवाय्वाकाशात्मनां विशेषगुणवत्त्वमित्यर्थः यदुक्तमिति ज्ञेयत्वादिकं विहाय इति बोध्यं तन्तु न कस्यापि वैधर्म्यं केवलान्वयित्वात् ते च सङ्ख्यादयः पञ्च खे आकाशे ।

साधर्म्यवैधर्म्ये निरूप्य संप्रति प्रत्येकं पृथिव्यादिकं निरूपयति तत्र क्षितिरित्यादिना गन्धहेतुरिति गन्धसमवायिकारणमित्यर्थः । यद्यपि गन्धवत्त्वमात्रं लक्षणमुचितं तथापि पृथिवीत्वजातौ प्रमाणोपन्यासाय कारणत्वमुन्यस्तं तथाहि पृथिवीत्वं हि गन्धसमवायिकारणतावच्छेदकतया सिध्यति अन्यथा

गन्धत्वावच्छिन्नस्यावच्छिन्नकत्वापत्तेः न च पाषाणादौ गन्धाभावाद्गन्धवत्त्वमव्याप्तमिति वाच्यं तत्रापि गन्धसत्त्वात् अनुपलब्धिस्तु अनुत्कटत्वेनाप्युपपद्यते कथमन्यथा तद्भस्मनि गन्धउपलभ्यते भस्मनोऽपि पाषाणध्वंसजन्यत्वात् पाषाणोपादानोपादेयत्वं सिध्यति यद्द्रव्यं यद्द्रव्यध्वंसजन्यं तत्तदुपादानोपादेयमिति व्याप्तेः दृष्टञ्चैतत् खण्डपटे महापटध्वंसजन्ये इत्यञ्च पाषाणपरमाणोः पृथिवीत्वात्तज्जन्यस्य पाषाणस्यापि पृथिवीत्वं तथाच तस्यापि गन्धवत्त्वे बाधकाभावः। नानारूपेति शुक्लनीलादिभेदेन नानाजातीयं रूपं पृथिव्यामेव वर्त्तते नतु जलादौ तत्र शुक्लस्यैव सत्त्वात् पृथिव्यान्तु एकस्मिन्नपि धर्मिणि पाकवशेन नानारूपसम्भवात् न च यत्र नानारूपं नोत्पन्नं तत्राव्याप्तिः रूपद्वयवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य रूपनाशवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य वा वाच्यत्वात् वैशेषिकनये पृथिवीपरमाणौ रूपनाशस्य रूपान्तरस्य च सत्त्वात् न्यायनये घटादावपि तत्सत्त्वाल्लक्षणसमन्वयः। षड्विध इति मधुरकटुकषायादिभेदेन यः षड्विधोरसः सपृथिव्यामेव जले च मधुरएव रसः अत्रापि पूर्ववद्रसद्वयवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं लक्षणार्थोऽवसेयः। गन्धस्त्विति द्विविधइति वस्तुस्थितिमात्रं न तु द्विवि

धगन्धवत्त्वं [illegible] व्यर्थत्वात्
सौरभासौरभभेदेन बोध्यम्। स्पर्श इति तथा
व्याप्यनुष्णाशीतस्पर्शवत्त्वं वायोरपि वर्त्तत इत्युक्तं
पाकज इति इत्यस्य पृथिव्याः स्पर्शोऽनुष्णाशीतता
ज्ञापनार्थं तदुक्तं वस्तुतस्तु पाकजस्पर्शवत्त्वमात्रं
लक्षणम् अधिकस्य वैयर्थ्यात् यद्यपि पाकजस्पर्शः
पटादौ नास्ति तथापि पाकजस्पर्शवद्वृत्तिद्रव्यत्वव्या
प्यजातिमत्त्वमर्थो बोध्यः। नित्येति सा पृथिवी द्वि
विधा नित्या अनित्या चेत्यर्थः अणुलक्षणा परमाणु
लक्षणा पृथिवी नित्या। तदन्या परमाणुभिन्ना पृ
थिवी द्व्यणुकादिः सर्व्वोऽप्यनित्य इत्यर्थः सैव अनित्या
पृथिव्येव अवयववतीत्यर्थः। ननु अवयविनि किं मानं
परमाणुपुञ्जैरेवोपपत्तेः न च परमाणूनामतीन्द्रि
यत्वात् घटादेः प्रत्यक्षं न स्यादिति वाच्यम् एकस्य
परमाणोरप्रत्यक्षत्वेऽपि तत्समूहस्य प्रत्यक्षत्वात् य
था एकस्य केशस्य दूरेऽप्रत्यक्षत्वे तत्समूहस्य प्र
त्यक्षत्वं न च एकः स्थूलो महान् घट इति बुद्धेरनु
पपत्तिरिति वाच्यम् एकोमहान् धान्यराशिरितिवदु
पपत्तेः नैवं परमाणोरतीन्द्रियत्वेन तत्समूहस्यापि
प्रत्यक्षायोग्यत्वात् दूरस्थकेशस्तु नातीन्द्रियः सन्नि
धाने तस्यैव प्रत्यक्षत्वात्। न च तदानीम् अदृश्य
परमाणुपुञ्जात् दृश्यपरमाणुपुञ्जस्योत्पन्नत्वात् न

प्रत्यक्षत्वे विरोध इति वाच्यम् अदृश्यस्य दृश्यानु पादानत्वात् अन्यथा चक्षुरश्मादिसन्ततौ कदाचि दृश्यत्वप्रसङ्गात्। न चातितप्ततैलादौ कथमदृश्यद हनसन्ततेर्दृश्यदहनोत्पत्तिरिति वाच्यं तत्र तद न्तःपातिभिर्दृश्यदहनावयवैः स्थूलदहनोत्पत्तेरुपग मात्। नचादृश्यद्व्यणुकेन कथं त्रसरेणोरुत्पत्तिरि ति वाच्यम्। यतो न वयं दृश्यत्वमदृश्यत्वम्वा कस्य चित् स्वभावादाचक्ष्महे परन्तु महत्त्वोद्भूतरूपा दिकारणसमुदायवशात् दृश्यत्वं तथाच त्रसरेणो र्महत्त्वात् प्रत्यक्षं न तु द्व्यणुकादेस्तदभावात् न हि तन्मतेऽपीदं सम्भवति परमाणौ महत्त्वाभावात् इत्थं चावयविसिद्धौ तेषामुत्पादविनाशयोः प्रत्यक्षत्वाद नित्यत्वं तेषां चावयवावयवधारायाश्चानन्तत्वे मेरु सर्षपयोरपि साम्यप्रसङ्गः। अतः क्वचिद्विश्रामो वाच्यः यत्र च विश्रामस्तस्या नित्यत्वे त्वसमेत भावकार्य्योत्पत्तिप्रसङ्गः स्यात् अतस्तस्य नित्यत्वं महत्परिमाणतारतम्यस्य गगनादौ विश्रान्तत्वमि वाणुपरिमाणतारतम्यस्यापि क्वचिद्विश्रान्तत्वमस्ती ति तस्य परमाणुत्वसिद्धिः न च त्रसरेणावेव विश्रामोऽस्त्विति वाच्यं त्रसरेणुः सावयवः चाक्षु षद्रव्यत्वात् घटवदित्यनुमानेन तदवयवसिद्धौ त्रस रेणोरवयवाः सावयवा महदवयवत्वात् कपालवदि

त्वनुमानेन तदवयवसिद्धेः न चेदमप्रयोजकम् अ
पक्वष्टमहत्त्वं प्रति अनेकद्रव्यवत्त्वस्य प्रयोजकत्वात्
नचैवं क्रमेण तदवयवधारापि सिध्येदिति वा
च्यम् अनवस्थाभयेन तदसिद्धेः। सा च त्रिधेति
सा कार्य्यरूपा पृथिवी त्रिविधा शरीरेन्द्रियविष
यभेदादित्यर्थः। तत्र देहमुदाहरति योनिजादीति
योनिजमयोनिजञ्चेत्यर्थः। योनिजमपि जरायुजम
ण्डजञ्च जरायुजं मानुषादीनाम् अण्डजं सर्पादी
नाम् अयोनिजं स्वेदजोद्भिदादिकं स्वेदजाः कृमि
दंशाद्याः उद्भिदस्तरुगुल्माद्याः नारकिणां शरीर
मपि अयोनिजं न च मानुषादि शरीराणां पार्थि
वत्वे किं मानमिति वाच्यं गन्धादिमत्त्वस्यैव प्रमा
णत्वात् न च क्लेदउष्मादेरुपलब्धाद्याप्यत्वादिकमपि
स्यादिति वाच्यं तथा सति जलत्वपृथिवीत्वादिना
सङ्करप्रसङ्गात् न च तर्हि जलत्वादिकमेवास्तु नतु
पार्थिवत्वमिति वाच्यं क्लेदादीनां विनाशेऽपि श
रीरत्वेन प्रत्यभिज्ञानात् गन्धाद्युपलब्धेश्च पृथिवीत्व
सिद्धेः एतेन पार्थिवादिशरीरे जलादीनां निमि
त्तत्वमात्रं बोध्यं शरीरत्वन्तु न जातिः पृथिवीत्वा
दिना साङ्कर्य्यात् किन्तु चेष्टाश्रयत्वं वृक्षादीनामपि
चेष्टासत्वान्नाव्याप्तिः न च वृक्षादीनां शरीरत्वे किं
मानमिति वाच्यम् आध्यात्मिकवायुसम्बन्धस्य प्रमा

वत्वात्तत्रैव किं मानमिति चेत् भग्नक्षत संरोहणा दिना तदनुमानात् यदि हस्तादौ शरीरव्यवहा रोन भवति तदान्त्यावयवित्वेन विशेषणीयं न च यत्र शरीरे चेष्टा न जाता तत्राव्याप्तिरिति वाच्यम् एतादृशे प्रमाणाभावात् अथवा चेष्टावदन्त्यावयवि मात्रवृत्तिद्रव्यत्वव्याप्यव्याप्यजातिमत्त्वं तत् मानुषत्व चैत्रत्वजातिमादाय लक्षणसमन्वयः न च नृसिंह शरीरे कथं लक्षणसमन्वयः तत्र सिंहत्वस्यैकव्यक्ति वृत्तितया जातित्वाभावात् जलीयतैजसशरीरवृत्ति तया देवत्वस्यापि जातित्वाभावादिति वाच्यं कल्प भेदेन नृसिंहशरीरस्य नानात्वेन नृसिंहत्वजात्या लक्षणसमन्वयात् ।

इन्द्रियमिति घ्राणेन्द्रियं पार्थिवमित्यर्थः पार्थि वत्वं कथमिति चेत् इत्थं घ्राणेन्द्रियं पार्थिवं रूपा दिषु मध्ये गन्धस्यैव व्यञ्जकत्वात् कुङ्कुमगन्धा व्य ञ्जकघृतवत् न च दृष्टान्ते स्वकीयरूपादिव्यञ्जकत्वा दसिद्धिरिति वाच्यं परकीयरूपाद्यव्यञ्जकत्वस्य तदर्थत्वात् न च नवसरावगन्धव्यञ्जकजलेनानैका न्तमिति वाच्यं तस्य शक्तुरसाभिव्यञ्जकत्वात् यद्वा परकीयेति न देयं वायूपनीतसुरभिभागस्य दृष्टा न्तत्वसम्भवात् न च घ्राणेन्द्रिय सन्निकर्षस्य गन्धमा त्रव्यञ्जकत्वात्तत्र व्यभिचार इति वाच्यं द्रव्यत्वे सति

इति विशेषणात् विषयइति उपभोगसाधनं विषयः सर्व्वमेव हि कार्य्यजातम् अदृष्टाधीनं युक्तकार्य्यं यद दृष्टाधीनं तत्तदुपभोगं साक्षात् परम्परया वा जनयत्येव। न हि वीजप्रयोजनाभ्यां विना कस्यचिदुत्पत्तिरस्तितेन द्व्यणुकादिब्रह्माण्डं सर्व्वमेव विषयोभवति शरीरेन्द्रिययोर्विषयत्वेऽपि प्रकारान्तरोपन्यासः शिष्यबुद्धिवैशद्यार्थः। जलं निरूपयति वर्णः शुक्ल इति स्नेहसमवायिकारणतावच्छेदकतया जलत्वं जातिः सिध्यति यद्यपि स्नेहत्वं नित्यानित्यवृत्तितया न कार्य्यतावच्छेदकं तथापि जन्यस्नेहत्वं तथा वोध्यम् अथ परमाणौ जलत्वं न स्यात् तत्र जन्यस्नेहाभावात् नित्यस्य स्वरूपयोग्यत्वे फलावश्यम्भावनियमादिति चेन्न जन्यस्नेहजनकतावच्छेदकतया जन्यजातेः सिद्धौ तदवच्छिन्नजनकतावच्छेदकतया जलत्वजाति सिद्धेः शुक्लरूपवत्त्वमेव दर्शयितुमुक्तं वर्णः शुक्लइति वस्तुस्थिति मात्रं न तु शुक्लरूपवत्त्वं लक्षणम् अथवा नैमित्तिकद्रवत्ववदवृत्ति रूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वम् अभास्वरशुक्लेतररूपासमानाधिकरणरूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं वा तदर्थः। रसस्पर्शाविति जलस्य मधुरएव रसः शीतएव स्पर्शः तिक्तावृत्तिमधुरवृत्ति द्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं ननु शुक्लरूपवत्त्वमे

वेति कुतः कालिन्दीजलादौ नीलोपलब्धेरिति चेन्न नीलजनकतावच्छेदिकायाः पृथिवीत्वजातेरभावात् जले नीलरूपासम्भवात् कालिन्दीजले नीलप्रतीतिः स्वाश्रयौपाधिकी अत एव वियति विक्षेपे धवलिनो पलब्धेः अथ जले माधुर्य्ये किं मानं नहि प्रत्यक्षेण कोऽपि रसस्तत्रानुभूयते न च नारिकेलजलादौ माधुर्य्यमुपलभ्यतएवेति वाच्यं तस्याश्रयोपाधिकत्वात् अन्यथा जम्बीररसादावम्लाद्युपलब्धेरम्लादिमत्त्वमपि स्यादिति चेन्न हरीतक्यादिभक्षणस्य जलरसव्यञ्जकत्वात् न च हरीतक्यामेव जलोष्मसंयोगाद्रसान्तरोत्पत्तिरिति वाच्यं कल्पनागौरवात् पृथिवीत्वस्याम्लादिजनकतावच्छेदकत्वाच्च जलेनाम्लादिकं जम्बीररसादौ तु आश्रयोपाधिकी तथा प्रतीतिः एवं जन्यशीतस्पर्शजनकतावच्छेदकं जलत्वं जन्यजलत्वं वा बोध्यं घृष्टचन्दनादौ तु शैत्योपलब्धिश्चन्दनान्तर्वर्त्तिशीततरसलिलस्य तेजःसंयोगाज्जले औष्ण्यप्रतीतिरौपाधिकी स्फुटैव तत्र पाकासम्भवात् स्नेहसमेति घृतादावपि तदन्तर्वर्त्तिजलस्यैव स्नेहः जलस्य स्नेहसमवायिकारणत्वात् तेन जलएव स्नेह इति मन्तव्यम्। द्रवत्वमिति सांसिद्धिकद्रवत्वं जातिविशेषः प्रत्यक्षसिद्धस्तद्वच्छिन्नजनकतावच्छेदकमपि तदेवेति भावः तैलादावपि जलस्य द्रवत्वं स्नेहप्रक

र्षेण च दहनानुकूल्यमिति वक्ष्यति प्रथमवदिति पृथिव्याइवेत्यर्थः तथाहि जलत्वं द्विविधं नित्यमनित्यञ्च परमाणुरूपं नित्यं द्व्यणुकादिकं सर्व्वमनित्यम् अवयवसमवेतञ्च अनित्यमपि त्रिविधं शरीरेन्द्रियविषयभेदात् किन्तु पृथिवीतोयोर्विशेषस्तमाह किन्त्विति अयोनिजमिति अयोनिजमेवेत्यर्थः जलीयं शरीरमयोनिजं वरुणलोके प्रसिद्धमिति। इन्द्रियं रसनं जलीयमित्यर्थः तथाहि रसनं जलीयं गन्धाद्यव्यञ्जकत्वे सति रसव्यञ्जकत्वात्। शक्तु रसाभिव्यञ्जकोदकवत् रसनसन्निकर्षे व्यभिचारवारणायद्रव्यत्वं देयम्। विषयं दर्शयति सिन्धुर्हिमादिरिति सिन्धुः समुद्रः हिमं तुषारः आदिपदात् सरित्कासारकरकादिः सर्व्वोग्राह्यः। न च हिमकरकयोः कठिनत्वात पार्थिवत्वमिति वाच्यम् उष्मणा विलीनस्य तस्य जलत्वस्य प्रत्यक्षसिद्धत्वात् यद्द्रव्यं यद्द्रवध्वंसजन्यम इति व्याप्तेर्जलोपादाने उपादेयत्वसिद्धेः। अदृष्टविशेषेण वा द्रवत्वविरोधात् करकादीनां काठिन्य प्रत्ययस्य भ्रान्तत्वात्। तेजोनिरूपयति। स्पर्श उष्ण इत्यादिना उष्णत्वं स्पर्शनिष्ठोजातिविशेषः प्रत्यक्षसिद्धम् इत्यञ्च जन्योष्णस्पर्शसमवायिकारणतावच्छेदकं तेजस्त्वं जातिविशेषः तस्य परमाणुवृत्तित्वं तु जलत्वस्येवानुसन्धेयं न चोष्णस्य

र्शवत्त्वं चन्द्रकिरणादावव्याप्तमिति वाच्यं तत्रापि उष्णस्पर्शसत्त्वात् किन्तु तदन्तःपातिजलस्पर्शेनाभिभवा दग्रहः एवं रत्नकिरणादौ पार्थिवस्पर्शेनाभिभवा च्चक्षुरादौ चानुद्भूतत्वादग्रहः। रूपमित्यादि वैश्वा नरे मरकतकिरणादौ च पार्थिवरूपेणाभिभवा त् शुक्लत्वाग्रहः ननु तद्रूपाग्रहे धर्म्मिणोऽपि चा क्षुषत्वं न स्यादिति चेन्न अन्यदीयरूपेणापि धर्म्मि णोग्रहसम्भवात् शङ्खस्येव पित्तपीतिम्ना वह्नेस्तु शुक्लं नाभिभूतं किन्तु तदीयं शुक्लत्वमभिभूतमि त्यन्ये नैमित्तिकमिति सुवर्णादिरूपे तेजसि तत्स त्त्वात्। न च नैमित्तिकद्रवत्ववत्त्वं न लक्षणं दह नादावव्याप्तेर्घृतादावतिव्याप्तेश्चेति वाच्यं पृथिव्यवृत्ति नैमित्तिकद्रवत्ववद्वृत्तिजातिमत्त्वस्य विवक्षितत्वात् पूर्ववदिति जलस्येवेत्यर्थः तथाहि तद्द्विविधं नित्य मनित्यञ्च नित्यं परमाणुरूपं तदन्यदनित्यम् अवयवि तच्च त्रिधा शरीरेन्द्रियविषयभेदात् शरीरमयोनि जमेवेत्यर्थः तच्च सूर्य्यलोकादौ प्रसिद्धम् अत्र योनि शेषस्तमाह इन्द्रियमिति चक्षुस्तैजसं परकीयस्प र्शाद्यव्यञ्जकत्वे सति परकीयरूपव्यञ्जकत्वात् प्रदी पवत् प्रदीपस्य स्वीयस्पर्शव्यञ्जकत्वादाद्यं परकी येति घटादेः स्वीयरूपव्यञ्जकत्वात् व्यभिचारवार णाय द्वितीयं परकीयेति अथवा प्रभायादृष्टान्तत्व

सप्तधात्वाद्यं परकीयं न देयं चक्षु:सन्निकर्षे व्यभिचारवारणाय द्रव्यत्वं देयम। विषयं दर्शयति वह्नीति ननु सुवर्णस्य तैजसत्वे किं मानमिति चेन्न सुवर्णं तैजसम् असति प्रतिबन्धके अत्यन्तानलसंयोगेऽप्यनुच्छिन्नजन्यद्रवत्वात् यन्नैवं तन्नैवं यथा पृथिवी न चाग्रयोजकं पृथिवीद्रवत्वस्य नव्यजलद्रवत्वस्य चाग्निसंयोगनाश्यत्वात् ननु पीतिमगुरुत्वाश्रयस्य पार्थिवस्यापि तदानीं द्रुतत्वात्तेन व्यभिचार इति चेन्न जलमध्यस्थमसीचोदकवत् तस्याद्रवत्वात् अपरे तु पीतिमाश्रयस्य अत्यन्ताग्निसंयोगेऽपि रूपापरावृत्तिदर्शनात् तत्प्रतिबन्धकविजातीयं द्रवत्वं कल्प्यते तथाहि अग्निसंयोगे पीतिमगुरुत्वाश्रयः विजातीयरूपप्रतिबन्धकद्रवद्रव्यसंयुक्तः अत्यन्ताग्निसंयोगेऽपिपूर्व्वरूपविजातीयरूपानधिकरणपार्थिवत्वात् जलमध्यस्थपीतपटवत् तस्य च पृथिवीजलभिन्नस्य तेजस्त्वनियमात्॥ वायुं निरूपयति। अपाकज इति अनुष्णाशीतस्पर्शस्य पृथिव्यामपि सत्त्वादुक्तम् अपाकजइति अपाकजस्पर्शस्य जलादावपि सत्त्वादुक्तम् अनुष्णाशीतइति तेन वायवीयो विजातीयस्पर्शो दर्शितः तज्जनकतावच्छेदकं वायुत्वमिति भावः। एषवायुः स्पर्शादिलिङ्गकः वायुर्हि स्पर्शशब्दधृतिकम्पैरनुमीयते विजातीयस्पर्शेन विलक्षणशब्देन द्व

शादीनां इत्या शाखादीनां कम्पेन च वायोरनुमा नात् यथा च वायोर्न प्रत्यक्षं तथाग्रे वक्ष्यते पूर्व्वव दिति वायुर्द्विविधः नित्योऽनित्यश्च परमाणुरूपो नित्यस्तदन्योऽनित्यः समवेतश्च सोऽपि त्रिविधः शरी रेन्द्रियविषयभेदात् तत्र शरीरमयोनिजं पिशा चादीनां परन्तु जलीयतैजसवायवीयशरीराणां पा र्थिवभागोपष्टम्भादुपभोगसाधनत्वं जलादीनां प्राधा न्याज्जलीयत्वमिति अत्र योविशेषस्तमाह देहव्या पीति शरीरव्यापकं स्पर्शग्राहकमिन्द्रियं त्वक् तच्च वायवीयं रूपादिषु मध्ये स्पर्शस्यैव व्यञ्जकत्वात् अङ्ग सङ्गिसलिलशैत्यव्यञ्जकव्यजनवातवत् विविधं दर्श यति प्राणादिरिति यद्यपि अनित्योवायुश्चतुर्व्विधः तस्य चतुर्थी विधा प्राणादिरित्युक्तमाकरे तथापि संक्षेपादत्रत्रिविध्यमुक्तं प्राणस्त्वेकएव हृदादिना नास्थानवशान्मुखनिर्गमादिनानाक्रियावशाच्च नाना संज्ञा लभतइति। आकाशं निरूपयति। आ काशस्येति आकाशकालदिशामेकैकव्यक्तित्वात् आ काशत्वादिकं न जातिः किन्तु आकाशत्वं शब्दा श्रयत्वं वैशेषिकइति कथनन्तु विशेषगुणान्तरव्यव च्छेदाय एतेन प्रमाणमपि दर्शितं तथाहि शब्दो विशेषगुणः चक्षुर्ग्रहणायोग्यवहिरिन्द्रियग्राह्यजा तिमत्त्वात् स्पर्शवत् शब्दोद्रव्यसमवेतः गुणत्वात्

संयोगवत् इत्यनुमाने शब्दस्य द्रव्यसमवेतत्वे सिद्धे शब्दो न स्पर्शवद्विशेषगुणः अग्निसंयोगासमवायि कारणकत्वाभावे सति अकारणगुणपूर्व्वकप्रत्यक्षत्वात् सुखवत् पाकजरूपादौ व्यभिचारवारणाय सत्यन्तं पटरूपादौ व्यभिचारवारणाय कारणगुणपूर्व्वकेति जलपरमाणुरूपादौ व्यभिचार वारणाय प्रत्यक्षेति शब्दोन दिक्कालमनोगुणः विशेषगुणत्वात् नात्मविशेषगुणः वहिरिन्द्रियग्राह्यत्वात् रूपवत् इत्यञ्च शब्दाधिकरणं नवमद्रव्यं गगननामकं सिध्यतीति न च वाय्ववयवेषु सूक्ष्मशब्दक्रमेण वायौ कारण गुणपूर्व्वकः शब्द उत्पाद्यतामिति वाच्यम् अयावद्द्रव्यभावित्वेन वायुविशेषगुणत्वाभावात् तत्र शरीरस्य विषयस्य चाभावात्। इन्द्रियं दर्शयति इन्द्रियमिति मन्वाकाशं लाघवादेकं सिद्धं श्रोत्रं पुरुषभेदेन भिन्नं कथमाकाशं स्यादत आह एकः सन्नपीत्यादि आकाश एक एव सन्नपि उपाधेः कर्णशष्कुल्यादेर्भेदाद्भिन्नं श्रोत्रात्मकं भवतीत्यर्थः। कालं निरूपयति जन्यानामिति तत्र प्रमाणं दर्शयितुमाह जगतामिति तथाहि इदानीं घट इत्यादिप्रतीतिः सूर्य्यपरिस्पन्दादिकं यदि विषयीकरोति तदा सूर्य्यपरिस्पन्दादिना घटादेः सम्बन्धो वाच्यः स च संयोगादिर्न सम्भवतीति काल एव तत्सम्बन्धघ

स्थविरे स्मरणानुपपत्तेः शरीराणामवयवोपचयापचयैरुत्पादविनाशशालित्वात् न च पूर्व्वशरीरोत्पन्नसंस्कारेण द्वितीयशरीरे संस्कार उत्पद्यत इति वाच्यम् अनन्तसंस्कारकल्पने गौरवात् एवं शरीरस्य चैतन्ये बालकस्य स्तनपानादौ प्रवृत्तिर्न स्यात् इष्टसाधनताज्ञानस्य तद्धेतुत्वात्तदानीमिष्टसाधनतास्मारकाभावात् मन्मते जन्मान्तरानुभूतेष्टसाधनत्वस्य तदानीं स्मरणादेव प्रवृत्तिः न च जन्मान्तरानुभूतमन्यदपि स्मर्य्यतामिति वाच्यम् उद्बोधकाभावात् अत्र त्वनायत्या जीवनादृष्टमेवोद्बोधकं कल्प्यते इत्यञ्च संसारस्यानादितया आत्मनोऽपि अनादित्वसिद्धौ अनादिभावस्य नाशासम्भवात् नित्यत्वं सिध्यतीति बोध्यं ननु चक्षुरादीनां ज्ञानादौ करणत्वं कर्तृत्वं चास्तु विरोधे साधकाभावादत आह तथात्वमिति चैतन्यमित्यर्थः उपघाते नाशे सति अर्थाच्चक्षुरादीनामेव कथमिति पूर्व्वं चक्षुषा साक्षात्कृतानाञ्चक्षुषोऽभावे स्मरणं न स्यात् अनुभवितुरभावात् अन्यदृष्टस्य अन्येन स्मरणासम्भवात् अनुभवस्मरणयोः सामानाधिकरण्येन कार्य्यकारणभावादिति भावः।

ननु चक्षुरादीनां चैतन्यं मास्तु मनसस्तु नित्यस्य चैतन्यं स्यात् अत आह मनोऽपीति न तथा न

चेतनं ज्ञानादीति मनसोऽणुत्वात् प्रत्यक्षे च महत्त्व
स्य हेतुत्वान्मनसि ज्ञानसुखादिसत्त्वे तत्प्रत्यक्षानुप
पत्तेरित्यर्थः यथा मनसोऽणुत्वं तथा वक्ष्यते ननु क्ष
विज्ञानमेव आत्मा तस्य स्वतः प्रकाशरूपत्वात् चे
तनत्वं ज्ञानसुखादिकन्तु तस्यैवाकारविशेषः तस्या
पि भावत्वादेव क्षणिकत्वं पूर्व्वपूर्व्वविज्ञानस्योत्तर
विज्ञाने हेतुत्वात् सुषुप्तावस्थालयविज्ञानधारा नि
राबाधैव मृगमदवासनावासनइव पूर्व्वपूर्व्वविज्ञानज
नितसंस्काराणामुत्तरोत्तरविज्ञाने संक्रान्तत्वान्ना
नुपपत्तिः स्मरणादेरिति चेन्न तस्य जगद्विषयत्वे सा
र्व्वज्ञ्यापत्तेः यत्किञ्चिद्विषयत्वे विनिगमनाभावः सु
षुप्तावपि विषयावभासप्रसङ्गः तदानीं निराकारा
चित्सन्ततिरनुवर्त्ततइति चेन्न तस्य स्वप्रकाशत्वे प्र
मानाभावात् अन्यथा घटादीनामपि ज्ञानत्वापत्तेः
न चेष्टापत्तिः विज्ञानव्यतिरिक्तवस्तुनोऽभावादिति
वाच्यं घटादेरनुभूयमानस्यापलपितुमशक्यत्वात् आ
कारविशेषएवायं विज्ञानस्येति चेत् किमयमाका
रोऽतिरिच्यते विज्ञानात्तर्हि समायातं विज्ञानव्यति
रिक्तेन नातिरिच्यते चेत्तर्हि समूहालम्बने नीला
कारोऽपि पीताकारः स्यात् स्वरूपतोविज्ञानस्याविशे
षादपोहरूपोनीलत्वादिर्विज्ञानधर्म्मइति चेन्न नील
त्वादीनां विरुद्धानामेकस्मिन्नसमावेशात् इतरथा

ष्करपलाशवन्निर्लेपः किन्तु चेतनः कार्य्यकारण योरभेदात् कार्य्यनाशे कार्य्यरूपतयानाशस्यादि त्यकारणत्वं तस्य बुद्धिगतचैतन्याभिमानान्यथानु पपत्त्या तत्कल्पनं बुद्धिश्च प्रकृतेः परिणामः सैव महत्तत्त्व मन्तःकरणमप्युच्यते तत्सत्त्वासत्त्वाभ्यां पुरुषस्य संसारापवर्गौ तस्याएवेन्द्रियप्रणालिक या परिणतिर्ज्ञानरूपा घटादिनासम्बन्धः पुरुषे कर्तृत्वाभिमानोबुद्धौ चैतन्याभिमानश्च भेदाग्रहत्वा त् ममेदं कर्त्तव्यमिति सदंशपुरुषोपरागोबुद्धेः स्व च्छतया चेतनप्रतिबिम्बादतात्त्विकोदर्पणस्येव मु खोपरागः इदमिति विषयोपरागः इन्द्रियप्रणालि कया परिणतिभेदस्तात्त्विकोनिश्वासाभिहतदर्पणस्ये व मलिनिमा कर्त्तव्यइति व्यापारावेशः तेनांशत्रय वती बुद्धिस्तत्परिणामेन ज्ञानेन पुरुषस्यातात्त्विकः सम्बन्धोदर्पणमलिम्नेव मुखोपलब्धिरुच्यते ज्ञाना दिवत् सुखदुःखेच्छाद्वेषप्रयत्नधर्म्माधर्म्माश्च प बुद्धेरे व कृतिसामानाधिकरण्येन प्रतीतेः।

न च बुद्धिश्चेतनापरिणामित्वादिति मतमपास्तं कृ त्यदृष्टभोगानामिव चैतन्यस्यापि सामानाधिकरण्य प्रतीतेः तद्भिन्ने मानाभावाच्चेतनोऽहं करोमीति प्रती तेः परिणामित्वाच्चैतन्यांशे भ्रमइति चेत् कृत्यंशे किं नेष्यते अन्यथा बुद्धेर्नित्यत्वे मोक्षाभावोऽनित्यत्वे

तत्पूर्व्वमसंसारापत्तिः अचेतनायाः प्रकृतेः कार्य्य त्वात् बुद्धेरचेतन्यं कार्य्यकारणयोस्तादात्म्यादिति चेन्न असिद्धेः कर्त्तृजन्यत्वेमानाभावात् वीतरागजन्मादर्शनादनादित्वम अनादेर्नाशासम्भवान्नित्यत्वं तत् किं प्रकृत्यादिकल्पनेन न च प्रकृतेः क्रियमाणानि गुणैः कर्म्माणि सर्व्वशः।

अहङ्कारविमूढात्मा कर्त्ताहमिति मन्यते इत्यनेन विरोधइति वाच्यं प्रकृतेरदृष्टस्य गुणैरदृष्टजन्यैर्गणैः इच्छादिभिः कर्त्ताहं कर्त्ताहमेव इत्यस्य तदर्थत्वात् तत्रैवं सति कर्त्तारमात्मानं केवलन्तु य इत्यादि वदता भगवता प्रकटीकृतोऽयमुपदिष्टोदाराथइति संक्षेपः।

धर्म्माधर्म्माश्रयइति। आत्मेत्यनुषज्यते शरीरस्य तदाश्रयत्वे देहान्तरकृतकर्म्मणां देहान्तरेण भोगानुपपत्तेः विशेषगुणयोगतइति योग्यविशेषगुणसम्बन्धेनात्मनः प्रत्यक्षं भवति न त्वन्यथा अहं जाने अहङ्करोमि इत्यादि प्रतीतेः प्रवृत्तीति अयमात्मा परदेहादौ प्रवृत्त्यादिनानुमीयते प्रवृत्तिरत्र चेष्टा ज्ञानेच्छाप्रयत्नादीनां देहे अभावस्योक्तप्रायत्वात् चेष्टायाश्च यत्नसाध्यत्वात् चेष्टया प्रयत्नवानात्मा ऽप्यनुमीयतइति भावः तत्र दृष्टान्तमाह रथेति यद्यपि रथकर्म्मचेष्टा न भवति तथापि तेन कर्म्मणा सा

रथिर्यथाऽनुमीयते तथा चेष्टात्मकेन कर्मणा परा त्मापीति भावः।

अहङ्कारस्येति अहङ्कारोऽहमिति प्रत्ययः तस्या श्रयविषयः आत्मनि शरीरादिरिति मनइति मनो भिन्नेन्द्रियजन्यप्रत्यक्षाविषयोमानसप्रत्यक्षविषयश्चेत्य र्थः रूपाद्यभावेनेन्द्रियान्तरायोग्यत्वात विभुरिति वि भुत्वं परममहत्त्वं तच्च पूर्वोक्तमपि स्पष्टार्थमुक्तं बुद्धा दीति बुद्धिसुखदुःखेच्छादिचतुर्दशगुणाः पूर्वोक्ता वे दितव्याः अत्रैव प्रसङ्गाद्बुद्धेः कतिपयप्रपञ्चं दर्शयति बुद्धिस्त्विति द्वैविध्यं व्युत्पादयति अनुभूतिरिति अनु भूतिश्चतुर्विधेति एतासाञ्चतसृणां करणानि प्रत्यक्षा नुमानोपमानशब्दाः प्रमाणानीति सूत्रोक्तानि वे दितव्यानि प्रत्यक्षमिति इन्द्रियजन्यं ज्ञानं प्रत्यक्षं यद्यपि मनोरूपेन्द्रियजन्यं सर्वमेव ज्ञानं तथापि इन्द्रियत्वेन रूपेण इन्द्रियाणां यत्र ज्ञाने कारणत्वं तत्प्रत्यक्षमिति विवक्षितम् ईश्वरप्रत्यक्षन्तु न लक्ष्यम् इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्य जन्यज्ञा नाव्यभिचारिव्यवसायात्मकं प्रत्यक्षमिति सूत्रे तथैवो क्तत्वात अथ वा ज्ञानाकरणकं ज्ञानां प्रत्यक्षम् इदं लक्षणम् ईश्वरप्रत्यक्षसाधारणम् इत्यनुमितौ व्याप्ति ज्ञानस्य उपमितौ सादृश्यज्ञानस्य शब्दबोधे पदज्ञा नस्य स्मरणेऽनुभवस्य च हेतुत्वान्न तत्र तत्रातिव्या

प्तिः परामर्शजन्यं ज्ञानमनुमितिः यद्यपि परामर्श
प्रत्यक्षादिकं परामर्शजन्यं हेत्वविषयकं यज्ज्ञानं
तदेवानुमितिः न च कादाचित्कहेतुविषयकानुमि
तावव्याप्तिरिति वाच्यं तादृशज्ञानवृत्त्यनुभवत्वव्याप्य
जातिमत्त्वस्य विवक्षितत्वात् अथ वा व्याप्तिज्ञानकर
णकं ज्ञानमनुमितिः एवं सादृश्यज्ञानकरणकं ज्ञा
नमुपमितिः पदज्ञानकरणकं ज्ञानं शाब्दबोधः व
स्तुतो यत्किञ्चिदनुमितिव्यक्तिमादाय तद्व्यक्तिवृत्तित्वे
सति यत्किञ्चित्प्रत्यक्षव्यक्तिमादाय तदवृत्तिजातिम
त्त्वम् अनुमितित्वम् एवं यत्किञ्चित्प्रत्यक्षादिमादाय
तद्व्यक्तिवृत्तित्वे सति यत्किञ्चिदनुमितिव्यक्तिमादाय
तदवृत्तिजातिमत्त्वं प्रत्यक्षत्वादिकं वाच्यमिति । घ्रा
णजादीति घ्राणजं रासनं चाक्षुषं स्पार्शनं श्रौत्रं मा
नसमिति षड्विधं प्रत्यक्षं न चेश्वरप्रत्यक्षस्याविभजना
न्न्यूनत्वं जन्यप्रत्यक्षस्यैव निरूपणीयत्वात् उक्तसूत्रा
नुसारात् गोचर इति ग्राह्य इत्यर्थः । गन्धत्वादिरि
ति आदिपदात् सुरभित्वासुरभित्वपरिग्रहः गन्ध
स्य प्रत्यक्षत्वात्तद्वृत्तिजातिरपि प्रत्यक्षा गन्धाश्रयग्रह
णे तु घ्राणस्य न सामर्थ्यमिति बोध्यं तथा रसइति
रसत्वादिसहित इत्यर्थः गन्धो रसश्च उद्भूतो बोध्यः त
था द्रव्यत्वादिसहितं उद्भूतरूपमिति ग्रीष्मोष्मादा
वनुद्भूतरूपमिति न चाक्षुषं प्रत्यक्षं तद्वन्त उद्भूतरू

भवन्ति योग्येति पृथक्त्वादिकमपि योग्यवृत्तितया ग्रा ह्यं तादृशं योग्यवृत्तीत्यर्थः चक्षुर्योग्यत्वमेव कथं त दाह गृह्णातीति आलोकसंयोगउद्भूतरूपञ्च चाक्षुष प्रत्यक्षं प्रति कारणं तत्र द्रव्यचाक्षुषं प्रति तयोः सम वायसम्बन्धेनकारणत्वं द्रव्यसमवेतप्रत्यक्षं प्रति स्वाश्र यसमवायसम्बन्धेनद्रव्यसमवेतसमवेतस्य रूपत्वादेः प्र त्यक्षे स्वाश्रयसमवेतसमवायसम्बन्धेनेति उद्भूतस्पर्शव द्द्रव्यं त्वचोगोचरः सोऽपिउद्भूतस्पर्शोऽपि स्पर्शत्वादि सहितः रूपान्यदिति रूपभिन्नंरूपत्वादिभिन्नञ्च चक्षुषोयत् योग्यं तत् त्वगिन्द्रियस्यापि ग्राह्यं त थाच पृथक्त्वादिसंख्यादयोगे चक्षुर्ग्राह्यागुणाउक्ता एवं क्रिया एवं जातयोयोग्यवृत्तयश्च ते त्वंचोग्रा ह्याइति अत्रापि त्वगिन्द्रियजन्येऽपि रूपं द्रव्यप्र त्यक्षे कारणं तथाच वहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे रू पं कारणमिति नवीनास्तु वहिर्द्रव्यप्रत्यक्षे रूपं न कारणं प्रमाणाभावात किन्तु चाक्षुषप्रत्यक्षे रूपं स्पार्शनप्रत्यक्षे स्पर्शः कारणम अन्वयव्यतिरेकात् व हिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्रे किङ्कारणमिति चे त्नकिञ्चिदात्मावृत्तिशब्दभिन्नविशेषगुणवत्त्वं वा प्र योजकमस्तु रूपस्य कारणत्वे लाघवमिति चेन्नवा योस्त्वगिन्द्रियेणाग्रहणप्रसङ्गादिष्टापत्तिरिति चेत् स्पर्शएव लाघवात्कारणमस्तु प्रभाया अप्रत्यक्षत्वे

न्विष्टाप्रसक्तिरित्येवकिं न स्यात तस्मात प्रभां पश्यामीतिवत् वायुं स्पृशामीति प्रत्ययस्यसत्त्वात् वायोरपि प्रत्यक्षं भवत्येव बहिर्द्रव्यप्रत्यक्षमात्रे तु न रूपस्य न वा स्पर्शस्य हेतुत्वं वायुप्रभयोरेकत्वं गृह्यत एव क्वचित् द्वित्वादिकमपि क्वचित् संख्यापरिमाणाद्यग्रहोदोषादित्याहुः। त्वचोयोगोमनसा ज्ञानकारणमिति त्वङ्मनःसंयोगो ज्ञानसामान्ये कारणमित्यर्थः किं तत्र प्रमाणं सुषुप्तिकाले त्वचं त्यक्त्वा पुरीतति वर्त्तमानेन मनसा ज्ञानाजननमिति ननु सुषुप्तिकाले किं ज्ञानं भविष्यति अनुभवरूपं स्मरणरूपं वा नाद्यः अनुभवसामग्र्यभावात्तथाहि चाक्षुषादिप्रत्यक्षे चक्षुरादिनामह मनःसंप्रयोगस्य हेतुत्वात् तदभावादेव न चाक्षुषादिप्रत्यक्षं ज्ञानादेरभावादेव न मानसप्रत्यक्षं ज्ञानाद्यभावेनात्मनोऽपि न प्रत्यक्षमिति व्याप्तिज्ञानाभावात् नानुमितिः सादृश्यज्ञानाभावात् नोपमितिः पदज्ञानाभावात् न शाब्दबोधः इत्यनुभवसामग्र्यभावात् नानुभवः उद्बोधकाभावाच्च न स्मरणं मैवं सुषुप्तिप्राक्कालोत्पन्नेच्छादिव्यक्तेस्तत्सम्बन्धेनात्मनश्च प्रत्यक्ष प्रसङ्गात् तदतीन्द्रियत्वे मानाभावात् सुषुप्तिप्राक्काले निर्विकल्पकमेव जायतइत्यत्रापि प्रमाणाभावात् अथ ज्ञानमात्रे त्वङ्मनःसंयोगस्य यदि कारणत्वं तदा रासनचाक्षुषादिप्र

त्वक्काले स्पार्शनप्रत्यक्षं स्यात् विषयत्वक्संयोगस्य त्वङ्मनःसंयोगस्य च सत्त्वात् परस्परप्रतिबन्धादेकमपि वा न स्यादिति अत्र केचित् सुषुप्त्यनुरोधात् त्वङ्मनोयोगस्य हेतुत्वे सिद्धे चाक्षुषादिसामग्र्याः स्पार्शनादि प्रतिबन्धकत्वमनुभवानुरोधात् कल्प्यतेइति अन्ये तु सुषुप्त्यनुरोधात् चर्ममनःसंयोगस्य ज्ञानहेतुत्वं कल्प्यं चाक्षुषादिप्रत्यक्षकाले त्वङ्मनःसंयोगाभावान्न स्पार्शनप्रत्यक्षमिति वदन्ति मनोग्राह्यं सुखं दुःखमिच्छा द्वेषो मतिः कृतिरिति मनोजन्यप्रत्यक्षविषय इत्यर्थः मतिर्ज्ञानं कृतिः प्रयत्नः एवं सुखत्वादिकमपि मनोग्राह्यं एवमात्मापि मनोग्राह्यः किन्तु मनोमात्रस्य गोचर इत्यनेन पूर्व्वमुक्तत्वात् अत्र नोक्तः।

ज्ञानं यन्निर्व्विकल्पाख्यं तदतीन्द्रियमिष्यतइति चक्षुःसंयोगाद्यनन्तरं घट इत्याकारं घटत्वादिविशिष्टं ज्ञानं न सम्भवति पूर्व्वं विशेषणस्य घटत्वादेर्ज्ञानाभावात् विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वात् तथाच प्रथमतो घटघटत्वयोर्वैशिष्ट्यानवगाहि ज्ञानं जायते तदेव निर्व्विकल्पकात्मकं तच्च न प्रत्यक्षं तथाहि विषयानवगाहिज्ञानस्य प्रत्यक्षं न भवति घटमहं जानामीति प्रत्यक्षात् तत्रात्मनि ज्ञानं प्रकारीभूय भासते ज्ञाने घटस्तत्र घटत्वं यः प्रकारः स एव विशेषणमित्युच्यते विशेषणे यद्विशेषणं तद्विशे

षणतावच्छेदकमित्युच्यते विशेषणतावच्छेदकप्रकारकं ज्ञानं विशिष्टवैशिष्ट्यज्ञानकारणं निर्विकल्पके च घटत्वादिकं न प्रकारत्वेन घटत्वादि विशिष्टघटादिवैशिष्ट्यभानं ज्ञाने न सम्भवति घटत्वाद्यप्रकारकं घटादिविशिष्टज्ञानं न सम्भवति जात्यतिरिक्तपदार्थज्ञानस्य किञ्चिद्धर्मप्रकारकत्वनियमात् । महत्त्वं षड्विधे हेतुरिति द्रव्यप्रत्यक्षे महत्त्वं समवायसम्बन्धेन कारणं द्रव्यसमवेतानां जातिगुणकर्मणां प्रत्यक्षे स्वाश्रयसमवायसम्बन्धेन कारणं द्रव्यसमवेतसमवेतानां गुणत्वकर्मत्वरूपत्वादीनां प्रत्यक्षे स्वाश्रयसमवेतसमवायसम्बन्धेन कारणमिति । इन्द्रियमिति अत्रापि षड्विधयति अनुषज्यते इन्द्रियत्वन्तु न जातिः पृथिवीत्वादिना साङ्कर्य्यप्रसङ्गात् किन्तु शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वम् आत्मादिवारणाय सत्यन्तम् उद्भूतविशेषगुणस्य शब्दस्य श्रोत्रे सत्त्वात् शब्देतरेति विशेषगुणस्य रूपादेश्चक्षुषि सत्त्वात् उद्भूतेति उद्भूतत्वं न जातिः शुक्लत्वादिना सङ्करात् न च शुक्लत्वादिव्याप्यं नानैवोद्भूतत्वमिति वाच्यम् उद्भूतरूपत्वादिना चाक्षुषादौ जनकतानुपपत्तेः किन्तु शुक्लत्वादिव्याप्यमनुद्भूतत्वं नाना तदभावकूटश्चोद्भूतत्वं तच्च संयोगादावपि तथाच श

द्वेतरोद्भूतगुणः संयोगादिश्चक्षुरादेरस्त्यतोविशेषेति कालादिवारणाय विशेष्यदलम् इन्द्रियावयवविषयसंयोगस्यापि प्राचां मते प्रत्यक्षजनकत्वात् इन्द्रियावयववारणाय कालादौ रूपाभावप्रत्यक्षे सन्निकर्षघटकतया कारणीभूतचक्षुःसंयोगाद्याश्रयस्य कालादेश्चवारणाय मनःपदं ज्ञानकरणमित्यपि तद्वारणाय कारणमिति असाधारणं कारणं करणम् असाधारणत्वं व्यापारवत्त्वं विषयेन्द्रियसम्बन्धोव्यापारःसोऽपि षड्विधइति व्यापारःसन्निकर्षः षड्विधं सन्निकर्षमुदाहरणद्वारा दर्शयति द्रव्यग्रहइति द्रव्यप्रत्यक्षमिन्द्रियसंयोगजन्यं द्रव्यसमवेतप्रत्यक्षम् इन्द्रियसंयुक्तसमवायजन्यम् एवमग्रेऽपि वस्तुतस्तु द्रव्यचाक्षुषं प्रति चक्षुःसंयोगःकारणं द्रव्यसमवेतचाक्षुषं प्रति चक्षुःसंयुक्तसमवायः द्रव्यसमवेतसमवेतचाक्षुषं प्रति [illegible] युक्तसमवेतसमवायःएवमन्यत्रापिविशिष्यैव कार्य्यकारणभावः परन्तुपरमाणुनीले नीलत्वं पृथिवीपरमाणौ पृथिवीत्वञ्च चक्षुषा कथं न गृह्यते तत्र परम्परया उद्भूतरूपसम्बन्धस्य महत्त्वसम्बन्धस्य च विद्यमानत्वात् तथाहि नीलत्वं जातिरेकैव घटनीले च परमाणुनीले च वर्त्तते तथाच महत्त्वसम्बन्धोघटनीलमादाय वर्त्तते रूपसम्बन्धस्तूभयमादायैव वर्त्तते एवं पृथिवीत्वे घटादिकमादाय महत्त्वसम्बन्धोबोध्यः एवं

वायौ तदीयस्पर्शादौ च समवायस्याचाक्षुषप्रत्यक्षं स्यात् तस्मादुद्भूतरूपावच्छिन्नमहत्त्वावच्छिन्नचक्षुःसंयुक्तस समवायस्य द्रव्यसमवेतचाक्षुषप्रत्यक्षे तादृशचक्षुःसंयुक्तसमवेतसमवायस्य द्रव्यसमवेतसमवेतचाक्षुषे कारणत्वं वाच्यम् तेन च परमाणुनीलादौ न नीलत्वादिग्रहः परमाणुचक्षुःसंयोगस्य महत्त्वावच्छिन्नत्वाभावात् एवं वाय्वादौ न सत्त्वादिचाक्षुषं तत्र चक्षुःसंयोगस्य रूपावच्छिन्नत्वाभावात् एवं यत्र घटस्य मध्यावच्छेदेनालोकसंयोगः चक्षुःसंयोगस्तु बाह्यावच्छेदेन तत्र घटप्रत्यक्षाभावादालोकसंयोगावच्छिन्नत्वं चक्षुःसंयोगे विशेषणं देयम् एवं द्रव्यस्पार्शनप्रत्यक्षे त्वक्संयोगः कारणं द्रव्यसमवेतस्पार्शनप्रत्यक्षे त्वक्संयुक्तसमवायः द्रव्यसमवेतसमवेतस्पार्शनप्रत्यक्षे त्वक्संयुक्तसमवेतसमवायः कारणम् अत्रापि महत्त्वावच्छिन्नत्वम् उद्भूतस्पर्शावच्छिन्नत्वञ्च पूर्ववदेव बोध्यम् एवं गन्धप्रत्यक्षे घ्राणसंयुक्तसमवायः गन्धसमवेतस्य घ्राणजन्यप्रत्यक्षे घ्राणसंयुक्तसमवेतसमवायः कारणम। एवं रसप्रत्यक्षे रसनासंयुक्तसमवायः रससमवेतस्य रासनप्रत्यक्षे रसनासंयुक्तसमवेतसमवायः कारणं शब्दप्रत्यक्षे श्रोत्रावच्छिन्नसमवायः शब्दसमवेतश्रावणप्रत्यक्षे श्रोत्रावच्छिन्नसमवेतसमवायः कारणम् अत्र सर्वत्र प्रत्यक्षं लौ

किकं बोध्यं वक्ष्यमाणमलौकिकं प्रत्यक्षम् इ[illegible]यसंयो गादिकं विनापि भवति एवमात्मनः प्र[illegible] मनः संयोगः आत्मसमवेतमानसप्रत्यक्षे मन[illegible]युक्तसम वायः आत्मसमवेतसमवेतमानसप्रत्यक्षे [illegible]ःसंयुक्त समवेतसमवायः कारणम् अभावप्रत्यक्षे स[illegible]ायप्रत्य क्षे च इन्द्रियसम्बद्धविशेषणता हेतुःवैशेषिक[illegible]ते तु न समवायः प्रत्यक्षः अत्र यद्यपि विशेषणता नाना विधा तथाहि भूतलादौ घटाभावः संयु[illegible]विशेषण तया गृह्यते संख्यादौ रूपाद्यभावःसंयुक्तसमवेत वि शेषणतया संख्यात्वादौ रूपाद्यभावः संयुक्त समवेत समवेतविशेषणतया शब्दाभावः केवलश्रोत्रावच्छिन्न विशेषणतया कादौ । खत्वाद्य भावः श्रोत्रावच्छिन्नस मवेतविशेषणतया एवं कत्वावच्छिन्नाभावे खत्वा भावादिकं विशेषणविशेषणतया एवं घटाभावादौ पटाद्यभावः संयुक्तविशेषण विशेषणतया एवमन्य दप्यूह्यं तथापि विशेषणतात्वरूपेणैकैवसा गण्य ते अन्यथा षोढासन्निकर्षइति प्राचां प्रवादोव्याह न्येतेति। यदि स्यादुपलभ्येत इति अभावप्रत्यक्षेयो ग्यानुपलब्धिः कारणं तथाहि भूतलादौ घटादि ज्ञाने जाते घटाभावादिकं न ज्ञायते तेनाभावोपल म्भे प्रतियोग्युपलम्भाभावः कारणं तत्रापि योग्यता पेक्षिता सा च प्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जित

प्रतियोगिकत्वरूपा तदर्थश्च प्रतियोगिनोघटादेः सत्त्व प्रसत्त्वाप्रसञ्जितउपलम्भरूपः प्रतियोगी य स्य सउपलम्भाभावोऽभावप्रत्यक्षे हेतुः तथाहि यत्रा लोकसंयोगादिकं वर्त्तते तत्र यद्यत्र घटः स्यात् त र्हि उपलभ्येत इत्यापादयितुं शक्यते तत्रघटाभा वादिप्रत्यक्षं भवति अन्धकारे तु नापादयितुं शक्य तइति तेन घटाभावादेरन्धकारे चाक्षुषप्रत्यक्षं न स्पार्शनप्रत्यक्षन्तु भवत्येव आलोकसंयोगं विनापि स्पार्शनप्रत्यक्षस्यापादयितुं शक्यत्वात् गुरुत्वादिकं यदयोग्यं तदभावस्तु न प्रत्यक्षः तत्र गुरुत्वादिप्र त्यक्षस्यापादयितुमशक्यत्वात् वायौ रूपाभावः पाषा णे सौरभाभावः गुडे तिक्ताभावः श्रोत्रे शब्दाभावः आत्मनि सुखाभावः। एवमादयस्तत्तदिन्द्रियैर्गृह्य न्ते तत्तत्प्रत्यक्षस्यापादयितुं शक्यत्वात् संसर्गाभा वप्रत्यक्षे प्रतियोगिनोयोग्यता अन्योन्याभावप्रत्यक्षे त्वधिकरणयोग्यताऽपेक्षिता अतस्तम्भादौ पिशाचा दिभेदोऽपि चक्षुषा गृह्यतएवप्रत्यक्षं लौकिकालौकि कभेदेन द्विविधं तत्र लौकिकप्रत्यक्षे षोढासन्निक र्षा वर्णितः अलौकिकसन्निकर्षानिदानींवदति अ लौकिकइति व्यापारः सन्निकर्षः सामान्यलक्षणेति सामान्यं लक्षणं यस्याइत्यर्थः तत्र लक्षणपदेन यदि स्वरूपमच्यते तदा सामान्यस्वरूपंप्रत्यासत्तिरित्य

र्थोऽलक्ष्यते तत्रेन्द्रियसम्बद्धविशेष्यकज्ञाने प्रकारीभूतं वोध्यं तथाहि यत्र इन्द्रियसंयुक्तोधूमादिः तद्विशेष्यकं धूमइति ज्ञानं जातं तत्र ज्ञाने धूमत्वं प्रकारः धूमत्वेन सन्निकर्षेण धूमइत्येवं रूपं सकलधूमविषयकं ज्ञानं जायते अत्र यदि इन्द्रियसम्बद्धमित्येवोच्यते तदा धूलीपटले धूमत्वभ्रमानन्तरं सकलधूमविषयकं ज्ञानं न स्यात् तत्र धूमत्वेन सह इन्द्रियसम्बन्धाभावात् मन्मते तु इन्द्रियसम्बद्धं धूलीपटलं तद्विशेष्यकधूमइति ज्ञानं तत्र प्रकारीभूतं धूमत्वं प्रत्यासत्तिः इन्द्रियसम्बन्धोऽलौकिकोग्राह्यः इदञ्च वहिरिन्द्रियस्थले मानसस्थले तु ज्ञानप्रकारीभूतसामान्यं मात्रं प्रत्यासत्तिः अतः शब्दादिना यत्किञ्चित् पिशाचाद्युपस्थितौ मानसः सकलपिशाचादिबोधउपपद्यते परन्तु समानानां भावः सामान्यं तच्च क्वचिन्नित्यं धूमत्वादि क्वचिच्चानित्यं घटादियत्रैकोघटः संयोगेन भूतले समवायेन कपाले ज्ञातस्तदनन्तरं सर्व्वेषामेव तद्घटवतां भूतलादीनां कपालादीनां वा ज्ञानं भवति अत्रेदं बोध्यं सामान्यं येन सम्बन्धेन ज्ञायते तेन सम्बन्धेन अधिकरणानां प्रत्यासत्तिः किन्तु यत्र तद्घटनाशानन्तरं तद्घटवतः स्मरणं जातं तत्र सामान्यलक्षणया सर्व्वेषां तद्घटवतां भानं न स्यात् सामान्यस्य

रद नोऽभावात् किञ्च इन्द्रियसम्बद्धविशेष्यकं घट इति ज्ञानं तत्र परदिने इन्द्रियसम्बन्धं विनापि तादृशज्ञानप्रकारीभूतसामान्यस्य सत्त्वात् तादृशज्ञानं कुतो न जायते तस्मात् सामान्यज्ञानं प्रत्यासत्तिर्न तु सामान्यमित्याह आसत्तिरित्यादि आसत्तिः प्रत्यासत्तिरित्यर्थः तथाच सामान्यलक्षणेत्यत्र लक्षणशब्दस्य विषयोऽर्थः तेन सामान्यविषयकं ज्ञानं प्रत्यासत्तिरित्यर्थोलभ्यते ननु चक्षुःसंयोगादिकं विनापि सामान्यज्ञानं यत्र वर्त्तते तत्र सकलघटादीनां चाक्षुषादिप्रत्यक्षं स्यादत आह तदिन्द्रियजइति अस्यार्थः यदा वहिरिन्द्रियेण सामान्यलक्षणया ज्ञानं जननीयं तदा यत्किञ्चिद्धर्म्मिणि तत्सामान्यस्य तदिन्द्रियजन्यज्ञानसामग्री अपेक्षिता सा च सामग्री चक्षुःसंयोगालोकसंयोगादिकं तेनान्धकारादौ चक्षुरादिना तादृशज्ञानं न जायते ननु ज्ञानलक्षणाप्रत्यासत्तिर्यदिज्ञानरूपा सामान्यलक्षणापि ज्ञानरूपा तदा तयोर्भेदो न स्यादतआह विषयी यस्य तस्यैव व्यापारोज्ञानलक्षणइति सामान्यलक्षणा प्रत्यासत्तिर्हि तदाश्रयस्य ज्ञानं जनयति ज्ञानलक्षणा प्रत्यासत्तिस्तु यद्विषयकं ज्ञानं तस्यैव प्रत्यासत्तिरिति अत्रायमर्थः प्रत्यक्षे सन्निकर्षं विना भानं न सम्भवति तथाच सामान्यलक्षणां विना धूमत्वेन

सकलधूमानां वह्नित्वेन सकलवह्नीनाञ्च भानं कथं भवतु तदर्थं सामान्यलक्षणा स्वीक्रियेत नच सकलवह्निधूमभानाभावे का क्षतिरिति वाच्यं प्रत्यक्षधूमे वह्निसम्बन्धस्य गृहीतत्वात् अन्यधूमस्य चानुपस्थितत्वाद्धूमो वह्निव्याप्योन वेति संशयानुपपत्तेः मन्मते तु सामान्यलक्षणया सकलधूमोपस्थितौ कालान्तरीय देशान्तरीयधूमे वह्निव्याप्यत्वसन्देहः संभवति नच सामान्यलक्षणास्वीकारे प्रमेयत्वेन सकलप्रमेये ज्ञाते सार्व्वज्ञापत्तिरिति वाच्यं प्रमेयत्वेन सकलप्रमेये ज्ञातेऽपि विशिष्य सकलपदार्थानामज्ञातत्वेन सार्व्वज्ञाभावात् एवं ज्ञानलक्षणाया अस्वीकारे सुरभिचन्दनमिति ज्ञाने सौरभस्य भानं कथं स्यात् यद्यपि सामान्यलक्षणयापि सौरभभानं सम्भवति तथापि सौरभत्वस्य भानं ज्ञानलक्षणया एवं यत्र धूमत्वेन धूलीपटलं ज्ञातं तत्र धूलीपटलस्यानुव्यवसाये भानं ज्ञानलक्षणया । योगजोद्विविध इति योगाभ्यासजनितोधर्म्मविशेषः श्रुतिपुराणादिप्रमाणकइत्यर्थः युक्तयुञ्जानभेदतइति युक्तयुञ्जानरूपयोगिद्वैविध्याद्धर्म्मस्यापिद्वैविध्यमिति भावः युक्तस्य सर्व्वदाभानमिति योगाभ्यासवशीकृतमानसः समाधिसमासादितविविधसिद्धिर्युक्तइत्युच्यते अयमेव विशिष्टयोगवत्त्वात वियुक्तइत्यप्युच्यते सर्व्वदेति चिन्तासहकारि

। विनेत्यर्थः भानं सर्व्वविषयाणां प्रत्यक्षम् अपरो
ऽज्ञानः विषयव्याप्तसमानसः चिन्ता ध्यानंमनसःत
देकाग्रीकरणं तत्सहकारात् सूक्ष्मव्याव्यवहितवि
प्रकृष्टानर्थान् प्रत्यक्षीकरोतीत्यर्थः अनुमितिं व्युत्पा
दयति व्यापारस्त्विति अनुमायाम् अनुमितौ व्याप्ति
ज्ञानं करणं परामर्शोव्यापारः तथाहि येन पुरुषे
ण महानसादौ धूमे वह्नेर्व्याप्तिर्गृहीता पश्चात् स
एव पुरुषः क्वचित् पर्व्वतादौ अविच्छिन्नधूमां धू
मलेखां पश्यति तदनन्तरं धूमोवह्निव्याप्यइत्येवं
रूपं व्याप्तिस्मरणं भवति तस्माच्च वह्निव्याप्यधूमवान
यमिति ज्ञानं भवति सएव परामर्शइत्युच्यते तद
नन्तरं पर्व्वतोऽयं वह्निमानिति ज्ञानं जायते तदेवा
नुमितिः रुव प्राचीनास्तु व्याप्यत्वेन ज्ञायमानं धू
मादिकमनुमिति करणं तद्दूषयति ज्ञायमानमि
ति लिङ्गस्यानुमित्यकरणत्वे युक्तिमाह अनागता
दीति यद्यनुमितौ लिङ्गं करणं स्यात् तदा अ
नागतेन विनष्टेन वा लिङ्गेन अनुमितिर्न स्यात्
अनुमिति करणस्य लिङ्गस्य तदानीमभावात् व्या
प्तस्यपक्षधर्म्मत्वधीरिति व्याप्तिविशिष्टस्य पक्षेण
सह वैशिष्ट्यावगाहिज्ञानमनुमितिजनकं तच्चवा
प्यःपक्ष इति ज्ञानं पक्षोव्याप्यवानिति ज्ञानम्वा अनु
मितिस्तु पक्षे व्याप्यइति ज्ञानात् पक्षे साध्यम् इत्या

कारिका पक्षोव्याप्यवानिति ज्ञानात् पक्षः साध्य वानित्याकारिका द्विविधादपि परामर्शात् पक्षः साध्यवानित्येवानुमितिरित्यन्ये ननु वह्निव्याप्यधूम वान् पर्व्वतइति ज्ञानं विनापि यत्र पर्व्वतोधूम वानिति प्रत्यक्षं ततोधूमोवह्निव्याप्यइति स्मरणं भ वति तत्र ज्ञानद्वयादनुमितिदर्शनात् व्याप्तिविशि ष्टवैशिष्ट्यावगाहिज्ञानं सर्व्वत्र न कारणं किन्तुव्या प्यतावच्छेदकप्रकारकपक्षधर्म्मताज्ञानत्वेन कारण त्वम् आवश्यकत्वात् विशिष्टवैशिष्ट्य ज्ञानकल्पने गौ रवाच्चेति चेन्न व्याप्यतावच्छेदकाज्ञानेऽपि वह्निव्या प्यवानिति ज्ञानादनुमित्युत्पत्तेः लाघवाच्च व्याप्ति प्रकारकपक्षधर्म्मताज्ञानत्वेनैव कारणत्वं किञ्च धू मवान् पर्व्वतइति ज्ञानादनुमित्यापत्तिः व्याप्यताव च्छेदकीभूतधूमत्वप्रकारक पक्षधर्म्मताज्ञानस्य स त्त्वात् न च तदानीं गृह्यमाणव्याप्यतावच्छेदकप्रका रकपक्षधर्म्मताज्ञानस्य हेतुत्वमिति वाच्यं चैत्रस्य व्याप्तिग्रहे मैत्रस्य पक्षधर्म्मताज्ञानादनुमितिः स्या दिति। यदि तु तत्पुरुषीयगृह्यमाणव्याप्यतावच्छेद कप्रकारकतत्पुरुषीयपक्षधर्म्मताज्ञानं तत्पुरुषीयानु मितौ हेतुरुच्यते तदा अनन्तकार्य्यकारणभावः मन्मते तु समवायेन व्याप्तिप्रकारकपक्षधर्म्मताज्ञानं समवायेनानुमितिं जनयतीत्यर्थे नानन्तकार्य्यकार

णाभावः यदि तु व्याप्तिप्रकारकं ज्ञानं पक्षधर्म्मता ज्ञानञ्च स्वतन्त्रं कारणमित्युच्यते तदा कार्य्यकारणभावद्वयं वह्निव्याप्योधूम आलोकवान् पर्व्वतइति ज्ञानादप्यनुमितिः स्यादिति इत्यञ्च यत्र ज्ञानद्वयं तत्रापि विशिष्टज्ञानं कल्पनीयं फलमुखगौरवस्या दोषत्वात् इति व्याप्योनामव्याप्त्याश्रयः तत्र का व्याप्तिरित्यतआह व्याप्तिरिति साध्यवदन्येति वह्निमान् धूमादित्यादौ साध्यं वह्निः साध्यवान् महानसादिः तदन्योजलह्रदादिः तदवृत्तित्वं धूमस्येति लक्षणसमन्वयः धूमवान् वह्नेरित्यादौ साध्यवदन्यस्मिन्नयःपिण्डादौ वह्निसत्त्वान्नातिव्याप्तिःअत्र येनसम्बन्धेन साध्यं तेनैव सम्बन्धेन साध्यवान् बोध्यःअन्यथा समवाय सम्बन्धेन वह्निमान् वह्नेरवयवःतदन्योमहानसादिः तत्र धूमस्य विद्यमानत्वात् अव्याप्तिप्रसङ्गात् साध्यवदन्यश्चसाध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदवान् बोध्यः तेन यत्किञ्चिद्वह्निमान् महानसादिस्तद्भिन्ने पर्व्वतादौ धूमस्य सत्त्वेऽपि न क्षतिः येन सम्बन्धेन हेतुस्तेन सम्बन्धेन साध्यवदन्यवृत्तित्वं बोध्यं तेन साध्यवदन्यस्मिन् धूमावयवे धूमस्य समवायसम्बन्धेन सत्त्वेऽपि न क्षतिः साध्यवदन्यावृत्तित्वं साध्यवदन्यवृत्तित्व त्वावच्छिन्नाभावः तेन धूमवान् वह्नेरित्यत्र साध्यवदन्यह्रदादिवृत्तित्वाभावेऽपि नातिव्या

दित्यादावतिव्याप्तिः सत्त्वाधिकरणेगुणादौ यः संयो गाभावस्तस्य प्रतियोग्यधिकरणद्रव्यवृत्तित्वादिति वाच्यं हेत्वधिकरणे प्रतियोग्यनधिकरणवृत्तित्वविशिष्टस्य विवक्षितत्वात् स्वप्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्त्यभावइति निष्कर्षः प्रतियोग्यनधिकरणं स्वप्रतियोगितावच्छेदकसम्बन्धेनप्रतियोगितावच्छेदकावच्छिन्नानधिकरणं बोध्यं तेन विशिष्टसत्तावान् जातेरित्यादौ जात्यधिकरणगुणादौ विशिष्टसत्ताभावप्रतियोगिसमानाधिकरणत्वेऽपि न क्षतिः एवं साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणत्वं बोध्यं तेन ज्ञानवान् द्रव्यत्वादित्यादौ द्रव्यत्वाधिकरणघटादेर्विषयतासम्बन्धेनज्ञानाधिकरणत्वेऽपि न क्षतिः इत्यञ्च वह्निमान् धूमादित्यादौ धूमाधिकरणेसमवायेन वह्निविरहसत्त्वेऽपि न क्षतिः ननु प्रतियोगितावच्छेदकावच्छिन्नस्य यस्य कस्यचित् तत्सामान्यस्य वा अनधिकरणत्वं यत्किञ्चित्प्रतियोगितावच्छेदकावच्छिन्नस्य वानधिकरणत्वमुक्तम् आद्ये कपिसंयोगी एतद्वृक्षत्वादित्यादावव्याप्तिः। कपिसंयोगाभावस्य हि प्रतियोगितावच्छेदकावच्छिन्नोद्यावृत्तिरपि कपिसंयोगोभवति तदनधिकरणञ्च वृक्षइति द्वितीयेप्रतियोगिव्यधिकरणाभावाप्रसिद्धिः सर्व्वस्यैवाभावस्य पूर्व्वक्षणवृत्तित्वविशिष्टस्वात्म

वात्मकप्रतियोगिसमानाधिकरणत्वात् न च वह्निमान् धूमादित्यादौ घटाभावादेः पूर्व्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोग्यधिकरणत्वं यद्यपि पर्व्वतादेः तथापि साध्यतावच्छेदकसम्बन्धेन तत्प्रतियोग्यनधिकरणवृत्तित्वमस्त्येवेति कथमप्रसिद्धिरिति वाच्यं घटाभावे यो वह्न्यभावस्तस्य घटाभावात्मकतया घटाभावस्य वह्निरपि प्रतियोगी तदधिकरणञ्च पर्व्वतादीति क्रमेण प्रतियोगिव्यधिकरणस्याप्रतिसिद्धत्वात् यदि च घटाभावादौ वह्न्यभावादिर्भिन्न इत्युच्यते तथापि धूमाभाववान् वह्न्यभावादित्यादावव्याप्तिः तत्र साध्यतावच्छेदकसम्बन्धः स्वरूपसम्बन्धः तेन सम्बन्धेन सर्व्वस्यैवाभावस्य च पूर्व्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोग्यधिकरणत्वं हेत्वधिकरणस्येति द्वितीये तु कपिसंयोगाभाववान् आत्मत्वादित्यादावव्याप्तिः तत्रात्मवृत्तिकपिसंयोगाभावाभावः कपिसंयोगः तस्य च गुणत्वात्तत्प्रतियोगितावच्छेदकं गुणसामान्याभावत्वमपि तदवच्छिन्नानधिकरणत्वं हेत्वधिकरणस्यात्मन इति मैवं यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतस्तादृशप्रतियोगितानवच्छेदकत्वस्य विवक्षितत्वात् ननु कालो घटवान् कालपरिमाणात् इत्यत्राव्याप्तिःप्रतियोगिव्यधिकरणाभावाप्रसिद्धेः हेत्वधिकरणस्य महाकालस्य जगदा

धारतया सर्व्वेषामभावानां साध्यतावच्छेदकसम्बन्धे न कालिकविशेषणतया प्रतियोग्यधिकरणत्वात् अत केचित् महाकालभेदविशिष्टघटाभावस्तत्र प्रतियोगिव्यधिकरणमहाकालस्य घटाभाववत्त्वेऽपि महाकालभेदविशिष्टघटानाधारत्वात् महाकाले महाकालभेदाभावात् वस्तुतस्तु प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्त्यभावप्रतियोगितासामान्ये यत्सम्बन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभावस्तेन सम्बन्धेन तद्धर्मावच्छिन्नस्य तत्र हेतुव्यापकत्वं बोध्यं व्यापकसामानाधिकरण्यञ्च व्याप्तिः यत्सम्बन्धः साध्यतावच्छेदकसम्बन्धः यद्धर्मः साध्यतावच्छेदकं तत्र यदि यद्धर्मावच्छिन्नत्वभावमात्रमित्युच्यते तदा समवायेन योवह्न्यभावस्तस्य प्रतियोगितावच्छेदकसम्बन्धःसमवायस्तेन प्रतियोग्यनधिकरणपर्व्वतादिवृत्तिः सएव तत्प्रतियोगितावच्छेदकञ्च वह्नित्वमित्यव्याप्तिः स्यात् यदि च य त्सम्बन्धावच्छिन्नत्वाभावमात्रमुच्यते तदा तादृशस्य संयोगेनघटाभावस्य प्रतियोगितायां संयोगसम्बन्धावच्छिन्नत्वसत्त्वादव्याप्तिः स्यादतउभयमुपात्तम् इत्थञ्च कालोघटवान् कालपरिमाणादित्यादौ संयोगसम्बन्धेन योघटाभावस्तत्प्रतियोगिनोघटस्यानधिकरणे महाकाले वर्त्तमानः सएव संयोगेनघटाभावास्तस्य

प्रतियोगितायां कालिकसम्बन्धावच्छिन्नत्वघटत्वाव च्छिन्नत्वोभयाभावसत्त्वान्नाव्याप्तिः धूमवान् वह्नेरि त्यादावतिव्याप्तिवारणाय सामान्यपदमुपात्तं ननु प्र मेय वह्निमान् धूमादित्यादौ प्रमेयवह्नित्वावच्छिन्न त्वमप्रसिद्धं गुरुधर्म्मस्यानवच्छेदकत्वादिति चेन्न क म्बुग्रीवादिमान्नास्तीति प्रतीत्या कम्बुग्रीवादिमत्त्वाव च्छिन्नप्रतियोगिताविषयीकरणेन गुरुधर्म्मस्याप्यव च्छेदकत्वस्वीकारादिति संक्षेपः पक्षवृत्तित्वमित्यत्र पक्षत्वं किं तदाह सिषाधयिषया शून्या सिद्धिरि त्यादि सिषाधयिषाविरहविशिष्टायाः सिद्धेरभावः पक्षता तद्वान् पक्ष इत्यर्थः सिषाधयिषामात्रं न पक्ष ता विनापि सिषाधयिषां घनगर्जितेन मेघानुमा नात् सिद्धौ सत्यामपि सिषाधयिषासत्त्वेऽनुमितिर्भ वत्येवातः सिषाधयिषाविरहविशिष्टत्वं सिद्धौ विशे षणं तथाच यत्र सिद्धिर्नास्ति तत्र सिषाधयिषायां सत्यामसत्यामपि पक्षता यत्र च सिषाधयिषास्ति तत्र सिद्धौ सत्यामसत्यमपि पक्षता यत्र च सिद्धि रस्ति सिषाधयिषा च नास्ति तत्र न पक्षता सि षाधयिषाविरहविशिष्टसिद्धेः सत्त्वात् ननु यत्र प रामर्शानन्तरं सिद्धिस्ततः सिषाधयिषा तत्र सिषा धयिषाकाले परामर्शनाशान्नानुमितिः यत्र सिद्धि परामर्शसिषाधयिषाः क्रमेण भवन्ति तत्र सिषा

षयिषाकाले सिद्धेर्नाशात् प्रतिबन्धकाभावादेवानुमितिः यत्र सिषाधयिषासिद्धिपरामर्शाः सन्ति तत्र परामर्शकाले सिषाधयिषैव नास्ति एवमन्यत्रापि सिद्धिकाले परामर्शकालेन सिषाधयिषायोग्यविभुविशेषगुणानां यौगपद्यनिषेधात् कथं सिषाधयिषाविरहविशिष्टत्वं सिद्धेर्विशेषणमिति चेन्न यत्र वह्निव्याप्यधूमवान् पर्व्वतोवह्निमानित्यनुमितिः सुखसाधनमिति प्रत्यक्षं स्मरणं वा ततः सिषाधयिषा तत्र पक्षतासम्पत्तये सिषाधयिषाविरहविशिष्टत्वविशेषणस्यावश्यकत्वादिति अत्रेदं बोध्यं यादृशयादृशसिषाधयिषासत्त्वे सिद्धिसत्त्वे यल्लिङ्गकानुमितिस्तादृशसिषाधयिषाविरहविशिष्टसिद्ध्यभावस्तल्लिङ्गकानुमितौ पक्षता तेन सिद्धिपरामर्शसत्त्वेऽपि यत्किञ्चित् ज्ञानं जायतामितीच्छायामपि नानुमितिः वह्निव्याप्यधूमवान् पर्व्वतोवह्निमानिति प्रत्यक्षसत्त्वे प्रत्यक्षादिभिन्नं वह्निज्ञानं जायतामितीच्छायामनुमत्येव एवं धूमपरामर्शसत्त्वे आलोकेन वह्निमनुमिनोमीतीच्छायामपि नानुमितिः सिषाधयिषाविरहकाले यादृशसिद्धिसत्त्वे नानुमिति स्तादृशीसिद्धिर्विशिष्य तत्तदनुमितिप्रतिबन्धिका वक्तव्या तेन पर्व्वतस्तेजस्वी पाषाणमयोवह्निमानिति ज्ञानसत्त्वेऽप्यनुमितेर्नविरोधः परन्तुपक्षतावच्छेदकसामानाधि

कारण्येन साध्यसिद्धावपि तदवच्छेदेनानुमितिदर्शनात् पक्षतावच्छेदकावच्छेदेनानुमितिं प्रति पक्षतावच्छेदकावच्छेदेन सिद्धिरेव प्रतिबन्धिका पक्षतावच्छेदकसामानाधिकरण्येनानुमितिं प्रति तु सिद्धिमात्रं विरोधि इदन्तु बोध्यम् अयं पुरुषोन वेति संशयानन्तरं यत्र पुरुषत्वव्याप्यकरादिमानयम् इति ज्ञानं तत्रासत्यामनुमित्सायां पुरुषत्वस्य प्रत्यक्षं भवति न त्वनुमितिरतोऽनुमित्साविरहविशिष्टसमानविषयकप्रत्यक्षसामग्री कामिनीजिज्ञासादिवत् स्वातन्त्र्येण प्रतिबन्धिका एवं परामर्शानन्तरं विनापि प्रत्यक्षेच्छां पक्षादिप्रत्यक्षानुत्पत्तेः प्रत्यक्षेच्छाविरहविशिष्टानुमितिसामग्री भिन्नविषयकप्रत्यक्षे प्रतिबन्धिका। प्रसङ्गसङ्गत्या हेत्वाभासान् विभजते अनैकान्तइत्यादि तल्लक्षणन्तु यद्विषयकत्वेन ज्ञानस्यानुमितिविरोधित्वं तत्त्वं तथाहि व्यभिचारादिविषयकत्वेन ज्ञानस्यानुमितिविरोधित्वात्ते दोषाः यद्विषयकत्वञ्च यादृशविशिष्टविषयकत्वं बोध्यं तेन बाधभ्रमस्यानुमितिविरोधित्वेऽपि तत्र सर्व्वतोवह्न्यभाववानिति विशिष्टस्याप्रसिद्धत्वान्न हेतुदोषाः न च वह्न्यभावव्याप्यपाषाणमयत्ववान् पर्व्वतइति परामर्शकाले वह्निव्याप्यधूमस्याभासत्वं न स्यात् तत्र वह्न्यभावव्याप्यवान् पक्षइति विशिष्टस्याप्रसिद्धत्वादिति वाच्यम् इ

ष्टापत्तेः अन्यथा बाधभ्रमस्याप्यनित्यदोषत्वापत्तेः तस्मात्तत्र वह्न्यभावव्याप्यपाषाणमयत्ववान् इति परामर्शकाले वह्निव्याप्यधूमस्य नाभासत्वं भ्रमादनुमितिप्रतिबन्धमात्रं हेतुस्तु न दुष्ट इति इत्यञ्च साध्याभाववद्वृत्तिहेत्वादिकं दोषः तद्वत्ता च हेतौ येन केनापि सम्बन्धेनेति नव्याः परे तु यद्विषयकत्वेन ज्ञानस्यानुमितिविरोधित्वं तद्वत्त्वं हेत्वाभासत्वं स त्प्रतिपक्षेविरोधिव्याप्त्यादिकमेव तथा तद्वत्त्वं हेतो र्ज्ञानरूपसम्बन्धेन नचैवं वह्निमान् धूमादित्यादौ बाधभ्रमे पक्षे साध्याभावविषयकत्वेनानुमितिविरोधित्वात् ज्ञानरूपसम्बन्धेन तद्वत्त्वस्यापि सत्त्वात् सद्धेतोरपि बाधितत्वापत्तिरिति वाच्यं तत्र ज्ञानस्य सम्बन्धत्वाकल्पनात् अत्र सत्प्रतिपक्षित इति व्यवहारेण तत्कल्पनात् तत्र बाधितव्यवहाराभावादित्याहुः। अनुमितिविरोधित्वञ्च अनुमितितत्कारणान्यतरविरोधित्वं तेन एकहेतौ व्यभिचारग्रहे हेत्वन्तरेणानुमित्युत्पत्तेः तदभावाद्यनवगाहित्वाच्च व्यभिचारज्ञानस्यानुमितिविरोधित्वाभावेऽपि न क्षतिरिति संक्षेपः। यादृशपक्षसाध्यहेतौ यावन्तो दोषास्तावदन्यान्यत्वं तत्र हेत्वाभासत्वं पञ्चकथनन्तु तत्सम्भवस्थलाभिप्रायेण एवं साधारण्याद्यन्यतमत्वम् अनैकान्तिकत्वम् आद्यः साधारणइत्यादि साधारणः साध्यवद्

न्यवृत्तिर्हेतुः तेन च व्याप्तिग्रहप्रतिबन्धः क्रियते असाधारणः साध्यासमानाधिकरणो हेतुः तेन सा ध्यसामानाधिकरण्यग्रहः प्रतिबध्यते यथा शब्दो नित्यः शब्दत्वादित्यादौ चासाधारण्यं शब्दोऽनित्यः शब्दत्वादित्यादौ असाधारण्यभ्रमः अन्ये तु सपक्षा वृत्तिरसाधारणः सपक्षश्च निश्चितसाध्यवान् इत्यञ्च शब्दोऽनित्यः शब्दत्वादित्यादौ पक्षे यदा साध्यनि श्चयः तदा नासाधारण्यं तत्र हेतुनिश्चयादिति व दन्ति अनुपसंहारी च अत्यन्ताभावाप्रतियोगिसा ध्यकादिः तेन च व्यतिरेकव्याप्तिग्रहप्रतिबन्धः क्रि यते विरुद्धस्तु साध्यव्यापकीभूताभावप्रतियोगिमय स्त्र साध्याभावग्रहसामग्रीत्वेन प्रतिबन्धकः तत्प्रति पक्षे तु प्रतिहेतुः साध्याभावसाधकः अत्र तु हेतुरे वेति विशेषः साधराभावसाधकएव साधरसाधकत्वे न उपन्यस्त इत्यशक्तिविशेषोपस्थापकत्वाच्च विशेषः सत्प्रतिपक्षः साध्याभावव्याप्यवान् पक्षः अगृहीताप्रा माण्यकसाध्यव्याप्यवत्त्वेनोपस्थितिकालीनसाध्याभाव व्याप्यवत्त्वेनोपस्थितिविषयस्तथा इत्यन्ये अत्र च पर स्पराभावव्याप्यवत्ताज्ञानात् परस्परानुमितिप्रतिब न्धःफलं अत्र केचित् यथा घटाभावव्याप्यवत्ता ज्ञा ने विद्यमानेऽपि घटचक्षुःसंयोगे सति घटवत्ताज्ञानं जायते यथा च सत्यपि पीतत्वाभावव्याप्यशङ्खत्वव

त्वाज्ञाने पित्तादिदोषे पीतः शङ्खइति धीर्जायते एवं कोटिद्वयव्याप्यवत्तादर्शने कोटिद्वयप्रत्यक्षरूपः संशयोभवति तथा सत्प्रतिपक्षस्थले संशयरूपानुमितिर्भवत्येव यत्र चैककोटिव्याप्यदर्शनं तत्राधिकबलतया द्वितीयकोटिभानप्रतिबन्धान्नसंशयः। फलबलेन चाधिकसमबलभावः कल्प्यतइति वदन्ति तन्न तदभावव्याप्यवत्ताज्ञाने सति तदुपनीतभानविशेष शाब्दबोधादेरनुदयात् लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यज्ञानमात्रे तस्य प्रतिबन्धकता लाघवात् नतूपनीतभानविशेषे शाब्दबोधे च पृथक्प्रतिबन्धकता गौरवात् तथाच प्रतिबन्धकसत्त्वात् कथमनुमितिः न हि लौकिकसन्निकर्षस्थले प्रत्यक्षमिव सत्प्रतिपक्षस्थले संशयानुमितिः प्रामाणिकी येनानुमितिभिन्नत्वेनापि विशेषणीयं यत्र कोटिद्वयव्याप्यवत्ताज्ञानं तत्रोभयत्राप्रामाण्यज्ञानात् संशयोनान्यथा अगृहीताप्रामाण्यकस्यैव विरोधिज्ञानस्य प्रतिबन्धकत्वादिति आश्रयासिद्ध्याद्यन्यतमत्वम् असिद्धत्वम् आश्रयासिद्धिः पक्षे पक्षतावच्छेदकस्याभावः यत्र च काञ्चनमयः पर्व्वतोवह्निमानिति साध्यते तत्र पर्व्वतोन काञ्चनमयइतिज्ञाने विद्यमाने काञ्चनमयपर्व्वते परामर्शप्रतिबन्धः फलं स्वरूपासिद्धिस्तु पक्षे व्याप्यत्वाभिमतस्याभावः अत्र च ह्रदो द्रव्यं

धूमादित्यादौ पक्षे व्याप्यत्वाभिमतस्य हेतोरभावे ज्ञाते पक्षे साधनव्याप्यहेतुमत्त्वाज्ञानरूपपरामर्शप्रतिबन्धः फलं साध्यासिद्धिरपि व्याप्यत्वासिद्धिः सा च साध्ये साध्यतावच्छेदकाभावः तथाच काञ्चनमयवह्निमानित्यादौ साध्ये साध्यतावच्छेदकाभावे ज्ञाते साध्यतावच्छेदकविशिष्टसाध्यव्याप्यवत्ताज्ञानरूपपरामर्शप्रतिबन्धः फलम् एवं हेतौ हेतुतावच्छेदकाभावःसाधनाप्रसिद्धिः यथाच काञ्चनमयधूमादित्यादौ हेतुतावच्छेदकविशिष्टहेतोर्ज्ञानाभावात् तत्तद्धेतुकव्याप्तिज्ञानादेरभावः फलम् एवं वह्निमान् नीलधूमादित्यादौ गुरुतया नीलधूमत्वं हेतुतानवच्छेदकमिति व्याप्यत्वासिद्धिरित्यपि वदन्ति बाधस्तु पक्षे साध्याभावादिः एतस्यानुमिति प्रतिबन्धः फलं तद्धर्म्मिकतदभावनिश्चयोलौकिकसन्निकर्षाजन्यदोषविशेषाजन्यतद्धर्म्मिकतज्ज्ञानमात्रविरोधीति न तु तत्र संशयसाधारणं पक्षे साध्यसंसृष्टत्वज्ञानम् अनुमितिकारणं तद्विरोधितया बाधसत्प्रतिपक्षयोर्हेत्वाभासत्वमिति युक्तं पृथिव्यामितरभेदएतादृशानुमित्यनापत्तेः पूर्व्वं पक्षे साध्यसंसृष्टत्वज्ञानाभावात् अप्रसिद्धसाध्यकानुमित्यपलापापत्तेः साध्यसंशयं विनानुमित्युत्पत्तेश्च एवं साध्याभावज्ञाने प्रमात्वज्ञानमपि न प्रतिबन्धकं प्रमाणाभावात् गौरवाच्च

अन्यथा सत्प्रतिपक्षादावपि तदभावव्याप्यवत्ताज्ञाने प्रमात्वविषयकत्वेन प्रतिबन्धकतापत्तेः किन्तु भ्रमत्वज्ञानानास्कन्दितबाधादिबुद्धेः प्रतिबन्धकता तत्र भ्रमत्वशङ्काविघटने प्रामाण्यज्ञानं क्वचिदुपयुज्यते नच बाधस्थले पक्षे हेतुसत्त्वे व्यभिचारः पक्षे हेत्वभावे स्वरूपासिद्धिरेव दोषइति वाच्यं बाधज्ञानव्यभिचार ज्ञानादेर्भेदात् किञ्च यत्रापरामर्शानन्तरं बाधबुद्धिस्तत्र व्यभिचारज्ञानादेरकिञ्चित्करत्वात् बाधस्यानुमितिप्रतिबन्धकत्वं वाच्यम् एवं यत्रोत्पत्तिलक्षणावच्छिन्ने घटादौ गन्धव्याप्यपृथिवीत्वज्ञानं तत्र बाधस्यैव प्रतिबन्धकत्वं वाच्यं न च घटे गन्धवत्त्वात् कथं बाधइति वाच्यं पक्षतावच्छेदकदेशकालावच्छेदानानुमितेरनुभवसिद्धत्वादिति सत्प्रतिपक्ष तद्व्याप्यभिन्नोयोयोहेत्वाभासव्याप्यः स तन्मध्य एवान्तर्भवति अन्यथा हेत्वाभासाधिक्यप्रसङ्गात् बाधव्याप्यसत्प्रतिपक्षभिन्नएव स्वतन्त्रेच्छेन मुनिना पृथगुपादानात् सत्प्रतिपक्षव्याप्यस्तु न प्रतिबन्धकइति प्रकटितार्थः यः सपक्षेविपक्षे च भवेत् साधारणस्तु सइति सपक्षविपक्षवृत्तिः साधारणइत्यर्थः सपक्षः साध्यवान् विपक्षः साध्याभाववान् विरुद्धवारणाय सपक्षवृत्तित्वमुक्तं वस्तुतोविपक्षवृत्तित्वमेव वाच्यं विरुद्धस्य साधारणत्वेऽपि दूषकताबीजस्यभिन्नतया

तस्य पार्थक्यात् यस्तूभयस्मात् व्यावृत्तः सत्वसाधारणोमतइति सपक्षविपक्षव्यावृत्तइत्यर्थः सपक्षःसाध्यवत्तया निश्चितः विपक्षः साध्यशून्यतया निश्चितः शब्दोनित्यःशब्दत्वादित्यादौ यदा शब्देऽनित्यसन्देहस्तदा सपक्षत्वं विपक्षत्वञ्च घटत्वादीनामेव तद्व्यावृत्तञ्च शब्दत्वमिति तदा तदसाधारणं यदा तु शब्दे नित्यत्वनिश्चयः तदा नासाधारणः इदञ्च प्राचां मतेन नवीनमतं पूर्व्वमुक्तं केवलान्वयिपक्षकइति केवलान्वयिधर्म्मावच्छिन्नपक्षकइत्यर्थः सर्व्वमभिधेयं प्रमेयत्वादित्यादौ सर्व्वस्यैवपक्षत्वात् सामानाधिकरण्यग्रहस्थलान्तराभावान्नानुमितिः इदन्तु न सम्यक् पक्षैकदेशे घटसहचारग्रहेऽपि क्षतेरभावात् अस्तु वा सहचाराग्रस्तावतापि अज्ञानरूपासिद्धिरेव ननु हेत्वाभासत्वं तस्य तथापि केवलान्वयिसाध्यकत्वं तत्त्वमित्युक्तं यःसाध्यवतीति एवकारेण साध्यवत्त्वावच्छेदेन हेत्वभावोबोधितः तथाच साध्यव्यापकीभूताभावप्रतियोगित्वं तदर्थः। असिद्धं विभजते आश्रयासिद्धिरित्यादि पक्षासिद्धिरिति आश्रयासिद्धिरित्यर्थः। नीलधूमादिकइति नीलधूमत्वं गुरुतया न हेतुतावच्छेदकं समानाधिकरणव्याप्यतावच्छेदकधर्म्मान्तराघटितस्यैव व्याप्यतावच्छेदकत्वात् धूमप्रागभावत्वसंग्रहाय समानाधिकरणेति विरुद्धयोरिति कपिसंयोग

तदभावव्याप्यवत्त्वपरामर्शेऽपि न सत्प्रतिपक्षितत्व मत उक्तं विरुद्धयोरिति तथाच स्वसाध्यविरुद्धसाध्याभावव्याप्यवत्तापरामर्शकालीनसाध्यव्याप्यवत्तापरामर्शविषयइत्यर्थः । साध्यशून्यइति पक्षः पक्षतावच्छेदकविशिष्टइत्यर्थः तेन घटे गन्धसत्त्वेऽपि न क्षतिः एवं मूलावच्छिन्नोऽपक्षः कपिसंयोगी अत्रापि बोध्यम् । उपमितिं व्युत्पादयति ग्रामीणस्येति यत्रावश्यकेन केनचित् ग्रामीणं प्रतिउक्तं गोसदृशोगवयपदवाच्यइति पश्चाच्च ग्रामीणेन क्वचिदरण्येगवयदृष्टस्तत्र गोसादृश्यज्ञानं यत्तत् उपमितिकरणं तदनन्तरं गोसदृशोगवयपदवाच्य इत्यतिदेशवाक्यार्थस्मरणं जायते तदेव व्यापारः तदनन्तरं तत्र गवयोगवयपद वाच्यम् इति ज्ञानं जायते तदुपमितिः नत्वयं गवयपदवाच्यइत्युपमितिः गवयान्तरे शक्तिग्रहाभावप्रसङ्गात् । शाब्दबोधप्रकारं दर्शयति पदज्ञानन्त्विति नतु ज्ञायमानं पदं करणं पदाभावेऽपि मौनिश्लोकादौ शाब्दबोधात् पदार्थधीरिति पदजन्यपदार्थस्मरणं व्यापारः अन्यथा पदज्ञानवतः प्रत्यक्षादिना पदार्थोपस्थितावपि शाब्दबोधापत्तेः तत्रापि वृत्त्यापदजन्यत्वं बोध्यम् अन्यथा घटादिपदात् समवायसम्बन्धेन आकाशस्मरणं जायते आकाशस्यापि शाब्दबोधापत्तेः वृत्तिः

शक्तिलक्षणान्यतरः सम्बन्धः अत्रैव शक्तिज्ञानस्य उपयोगः पूर्वं शक्तिग्रहाभावे पदज्ञानेऽपि तत्सम्बन्धेन स्मरणानुपपत्तेः पदज्ञानस्य सम्बन्धिज्ञानविधयाऽर्थस्मारकत्वं शक्तिश्च पदेन सह पदार्थस्य सम्बन्धः अस्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छारूपा आधुनिके नाम्नि शक्तिरस्त्येव एकादशेऽहनि पिता नाम कुर्य्यात् इतीश्वरेच्छायाः सत्त्वात् आधुनिके तु सङ्केते न शक्तिरिति सम्प्रदायः नव्यास्तु ईश्वरेच्छा न शक्तिः किन्त्विच्छैव तेन आधुनिकसङ्केतेऽपि शक्तिरस्तीति वदन्ति शक्तिग्रहश्च व्याकरणादितः तथाहि शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च । वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः । धातुप्रकृतिप्रत्ययादीनां शक्तिग्रहो व्याकरणाद्भवति क्वचित्तु सति बाधके त्यज्यतेऽपि यथा वैयाकरणैराख्यातस्य कर्त्तरि शक्तिरुच्यते चैत्रः पचतीत्यादौ कर्त्तुश्चैत्रस्याभेदान्वयस्तत्र गौरवान्न जन्यते किन्तु कृतौ शक्तिग्रहो लाघवात् कृतिश्चैत्रादौ प्रकारीभूय भासते न च कर्त्तुरनभिधानात् चैत्रादिपदानन्तरं तृतीया स्यादिति वाच्यं कर्तृसंख्यानभिधानस्य तत्र तन्त्रत्वात् संख्याभिधानयोग्यस्य कर्त्तृत्वाद्यनवरुद्धः प्रथमान्तपदो

[illegible]

मर्थः तेन चैत्रइव गच्छतीत्यादौ न चैत्रे संख्यान्वयः यत्र कर्म्मादौ न विशेषणत्वतात्पर्य्यं तद्वारणायप्रथमान्तेति यद्वा धात्वर्थातिरिक्ताविशेषणत्वं प्रथमार्थः तेन चैत्रइव गच्छतीत्यत्र चैत्रादेर्वारणं स्तोकं पचतीत्यादौ स्तोकादेर्वारणाय च द्वितीयदलं तस्य द्वितीयान्तोपस्थाप्यत्वाद्वारणम् एवं व्यापारेऽपि न शक्तिर्गौरवात् रथोगच्छतीत्यादौ स्वव्यापारे आश्रयत्वे लक्षणा जानातीत्यादौ तु आश्रयत्वे नश्यतीत्यादौ प्रतियोगित्वे निरूढलक्षणा उपमानाद्यथा शक्तिग्रहस्तथोक्तम् एवं कोषादपि शक्तिग्रहः सति बाधके क्वचित् त्यज्यते यथा नीलादिपदानां नीलरूपादौ नीलादिविशिष्टे च शक्तिः कोषव्युत्पादिता तथापि लाघवात् नीलादौ शक्तिः नीलादिविशिष्टे लक्षणेति एवमाप्तवाक्यादपि यथा कोकिलः पिकपदवाच्यइत्यादिशब्दात् पिकादिशक्तिग्रहः एवं व्यवहारादपि यथा प्रयोजकवृद्धेन घटमानयेत्युक्तं तत् श्रुत्वा प्रयोज्यवृद्धेन घटआनीतस्तदवधार्य्य पार्श्वस्थोबालोघटानयनरूपं कार्य्यं घटमानयेतिशब्दप्रयोज्यम् अवधारयति ततश्च घटमानय गामानय इत्यादौ आवापोद्वापाभ्यां घटादिपदानां कार्य्यान्वित घटादौ शक्तिं गृह्णाति इत्यञ्च भूतले नीलोघटइत्यादिशब्दान्न शाब्दबोधः घटादि

पदानां कार्य्यान्वितघटादिबोधे सामर्थ्यावधारणात् कार्य्यताबोधं प्रति च लिङादीनां सामर्थ्यात् तदभावान्न शाब्दबोधइत्यपि केचित् तन्न प्रथमतः कार्य्यान्वितघटादौ शक्त्यवधारणेऽपि लाघवेन पश्चात्तस्य परित्यागौचित्यात् अतएव चैत्र पुत्रस्ते जातः कन्या ते गर्भिणी जाता इत्यादौ मुखप्रसादमुखमालिन्याभ्यां सुखदुःखे अनुमाय तत्कारणत्वेन परिशेषात् शाब्दबोधं निर्णीय तद्धेतुतया तं शब्दमवधारयति तथाच व्यभिचारात्कार्य्यान्विते न शक्तिः न च तत्र ते पश्येत्यादिशब्दान्तरमध्याहार्य्यं मानाभावात् चैत्र पुत्रस्ते जातोऽमृतश्च इत्यादौ तदभावाच्च इत्यञ्च लाघवादन्वितघटेऽपि शक्तिं त्यक्त्वा घटपदस्य घटमात्रे शक्तिमवधारयति एवं वाक्यशेषादपि शक्तिग्रहः यथा यवमयश्चरुर्भवतीत्यत्र यवपदस्य दीर्घशूकविशिष्टे आर्य्याणां प्रयोगः कङ्गौ च म्लेच्छानां तत्र हि यथान्या ओषधयोम्लायन्ते अथैते मोदमानाइवोत्तिष्ठन्ति वसन्ते शस्यशस्यानां जायते पत्रशातनम्। मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनइति वाक्यशेषात् दीर्घशूके शक्तिनिर्णीयते कङ्गौ तु शक्तिभ्रमात्प्रयोगः नानाशक्तिकल्पने गौरवात् हरिपदादौ तु विनिगमकाभावान्नानाशक्तिकल्पनम्। एवं विवरणा

दपि शक्तिग्रहः विवरणन्तु तत्समानार्थपदान्तरेण तदर्थकथनं यथा घटोऽस्तीत्यस्य कलसोऽस्तीत्यनेन विवरणाद्घटपदस्य कलसे शक्तिग्रहः एवं पचतीत्यस्य पाकं करोतीत्यनेन विवरणादाख्यातस्य यत्नार्थकत्वं कल्प्यते एवं प्रसिद्धपदसान्निध्यादपि शक्तिग्रहः यथा इह सहकारतरौ मधुरं पिको रौतीत्यादौ पिकपदस्य शक्तिग्रहइति तत्र जातावेव शक्तिर्नतु व्यक्तौ व्यभिचारादानन्त्याच्च व्यक्तिं विना च जाति भानस्यासम्भवाद्व्यक्तेरपि भानमिति केचित् तन्न शक्तिं विना व्यक्तिभानानुपपत्तेः न च व्यक्तौ लक्षणा अनुपपत्ति प्रतिसन्धानं विनापि व्यक्तिबोधात् न च व्यक्तिशक्तावानन्त्यं सकलव्यक्तावेकस्याएव शक्तेः स्वीकारात् न चाननुगमः गोत्वादेरेवानुगमकत्वात किञ्च गौः शक्येति शक्तिग्रहोयदि तदाव्यक्तौ शक्तिर्यदि तु गोत्वं शक्यमिति शक्तिग्रहस्तदा गोत्वप्रकारकपदार्थस्मरणं शाब्दबोधश्च न स्यात् समानप्रकारत्वेन शक्तिज्ञानस्य पदार्थस्मरणं शाब्दबोधं प्रतिच हेतुत्वात् किञ्च गोत्वे यदिशक्तिस्तदा गोत्वत्वं शक्यतावच्छेदकं वाच्यं गोत्वत्वन्तु गवेतरासमवेतत्वे सति सकलगोसमवेतत्वं तथाच गोव्यक्तीनां शक्यतावच्छेदकेऽनुप्रवेशात्तवैव गौरवं तस्मात्तत्तज्जात्याकृतिविशिष्टत

त्तद्‌शक्तिबोधानुपपत्त्या कल्प्यमाना शक्तिर्जात्या कृतिविशिष्टव्यक्तौ विश्राम्यतीति शक्तं पदन्तु क्वचि द्यौगिकं क्वचिद्रूढं क्वचिद्योगरूढं क्वचिद्यौगिक रूढं यत्रावयवार्थएव बुध्यते तद्यौगिकं यथा पाच कादिपदं यत्रावयवशक्तिनैरपेक्ष्येण समुदायशक्ति मात्रेण बुध्यते तद्रूढं यथा गोमण्डपादिपदं यत्र तु अवयवशक्तिविषये समुदायशक्तिरप्यस्ति त द्योगरूढं यथा पङ्कजादिपदं तथाहि पङ्कजपदम वयवशक्त्या पङ्कजनिकर्तृरूपमर्थं बोधयति समुदा यशक्त्याच पद्मत्वेन रूपेण पद्मं बोधयति न च केवलावयवशक्त्या कुमुदे प्रयोगः स्यादिति वाच्यं रूढिज्ञानस्य केवलयौगिकार्थप्रतिबन्धकत्वादिति प्राञ्चः वस्तुतस्तु समुदायशक्त्योपस्थितपद्मेऽवयवार्थ पङ्कजनिकर्तुरन्वयोभवतिसान्निध्यात् यत्र रूढ्यर्थस्य बाधः प्रतिसन्धीयते तत्र लक्षणयाकुमुदादेर्बोधः यत्र तु कुमुदत्वेन रूपेण बोधे न तात्पर्य्यज्ञानं पद्मत्वस्य च बाधस्तत्रावयवशक्तिमात्रेण निर्व्वाहइ त्यप्याहुः यत्र तु स्थलपद्मादावयवार्थबाधस्तत्र समु दायशक्त्या च पद्मत्वेन रूपेण बोधः यदि तु स्थलप ङ्कजं विजातीयमेव तदा लक्षणैव यत्रावयवार्थरूढ्य र्थयोः स्वातन्त्र्येण बोधस्तद्यौगिकरूढं यथोद्भिदा दिपदं तत्र हि ऊर्द्ध्वभेदनकर्त्ता तरुगुल्मादिरपि

बुध्यते योगविशेषोऽपीति लक्षणा शक्यसम्बन्धइत्या दि गङ्गायां घोषइत्यादौ गङ्गापदस्य शक्यार्थे प्र वाहरूपे घोषस्यान्वयानुपपत्तिस्तात्पर्य्यानुपपत्तिर्व्वा यत्र प्रतिसन्धीयते तत्र लक्षणया तीरस्य बोधः सा च शक्यसम्बन्धः तथाहि प्रवाहरूप शक्यार्थस म्बन्धस्य तीरे गृहीतत्वात्तीरस्य स्मरणं ततः शा ब्दबोधः परन्तु यद्यन्वयानुपपत्तिर्लक्षणावीजं स्या त्तदा यष्टीःप्रवेशयेत्यत्र लक्षणा न स्यात् यष्टिषु प्रवेशान्वयस्यानुपपत्तेरभावत्तेन यष्टिप्रवेशे भोजन तात्पर्य्यानुपपत्त्या यष्टिधरे लक्षणा एवं काकेभ्यो दधि रक्ष्यतामित्यादौ काकपदस्य दध्युपघातके ल क्षणा सर्व्वतोदधिरक्षायास्तात्पर्य्यविषयकत्वात् एवं छत्रिणो यान्तीत्यादौ छत्रिपदस्यैकसार्थवाहित्वेन लक्षणा इयमेवाजहत्स्वार्था लक्षणेत्युच्यते एकसार्थ वाहित्वेन रूपेण छत्रितदन्ययोर्बोधात् यदि चानु पपत्तिर्लक्षणावीजं स्यात् तदा क्वचिद्गङ्गापदस्य तीरे क्वचिद्घोषपदस्य मत्स्यादौ लक्षणेति नियमो न स्यात् इदन्तु बोध्यं शक्यार्थसम्बन्धोयदि तीरत्वेन रूपेण गृहीतस्तदा तीरत्वेन तीरबोधः यदि तु गङ्गातीरत्वेन रूपेण गृहीतस्तदा तेनैव रूपेण स्मरणम् अतएव लक्ष्यतावच्छेदकेन लक्षणा तत्प्र कारकबोधस्य तत्र लक्षणां विनाप्युपपत्तेः परन्त

एवं क्रमेण शक्यतावच्छेदकेऽपि शक्तिर्न स्यात् तत्प्रकारकशाब्दार्थस्मरणं प्रति तत्पदस्य सामर्थ्यमित्यस्य मयचत्वादिति विभावनीयं यत्र तु शक्यार्थस्य परम्परासम्बन्धरूपा लक्षणा सा लक्षितलक्षणेत्युच्यते यथा द्विरेफादिपदे रेफद्वयसम्बन्धो भ्रमरपदे ज्ञायते भ्रमरपदस्य च सम्बन्धो भ्रमरे ज्ञायते तत्र लक्षितलक्षणा किन्तु लाक्षणिकं पदं नानुभविकं लाक्षणिकार्थस्य शाब्दबोधे तु पदान्तरं कारणं शक्तिलक्षणान्यतरसम्बन्धेनेतरपदार्थान्वितस्वशक्यार्थशाब्दबोधं प्रतिपदानां सामर्थ्यावधारणात् वाक्ये तु शक्तेरभावात् शक्यसम्बन्धरूपा लक्षणापि नास्ति यत्र गभीरायां नद्यां घोष इत्युक्तं तत्र नदीपदस्य गभीरनदीतीरे लक्षणा गभीरापदार्थस्य नद्या सहाभेदेनान्वयः क्वचिदेकदेशान्वयस्य स्वीकृतत्वात् यदि तत्रैकदेशान्वयोऽपि न स्वीक्रियते तत्र नदीपदस्य गभीरनदीतीरे लक्षणा गभीरापदं तात्पर्य्यग्राहकं बहुव्रीहावप्येवं तत्र हि चित्रगुपदादौ यथैकदेशान्वयः स्वीक्रियते तदा गोपदस्य गोस्वामिनि लक्षणा गवि चित्राभेदान्वयः यदि तु एकदेशान्वयो न स्वीक्रियते तदा गोपदस्य चित्रगोस्वामिनि लक्षणा चित्रापदं तात्पर्य्यग्राहकं एवमारूढवानरो वृक्ष इत्यत्र वानरपदे वानरावेशकर्म्मणि लक्षणा आरूढपदञ्च

तात्पर्य्यग्राहकं एवमन्यत्रापि तत्पुरुषे तु पूर्व्व पदे लक्षणा तथाहि राजपुरुषादिपदे राजपदार्थेन पुरुषादिपदार्थस्य साक्षान्नान्वयः निपातातिरिक्तनामार्थयोर्भेदेनान्वयबोधस्याव्युत्पन्नत्वात् अन्यथा राजा पुरुषइत्यत्रापि तथान्वयबोधः स्यात् घटोन घटइत्यादौ घटपटाभ्यां नञः साक्षादेवान्वयात् निपातातिरिक्तेति नीलोघटइत्यादौ नामार्थयोरभेद सम्बन्धेनान्वयाद्भेदेनेति न च राजपुरुषइत्यादौ लुप्तविभक्तेः स्मरणं कल्प्यमिति वाच्यम् अस्मृतविभक्तेरपि ततोबोधोदयात् तस्मात् राजपदादौ राज सम्बन्धिनि लक्षणा सच पुरुषेण सहाभेदान्वयः द्वन्द्वे तु धवखदिरौ छिन्धीत्यादौ धवः खदिरश्च विभक्त्यर्थद्वित्वप्रकारेण बुध्यते तत्र लक्षणा न च साहित्ये लक्षणेति वाच्यं साहित्यशून्ययोरपि द्वन्द्वदर्शनात् न च एकक्रियान्वयित्वरूपं साहित्य मस्तीति वाच्यं क्रियाभेदे धवखदिरौ छिन्धीत्यादिदर्शनात् साहित्यस्य अननुभावाच्च तस्मात् साहित्यादिकं नार्थः अतएव राजपुरोहितौ सायुज्य कामौ यजेयातामित्यत्र लक्षणाभावात् द्वन्द्वआश्रीयते किन्तु वास्तवोभेदोयत्र तत्र द्वन्द्वः न च नीलघटयोरभेदइत्यादौ कथमिति वाच्यं तत्र नीलपदस्य नीलत्वं घटपदस्य घटत्वमर्थः अभेदइत्यस्या

अयाभेद इत्यर्थात् समाहारद्वन्द्वे तु यदि समाहा रोऽप्यनुभूयत इत्युच्यते तदाऽहिनकुलमित्यादौ पर पदेऽहिनकुलसमाहारे लक्षणा पूर्व्वपदं तात्पर्य्यग्रा हकं न च भेरीमृदङ्गं वादयेत्यत्र कथं समाहार स्यान्वयः अपेक्षाबुद्धिविशेषरूपस्य वादनासम्भवा दिति वाच्यं परम्परासम्बन्धेन तदन्वयात् एवं प च्चपुलीत्यादावपि परे तु अहिनकुलमित्यादौ अ हिनकुलञ्च बुध्यते प्रत्येकमेकत्वान्वयः समाहार संज्ञा च यत्र एकत्वं नपुंसकत्वं प्राणितूर्य्येत्या दिसूत्रेणोक्तं तत्रैव अन्यत्रैकवचनमसाध्विति वद न्ति। कर्म्मधारयस्थले तु नीलोत्पलमित्यादौ अभेद सम्बन्धेन नीलपदार्थ उत्पलपदार्थे प्रकारः तत्र च लक्षणा अतएव निषादस्थपतिं याजयेदित्यत्र न तत्पु रुषः लक्षणापत्तेः किन्तु कर्म्मधारयो लक्षणाभावात् न च निषादस्य सङ्करजातिविशेषस्य वेदानधिकारात् याजनासम्भव इति वाच्यं निषादस्य विद्याप्रयुक्ते स्तत एव कल्पनात् लाघवेन मुख्यार्थस्यान्वये तद नुपपत्त्या कल्पनायाः फलमुखगौरवतया अदो षत्वादिति उपकुम्भम् अर्द्धपिप्पलीत्यादौ परपदे तत्सम्बन्धिनि लक्षणापूर्व्वपदार्थप्रधानतया चान्व यबोध इति इत्थञ्च समासे न क्वापि शक्तिः पदश क्त्यैव निर्व्वाहादिति पितरौ श्वशुरौ इत्यादौ पितृ

पदे जनकदम्पत्योः श्वशुरपदे स्त्रीजनकदम्पत्यो र्लक्षणा एवमन्यत्रापि घटाइत्यादौ न लक्षणा घट त्वेन रूपेण नानाघटोपस्थितिसम्भवात् । आसत्ति र्योग्यता इत्यादि आसत्तिज्ञानं योग्यताज्ञानम् आकाङ्क्षाज्ञानं तात्पर्य्यज्ञानञ्च शाब्दबोधे का रणम् । तत्रासत्तिपदार्थमाह सन्निधानन्त्विति यत्पदार्थस्य यत्पदार्थेनान्वयोऽपेक्षितः तयोरव्य वधानेनोपस्थितिः कारणं तेनगिरिर्भुक्तमग्निमान् देवदत्तेनेत्यादौ न शाब्दबोधः । आसत्तिभ्र मात् शाब्दभ्रमाभावेऽपि न क्षतिः ननु यत्र छत्री कुण्डली वासस्वी देवदत्तइत्युक्तं तत्रो त्तरपदस्मरणेन पूर्व्वपदस्मरणस्य नाशात् अव्यव धाने तु उत्तरपदस्मरणासम्भवइति चेन्न प्रत्येक पदसंस्कारैश्चरमं तावद्विषयकस्मरणस्याव्यवधाने नोत्पत्तेः नानासन्निकर्षैरेकप्रत्यक्षस्येव नानासंस्का रैरेकस्मरणोत्पत्तेरपि सम्भवात् तावत्पदसंस्कारस हितचरमवर्णज्ञानस्योद्बोधकत्वात् कथमन्यथा ना नावर्णकपदस्मरणं परन्तु तावत्पदार्थानां स्मरणादे कदैव खले कपोतन्यायात् तावत्पदार्थानां क्रियाक र्म्मभावेनान्वयबोधरूपः शाब्दबोधोभवतीति केचित् अपरे तु यद्यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते तेन तेनान्वितः स्वार्थः पदैरेवावगम्यते ।

तथाच खण्डवाक्यार्थबोधानन्तरं तथैव पदार्थस्मृत्या महावाक्यार्थबोधइत्यप्याहुः एतेन तावद्वर्णाभिव्यङ्ग्यः पदस्फोटोऽपि निरस्तः तत्तद्वर्णसंस्कारसहितचरम वर्णोपलम्भेन तद्व्यञ्जकेनैवोपपत्तेरिति इदन्तु बोध्यं यत्र द्वारमित्युक्तं तत्र पिधेहीति पदस्य ज्ञानादेव बोधः न तु पिधानादिरूपार्थज्ञानात् पदजन्यपदार्थोपस्थितेस्तच्छाब्दबोधे हेतुत्वात् किञ्च क्रियाकर्म पदानां तेन तेनैव सह सकाङ्क्षत्वात् तेन क्रिया पदं विना कथं शाब्दबोधः स्यात् तथा पुष्पेभ्यइत्यादौ स्पृहयतीति पदाध्याहारं विना चतुर्थ्यनुपपत्तेः पदाध्याहारआवश्यकः। योग्यतां निर्वक्तिपदार्थ इत्यादिना एकपदार्थेऽपरपदार्थसम्बन्धोयोग्यतेत्यर्थः तज्ज्ञानाभावाच्च वह्निना सिञ्चतीत्यादौ न शाब्द बोधः नन्वेतस्यायोग्यताज्ञानं शाब्दबोधात्प्राक् सर्व्वत्र न सम्भवति वाक्यार्थस्यापूर्व्वत्वादिति चेन्न तत्तत्पदार्थस्मरणे सति क्वचित्संशयरूपस्य क्वचिन्निश्चयरूपस्यापि योग्यताज्ञानस्य सम्भवात् नव्यास्तु योग्यताज्ञानं न शाब्दज्ञाने कारणं वह्निनासिञ्चतीत्यादौ सेके वह्निकरणत्वाभावरूपा योग्यतानिश्चयेन प्रतिबन्धात् न शाब्दबोधः तदभावनिश्चयस्य लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यज्ञानमात्रे प्रतिबन्धकत्वात् शाब्दं प्रति प्रतिबन्धकत्वं सिद्धं योग्य

तात्पर्यज्ञानविलम्बाच्च शाब्दविलम्बोऽसिद्धइति वदन्ति। आकाङ्क्षां निर्वक्ति तत्पदेनेत्यादि येन पदेन विना यत्पदस्य अन्वयानुभावकत्वं तेन सह तस्याकाङ्क्षा इत्यर्थः क्रियापदं विना कारकपदं नान्वयबोधं जनयतीति तेन तस्याकाङ्क्षा वस्तुतस्तु क्रियाकारकपदानां सन्निधानमासत्त्या चरितार्थं परन्तु घटकर्म्मताबोधं प्रति घटपदोत्तरद्वितीयाकाङ्क्षाज्ञानं कारणं तेन घटः कर्म्मत्वमानयनं कृतिरित्यादौ न बोधः अयमेति पुत्रोराज्ञः पुरुषोऽपसार्य्यतां इत्यादौ तु पुत्रेण सह राजपदस्य तात्पर्य्यग्रहाभावात् न तेन सहान्वयः। तात्पर्यं निर्वक्ति वक्तुरिच्छेति यदि तात्पर्य्यज्ञानं कारणं न स्यात् तदा सैन्धवमानयेत्यादौ क्वचिदश्वस्य क्वचिल्लवणस्य बोधो न स्यात् न च तात्पर्य्यग्राहक प्रकरणादीनामेव शाब्दबोधे कारणत्वमस्त्विति वाच्यं तेषामननुगमात् तात्पर्य्यज्ञानजनकत्वेन तेषामनुगमे तु तात्पर्य्यज्ञानमेव लाघवात्कारणमस्तु इत्यञ्च वेदस्थलेऽपि तात्पर्य्यज्ञानार्थमीश्वरः कल्प्यते न च तत्राध्यापकतात्पर्य्यज्ञानं कारणमिति वाच्यं सर्गादावध्यापकभावात् न च प्रलयएवनास्तीति कुतः सर्गादिरिति वाच्यं प्रलयस्यागमप्रतिपाद्यत्वात् इत्यञ्च शुकवाक्येऽपि ईश्वरीयतात्पर्य्यज्ञानं कारणं विसम्वादिशुकवाक्ये तु शिक्षयितुरेव तात्पर्य्यस्य

ज्ञानं कारणम् अन्ये तु नानार्थादौ क्वचिदेव तात्पर्यज्ञा
नं कारणं तथाच शुकवाक्ये विनैव तात्पर्यज्ञानं शा
ब्दबोधः वेदे तु अनादिमीमांसापरिशोधिततर्कैरर्था
वधारणमित्याहुः। पूर्व्वमनुभवस्मरणभेदात् बुद्धेर्द्वै
विध्यमुक्तं तत्रानुभवप्रकारा दर्शिताः सुगमतया स्मर
णं न दर्शितं तत्र हि पूर्व्वानुभवः कारणम् अत्र केचि
त् अनुभवत्वेन न कारणत्वं किन्तु ज्ञानत्वेन अन्य
था स्मरणानन्तरं स्मरणं न स्यात् समानप्रकारक
स्मरणेन पूर्व्वसंस्कारस्य विनष्टत्वात् मन्मते तु तेनैव
स्मरणेन संस्कारान्तरद्वारा स्मरणान्तरं जन्यतइत्या
हुः ननु यत्र समूहालम्बनोत्तरं घटपटादीनां क्रमेण
स्मरणमजनिष्ट सकलविषयकस्मरणन्तु माभूत् तत्र
फलस्य संस्कारनाशकत्वाभावात् कालस्य रोगस्य चर
मफलस्य वा संस्कारनाशकत्वं वाच्यं तथाच न क्रमिक
स्मरणानुपपत्तिः न च पुनः पुनः स्मरणात् दृढतरः संस्का
रानुपपत्तिः झटित्युद्बोधकसमवधानस्य दार्ढ्यपदार्थ
त्वात् न च विनिगमनाविरहादेव ज्ञानत्वेनापि जन
कत्वं स्यादिति वाच्यं विशेषधर्म्मेण व्यभिचारात् ज्ञा
ने सामान्यधर्म्मेणान्यथासिद्धत्वात् कथमन्यथा दण्ड
स्य भ्रमिद्वारा द्रव्यत्वेन रूपेण कारणत्वं न चान्तरा
लिकस्मरणानां संस्कारनाशकत्वसंशयात् व्यभिचार
संशय इति वाच्यम् अनन्तसंस्कारतन्नाशकल्पनापत्तेः।

चरमस्मरणस्यैव संस्कारनाशकत्वकल्पनेन व्यभिचारसंशयाभावात्। इदानीं क्रमप्राप्तं मनो निरूपयति साक्षात्कार इति एतेन मनसि प्रमाणं दर्शितं तथाहि सुखसाक्षात्कारः सकरणको जन्यसाक्षात्कारत्वात् चाक्षुषवत् इत्यनुमानेन करणस्य मनसः सिद्धेः न चैवं दुःखादिसाक्षात्काराणामपि कारणान्तराणि स्युरिति वाच्यं लाघवादेकस्यैव तादृशसकलसाक्षात्कारकरणतया सिद्धेः एवं दुःखादीनामसमवायिकारणसंयोगाश्रयतया मनःसिद्धिर्बोद्धव्या। मनसोऽणुत्वे प्रमाणमाह अयौगपद्यादिति ज्ञानानां चाक्षुषरासनादीनां यौगपद्यं एककालोत्पत्तिर्नास्तीत्यनुभवसिद्धं तत्र नानेन्द्रियाणां सत्यपि विषयसन्निकर्षे यत्सम्बन्धादेकेन्द्रियेण ज्ञानमुत्पद्यते तदसम्बन्धादपि त्वगादिभिः परैर्ज्ञानं नोत्पद्यते तन्मनोविभुत्वे च असन्निधानं न सम्भवतीति न विभुमनः न च तदानीमदृष्टविशेषोद्बोधविलम्बादेव तज्ज्ञानविलम्ब इति वाच्यं तथा सति चक्षुरादीनामपि कल्पनानापत्तेः न च दीर्घशष्कुलीभक्षणादौ नानावधानभाजाञ्च कथमेकत्वादिना नेन्द्रियज्ञानमिति वाच्यं मनसोऽतिलाघवात् त्वरया नानेन्द्रियसम्बन्धात् नानाज्ञानोत्पत्तेः उत्पलशतपत्रभेदादिवत् यौगपद्यप्रत्ययस्य तु भ्रान्तत्वात् न च मनसः सङ्कोचविकाश

शालित्वादुभयोपपत्तिरस्त्विति वाच्यं नानावयवतन्मा शादिकल्पने गौरवात् लाघवात् निरवयवस्यैव मनसः कल्पनादिति संक्षेपः। इति सिद्धान्तमुक्तावल्यां द्रव्यपदार्थव्याख्या समाप्ता।

द्रव्यं निरूप्य गुणं निरूपयति। अथेत्यादिना गुणत्वजातौ किं मानमिति चेत् इदं द्रव्यं कर्मभिन्नसामान्यवति या कारणतासा किञ्चिद्धर्मावच्छिन्ना निरवच्छिन्नकारणतायाअसम्भवात् नहि रूपत्वादिकं सत्ता वा तदवच्छेदिका न्यूनातिरिक्तदेशवृत्तित्वात् अतश्चतुर्विंशत्यनुगतं वाच्यं तदेव गुणत्वमिति सिद्धम्। द्रव्याश्रितइति यद्यपि द्रव्याश्रितत्वं न लक्षणं कर्मादावतिव्याप्तेस्तथापि द्रव्यत्वव्यापकतावच्छेदकसत्तान्यजातिमत्त्वं तदर्थः भवति हि गुणत्वं द्रव्यत्वव्यापकतावच्छेदकं तद्वत्ता च गुणानामिति कर्मत्वं द्रव्यत्वं वा न द्रव्यत्वव्यापकतावच्छेदकं गगनादौ द्रव्यकर्मणोरभावात् द्रव्यत्वत्वं सामान्यत्वादिकं न जातिरिति तदुपादानम्। निर्गुणइति यद्यपि निर्गुणत्वं कर्मादावपि तथापि सामान्यवत्त्वे कर्मान्यत्वे च सति निर्गुणत्वं बोध्यं जात्यादीनां न सामान्यवत्त्वं कर्मणो न कर्मान्यत्वं द्रव्यस्य न निर्गुणत्वम् इति तत्र नातिव्याप्तिःनिष्क्रियेति स्वरूपकथनं ननु लक्षणं गगनादावतिव्याप्तेः मूर्त्तगुणाइति वेगेन

स्थितिस्थापकोऽप्युपलक्षणीयः अमूर्त्तेषु न वर्त्तन्त इत्यर्थः लक्षणन्तु तावदन्यान्यत्वम् एवमग्रेऽपि उभयेषामिति मूर्त्तामूर्त्तगुणा इत्यर्थः अनेकाश्रिता इति संयोगद्वित्वादीनि द्विवृत्तीनि त्रित्वचतुष्ट्वादिकं त्रिचतुरादिवृत्तीति बोध्यम् अतः शेषा इति रूपरसगन्धस्पर्शैकत्वपरिमाणैकपृथक्त्वपरत्वापरत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नगुरुत्वद्रवत्वस्नेहसंस्कारादृष्टशब्दा इत्यर्थः। द्रवद्रव्यत्वं वैशेषिका इति विशेषा एव वैशेषिकाः स्वार्थे ठक् विशेषगुणा इत्यर्थः। सङ्ख्यादिरिति सङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वानीत्यर्थः। द्वीन्द्रियेति चक्षुषा त्वचापि ग्रहणयोग्यत्वात्। बाह्येति रूपादीनां चक्षुरादिग्राह्यत्वात्। विभूनामिति बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाशब्दा इत्यर्थः। अकारणेति कारणगुणपूर्वका रूपादयो वक्ष्यन्ते बुद्ध्यादयस्तु न तादृशाः आत्मादेः कारणाभावात् पाकजरूपादीनां कारणगुणपूर्वकत्वाभावात् अपाकज इत्युक्तं स्पर्शान्ता इति स्पर्शोऽत्रानुष्णाशीतः। एकपृथक्त्वेत्यत्र त्वप्रत्ययस्य प्रत्येकमन्वयात् एकत्वं पृथक्त्वञ्च ग्राह्यं पृथक्त्वपदेन चैकपृथक्त्वं विवक्षितं भवेदसमवायित्वमिति घटादिरूपरसगन्धस्पर्शाः कपालादिरूपरसगन्धस्पर्शेभ्यो भवन्ति एवं कपालादिपरिमाणादीनां घटादिपरि

माणाद्यसमवायिकारणत्वम् एवं शब्दस्यापि द्वितीय शब्दं प्रति निमित्तत्वमिति बुद्ध्यादीनाम् इच्छादिनिमित्तत्वादिति भावः। हेतुताद्वयमिति असमवायिकारणत्वं निमित्तकारणत्वञ्च तथाहि उष्णस्पर्शः उष्णस्पर्शस्यासमवायी पाकजे निमित्तं गुरुत्वं गुरुत्व पतनयोरसमवायिप्रतिघाते निमित्तं वेगोवेगस्पन्दयोरसमवायी अभिघाते निमित्तं द्रवत्वं द्रव्यत्वस्यन्दनयोरसमवायिसंग्रहे निमित्तं भेरीदण्डयोगः शब्दे निमित्तं भेर्य्याकाशसंयोगोऽसमवायी वंशदलद्वयविभागः शब्दे निमित्तं वंशदलाकाशविभागोऽसमवायीति न द्विधेति परत्वादीनां नासमवायिकारणत्वं न निमित्तकारणत्वञ्चेत्यर्थः। इदञ्च ज्ञानातिरिक्तभावं प्रति बोध्यं द्वित्वादिपदेन च विशेषोग्राह्यः तेन परमाणुद्वित्वादेर्द्व्यणुकादिपरिमाणहेतुत्वेऽपि न क्षतिः प्रादेशिकः अव्याप्यवृत्तिः। चक्षुरिति रूपत्वजातिः प्रत्यक्षसिद्धा रूपशब्दोल्लेखिनी प्रतीतिर्नास्तीति चेत् माऽस्तु रूपशब्दप्रयोगः तथापि नीलपीतादिषु अनुगतजातिविशेषोऽनुभवसिद्धएव रूपशब्दाप्रयोगेऽपि नीलवर्णः पीतवर्ण इति वर्णशब्दोल्लेखिनी प्रतीतिरस्त्येव एवं नीलत्वादिकमपि प्रत्यक्षसिद्धं नचैकैकाएवनीलरूपादिव्यक्तयइत्येकव्यक्तिवृत्तित्वात् नीलत्वादिर्न जातिरिति वाच्यं नीलो

नष्टः रक्तउत्पन्नइत्यादिप्रतीतेर्नीलादेरुत्पादविना शशालितया नानात्वात् अन्यथा एकनीलनाशे जगदनीलमापद्येत न च नीलरक्तादिसमवाययोरेव विनाशोत्पादविषये कोऽसावेषप्रत्ययइति वाच्यं प्रतीत्यासमवायानुल्लेखात् न च सएवायं नीलइति प्रत्ययात् लाघवाच्च ऐक्यमिति वाच्यं प्रत्यक्षस्य तज्जातीयविषयकत्वात् सैवेयं गुर्जरीतिवत् लाघवप्रत्यक्षवाधितम् अन्यथा घटादीनामप्यैक्यप्रसङ्गात् उत्पादविनाशशब्दबुद्धेः समवायावलम्बनत्वापत्तेरिति एतेन रसादिकं व्याख्यातम्।

चक्षुर्ग्राह्यमिति चक्षुर्ग्राह्यविशेषगुणइत्यर्थः एवमग्रेऽपि द्रव्यादेरिति उपलम्भकम् उपलब्धिकारणम् इदमेव विवृणोति चक्षुषइति द्रव्यगुणकर्मसामान्यानां चाक्षुषप्रत्यक्षं प्रति उद्भूतरूपं कारणं तद्रूपं शुक्लनीलपीतरक्तकृष्णकर्बुरादिभेदात् अनेकप्रकारकं भवति ननु कर्बुरं कथमतिरिक्तरूपं भवति इत्थं नीलपीताद्यारब्धोऽवयवी न तावन्नीलरूपः अप्रत्यक्षप्रसङ्गात नापि व्याप्यवृत्तिनीलादिकमुत्पद्यते पीतावच्छेदेनापि नीलोपलब्धिप्रसङ्गात् नाप्यव्याप्यवृत्तिनीलादिकमुत्पद्यते व्याप्यवृत्तिजातीयगुणानामव्याप्यवृत्तित्वे विरोधात् तस्मात नानाजातीयरूपेऽवयविनि विजातीयं चित्रमारभ्यते अतएव एकं

चित्रमित्यनुभवोऽपि नानारूपकल्पने तु गौरवात्। इत्यञ्च नीलादीनां पीताद्यारम्भे प्रतिबन्धकत्वकल्पनात्, अवयविनि न पीताद्युत्पत्तिः। एतेन स्पर्शो व्याख्यातः रसादिकमपि नाव्याप्यवृत्तिः किन्तु नानाजातीयरसवदवयवैरारब्धेऽवयविनि रसाभावेऽपि न क्षतिः। तत्र रसनया अवयवरस एव गृह्यते रसनेन्द्रियादीनां द्रव्यग्रहे सामर्थ्याभावात्। अवयविनीरसत्वेऽपि क्षतेरभावात्। नव्यास्तु तत्राव्याप्यवृत्तेरव नानारूपं नीलादेः पीतादिप्रतिबन्धकत्वकल्पने गौरवात् अतएव लोहितोयस्तु वर्णेन मुखे पुच्छे च पाण्डर इत्यादि शास्त्रमप्युपपद्यते न च व्याप्याव्याप्यवृत्ति जातीयद्वयोर्विरोधे मानाभावात् न च लाघवादेकं रूपम् अनुभवविरोधात् अन्यथा घटादेरपि लाघवादैक्यं स्यादिति एतेन स्पर्शादिकं व्याख्यातमिति वदन्ति।

जलादीति जलपरमाणौतेजःपरमाणौच रूपं नित्यं पृथिवीपरमाणुरूपन्तु न नित्यं पाकेन रूपान्तरोत्पत्तेः न हि घटस्य पाकानन्तरं तदवयवोत्पन्नमुपपद्यते न हि रक्तकपालस्य कपालिका नीलावयवा भवति एवं क्रमेण परमाणावपि पाकसिद्धेः अन्यच्च तेजःपरमाणुरूपभिन्नरूपं सहेतुकं चान्यम्। रसं निरूपयति रसस्त्विति सहकारीति

रासनज्ञाने रसः कारणमित्यर्थः। पूर्व्ववदिति जल परमाणौ रसोनित्योऽन्यः सर्व्वोऽपि रसोऽनित्य इत्यर्थः। गन्धं निरूपयति घ्राणग्राह्यइति उपकारकः घ्राणजन्यज्ञाने कारणमित्यर्थः अन्योगन्धः सर्व्वोऽनित्यएव। स्पर्शं निरूपयति स्पर्शइति उपकारकइति स्पार्शनप्रत्यक्षे स्पर्शः कारणमित्यर्थः। अनुष्णाशीतइति पृथिव्यावायोश्च स्पर्शोऽनुष्णाशीतः जलस्य शीतः तेजसउष्णः। काठिन्येति कठिनसुकुमारस्पर्शः पृथिव्याएवेत्यर्थः कठिनत्वादिकन्तु न संयोगनिष्ठोजाति विशेषः चक्षुर्ग्राह्यतापत्तेः। पूर्व्ववदिति जलतेजोवायुपरमाणु स्पर्शानित्यास्तद्भिन्नस्पर्शास्त्वनित्याइत्यर्थः एतेषां रूपरसगन्धस्पर्शानां पाकजेति पृथिव्यांहि रूपरसगन्धस्पर्शपरावृत्तिः पावकसंयोगादुपलभ्यते न हि शतधापि ध्मायमाने जलादौ रूपादिकं परावर्त्तते नीरे सौरभमौष्ण्यञ्च अन्वयव्यतिरेकाभ्यामौपाधिकमेवेति निर्णीयते पवनपृथिव्योः शीतस्पर्शादिवत् तत्रापि पृथिवीष्वपि मध्ये परमाणावेव पाकइति वैशेषिकावदन्ति तेषामयमाशयः अवयविना अवष्टब्धेषु अवयवेषु पाको न सम्भवति परन्तु वह्निसंयोगेनावयविषु विनष्टेषु स्वतन्त्रेषु परमाणुषु पाकः पुनश्च पक्वपरमाणुसंयोगात् द्व्यणुकादिक्रमेण पुनर्महावयविपर्य्यन्तमुत्पत्तिः

तेजसामतिशयितवेगवशात् पूर्व्वव्यूहनाशोझटिति व्यूहान्तरोत्पत्तिश्चेति। अथ द्व्यणुकादिविनाशमा रभ्य कतिभिः क्षणैः पुनरुत्पद्यते रूपादिमद्भवतीति शिष्यबुद्धिवैशद्याय प्रक्रियासंयोगविभागयोरनपेक्ष कारणं कर्म्मइति वैशेषिकसूत्रं तत्र स्यात्स्योत्तर द्वृत्तिभावान्तरानपेक्षत्वं तस्यार्थः अन्यथा कर्म्मणोऽ प्युत्तरसंयोगजनने पूर्व्वसंयोगनाशापेक्षणादव्याप्तिः स्यादिति तत्र विभागजविभागानङ्गीकारे विभागः किञ्चित्सापेक्षो विभागं जनयेत् निरपेक्षस्य तस्वे कर्म्मत्वं स्वतन्त्राः परमाणवः पच्यन्तइति वैशेषिक मतं तत्र यदि द्रव्यारम्भकसंयोगविनाशविशिष्टं का लमपेक्ष्य विभागजविभागः स्यात् तदा दश क्षणाः अथ द्रव्यनाशविशिष्टं कालमवयवं वापेक्ष्य विभाग जविभागः स्यात् तदा एकादशक्षणाः तथाहि वह्नि संयोगात् परमाणौ कर्म्म ततः परमाण्वन्तरेण विभागः ततश्चारम्भकसंयोगनाशः ततोद्व्यणुकनाशः ततः परमाणौ श्यामादिनाशः ततोरक्ताद्युत्पत्तिः ततोद्रव्यारम्भानुगुणक्रिया ततोविभागः ततः पूर्व्व संयोगनाशः ततश्चारम्भकसंयोगः ततोद्व्यणुकोत्पत्तिः ततोरक्ताद्युत्पत्तिः ननु श्यामादिनाशक्षणे रक्तोत्प त्तिक्षणे वा परमाणौ द्रव्यारम्भानुगुणक्रियास्त्विति चेन्न अग्निसंयुक्ते परमाणौ यत्कर्म्मतद्विनाशमन्त

रेण गुणोत्पत्तिमन्तरेण च तत्र परमाणौ क्रिया
न्तराभावात् कर्म्मवति कर्म्मानुत्पत्तेः निर्गुणे द्रव्ये
द्रव्यारम्भानुगुणक्रियानुपपत्तेश्च तथापि परमाणौ
श्यामादिनिवृत्तिसमकालं रक्ताद्युतपत्तिः स्यादिति
चेन्न पूर्व्वरूपादिध्वंसस्य रूपान्तरे हेतुत्वात् इति
नव क्षणा अथ दश क्षणास्ते च आरम्भकसंयोगवि
नाशविशिष्टं कालमपेक्ष्य विभागेन विभाग जनने
सति स्यात् तथाहि वह्निसंयोगात् द्व्यणुकारम्भके
परमाणौ क्रिया ततोविभागः ततआरम्भकसंयोग
नाशः ततोद्व्यणुकनाशविभाजकविभागौ ततः श्याम
नाशपूर्व्वसंयोगनाशौततो रक्तोत्पत्त्युत्तरसंयोगौ त
तोवह्निनोदनजन्यपरमाणुकर्म्मणोनाशः ततोऽदृष्ट
वदात्मसंयोगात् द्रव्यारम्भानुगुणक्रिया ततो विभागः
ततः पूर्व्वसंयोगनाशस्ततआरम्भकसंयोगः ततोद्व्य
णुकोत्पत्तिः ततोरक्ताद्युत्पत्तिः अथैकादश क्षणाः
वह्निसंयोगात् परमाणौ कर्म्म ततोविभागः ततोद्र
व्यारम्भकसंयोगनाशः ततोद्व्यणुकनाशः ततोद्व्यणु
कनाशविशिष्टं कालमपेक्ष्य विभागजविभागः ततः
पूर्व्वसंयोगनाशः ततउत्तरसंयोगः ततः परमाणुक
र्म्मनाशः ततोऽदृष्टवदात्मसंयोगात् द्रव्यारम्भानुगु
णक्रियाततोविभागः ततः पूर्व्वसंयोगनाशः ततोद्र
व्यारम्भकसंयोगः ततोद्व्यणुकं ततोरक्तादि मध्यम

शब्दवदेकस्मादग्निसंयोगात् न रूपनाशरक्तोत्पा
दौ तावत्कालमेकस्याग्नेरस्थिरत्वात् किञ्च यदुत्पा
दकोनाशकस्तदा नष्टे रूपादावग्निनाशे नीरूप
स्थिरं परमाणुः स्यात् नाशकश्चेदुत्पादकस्तदा रक्तो
त्पत्तौ तदग्निनाशे रक्तता न स्यात एवं परमाण्व
न्तरे कर्म्मचिन्तनात् पञ्चमादिक्षणेऽपि गुणोत्पत्तिः
तथाहि एकत्र परमाणौ कर्म्म ततोविभागः ततश्चा
रम्भकसंयोगनाशपरमाण्वन्तरकर्म्मणी ततस्तु द्व्यणु
कनाशः परमाण्वन्तरकर्म्मजश्च विभागइत्येकः
कालः ततः श्यामादिनाशः विभागाच्च पूर्व्वसंयोग
नाशइत्येकः कालः ततोरक्तोत्पत्तिः द्रव्यारम्भक
संयोगश्चेति एकः कालः अथ द्व्यणुकोत्पत्तिः अथ
रक्तोत्पत्तिरिति पञ्च क्षणाः द्रव्यनाशसमकालं पर
माण्वन्तरे कर्म्मचिन्तनात् षष्ठे गुणोत्पत्तिः तथाहि
परमाणुकर्म्मणा परमाण्वन्तरविभागः ततश्चार
म्भकसंयोगनाशः अथ द्व्यणुकनाशपरमाण्वन्तर
कर्म्मणी अथ श्यामनाशः परमाण्वन्तरकर्म्मजश्च
विभागः ततोरक्तोत्पत्तिः परमाण्वन्तरे पूर्व्वसं
योगनाशश्च ततः परमाण्वन्तरसंयोगः ततोद्व्यणु
कोत्पत्तिः अथ रक्तोत्पत्तिरिति एवं श्यामनाशक्षणे
परमाण्वन्तरे कर्म्मचिन्तनात् सप्त क्षणाः रक्तोत्प
त्तिसमकालं परमाण्वन्तरे कर्म्मचिन्तनात अष्ट

क्षणादिति। नैयायिकानामिति नैयायिकानां मते द्व्यणुकादौ अवयविन्यपि पाकोभवति तेषामयमा शयः अवयविनां सच्छिद्रत्वाद्वह्नेः सूक्ष्मावयवैरन्तः प्रविष्टैरवयवेष्ववष्टब्धेष्वपि पाकोनविरुध्यते वैशे षिकमते अनन्तावयवतन्नाशकल्पने गौरवात्। इ त्यञ्च सोऽयं घटइत्यादिप्रत्यभिज्ञापि सङ्गच्छते यत्र तु न प्रत्यभिज्ञा तत्रावयविनाशोऽपि स्वीक्रियत इति। संख्यां निरूपयितुमाह गणनेऽपि गणना व्यवहारासाधारणकारणं संख्येत्यर्थः नित्येष्विति नित्येषु परमाण्वादिषु एकत्वं नित्यम् अनित्ये घ टादौ एकत्वमनित्यमित्यर्थः। द्वित्वादयोव्यासज्य वृत्तिसंख्याः अपेक्षाबुद्धिजन्याः अनेकेति यद्यपि द्वित्वादिसमवायः प्रत्येकं घटादावपि वर्त्तते तथा प्येकोद्वाविति प्रत्ययाभावात् एकोन द्वाविति प्रत्यय सम्भवाच्च द्वित्वादीनां पर्य्याप्तिलक्षणः कश्चन सम्ब न्धोऽनेकाश्रयोऽभ्युपगम्यते। अपेक्षाबुद्धिनाशादिति प्रथममपेक्षाबुद्धिस्ततोद्वित्वोत्पत्तिः ततोविशेषणज्ञा नं द्वित्वत्वनिर्विकल्परूपं ततोद्वित्वविशिष्टप्रत्यक्षम् अपेक्षा बुद्धिनाशश्च ततोद्वित्वनाशइति यद्यपि ज्ञानानन्तरं त्रिक्षणमात्रस्थायियोग्यविभुविशेषग णानां स्वोत्तरवर्त्तिगुणनाश्यत्वात् तथाप्यपेक्षाबुद्धे स्त्रिक्षणस्थायित्वं कल्प्यते अन्यथा निर्विकल्पकाले

अपेक्षाबुद्धिनाशात् अनन्तरं द्वित्वस्यैव नाशः स्यान्न तु द्वित्वप्रत्यक्षं तदानीं विषयाभावात् विद्यमानस्यैव चक्षुरादिना ज्ञानजननोपगमात् तस्माद् द्वित्वप्रत्यक्षादिकमपेक्षाबुद्धेर्नाशकं कल्प्यते नचापेक्षाबुद्धिनाशात्कथं द्वित्वनाश इति वाच्यं कालान्तरे द्वित्वप्रत्यक्षाभावात् अपेक्षाबुद्धिस्तदुत्पादिका तन्नाशस्तन्नाशक इति कल्पनात् अतएव तत्पुरुषीयापेक्षाबुद्धिजन्यद्वित्वादिकं तेनैव गृह्यत इति कल्पते नचापेक्षाबुद्धेर्द्वित्वप्रत्यक्षकारणत्वमस्त्विति वाच्यं लाघवेन द्वित्वं प्रति कारणत्वस्यैवोचितत्वात् अतीन्द्रिये द्व्यणुकादावपेक्षाबुद्धिर्योगिनां सर्गादिकाले नपरमाण्वादावीश्वरीयापेक्षाबुद्धिर्ब्रह्माण्डान्तरवर्त्तियोगिनामपेक्षाबुद्धिर्वा द्वित्वादिकारणमिति अपेक्षाबुद्धिः केत्यत आह अनेकेति अयमेक इत्याकारिका इत्यर्थः इदन्तु बोध्यं यत्रानियतैकत्वज्ञानं तत्र द्वित्वादिभिन्ना बहुत्वसंख्योत्पद्यते यथा सेनावनादाविति कन्दलीकारः। आचार्य्यास्तु त्रित्वादिकमेव बहुत्वं मन्यन्ते तथाच त्रित्वत्वादिव्यापिका बहुत्वत्वजातिः सेनादौ चोत्पन्नेति त्रित्वादौ त्रित्वत्वाद्यग्रहादोपादित्यन्ये इतो बहुकेयं सेनेति प्रतीतिरुपपद्यते बहुत्वस्य संख्यान्तरत्वे तत्तारतम्याभावादित्यवधेयम्। परिमाणं निरूपयति परिमाणमिति

ति परिमितव्यवहारासाधारणं कारणं परिमाण मित्यर्थः तच्चतुर्विधम् अणु महद्दीर्घं ह्रस्वञ्च इदञ्चात् र्विध्यं प्रत्यक्षसिद्धं तत्राणुत्वह्रस्वत्वे महत्त्वदीर्घत्वे च समनियते तत्परिमाणं नित्यमित्यत्र परिमाणमित्य नुषज्यते जायतइत्यत्रापि परिमाणमित्यनुवर्त्तते अ नित्यमिति पूर्व्वेणान्वितं तच्चानित्यं परिमाणं स ङ्ख्याजन्यं परिमाणजन्यं प्रचयजन्यं चेत्यर्थः। तत्र स ङ्ख्याजन्यमुदाहरति द्व्यणुकादाविति द्व्यणुकस्य त्र सरेणोश्च परिमाणं प्रति परमाणुपरिमाणं द्व्यणुका दिपरिमाणं वा न कारणं परिमाणस्य स्वसमानजा तीयोत्कृष्टपरिमाणजनकत्वात् द्व्यणुकादिपरिमाण न्तु परमाणुत्वापेक्षया नोत्कृष्टं त्रसरेणुपरिमाणन्तु न सजातीयम् अतः परमाणौ द्वित्वसङ्ख्या द्व्यणुकप रिमाणस्य द्व्यणुके त्रित्वसङ्ख्या च त्रसरेणुपरिमाण स्यासमवायिकारणमित्यर्थः। परिमाणजन्यमुदाहर ति परिमाणं घटादाविति परिमाणजं कपालादि परिमाणजन्यम्। प्रचयजन्यमुदाहर्त्तुं प्रचयं निर्व्व क्ति प्रचयइति अर्थात्प्रचयस्य न चावयविनाशः कथं परिमाणनाशकः असत्यप्यवयविनि त्रिचतुरपरमा णुविश्लेषे तदुपचये चावयविनः प्रत्यभिज्ञानेऽपि परिमाणान्तरस्य प्रत्यक्षसिद्धत्वादिति वाच्यं पर माणुविश्लेषे द्व्यणुकस्य नाशोऽवश्यमभ्युपेयस्तन्नाशे

च द्व्यणुकनाशः एवं क्रमेण महावयविनो नाशस्यावश्यकत्वात् सति च नाशकेऽनभ्युपगममात्रेण नाशस्यापरिहार्य्यत्वात् शरीरादाववयवोपचये असमवायिकारणनाशस्यावश्यकत्वादवयविनाश आवश्यकः न च पटविनाशेऽपि तन्त्वन्तरसंयोगात् परिमाणाधिक्यं स्यादिति वाच्यं तत्रापि वेमाद्यभिघातेन समवायिकारणतन्तुसंयोगनाशात् पटनाशस्यावश्यकत्वात् किञ्च तन्त्वन्तरस्य तत्पटावयवत्वे पूर्व्वं तत्पटएव न स्यात् तत्तन्तुरूपकारणाभावात् तत्तन्तोरवयवत्वाभावे च न तेन परिमाणाधिक्यं संयुक्तद्रव्यान्तरवत् तस्मात्तत्तन्त्वन्तरसंयोगे सति पूर्व्वपटनाशस्ततः पटान्तरोत्पत्तिरित्यवश्यं स्वीकार्य्यम् अवयविनः प्रत्यभिज्ञानन्तु साजात्येन दीपकलिकादिवत् न च पूर्व्वतन्तवएव तन्त्वन्तरसहकारात् पूर्व्वपटे सत्येव पटान्तरमारभ्यमिति वाच्यं मूर्त्तयोः समानदेशताविरोधात् एकदा नानाद्रव्यस्य तत्रानुपलब्धबाधितत्वाच्च पूर्व्वद्रव्यस्य प्रतिबन्धकस्य विनाशे द्रव्यान्तरोत्पत्तिरित्यवश्यमभ्युपेयत्वात्। पृथक्त्वं निरूपयति संख्यावदिति पृथक्प्रत्ययासाधारणं कारणं पृथक्त्वं तन्नित्यतादिकं संख्यावत् तथाहि नित्येषु एकत्वं नित्यम् अनित्येऽनित्यम् अनित्यमेकत्वम् आश्रयद्वितीयक्षणे नोत्पद्यते आश्रयनाशान्नश्यति तथैकपृथक्त्वमपि द्वित्वा

दिवत् पृथक्त्वादिकमपीत्यर्थः नन्वयमस्मात् पृथक् इ
त्यादावन्योन्याभावोभासते तत्कथं पृथक्त्वं गुणान्तरं
स्वीक्रियते नत्वाम्तु पृथक्त्वं नत्वन्योन्याभावइति वाच्यं
रूपं न घटइति प्रतीत्यनापत्तेः न हि रूपे घटावधि
कं पृथक्त्वं गुणान्तरमस्ति न वा घटे घटावधिकपृथ
क्त्वमस्ति येन परम्परासम्बन्धः कल्प्यइत्यतआह अ
न्योन्याभावतइति। विलक्षणेति ननु शब्दवैलक्षण्यमे
व नत्वर्थवैलक्षण्यमिति चेत् न विनार्थभेदं घटात् पृथ
क्इतिवत् घटोनेत्यत्रापि पञ्चमी स्यात् तस्मात् यदर्थ
कयोगे पञ्चमी सोऽर्थोनअर्थोऽन्योन्याभावतोभिन्नो
गुणान्तरं कल्प्यतइति। संयोगं निरूपयति अप्राप्त
योरिति तं विभजते कीर्त्तितइति एपसंयोगः सन्नि
पातः संयोगः द्वितीयः उभयकर्म्मजः तृतीयइति सं
योगजइत्यर्थः तृतीयः स्यादिति पूर्व्वेणान्वितम् आदि
मः अभिघातः द्वितीयो नोदनाख्यः संयोगइति। वि
भक्तप्रत्ययकारणं विभागं निरूपयति विभागइति
एककर्म्मेति उदाहरणन्तु श्येनशैलविभागादिकं पू
र्व्ववद्बोध्यं तृतीयः विभागजः कारणमात्रविभागजन्यः
कारणाकारणविभागजन्यश्चेति आद्यस्तावत् यत्र क
पालेकर्म्म ततः कपालद्वयविभागः ततोघटारम्भकसं
योगनाशः ततो घटनाशः ततस्तेन एककपालविभागे
न स्वकर्म्मणा कपालस्य देशान्तरविभागोजन्यते ततउ

तरदेशसंयोगः ततः कर्म्मनाश इति न च तेन कर्म्मणैव कथं देशान्तरविभागो न जन्यत इति वाच्यम् एकस्य कर्म्मण आरम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वस्य अनारम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वविरोधात् अन्यथा विकसत्कमलकुट्मलभङ्गप्रसङ्गात् तस्माद्यदा कर्म अनारम्भकसंयोगप्रतिद्वन्द्विविभागं जनयेत् तदा आरम्भकसंयोगप्रतिद्वन्द्विविभागं न जनयेत् न च कारणविभागेनैव द्रव्यनाशात्पूर्वं कुतो देशान्तरविभागो न जन्यत इति वाच्यम् आरम्भकसंयोगप्रतिद्वन्द्विविभागवतोऽवयवस्य सति द्रव्ये देशान्तरविभागासम्भवात् यत्र हस्तक्रियया हस्ततरुविभागः ततः शरीरेऽपि विभक्तप्रत्ययो भवति तत्र च शरीरतरुविभागे हस्तक्रिया न कारणं व्यधिकरणत्वात् शरीरे तु क्रिया नास्ति अवयविकर्म्मणोयावदवयवकर्म्मनियतत्वात अतस्तत्र कारणाकारणविभागेन कार्य्याकार्य्यविभागो जन्यत इति अतएव विभागो गुणान्तरम् अन्यथा शरीरे विभक्तप्रत्ययो न स्यात् अतः संयोगनाशेन विभागो नान्यथासिद्धो भवति। परापरव्यवहारनिमित्ते परत्वापरत्वे निरूपयति परत्वञ्चेति दैशिकमिति दैशिकपरत्वं बहुतरसूर्य्यसंयोगान्तरितत्वज्ञानादुत्पद्यते एवं तदल्पीयस्त्वज्ञानादपरत्वमुत्पद्यते अत्र अवधित्वार्थं तृतीयापेक्षा यथा पाटलि

पुत्रात् काशीमपेक्ष्य प्रयागः परः पाटलिपुत्रात् कुरुक्षेत्रमपेक्ष्य प्रयागोऽपरइति तयोर्दैशिकपरत्वापरत्वयोरसमवायी असमवायिकारणं तदाश्रये दैशिकपरत्वापरत्वाश्रये । दिवाकरेति अत्र परत्वम् अपरत्वञ्च कालिकं ग्राह्यं यस्य सूर्य्यपरिस्पन्दापेक्षया यस्य सूर्य्यपरिस्पन्दोऽधिकः सज्येष्ठः यस्य न्यूनः सकनिष्ठः कालिकपरत्वापरत्वे जन्यद्रव्यएव अत्र कालिकपरत्वापरत्वयोः तेषां कालिकदैशिकपरत्वापरत्वानाम् । क्रमप्राप्तां बुद्धिं निरूपयितुमाह बुद्धेरिति । अप्रमां निरूपयति ततश्चान्यइति तदभाववति तत्प्रकारकं ज्ञानं भ्रमइत्यर्थः तत्प्रपञ्चः अप्रमाप्रपञ्चः आद्यइति विपर्य्यासइत्यर्थः शरीरादौ यदात्मकप्रकारकं ज्ञानं गौरोऽहमित्याकारकम् एवं शङ्खादौ पीतः शङ्खइत्याकारकं यज्ज्ञानं निश्चयरूपं तद्भ्रमइति किंस्विदितिवितर्के निश्चयस्य लक्षणमाह तदभाववेति तदभावाप्रकारकत्वे सति तत्प्रकारकं ज्ञानं निश्चयः । संशयं लक्षयति संशयइति एकधर्म्मिकविरुद्धभावाभावप्रकारकं ज्ञानं संशयइत्यर्थः । साधारणेति उभयसाधारणोयोधर्म्मस्तज्ज्ञानं संशयकारणं यथा उच्चैस्तरत्वं स्थाणुत्वसाधारणं ज्ञात्वा अयं स्थाणुर्नवेति सन्दिग्धे एवम् असाधारणज्ञानं कारणं यथा शब्दत्वं नित्यानित्यव्यावृत्तं शब्दे गृहीत्वा शब्दोनित्यो

न वेति सन्दिग्धे विप्रतिपत्तिस्तु शब्दोनित्योन वेत्या
दि शब्दात्मिका न संशयकारणं शब्दव्याप्तिज्ञानादी
नां निश्चयमात्रजनकत्वस्वाभाव्यात् किन्तु तत्र शब्देन
कोटिद्वयज्ञानं जन्यते संशयस्तु मानसएवेति एवं
ज्ञाने प्रामाण्यसंशयाद्विषयसंशयइति एवं व्याप्यसंश
यादपि व्यापकसंशयइत्यादिकं बोध्यं किन्तु संशये
धर्म्मिज्ञानं धर्म्मीन्द्रियसन्निकर्षो वा कारणमिति
दोषः अप्रमां प्रति दोषः कारणं प्रमां प्रति गुणः का
रणं तत्रापि पित्तादिरूपादोषा अननुगताः तेषां का
रणत्वम् अन्वयव्यतिरेकाभ्यामेव सिद्धं गुणस्य प्रमा
जनकत्वन्तु अनुमानात् सिद्धं यथा प्रमाज्ञानसाधा
रणकारणभिन्नकारणजन्याजन्यज्ञानत्वात् अप्रमा
वत् न च दोषाभावएव कारणमस्त्विति वाच्यं पीतः
शङ्खइति ज्ञानस्थले पित्तदोषसत्त्वात् शङ्खप्रमानुत्प
त्तिप्रसङ्गात् विनिगमनाविरहात अनन्तदोषाभाव
स्य कारणत्वमपेक्ष्य गुणकारणतायान्याय्यत्वं न च
गुणसत्त्वेऽपि पित्तप्रतिबन्धात् शङ्खे न सैत्यज्ञानमतः
पित्तादिदोषाभावानां कारणत्वमवश्यं वाच्यं तथा
च किं गुणस्य हेतुत्वकल्पनयेति वाच्यं तथाप्यन्वय
व्यतिरेकाभ्यां गुणस्यापि हेतुत्वसिद्धेः एवं भ्रमं
प्रति गुणाभावः कारणमित्यस्यापि सुवचत्वाच्च तत्र
दोषाः के इत्याकाङ्क्षायामाह पित्तेतिक्वचित्पीता

दिभ्रमे पित्तं दोषः क्वचित् चन्द्रादेः स्वल्पपरिमाणभ्रमे दूरत्वं दोषः क्वचिच्च वंशोरगभ्रमे मण्डूकवसाञ्जनमित्येवं दोषाभ्रान्तिजनका इत्यर्थः । अथ के गुणा इत्याकाङ्क्षायां प्रत्यक्षादौ क्रमशो गुणान् दर्शयति प्रत्यक्षेति प्रत्यक्षे विशेषणवत् विशेष्यसन्निकर्षो गुणः अनुमितौ साध्यवति साध्यव्याप्यवैशिष्ट्यज्ञानं गुण इति एवमग्रेऽप्यूह्यः । प्रमां निरूपयति भ्रमभिन्नमिति ननु यत्र शुक्तिरजतयोरिमे रजते इति ज्ञानं जातं तत्र रजतांशेऽपि प्रमा न स्यात् तज्ज्ञानस्य भ्रमभिन्नत्वाभावात् अतआह अथवेति तद्वद्विशेष्यकं तत्प्रकारकं ज्ञानं प्रमा इत्यर्थः । इदन्तु बोध्यं येन सम्बन्धेन तद्वत्ता तेन सम्बन्धेन तद्वद्विशेष्यकं तेन सम्बन्धेन तत्प्रकारकत्वं वाच्यं तेन कपालादौ संयोगादिना घटादिज्ञाने नातिव्याप्तिः एवं सति निर्विकल्पकं प्रमा न स्यात् तस्य सप्रकारकत्वाभावात् अतआह न प्रमेति ननु वृक्षे कपिसंयोगज्ञानं भ्रमः स्यात् प्रमा च स्यादिति चेन्न प्रतियोगिव्यधिकरणसंयोगाभाववति संयोगज्ञानस्य भ्रमत्वात् न च वृक्षे संयोगाभावावच्छेदकावच्छेदेन संयोगज्ञानं भ्रमो न स्यात् तत्र संयोगाभावस्य प्रतियोगिव्यधिकरणत्वादिति वाच्यं तत्र संयोगाभावावच्छेदकावच्छेदेन संयोगज्ञानस्य भ्रमत्वात् लक्षणस्याननुगमात् ल

क्षणाननुगमेऽपि न क्षतिः। प्रमात्वमिति मीमांसकाद्विप्रमात्वं स्वतोग्राह्यमिति वदन्ति तत्र गुरूणां मते ज्ञानस्य स्वप्रकाशरूपत्वात् तज्ज्ञानप्रामाण्यं तेनैव गृह्यते इति भट्टानां मते ज्ञानमतीन्द्रियं ज्ञानजन्या ज्ञातता प्रत्यक्षा तया च ज्ञानमनुमीयते मुरारिमिश्राणां मतेऽनुव्यवसायेन ज्ञानं गृह्यते सर्व्वेषामपि मते तज्ज्ञानविषयकज्ञानेन तज्ज्ञानं प्रामाण्यं गृह्यते विषयनिरूप्यं हि ज्ञानम् अतोज्ञानवित्तिवेद्योऽविषयः तन्मतं दूषयति न स्वतोग्राह्यमिति। संशयेति यदि ज्ञानप्रामाण्यं स्वतोग्राह्यं स्यात् तदाभ्यासदशोत्पन्नज्ञाने तत्संशयो न स्यात तत्र हि यदि ज्ञानं ज्ञातं तदा प्रामाण्यं ज्ञातमेव इति कथं संशयः यदि तु ज्ञानं न ज्ञातं तदा धर्म्मिज्ञानाभावात् कथं संशयः तस्मात् ज्ञानप्रामाण्यम् अनुमेयं तथाहि इदं ज्ञानं प्रमा सम्वादिप्रवृत्तिजनकत्वात् यन्नैवं तन्नैवं यथाऽप्रमा इदं पृथिवीत्वप्रकारकं ज्ञानं प्रमा गन्धवति पृथिवीत्वप्रकारकज्ञानत्वात् एवम् इदं जलज्ञानं प्रमा स्नेहवति जलत्वप्रकारकज्ञानत्वात् नच हेतुज्ञानं कथं जातमिति वाच्यं पृथिवीत्वप्रकारकत्वस्य स्वतोग्राह्यत्वात् तत्र गन्धवद्विशेष्यकत्वस्यापि सुग्रहत्वात् तत्प्रकारकतावच्छिन्नतद्विशेष्यकत्वं परं न गृह्यते संशयानुरोधात् न च प्रमात्वस्य साध्यस्य प्रसिद्धिः

कथमिति वाच्यम् इदं ज्ञानप्रमात्वस्य स्वतोग्राह्यत्वात् न च प्रकारभेदेन प्रामाण्यभेदात् घटत्ववति घटत्व प्रकारादेः कथं प्रसिद्धिरिति वाच्यं घटत्वप्रकार कत्वस्य स्वविशेष्यकत्वस्य च स्वतोग्राह्यत्वात् घटस्य च पूर्व्वमुपस्थितत्वात् घटविशेष्यकं घटत्वप्रकारक मिति ज्ञाने प्रामाण्यस्य बाधकाभावः व्यवसायपरन्तु प्रामाण्यन्न गृह्यते तत्र संशयासामग्रीसत्त्वे संसयस्यै वोपपत्तेः किन्त्वाभ्यासदशायां तृतीयानुव्यवसायादि ना प्रामाण्यस्य स्वतएव ग्रहसम्भवात् प्रथमानुव्यव सायपरं न तद्ग्राहकत्वमिति कल्पते संशयानुरो धात्। अथ प्रामाण्यानुमितौ प्रामाण्यग्रहे न तस्य विपर्ययनिश्चयरूपत्वार्थं तत्र प्रामाण्यग्रहोवाच्यः सोऽ प्यनुमित्यन्तरेणेति। फलमुखी कारणमुखी वा नान वस्थेति चेन्न अगृहीता प्रामाण्यग्राहकस्यैव निश्चय रूपत्वात् यत्र च प्रामाण्यसंशयस्तत्रैव परं प्रामा ण्यानुमितेरपेक्षावायदाशङ्कं प्रामाण्यानुमितिरिष्य त एव सर्व्वत्र तु न संशयः क्वचित्कोट्यनुपस्थितेः क्वचि द्विशेषदर्शनादितः क्वचिद्विषयान्तरसञ्चारादिति संक्षेपः। ननु सर्व्वेषां ज्ञानानां यथार्थत्वात् प्रमा लक्षणे तद्विशेष्यकत्वं विशेषणं व्यर्थं न च रङ्गे रज तार्थिनः प्रवृत्तिर्भ्रमजन्या न स्यात् तव मते भ्रम स्याभावादिति वाच्यं तत्र हि दोषाधीनस्य पुरोव

र्त्तिनि स्वतन्त्रोपस्थितरजतभेदाग्रहस्य हेतुत्वात् सत्यरजतस्थले तु विशिष्टज्ञानस्य सत्त्वात् तदेव कारणमस्तु वा तत्रापि भेदाग्रह एव कारणमिति नवाऽन्यथाख्यातिः सम्भवति रजतप्रत्यक्षकारणस्य रजतसन्निकर्षस्याभावात् रङ्गे रजतबुद्धेरनुपपत्तेरिति चेन्न सत्यरजतस्थले प्रवृत्तिं प्रति विशिष्टज्ञानस्य हेतुतायाः क्लृप्तत्वात् अन्यत्रापि तत्कल्पनात् न च सम्वादिप्रवृत्तौ तत्कारणं विसम्वादिप्रवृत्तौ तु भेदाग्रहः कारणमिति वाच्यं लाघवात् प्रवृत्तिमात्रे तस्य हेतुत्वकल्पनात् इत्यञ्च रङ्गे रजतत्वविशिष्टबुद्ध्यनुरोधेन ज्ञानलक्षणा प्रत्यासत्तिकल्पनेऽपि न क्षतिः फलमुखगौरवस्याऽदोषत्वात् किञ्च रङ्गरजतयोरिमे रजतरङ्गे इति ज्ञानं जातं तत्र न कारणबाधोऽपि। अपिच यत्र रङ्गरजतयोरिमे रजतरङ्गे इति ज्ञानं तत्रोभयत्र युगपत्प्रवृत्तिनिवृत्ती स्यातां रङ्गे रङ्गभेदग्रहे रजते रजतभेदग्रहे अन्यथाख्यातिभयात् त्वन्मते रङ्गे रङ्गभेदाग्रहस्य रजते रजतभेदाग्रहस्य च सत्त्वात् दोषादेव रङ्गे रजतभेदाग्रहस्य रजते रङ्गभेदाग्रहस्य च सत्त्वात्। किञ्चानुमितिं प्रति भेदाग्रहस्य हेतुत्वे जलह्रदे वह्निव्याप्यधूमवदभेदाग्रहात् अनुमितिर्निर्व्बाधा यदि च विशिष्टज्ञानं कारणं तदाऽयोगोलके वह्निव्याप्यधूम

ज्ञानम् अनुमित्यनुरोधादापतितम् इत्थम् अन्यथा ख्याता प्रत्यक्षमेव प्रमाणं रङ्गं रजततया जाना मीत्यनुभवादिति संक्षेपः। पूर्वं व्याप्तिरुक्ता तद्ग्रहो पायस्तु न दर्शित इत्यतस्तं दर्शयति व्यभिचारस्येति व्यभिचाराग्रहः सहचार ग्रहश्च व्याप्तिग्रहे कारण मित्यर्थः व्यभिचारग्रहस्य व्याप्तिग्रह प्रतिबन्धक त्वात् तदभावः कारणम् अन्वयव्यतिरेकाभ्यां सह चारग्रहस्यापि हेतुता भूयोदर्शनन्तु न कारणं व्यभि चारा स्फूर्त्तौ सकृद्दर्शनेऽपि क्वचिद्व्याप्तिग्रहात् क्वचि द्व्यभिचारशङ्काविधूननद्वारा भूयोदर्शनमुपयुज्यते यत्र तु भूयोदर्शनादपि शङ्का नापैति तत्र विपक्षबा धकतर्कोऽपेक्षितः तथापि वह्निविरहिण्यपि धूमः स्यादिति यद्याशङ्का भवति तदा सा वह्निधूमयोः कार्य्यकारणभावस्य प्रतिसन्धानान्निवर्त्तते यद्ययं वह्निमान् स्यात्तदा धूमवान् न स्यात् कारणं विना कार्य्यानुपपत्तेः यदि क्वचित् कारणं विनापि [illegible]व प्यति अहेतुकएव वा भविष्यतीति तत्राशङ्का भव ति तदा सा व्याघातादपसरणीया यदि कारणं विना कार्य्यं स्यात् तदा धूमार्थं वह्नेस्तृप्त्यर्थं भोजनस्य नियमतउपादानं तवैव न स्यादिति यत्र स्वतएव श ङ्का नावतरति तत्र न तर्कापेक्षापीति तदिदमुक्तं तर्कः क्वचित् शङ्कानिवर्त्तकइति। इदानीं परकीय

व्याप्तिग्रहप्रतिबन्धार्थमुपाधिं निरूपयति साध्यस्येति साध्यत्वाभिमतव्यापकत्वे सति साधनत्वाभिमताव्याप कइत्यर्थः ननु श्यामोमित्रातनयत्वात् इत्यत्र शाकपा कजत्वं नोपाधिः स्यात् तस्य साध्यव्यापकत्वाभावात् श्यामत्वस्य घटादावपि सत्त्वात् एवं वायुः प्रत्यक्षः स्पर्शाश्रयत्वात् इत्यत्र उद्भूतरूपवत्त्वं नोपाधिः स्यात् प्रत्यक्षत्वस्यात्मादिषु सत्त्वात् तत्र रूपाभावात् एवं ध्वंसोविनाशीजन्यत्वात् इत्यत्र भावत्वं नोपाधिः स्याद्विनाशित्वस्य प्रागभावे सत्वात् तत्र च भाव त्वाभावादिति चेन्न यद्धर्मावच्छिन्नसाध्यव्यापकत्वं तद्धर्मावच्छिन्नसाधनाव्यापकत्वमित्यर्थतात्पर्य्यात् मि त्रातनयत्वावच्छिन्नश्यामत्वस्य व्यापकं शाकपाक जत्वम् एवं वहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वस्य व्यापक त्वमुद्भूतरूपवत्त्वं वहिर्द्रव्यतावच्छिन्नसाधनस्याव्या पकञ्च एवं ध्वंसोविनाशी जन्यत्वादित्यत्र जन्य त्वावच्छिन्नसाध्यव्यापकत्वं भावत्वं काकः श्यामोमि त्रातनयत्वात् इत्यादावपि मित्रातनयत्वावच्छिन्नश्या मत्वस्यव्यापकत्वं शाकपाकजत्वं सद्धेतो तु एतादृशोध र्मोनास्ति यदवच्छिन्नस्य साध्यस्य व्यापकं तदव च्छिन्नस्य साधनस्याव्यापकं किञ्चित् स्यात् व्यभि चारिणि तु व्यक्ततउपाध्यधिकरणं यत्साध्याधिक रणं यत्रोपाधिशून्यं साध्यव्यभिचारनिरूपकमपि

करणं तदन्यतरत्वावच्छिन्नस्य साध्यस्य व्यापकत्वं साधनस्य चाव्यापकत्वमुपाधेः सम्भवतीति अतएव लक्ष्यमपि रूपमेतदनुसारेण दर्शयति सर्व्वइति स्वसाध्येति स्वम् उपाधिः स्वञ्चसाध्यञ्च स्वसाध्ये त योर्व्यभिचारिताइत्यर्थः। उपाधेर्दूषकतावीजमाह व्य भिचारस्येति उपाधिव्यभिचारेण साध्यव्यभिचारा नुमानम् उपाधेः प्रयोजनमित्यर्थः तथाहि यत्र शुद्ध साध्यव्यापक उपाधिस्तत्र शुद्धेनोपाधिव्यभिचारेण साध्यव्यभिचारानुमानं यथा धूमवान् वह्नेरित्यादौ वह्निर्धूमव्यभिचारी आर्द्रेन्धनव्यभिचारित्वात् इति व्यापकव्यभिचारिणोव्याप्यव्यभिचारावश्यकत्वात् यत्र तु किञ्चिद्धर्म्मावच्छिन्नसाध्यव्यापक उपाधिः तत्र तद्धर्म्मवति उपाधिव्यभिचारेण साध्यव्यभिचारानु मानं यथा श्यामोमित्रातनयत्वात् इत्यत्र मित्रातन यत्वं श्यामत्वव्यभिचारि मित्रातनये शाकपाकज त्वव्यभिचारित्वादिति बाधानुन्नीतपक्षेतरस्तु साध्य व्यापकताग्राहकप्रामाणाभावात् स्वव्याघातकत्वाच्च नोपाधिः बाधोन्नीतस्तु पक्षेतरउपाधिर्भवत्येव यत्र वह्निरनुष्णः कृतकत्वात् इत्यादौ प्रत्यक्षेण वह्नेरु ष्णत्वग्रहे वह्नीतरत्वमुपाधिः यत्र साध्यव्यापकत्वा दिकं सन्दिह्यते ससन्दिग्धोपाधिः पक्षेतरस्तु सन्दिग्धोपाधिरपि नोद्भावनीयः कथकसम्प्रदायानु

रोधादिति केचित्तु सत्प्रतिपक्षोत्थापनमुपाधिफलं तथाहि अयोगोलकं धूमवद्वह्नेरित्यादौ अयोगोलकं धूमाभाववत् आर्द्रेन्धनाभावात् इति सत्प्रतिपक्षस म्भवात् इत्यञ्च साधनव्यापकोऽपि क्वचिदुपाधिर्यथा करका पृथिवी कठिनसंयोगवत्त्वादित्यादौ अनु ष्णाशीतस्पर्शवत्त्वं नचात्र स्वरूपसदुपाधिरेव दूष णमिति वाच्यं सर्व्वत्रोपाधेर्दूषणान्तरसाङ्कर्य्यादिष्ट च साध्यव्यापकपक्षावृत्तिरुपाधिरिति वदन्ति। श ब्दोपमानयोरिति वैशेषिकाणां मते प्रत्यक्षमनुमान ञ्च प्रमाणं शब्दोपमनयोरनुमानविधयैव प्रामाण्यं तथा हि दण्डेन गामभ्याजेत्यादिपदानि वैदिकपदानि वा तात्पर्य्यविषयस्मारितपदार्थसंसर्गज्ञानपूर्व्वकाणि आकाङ्क्षादिमत्पदकदम्बत्वात् घटमानयेति पद कदम्बवत् यद्वा एते पदार्थामिथःसंसर्गवन्तः यो ग्यतादिमत्पदोपस्थापितत्वात् तादृशपदार्थवत् दृष्टा न्तेऽपि दृष्टान्तान्तरेण साध्यसिद्धिरिति एवं गवय व्यक्तिप्रत्यक्षानन्तरं गवयपदं गवयत्वप्रवृत्तिनिमित्त कम् असति वृत्त्यन्तरे वृद्धैस्तत्र प्रयुज्यमानत्वात् यथा गोपदं गोत्वप्रवृत्तिनिमित्तकं यद्वा गवयपदं सप्र वृत्तिनिमित्तकं साधुपदत्वात् इत्यनुमानेन पक्षध र्मतावलात् गवयत्वप्रवृत्तिनिमित्तकं भासते तन्मतं दूषयति तन्न सम्यगिति विना व्याप्तिज्ञानं शब्दा

दितोबोधस्यानुभविकत्वात् नहि सर्व्वत्र शब्दस्थव गाद्यनन्तरं व्याप्तिज्ञाने मानमस्तीति किञ्च सर्व्वत्र शब्दस्थले यदि व्याप्तिज्ञानं कल्प्यते तदा सर्व्वत्रानुमितिस्थले पदज्ञानं कल्पयित्वा शाब्दबोधएव किं न स्वीक्रियते इति द्वैविध्यमिति अनुमानं हि त्रिविधं केवलान्वयि केवलव्यतिरेकि अन्वयव्यतिरेकिभेदात् तत्रासद्विपक्षः केवलान्वयी यथा ज्ञेयम् अभिधेयादित्यादौ तत्र हि सर्व्वस्यैव ज्ञेयत्वात् विपक्षासत्त्वं ननु सर्व्वेषां धर्म्माणां व्यावृत्तत्वात् केवलान्वय्यसिद्धिरिति चेन्न व्यावृत्तत्वस्य सर्व्वसाधारण्ये तस्यैव केवलान्वयित्वात्। किञ्च वृत्तिमदत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वं तत्र गगनाभावादौ प्रसिद्धम् असत्सपक्षः केवलव्यतिरेकी यथा पृथिवी इतरेभ्योभिद्यते गन्धवत्त्वादित्यादौ तत्र हि जलादित्रयोदशभेदस्य पूर्व्वमनिश्चिततया निश्चितसाध्यवतः सपक्षस्याभावइति। सत्सपक्षविपक्षोऽन्वयव्यतिरेकी यथा वह्निमान् धूमादित्यादौ तत्र सपक्षस्य महानसादेर्विपक्षस्य जलह्रदादेश्च सत्त्वादिति। तत्र व्यतिरेकिणि व्यतिरेकव्याप्तिज्ञानं कारणं तदर्थं व्यतिरेकव्याप्तिं निर्व्वक्ति साध्याभावव्यापकत्वं हेत्वभावस्य यद्भवेत् इति। साध्याभावव्यापकीभूताभावप्रतियोगित्वमित्यर्थः अत्रेदं बोध्यं येन

सम्बन्धेन यत्र येन रूपेण व्यापकता गृह्यते तत्स
म्बन्धावच्छिन्नप्रतियोगिताकतद्धर्मावच्छिन्नाभाववत्ता
ज्ञानात् यत्सम्बन्धेन यद्धर्मावच्छिन्नं प्रति व्याप्यता
गृह्यते तत्सम्बन्धावच्छिन्नप्रतियोगिताकतद्धर्मा
वच्छिन्नाभावस्य सिद्धिः इत्यञ्च यत्र विशेषणता
दिसम्बन्धेनेतरत्वव्यापकत्वं गन्धाभावे गृह्यते तत्र
गन्धाभावाभावेनेतरत्वात्यन्ताभावः सिध्यति यत्र तु
तादात्म्यसम्बन्धेनेतरव्यापकता गृह्यते तत्र तादा
त्म्यसम्बन्धेनेतरस्याभावः सिध्यति सएवान्योन्या
भावः एवं यत्र संयोगसम्बन्धेन धूमं प्रति संयोगस
म्बन्धेन वह्नेर्व्यापकता गृह्यते तत्र संयोगसम्बन्धा
वच्छिन्नप्रतियोगिताकवह्न्यभावेन जलह्रदे संयोग
सम्बन्धावच्छिन्नप्रतियोगिताकधूमाभावः सिध्यति
अत्र च व्यतिरेकव्याप्तिग्रहे व्यतिरेकसचारज्ञानं
कारणं केचित्तु व्यतिरेकसहचारेणान्वयव्याप्तिरेव
गृह्यते न तु व्यतिरेकव्याप्तिज्ञानं कारणं यत्र व्य
तिरेकसहचाराद्व्याप्तिग्रहस्तत्र व्यतिरेकीत्युच्यते
साध्यप्रसिद्धिस्तु घटादावेव ज्ञायतां पश्चात् पृथि
वीत्वावच्छेदेन साध्यते इति वदन्ति। अर्थापत्ते
स्त्विति अर्थापत्तिं प्रामाण्यान्तरं मन्यन्ते केचन त
थाहि यत्र देवदत्तस्य शतवर्षजीवित्वं ज्योतिःशा
स्त्रादवगतं जीविनो गृहासत्त्वञ्च प्रत्यक्षादवगतं

तत्र शतवर्षजीवित्वान्यथानुपपत्त्या वहिःसत्त्वं कल्प्यते तदनुमानेन गतार्थत्वान्नेष्यते तथाहि जीवित्वस्य वहिःसत्त्वगृहसत्त्वान्यतरव्याप्यत्वं गृहीतं तत्रान्यतरसिद्धौ जायमानायां गृहसत्त्वबाधाद्बहिःसत्त्वमनुमितौ भासते एवं पीनोदेवदत्तोदिवा न भुङ्क्ते इत्यादौ पीनत्वस्य भोजनव्याप्यत्वावगमाद्भोजनं सिध्यति दिवाभोजनबाधे रात्रिभोजनं सिध्यति अभावप्रत्यक्षस्यानुभविकत्वादनुपलम्भोऽपि न प्रमाणान्तरं किञ्चानुपलम्भस्याज्ञानस्य हेतुत्वे ज्ञानाकरणकत्वात् प्रत्यक्षत्वं ज्ञानस्य हेतुत्वे तु तत्राप्यनुपलम्भान्तरापेक्षेत्यनवस्था चेष्टापि प्रमाणान्तरं न तस्याः सङ्केतग्राहकशब्दस्मारकत्वेन लिप्यादिसमशीलत्वाच्छब्दएवान्तर्भावात यत्र तु व्याघ्रादिग्रहस्तत्रानुमितिरेवेति। सुखं निरूपयति सुखन्तु जगतामेव काम्यं धर्म्मेण जन्यते इति काम्यमभिलाषविषयः। धर्म्मेति धर्म्मत्वेन सुखत्वेन कार्य्यकारणभाव इत्यर्थः। दुःखनिरूपयति अधर्म्मेति अधर्म्मत्वेन दुःखत्वेन कार्य्यकारणभावइत्यर्थः। प्रतिकूलमिति दुःखत्वज्ञानादेव सर्व्वेषां स्वाभाविकविषयइत्यर्थः। इच्छां निरूपयति निर्दुःखत्व इति इच्छा हि फलविषयिणी उपायविषयिणी च फलन्तु सुखं दुःखाभावश्च तत्र फलेच्छां प्रति फलज्ञानं कारणम् अतएव

स्वतः पुरुषार्थः सम्भवति यज्ज्ञानं सत्स्वप्रवृत्ति येष्यते सपुरुषार्थइति तल्लक्षणात् इतरेच्छानधी नेच्छाविषयत्वं फलितोऽर्थः उपायेच्छां प्रतीष्टसा धनताज्ञानं कारणम्। चिकीर्षेति कृतिसाध्यत्वप्रका रिका कृतिसाध्यक्रियाविषयिणीच्छा चिकीर्षा पाकं कृत्या साधयामीति तदनुभवात् चिकीर्षां प्रति कृति साध्यताज्ञानमिष्टसाधनताज्ञानञ्च कारणम् अत एव वृष्ट्यां कृतिसाध्यताभावान्न चिकीर्षा। बल वदिति बलवद्द्विष्टसाधनताज्ञानं तत्र प्रतिबन्ध कमतोमधुविषसंपृक्तान्नभोजने न चिकीर्षा बलवद् द्वेषप्रतिबन्धकइत्यन्ये कस्यचिन्मतइति बलवदनि ष्टाजनकत्वज्ञानं कारणमित्यर्थः कृतिसाध्यताज्ञाना दिमता बलवदनिष्टसाधनताज्ञानशून्यस्य बलवदनि ष्टाजनकत्वज्ञानं विनापि चिकीर्षायां विलम्बाभा वात् कस्यचिन्मते इत्यस्वरसोदर्शितः। द्वेषं निरू पयति द्विष्टसाधनतेति दुःखे पापविषयकं द्वेषं प्रति द्विष्टसाधनताज्ञानं कारणमित्यर्थः बलवदि ष्टसाधनताज्ञानञ्च प्रतिबन्धकं तेन नान्तरीयकदुः खजनके पाकादौ न द्वेषः। यत्नं निरूपयति प्र वृत्तिश्चेति प्रवृत्तिर्निवृत्तिर्जीवनयोनियत्न भेदात् प्रयत्नस्त्रिविधइत्यर्थः। चिकीर्षेत्यादि मधुविषसंपृ क्तान्नभोजनादौ बलवदनिष्टानुबन्धित्वेन चिकीर्षा

भावान्न प्रवृत्तिरितिभावः कृतिसाध्यताज्ञानादिवद्ब लवदनिष्टाननुबन्धित्वज्ञानमपि स्वतन्त्रान्वयव्यति रेकात् प्रवृत्तौ कारणमित्यपि वदन्ति । कार्य्यता ज्ञानं प्रवर्त्तकमिति गुरवः तथाहि ज्ञानस्य प्रवृ त्तौ जननीयायां चिकीर्षातिरिक्तं नापेक्षितमस्ति साचकृतिसाध्यताज्ञानसाध्या इच्छायाः स्वप्रकार प्रकारकधीसाध्यत्वनियमात् चिकीर्षा हि कृतिसा ध्यप्रकारिकेच्छा तत्र कृतिसाध्यत्वं प्रकारस्तत्प्रका रकज्ञानं चिकीर्षायां तद्द्वारा प्रवृत्तौ च हेतुः न त्विष्टसाधनताज्ञानं तत्र हेतुः कृत्यसाध्येऽपि प्र वृत्त्यापत्तेः कृत्यसाध्यताज्ञानं प्रतिबन्धकमिति चेन्न तदभावापेक्षया कृतिसाध्यताज्ञानस्य लघुत्वात् न च द्वयोपरि हेतुत्वं गौरवात् ननु तन्मतेऽपि म[illegible]विषसंपृक्तान्नभोजने चैत्यवन्दने च प्रवृत्त्यापत्तिः [illegible]र्य्यताज्ञानसत्त्वादिति चेन्न स्वविशेषणवत्ता प्रति सन्धानजन्यकार्य्यताज्ञानस्य प्रवर्त्तकत्वात् काम्ये हि यागपाकादौ कामना स्वविशेषणं ततश्च बलवद निष्टाननुबन्धिकाम्यसाधनताज्ञानेन कार्य्यताज्ञानेन कार्य्यताज्ञानं ततः प्रवृत्तिः दृप्तश्च भोजने न प्र वर्त्तते तदानीं कामनायाः पुरुषविशेषणत्वाभावात् नित्ये च शौचादिकं पुरुषविशेषणं तेन शौचादिज्ञा नाधीनकृतिसाध्यताज्ञानात्तत्र प्रवृत्तेः ननु तदप्रे

त्तया लाघवेन बलवदनिष्टा ननुबन्धीष्टसाधनता विषयककार्य्यताज्ञानमेव हेतुरस्तु बलवदनिष्टान नुबन्धित्वञ्च इष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखा जनकत्वं बलवद्द्विष्टविषयदुःखाजनकत्वं वेति चेन्न इष्टसाधनत्वकृतिसाध्यत्वयोर्युगपत्ज्ञानमशक्यत्वात् साध्यत्वसाधनत्वयोर्विरोधात असिद्धस्य तु साध्यत्वं सिद्धस्य च साधनत्वं न च एकमेकेनैकदा सिद्ध मसिद्धञ्च ज्ञायते तस्मात् कालभेदादुभयं ज्ञा यते मैवं लाघवेन बलवदनिष्टाननुबन्धीष्टसाधनत्वे सति कृतिसाध्यताज्ञानस्य हेतुत्वात् न च साध्यत्व साधनत्वयोर्विरोधः यदा कदाचित साध्यत्वसा धनत्वयोरविरोधात् एकदा साध्यत्वसाधनत्वयो स्त्वाज्ञानात् नवीनास्तु ममेदं कृतिसाध्यमिति ज्ञानं न प्रवर्त्तकमनागतेष्टस्य ज्ञातुमशक्यत्वात् किन्तु यादृशस्य पुंसः कृतिसाध्यं यदिष्टं तादृशत्वं स्वस्य प्रतिसन्धाय तत्र प्रवर्त्तते तेनौदनकामस्य तत्साधनताज्ञानवतस्तदुपकरणवतः पाकः कृति साध्यस्तादृशश्चाहमिति प्रतिसन्धाय पाके प्रवर्त्तत इत्याहुस्तन्न स्वकल्पितलिप्यादि प्रवृत्तौ यौवने का मोद्भेदादिना सम्भोगादौ च तदभावात् इदन्तु बोध्यं तदानीमिष्टसाधनत्वादिज्ञानं प्रवर्त्तकं तेन भावियौवराज्ये बालस्य न प्रवृत्तिस्तदानीं कृतिसा

धत्वाज्ञानात् एवं तृप्तोभोजने न प्रवर्त्ततेतदानी मिष्टसाधनत्वाज्ञानात् प्रवर्त्तते च रोगदूषितचित्तो विषादिभक्षणे तदानीं बलवदनिष्टाननुबन्धित्व ज्ञानात् नचास्तिकस्यागम्यागमनब्रह्मवधादि प्रवृत्तौ कथं बलवदनिष्टाननुबन्धित्वबुद्धिर्नरकसाधन त्वज्ञानादिति वाच्यम् उत्कटरागादिना नरकसा धनताधीनिरोधनात् वृष्ट्यादौ तु कृतिसाध्यताज्ञा नाभावान्नचिकीर्षाप्रवृत्ती किन्त्विष्टसाधनताज्ञाना दिच्छामात्रं कृतिश्च प्रवृत्तिरूपा बोध्या तेन जीवनयोनियत्नसाध्ये प्राणपञ्चकसञ्चारेन प्रवृत्तिः इत्यञ्च प्रवर्त्तकत्वानुरोधाद्विधिरपि तावानर्थः इत्यञ्च विश्वजिता यजेत इत्यादौ यत्र फलं न श्रूयते तत्रापि स्वर्गः फलं कल्प्यते नन्वहरहःसन्ध्यामुपा सीतेत्यादौ इष्टानुत्पत्तेः प्रवृत्तिः कथं न चार्थवा दिकं ब्रह्मलोकादि प्रत्यवायाभावोवा फलमिति वाच्यं तथा सति काम्यत्वे नित्यत्वहान्यापत्तेःकामना भावेऽकरणापत्तेश्च इत्यञ्च फलश्रुतिस्तत्रार्थवादमा त्रमिति चेन्न ग्रहणश्राद्धादौ नित्यत्वनैमित्तिकत्व योरिव भरणीश्राद्धे काम्यत्व नैमित्तिकत्वयोरिवनि त्यत्वकाम्यत्वयोरप्यविरोधात् न च कामनाभावेऽकर णापत्तेः त्रिकालस्तवपाठादाविव कामना सद्भावस्यैव कल्पनात् ननु वेदबोधितकार्य्यताज्ञाना प्रवृत्तिः

सम्भवतीति चेन्न इष्टसाधनत्वमज्ञात्वा तादृशकार्य्यं तावज्ज्ञानसहस्रेणापि प्रवृत्तेरसम्भवात् यदपि पराद्वापूर्व्वफलमिति तदपि न कामनाभावे करणापत्तेस्तौल्यात् कामनाकल्पने त्वार्थवादिकफलमेव रात्रिसत्त्रन्यायात् कल्प्यतामन्यथा प्रवृत्त्यनुपपत्तेः तेन अनुत्पत्तिं तथाचान्ये प्रत्यवायस्य मन्वते। एवं सन्ध्यामुपासते ये तु सततं शंसितव्रताः विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम्।

एवं दद्यादहरहः श्राद्धं पितृभ्यः प्रीतिमावहन्नित्यादिकमेव फलमस्तु न च पितृप्रीतिः कथं फलं व्यधिकरणत्वादिति वाच्यं गयाश्राद्धादाविव उद्देश्यत्व सम्बन्धेनैव फलजनकत्वस्य क्वचित्कल्पनात् अतएवोक्तं शास्त्रदर्शितफलमनुष्ठानरीत्युत्सर्गइति पितॄणां मुक्तत्वे तु स्वस्य स्वर्गफलं यावन्नित्यनैमित्तिकानुष्ठानस्य सामान्यतः स्वर्गफलकल्पनात् पराड्डापुर्व्वार्थप्रवृत्तिश्च न सम्भवति। न हि तत्सुखदुःखाभाववत्स्वतः पुरुषार्थः नवा तत्साधनं प्रत्यवायानुत्पत्तौ कथं प्रवृत्तिरिति चेदित्थं यथा हि नित्यकृते प्रत्यवायाभावस्तिष्ठति तदभावे तदभावः। एवं प्रत्यवायाभावस्य सत्त्वे दुःखप्रागभावसत्त्वं तदभावे तदभावइति योगक्षेमसाधारणकारणतया दुःखप्रागभावं प्रत्यपि सुवचत्वात् एवमेव प्राय

श्चित्तस्यापि दुःखप्रागभावहेतुत्वमिति ननु न कलञ्जं भक्षयेदित्यत्र विध्यर्थे कथं नञर्थान्वयः इष्टसाधनत्वाभावस्य कृतिसाध्यत्वाभावस्य च बोधयितुमशक्यत्वादिति चेन्न तत्र बाधादिष्टसाधनत्वं कृतिसाध्यत्वञ्च न विध्यर्थः किन्तु बलवदनिष्टाननुबन्धित्वमात्रं तदभावश्च नञा बोध्यते अथवा बलवदनिष्टाननुबन्धीष्टसाधनत्वे सति कृतिसाध्यत्वं विध्यर्थः तदभावश्च नञा बोध्यमानो विशिष्टाभावो विशेष्यवति विशेषणाभावे विश्राम्यति ननु श्येनेनाभिचरन् यजेतेत्यत्र कथं बलवदनिष्टाननुबन्धित्वमर्थः श्येनस्य मरणानुकूलव्यापारस्य हिंसात्वेन नरकसाधनत्वात् न च वैधत्वान्निषेध इति वाच्यम अभिचारे प्रायश्चित्तोपदेशात् न च मरणानुकूलव्यापारमात्रं यदि हिंसा तदा खड्गकारस्य कूपकर्तुश्च हिंसकत्वापत्तिः गललग्नान्नभक्षणजन्यमरणे स्वात्मवधित्वापत्तिश्चेति वाच्यं मरणोद्देश्यकत्वस्यापि विशेषणत्वात् अतएव सप्तमीतैलाभ्यङ्गस्य न हिंसात्वम् अन्योद्देश्यकक्षिप्तनाराचहतब्राह्मणस्य तु वाचनिकं प्रायश्चित्तमिति चेन्न श्येनवारणायादृष्टाद्वारकत्वेन विशेषणात् अतएव काशीमरणाद्यर्थकृतशिवपूजादेरपि न हिंसात्वं न च साक्षान्मरणजनकस्यैव हिंसात्वं श्येनस्तु न तथा किन्तु तज्जन्यापूर्वप

मिति वाच्यं खड्गाघातेन ब्राह्मणे व्रणपाकपरम्परया मृते हिंसात्वानापत्तेः। केचित्तु श्येनस्य हिंसाफलं न तु मरणं श्येनजन्यखड्गाघातादिरूपा हिंसा अभिचारपदार्थः तस्य च पापजनकत्वमतः श्येनस्य वैधत्वात् पापाजनकत्वेऽपि अग्रिमपापं प्रतिसन्धाय सन्तोन प्रवर्त्तन्ते आचार्य्यास्तु 'आप्ताभिप्रायोविध्यर्थः पाकं कुर्य्यादित्यादौ आप्तानिरूप्येच्छाविषयत्वात् आप्तस्येच्छाविषयत्वं लाघवात् एवञ्च स्वर्गकामोयजेतेत्यादौ यागः स्वर्गकामकृतिसाध्यतयाभीष्ट इत्यर्थः ततश्चाभीष्टत्वेनेष्टसाधनत्वादिकमनुमाय प्रवर्त्तते कलञ्जभक्षणादौ तदभावान्नप्रवर्त्तते यस्तु वेदे पौरुषेयत्वं नाभ्युपैति तं प्रति विधिरेव तावद्गर्भ इव श्रुतिः कुमार्य्याः संयोगे मानं न च कर्त्तृस्मरणं बाधकं कपिलकणादादिकमारभ्याद्यपर्य्यन्तं कर्त्तृस्मरणस्यैव प्रतीयमानत्वात् अन्यथा स्मृतीनामप्यकर्त्तृकत्वापत्तेः तत्रैव कर्त्तृस्मरणमस्तीति वेदेऽपि छन्दांसि जज्ञिरे तस्मादित्यादि कर्त्तृस्मरणमस्त्येव एवं प्रति मन्वन्तरं चैषा श्रुतिरन्या विधीयतइत्यपि द्रष्टव्यं स्वयम्भुरेषभगवान् वेदो गीतस्त्वया पुरा। शिवाद्याऋषिपर्य्यन्ताः स्मर्त्तारोऽस्य न कारकाइति तु वेदस्य स्तुतिमात्रं न च पौरुषेयत्वभ्रमादिसंभवादप्रामाण्यं स्यादिति वाच्यं

नित्यसर्व्वज्ञत्वेन निर्दोषत्वात् अतएव पुरुषा न्तरभ्रमादिसम्भवान्न कपिलादेः कर्त्तृत्वं वेदस्य किञ्च वर्णानामेवानित्यत्वस्य वक्ष्यमाणत्वात् सुतरां तत्सन्दर्भस्य वेदस्यानित्यत्वमिति उपादानस्येति उपादानस्य समवायिकारणस्याध्यक्षं प्रत्यक्षं प्रवृत्तौ कारणमिति द्विष्टसाधनताज्ञानस्य दुःखसाधन विषयकनिवृत्तिं प्रति जनकत्वमन्वयव्यतिरेकाद वधारितमिति भावः । यत्नइति जीवनयोनियत्नो यावज्जीवनमनुवर्त्तते सचातीन्द्रियस्तत्र प्रमाणमाह शरीरे प्राणसञ्चारकारणं तत्प्रकीर्त्तितमिति प्राणसञ्चारोहि अधिकः श्वासादिः प्रयत्नसाध्यः इत्यञ्च प्राणसञ्चारस्य यत्नसाध्यत्वानुमानात् प्रत्यक्षयत्नस्य बाधाच्चातीन्द्रिययत्नसिद्धिः सएव जी वनयोनिप्रयत्नः । गुरुत्वं निरूपयति अतीन्द्रिय मिति अनित्येद्व्यणुकादौ तद्गुरुत्वम् अनित्यं नित्येप रमाणौ नित्यं गुरुत्वमित्यनुवर्त्तते तद्गुरुत्वम् असम वायि असमवायिकारणं पतने आद्यपतने इत्यर्थः। द्रवत्वन्निरूपयति सांसिद्धिकमिति द्रवत्वं द्विविधं सां सिद्धिकं नैमित्तिकञ्चेति द्वितीयं नैमित्तिकं परमाण्वा विति जलपरमाणौ द्रवत्वं नित्यम् अन्यत्र पृथिवीपर माण्वादौ जलद्व्यणुकादौ च द्रवत्वमनित्यं क्वचित्तेजसि क्वचित्पृथिव्याञ्च नैमित्तिकं द्रवत्वं तत्र कोवा नैमि

नैकार्थस्तद्दर्शयति नैमित्तिकमिति वक्ष्यतीति पदस्य सार्थकं तथाच तेजःसंयोगाग्निसंयोगजन्यं नैमित्तिकं द्रवत्वं तच्च सुवर्णादिरूपे तेजसि घृतजतुप्रभृतिपृथिव्यां वर्त्ततइत्यर्थः द्रवत्वं स्यन्दने हेतुर्निमित्तं संग्रहे तु तदिति हेतुरिति असमवायिकारणमित्यर्थः संग्रहे सक्त्वादिसंयोगविशेषे तद्द्रवत्वं स्नेहसहितमिति बोद्धव्यं तेन द्रुतसुवर्णादीनां न संग्रहः। स्नेहं निरूपयति जलेइति जलएवेत्यर्थः असौ स्नेहः ननु पृथिव्यामपि तैलस्नेहउपलभ्यते तथाचासौ जलीयः तथा सति दहन प्रातिकूल्यं स्यादतआह तैलान्तरे तत्प्रकर्षाद्दहनस्यानुकूलतेति तत्प्रकर्षात् स्नेहप्रकर्षात् तैलउपलभ्यमानस्नेहोऽपि जलीयएव तस्य प्रकृष्टत्वाद्दहनानुकूल्यम् अपकृष्टस्नेहं हि जलं वह्निं नाशयतीतिभावः। संस्कारन्निरूपयति संस्कारेति वेगस्थितिस्थापकभावनाभेदात् संस्कारस्त्रिविधइत्यर्थः मूर्त्तमात्रे तु वेगःस्यात् कर्मजोवेगजः क्वचिदिति कर्मजवेगजभेदाद्वेगोद्विविधइत्यर्थः शरादौ हि नोदनजनितेन कर्मणा वेगोजन्यते तेन च पूर्व्वकर्म्मनाशस्तदुत्तरं कर्म्म एवमग्रेऽपि विना च वेगं कर्म्मणः कर्म्मप्रतिबन्धकत्वात् पूर्व्वकर्म्मनाशउत्तरकर्म्मोत्पत्तिश्च न स्यात् यत्र वेगवता कपालेन जनिते घटे वेगोजन्यते सवेगजोवेगः।

स्थितिस्थापकइति प्राकृष्टशाखादीनां कपित्यागे पुनर्गमनस्य स्थितिस्थापकसाध्यत्वात् केचिदिति चतुर्षु क्षित्यादिषु स्थितिस्थापकं केचिन्मन्यन्ते तद प्रमाणमिति भावः असौ स्थितिस्थापकः क्वचित् आकृष्टशाखादौ भावनाख्यइति तस्य संस्कारस्य उपे क्षात्मकज्ञानात् संस्कारानुत्पत्तेरुपेक्षानात्मकइत्युक्तं ततसंशयात्संस्कारानुत्पत्तेर्निश्चयइत्युक्तं तेनोपेक्षा न्यनिश्चयत्वेन संस्कारं प्रति हेतुतेति भावः न स्मरणं प्रत्युपेक्षान्यनिश्चयत्वेन हेतुत्वं तेनोपेक्ष दिस्थले न स्मरणं इत्यस्तु संस्कारं प्रति ज्ञानत नैव हेतुतास्त्विति चेन्न विनिगमनाविरहेणापि संस्कारं प्रति उपेक्षान्यनिश्चयत्वेन हेतुतायाः सि द्धत्वात् किञ्च उपेक्षास्थले संस्कारकल्पनायाग त्वात् संस्कारं प्रति चोपेक्षान्यत्वेन हेतुतायाः सि द्धत्वात् तत्प्रमाणं दर्शयति स्मरणे प्रत्यभिज्ञाय प्यसौ हेतुरुच्यते इति असौ संस्कारः स्मरणं प्र भिज्ञानञ्च जनयति अतः संस्कारः कल्पते विना व्यापारं पूर्व्वानुभवस्य स्मरणादिजननासामर्थ्या स्वस्वव्यापारान्यतराभावे कारणत्वासम्भवात् न च प्रत्यभिज्ञां प्रति तत्तासंस्कारस्य हेतुत्वेन प्रत्यभि ज्ञायाः संस्कारजन्यत्वेन स्मृतित्वापत्तिरिति वाच्यं अप्रयोजकत्वात् परेतु अनुद्बुद्धसंस्कारात् प्रत्यभि

ज्ञानादृयादुद्बुद्धसंस्कारस्य हेतुत्वापेक्षया तज्ज्ञातस्मरणस्यैव प्रत्यभिज्ञां प्रति हेतुत्वं कल्प्यत इत्याहुः। अदृष्टं निरूपयति धर्म्माधर्म्माविति स्वर्गादिसकलसुखानां स्वर्गसाधनीभूतशरीरादीनाञ्च साधनं धर्म इत्यर्थः। तत्र प्रमाणं दर्शयितुमाह यागादीति यागादिव्यापारतया हि धर्म्मः कल्प्यते अन्यथा यागादीनां चिरं विनष्टतया निर्व्यापारतया च कालान्तरभाविस्वर्गजनकत्वं न स्यात् तदुक्तमाचार्य्यैः। चिरध्वस्तं फलायालं न कर्म्मातिशयं विनेति ननु यागध्वंसएव व्यापारः स्यात् न च प्रतियोगिध्वंसयोरेकफलाजनकत्वं सर्व्वत्र तथात्वे मानाभावात् न च त्वन्मते फलानन्त्यं मन्मते चरमफलस्यापूर्व्वनाशकत्वान्न तथात्वमिति वाच्यं कालविशेषस्य सहकारित्वादित्यतआह गङ्गास्नानेति गङ्गास्नानस्य हि स्वर्गजनकत्वेऽनन्तानां जलसंयोगध्वंसानां व्यापारत्वमपेक्ष्यैकमपूर्व्वं कल्प्यते लाघवादिति भावः ननु ध्वंसोऽपि न व्यापारोऽस्तु न च निर्व्यापारस्य चिरध्वस्तस्य कथं कारणत्वमिति वाच्यम् अनन्यथासिद्धनियतपूर्व्ववर्त्तित्वस्य तत्रापि सत्त्वात् अव्यवहितपूर्व्ववर्त्तित्वं हि चक्षुःसंयोगादेः कारणत्वं न तु सर्व्वत्र कार्य्यकालवृत्तित्वमिव समवायिकारणस्य कारणत्वमित्यतआह कर्म्मनाशाजलस्पर्शादिना ना

शस्त्वसौ मतइति यदि हि अपूर्वं न स्यात्तदा क
र्म्मनाशाजलस्पर्शादिना नाश्यत्वं धर्म्मस्य न स्यात् न
हि तेन यागादिनाशः प्रतिबन्धोवा कर्त्तुं शक्यते
तस्य पूर्व्वमेव वृत्तत्वादिति एतेन देवताप्रीतिरेव
फलमित्यपास्तं गङ्गास्नानादौ सर्व्वत्र देवताप्रीतेर
सम्भवात् देवतायाश्चेतनत्वेऽपि तत्प्रीतेरनुद्देश्यत्वात्
प्रीतेः सुखस्वरूपत्वेन विष्णुप्रीत्यादौ तदसम्भवात्
जन्यसुखादेस्तत्राभावात् तेन विष्णुप्रीतिजन्यत्वेन प
राभिमतस्वर्गादिरेव विष्णुप्रीतिशब्देन लक्ष्यते अ
धर्म्मोनरकादीनां हेतुर्निन्दितकर्म्मतइति नरकदुः
खादिसकलदुःखानां नारकिशरीरादीनाञ्च साध
नमधर्म्मइत्यर्थः प्रमाणमाह प्रायश्चित्तादिनाश्योऽसौ
जीववृत्तीत्विमौ गुणाविति यदि ह्यधर्म्मोन स्यात्त
दा प्रायश्चित्तादिनाश्यत्वं न स्यात् न हि तेन ब्रह्म
हननादीनां नाशः प्रतिबन्धोवा विधातुं शक्यते
तस्य पूर्व्वविनष्टत्वादिति भावः। जीवेति ईश्वरस्य
धर्म्माधर्म्माभावादिति भावः इमौ तु वासनाजन्यौ
ज्ञानादपि विनश्यतइति इमौधर्म्माधर्म्मौ वासनेति
अतोज्ञानिना कृते सुकृतदुष्कृतकर्म्मणी न फलायाल
मिति भावः ज्ञानदपीत्यपिना भोगपरिग्रहः ननु
तत्त्वज्ञानस्य कथं धर्म्माधर्म्मनाशकत्वं नाभुक्तं क्षी
यते कर्म्म कल्पकोटिशतैरपीति वचनविरोधात्

त्यञ्च तत्त्वज्ञानिना झटिति कायव्यूहेन सकल कर्म्मणां भोगेन क्षयइति चेन्न तव भोगस्य वेदबोधितनाशकोपनतिततत्वात् कथमन्यथा प्रायश्चित्तादिना कर्म्मणां नाशस्तदुक्तं ज्ञानाग्निः सर्व्वकर्म्माणीत्यादिना क्षूयते न चीयन्ते चास्य कर्म्माणि तस्मिन् दृष्टे परावरेइति ननु तत्त्वज्ञानिनस्तर्हि शरीरावस्थानं सुखदुःखादि च न स्यात् ज्ञानेन च सर्व्वेषां कर्म्मणां नाशादिति चेन्न प्रारब्धेतरकर्म्मणामेव नाशात् तत्तच्छरीरभोगजनकं हि यत्कर्म्म तत् प्रारब्धं तदभिप्रायमेव नाभुक्तमिति वचनमिति। शब्दं निरूपयति शब्दोध्वनिश्च वर्णश्च मृदङ्गादिभवोध्वनिः। सर्व्वः शब्दोनभोवृत्तिः श्रोत्रोत्पन्नस्तु गृह्यते इति नभोवृत्तिराकाशसमवेतः दूरस्थशब्दस्याग्रहणादाह श्रोत्रइति कण्ठसंयोगादिजन्यावर्णास्ते कादयोमताइति ननु मृदङ्गाद्यवच्छेदेनोत्पन्ने शब्दे श्रोत्रे कथमुत्पत्तिरतआह वीचितरङ्गन्यायेन तदुत्पत्तिस्तु कीर्त्तितेति आद्यशब्दस्य वहिर्दशदिगवच्छिन्नोऽन्यः शब्दस्तेनैव शब्देन जन्यते तेन चापरस्तद्व्यापकः एवं क्रमेण श्रोत्रोत्पन्नोगृह्यत इति। कदम्बगोलन्यायादुत्पत्तिः कस्यचिन्मते इति आद्यशब्दाद्दशदिक्षु दशशब्दाउत्पद्यन्ते ततश्चान्ये दशशब्दाउत्पद्यन्त इति भावः अस्मिन् कल्पे गौरवादुक्तं कस्यचिन्मते

इति ननु शब्दस्य नित्यत्वादुत्पत्तिः कथमत आह उत्पन्नः कोविनष्टः कइतिबुद्धिरनित्यतेति शब्दाना मुत्पादविनाशप्रत्ययशालित्वादनित्यत्वमित्यर्थः ननु स एवायं ककार इत्यादिप्रत्यभिज्ञानाच्छब्दानां नित्य त्वम् इत्थं चोत्पादविनाशबुद्धिर्भ्रमरूपा चेत्यत आह सोऽयङ्कइति बुद्धिस्तु साजात्यमवलम्बते तदेवौषध मित्यादौ सजातीयेति दर्शनादिति तत्र प्रत्यभि ज्ञानस्य तत्सजातीयत्वं विषयः ननु तद्व्यक्त्यभेदोवि षयः उक्तप्रतीतिविरोधात् इत्थञ्च द्वयोरपि बुद्ध्यो र्न भ्रमत्वमिति ननु सजातीयत्वं सोऽयमिति प्रत्य भिज्ञायां भासतेइति कुत्र दृष्टमित्यत आह तदेवेति यदौषधं मया कृतं तदेवन्येनापि कृतमित्यादिदर्श नादिति भावः ।

इति श्रीमहामहोपाध्यायविद्यानिवासभट्टाचा र्य्यसुत श्रीयुतविश्वनाथपञ्चाननभट्टाचार्य्य विरचित सिद्धान्तमुक्तावली संपूर्णा ॥

॥ इति सिद्धान्तमुक्तावलीसमाप्ता ॥



७ अनन्तरं राजा क्रोधवान् द्राक्षारसस्य पानाद् उत्थाय राजनिवेशन-
स्योद्यानं जग्मिवान् ततो राजतो ममानिष्टं निरूपितमिति दृष्ट्वा हामनो
राज्ञीम् इष्टेरां निजप्राणान् प्रार्थयितुम् अतिष्ठत। अनन्तरं राजा राज-
८ निवेशनस्योद्यानाद् द्राक्षारसपानस्यागारं पुनरागमत्। तदानीं हामन
इष्टेराया उपवेशनार्थकगोगडुके पतित आसीत् तेन राजा व्याहरत एष
किं ममैव समक्षं गेहमध्ये राज्ञीं धर्षयेत्? एतस्मिन् वचसि राज्ञो वद-
९ नात् [illegible]त एव भृत्या हामनस्य वदनम् आच्छादयामासुः। अनन्तरं ह-
र्व्वोणा इत्यामक एको नपुंसको राजानम् उचिवान्, पश्यतु राज्ञो मङ्ग-
लाय शुभवादिनो मर्दिखयस्य वधनिमित्तं हामनेन निर्म्मापितं पञ्चाशद्ध-
स्तप्रांशु दण्डकाष्ठं हामनस्य निवेशने स्थापितं विद्यते। तदा राजा आज-
१० हार तस्मिन्नेवैनं समुल्लम्बयत। ततो मर्दिखयस्य वधार्थं निर्म्मापिते तस्मिन्
दण्डकाष्ठे हामनस्तैरुल्लम्बयाञ्चक्रे। इत्थं नरपतेः क्रोधो निववृते।

---

## ८ अष्टमोऽध्यायः।

१ मर्दिखयस्याधिपतिं हामनेन लिखितस्य पत्रस्य मोघीकरणाय इष्टेरया प्रार्थनं ७ रिपुभिः समं योधनाय यिहूदीयान् प्रति भूपतेरनुज्ञा। १४ मर्दिखयस्योन्नत्या यिहूदीयलोकानाम् आनन्दश्च।

१ तस्मिन् दिने नरपतिरखश्वेर इष्टेरायै मध्यिष्ठे यिहूदिद्वेषिणो हाम
नस्य परिजनान् ददिवान् मर्दिखयश्च राज्ञः समीपम् उपस्थितवान् यतः
२ स तस्याः कोऽस्ति तद् इष्टेरा प्रकाशितवती। तेन राजा हामनाद्
अपहृतं निजाङ्गुरीयकम् अपाकृष्य मर्दिखयाय ददौ। अपरम् इष्टेरा
हामनस्य परिजनानां शासकत्वं मर्दिखये समर्पयामास।
३ इष्टेरा पुनर्व्वारं नरपतेः समक्षं भाषमाणा तदीयचरणयोः पतन्ती रुद-
ती चागागीयहामनस्य कुमन्त्रणाया यिहूदीयलोकानधि तदीयसङ्कल्पस्य
४ च व्यर्थीकरणं प्रार्थयाञ्चक्रे। ततो नृपेणेष्टेरां प्रति हेममये राजदण्डे प्रसा-
५ रिते सा नृपस्य सम्मुखे तिष्ठन्ती व्याजहार, यदि नृपतेरभिमतं जायेत
किञ्च मया नृपस्य दृष्टावनुग्रहः प्राप्येत यदि मम वाक्यञ्च राज्ञा गृह्येत
यदि चाहं राज्ञो रोचेय तर्हि नृपस्य निखिलदेशस्थानां यिहूदीयानां वि-
नाशार्थम् अगागीयहम्मिदाथाः सुतस्य हामनस्य सङ्कल्पाद् यानि पत्राणि
६ लिलिखिरे तेषां व्यर्थीकरणार्थम् आज्ञा लिख्यतां। यतो मम ज्ञातीन्

प्रति या विपत्ति र्घटिष्यते तस्या दर्शनम् अहं केन प्रकारेण सोढुं शक्नुयां?
निजकुटुम्बानां विनाशदर्शनं वा केन रूपेण सोढुं शक्येत मया?
तदानीं क्षितिपतिरक्ष्वेरो राज्ञीम् इष्टेरां यिहूदीयं मर्दिखयञ्च
गदितवान् पश्य मया हामनस्य परिवारा इष्टेरायै दत्ता हामनञ्च
दारुकाष्ठ उल्लम्बितः, यतो हेतोः स यिहूदीयान् प्रति हस्तार्पणं कर्त्तुम्
उद्यतवान्। अतो युवां यिहूदीयानां निमित्तं स्वेच्छानुसारेण राज्ञो नाम्ना
पत्रं लिखतं राजकीयाङ्गुरीयेण मुद्राङ्कितं कुरुतञ्च, यतो रा[illegible] नाम्ना
लिखितं नृपतेरङ्गुरीयकेण मुद्राङ्कितञ्च यत् पत्रं तत् केनापि न व्यर्थी-
कर्त्तव्यं। तदानीं तृतीयमासस्यार्थतः सीवनमासस्य त्रयोविंश दिवसे
राज्ञो लेखकेषु समाहूतेषु यिहूदीयलोकानधि मर्दिखयस्य निदेशान-
सारेण सिन्धुनदम् आरभ्य कूशदेशं यावत् सप्तविंशत्यधिकशतदेशानां
मुख्यलोकान् अध्यक्षान् प्रदेशाधिपतींश्च प्रत्येकैकस्य देशस्याक्षरैरेकैकस्या
जाते र्भाषया च यिहूदीयलोकांश्च प्रति तेषामेवाक्षरै र्भाषया च पत्राणि
लिखितानि। तानि नृपतेरक्ष्वेरस्य नाम्ना समलिख्यन्त नृपस्याङ्गुरीय- १
केण मुद्राङ्कितानि चापरं हयारोहिभिरश्विनीजाताश्वतरवाहनारोहि-
भिश्च क्षिप्रगामिभि र्दूतैस्तानि प्रेषयाञ्चक्रिरे। तत्सारो ऽयं यदेकस्मिन्ने- १
कस्मिन् अर्थतो ऽदरनामकस्य द्वादशमासस्य त्रयोदशे दिवसे नृपतेरक्ष्वे-
रस्य सर्व्वदेशानाम् एकैकस्य नगरस्य निवासिनो यिहूदीया एकत्र स- १:
म्भूय स्वप्राणरक्षार्थं समुत्थातुं किञ्च यस्या जाते र्यस्य देशस्य वा लोकास्ते
लिप्सन्तान् तेषां बालकान् योषितश्च लोकान् हन्तुं विनाशयितुं किञ्च तेषां
निखिलवस्तूनि लोठयितुं शक्ष्यन्तीति राजानुज्ञातम् अभूत्।
अपरं यिहूदीयाः स्वेषां वैरिणां प्रतीकारार्थं यत् सज्जिता भवेयुस्त- १
न्निमित्तं निखिलदेशेषु प्रचारयितव्यस्यैतस्याज्ञापत्रस्यानुलेखनं निखिल-
लोकान् प्रति प्रहितम्। अनन्तरम् अश्वतरवाहनारूढा द्रुतगामिनो १
दूता नृपस्याज्ञया त्वरितं सर्व्वत्र जग्मिवांसः। शूशने राजधान्यामपि
स आदेशः प्रकाशितो बभूव।
अनन्तरं मर्दिखयो नीलपाण्डरवर्णं राजकीयवसनं परिधाय शिरसि १
काञ्चनमयं बृहत् किरीटं दत्त्वा किञ्च सूक्ष्मरक्तवर्णवसनेन वस्त्रवान्
भूत्वा नृपतेः समीपात् जगाम तेन शूशनराजधान्यानन्देन हर्षेण च
परिपुपूरे। अपरं यिहूदीयानां दीप्त्यानन्दहर्षसम्मानानि समुदीयुः। १
किञ्च प्रतिदेशं प्रतिनगरञ्च यत्र कुत्रचित् स्थाने नृपतेरादेशः प्रचारया- १

चक्रे तत्र तत्र स्थाने यिहूदीयैरानन्दो हर्षो भोज्यम् उत्सवश्चाकारि किञ्च जनपदीयानां मध्ये बहवो मनुजा यिहूदीयानां मतं जगृहु यस्मात् ते यिहूदीयेभ्यो बिभयाम्बभूविरे।

---

## ९ नवमोऽध्यायः।

१ रिपूणां हामनस्य दशतनयानाञ्च यिहूदीयैः कोपादनं ११ द्वितीये दिने रिपूणां घातनं हामनस्य पुत्राणां दण्डकाष्ठ उल्लम्बनं २० पूरीमोत्सवस्य संस्थापननिरूपणं।

१ अपरम् अदरनामकस्य द्वादशमासस्य यस्मिन् त्रयोदशदिने नृपस्या-
ज्ञया नियमेन च सिद्धि गन्तव्या, अर्थतो यस्मिन् दिने यिहूदीयानां
वैरिणस्तेषां प्रभवितुं प्रत्यैक्षन्त तस्मिन् दिने तादृशी विपरीतघटना
२ बभूव यथा यिहूदीया एव स्वद्वेषिणां प्रबभूवुः। तदानीं राज्ञोऽहश्वे-
रस्य सर्व्वेषु देशेषु यिहूदीयाः स्वेषां हिंसाचेष्टकेषु हस्तार्पणं कर्त्तुं स्वेषां
नगरेषु स्थान् मेलयाञ्चक्रुः, ततस्तेषां सम्मुखे कोऽपि संस्थातुं न शशाक
३ यतो जनपदीयाः सर्व्वे लोकास्तेभ्यो बिभयाञ्चक्रिरे। देशस्था मुख्यलोका
अध्यक्षा अधिपतयो राजकर्म्मकारिणश्च सर्व्वे यिहूदीयान् उपचक्रुः, ते
४ मर्दिखयाद् बिभयाम्बभूविरे। यतो मर्दिखयो राजनिवेशने प्रभुत्वमनुज
आसीत तदीययशश्च सर्व्वप्रदेशान् व्यानशे तस्य मर्दिखयस्योन्नति निरन्त-
५ रम् अवर्द्धत। अनेन प्रकारेण यिहूदीयाः स्वेषां सर्व्वपरिपन्थिनां मध्ये
बहूनां खड्गाघातं संहारं विनाशञ्च चक्रुः, ते स्वेषां द्वेषिणः प्रति स्वेच्छा-
६ नुसारेणाचारं चक्रिरे। विशेषतः शूशने राजधान्यां यिहूदीयाः पञ्च-
७ शतलोकानां वधं विनाशञ्च चक्रिरे। तदानीं पर्शन्दाथो दल्फोनोऽस्पा-
थः पोरथा अदलिया अरीदाथः पर्मस्तोऽरीषयोऽरीदयो वयिषा-
थश्च यिहूदीयानां वैरिणो हम्मदाथासुतस्य हामनस्यैते दश सुतास्ते
जघ्निरे किन्तु तेषां सम्पत्तौ ते हस्तार्पणं नाकारि।

तस्मिन् दिने राजधान्यां शूशने निहतानां लोकानां संख्या राज्ञे निवेदिता। ततो राजा राज्ञीम् इष्टेरं बभाषे, राजधान्यां शूशने यिहूदीयैः पञ्चशतानि लोका हामनस्य दश पुत्राश्च हता विनष्टाश्च। न जानेऽहं नृपतेरन्यदेशेषु तैः किमकारि? इदानीं त्वया प्रार्थितं किं? तत् तुभ्यं दायिष्यते; तवापरा का वाञ्छा? सा सेत्स्यति। इष्टेरा प्रतिबभाषे, यदि राज्ञोऽभिमतं जायेत तर्ह्यद्यतननियमं श्वोऽप्याचरितुं शूश-

तस्मात् यिहूदीयान् प्रत्यनुज्ञा भवतु किञ्च हामनस्य दश सुता दण्डकाष्ठ
उल्लम्ब्यन्तां। अनन्तरं राजा तत् कर्त्तुम् आदिदेश, ततः साज्ञा शूशने १४
प्रचारिता हामनस्य दश तनयाश्चोल्लम्बिताः। अपरं शूशनस्था यिहूदीया १५
अदरमासस्य चतुर्दशदिनेऽपि मिलित्वा शूशने त्रीणि शतानि लोकान्
अवधिषुः किन्तु तेषां सम्पत्तौ हस्तार्पणं न चक्रिरे। एतस्मिन् समये १६
नृपतेरन्येषु देशेषु ये ये यिहूदीया आसन् ते समागत्य प्राणरक्षार्थं सम-
तिष्ठन्त तत्र ते परिपन्थिनां प्रतीकारं कृत्वा वैरिणां पञ्चसप्ततिसहस्राणि
लोकान् व्यापादयामासुः परन्तु तेषां सम्पत्तौ हस्तार्पणं न चक्रिरे। मा- १७
सस्यादरस्य त्रयोदशदिने ते तत् कर्म्म चक्रुः, किञ्च चतुर्दशदिने विश्रम्य तत्
भोज्यस्योत्सवस्य च दिनं विदधिरे। परन्तु शूशनस्था यिहूदीयास्तस्य १८
मासस्य त्रयोदशे दिने चतुर्दशे दिने च मिलिताः किञ्च पञ्चदशे दिवसे
विश्रम्य तदेव भोज्यस्योत्सवस्य च दिनं चक्रिरे। एतत्कारणाद् निष्प्रा- १९
काराणां नगराणां निवासिनो यिहूदीया अदरमासस्य चतुर्दशं दिनम्
उत्सवस्य भोज्यस्य मङ्गलस्य परस्परम् अंशप्रेषणस्य च दिनं कुर्व्वन्ति।

अपरं नृपतेरहश्वेरस्य निखिलदेशेषु निकटस्था दूरस्थाश्च ये यिहू- २०
दीया निवसन्ति तेषां समीपं मर्दिखय एतान् वृत्तान्तान् लिखित्वा पत्रैः
प्रेषयाञ्चकार। अपरं यिहूदीया ययोरुभयो र्दिनयोः स्वेषां वैरिभ्यो २१
विश्रामं चकृवांसः किञ्च यस्मिन्मासे तेषां दुःखं सुखं बभूव शोक उत्सवो
बभूव च तस्य मासस्य ते द्वे दिने भोज्यस्यानन्दस्य परस्परम् अंशप्रेषणस्य २२
दरिद्रेभ्यो वितरणस्य च दिने भविष्यतः, अर्थतः प्रतिवत्सरम् अदर-
मासस्य चतुर्दशदिनं पञ्चदशदिनञ्च तैः पालयिष्येते एतत् तैः पत्रै निरू-
पयाञ्चक्रे। ततो यिहूदीया या[illegible]ग् आरब्धवन्तो मर्दिखयश्च तान् प्रति २३
यादृगलिखत् ते तादृगाचरितुं मतिम् अकुर्व्वन्। सर्व्वेषां यिहूदीयानां २४
रिपुर्हम्मिदाथास्तनयोऽगागीयो हामनस्तान् व्यापादयितुं मतिं विधाय
तेषां विपदर्थं क्षयविनाशार्थञ्च पूरम् अर्थतो गुटिकापातं कृतवान्।
परन्त्विष्टेरायां राज्ञः समक्षम् आगतवत्यां स इदम् आज्ञापत्रं ददिवान् २५
हामनो यिहूदीयानां विरुद्धं यम् अमङ्गलस्य सङ्कल्पं कृतवान् स तस्मि-
न्नेव वर्त्ततां स तस्य पुत्राश्च दण्डकाष्ठ उल्लम्ब्यन्तामिति। अतः पूरोमस्या- २६
र्थतो गुटिकापातस्य नामतस्तस्य दिवसस्य नाम पूरीमं बभूव किञ्च तस्य
पत्रस्य कृत्स्नवचसां कृते तथा ते तदधि यद् दृष्टवन्तस्तान् प्रति यद् अघटत
चैतेषां कृते यिहूदीया लिखितनिदेशानुसारेण निरूपितसमयानुसारेण २७

च स्वेषां निमित्तं स्वकीयभाविवंशानां निमित्तं स्वकीयमतावलम्बिनाञ्च निमित्तं प्रतिवत्सरं तद् दिनद्वयं पालयितुं केनापि प्रकारेण तत्र
२८ विहातुं निरूपयाञ्चक्रिरे। अपरं निखिलपुरुषपरम्परायां प्रतिवंशं प्रतिदेशं प्रतिनगरञ्च ते उभे दिने स्मर्त्तव्ये पालयितव्ये च किञ्च तत् पूरी-मपर्व्व यिहूदीयानां मध्ये कदापि लुप्तं न भविष्यति तेषां वंशस्य मध्ये तयोः स्मरणस्य लोपो न भविष्यति।
२९ अबीहयिलस्य तनूजा राज्ञीष्टेरा यिहूदीयो मर्दिखयश्च पूरीमदिन-
३० मधि द्वितीयमिदं निदेशपत्रं स्थिरीकर्त्तुं सर्व्वपराक्रमेण लिलिखतुः। यिहू-दीयो मर्दिखय इष्टेरा राज्ञी च यं निदेशम् अकुरुतां यिहूदीयलोकाश्च स्वेषां निजभाविवंशस्य च निमित्तम् उपवासप्रार्थने अधि यं नियमं
३१ अकुर्व्वन् तदनुसारतो निरूपिते काले तत्पूरीमदिनस्य पालनार्थं न्यपते-रहश्वेरस्य राज्यस्य सप्तविंशत्यधिकशतदेशेषु सर्व्वेषां यिहूदीयानां समीपं
३२ शान्तिकरैः सत्यैश्च वाक्यैः पत्राणि प्रहितानि। इत्थम् इष्टेराया आज्ञया पूरीमदिनस्य कर्त्तव्यं निश्चितं पुस्तके लिखितञ्च।

---

# १० दशमोऽध्यायः।

इपतेरहश्वेरस्य महिम्नो मर्दिखयस्योन्नतेश्च कथनं।

१ स न्यपतिरहश्वेरो भूमण्डलस्य जलधेरुपद्वीपानाञ्च लोकान् राजस्व-
२ शाय्यं कर्त्तुम् आदिदेश। तस्य पराक्रमस्य प्रभावस्य च सर्व्वाः कथाः किञ्च राज्ञो दानात् मर्दिखयेन लब्धस्य महिम्नो विवृति र्मादियापारसदेश-
३ यो र्नृपाणां पुरावृत्तपुस्तके लिखिताः किं न विद्यन्ते? एष यिहूदीयम-र्दिखयो न्यपतेरहश्वेरस्य प्रधानमन्त्री भूत्वा यिहूदीयानां मध्ये प्रमुखः स्वभ्रातृनिवहस्य मध्ये ग्राह्यः स्वजातीयानां हितैषी स्वीयसर्व्ववंशान् प्रति मङ्गलवाक्यवादी च बभूव॥

इन्द्रियं नयनं वह्निस्वर्णादिर्विषयोमतः ।
अपाकजोऽनुष्णाशीतः स्पर्शस्तु पवने मतः ॥४२॥
तिर्य्यग्गमनवानेष ज्ञेयः स्पर्शादिलिङ्गकः ।
पूर्ववन्नित्यतायुक्तं देहव्यापि त्वगिन्द्रियम् ॥४३॥
प्राणादिस्तु महावायुपर्य्यन्तोविषयोमतः ।
आकाशस्य तु विज्ञेयः शब्दोवैशेषिकोगुणः ॥४४॥
इन्द्रियन्तु भवेत् श्रोत्रमेकः सन्नप्युपाधितः ।
जन्यानां जनकः कालोजगतामाश्रयोमतः ॥४५॥
परापरत्वधीहेतुः क्षणादिः स्यादुपाधितः ।
दूरान्तिकादिधीहेतुरेका नित्यादिगुच्यते ॥४६॥
उपाधिभेदादेकापि प्राच्यादिव्यपदेशभाक् ।
आत्मेन्द्रियाद्यधिष्ठाता करणं हि सकर्तृकम् ॥४७॥
शरीरस्य न चैतन्यं मृतेषु व्यभिचारतः ।
तथात्वञ्चेदिन्द्रियाणामुपघाते कथं स्मृतिः ॥४८॥
मनोऽपि न तथा ज्ञानाद्यनध्यक्षं तदा भवेत् ।
धर्माधर्माश्रयोऽध्यक्षोविशेषगुणयोगतः ॥४९॥
प्रवृत्त्याद्यनुमेयोऽयं रथगत्येव सारथिः ।
अहङ्कारस्याश्रयोऽयं मनोमात्रस्य गोचरः ॥५०॥
विभुर्बुद्ध्यादिगुणवान् बुद्धिस्तु द्विविधा मता ।
अनुभूतिः स्मृतिश्च स्यादनुभूतिश्चतुर्विधा ॥५१॥
प्रत्यक्षमप्यनुमितिस्तथोपमितिशब्दजे ।
घ्राणजादिप्रभेदेन प्रत्यक्षं षड्विधं मतम् ॥५२॥

घ्राणस्य गोचरो गन्धो गन्धत्वादिरपि स्मृतः।
तथा रसो रसज्ञायास्तथा शब्दोऽपि च श्रुतेः॥५३॥
उद्भूतरूपं नयनस्य गोचरो द्रव्याणि तद्वन्ति पृथक्त्वसंख्ये।
विभागसंयोगपरापरत्वस्नेहद्रवत्वं परिमाणयुक्तम्॥५४॥
क्रियां जातिं योग्यवृत्तिं समवायञ्च तादृशम्।
गृह्णाति चक्षुः संयोगादालोकोद्भूतरूपयोः॥५५॥
उद्भूतस्पर्शवद्द्रव्यं गोचरः सोऽपि च त्वचः।
रूपान्यच्चक्षुषो योग्यं रूपमत्रापि कारणम्॥५६॥
द्रव्याध्यक्षे त्वचो योगो मनसा ज्ञानकारणम्।
मनोग्राह्यं सुखं दुःखमिच्छा द्वेषो मतिः कृतिः॥५७॥
ज्ञानं यन्निर्विकल्पाख्यं तदतीन्द्रियमिष्यते।
महत्त्वं षड्विधे हेतुरिन्द्रियं करणं मतम्॥५८॥
विषयेन्द्रियसम्बन्धो व्यापारः सोऽपि षड्विधः।
द्रव्यग्रहस्तु संयोगात् संयुक्तसमवायतः॥५९॥
द्रव्येषु समवेतानां तथा तत्समवायतः।
तत्रापि समवेतानां शब्दस्य समवायतः॥६०॥
तद्वृत्तीनां समवेतसमवायेन तु ग्रहः।
विशेषणतया तद्वदभावानां ग्रहो भवेत्॥६१॥
यदि स्यादुपलभ्येतेत्येवं यत्र प्रसज्यते।
प्रत्यक्षं समवायस्य विशेषणतया भवेत्॥६२॥
अलौकिकः सन्निकर्षस्त्रिविधः परिकीर्त्तितः।
सामान्यलक्षणा ज्ञानलक्षणा योगजस्तथा॥६३॥

स्पर्शादयोऽष्टौ वेगश्च गुरुत्वञ्च द्रव्यत्वकम्।
रूपं रसस्तथा स्नेहोवारिण्येते चतुर्दश ॥३१॥
स्नेहहीनागन्धयुताः क्षितावेते चतुर्दश।
बुद्ध्यादिषट्कं संख्यादिपञ्चकं भावनातथा ॥३२॥
धर्म्माधर्म्मौ गुणाएते आत्मनः स्युश्चतुर्दश।
संख्यादिपञ्चकं कालदिशोः शब्दश्च ते च खे ॥३३॥
संख्यादयः पञ्च बुद्धिरिच्छा यत्नोऽपि चेश्वरे।
परापरत्वं संख्याद्याः पञ्च वेगश्च मानसे ॥३४॥
तत्र क्षितिर्गन्धहेतुर्नानारूपवती मता।
षड्विधस्तु रसस्तत्र गन्धस्तु द्विविधो मतः ॥३५॥
स्पर्शस्तस्यास्तु विज्ञेयो ह्यनुष्णाशीतपाकजः।
नित्यानित्या च साद्वेधा नित्या स्यादणुलक्षणा ॥३६॥
अनित्या तु तदन्या स्यात् सैवावयवयोगिनी।
सा च त्रिधा भवेद्देहमिन्द्रियं विषयस्तथा ॥३७॥
योनिजादि भवेद्देहमिन्द्रियं घ्राणलक्षणम्।
विषयोद्व्यणुकादिश्च ब्रह्माण्डान्तउदाहृतः ॥३८॥
वर्णः शुक्लोरसस्पर्शौ जले मधुरशीतलौ।
स्नेहस्तत्र द्रवत्वन्तु सांसिद्धिकमुदाहृतम् ॥३९॥
नित्यतादिप्रथमवत् किन्तु देहमयोनिजम्।
इन्द्रियं रसनं सिन्धुर्हिमादिर्विषयो मतः ॥४०॥
स्पर्शउष्णस्तेजसस्तु स्याद्रूपं शुक्लभास्वरम्।
नैमित्तिकं द्रवत्वन्तु नित्यतादि च पूर्व्ववत् ॥४१॥

कं प्रति पूर्व्ववर्त्तितामपरिज्ञाय न यस्य गृह्यते ।
तिरिक्तमथापि यद्भवेन्नियतावश्यकपूर्व्वभाविनः ॥२०
ते पञ्चान्यथासिद्धा दण्डत्वादिकमादिमम् ।
दादौ दण्डरूपादि द्वितीयमपि दर्शितम् ॥२१॥
तीयन्तु भवेद्व्योम कुलालजनकोऽपरः ।
ञ्चमो रासभादिः स्यादेतेष्वावश्यकस्त्वसौ ॥२२॥
समवायिकारणत्वं द्रव्यस्यैवेति विज्ञेयम् ।
गुणकर्म्ममात्रवृत्ति ज्ञेयमथाप्यसमवायिहेतुत्वम् ॥२३॥
अन्यत्र नित्यद्रव्येभ्य आश्रितत्वमिहोच्यते ।
क्षित्यादीनां नवानान्तु द्रव्यत्वगुणयोगिता ॥२४॥
क्षितिर्जलं तथा तेजः पवनो मन एव च ।
परापरत्वमूर्त्तत्वक्रियावेगाश्रया अमी ॥२५॥
कालखात्मदिशां सर्व्वगतत्वं परमं महत् ।
क्षित्यादिपञ्च भूतानि चत्वारि स्पर्शवन्ति हि ॥२६॥
द्रव्यारम्भश्चतुर्षु स्यादथाकाशशरीरिणाम् ।
अव्याप्यवृत्तिः क्षणिको विशेषगुण इष्यते ॥२७॥
रूपद्रवत्वप्रत्यक्षयोगि स्यात्प्रथमस्त्रिकम् ।
गुरुणी द्वे रसवती द्वयोर्नैमित्तिको द्रवः ॥२८॥
आत्मानो भूतवर्गाश्च विशेषगुणयोगिनः ।
यदुक्तं यस्य साधर्म्यं वैधर्म्यमितरस्य तत् ॥२९॥
स्पर्शादयोऽष्टौ वेगाख्यसंस्कारो मरुतो गुणाः ।
अष्टौ स्पर्शादयो रूपं द्रवो वेगश्च तेजसि ॥३०॥

एतद्दिग्गजत्रयात्रासमसमरभरं पश्यतः कस्य नासीत्
सतन्नासीरवाजिव्रजखुरजरजोराजिराजिस्थलीषु ॥ ७२ ॥
क्षीरोदन्वदपः प्रमथ्य मथितादेशेऽमरैर्निर्म्मिते
स्वाक्रम्यं द्युजनस्तदस्य यशसः क्षीरोदसिंहासनं।

अत एव सवदस्रुणो वाऽसुंदृदंशा अरिसङ्घा अथ च तद्रूपा वेणवस्त एव सार्द्राणीन्धनानि दारुकाष्ठानि यस्यैवंभूत एतस्य दोष्णोर्बाह्वोरुद्दामप्रतापस्तीव्रप्रतापः स एव ज्वलन्दीप्य-मानोऽनलः तस्य मिलन् सम्भवन् धूमो बाहुल्यं यस्यैवंभूतो बहु-तरो धूमस्तस्य भ्रमाय सादृश्यादधूमेऽपि रजसि धूम इति बुद्धये नासीदपि तु सर्व्वस्यापि। आर्द्रवेणुरूपेन्धनं दहतो वह्ने-र्भूयान् धूमो भवति। सर्व्वेऽप्यरय एतत्प्रातापवह्निना दग्धाः। अश्वपतिश्चायमिति भावः। सार्द्रमित्यार्द्रपर्य्यायः। मिलद्भूम-भूमेति पाठे मिलतो धूमस्य बाहुल्यं तद्भ्रमायेत्यर्थः ॥ ७२ ॥

क्षीरेति। केषां जगतां भुवनानां सम्बन्धिना जनेनास्य राज्ञो यशसोऽभिषेक एवात्मतो नाजनि नाकारि अपि तु स्वर्गा-दिस्थितेन सर्व्वेणापि लोकेनैतदीययशसोऽभिषेकः कृतः। विशे-षेणाधिष्ठानमाह। किंभूतस्य यशसः। क्षीरोदन्वदपः क्षीरो-दन्वान् क्षीरसमुद्रस्तस्यापो जलानि दुग्धरूपाणि प्रमथ्य मन्द-रान्वलेन कृत्वा प्रकर्षेण विलोड्यामरैर्मथनक्रियायोगान्मथित-मिति आदेशे सञ्ज्ञायां निर्मिते कृतायां अथ च निर्जलं मन्थ-मथितं दधि मथितमित्युच्यते। ततश्च क्षीरस्यापि मथनक्रिया-

केषां नाजनि वा जनेन जगतामेतत्कवित्वामृत-
स्रोतःप्रीतपिपासुकर्णकलशीभाजाभिषेकोत्सवः ॥ ७४ ॥

योगाद्रत्नैर्भुवन्माथितरूपे आदेशे निर्मिते सति जले स्थित्य-
सम्भवत्क्षीरोदन्वदुदके दुग्धरूपे अतिघने कृते सतीत्यर्थः ।
क्षीरोदरूपं सिंहासनं शुभ्रवस्तुसाम्यापेक्षया तस्यातिशुभ्रत्वा-
द्रुद्रं यद्भद्रपीठं तत्सुखेनाक्रम्य च सुखेन आयासरहितं यथा
तथा आक्रम्यमुपवेशनयोग्यं सृजतः कुर्वतः क्षीरोदपदमधि-
तिष्ठत इत्यर्थः । किंभूतेन जनेन । एतद्रचितं कवित्वं एतत्स-
म्बन्धिकविभिर्निर्मितं कीर्त्तिवर्णनरूपं कवित्वं तदेव स्वादुतर-
त्वादमृतं तस्य स्रोतसि प्रवाहे प्रीतौ स्फूतौ भृतौ सादरमा-
कर्णनेच्छू अथ च जलभरणेच्छू कर्णाविव कलशौ महान्तौ
कलशौ भाजा भजता । लोके हि कस्मिंश्चिद्राजनि केनचिन्म-
थिते तदीयं सिंहासनमधिष्ठितोऽन्यस्य केनचिद्वारिपूर्णेन कलशे-
नाभिषेकः क्रियते । घनीरूपतया उपवेशनयोग्यतां सूचयितुं
मथितादेशे कृते सतीत्युक्तं । जलोपरि उपवेशनासम्भवात् । क्षी-
रोदादपि विमलतरं महीयश्चैतद्यशो वैदेशिकैर्लोकत्रयसञ्चारि
कृतमिति भावः । तक्रं स्युदश्विन्मथितं पादाम्ब्वर्धाम्बु निर्जल-
मित्यमरः । क्षीरोदन्वदपः । उदन्वानुदधौ चेति (पा० ८ । २ ।
१३) साधुः । ऋक्पूरब्धित्यप्रत्ययः (पा० ५ । ४ । ७४) ।
आक्रम्यं । पोरदुपधादिति यत् (पा० । ३ । १ । ९८) ।
अजनि । कर्मणि चिण् (पा० ३ । १ । ६६) ॥ ७४ ॥

समिति पतिनिपाताकर्णनद्रागदीर्ण-
प्रतिनृपतिमृगाक्षीलक्षवक्षःशिलासु ।
लिखितलिपिरिवोरस्ताडनव्यस्तहस्त-
प्रखरनखरटङ्कैरस्य कीर्त्तिप्रशस्तिः ॥ ७५ ॥
विधाय ताम्बूलपुटीं कराङ्कगां
बभाण ताम्बूलकरङ्कवाहिनी ।

समितीति । अस्य राज्ञः कीर्त्तिप्रशस्तिर्वर्णनपङ्क्तिः समिति सङ्ग्रामे पतीनां निपातो मरणं तस्याकर्णनेन द्राक् शीघ्रं अदीर्णानि प्रतिनृपतिमृगाक्षीणां लक्षस्य वक्षांसि तान्येव तत्-क्षणमेवाविदीर्णत्वाच्छिलास्तासु शोकवशादुरस्ताडने व्यस्तयो-र्दृढनिवेशितयोर्हस्तयोः प्रखरा अतितीक्ष्णा नखरा नखा एव टङ्काः पाषाणदारणलौहविकारास्तैरचितलिपिरिव रचित-लेखनेवासीति शेषः । अन्यस्यापि कीर्त्तिप्रशस्तिः शिलासु टङ्किकाभिरुत्कीर्य्य लिख्यते । सर्व्वेऽप्यरयोऽनेन हतास्तचाश्चर्य्य-शोकवशादुरस्ताडनं कुर्व्वन्ति अतिशूरत्वादस्य कीर्त्तिर्भवती-त्यर्थः । दृढशोकेऽप्यदीर्णत्वाच्छिलात्वं । शोकातुरस्योरस्ताडनं जातिः । टङ्कः पाषाणदारण इत्यमरः । समिदाजौसमितषु चेति ॥ ७५ ॥

विधायेति । ताम्बूलस्य करङ्कः सुवर्णादिरचितसंपाया-कारं ताम्बूलधारणपात्रं पटीति लोके तस्य वाहिनी धारिणी काचित् सखी दमस्वसुर्भावं तद्दर्शननिषेधरूपं अवेत्य ज्ञात्वा

दमस्वसुर्भावमवेत्य भारती
नयाऽनया वक्त्रपरिश्रमं शमं ॥ ७६ ॥
समुन्मुखीकृत्य बभार भारती
रतीशकल्पेऽन्यनृपे निजं भुजं।
ततस्तमसद्दालपृषद्विलोचनां
शशंस संसज्जनरञ्जनीं जनीं ॥ ७७ ॥

भारतीं इति बभाण। किं कृत्वा। ताम्बूलपुटीं पूगीफलचूर्णख-दिरपर्णानि यत्रैकत्र क्रियन्ते। यां मध्यदेशभाषया गुलविडेति व्यवहरन्ति। तां देव्यै दातुं कराङ्कगां स्वीयकरतलमध्यगतां वा कृत्वा करङ्कं गृहीत्वेत्यर्थः। इति किं। हे देवि त्वं अनया वीटिकया एतदीयबहुवर्णनजनितं वक्त्रस्य सकलं परिश्रमं शमं नय बहुवर्णनजनितं शोषं शान्तिं प्रापयेति। एतत्स्तुते-र्विरमेत्यर्थः। अन्योऽपि शुष्कमुखो वीटिकया श्रमं शमं नयति॥ ७६ ॥

समिति। भारती रतीशकल्पे कामतुल्येऽन्यनृपे निजं भुजं बाहुं सम्यग् उन्मुखीकृत्य बभार भैम्यै तं दर्शयितुं तदभिमुखं चकार। ततः अनन्तरं असद्दालपृषद्विलोचनां भीतबालह-रिणनेत्रां संसज्जनानां सभ्यानां रञ्जनीं अनुरागजनिकां जनीं वरार्थिनीं तां भैमीं शशंस अभाणीत्। रतीशतुल्य इति च पाठः। रञ्जनीं। नृगरमणाभावान्नलोपाभावः(पा॰ ६। ४। २४। सू॰ २ वार्त्तिके।) ॥ ७७॥

अयं गुणौघैरनुरज्यदुत्कलो
भवन्मुखालोकरसोत्कलोचनः ।
स्पृशन्तु रूपामृतवापि नन्वमुं
तवापि दृक्तारतरङ्गभङ्गयः ॥ ७८ ॥
अनेन सर्व्वार्थिकृतार्थनाकृता
ऽऽहृतार्थिनौ कामगवीसुरद्रुमौ ।

अयमिति । हे भैमि गुणौघैः सौन्दर्य्यादिगुणसङ्घैः अनुरज्यन्तोऽनुरक्ता भवन्तः उत्कला लक्षणया तद्देशनिवासिनो लोका यत्र । अथ च गुणौघैरनुरज्यन्त उत्कृष्टाश्चतुःषष्टिःकला यत्र तैरुपलक्षितोऽयं नृपः । यस्मात् भवन्मुखालोके रसेनानुरागेणोत्कलोचन उत्कण्ठितनेत्रोऽस्तीति शेषः । तस्मान्नन्वमुं हे रूपामृतवापि सौन्दर्य्यामृतदीर्घिके सुन्दरि तवापि दृशास्तारा उज्ज्वला विशाला वा चञ्चला वा तरङ्गाः पुनर्व्यापाररूपाः कल्लोलास्तेषां भङ्गयः प्रकारविशेषा अमुं स्पृशन्तु । अयं त्वां पश्यति त्वमप्येनं कटाक्षैः पश्य योग्यत्वादिति भावः । अनुरज्यदुत्कल इत्यनेन जनानुरञ्जनात् सम्पदाधिक्यं सूचितं । अन्यस्यामपि जलवाप्यां चञ्चलतरङ्गभङ्गयो भवन्ति । अनुरज्यदिति । श्यनो ङित्वान्नलोपः (पा० १ । ४ । २४) ॥ ७८ ॥

अनेनेति । कामगवीसुरद्रुमौ कामधेनुकल्पवृक्षौ मिथः अन्योन्यं क्रमेण पयःसेचनपल्लवाशने दुग्धसेचनपत्रभोजने प्रदाय प्रकर्षेण दत्वा दानस्य व्यसनं अतिशये प्रत्यक्षमवश्यकरणीय-

मिथःपयःसेचनपल्लवाशने
प्रदाय दानव्यसनं समाप्नुतः ॥ ७९ ॥
नृपः कराभ्यामुदतोलयन्निजे
नृपानयं यान् पततः पदद्वये ।
तदीयचूडाकुरुविन्दरश्मिभिः
स्फुटेयमेतत्करपादरञ्जना ॥ ८० ॥
यत् कस्यामपि भानुमान्न ककुभि स्थेमानमालम्बते
जातं यद्वनकाननैकशरणप्राप्तेन दावाग्निना ।

तया प्राप्तस्यायहं समाप्नुतः समाप्तिं नयतः। कस्मादित्यत आह। किम्भूतौ। सर्व्वार्थिनां सर्व्वयाचकानां अभीष्टदानात् या कृतार्थता जन्मसाफल्यलक्षणं कृतार्थत्वं तां करोत्येवंभूतः कृत् तेनानेनातिदानात् सम्प्रत्याहृता आनीता अर्थिनो याचका ययोस्तौ। अर्थ्यन्तराभावात् कामगव्या कल्पवृक्षस्य दुग्धमेकः कृतस्तेन च पल्लवा भक्षयितुं तस्यै दत्ता इत्यर्थः। दानशूरोऽयमिति भावः॥ ७९ ॥

नृपेति। अयं नृपः निजे पदद्वये प्रणामवशात् पततः नम्रान् यान् नृपान् कराभ्यां कृपया शिरसि धृत्वा उदतोलयत् उत्थापयामास। तदीया राजकीया याश्चूडामुकुटास्तासां कुरुविन्दरश्मिभिःमाणिक्यशोणशोभाभिः कृतेयमेतस्य करपादयोः रञ्जना रक्तिमा स्फुटा दृश्यत इति शेषः॥ ८० ॥

यदिति। भानुमान् सूर्य्यः कस्यामपि ककुभि दिशि स्थेमानं

एषैतद्भुजतेजसा विजितयोस्तावत्तयोरौचिती
धिक्तं वाडवमम्भसि द्विषि भिया येन प्रविष्टं पुनः॥ ८१॥

स्थिरत्वं यत् नालम्बते अङ्गीकरोति किन्तु सर्व्वदा परिभ्रमत्येव। दावाग्निना वनवह्निना च घनं अतिगहनं काननं तमवनं एकं केवलं शरणं रक्षितारं प्राप्तेन तदेकाश्रयेन यज्जातं। एतस्य भुजतेजसा विशेषेण जितयोस्तयोः सूर्य्यदावानलयोस्तावन्निश्चितं एषा औचिती युक्तकारितरता। भीतस्य व्याकुलता वनाश्रयणञ्च युक्तं इत्यर्थः। मानी हि जितः सन् लज्जया मुखमदर्शयन् पुनर्दर्शनभयेनैकस्मिन्देशे वासं त्यक्त्वा सर्व्वत्र परिभ्रमति सर्व्वथाऽन्यस्य प्रवेष्टुमशक्यं घनं गहनं वाविशति। ताभ्यां युक्तमेव कृतमित्यर्थः। तं वाडवं वडवानलं पुनर्धिक् येनास्य भिया द्विषि सहजशत्रौ अम्भसि समुद्रजले प्रविष्टं निमग्नं। मानी हि पराजितोऽपि वैरिणः शरणं नैति अयन्तु गत इति अभिमानित्वाभावान्निन्द्य एवेत्यर्थः। अथ च वाडवो ब्राह्मणः। ततश्च ब्राह्मणत्वाच्छत्रावपि भयेन प्रवेशो युक्तः। शत्रुणा च तस्य रक्षणं युक्तं इति च सूचितं। सूर्य्यादेरप्येतदीयं तेजोऽधिकतरमिति भावः। स्थेमानमिति। स्थिरशब्दाद्भावे पृथ्व्यादित्वादिमनिचि (पा॰ ५।१।१२२) प्रियस्थिरेति। स्थादेशः (पा॰ ६।४।१५७)। शरणं प्राप्तेन। द्वितीयाश्रितेति समासः (पा॰ २।१।२४)॥ ८१॥

अमुष्योर्वीभर्त्तुः प्रसृमरचमूसिन्धुरभवै-
र्वमि प्रारब्धे वमथुभिरवश्यायसमये।
न कम्पन्तामन्तः प्रतिनृपभटा म्लायतु न तद्-
वधूवक्त्राम्भोजं भवतु न स तेषां कुदिवसः॥ ८२॥

अमुष्येति। अमुष्योर्व्वीभर्त्तुर्रणसंरम्भात् प्रसृमराः प्रसरण-शीलाश्चमूसिन्धुराः सेनागजास्तेभ्यो भवैः समुत्पन्नैर्वमथुभिः करिकराग्रजातैर्मदजलविन्दुभिर्जलविन्दुभिर्वा अवश्यायसमये नीहारकाले हिमर्त्तौ प्रारब्धे निर्म्मिते सति प्रतिनृपभटा वीरा अपि रिपुनृपा अन्तस्तन्मध्ये स्वीयमनसि वा न कम्पन्तां अपि त्वस्माद्भयेन युक्त एव कम्पस्तेषां। तथा तेषां रिपूणां वध्वो रमण्यस्तासां वक्त्राम्भोजं न म्लायतु अपि तु भाविनः प्राणेशव-धस्य निश्चितत्वात् तासां मुखस्य म्लानिरुचितैव। तथा स प्रसिद्धो रणसमरस्तेषां वैरिणां तत्स्त्रीणां च कुत्सितो दिवसोऽशुभरूपो वासरो न भवत्वपि तु भवत्येव। वधनिश्चयाद्वैरिणां तत्स्त्रीणाञ्च शोकवशादित्यहमवैमि। हिमर्त्तौ शरीरकम्पः कमलम्लानि-र्दुर्द्दिनञ्च भवति। क्रूरतरोऽयं गजपतिरिति भावः। सिन्धुर-भरैरिति पाठे जगसङ्घैः कर्तृभिः वमथुभिः करणैरिति व्याख्येयं। वमथुः करिसीकरः। अवश्यायस्तु नीहार इत्यमरः। प्रसृम-रेति। सृघस्यद इति क्मरच् (पा० ३।२।१६०।) अवश्या-येति। श्याद्व्यधेति णः (पा० ३।१।१४१)। तेषां। पुमान् स्त्रियेत्येकशेषः (पा० १।२।६७।)॥ ८२॥

आत्मन्यस्य समुच्चितीकृतगुणस्याहोतरामौचिती
यद्गात्रान्तरवर्जनादजनयद्भूजानिरेषं द्विषां ।
भूयोऽहंक्रियते स्म येन च हृदा स्कन्धो न यन्नानमत्
तन्मर्म्माणि दलं दलं समिदनंकर्म्मीणबाणव्रजः ॥ ८३ ॥
दूरं गौरगुणैरहंकृतिभृता जैत्राङ्ककारे चर-
त्येतद्दोर्यशसि प्रयाति कुमुदं बिभ्यन्न निद्रां निशि ।

आत्मनीति। आत्मनि स्वीये स्वरूपे समुच्चितीकृतगुणस्य मेलितसौन्दर्य्यादिसर्व्वगुणस्यास्य राज्ञः अहोतरामतिशयेनौचितीयं। यत एष भूजानिर्भूपतिर्द्विषां गात्रान्तराणां हृत्स्कन्धेतराणां वर्जनात् अवयवान्तरं परित्यज्येत्यर्थः। येन च हृदा भूयः पुनः पुनरतितरां अहंक्रियते स्म अहङ्कारिणा जातमित्यर्थः। यश्च स्कन्धः नानमत् नम्रो न भूतः तस्येव स्कन्धस्य मर्म्माणि अतिमृदूनि जीवस्थानानि दलं दलं खण्डं खण्डं अजनयत् चकार नान्येषां। किंभूतः। समिति सङ्ग्रामे अलङ्कर्म्मीणो अलङ्कर्म्मीणोऽरिमारणसमर्थः बाणव्रजो यस्य। अपराधो हि राज्ञा दण्ड्यः। तत्स्कन्धस्यैवापराधो नान्येषां तस्यैव दण्डं कृतवानन्येषामित्यतितरामस्यौचितीत्यर्थः। अयञ्च सगुणः सदर्पानसमांश्च मारयति शरणागतांस्तु रक्षतीति भावः। कर्म्मक्षमोऽलङ्कर्म्मीण इत्यमरः। अलङ्कर्म्मेण, पर्य्यादयो ग्लानाद्यर्थे चतुर्थ्येति समासे (पा० २।२।१८ सू० १वा०) अलङ्कर्म्मशब्दात्स्वार्थे, अषडक्षाशितंग्वलङ्कर्म्मेति खः (पा० ५।४।७।) ॥ ८३ ॥

दूरमिति। गौरगुणैः धवलवर्णैः कृत्वा दूरं भृशं अहंकृति-

धम्मिल्ले तव मल्लिकासुमनसां माल्यं भिया लीयते
पीयूषस्रवकैतवाद्धृतदरः शीतद्युतिः स्विद्यति ॥ ८४ ॥
एतद्गन्धगजस्तृषाम्भसि भृशं कण्ठान्तमज्जत्तनुः
फेनैः पाण्डुरितः स्वदिक्करिजयक्रीडायशःस्पर्द्धिभि ।

सतां अहङ्कारवतां वस्तूनां जैत्रञ्च तदहङ्कारि च तस्मिन् जयाहङ्कारिणि एतद्वीर्यशसि एतस्य बाहुयशसि सकलेषु जगत्सु चरति प्रसरति सति अथ च स्वप्रतिमल्लगवेषणाय भुवनं परिभ्रमति सति बिभ्यत् भीतं कुमुदं निशि निद्रां स्वप्नमथ च सङ्कोचं न प्रयाति। तथा मल्लिकासुमनसां माल्यं माला अस्माद्भिया तव धम्मिल्ले केशपाशे ग्रन्थनविशेषे लीयते आत्मानं गोपायति। अथ वा अदृश्यं तिष्ठति। तथा शीतद्युतिश्चन्द्रो धृतदरः प्राप्तभयः सन् पीयूषस्रवकैतवादमृतस्रवणव्याजात् स्विद्यति स्वेदं मुञ्चति। अथ च हिमकणान् मुञ्चति। एकयोद्धा अहङ्कार इति वा। कुमुदादिभ्योऽप्यधिकं धवलमेतदीयं यश इति भावः। वहिर्न धारयेन्माल्यमिति केशान्तर्गतमाल्यधारणात्स्त्रियाः सदाचारत्वं सूचितं ॥ ८४ ॥

एतदिति। एतस्य गन्धगजः यः सप्तसु स्थानेषु स्रवति स गन्धगजः। स्वदानमलमूत्रादिगन्धेन जितान्यकरी। विरोधिकरिगन्धमसहमान इति वा गन्धगजः। कराम्भोवमिव्याजात् शुण्डदण्डापेण मुखधृतगण्डूषजलवमनमिषात् अम्बुधेः समुद्रस्याभ्रमुनाम्न्याः करिण्या वल्लभस्यैरावणस्य विरहं पुत्रवियोगजनितं

दन्तद्वन्द्वजलानुबिम्बनचतुर्दन्तः कराम्भोवमि-
व्याजादभ्रमुवल्लभेन विरचं निर्वापयत्यम्बुधेः ॥ ८५ ॥
अथैतदुर्व्वीपतिवर्णनाद्भुतं
न्यमीलदास्वादयितुं हृदीव सा।

शोकं निर्वापयति शमयति। किंभूतः। भृशं नितरां तृषा पिपासया सफनत्वात्क्षीराम्भैः पुरः प्रसर्पणेन कण्ठान्तं ग्रीवां मर्य्यादीकृत्य मज्जन्तो जले क्रीडन्तो जलप्रवेशाददृश्यमाना तनुर्देहो यस्य एवम्भूतः। तथा स्वकीया दिक् प्राची तस्याः करी ऐरावणोऽन्यो वा तत्रत्याः करिणस्तेषां जयक्रीडा तयो-पार्जितैर्यशोभिः सह स्पर्द्धिभिस्तदुज्ज्वलैः फेनैः जलावगाह-नाद्गुणैर्निमग्नदेहार्द्धदेश पाण्डुरितः धवलीकृतः। तथा दन्त-द्वन्दस्य दन्तद्वयस्य जलेऽनुबिम्बनं प्रतिबिम्बस्तेन कृत्वा चत्वारो दन्ता यस्य सः। जलमध्ये विद्यमानत्वाद्धवलत्वाच्चतुर्दन्तत्वा-च्चैरावण एवायमिति भ्रान्त्या समुद्रः सुखी भवतीत्यर्थः। आ-समुद्रं दिग्विजयीत्यर्थः ॥ ८५ ॥

अथेति। अथ सा भैमी न्यमीलत् अक्षिपक्ष्मसङ्कोचं चकार। किंभूता। अतिप्रीत्या मधुस्रजा वरणमधूकमालया नैषधस्य नाम जपति तत्क्रीडाऽत एव स्फुटीभवन् प्रत्यक्षायमाणः ध्या-नेन चिन्तनातिशयेन पुरः स्फुरन् अपरिक्षततयाऽवभासमानो नलो यस्याः सा। तत्रोत्प्रेक्षते। एतस्योर्व्वीपतेर्वर्णनया समुत्प-न्नमद्भुतमाश्चर्यं हृदि विद्यमानं आस्वादयितुमिव। आश्चर्यस्य चेतसि वर्त्तमानत्वात्तदनुभवार्थं नेत्रे अपान्तः प्रविष्टे इवेत्यर्थः।

मधुस्रजा नैषधनामजापिनी
स्फुटीभवद्ध्यानपुरःस्फुरन्नला ॥ ८६ ॥
प्रशंसितुं संसदुपान्तरञ्जिनं
श्रिया जयन्तं जगतीश्वरं जिनं ।
गिरः प्रतस्तार पुरावदेव ता
दिनान्तसन्ध्यासमयस्य देवता ॥ ८७ ॥
तथाधिकुर्य्या रुचिरे चिरेप्सिता
यथोत्सुकः सम्प्रति सम्प्रतीच्छति ।

मले एवानुरक्ता सती नेत्रनिमीलनेनैव तं नृपं निरीचीच-कारेति भावः। अन्योऽपि जपमालयाभीष्टदेवतामन्त्रजपं कुर्व्वन् तां साचात्कर्त्तुं नेत्रे निमील्य ध्यानेन तां साचात्क-रोति ॥ ८६ ॥

प्रशंसितुमिति। दिनान्तसन्ध्यासमयस्य देवता सरस्वती पुरावदेव पूर्व्ववदेव ता अतिगम्भीरमधुरा गिरः प्रतस्तार उवाच। किं कर्त्तुं। संसदः सभाया उपान्तौ उभयपार्श्वौ रञ्ज-यत्येवं शीलं श्रिया शरीरशोभया कृत्वाऽतिसुन्दरं जिनं बुद्धदेवं जयन्तं जगत्याः पृथिव्या ईश्वरं राजानं प्रशंसितुं वर्णयितुं। श्रिया संसदुपान्तरञ्जिनं जयन्तं जगति शौर्य्यादिना इन्द्रपुत्र-तुल्यं कीकटदेशप्रभुत्वाज्जिनं बौद्धं राजानमिति वा जयन्त-नामानं वा। जगदीश्वरमिति पाठे जिनविशेषणं ॥ ८७ ॥

तथेति। हे रुचिरे सुन्दरि त्वं तथा तेन प्रकारेणाधि-

अपाङ्गरङ्गस्थललास्यलम्पटाः
कटाक्षधारास्तव कीकटाधिपः ॥ ८८ ॥
इदं यशांसि द्विषतः सुधारुचः
किमङ्कमेतद्द्विषतः किमाननं ।

कुर्य्याः अधिकारं कुर्य्याः । तथा कथं । यथा येन प्रकारेण कीकटाधिपः मगधदेशस्वामी त्वत्कटाक्षेषु उत्सुकः सन् चिरेप्सिताः तव कटाक्षधारास्तिर्य्यगवलोकनपरम्पराः सम्प्रतीदानीं सम्प्रतीच्छति अङ्गीकरोति । किंभूता धाराः । अपाङ्गा नेत्रप्रान्तलक्षणं रङ्गस्थलं नाट्यशाला तत्र लास्ये सविलाससमन्दगतौ लम्पटाः । चिरेप्सिता त्वमिति वा । चिरंत्यकारान्तमप्यव्ययं तेन समासः । एवमेवंजातीयेऽन्यत्रापि ज्ञातव्यं ॥ ८८ ॥

इदमिति । अखिलेषु लोकेषु धाविभिः प्रसरणशीलैः लोकत्रयमुज्ज्वलङ्कुर्व्वाणैरस्य यशोभिः विशेषेण शोषिता लोकत्रयान्निर्व्वासिता तामसी कृष्णपक्षरात्रिरिव मषी इदं यशांसि अस्य कीर्त्तीर्द्विषतः असहमानस्य सुधारुचश्चन्द्रस्याङ्कं कलङ्कमयञ्च सन्निधिं धावति शीघ्रं गच्छति प्रविशति किं । किंवा एतद्द्विषत एतच्छत्रोराननं प्राप्नोतीति संशयः । एतद्यशोभिश्चन्द्राङ्कशत्रुमुखातिरिक्तस्य सकलस्यापि जगतः श्वेतीकरणात्तत्र निवस्तुमशक्ता सती मलिनं चन्द्रकलङ्कमेतच्छत्रुमुखञ्च प्रायेण गता । यो हि येन पराभूयते स तद्वैरिणमाश्रयतीत्यर्थः । अयमतितरां यशस्वीति भावः । अन्योऽपि शोषितः सगोत्रं याति ।

यशोभिरस्याखिललोकधाविभि-
र्विभीषिता धावति तामसी मषी॥ ८९ ॥
इदं नृपप्रार्थिभिरुज्झितोऽर्थिभि-
र्मणिप्ररोहेण विवृध्य रोहणः।
कियद्भिरम्बरमावरिष्यते
मुधा मुनिर्विन्ध्यमरुद्ध भूधरं॥ ९० ॥

श्यामस्य च श्यामं वस्तु सर्गात्रमिति। तामसी तमःसम्बन्धिनी रात्रिः मषी श्यामवस्तुमात्रगता श्यामिका च यथाक्रमं चन्द्राङ्कं शत्रुमुखं धावति किमिति वा। निरन्तरोद्योतकरणादेतत्कीर्त्या निष्काशितेव तामसी स्त्रीभावभीरुर्भर्त्तुश्चन्द्रस्योत्सङ्गं गता। अत एव रात्रिकालिमा चन्द्राङ्के दृश्यते। सर्व्वस्यापि श्वेतीकरणात् श्यामिकापि निर्व्वासिताऽन्यत्र स्थातुमशक्ततयेव रिपुमुखं गता। अत एव विवर्णीभूतेषु वैरिमुखेषु कालिमा दृश्यते। एतद्विषतः। द्विषःशतुर्व्वेति (पा॰ २। ३। ६९ सू॰ ६ वा॰) षष्ठीसमासः॥ ८९ ॥

इदमिति। अतिवदान्यस्यास्य नृपस्य प्रार्थनशीलैरर्थिभिर्याचकैरनेनैव समस्तकामानां पूरितत्वादुज्झितः परित्यक्तः अत एव स्वव्ययाभावान्मणिप्ररोहेण विवृध्य अङ्कुरोत्पत्त्या विशेषेण वृद्धिं प्राप्य रोहणो मेरुः कियद्भिः कतिपयैरल्पैरेव दिनैः अम्बरमावरिष्यते आच्छादयिष्यति यतस्तस्मान्मुनिरगस्तिर्विन्ध्यनामानं भूधरं मुधैवारुद्ध मदागमनपर्य्यन्तं त्वया न वर्द्धितव्यमिति नियमेन वृथैव वाग्बद्धमकरोत्। तद्वृद्ध्यभावेऽपि

भूशक्रस्य यशांसि विक्रमभरेणोपार्जितानि क्रमा-
देतस्य स्तुमहे महेभदशनस्पर्द्धीनि कैरक्षरैः ।
लिम्पद्भिः कनकं कृतोऽपि रजतं राज्ञां यशःपारदै-
रस्य स्वर्णगिरिः प्रतापदहनैः स्वर्णं पुनर्निर्म्मितः ॥ ८१ ॥

रोहणेनैव सूर्य्यगतेः प्रतिबन्धकस्य करिष्यमाणत्वादगस्त्यप्रया-णस्य वैयर्थ्यमेव जातमित्यर्थः । अगस्त्येन विन्ध्यरोधस्तु पुराण-प्रसिद्धः । अतिवदान्योऽयमिति भावः । आवरिष्यते । विकल्प-त्वादिटो दीर्घत्वमिति (पा० ७ । २ । ३८)। अवृङ्इति । लङात्मने-पदं ॥ ८० ॥

भूशक्रस्येति । वयं विक्रमस्य भरेण बाहुल्येन क्रमात्पारि-पाट्यात् उपार्जितानि एतस्य भूशक्रस्य पृथ्वीन्द्रस्य यशांसि कैर-क्षरैर्वर्णैः स्तुमहे वर्णयामः । यशसां भूयस्त्वादक्षराणां पञ्चाश-त्त्वात् स्तोतुं न शक्नुमः । सामान्याकारेण कथञ्चिद्वर्ण्यन्त इत्यर्थः । किम्भूतानि । महेभाः दिग्दन्तिनो गजा ऐरावतो वा तेषां दशनैः सह स्पर्द्धन्त एवंशीलानि तद्वद्गौराणि । स्वर्णगिरिर्मे-रुरन्येषां राज्ञां लिम्पद्भिर्यशोलक्षणैः पारदैः कनकमयत्वं र-जतं कृतोऽपि प्रलेपनिर्म्मितपाण्डुरत्वं नीतोऽपि सन् अस्य प्रतापरूपैर्दहनैरग्निभिः पुनः स्वर्णं निर्म्मितः कृतः । प्रतापस्य पीतत्वात्सुवर्णरूपतां प्रापितः । पारदलेपनेन सुवर्णं श्वेतीभवति वह्नितापेन चोड्डीने पारदे पुनः काञ्चनमेव भवतीत्यर्थः । एत-त्प्रतापाग्रे परेषां यशांसि न प्रसरन्ति । यशस्वी प्रतापवांश्चान्यः कोऽपि नास्तीत्यर्थः ॥ ८१ ॥

यद्भर्त्तुः कुरुतेऽभिषेणनमयं शक्रो भुवः सा ध्रुवं
दिग्दाहैरिव भस्मभिर्म्मघवता सृष्टैः कृतोद्धूलना।
शम्भोर्म्मा वत सान्ध्यवेलनटनं भाजि व्रतं द्रागिति
क्षोणी नृत्यति मूर्त्तिरष्टवपुषोऽष्टम्वृष्टिसन्ध्याधिया॥ ८२॥

यदिति। अयं भुवः शक्रो भूमीन्द्रः यस्या भूमेर्भर्त्तुः पत्युः अभिषेणनं सेनयाऽभिगमनं कुरुते सा क्षोणी भूमिः इति मनसि कृत्वा लोहितत्वेनौत्पातिकी असृग्वृष्टिः रुधिरवृष्टिस्तद्रूपा या सायंसन्ध्या तस्या धिया भ्रमबुद्ध्या द्राक् शीघ्रं नृत्यति गात्रविक्षेपं करोति कम्पत इत्यर्थः। वत खेदे। ध्रुवमुत्प्रेक्षे। किम्भूता सा। दाहादिन्धनज्वलनसम्भावात् दिग्दाहैरिव दिग्दाहादिशामौत्पातिकनिर्हेतुकलोहितदीप्तेः प्रभवैरिव मघवतेन्द्रेण सृष्टैर्म्मोचितैः भस्मभिः कृत्वा कृतं धृतमुद्धूलनं अङ्गलेपो यया सा। इति किं। शम्भोः दिनरात्रिसन्धिरूपायां वेलायां काले भवं सान्ध्यवेलं सायंसन्ध्याकालसमुचितं नटनं नृत्यरूपं व्रतं नियमः माभाजि भग्नो माभूदिति स्वयं नृत्यतीत्यर्थः यतः अष्टमूर्त्तेर्जलाद्यष्टमूर्त्तेः शम्भोरेका मूर्त्तिः पृथ्वी। शिवो हि सन्ध्यासमये नृत्यं करोति तन्मूर्त्तित्वात्तथापि नृत्यमारब्धमित्यर्थः। यमुद्दिश्य अयं प्रयाणं करोति तस्मिन्देशे दिग्दाहभस्मवृष्टिभूकम्परक्तवृष्टिलक्षणास्तत्पराजयसूचका उत्पाता भवन्ति। अयमेव विजयत इत्यर्थः। जलार्केन्द्वात्मखभ्वग्निवायवः शिवमूर्त्तयः। यत्सेनयाभिगमनं राज्ञस्तदभिषेणनमित्य-

प्रागेतद्वपुरामुखेन्दु सृजतः स्रष्टुः समग्रस्त्विषां
कोशः शेषमगादगाधजगतीशिल्पेऽप्यनल्पायितः ।
निःशेषद्युतिमण्डलव्ययवशादीषल्लभैरेष वा
शेषः केशमयः किमन्धतमसस्तोमैस्ततो निर्म्मितः ॥ ८३ ॥

सरः । यद्भर्त्तुः । भर्तृशब्दस्य पत्यर्थत्वाद्याजकादित्वात् समासः । (पा० २ । २ । ९) सेनयाऽभिगमनमभिषेणनं । सत्यापपाशेति (पा० ३ । १ । २५) णिचि लुट् । उपसर्गात् सुनोतीति (पा० ८ । ३ । ६५) षत्वं । दिग्दारैरित्यत्र तस्येदमित्यण् (पा० ४ । ३ । १२०) । सन्धिवेलायां भवं सान्धिवेलं । सन्धिवेलेत्यण् (पा० ४ । ३ । १६) । इन्द्रः शिवस्य भस्माहरणेऽधिकारी अत एव दिशां दाहं कृत्वा भस्मार्पितवान् इति केचित् ॥ ८२ ॥

प्रागिति । प्राक् सर्गादौ अगाधजगतीशिल्पेऽपि असमर्था-दत्रैलोक्यनिर्म्माणविषयेऽपि यस्त्विषां समस्तः सकलः कोशो भाण्डागारसञ्चयः नाल्पायितः अल्पवन्नाचरितः किन्तु ता-वानेवाक्षयः स्थितः । आमुखेन्दु मुखचन्द्रमभिव्याप्य एतस्य वपुः सृजतः स्रष्टुः ब्रह्मणः सम्बन्धी स त्विषां समस्तः कोशः शेषं समाप्तिं अगात् प्राप क्षयितः । यतश्चरणप्रभृतिमुखपर्य्यन्तावय-वनिर्म्माणार्थमेव पूर्णो न तु केशनिर्म्माणार्थं । ततस्तस्मात् कान्ति-क्षयाद्धेतोः केशमयः केशप्रचुरः केशरूपोऽस्य एष शेषो भागः निःशेषं द्युतिमण्डलं समस्ततेजोराशिस्तस्य व्ययवशात्क्षयवशात् भाभावस्तम इति न्यायात् ईषल्लभैः सुप्रापैः सुलभैरन्धतमस-

तत्तद्दिग्जैत्रयात्रोद्धुरतुरगखुराग्रोद्धतैरन्धकारं
निर्वाणारिप्रतापानलजमिव सृजत्येष राजा रजोभिः ।

स्तोमैर्गाढान्धकारसङ्गैः कृत्वा किंवा निर्मितः इत्युत्प्रेक्षा। समस्तरेणोऽयं केशाश्चातिनीला घनाश्चेति भावः। ईषत्क्रमैः। अकत्मार्थे खलु। उपसर्गादेव खलघञोर्नान्यत्रेति नियमान्नुमभावः (पा० ७।१।६७)। अन्धतमसः। अवसमन्धेभ्यस्तमसः इत्यच् (पा० ५।४।७९) ॥ ८३ ॥

तदिति। एष राजा तासां प्राच्यादीनां सर्व्वासां दिशां जैत्रा जयकारिण्यो यात्रास्तासु उद्धुरा उत्साहवन्तोऽतिबलिनस्तुरङ्गास्तेषां खुराग्रैरुद्धतैर्रजोभिः कृत्वा अन्धकारं सृजति। कथम्भूतमिव। निर्वाणः शान्तः अरिप्रतापानलस्तस्मादनन्तरजातमिव अन्धकारं सूर्यप्रकाशस्याच्छादितत्वात् तमः सृजति। अनले शान्ते भाभावरूपोऽन्धकारो भवति। एतस्य दिग्जययात्रायां प्रारब्धायां सर्व्वेषामपि वैरिणां प्रतापः शान्तो भवतीति भावः। तुरङ्गबाहुल्यञ्च। तथा एतस्य कीर्त्तिप्रतानैर्यशोविस्तारैरेव च विधुभिर्बहुभिश्चन्द्रैः युधे युद्धार्थं आहूयमानः स्पर्द्धापूर्व्वमाकारित एव राहुः भियेव भयेनेव भूगोलस्य भूमण्डलस्य छायामयेन मायारूपेण व्याजेन गणितविद्भिः ज्यौतिषिकैर्गणितशास्त्रप्रामाण्येन उन्नेयस्तर्क्यः कायः शरीरं यस्यैवंभूतोऽभूत्। एतत्कीर्त्तिसमूहचन्द्रान् दृष्ट्वा एकस्य जेतुमशक्यत्वाद्राहुणा सङ्गोपायितुं भूगोलछायरूपं मायामयशरीरं धृतमि-

भूगोलच्छायमायामयगणितविदुन्नेयकार्यो भियाभू-
देतत्कीर्त्तिप्रतानैर्विधुभिरिव युधे राहुराहूयमानः ॥८४॥
आस्ते दामोदरीयामियमुदरदरीं यावदध्यास्य त्रिलोकी
सम्मातुं शक्तिमन्ति प्रथिमभरवशादत्र नैतद्यशांसि ।
तामेतां पूरयित्वा निरगुरिव मधुध्वंसिनः पाण्डुपद्म-
च्छद्मापन्नानि तानि द्विपदशनसनाभीनि नाभीपथेन ॥८५॥

त्यर्थः । ज्योतिःशास्त्रे च भूगोलच्छायैव राहुत्वेनोक्ता । अन्यो ऽपि शत्रोर्भीतः स्वङ्गोपायितुं रूपान्तरं धारयति । एतादृशो यशस्वी कोऽपि नास्तीति भावः । निर्वाणेति । निर्वाणोऽवात इति तस्य णत्वं ( पा० ८ । २ । ५० ) । छायमायेति । विभाषासेनेति षण्डत्वं ( पा० २ । ४ । २५ ) ॥ ८४ ॥

आस्त इति । या इयं त्रिलोकी लोकत्रयी दामोदरीयां उदरदरीं श्रीविष्णोर्जठरकन्दरामवलम्ब्याश्रित्यास्ते अत्रास्यां दामोदरोदरस्थितायां त्रिलोक्यां प्रथिमभरवशात् महत्त्वबाहुल्यादतिसम्मातुं सुखेन स्थातुं न शक्नुवन्ति असमर्थानि सन्ति तान्यतिप्रसिद्धानि द्विपदशनैः सनाभीनि सदृशानि अतिगौराणि एतस्य यशांसि तामेतां विष्णूदरदरीस्थितां तत्स्थितां त्रिलोकीं पूरयित्वावशिष्टानि तामुदरदरीं तस्यां त्रिलोकीं च परिपूर्णावशिष्टानि वा पाण्डुपद्मच्छद्मापन्नानि नाभीसमुत्पन्नधवलकमलव्याजमापन्नानि तदाकाराणि सन्ति मधुध्वंसिनो विष्णोर्नाभीरूपेण पथा मार्गेण निरगुरिव निर्जग्मुरिव मह्नट-

अस्यासिर्भुजगः स्वकोशसुषिराकृष्टः स्फुरत्कृष्णिमा
कम्पोन्मीलदराललीलवलनस्तेषां भिये भूभुजां।
सङ्ग्रामेषु निजाङ्गुलीमयमहासिद्धौषधीवीरुधः
पर्व्वास्ये विनिवेश्य जाङ्गुलिकता यैर्नाम नालम्बिता॥८६॥

वासयातनाभिया वहिर्निर्गतानीव श्रीविष्णोर्नाभौ धवलं कमलं अन्यथोत्प्रेक्षितं पाण्डुपद्मं न किन्त्वेदद्यशांसि। अथवा करिदन्तधवलतुल्यान्यतिभूयांसि चास्य यशांसीति भावः। दामोदरीयां। वृद्धाच्छः (पा॰ ४।२।११४)। प्रथिमा। पृथ्वादिभ्य इमनिच्। (पा॰ ५।१।१२२)। नाभीपथेन। ऋगादिना समासान्तः (पा॰ ५।४।७४)॥८५॥

अस्येति। अस्यासिरेव भुजगस्तेषां भूभुजां राज्ञां भिये भवतीति शेषः। किंभूतः। स्वकोश एव चर्म्ममयं पिधानं तदेव सुषिरं वल्मीकविवरं तस्मादाकृष्टः वहिष्कृतः सद्यो धृतश्च तथा स्फुरन् प्रकाशमानः उत्तमलोहजातिविशेषत्वात् कृष्णिमा श्यामत्वं यस्य। सर्पोऽपि सद्यो धृतत्वात् स्फुरत्कालिमा। तथा कम्पेन तत्र हस्तान्दोलनेन कृत्वा उन्मीलन्त्यः प्रकटीभूता अराला वक्रा लीला येषु तादृशानि वलनानि गतिविशेषा यस्य। सर्पोऽपि वक्रगतिर्भवति। तेषां केषां। यैः सङ्ग्रामेषु निजाङ्गुलीमय्याः स्वीयाङ्गुलीरूपाया महासिद्धौषध्या वीरुधः स्पर्शमात्रेण विषघ्न्याः वल्ल्याः पर्व्व ग्रन्थिस्तदङ्गुष्ठाद्यपर्व्वग्रन्थिद्वयञ्च आस्ये मुखे विनिवेश्य जाङ्गुलिकता विषवैद्यता गारुडिकता नालम्बिता

यः पृष्ठं युधि दर्शयत्यरिभटश्रेणीषु यो वक्रता-
मस्मिन्नेव बिभर्त्ति यश्च किरति क्रूरध्वनिं निष्ठुरः।
दोषं तस्य तथाविधस्य भजतश्चापस्य गृह्णन् गुणं
विख्यातः स्फुटमेक एष नृपतिः सीमा गुणग्राहिणां॥ ८७॥

नाम प्रसिद्धा। सर्पोऽपि येन स्वमुखे सिद्धौषधीपर्व्व न निक्षि-प्यते तमेव यथा मारयति तथा एतदीयः खड्गोऽपि ये शस्त्राणि न त्यजन्ति दैन्याच्च मुखे अङ्गुलीपर्व्व न धारयन्ति तानेव हन्ति नान्यान् विनीतांश्शरणागतांश्च। विषवैद्यो जाङ्गुलिक इत्यमरः॥ ८६॥

य इति। अरिभटश्रेणीषु शूरतरवैरिसङ्घेषु विषये युधि यः पृष्ठं दर्शयति पराङ्मुखः पलायते अथ च यं प्रत्याकृष्यते तस्य स्वभावात् पृष्ठं दर्शयति। यः अस्मिन् स्वस्वामिन्येव नृपे वक्रतामनृजुत्वं स्वाश्रय एव कृतघ्नत्वं बिभर्त्ति। अथ वान्यस्यैता-दृग्बलाभावात् अस्मिन्नेव वक्रतां बिभर्त्ति नान्येन न स्वीकर्त्तुं शक्यत इत्यर्थः। तथा यो निष्ठुरो निर्दयो दाक्षिण्यरहितः सन् क्रूरध्वनिं अनेन सदाप्रियभाषणं किरति। अथ च परिण-तादरेराजन्म क्रूरं वैरिणां भयावहं शब्दं किरति क्षिपति। दोषं दूषणं अथ च बाहुं भजतः तथाविधस्य तस्य चापस्य तथाविधस्यान्यस्य वा कस्यचिद्गुणं श्रुतशौर्य्यादिकं गृह्णन् वर्णयन्। अथ च मौर्व्वीग्राहिणां धनुर्द्धराणां सीमा पर्य्यन्तावधिः स्फुटं विख्यातः प्रसिद्ध एक एष राजा। एवंविधो धनुर्द्धरः सक्त-

अस्यारिप्रकरः शरश्च नृपतेः सङ्ख्ये पतन्तावुभौ
सीत्कारञ्च न सम्मुखौ रचयतः कम्पञ्च न प्राप्नुतः।
तद्युक्तं न पुनर्निवृत्तिरुभयोर्जागर्त्ति यन्मुक्तयो-
रकस्तत्र भिनत्ति मित्रमपरश्चामित्रमित्यद्भुतम् ॥ ९८ ॥

नश्च कोऽपि नास्तीत्यर्थः। धनुःपृष्ठदर्शनेनैतस्य पलायनाभावः सूचितः॥ ९७ ॥

अस्येति। अस्य नृपतेरुभौ सङ्ख्ये सङ्ग्रामे क्रमेण सम्मुखौ एतत्-मुखं वैरिसम्मुखञ्च पतन्तौ सन्तौ सीत्कारं दुःखाभिव्यञ्जकं दन्त-मध्ये निर्गतं पचवातजनितञ्च ध्वनिविशेषं यन्न रचयतः कुरुतः यञ्च मरणभीतिजनितं दुर्निर्गतत्वजनितञ्च कम्पं न प्राप्नुतः। उभौ कौ। अरिप्रकरः वैरिसङ्घः शरश्च एतौ द्वौ। तया मुक्तयोः प्राप्तमोक्षधनुश्च्युतयोरुभयोर्यत्पुनर्निवृत्तिः जन्म प्रत्यागमनञ्च न जागर्त्ति भवति तत्सर्वं युक्तमुचितमेव। द्वयोरपि तुल्यधर्म्म-त्वात्। तर्हि विलक्षणं किमित्याशङ्कायामाह। तत्र तयो-र्द्वयोर्मध्ये एकः वैरिसङ्घः मित्रं सुहृदमथ च सूर्य्यं भिनत्ति। अपरश्च शरः अमित्रं सूर्य्यव्यतिरिक्तमथ च वैरिणं भिनत्ति द्विधा करोतीत्यद्भुतं आश्चर्य्यं। तुल्यकर्म्मणोरतुल्यकर्म्मारम्भकत्वस्य विरुद्धत्वादित्यर्थः। चावन्योन्यसमुच्चये। दुःखभयराहित्येन रणे सम्मुखः पतति शत्रुसङ्घः। द्वाविमौ पुरुषौ लोके सूर्य्यमण्डल-भेदिनौ इति वचनात् सूर्य्यमण्डलं भित्त्वा मुक्तिं प्राप्नुतः। अदृ-ढमुष्टितया मुक्तबाणः कम्पसीत्कारौ रचयति। तदकरणाच्च दृढमुष्टितास्य सूचिता। दृढमुष्टित्वेन मुक्तो वैरिमध्ये न पुन-

धूलीभिर्दिवमन्धयन् बधिरयन्नाशाः खुराणां रवै-
र्वातं संयति खञ्जयन् जवजयैः स्तोतॄन् गुणैर्मूकयन्।
धर्माराधनसन्नियुक्तजगता राज्ञाऽमुनाधिष्ठितः
सान्द्रोतफालमिषाद्विगायति यदा स्प्रष्टुं तुरङ्गोऽपि गां ॥८९॥

रायाति वैरिणं हन्तीत्यर्थः। प्रहरतरोऽयं शत्रुमात्रं हतवानिति भावः। बाणपक्षे सम्यक् मुखं पुङ्खमग्रं वा यस्येति ॥ ८८ ॥

धूलीभिरिति। धर्माराधने सम्यङ्नियुक्तं प्रेरितं जगद् येनैवंभूतेनामुना राज्ञा अधिष्ठित आरूढस्तुरङ्गोऽपि धूलीभिः खुरजरजोभिः दिवं स्वर्गलोकं अन्धयन् अन्धं कुर्वन् चक्षुः प्रविष्टरजस एव निमीलितनयनं कुर्वन्नित्यर्थः। तथा खुराणां रवैः समुच्छलनशब्दैः कृत्वा आशा दिशः प्रान्तनिवासिनो जनान् बधिरयन् बधिरतया शब्दान्तरग्रहणासमर्थान् कुर्वन्। तथा संयति सङ्ग्रामे जवस्य वातवेगस्य जयैः वायोः सकाशादतिवेगतया वातं खञ्जयन् पङ्गुं कुर्वन्। तथा गुणैर्हेतुभिः स्तोतॄन् अश्वजयरूपलक्षणादिवर्णनकारिणो जनान् मूकयन् गुणाधिक्येन सामस्त्येन स्तोतुमसमर्थान्मूकानिव कुर्वन्। एवंभूतः सन्ननन्तरसान्द्राणां निरन्तराणामुत्फालानां चतुर्भिश्चरणैरुत्पतनानां मिषात् पदैकेनापि चरणेन गां भुवमथच धेनुं स्प्रष्टुं तस्याः स्पर्शनं कर्त्तुं विगायति विशेषेण जुगुप्सते। धार्मिको राजा निषिद्धमाचरतः स्वाधीनान् पापिनो दण्डयति। अहं तु त्वदधिष्ठितः पदा गांस्पर्शलक्षणं पापं कुर्वन् दण्ड्यः स्यामिति बुद्ध्या पदा

एतेनोत्कृत्तकण्ठप्रतिसुभटनटारब्धनाट्याद्भुतानां
कष्टं द्रष्टैव नाभूद्भुवि समरसमालोकिलोकास्पदेऽपि ।
अश्वैरस्वैरवेगैः कृतखुरखुरलीमंजुविक्षुद्यमान-
क्ष्मापृष्ठोत्तिष्ठदन्धङ्करणरणधुरारेणुधारान्धकारात् ॥ १००॥

न स्पृशति चेत्यर्थः । धार्मिको जवनाश्वश्चायमेवेत्यर्थः । अन्ध-यन्नित्यादौ तत्करोतीति णिजन्ताच्छतृ ॥ ९९ ॥

एतेनेति । समरसमालोकिनो ये लोकास्तेषामास्पदे स्थानभूतायामपि भुवि । अथवा समरसमालोकिलोकानां देवानामास्पदे गगने वियति । एतेन राज्ञा उत्कृत्तकण्ठाः छिन्नग्रीवाः कबन्धरूपाः प्रतिसुभटाः रिपुवीरास्त एव नटा नर्त्तकास्तैरारब्धानां नाट्याद्भुतानां नृत्ताश्चर्याणां द्रष्टा नाभूदेव कष्टमेतत् दुःखमेतत् । तत्र हेतुः । अस्वैरवेगैः शीघ्रजवैरश्वैः कृता खुरैः कृत्वा खुरली अभ्यासभूमिः पुरः पुरः न्यासो वा तया मंजु मनोज्ञं शीघ्रं वा विशेषेण क्षुद्यमानं चूर्णीभवत् क्ष्मापृष्ठं भूतलं तस्मादुत्तिष्ठन् उत्पतन् अनन्धमन्धं करोति अन्धङ्करण एवंभूतः रणधुरारेणुः रणप्रारम्भ एव समुत्पन्नो रेणुस्तस्य धाराः प्रवाहास्तज्जनितादन्धकारात् । रणविलोकनार्थमागतैरपि मानवैर्दैवैरपि अश्वखुरोत्थितरजःपूरितनेत्रैः कवन्धनृत्यं नालोकीत्यर्थः । मन्दस्वच्छन्दयोः स्वैरं इति मेदिनी । एतत्कृत्तोत्तमाङ्गेति पाठः साधीयान् । द्रष्टा । तृच् । रणधुरा । ऋगादिना ऽप् । (पा० ५ । ४ । ७४) ॥ १०० ॥

उन्मीलल्लीलनीलोत्पलदलदलनामोदमेदस्विपूर-
क्रोडक्रीडद्द्विजालीगरुदुदितमरुत् स्फालवाचालवीचिः ।
एतेनाखानि शाखानिवहनवहरित्पर्णपर्णद्रुमाली-
व्यालीढोपान्तशान्तव्यथपथिकदृशां दत्तरागस्तडागः ॥ १०१ ॥
वृद्धो वार्द्धिरसौ तरङ्गवलिभं बिभ्रद्वपुः पाण्डुरं
हंसालीपलितेन यष्टिकलितस्तावद्वयोर्वंद्विमा ।

उन्मीलदिति । एतेन राज्ञा एतादृशस्तडागः अखानि । किंभूतः । उन्मीलन्ती विकसन्ती लीला विलासो येषां तानि नीलोत्पलानि तेषां दलानि पत्राणि तेषां दलनं विकाशनं तदुद्भवेनामोदेन परिमलेन मेदस्वी पुष्टः बहुलपरिमलः पूरः प्रवाहस्तस्य क्रोडे उत्सङ्गे क्रीडन्तो द्विजाली हंसादिपङ्क्तिस्तस्या गरुद्भ्यः पक्षेभ्य उदित उत्पन्नो मरुद्वायुः तस्य स्फालः सवेग-गमनं सङ्घट्टो वा तेन वाचालाः शब्दायमानाः वीचयो यस्य । तथा शाखानिवहैः नवहरित्पर्णैर्नूतनश्यामपर्णैश्च पूर्णा द्रुमाल्यः वृक्षपङ्क्तयः ताभिर्व्यालीढः व्याप्तः उपान्तस्तीरप्रदेश-स्तेन शान्ता व्यथा ग्रीष्मातपपीडा यासां तासां पथिकदृशां ग्रीष्मातपपीडा येषां पथिकानां वा दृशः तासां दत्तः रागः सन्तोषो येन । अस्य तडागस्यातिरमणीयत्वं सुखजनकत्वं धर्मस्य च धार्मिकत्वं सूचितं ॥ १०१ ॥

वृद्ध इति । असौ अनेन निर्मितस्तडागः वृद्धो महान् वार्द्धिः समुद्रः । समुद्रापेक्षयापि महानित्यर्थः । अथवा असौ वारि

विभ्रच्चन्द्रिकया च कं विकचया योग्यस्फुरत्सङ्गतं
स्थाने स्नानविधायिधार्म्मिकशिरोनत्यापि नित्यादृतः ॥ १०२ ॥

धीयतेऽस्मिन् वार्द्धिर्वारिस्थानं तडाग एव वृद्धोऽतिप्रवयाः। किम्भूतः। तरङ्गैः कृत्वा वलिभं वलियुक्तं। तरङ्गा एव वार्द्धकसङ्कुचितस्थूलशरीरावयविशेषस्थाने जाता यस्येत्यर्थः। तादृशतरङ्गरूपाभिर्वलिभिर्भाति इति वा। हंसालीपलितेन हंसपङ्क्तिरूपेण जराजनितश्वैत्येन पाण्डुरं धवलं प्रवाहरूपं वपुः बिभ्रत्। तथा यष्ट्या मध्यनिक्षिप्तकीर्त्तिस्तम्भरूपया कलितो ज्ञातपरिमाणोऽलङ्कृत इत्यर्थः। अथ च स्खलच्छरीरधारणार्थं दण्डेन युक्तो धृतशरीर इत्यर्थः। तथा तावतामतिबहूनां वयसां पक्षिणां बंहिमा बाहुल्यं यत्र। अथ च तावतः शतसमीपवर्त्तिनो वयसो वार्द्धकस्य बंहिमा यस्य। तथा विकचयाऽतिप्रकाशमानया चन्द्रिकया योग्यं समुचितं स्फुरत् प्रकाशमानं सङ्गतं मैत्रं यस्य। ज्योत्स्नावन्निर्म्मलं। अथ च समुद्रत्वादेतज्जलं ज्योत्स्नाभिश्चसमुचितं कं जलं बिभ्रत्। अथ च विगतकेशया चन्द्रिकया खालित्येन चान्दीति कान्यकुजभाषायां तया उचितं स्फुरन्मैत्रं कं शिरो बिभ्रत्। यद्वा केशरहितेन शालित्येनोपलक्षितं। तथा योग्यं वार्द्धकाश्रितं स्फुरत् प्रकटं सङ्गतं सम्यग्गतं कम्पनं यस्य शिरसस्तत्। तथा स्नानविधायिभिर्धार्म्मिकैः शिरोनत्यापि यत् नित्यादृतः तत् स्थाने उचितं। धार्म्मिकैश्च स्नानादौ तीर्थं नमस्क्रियते वार्द्धैरपि। समुद्रस्य पर्व्वण्येव स्पर्शयोग्यत्वादेतस्य सर्व्वदे-

तस्मिन्नेतेन यूना सह विहर पयःकेलिवेलासु बाले
नालेनास्तु त्वदक्षिप्रतिफलनभिदा तत्र नीलोत्पलानां ।
तत्पाथोदेवतानां विशतु तव तनुच्छायमेवाधिकारे
तत्फुल्लाम्भोजराज्ये भवतु च भवदीयाननस्याभिषेकः ॥१०३॥

त्याधिक्यं समुद्रात्। वलिभमिति मत्वर्थे तुन्दिवलीति भः। (पा० ५।२।१३८)। द्वितीयाव्याख्याने पचाद्यच् (पा० ३।१।१३४)। वंहिमेति। बहुलस्य भावः। पृथ्वादित्वादिमनिच् (पा० ५।१।१२२)। प्रियस्थिरेति वंहिरादेशः (पा० ६।४।१५७)। धार्म्मिकः। धर्म्मं चरतीति ठक् (पा० ४।४।४१)॥१०२॥

तस्मिन्निति। हे बाले तस्मिन् तडागे त्वं एतेन यूना सह विहर क्रीड। तथा तत्र तडागे पयःकेलिवेलासु जलक्रीडावसरेषु ग्रीष्मर्त्तौ वा तत्रैव नालस्य दृश्यत्वात्। प्रतियोग्यभिप्रायं बहुवचनं। नीलोत्पलानां त्वदक्षिप्रतिफलनात् नेत्रप्रतिबिम्बात् सकाशाद्भिदा भेदः नालेन कमलदण्डेनास्तु। अतिसादृश्यादिदं वा नीलोत्पलमिदं वाक्षि इति भेदे सत्यपि यत् तन्नीलोत्पलं सनालञ्च त्वच्चक्षुरिति नालमेव निर्णायकं भवत्वित्यर्थः। तथा तस्य पाथो जलं तस्य देवतानां अधिकारे आधिपत्ये वा तव तनुच्छायं त्वदीयशरीरप्रतिबिम्बमेव विशतु। तज्जलदेवतास्थाने त्वच्छरीरप्रतिबिम्बमेव भवत्वित्यर्थः। तथा तस्य फुल्लानां विकसितानां अम्भोजानां राज्ये खण्डे अथ चाधिपत्ये भवदीयाननस्य त्वदीयमुखकमलस्य च जलक्रीडावशात् अभि-

एतत्कीर्त्तिविवर्त्तधौतनिखिलत्रैलोक्यनिर्वासितै-
र्विश्रान्तिः कलिता कथासु जगतां श्यामैः समग्रैरपि।
जज्ञे कीर्त्तिमयादहो भयभरैरस्मादकीर्त्तेः पुनः
सा यन्नास्य कथापथेऽपि मलिनच्छाया बबन्ध स्थितिं॥१०४॥

षेकोऽस्य च पट्टाभिषेकः भवतु। नीलोत्पलजलदेवताफुल्लकम-
लापेक्षया अमीनेत्रशरीराननमधिकमिति सूचितं। तनुच्छायं।
विभाषासेनेति षण्ढत्वं (पा० २।४।२५)॥१०३॥

एतदिति। जगतां स्थावरजङ्गमात्मकानां भुवनानां सम्ब-
न्धिभिः समग्रैरपि श्यामैः कृष्णैः कज्जलादिपदार्थैः गुणैर्वा
कथासु वार्त्तास्वेव विश्रान्तिः कलिता आश्रयोऽङ्गीकृतः। किम्भूतैः
श्यामैः। एतस्य कीर्त्तेर्यश्मः विवर्त्तेन परिणामेन विशेषेण
वर्त्तनं स्थितिर्वा तेन धौताद्धवलीकृतान्निखिलात् सकलात्
कन्दरादिसहितात् त्रैलोक्यात् सकाशान्निर्वासितैर्निष्कासितैः।
कीर्त्त्या लोकत्रयस्य श्वेतीकरणात् तत्र श्यामगुणानां साम्प्रतमदर्श-
नात् पूर्व्वं श्यामानि वस्तून्यभूवन्निति वार्त्तामात्रशेषाणि श्यामा-
नि जातानि सर्व्वथा न सन्तीत्यर्थः। तथा कीर्त्तिमयात् कीर्त्ति-
प्रचुरादस्माद्राज्ञः सकाशात् अकीर्त्तेः पुनर्भयभरैर्भीतिबाहुल्यै-
र्जज्ञे जातं अहो आश्चर्य्यं। कीर्त्तेरकीर्त्तेश्च विरोधात् कीर्त्ति-
रूपादस्मादकीर्त्तेः भयं युक्तं इत्यर्थः। एतत् कुतः। यद्यस्मान्मलिन-
छायाऽतिकृष्णा साऽपकीर्त्तिः अस्य कथापथेऽपि स्थितिमाश्रयं न
बबन्ध नाकरोत्। एतत्कथाप्रारम्भे अकीर्त्तिलेशस्याप्यभावात्

अथावदद्भीमसुतेङ्गितात् सखी
जनैरकीर्त्तिर्यदि वास्य नेष्यते ।
मयापि सा तत् खलु नेष्यते परं
सभाश्रवःपूरतमालवल्लितां ॥ १०५ ॥

कीर्त्तिरेव वर्ण्यत इत्यर्थः । यस्य यस्माद्बिभेति स तदीयकथाप्रारम्भ एव मलिनो भूत्वाऽन्यत्रैव गच्छति । अविद्यमानमपि शशविषाणादि वचनगोचरो भवति अकीर्त्तिस्तु वचनगोचरोऽपि माभूदित्याश्चर्य्यं । अविद्यमानाया अप्यकीर्त्तेर्भयोत्पादनमिति चित्रं । जरतामिति पाठे वृद्धानां कथास्वपि व्याख्येयं । जज्ञे । भावे लकारः ॥ १०४ ॥

अथेति । अथ सखी भीमसुतायाः इङ्गितात् अननुरागसूचकात् भ्रूविक्षेपादिचेष्टितात् सरस्वतीमवदत् । किं । हे वाणि जनैरस्य अकीर्त्तिर्यदि नेष्यते वा नाभिलष्यत एव तत् तर्हि मयापि साऽस्याकीर्त्तिः खलु निश्चितं नेष्यत इति यद्यपि तुल्यं तथापि परं कोऽपि परः कश्चिद्विशेषोऽस्ति । सभायाः सभालोकस्य श्रवःपूरतमालवल्लितां कर्णाभरणतमालवल्लित्वं नेष्यते प्रापयिष्यते । जनानामसम्मतां शशविषाणादिवदसतीमप्यस्याकीर्त्तिमेव सर्व्वां सभां श्रावयिष्यामि इत्यर्थः । वाण्यास्तद्वर्णननिवारणं चकारेति भावः । अकीर्त्तेर्नीलत्वात्तमालवल्लित्वं । इष्यते । इषेः कर्म्मणि लट् । नेष्यते । णीञः प्रधानकर्म्मणि लृट् ॥ १०५ ॥

अस्य चोणिपतेः परार्द्धपरया लक्षीकृताः सङ्ख्यया
प्रज्ञाचक्षुरवेक्ष्यमाणतिमिरप्रख्याः किलाकीर्त्तयः ।
गीयन्ते स्वरमष्टमं कलयता जातेन वन्ध्योदरा-
न्मूकानां प्रकरेण कूर्म्मरमणीदुग्धोदधेरोधसि ॥ १०६ ॥

अकीर्त्तिमेव वर्णयति । अस्येति । हे वाणि मूकानां प्रकरेण समूहेन अस्य चोणिपतेरकीर्त्तयः किल प्रसिद्धं निश्चितं वा कूर्म्मरमणी कच्छपिका तस्या दुग्धादुत्पन्नस्योदधेः रोधसि तीरे गीयन्ते । किंभूताः । परार्द्धात् गणनावधेः सकाशात् परया ऽधिकया सङ्ख्यया लक्षीकृताः गणिताः परार्द्धादप्यधिकाः । तथा प्रज्ञाचक्षुर्भिर्जात्यन्धैः अवेक्ष्यमाणं दृश्यमानं तिमिरं तत्-प्रख्यास्तत्तुल्या अतिश्यामाः । किंभूतेन प्रकरेण । अष्टमं स्वरं निषादादिसप्तस्वरातिरिक्तं कलयताऽङ्गीकुर्व्वता । तथा वन्ध्यो-दरात् जातेन । एवमस्याकीर्त्तयः स्थिताः सभायां श्राविताः । परार्द्धाधिका सङ्ख्याऽन्धस्य दर्शनशक्तिः तिमिरस्य च चाक्षुष-रूपत्वं स्वरस्याष्टमत्वं वन्ध्योदराज्जन्म कच्छपिकाया दुग्धं एतानि यथा सर्व्वथा न सन्ति तथैतद्विशेषणयुक्ता अस्याकीर्त्तयोऽपि न सन्तीति पर्य्यवसानवृत्त्या वर्णनैव कृता । उपहासार्थत्वसङ्गतोक्तिः । आ सामस्त्येन कीर्त्तयः पूर्व्वोक्तविशेषणविशिष्टा अस्य समस्ताः कीर्त्तयो गीयन्ते किल पर्य्यवसानवृत्त्याऽस्य कीर्त्तयो न सन्त्येवेति निन्दैवास्य कृतेति वा । कच्छपी च दर्शनेनैवापत्यानि पालयति न दुग्धेनेति प्रसिद्धिः । प्रज्ञाचक्षुषो योगिनो ज्योतिर्विलोकन-

तदक्षरैः सस्मितविस्मितानना
निपीय तामीक्षणभङ्गिभिः सभां ।
इहास्य हास्यं किमभून्न वेति तं
विदर्भजा भूपमपि न्यभालयत् ॥ १०७ ॥
नलान्यवीक्षां विदधे दमस्वसुः
कनीनिकारागः खलु नीलिमालयः ।

निष्ठास्तिमिरं न पश्यन्ति वा। तिमिरप्रख्याः तिमिरवत्प्रख्यायन्ते। मूलविभुजादित्वात् कः (पा० ३ । २ । ५ । वा० २ ।) ॥ १०६ ॥

तदक्षरैरिति। विदर्भजा इहास्यां सभायां एतदीयवचनविषये वाऽस्य वर्णितस्य नृपस्य हास्यं किमभूत् किंवा नाभूत् इति कारणात् स्वभावात्तमपि भूपं न्यभालयत् औदासीन्येन ससुखदृष्ट्या ददर्श न त्वनुरागादित्यर्थः। किं कृत्वा। अनुरागाभावेऽपि हास्यरसकृताभिरीक्षणभङ्गिभिः अवलोकनप्रकारविशेषैः तां सभां निपीय सादरमवलोक्य। किम्भूतां सभां। तस्याः सख्याः विष्णुपक्षनिषेध पर्यवसितैः पूर्वोक्तैरक्षरैः कृत्वा सस्मितानि सविस्मितानि साश्चर्याणि चाननानि यस्यास्तां। इह नृपेऽस्य हास्यं जातं न वेति वा। स्मितसहितां विगतस्मितत्वं विरुद्धं। विरोधाभासः ॥ १०७ ॥

नलेति। पतिव्रताया भैम्या नलान्यावलोकनमनुचितमित्याशङ्कां परिहरन्नुत्तरसर्गे वर्णयिष्यमाणस्य नलस्य प्रस्तावनां करोति। दमस्वसुः कनीनिका नेत्रतारा नलादन्यस्य नृपस्य

चकार सेवां शुचिरक्ततोचितां
मिलन्नपाङ्गः सविधे तु नैषधे ॥ १०८ ॥
दृशा नलस्य श्रुतिचुम्बिनेषुणा
करेऽपि चक्रक्लनम्रकार्मुकः ।

वीक्षामवलोकनरूपामागः अपराधं विदधे चक्रे । किम्भूता । खलु यस्मान्नीलिम्नः कालिम्नः आलयः स्थानं । मलिनो हि निषिद्धमाचरति । अपाङ्गस्तु कटाक्षः पुनः सविधे द्वितीयपङ्क्तौ चिचतुरेभ्योऽनन्तरमुपविष्टे नैषधे सत्यनले मिलन् सम्बद्धः सन् शुचिरक्ततोचितां धवलरक्तत्वयोग्यां सेवां चकार । धवलरक्तत्वलक्षणसामुद्रकलक्षणयुक्तोऽपाङ्गस्तु नल एव संलग्नोऽभूदित्यर्थः । अथ च शुचेः पापभीरोः अनुरक्तस्य च स्वभावेन उचितां स्वामिभक्तोचितां इति वा । स्वामिभक्तो हि स्वामिनमेव सेवते न त्वन्यमित्यर्थः । कटाक्षेणान्यावलोकने दोषः । ऋजुदृष्ट्या त्वन्यविलोकने दोषो नेति न पातिव्रत्यक्षतिः कापि । नलमेव कटाक्षैर्विलोकयति स्मेति भावः । इन्द्रादिषु चतुर्षु अलीकनलेषु सत्स्वपि सत्यनलत्वेऽजातेपि तत्रैव सत्यनले एवानुरागबाहुल्याददृष्टवशात् कटाक्षनिरीक्षणं युक्तं ॥ १०८ ॥

इदानीं श्लोकचतुष्टयेन परस्परानुरागं वर्णयति । दृशेति । ततो भैमीकटाक्षविलोकनानन्तरं स्वयमनङ्गोऽङ्गरहितः परस्य नलस्यैव दृगादिभिरङ्गैरवयवैर्धन्वितां धनुर्द्धरत्वं अनुकल्प्य आकर्णगामिना बाणकल्पेन चक्षुषा जनीं भैमीमार्दयदपीपिडत् ।

स्मरः पराङ्गैरनुकल्प्य धन्विनां
जनीमनङ्गः स्वयमार्दयत्ततः ॥ १०९ ॥
उत्कण्टका विलसदुज्ज्वलपत्रराजि-
रामोदभागनपरागतराऽतिगौरी ।

किंभूतः स्मरः। करे नलस्यैव हस्ते रेखामयराज्यादिलक्षणरूप-
चक्रलक्ष्मेन मग्नं चक्राकारं कार्मुकं यस्य सः। भैम्या कटाक्षैर्नले
वीक्षिते सति नलेन कटाक्षैर्वीक्षिता सा सती कामातुरा जातेति
भावः। मुख्याङ्गाभावे चानुकल्पोऽप्यङ्गीक्रियते। आर्दयत्।
अर्द हिंसायां ण्यन्ताल्लङ्। आर्दिददिति पाठे लुङ्॥ १०८॥

उत्कण्टकेति। सा भैमी रुद्रक्रुधः रुद्रकृतशापपरित्याग
समुद्भवात्कोपाद्भीताः तस्य रुद्रस्यारिः कामः तस्य बुद्ध्याऽयं
काम एवेति बुद्ध्या नले विषये वामस्य स्वयम्बरेण स्मितेरर्पिता
ऽभिलाषुकत्वं अद्भुत दधार। नले साभिलाषा जातेति भावः।
स्वयंवरमाश्रयणस्य युक्तमेव। केव। काञ्चनकेतकीव। किंभूता
सा केतकी च। उत्कण्टका उदितरोमाञ्चा उर्द्धीभूतसत्त्वोत्तुङ्ग्य
सा केतकी च। तथा विलसन्ती शोभमाना गौरपीतादिभिर्व-
र्णैरुज्ज्वला प्रकाशमाना उज्ज्वलेन शृङ्गारेण वा प्रकाशमाना
विलासकलादिशृङ्गारोपाया एवंभूता वा कस्तूर्यादिरचिता
कपोलवक्षोजादौ पत्रराजिः पत्रवल्ली पत्रपङ्क्तिर्यस्याः। शोभमा-
नोज्ज्वलवर्णपत्रपङ्क्तिश्च। तथा आमोदं विलेपजं सुरभिगन्धं स्वर्णा
वा स्वाभाविकं परिमलञ्च भजतीति भाक्। तथा अपगतोऽनु-

रुद्रक्रुधस्तदरिकामधिया नले सा
वासार्थितामधृत काञ्चनकेतकीव ॥ ११० ॥
तन्नालीकनले चलेतरमनाः साम्यान्मनागप्यभू-
दप्यग्रे चतुरः स्थितान्न चतुरा पातुं दृशा नैषधान् ।

रागो यस्या एवंभूता न भवति अतितरां अनपरागतरा । नले अतितरामनुरागिणी। न विद्यते परागः पुष्परजो यस्यामेवंविधा न भवति नितरां अनपरागा अनपरागतरा अतितरां परागसहिता । तथाऽतितरां गौरवर्णा उभय्यपि । गौरीं पार्वतीं अतिक्रान्ता वा भैमी । सुवर्णकेतकी यथा रुद्रकोपस्य वासः वसतिः तस्यार्थितां अभिलाषुकत्वं दधार तस्य स्थानं बभूवेत्यर्थः। तथा भैम्यपि नलविषये नलवैरिकामबुद्ध्या नलशत्रुः काम एवेति मन्मथसम्बन्धित्वेन मां पीडयतीति धिया रुद्रकोपस्यात्मनि यो वासस्तदर्थितां दधार। रुद्रकोपस्य स्थानं जाता नितरां सकोपा जातेत्यर्थः। काममाम्यं नलस्योक्तं । नलेन कटाक्षवीक्षणे कृते सातितरां कामपीडिता जातेति भाव इति वा । गौरीमतिक्रान्तेति तत्पुरुषे । गोस्त्रियोरुपसर्जनस्येति (पा० १ । २ । ४८)। ह्रस्वत्वप्राप्तेः अतिगौरिरिति स्यात्। तथापि कृदिकारादक्तिन इति (कौ० प० ३३ । पं० ३ । पा० ४ । १ । ४५ । वा०)। ह्रस्वान्तादपि पक्षे ङीषि अतिगौरीति सङ्गच्छते ॥ ११० ॥

तदिति । न अलीको नालीकः स चासौ नलश्च नालीकनलः सत्यनलः । स चासौ नालीकनलश्च तन्नालीकनलस्तस्मि-

आनन्दाम्बुनिधौ निमज्ज्य नितरां दूरङ्गता तत्तला-
लङ्कारीभवनाज्जनाय ददती पातालकन्याभ्रमं ॥ १११ ॥

अदृष्टवशघटितदर्पदर्शने सत्यनले चलेतरत् निश्चलं मनो यस्याः सा। तत्रैवानुरक्ता सती सा भैमी अग्रे स्थितानपि चतु-रश्चतुःसङ्ख्याकानल्लोकान् साम्यान् सत्यनलसाम्येन नलान् दृशा नयनव्यापारेण पातुं कटाक्षैर्विलोकयितुं मनागत्यल्पमपि चतुरा कुशला नाभूत्। किंभूता। आनन्दाम्बुनिधौ आनन्दरूपे समुद्रे निमज्ज्य क्रीडित्वा नलावलोकनान्निश्चला भूत्वेति यावत्। नितरां दूरङ्गता हर्षस्य परमकाष्ठां प्राप्ता तल्लङ्गता च। तथा तस्यानन्दसमुद्रस्य तलं तस्यालङ्कारीभवनाज्जनाय पाताल-कन्याभ्रमं अतिसौन्दर्यादानन्दवशाच्च निर्निमेषतया समुद्रे निमज्ज्य तलगमनेन च किमियं नागकन्येति भ्रमबुद्धिं ददती जनयन्ती। अलङ्कारीभवने इति पाठे तस्य तलस्य भूतलस्य उपवेशनेनालङ्कारभूतायेन्द्रादिलोकाय तल्लक्षणाय जनाय वा पातालतलस्यालङ्कारीभवने वासुक्यादिनागलोकाय वा पुरःस्थितान्नलाकारानपीन्द्रादीनन्यराजवदतुच्छैव विलोकयति स्म। अदृष्टवशाच्च व्यवहितमपि सत्यनलं कटाक्षैर्विलोकयति स्मेति भावः। तन्नलेतिपाठे तेषामल्लोकनलानां इदानीं स्वीयेन रूपेणालङ्कारभूताय जनाय सत्यनलायेत्यर्थः ॥ १११ ॥

सर्व्वस्वं चेतसस्तां नृपतिरपि दृशे प्रीतिदायं प्रदाय
प्रापत्तद्दृष्टिमिष्टातिथिममरदुरापामपाङ्गोत्तरङ्गां ।
आनन्दान्ध्येन बन्ध्यानकृत तदपराकूतपातान् स रत्याः
पत्या पीयूषधारावलनविरचितेनाशुगेनाशु लीढः ॥ ११२ ॥

सर्व्वस्वमिति ॥ स नृपतिर्नलोऽपि चेतसः सर्व्वस्वं प्राणवल्लभां तां भैमीं दृशे स्वनेत्राय प्रीतिदायं सन्तोषजनितं दानं प्रदाय प्रकर्षेण दत्त्वा कटाक्षेण अतिसादरं दृष्ट्वा अमरदुरापां इन्द्रादिभिर्दुर्लभां लोकोत्तरस्वरूपां अथच तेषां कटाक्षेणानवलोकनात्तैर्दुरापां अपाङ्गे नेत्रप्रान्ते उत्तरङ्गां चलत्कल्लोलां अतिचञ्चलां कटाक्षरूपां तद्दृष्टिं भैमीदृष्टिमेव इष्टातिथिं प्रियमभ्यागतं प्रापत् लेभे । भैम्या पूर्व्वं कटाक्षैर्विलोकितोऽनन्तरं तेन सा विलोकिता अनन्तरं पुनरपि तया स विलोकित इत्यर्थः । अनन्तरं च रत्याः पत्या कामेन पीयूषधारारूपमतिनि[illegible]पकत्वादमृतरूपं यद्वलनं भैमीकृतं वलितग्रीवमवलोकनं तेन कृत्वा विरचितेनाशुगेन भैमीकटाक्षरूपेण बाणेनाशु शीघ्रं लीढः विद्धः सः नलः तदपराः तस्या भैमीदृष्टेरपरेऽन्ये तृतीयादयो ये आकूतपाताः अनेकभावाभिव्यञ्जका व्यापारविशेषास्तान् आनन्दान्ध्येन हर्षाश्रुपरिपूर्णनेत्रतया यदान्ध्यं अदर्शनत्वेन बन्ध्यान् निष्फलान् अकृत । भैमीद्वितीयकटाक्षवीक्षणेनैवातितृप्तो कामविवशः संस्तस्यास्तृतीयादिकटाक्षनिरीक्षणानि न ददर्शेति भावः । अन्योऽपि तुष्टः कस्मैचित् सर्व्वस्वं ददाति अतिप्रियञ्चातिथिं प्राप्यानन्दबाष्पान्धो भवति ॥ ११२ ॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।
तस्य द्वादश एष मातृचरणाम्भोजालिमौलेर्महा-
काव्येऽयं व्यगलन्नलस्य चरिते सर्गो निसर्गोज्ज्वलः ॥११३॥

श्रीहर्षमिति । पूर्व्वार्धार्थः पूर्व्ववत् । माता वागीश्वरी जननी च तस्याश्चरणावेवाम्भोजे तयोरलिरूपो भ्रमररूपः मौलिर्यस्य । यद्वा मातृचरणसम्बन्धिनी पूजार्थं चरणयोरुपढौकिता अम्भोजालिः कमलमाला तद्युक्तो मौलिर्यस्य । वागीश्वर्य्या जनन्या वा प्रसादरूपेण धृतनिर्माल्यकस्येत्यर्थः । द्वादशानां पूरणः सर्गः व्यगलत् समाप्तः । स्वभावत उज्ज्वल इत्यर्थः ॥ ११३ ॥ इति श्रीवेदरकरोपनामक श्रीमन्नरसिंहपण्डितात्मजनारायणकृते नैषधीयप्रकाशे द्वादशः सर्गः ॥ शुभमस्तु ॥

---

त्रयोदशः सर्गः।

---

श्रीलक्ष्मीनृसिंहौ जयतः।

कल्पद्रुमान् परिमला इव भृङ्गमाला-
मात्माश्रयां निखिलनन्दनशाखिवृन्दात्।
तां राजकादपगमय्य विमानधुर्य्या
निन्युर्नलाकृतिधरानथ पञ्च वीरान्॥ १॥

इदानीं इन्द्रादिपञ्चनलीभञ्जं त्रयोदशं सर्गमवतारयते। कल्पद्रुमेति। अथ विमानधुर्य्याः शिविकावाहिनः तां भैमीं राजकाद्राजसमूहात् अपगमय्य निवर्त्त्य नलाकृतिधरान् नलवेषधारिणः पञ्च वीरान्नलसहितानिन्द्रादीन्निन्युः प्रापयामासुः। शिविकावाहिनां तेषु पञ्चसु नलोऽस्ति वा न वेति अपरिज्ञानात् नलस्यापि नलरूपधारकत्वं घटते। यस्य यद्रूपं तद्धारित्वं तस्यापि युक्तमेवेति काव्यापेक्षयापि युज्यते। वीरपदेन शौर्य्यं नायकगुणः। के। कस्मात्। कां। कानिव। परिमला मनोहराः गन्धाः समस्ताः नन्दनशाखिनो देवोद्यानतरवः तेषां वृन्दात् आत्माश्रयां परिमलाश्रितां भृङ्गमालां भ्रमरपङ्क्तिं परावर्त्त्य अतिशयान् कल्पद्रुमानिव। कल्पद्रुमा नन्दनस्थितवृक्षापेक्षया अधिकाः तथाऽन्यराजापेक्षया तेऽपीत्यर्थः। सर्व्वाभिलाषपूरकत्वसाम्यात्।

साक्षात्कृताखिलजगज्जनताचरित्रा
तत्राधिनाथमधिकृत्य दिवस्तथा सा
ऊचे यथा स च शचीपतिरभ्यधायि
प्राकाशि तस्य न च नैषधकायमाया ॥ २ ॥
ब्रूमः किमस्य वरवर्णिनि वीरसेनो-
द्भूतिं द्विपद्बलविजित्वरपौरुषस्य ।

मन्दारादिष्वपि चतुर्षु कल्पद्रुमशब्दप्रयोगः । भैम्या अप्यात्मा-श्रयविमाने स्थितत्वात् । नयतिर्द्विकर्मा ॥ १ ॥

साक्षादिति । सा देवी तत्र तेषु मध्ये प्राधान्यात्स्विवेक्ष-नक्रमानुरोधाच्च दिवोऽधिनाथमिन्द्रमधिकृत्योद्दिश्य तथा तेन प्रकारेणोचे अकथयत् । यथा येन प्रकारेण स शचीपतिरिन्द्र-स्याभ्यधायि उक्तो भवति । तस्येन्द्रस्य नैषधकायस्य माया कपटं न च प्राकाशि प्रकटितं भवति । किंभूता । साक्षात्कृतं अखिलजगतां जनताचरित्रं जनसमूहवृत्तान्तो यया सा । यथा इन्द्रादीनां प्राकट्यं न विष्णोराज्ञया वर्णनं च मौनित्वं प्रतिभाति यथा स तथाऽवोचदिति भावः । साक्षादिति विशेषणं सलरूपं कृत्वा आगतानामिन्द्रादीनां ज्ञानौचित्यं सूच्यते ॥ २ ॥

ब्रूम इति । हे वरवर्णिनि उत्तमे भैमि वयं अस्येन्द्रस्य वीराणां वा सेनायाः सैन्यस्य उद्भूतिं उत्कृष्टैश्वर्यं सामर्थ्यं बाहुल्यं वा किं ब्रूमो वर्णयामः । वर्णनाशक्यत्वादागमगोचर इत्यर्थः । किंभूतस्य । द्विषद्भिर्यो बलनामा दैत्यस्तस्य विजित्वरं जय-

सेनाचरीभवदिभाननदानवारि-
वासेन यस्य जनिताऽसुरभी रणश्रीः ॥ ३ ॥

मशीलं पौरुषं पराक्रमो यस्य। यस्य रणश्रीः सेनाचरीभवन्तौ सैनिकौ भवन्तौ यौ इभाननदानवारी गणेशनारायणौ तयोर्वासेनाधिष्ठानेन कृत्वा जनिता कृता असुरभीर्दैत्यभयं यया सा। असुरेभ्यो देवानां या भीस्तस्या ईरणं क्षेपणं तेन या श्रीः सा यस्य जनितेति वा। बाणगोचरोऽस्य चरितमित्यर्थः॥ नलप ... अस्य वीरसेनाख्यनृपादुत्पत्तिं किं कथयामः अपि तु न। अ ... ऽपि लोकत्रये प्रसिद्धत्वात्। स्वगुणैरेवास्य ख्यातत्वाद्वा। अन्यो ... यं न प्रसिद्धस्तस्य पित्रादिप्रसिद्ध्या वर्णनं क्रियते। अयं तु न ... ति भावः। किंभूतस्य। द्विषतां बलस्य सैन्यस्याङ्गिकस्य सत्त्वस्य ... -त्वरं पौरुषं पराक्रमो यस्य। यस्य रणश्रीः सेनाचरीभवन्तः ... -का इभास्तेषां आननदानवारि मुखदानोदकं तस्य वासेन ... न सुरभिर्जनिता। रलयोः सावर्ण्यात्सेनायामचलीभवतां ... -यमानानां इभानामिति वा। मत्तगजबाहुल्यमनेन सूच्यते। एवमिन्द्रनलयोरभेदबुद्धिर्यथा तस्या भवति तथा देवोक्तं। रणशब्दो लक्षणया रणभूमौ वर्त्तते। इतः श्लोकादारभ्यात्याजीति यावत् प्रथममिन्द्रादिवर्णनं पश्चान्नलवर्णनं। अत्याजीत्यादौ च नलवर्णनं प्राथम्येन दिक्पालवर्णनं पश्चादिति ज्ञेयम्। श्लोकादिष प्रथमत इति श्लोकेन नलस्य प्राधान्यनिर्देशाद्धुरिणेत्यादि तृतीयया दिक्पालानामप्राधान्यनिर्देशात्। उष्णास्पर्शवती

शुभ्रांशुहारगणहारिपयोधराङ्क-
लम्बीन्द्रचापखचितद्युमणिप्रभाभिः।

शीते शीतस्पर्शा तपात्यये। भर्तृभक्ता च या नारी सा स्यात् वरवर्णिनीति वृद्धाः। उत्तमा वरवर्णिनीत्यमरः। वरो वर्णो यस्या इति वा। अतिशायने धर्मशीलवर्णान्ताच्चेति इनिः (पा० ५। २। १३२) ॥ ७ ॥

शुभ्रेति। एष इन्द्रः समिति च यात्रासु विलासगतिषु च युद्धयात्रासु वा। अमरवाहिनीभिः सुरसेनाभिः अन्वास्यते अनुगम्यते। किं विधाभिः। शुभ्रांशुश्चन्द्रः हरसम्बन्धिनो हाराः एकादशरुद्रास्तेषाङ्गणः समूहः हरसम्बन्धिनो वा ये गणाः नन्दिप्रभृतयस्तान् सर्व्वानपि हरन्ति आत्मना सह नयन्ति तत्सदृशा इति यावत्। एवंविधाः पयोधरा मेघाः। हरस्यापत्यं हारः स्कन्दो गणपतिर्मेघाश्चेति वा। तेषामङ्कचुम्बी स्वामित्वा-न्मध्यवर्त्तीन्द्रः शुभ्रांशुहारगणान् हरत्यात्मना सह नयतीत्येवं शीलः पयोधराङ्कचुम्बी च एवंविधो वा य इन्द्रस्तस्य चापं तेन खचिता सम्बद्धा द्युमणिप्रभा सूर्य्यशोभा यासां ताभिः शुभ्रांश्वादिभिः शक्रधनुर्व्याप्तेन सूर्य्येण च प्रकर्षेण भान्ति ताभि-र्वा। तथा बहुः प्रचुरो लाभो धनादिप्राप्तिर्येषु रणेषु अर्चिता-भिः पूजिताभिः। दैत्यजयाद्धृष्टा आभा दीप्तिर्यासां तास्च ता रणार्चिताश्चेति वा। मेघानामपि कामरूपत्वात् सैनिकत्वं युज्यते। चन्द्रादिभिर्विशिष्टेन्द्रचापेन च खे आकाशे चिता वृद्धिं प्रापि-ता सूर्य्यशोभा यास्विति वा। तैः कृत्वा वृद्धिं प्राप्ता वा चन्द्राद-

अन्वास्यते समिति चामरवाहिनीभि-
र्यात्रासु चैष बहुलाभरणार्चिताभिः ॥ ४ ॥

यस्तेजस्विनस्तत्तेजःसम्बन्धेन सूर्यतेजः प्रचुरं यत्र जातमित्यर्थः ॥ नलपक्षे एष नलः सभायां दण्डयात्रासु च चामरधारिणीभिः अन्वास्यते सेव्यते। किंभूताभिः। शुभ्राः सिताः अंशवो यस्य तेन हारगणेन मुक्ताहारसमूहेन कृत्वा हारी सुन्दरः पयोधराङ्कः स्तनमध्यस्तच्चुम्बिनी तत्सम्बद्धा इन्द्रचापसम्बद्धसूर्यप्रभेव प्रभा यासां ताभिः। चोऽप्यर्थः। यात्रास्वपीति योजना। हारमध्य-गमणीनामनेकवर्णत्वादिन्द्रचापसम्बद्धसूर्यप्रभासाम्यं। तथा त एव बहुलानि प्रचुराणि आभरणानि तैरर्चिताभिरलङ्कृताभिः। प्राधान्याद्धाराणांग्रहणं। आभरणग्रहणं तद्व्यतिरिक्तालङ्का-राणां अतो न पौनरुक्त्यम्। एतेन यथा सभायां निर्भय आस्ते तथा सङ्ग्रामयात्रास्वपीति व्यज्यते। शुभ्र उद्दीप्तशुक्लयोः। युम-णिस्तरणिर्मित्रः। समित्युद्धे सभयाश्च इत्यमरः। हरशब्दात्तस्ये-दमित्यण् (पा० ४।३।१२०)। हारी। तात्च्छील्ये णिनिः। अपत्ये वा अत इञ् (पा० ४।१।९५)। यद्वा शुभ्रांशुहार-गणेन हारिणः पयोधराः स्तनास्तेषामङ्कः पार्श्वप्रदेशः तच्चुम्बी इन्द्रचापो नखपदविशेषस्तेन सम्बद्धा दिव्यरत्नप्रभा यासां ताभिः। इन्द्रचापवदाकाशव्याप्ता दिव्यमणिप्रभा यासां ताभि-रिति वा। चित्रमणिप्रभासम्वलिताः शक्रधनुःसदृशा भवन्तीति बहुलैराभरणैर्भूषिताभिरित्यर्थः। खच दीप्तिसंवरणयोः ॥ ४ ॥

क्षोणीभृतामतुलकर्कशविग्रहाणा-
मुद्दामदर्पहरिकुञ्जरकोटिभाजां।
पक्षच्छिदामयमुदग्रबलो विधाय
मग्नं विपक्षजलनिधौ जगदुज्जहार ॥ ५ ॥

क्षोणीति। इति पद्यं क्वचित्पुस्तके दृष्टं। तस्यायमर्थः। अयं क्षोणीभृतां पर्व्वतानां पक्षच्छिदां विधाय कृत्वा विपक्षजलनिधौ आपत्समुद्रे मग्नं पक्षसहितैः पर्व्वतैः सञ्चूर्णीकरणाज्जगदुज्जहार उद्धृतवानित्यर्थः। पर्व्वतपक्षच्छेदनादिपद्रहितं कृतवानिति भावः। किम्भूतानां। अतुला अतुल्याः कर्कशाश्च विग्रहा देहा येषां। तथा उद्दामदर्पाणां अत्युद्धटानां हरिकुञ्जराणां सिंहहस्तिनां कोटिं भजतां। एकस्मिन् प्रदेशेऽनेकसिंहानामनेकाभिमतोद्धटानामनेककुञ्जराणामित्यर्थः। किम्भूतोऽयं। बलाढ्यत्वादुदग्रः उदग्रबलः। यद्वा उदग्रं पौरुषं यस्य सः॥ नृपपक्षे अतुल्यानत्युग्रान् सङ्ग्रामांश्च कर्कशान् ... ... ... ये सन्ति एवंविधा विग्रहाः ... ... वा येषां। तथा उद्दामदर्पा हरयोऽश्वा गजाश्च तेषां कोटिं भजतां। वैरिनृपाणां पक्षच्छिदां सहायच्छेदं ... च्छेदं वा कृत्वा उदग्रं बलं पौरुषं सैन्यं वा यस्य। अयं नृपो वैरिकृतापत्समुद्रे मग्नं जगदुज्जहार। वैरिणो हत्वा आपद्रहितमकरोदित्यर्थः॥ ५ ॥

भूमीभृतः समिति जिष्णुमपव्ययायं
जानीहि न त्वमघवन्तममुं क्वचित्।

भूमीभृत इति। हे घटस्य प्रतिभटौ स्पर्द्धिनौ स्तनौ यस्या-स्तत्सम्बुद्धिः। हे भैमि त्वं समिति सङ्ग्रामे भूमीभृतः पर्वतान् जिष्णुं जेतारं। तथा न विद्यते पर्व्ववज्रस्य अपायो नाशो यस्य। तममुं अमघवन्तमनिन्द्रं न तु नैव जानीहि अपि त्विन्द्र एवायं। इन्द्रस्य सहस्रनेत्रत्वान्नायं तथेत्यत आह। त्वं एतदीयं शयं पाणिमतिक्रान्तं प्रसृतादपि दीर्घं अत एवाद्भुतमाश्चर्य्यकारि कथञ्चिद् गुप्तं नलरूपधारणाच्छादितं बहुनेत्रस्य भावो बाहुनेत्रं नालोकसे न पश्यसि गुप्तत्वान्न तु अविद्यमानत्वादित्यर्थः। शयावतिक्रान्तं प्रमाणमतिक्रान्तं पाणि न सन्तीत्यर्थ इति वा। बहुनेत्रमभूत् बाहुनेत्रसम्बन्धिनमेतदीयमतिशयमुत्कर्षं वाश्चर्य्यमिति वा। नलपक्षे त्वममुं अघवन्तं सपापं न जानीहि पुण्यश्लोकत्वात्। रणे राज्ञा जेतारं। तथापगतो विशिष्टोऽपायो यस्मात्तं। रणे अपगतो व्यपायः पलायनं यस्मात् अपलायमानमित्यर्थः। एतदीयं अतिशयमपरिमितहस्तपरिमाणमाश्चर्य्यरूपं प्रावरणवशादाहो हस्ते स्थितं नेत्रं चीनांशुकं गुप्तं यथा तथा द्रव्यान्तरविलोकनव्याजेन नालोकसे अपि त्वालोकयेत्यर्थः। बाहू च नेत्रे च बाहुनेत्रं। शयमतिक्रान्तं बाहू हस्तपरिमाणाधिकपरिमाणौ नेत्रे च प्रसृतादप्यधिकेत्यर्थः। तद्गुप्तं यथा तथा नालोकसे अपि त्वालोकयेति वा। अतिशयं बाहुनेत्रं बाहू अतिशयितौ वदान्यौ शयौ ययोस्तावतिशयौ। नेत्रे च शयमतिक्रान्ते अतिशयौ च।

गुप्तं घटप्रतिभटस्तनि बाहुनेत्रं
नालोकमेऽतिशयमद्भुतमेतदीयम् ॥ ६ ॥
लेखा नितम्बिनि बलादिसमृद्धराज्य-
प्राज्योपभोगपिशुना दधते सरागं।
एतस्य पाणिचरणं तदनेन पत्या
सार्द्धं शचीव हरिणा मुदमुद्वहस्व ॥ ७ ॥

प्रतिशयं चेति नपुंसकेऽशेषेण वा व्याख्येयं। एतदीयं गुप्तमनेन रक्षितं। बहवश्च ते नेतारश्च बहूनां वा नेतारस्तेषां समूहः अतिशयितो हस्तो यस्य। लक्षणया वदान्यं उत्कृष्टमालोकय। शूरा वदान्या अप्यनेन पोषिता इत्यर्थान्तरमत्र व्यज्यते। कुलिश-भिदूरूपः। इत्यमरः। नेत्रं पथि गुणे च स्यादिति विश्वः। जिष्णुः। ग्लाजिस्थश्च ग्स्नुरिति ताच्छीलिके ग्स्नुः। (पा० ३।२।१३९)। तद्योगे ऊसमौषुत इति न लोकेति (पा० २।३।६९)। षष्ठीनिषेधात् द्वितीया। बहुनेत्रशब्दात् भावसमूहमनयोः ष्यञ् (पा० ४।२।३७)। पक्षे प्राण्यङ्गत्वादेकवद्भावः (पा० २।४।२)॥ ६॥

लेखा इति। हे नितम्बिनि प्रशस्तनितम्बे भैमि बलादीनां बलवृत्रनमुचिप्रभृतीनां समृद्धं सम्पूर्णं राज्यं राजभावः तस्य प्राज्यो बहुः उपभोगस्तस्य पिशुनास्तत्सूचनाः लेखा देवाः एतस्येन्द्रस्य पाणी च चरणौ च पाणिचरणं सरागं सानुरागं यथा तथा दधते धारयन्ति। हस्तनादात्पाणिं नमस्कारार्थं च चरणावित्यर्थः। तत्तस्मादनेन हरिणेन्द्रेण पत्या सार्द्धं शचीव

आकर्ण्य तुल्यमखिलां सुदती लगन्ती-
माखण्डलेऽपि च नलेऽपि च वाचमेताम्।
रूपं समानमुभयत्र विगाहमाना
श्रोत्रान्न निर्णयमवापदसौ न नेत्रात्॥ ८॥

मुदमुद्वहस्व धारस्व॥ नलपक्षे मरागमरूणं एतस्य पाणिचरणं कर्तृ सैन्यस्वाम्यमात्यादिभिः षड्विधेन वा बलेन समृद्धस्य राज्यस्य प्राज्य उपभोगस्तस्य सूचिका सामुद्रिकोक्तलक्षणभूताः ध्वजादिलेखाः कर्मभूताः दधते धारयति। दध धारणे एकवचनान्तमस्मिन् पक्षे रूपं। तस्मादनेन पत्या नलेन सह हर्षं धारयस्व। केन केव। हरिणेन्द्रेण शचीव। लेखा अदितिनन्दनाः। पिशुनौ खलसूचकावित्यमरः। नितम्बशब्दादतिशयार्थादिनिः (पा॰ ५।२।१३२)। पाणिचरणं। प्राण्यङ्गत्वादेकवद्भावे षण्ढत्वं (पा॰ २।४।१७)॥ ७॥

आकर्ण्येति। असौ सुदती भैमी एतां पूर्वोक्तां अखिलां वाचमाखण्डलेऽपि च नलेऽपि च तुल्यं लगन्तीं समानसम्बन्धामाकर्ण्य उभयत्र इन्द्रे नले च समानं रूपं ऐक्यरूपञ्च विगाहमाना जानती विशेषावलोकनादपि विशेषमनुपलभमाना यथाक्रमं श्रोत्राच्छ्रवणेन्द्रियात् नेत्राच्चक्षुरिन्द्रियाच्च निर्णयं नावापत् न प्राप। अनयेन्द्रः स्तुतः किंवा नलः। तयोः सरूपत्वादयमिन्द्रो नलो वेति नाज्ञासीदित्यर्थः। अपि चेति समुदायौ परस्परसमुच्चयवाचकौ। अवापत्। लृदित्वादङ्॥ ८॥

शक्रः किमेष निषधाधिपतिः स वेति
दोलायमानमनसं परिभाव्य भैमीम् ।
निर्द्दिश्य तत्र पवनस्य सखायमस्यां
भूयोऽब्जजङ्गगवती वचसां स्रजं सा ॥ ९ ॥
एष प्रतापनिधिरुद्गतिमान् सदायं
किं नाम नार्जितमनेन धनञ्जयेन ।

शक्र इति । सा भगवती सरस्वती भूयः पुनरपि वचसः स्रजं वाङ्मालां असृजत् । किं कृत्वा । तत्र तेषु मध्ये अस्यां भैमीसमीपे पवनस्य सखायमग्निं निर्द्दिश्याऽऽदिश्य । पुनः किं कृत्वा भैमीं इति दोलायमानं दोलेव भवत् मनो यस्यास्तां परिभाव्य सञ्चिन्त्य । इति किं । एष किं शक्रः सत्यं कृष्णः निषधाधिपतिर्नलो वेति दोलेवाचरति । कर्त्तुः क्यङ् सलोपश्चेति (पा० ३ । १ । ११) । क्यङि शानचि दोलायमानमिति । अस्यां सामीपिक आधारः ॥ ९ ॥

एष इति । हे भैमि एष प्रतापस्य निधिः प्रकृष्टाग्रमार्गस्थानं । तथाऽयं सदा उद्गतिमानूर्द्ध्वगमनयुक्तः ऊर्द्ध्वज्वलनोऽयमित्यर्थः । धनञ्जयेन वह्निनाऽनेन किं नाम का सञ्ज्ञा नार्ज्जितं न प्राप्तं । अग्निर्वैश्वानरो वह्निरित्यादिकं नाम निर्वचनयोगात् प्राप्तमित्यर्थः । सर्व्वेषामपि नाम्नां निर्वचनसत्त्वेव । नाम सम्भावनायां अग्निनाऽनेन किं नाम वस्तु न प्राप्तं । तैजसानां परमाणूनां सर्व्वत्राविरलत्वेन विद्यमानत्वादिति वा । अनेन धनञ्ज-

हेम प्रभूतमधिगच्छ शुचेरमुष्मान्
नास्त्येव कस्य च न भास्वररूपसम्पत् ॥ १० ॥

यशब्देन कृत्वा सार्थकं नाम किं नार्ज्जितमिति वा। धनञ्जयत्वा-देतस्य त्वं शुचेरग्निरित्यादमुष्मादग्नेः प्रभूतं बहु हेम स्वर्णमधिगच्छ प्राप्नुहि। धनमिच्छेद्धुताशनादित्युक्तेः। अग्नेरपत्यं प्रथमं सुवर्ण-मिति श्रुतेः। अस्मात् सुवर्णं प्रथममुत्पन्नं। अस्यैवाग्नेरिव कस्य च न कस्यापि भास्वरा देदीप्यमाना रूपसम्पन्नास्ति तेजोमात्र-विवक्षया। तेजोव्यतिरिक्तस्य कस्य च न शुक्लं भास्वरं रूपं दृष्ट-मित्यर्थः॥ नलपक्षे एष नलः क्षात्त्रतेजःस्थानं। तथा सदोदयवान्। तथाऽनेन जयेन कृत्वा किं नाम धनं नार्जितं वैरिणा विजित्य धनमर्जितं। दायो दानं तेन सहितमिति वा। एतेन धनार्जनस्य स्वोपभोगः फलं न किन्तु दानमेव मुख्यं फलं वदान्यत्वं च सूचितं। सदा अयः शुभावहो विधिर्यस्मादिति वा। शुचेः स्वधर्म्मोपार्जितद्रव्यादमुष्मात्प्रचुरं सुवर्णं प्राप्नुहि। शुचेः शृङ्गा-ररूपादिति वा। अस्य नलस्येव भास्वरा कायकान्तिसमृद्धिः कस्याप्यन्यस्य नास्ति। भा दीप्तिः स्वरः कण्ठशब्दः रूपं सौन्दर्य्यं तेषां सम्पदस्येव कस्यापि नास्तीति वा। तेजस्वी मधुरस्वरः सुन्द-रश्चेत्युक्तं। वीतिहोत्रो धनञ्जयः। शुचिरप्पित्तसौर्वस्तु इत्यमरः। धनञ्जयः। सञ्ज्ञायां भृतवृजीत्यादिना खच् (पा० ३।२। ४६)। अरुर्द्विषदिति मुम् (पा० ६।३।६७)। भास्वरं। स्थेश-भासेति वरच् (पा० ३।२।१७५)॥ १०॥

अत्यर्थदहनपटुनाकवलीभवन्ति
त्पार्थिवाधिकरणप्रभवस्य भूतिः।
अप्यङ्गरागजननाय महेश्वरस्य
सञ्जायते रुचिरकर्णि तपस्विनोऽपि ॥ ११ ॥

अत्यर्थेति। हे रुचिरकर्णि शोभनश्रवणेन्द्रिये भैमि यस्याग्नेरत्यर्थोऽतिशयितदहनपटुना ज्वालापाटवं तस्य कवलीभवन्ति ग्रासीभवन्ति तानि तानि पार्थिवानि पृथिवीकार्याणि तृणकाष्ठकरीषादीनि तान्येवाधिकरणं भस्मन एवाधारः ततः प्रभव उत्पत्तिर्यस्याः एवंविधा भूतिर्भस्म तपस्विनोऽपि पाशुपतादिव्रतनिष्ठस्य महेश्वरस्य शिवस्याङ्गरागजननाय उद्धूलनेनाङ्गानां विशिष्टवर्णोत्पत्तये सञ्जायते सम्पद्यते। एतत्सम्बन्धि भस्मापि ईश्वरस्य तपस्विनोऽपि उपकर्त्तुं प्रभवति अन्यस्य भवतीति किं वक्तव्यमिति स्तुतिः। रुचिरकर्णीति एषा किञ्चातुर्यविषये सावधाना भवति व्यज्यते। एतद्गुणं भस्मैव केवलं नान्यत्किञ्चिदिति विचार्य वृणीष्वेति व्यज्यते। नलपक्षे अङ्ग रुचिरकर्णि अस्य नलस्य भूतिः सम्पत् महेश्वरस्य महाधनिकस्यापि त्यक्तसर्वसङ्गस्य मुनेरपि च अभिलाषसमुद्भूतये सम्पद्यते। ममेदृक्सम्पद्भूयादिति धनिकाः मुमुक्षवोऽपि अस्य भूतये स्पृहयन्तीत्यर्थः। धनिकस्य तपस्विनोऽपि ईर्ष्याजननाय सम्पद्यत इति वा। किम्भूता सम्पत्। अतिशयेनात्यन्तपटुतया मोचापसंहारादिमन्त्रप्रयोगसामर्थ्येन ग्रासीभवन्तस्ते च ते पृथ्वीश्वराश्च तेषामधिकः

एतन्मुखा विबुधसंसदसावशेषा-
माध्यस्थ्यमस्य यमतोऽपि महेन्द्रतोऽपि।

रणस्तस्मादुत्पन्ना। स प्रभव उत्पादको यस्या इति वा। चात्र-तेजसापार्जितेत्यर्थः। रागोऽनुरक्तो मात्सर्य्यं। हेतिर्ज्वालायुधेऽपि च। पार्थिवेति। तस्येश्वर इत्यधिकारे (पा० ५।२।४२)। सर्व्वभूमीत्यण् (पा० ५।१।४१)। रुचिरकर्मेति। नासिकोदरेति (पा० ४।१।५५)। ङीष्॥ ११॥

एतदिति। हे पिकमुखि अशेषा सर्व्वाऽसौ विबुधसंसत् देवसभा एष एव मुखं यस्याः सा। अग्निमुखा वै देवा इति श्रुतेः। अस्याग्नेर्यमतोऽपि महेन्द्रतोऽपि माध्यस्थ्यं आसनापेक्षया दिगपेक्षया च मध्ये विद्यमानत्वं अस्ति। त्वं महस्विनं तेजोयुक्तं महस्सु तेजस्सु विषये इनं स्वामिनं चैनं उपेहि प्राप्नुहि। येन सदारुणा काष्ठसहितेनामुना करश्रीः किरणशोभा उद्वैरुद्धा रक्ता वाध्रियते। पिकमुखीति सम्बुद्ध्या धन्यत्वं व्यज्यते। धन्या पिकमुखी कन्या धन्या मातृमुखः सुत इति सामुद्रिकोक्तेः॥ नलपक्षे असौ जगति प्रसिद्धा पुरो दृश्यमाना च निखिला विद्वत्सभा एतन्मुखा एतत्प्रधाना। यथा सर्व्वेष्वङ्गेषु मुखं प्रधानं तथा विद्वत्सभायामसौ। के विबुधा इति पृष्टे प्रथमससौ गण्यत इत्यर्थः। पुण्यश्लोकत्वात्। एष मुखो यस्यास्तादृशीति वा। अस्य यमतः समवर्त्तिनोऽपि इन्द्रादप्यधिकं माध्यस्थ्यं व्यज्यते। पक्षपातरहितत्वं शत्रुमित्रयोस्तुल्यदण्ड इत्यर्थः। तसेः सार्व्वविभक्तिकत्वाच्छाकपार्थिवत्वादिन्द्रयमयोरेतन्मध्यवर्त्तित्वं इति केचित्। तेजस्विनमेनं

एनं महस्विनमुपैहि सदारुणोच्चै-
र्येनामुना पितृमुखि ध्रियते करश्रीः ॥ १२ ॥
नैवाल्पमेधसि पटोर्रुचिमत्त्वमस्य
मध्येसमिन्निवसतो रिपवस्तृणानि ।

एनमिति । येनानेन सदा सर्व्वदा हस्तशोभा अतिशयेनारुणा रक्ता धार्य्यते । स्विनं शोभनं पतिमेनं मह पूजय । तथा एनमुपैहि एतत्समीपं गच्छेति वा । महस्विनमुत्सववन्तं वा । विश्वप्रकाशे सकारान्तस्य महःशब्दस्य पाठात् । मुखं मुख्ये च वक्त्रे स्यादित्यजयपालः । पिता मुखं यस्या इति समासे मुखेनैव मुखस्य सादृश्यात् पितृमुखमिव मुखं यस्या इत्यत्र पर्य्यवस्यति ॥ १२ ॥

नैवेति । एधसि काष्ठे पटोर्ज्ज्वल्यमानस्यास्याग्नेः रुचिमत्त्वं दीप्तियुक्तत्वं अल्पं नैव किन्तु बह्वित्यर्थः । ज्वल्यमानस्यास्य इन्धने दीप्तिमत्त्वं अल्पं नैव तत्सम्बन्धादधिकं दीप्तिमानयं भवतीत्यर्थ इति वा । तथा मध्ये समित् समिधां काष्ठानां मध्ये निवसतो विद्यमानस्य तृणानि रिपवः शत्रवः । रिपुनाशो यथा वेगेन क्रियते तथा सम्बद्धेनानेन तानि क्षणमात्रेण दह्यन्त इत्यर्थः । प्रादेशमात्राणां पलाशशम्यादिकाष्ठानां मध्य इति वा । इह लोके समिन्मध्ये वा उत्थानवान् ऊर्द्धं ज्वलन् तरस्वी वेगवानयं विरोधिना केन उदकेन पराभवितुं पुनः शक्यो भवति तेनैव शान्तिमेति नान्येनेत्यर्थः । जय्यो भवति अपि तु न । वेगेनोत्थितस्यास्य वा-

उत्थानवानिह पराभवितुं तरस्वी
शक्यः पुनर्भवति केन विरोधिनायं ॥ १३ ॥
साधारणीङ्गिरमुषर्बुधनैषधाभ्या-
मेतां निपीय न विशेषमवाप्नव

रिणापि शक्तिः कर्त्तुमशक्येत्यर्थ इति वा॥ नलपक्षे पटोर्ग्रहण-धारणादिसमर्थस्यास्यमेधसि मन्दप्रज्ञे रुचिमत्त्वं प्रीतियुक्तत्वं नैव अयोग्यत्वात्तस्येति भाव इत्यर्थः। तथा समित्मध्ये सङ्ग्राममध्ये निवसतोऽस्य वैरिणस्त्राणानि अकिञ्चित्करा इत्यर्थः। इह रणे भूलोके वा तरस्वी उत्थानवान् वेगवान् बलवान् वायं केन रिपुणा जेतुं शक्योऽपि तु न केनापि। कस्याप्यजय्योऽयमित्यर्थः। उत्थानमुदयः इदंसदृशोऽपि उदयी बलवांश्च नास्तीत्यर्थः। भवतीति सम्बोधनं वा। तरो बले च वेगे च। इध्मेधः समिदित्यमरः। अल्पमेधसि। नित्यमसिच्प्रजामेधयोरित्यच् (५।४।१२२)। नित्यग्रहणादन्यस्मादपि भवतीति वृत्तिकारोक्तेः प्रयोगानुसारेण असिच्। मध्ये समित्। पारे मध्ये षष्ठ्या वेति (पा० २।१।१८) अव्ययीभावे निपातनादेत्त्वम्। झय इति (पा० ५।४।१११)। वैकल्पिकत्वाट्टजभावः। पराभवितुं। शकधृषेति (पा० ५।४।६५)। अक्रियार्थत्वेऽपि शकियोगात्तुमुन् ॥ १३ ॥

साधारणीमिति। उषर्बुधनैषधाभ्यां अग्निनलाभ्यां साधारणीं समामेताङ्गिरं निपीयाकर्ण्य इदमीयमनयोः सम्बन्धिनं

ऊचे नलोऽयमिति सम्प्रति चित्तमेकं
ब्रूते स्म चान्यदनलोऽयमितीदमीयं ॥ १४ ॥

विशेषं तारतम्यं न अवाप्नुवत्या प्राप्तवत्या भैम्याः पुरोवर्त्तिनं तं प्रति एकं चित्तं मनः अयं नल इत्यूचे अन्यदपरं चित्तं अयमनल इति ब्रूते स्म। नलव्यतिरिक्तोऽयं च वह्निरित्यकथयत्। युगपदालोचनस्यातिप्रसङ्गान्मनसः प्रति शरीरमेकत्वस्य साधितत्वादेकस्मिन्नपि मनसि क्रियाभेदादवस्थान्तरप्राप्तेर्भेद इवोपपद्यते। एकमेव तं पुरोवर्त्तिनं अनल इति प्रत्यूचे। अकारप्रश्लेषेणानलोऽयमिति ब्रवीति स्म मनः। तथा अयमन्यान् वैरिणो द्यति अवखण्डयति अन्यद् स चासौ नलश्चेति च ब्रूते स्म। अत्र व्याख्याने प्रथमस्य चित्तक्रमभङ्गोऽपि न भवति। एकस्य द्वैरूप्यादिविरोधाभासस्य। शोचिष्केश उषर्बुध इत्यमरः। उषसि बुध्यत इति उषर्बुधः। इगुपधेति कः (पा० ३।१।१३५) अहरादीनामिति रेफः (पा० ८।२।७० वा० १)। तुल्यार्थैरिति तृतीया। (पा० २।३।७२)। अन्यदेति पचे कः। समानं साधारणमस्य साधारणं अनेकं प्रत्यविशिष्टं सम्बन्धं। पृषोदरादिः। ततस्त्रियां पादार्घाभ्यां चेत्यत्र (पा० ५।४।२५)। आग्नीध्रसाधारणादञिति वार्त्तिकादञि ङीष् वा। प्रकरणाच्च साधारणभूमिरित्यादादिव अत्रापि घटते। इदमीयं त्यदादित्वात् छः (पा० ४।२।११४) ॥ १४ ॥

एतादृशीमथ विलोक्य सरस्वती तां
सन्देहचित्रभयचित्रितचित्तवृत्तिम्।
देवस्य सूनुमरविन्दविकासिरश्मे-
रुद्दिश्य दिक्पतिमुदीरयितुं प्रचक्रे ॥ १५ ॥
दण्डं बिभर्त्त्ययमहो जगतस्ततः स्यात्
कम्पाकुलस्य सकलस्य न पक्षपातः।

एतादृशीमिति। अथ सरस्वती अरविन्दविकासिनः कमलविकाशकरा रश्मयः किरणा यस्य देवस्य रवेः दिक्पतिं दक्षिणदिशः पतिं सूनुं अन्येषां पुत्राणां दिक्पतित्वाभावाद्यमं उद्दिश्य उदीरयितुं वक्तुं प्रचक्रे आरेभे। किं कृत्वा। एतादृशीमुक्तसंशयास्पदीभूतां तथा नलनिश्चयाभावात् सन्देहः। तुल्यरूपदर्शनाद्देवयुक्तिचातुर्य्याद्वा चित्रं। नलनिश्चयाभावान्नलप्राप्तिविघ्नात्त्रासः तैः संशयाश्चर्य्यत्रासैः चित्रिता नानाविधाकृता चित्तवृत्तिर्यस्याः सा। एवंविधां तां भैमीं विलोक्य। चित्तभित्तिमिति पाठे चित्तमेव भित्तिर्यस्याः। भित्तौ हि चित्रं युक्तमित्यर्थः। एषेव दृश्यत इत्यर्थः। एतादृशीत्यदादिषु दृश इति कञि (पा० ३। २। ६०)। आसर्व्वनाम्न इत्यात्वे (पा० ६। ३। ९१)। टिड्ढेति ङीपि (पा० ४। १। १५)। एतादृशीति सिद्धं ॥ १५ ॥

दण्डमिति। अहो सम्बोधने अयं यमो दण्डं स्वायुधं बिभर्त्ति तत्तस्माद्धेतोः पुराणादिदर्शनेन कम्पाकुलस्य पाप-

स्वर्व्वैद्ययोरपि मदव्ययदायिनीभि-
रेतस्य रुग्भिरमरः खलु कश्चिदस्ति ॥ १६ ॥

भीरोः सकलस्य जगतो भुवनस्य पङ्कपातो दुःखं न स्यात् भवेत्। पङ्के महारौरवादौ नरके वा एतद्भयात् पापं कोऽपि न करोतीत्यर्थः। अहो आश्चर्य्यं। अन्यो यष्टिं धारयति अन्यस्य च कम्पमानस्य कर्द्दमपातो न भवतीत्यसङ्गतिः। तथा चिकित्सा-सामर्थ्याः स्वर्व्वैद्ययोर्दस्रयोरपि मदव्ययदायिनीभिः गर्व्वक्षयं कुर्व्वाणाभिरेतस्य रुग्भिः प्राणिकर्म्मविपाकदर्शनेनानेन प्रेरिताभिः पीडाभिः न म्रियत इत्यमरः कश्चित् किमस्ति अपि तु न कोऽप्यस्ति। कर्म्मजरोगाणां ताभ्यामप्यचिकित्स्यत्वादित्यर्थः। स्वर्व्वैद्ययोरपि नाम रुजापनयनसामर्थ्यमस्मात्सूचनार्थं॥ समपक्षे अयं नलो दण्डं शासनं यतो बिभर्त्ति ततः शासनभयात्कम्पाकुलस्य सकलस्यापि लोकस्य पङ्कपातो न भवेत् पूर्व्ववदे-तस्माद्भयात् अयं दण्डं चतुरङ्गमेन्यं बिभर्त्ति ततः शत्रुभयात् कम्पाकुलस्य लोकस्य पङ्कपातः दुःखपातो न भवेत् सैन्येनैव वैरिणां निहतत्वाल्लोकस्य दुःखनाश इति वा। सौन्दर्य्येण प्रसिद्धयोर्नासत्ययोरपि गर्व्वक्षयकारिणीभिरस्य रुग्भिः कायकान्तिभिरुपलक्षितोऽयं देवोऽपि कश्चिदस्ति किम् अपि तु नास्ति। देवेषु मध्ये दस्रावेव सुन्दरतमौ तावप्यनेन जितौ यतः। ये त्वेतत्समीपस्थाः रमणीयास्त एतद्रूपधारणादेव न तु स्वभावेने-त्यर्थः। पङ्कोऽस्त्री शादकर्द्दमौ। अस्त्री पङ्कं पुमान् पाप्मा। रुः

मित्रप्रियोपजननं प्रति हेतुरस्य
सञ्ज्ञा श्रुताऽसुहृदयं न जनस्य कस्य।
छायेदृगस्य च न कुत्रचिदध्यगामि
तप्तं यमेन नियमेन तपोऽमुनेव॥ १७॥

प्रभारुग्रुचिस्त्विड्भा इत्यमरः। स्त्रीरुग्पूजाद्युतिः शोभा इति मेदिनी। दायिनीभिरिति ताच्छील्ये णिनिः॥ १६॥

मित्रेति। अस्य यमस्योपजननं उत्पत्तिम्प्रति सञ्ज्ञा नाम्नी मित्रप्रिया सूर्य्यपत्नी हेतुर्निमित्तं श्रुता आकर्णिता। छाया-नाम्नी तु कुत्रचित् कुत्रापि पुराणादौ ईदृगस्योत्पत्तिं प्रति हेतुर्नाध्यगामि नाश्रावि। किन्तु शनैश्चरस्यैवेत्यर्थः। यमो यमी श्राद्धदेवः सञ्ज्ञायामजनयास्त्वय इति पुराणं। अयं यमः कस्य जनस्य असुहृत्प्राणहर्त्ता न अपि तु सर्व्वस्यापि प्राणहर्त्ता। अमुना यमेनैव नियमेन नक्तोपवासादिव्रतेन कृत्वा तपस्तप्तं धर्म्मः कृतः। अत एवास्य पुत्रत्वं धर्म्मराजत्वं चेत्यर्थः॥ नलपक्षे अस्य नलस्य सञ्ज्ञा नाम श्रुता सती मित्रप्रियस्य सुहृदिष्टस्योपजननं प्रति उत्पादनं प्रति हेतुः। अस्य सञ्ज्ञा सुहृदिष्टजननं प्रति हेतुः। श्रुता ख्यातेत्यर्थ इति वा पुण्यश्लोकत्वात्। अयं कस्य सुहृन्मित्रं न अपि तु सम्यक्परिपालनादुपकारित्वाद्वा सर्व्वस्यापि सुहृदेव। ईदृक् प्रत्यक्षे दृश्या अस्य छाया कायकान्तिः कुत्रापि नरसुरोरगेषु नाध्यगामि न दृष्टा। सुन्दरतरोऽयमित्यर्थः। छाया रीतिः लोकपालनमित्यर्थ इति वा। अस्येव जगत्पालनं कोऽपि

किञ्च प्रभावनमिताखिलराजतेजा
देवः पिताऽम्बरमणी रमणीयमूर्त्तिः।

न करोतीत्यर्थः। अमुना नलेनैव यमेन ब्रह्मचर्य्यादिनियमेन नक्तादिव्रतेन च तपस्तप्तं त्वदर्थमिति शेषः। छाया स्यादातपाभावे प्रतिबिम्बार्कयोषितोः। तपश्चान्द्रायणादौ स्याद्धर्म्मे इत्यादि विश्वः। अध्यगाभीति। इङो गाङादेश कर्म्मणि चिण्। यमेनेति। पक्षे इतौ तृतीया॥ १७॥

किञ्चेति। केवलं नक्तंव्रतस्य जननीत्येव न। किञ्चान्यच्च प्रभया दीप्त्याऽवनमितं तिरस्कृतं अखिलं राजचन्द्रस्य तेजो येन सः। तथा रमणीयमूर्त्तिः अम्बरमणिः सूर्य्यः देवोऽस्य पिता। अस्य यमस्य उत्कान्तिदा नासिका अथ च मरणदा शक्तिरायुधविशेषः कमनु लघीकृत्य न प्रतिभाति समर्था न भवति अपि तु सर्व्वमनु समर्थैव। परेष्वन्येषु जनेषु मदान् रोगात्त्रियोक्तुः प्रेरयितुरस्य कृष्णत्वं श्यामत्वञ्च परपीडाजननेनापयश इत्यर्थः। अस्य कृष्णत्वं नीचत्वं नीचवत्कठिनान्तःकरणत्वमित्यर्थ इति वा॥ नलपक्षे प्रभावेन पराक्रमेण नमितसकलभूपप्रतापः। अम्बरमणिः सूर्य्यः इः कामस्तद्वद्रमणीयमूर्त्तिः देवो राजा वीरसेनोऽस्य पिता। देवो विजिगीषुरिति वा। महाकुलीनत्वमस्य सूचितं। राज्ञ इन्द्रस्य वा प्रभाया वनेन लक्षणया समूहेन तेजःसङ्घेन कृत्वा मितमल्पीकृतमखिलभूपतेजो येनेति वा। अम्बरमणीभिर्वस्त्ररत्नैः कृत्वा रमणीयमूर्त्तिरिति वा। मणीशब्द ईकारान्तोऽपि अस्तीति सम्बोधनं। रमणीनां स्त्रीणां रमणयोग्या मूर्त्तिर्यस्येति

उत्क्रान्तिदा न कमनु प्रतिभाति शक्तिः
कृष्णत्वमस्य च परेषु गदान् नियोक्तुः ॥ १८ ॥
एकः प्रभावमयमेति परेतराज्ञो
तज्जीवितेशधियमत्र निधेहि * मुग्धे ।

वा । अस्य शक्तिरायुधविशेषः कं वैरिणमनु उत्क्रान्तिदा मरणदा न भवति । अस्य शक्तिः सामर्थ्यं कं यममनु उत्क्रान्तिदा मरणप्रदा न प्रतिभाति अपि तु सम्भाव्यत एव । यमादन्येषां भयं तस्याप्यस्माद्भयं शूरत्वातिशयो द्योत्यते इति वा । तथा शत्रुषु गदां शस्त्रविशेषं प्रयोक्तुरस्य कृष्णत्वं देवकीपुत्रत्वं । गदायुद्धप्रावीण्यात्कृष्णसमानत्वमित्यर्थ इति वा । अस्य राज्ञः परा उत्कृष्टा इषुसम्बन्धिनो गदाः रोगाः दुःसहबाणजनिताः पीडा इति यावत् । तान् अर्थाद्वैरिषु प्रयोक्तुरस्य कृष्णत्वमर्जुनत्वं च । बाणयुद्धप्रावीण्यादर्जुनसमानोऽयमित्यर्थ इति वा । राजा प्रभौ नृपे चन्द्रे यत्ते क्षत्रियशक्रयोः । को ब्रह्मात्मनि लोकेषु शमने सर्व्वमाल्लि च । शक्तिर्बलप्रभावादौ शक्तिः प्रहरणान्तरे । इत्यादि विश्वः ॥ १८ ॥

एक इति । अयमेकः परेताः प्रेताः तेषां राज्ञो पक्षौ विषये प्रभावं सामर्थ्यमेति । तत्तस्मादत्रास्मिन् जीवितेशधियं अन्तकबुद्धिं विधेहि कुरु हे मुग्धे उभयोर्भेदमजानाने सञ्ज्ञागर्भजातत्वात् दस्रसहोदरस्याश्विभ्रातुर्यस्य यमस्य भूतेषु प्राणिषु

* निधत्स्वेति पाठान्तरं ।

भूतेषु यस्य खलु भूरि यमस्य वश्य-
भावं समाश्रयति दस्रसहोदरस्य ॥ १९ ॥
गुम्फो गिरां शमननैषधयोः समानः
शङ्कामनेकनलदर्शनजातशङ्के ।

भूरि प्रचुरं भूतं वश्यभावमधीनत्वं समाश्रयति प्राप्नोति । प्राणिषु मध्ये प्रचुरं भूतं यस्य यमस्य वशि वशवर्त्ति सत् प्रभावं विनाशमेवाश्रयतीति वा । मुमुक्षवः कतिपये तदपेक्षया भूतानां प्राचुर्यं खलु निश्चये सर्वप्राणिनाश एतदधीन इति निश्चये-नायमन्तक इति किन्नु जानासीत्यर्थः ॥ नलपक्षे परास्तु इतरे आत्मीयास्तु तेषामार्त्तिः पराभूतं तद्धां अस्त्रिवारेऽपि इतरे यत्नि चोदीयः कुर्वन्ति ये तेषामार्त्तिरिति वा । परेभ्यः उत्कृष्टा या इतरेषां वैरिणामार्त्तिरिति वा । तस्यां अयं नलः एक एव प्रभावमेति । तथा भूतेषु पृथिव्यप्तेजोवाय्वाकाशेषु मध्ये इयमि-त्यभिनयेन सकला भूः सौन्दर्येण दस्रसहोदरस्य अश्विसुल्यस्य यस्यास्य वश्यत्वमाश्रयति । तस्मान्मुग्धे सुन्दरि अस्मिन् प्राणेश-बुद्धिं निधेहि । तथा समा सश्रीका त्वं यस्य एतद्वरणे प्रयत्नं कुरु । एवंविधः पुरुषः प्रभुशक्तियुक्तः सुन्दरश्च कोऽपि नास्तो-त्यनमेव वृणीष्वेति भावः । इतरशब्दात् पक्षे तत्करोतीति णिच् पचाद्यचि णिलोपः ॥ १९ ॥

गुम्फ इति । शमननैषधयोः यमनलयोर्विषये समानः तुल्यः पूर्वोक्तः गिरां गुम्फः देव्या वाणीसन्दर्भः विदर्भसु-

चित्ते विदर्भवसुधाधिपतेः सुतायाः
यन्निर्म्ममे खलु तदेष पिपेष पिष्टम् ॥ २० ॥
तत्रापि तत्रभवती भृशसंशयालो-
रालोक्य सा विधिनिषेधनिवृत्तिमस्याः ।
पाथःपतिम्प्रति धृताभिमुखाङ्गुलीक-
पाणिः क्रमोचितमुपाक्रमताभिधातुम् ॥ २१ ॥

धाधिपतेः सुतायाः भैम्याश्चित्ते यच्छङ्कां संशयं निर्म्ममे तत् खलु निश्चितं एष पिष्टं पिपेष चूर्णमेव चूर्णितवान् इति दृष्टान्त इत्यर्थः । चूर्णचूर्णनं यथा वृथा तथेदमपीत्यर्थः । किम्भूते चित्ते । अनेकेषां नलानां दर्शनेन जातशङ्के उद्भूतसंशये । गुम्फः स्याद्गुम्फने गुच्छे इति विश्वः ॥ २० ॥

तत्रेति । तत्रभवती पूज्या सा सरस्वती क्रमोचितं क्रमप्राप्तं परिपाटीयोग्यं यथा तथा वाभिधातुं वक्तुमुपाक्रमत । किं कृत्वा । तत्र यमेऽपि भृशमत्यर्थं संशयालोः सन्दिहानाया अस्या भैम्या विधिनिषेधाभ्यां सकाशान्निवृत्तिं प्रवृत्तिनिवृत्त्योरभावं आलोक्य । किंभूता । पाथसां पयसां पतिं प्रभुं वरुणं प्रति धृतः अवस्थापितः अभिमुखाङ्गुलीकः सम्मुखकरशाखः पाणिर्यया । तत्रभवच्छब्दः पूज्यार्थः । अङ्गुलीकेति । नद्यृतश्चेति कप् (पा० ५ । ४ । १५३) । उपाक्रमत । प्रोपाभ्यामिति तङ् (पा० १ । ३ । ६४) । अभिधातुं । अभियोगे शकधृषेति तुमुन् (पा० ३ । ४ । ६५) ॥ २१ ॥

या सर्व्वतोमुखतया व्यवतिष्ठमाना
यादोरणैर्ज्जयति नैकविदारका या।

र्ज्जयति। एतस्य भूरितरवारिनिधयः समुद्रा यस्यां सा चमूर्ज्जयति सर्व्वोत्कर्षेण वर्त्तते। सा का। यस्याः परतो रोधः परं तीरं प्रतीतिविषयो दृग्गोचरो न। सेनायां समुद्राणामपि मिलितत्वात् परं पारं न दृश्यत इत्यर्थः। सा का। या सर्व्वतोमुखस्य जलस्य भावेन व्यवतिष्ठमाना व्यवस्थिता जलमयीत्यर्थः। या यादोरणैर्जलजन्तुशब्दैस्तत्कृतैर्वा उपलक्षिता। तथा या नैकविदारका ऽनेककूपका। नैकान् विदारयति नैकविदारः कस्योदकस्याय आगमनं यस्यां सा। स्ववेगेन सर्व्वनाशकरमुदकं यस्यामस्तीत्यर्थ इति वा। या नैकविदारकं यस्यामेवंभूता वा। यस्याः परतो वैरिणो यस्माद्वा रोधः आवरणं न ज्ञानगोचरं। निम्नाभिमुखस्य पयसः कस्यापि निवारयितुमशक्यत्वात् इति वा। यस्याः परप्रदेशात् प्रतिसम्मुखं इतिर्निर्गमनं तद्गोचरो नरो मनुष्यः अधोऽधस्तादेव प्रवाहवेगेनाध एव गच्छतीति भाव इति वा॥ नलपक्षे एतस्य भूरीणां तरवारीणां एकधारपतनखड्गानां निधिः स्थानं सा चमूर्विजयते। या सर्व्वस्मादपि लोकात् सर्व्वसेनाभ्यो वा मुखतया श्रेष्ठतया व्यवतिष्ठते। मुखशब्दो लक्षणया श्रेष्ठवाचकः। सर्व्वतः सर्व्वदिक्षु मुखं यस्यास्तद्भावेन व्यवतिष्ठत इति वा। अनेनानेकदिग्व्यापित्वात् सेनायाः प्राचुर्य्यं सूच्यते। या दोरणैर्बाहुयुद्धैर्भुजास्फालनशब्दैर्वोपलक्षिता।

एतस्य भूरितरवारिनिधिस्त्वमूः सा
यस्याः प्रतीतिविषयः परतो न रोधः ॥ २२ ॥
नासीरसीमनि घनध्वनिरस्य भूयान्
कुम्भीरवान् समकरः सच्छदानवारिः ।

दारणैर्जयतीति वा। यादारणैरमुष्य सङ्ग्रामैः सिंहनादैर्वा जयति सेन जयेनास्य व्यपदेशो न किन्तु स्वयमेवासौ युद्धं कुरुते तेनोभयथा नलवर्णने तात्पर्य्यं। तथा नैके विदारका योद्धारो यस्यां सा। दारणैः कृत्वा नैकविदारः कायो यस्याः सेति वा। यस्याः परस्माच्छत्रोः सकाशाद्रोधः आवरणं न ज्ञानगोचरः केनापि रोद्धुं न शक्यत इत्यर्थः। परस्मात् प्रतीतिविषयः सम्मुखमागच्छन्नो मनुष्योऽधो हीन एवेति वा। पुष्करं सर्व्वतो मुखं। कूपकास्तु विदारकाः। कायो देहः। कूलं रोधश्चेत्यमरः। व्यवतिष्ठमानेति। समवप्रविभ्यस्थ इति तङ् (पा० १। ३। २२)। अत्र ग्रन्थभूयस्त्वभयात् व्याकरणं न लिख्यते॥ २२ ॥

नासीरेति। नदीनामिनः स्वामी समुद्रः नासीरसीमनि जलमयसेनामुखविभागे स्थितः सन् करणभावं साधकतमत्वं . . गतैः रत्नैर्मुक्तादिभिरत्नमतिशयेनास्य वरुणस्य सुखमातनोति उत्पादयति। सुखजनने रत्नानि करणभूतानि। स्वामिनेऽस्मै रत्नानि दत्वा प्रीतिमुत्पादयतीत्यर्थः। करणं देहे भावं सत्त्वमितैः प्राप्तैः स्वदेहोत्पन्नैरित्यर्थ इति वा। अलङ्करणभूतत्वादङ्गदेहस्थितैरिति वा। एवंविधैरत्नैरुपलक्षितो वा। अलङ्करणभावमलङ्करणत्वं गतैरत एव तैः सुखमातनोतीति वा।

उत्पद्मकाननसखः सुखमातनोति

रत्नैरलङ्करणभावमितैर्न दीनः ॥ २१ ॥

सस्यन्दनैः प्रवहणैः प्रतिकूलपातं

का वाहिनी न तनुते पुनरस्य नाम ।

किम्भूतो नदीनः । घनध्वनिः निविडशब्दः । तथा भूयान् प्रचुरतरः । दीर्घपरिमाणत्वात् मत्स्यसङ्कुलत्वाद्वा । तथा कुम्भीरा नक्रास्तद्वान् । मकरा मत्स्यविशेषास्तद्युक्तः । तथा मद्भदानवारिः पुण्डरीकाद्ययुक्तः । उच्छब्द उदयार्थः । उद्गतानि विकसितानि पद्मानि येषु तानि काननानि तेषां सखा तद्युक्त इत्यर्थः । उत्कृष्टा पद्मा लक्ष्मीर्येषामेवंविधैः काननैर्युक्त इति वा । उत्कृष्टा पद्मा लक्ष्मीः स्वकन्या यस्मिन् स चासौ वनसखश्चेति वा । श्रीविष्णोस्तत्र विद्यमानत्वाच्छ्रीयुक्तत्वं । नासीरसीमपदेन तीरं लक्ष्यते । तत्र निविडध्वनिरिति वा । तरङ्गस्य तीरे प्रतिघातात् ॥ गजपक्षे भूयान् बहुतरः । कुम्भी गजः नासीरमुखे सेनामुखविभागे सुखमनायासेन रवान् शब्दान् विस्तारयति । किम्भूतः कुम्भी । घनवन्मेघवत् ध्वनिर्यस्य । तथा मनः आनुपूर्व्यवृत्तः सलक्ष्मीको वा करः शुण्डादण्डो यस्य । तथा दानवारिणा मदजलेन सहितः । तथा उद्गतानि पद्मकानि कुम्भस्थले पद्मबिन्दुजालकानि यस्मिन्नेवंविधं यदाननं मुखं तद्युक्तः । तथा अलङ्कारत्वं प्राप्तैरत्नैर्दीनो न किन्तु सम्भृतः ॥ सेनामुखं तु नासीरं । नक्रस्तु कुम्भीरः । पद्मकं बिन्दुजालकमित्यमरः ॥ २१ ॥

सेति । हे विलासवति भैमि नाम शिरश्चालने । अस्य

तस्या विल्लासवति कर्कशताश्रिता या
ब्रूमः कथं बहुतया सिकता वयन्ताः ॥ २४ ॥

वरुणस्य का नाम वाहिनी नदी सस्यन्दनैः सवेगैः निर्झरोदकमिश्रितैर्वा प्रवहणैः प्रवाहैः कृत्वा कूलं तीरं प्रति अनु पातं गमनं न तनुते अपि तु सर्व्वापि करोति। वयं तस्यास्ताः सिकता वालुकाः बहुतया प्रचुरत्वेन कथं केन प्रकारेण ब्रूमः कथयामः। अतिबहुत्वेनेयत्तया वक्तुं न शक्यत इत्यर्थः। ताः काः। याः कर्कशतां काठिन्यं श्रिताः। कर्का जलजन्तुविशेषस्तच्छतैराश्रिता इति वा॥ सैन्यपक्षे अस्य सैन्यस्य का नाम वाहिनी सेना सस्यन्दनैः सरथैः प्रहरणैर्वाहनैरश्वादिभिः कृत्वा प्रतिकूला वैरिणस्तान् प्रति पातं गमनं न करोति अपि तु चतुर्विधापि सेना करोत्येव। प्रतिकूलानां वैरिणां पातं हननमिति वा। का सेनाऽस्य नाम ख्यातिं प्रतिकूलांश्छत्रून् पातयित्वा शत्रुमात्रं हत्वा न तनुते। नास्य ख्यातिं करोतीत्यर्थ इति वा। सवेगैः कौतारथ्यैः कृत्वा वैरिणं प्रति गमनं करोतीति वा। अनेन सेनाया निर्भयत्वं। युद्धेऽपि कौतारथारोहणात्। कर्काः श्वेताश्वास्तेषां शतैराश्रितायास्तस्याः बहुतया बाहुल्येन ता भूयस्त्वेन प्रसिद्धाः वालुकाः वयं किं ब्रूमः। ताभ्योऽपि सेना प्रचुरतरेत्यर्थः। तस्याः सकाशात् ता वालुका बहुतया किं ब्रूमः। वालुकाः कथमपि संख्यातुं शक्यन्ते सा तु न कथञ्चिदित्यर्थ इति वा। असिः प्रहरणमेषां ते आसिकास्तेषां भावः आसिकता याः श्वेताश्वशताधिरूढाः ता आसिकता असिप्रहरणान् पुरुषान् इति यावत्। तान् बहुतया

श्रोणं पदप्रणयिनं गुणमस्य पश्य
किञ्चास्य सेवनपरैव सरस्वती सा।

किं वर्णयामः। अतिबहुत्वेन वक्तुं न शक्यन्त इत्यर्थः। बहुलम् तयन्ते गच्छन्ति वा रवन्ति वा ये ते बहुतयास्ते च ते आमिकाश्च तेषां भावानिति वा। बहवोऽवयवा येषां ते बहुतया बहुमन्त्रा एवंविधा आमिका यस्यां तस्या भावानिति वा। कर्द्धः शुक्र-श्चयः। सांयात्रिकः पोतवणिक् इत्यमरः॥ पोतः प्रवहणं स्मृतमिति हलायुधः। प्रवहणैः। कृत्यच इति णत्वं (पा० ८। ४।२८)। प्रतिकूलपातं॥ पचे द्रव्यवीप्सायां। विशि पतीत्यादिना णमुल् (पा० ३।४।५६)। तृतीयाप्रभृतीनीति पाक्षिकः समासः (पा० २।२।२१)। आमिकाः। अमिः प्रहरणमेषां। प्रहरणमिति ठक् (पा० ४।४।५७)। अमिभिर्जयन्तीत्यामिकाः। तेन दीव्यतीति ठक् (पा० ४।४।२)॥ २४॥

श्रोणमिति। हे सुभगे सौभाग्यवति भैमि त्वं एनं भुवनस्य जलस्याधिनाथं वरुणं भजस्व वृणीष्व। जलपतित्वमेवाह। त्वं गुणमप्रधानसेवकं श्रोणं नाम नदमस्य पदप्रणयिनं चरणानुरागिणं पश्य। किञ्चेत्यधिकोक्तौ। श्रोणोऽस्य चरणप्रणयीति किं वक्तव्यं सा प्रसिद्धा सरस्वती नदी अस्य सेवनपरैव चरणसंवाहनादिपरैव। पूर्वोक्तापरितोषे वाशब्दः। के कमलस्य जलस्य चाश्रयाः आधाराः समुद्रादिपल्वलान्ताः पद्माकरा वा तमिमं न भजन्ति सेवन्ते अपि तु चीरोदादयः सर्व्वेऽप्यस्यानुचरास्तस्य श्रोण इवानुचरत्वे

एनं भजस्व सुभगे भुवनाधिनाथं
के वा भजन्ति नमिमं कमलाश्रया न ॥ २५ ॥
शङ्कानलानतिमनेकनलावलम्बां
वाणी न वर्द्धयतु तावदभेदिकेयं ।

का कथा। तस्मात् सलिलपतित्वमित्यर्थः। कमलाश्रया जलाभिलाषेण के वा लोका इमं न भजन्ति सेवन्ते स्तुवन्ति इत्यर्थ इति वा। शोणादीनां तत्तदभिमानिन्यो देवता लक्ष्यन्ते। अतस्तेषां सेवकत्वं युज्यते॥ नलपक्षे त्वं जगत्पतिमेनं नलं पतित्वेन स्वीकुरु। स्वीकारयोग्यत्वमेव द्रढयति। त्वं शोणं रक्तं गुणमस्य पदप्रणयिनं पश्य नमिमं कमलायाः सम्पदः आश्रया अभिलाषेण वा के लोका न सेवन्ते अपि तु धनाभिलाषेण सर्व्वेऽपि सेवन्त इत्यर्थः। वाऽप्यर्थे। कमलाश्रया लक्ष्मीनिधयो धनिका अपि लोकास्तमिमं न भजन्त्यपि तु भजन्त्येवेति वा। अत्र प्रथमद्वितीयतृतीयविशेषणैः क्रमेण सौन्दर्य्यकलाकौशलौदार्य्याणि द्योत्यन्ते। शोणो हिरण्यबाहुः स्यात्। शोणः कोकनदच्छविः। जीवनं भुवनं वनं। विष्टपं भुवनं जगत्। सलिलं कमलं जलं। कमला श्रीर्हरिप्रियारित्यमरः॥ आश्रया। अधिकरणे. शेतेरित्यच् (पा० ३।२।१५)॥२५॥

शङ्केति। इयं पूर्व्वोक्ता वाणी भैमीसङ्खीं प्रति सचीकृत्य भेम्या इति यावत्। अनेकनलावलम्बां नानानैषधविषयां शङ्कालतातातिं संशयवल्लीपरम्परां न वर्द्धयतु तावत् न पूरयतु तावत् अपि तु पूरयत्येव। नवा ऋद्धिर्यस्याः सा नवर्द्धिः नवर्द्धिं

भैमीभवां प्रति नले च जलेश्वरे च
तुल्यं तथापि यदवर्द्धयदत्र चित्रं ॥ २६ ॥

करोतु नवर्द्धयतु। भैमीं प्रति सन्देहपरम्परां न्यूनसमृद्धिं अतिशक्तीकरोत्वित्यर्थ इति वा। तावच्छब्दोऽनुमतावधारणे वा। यतो अर्द्धोक्तिका विशेषप्रतिपादनमकुर्व्वती। समानधर्म्मदर्शनाद्धि संशय उपजायते विशिष्टधर्म्मदर्शनाद् व्यावर्त्तत इत्यर्थः। यद्यप्यत्र विषये चित्रं नास्ति तथापि नले जलेश्वरे च तुल्यमेककालं यत्संशयवश्योपरम्परां अवर्द्धयत् पूरयति स्म अत्र विषये चित्रमाश्चर्य्यं। न हि विषयस्यैव सन्दिहानत्वमुपपद्यते। यतो लोके दूरस्थिते पुरुषे पुरुषत्वं स्थाणुत्वं वाऽनुपलभ्योर्द्धत्वमात्रं स्थाणुसाधर्म्यमुपलभ्य तटस्थः स्थाणुर्वा पुरुषो वेति सन्दिग्धे न तु पुरुष एवात्मानमूर्द्धमवलोक्याहं वा स्थाणुर्वेति। तस्मान्नलजलेश्वरविषयो भैम्याः संशयो युक्तः। विषयभूतयोरेव तत्संशये महदाश्चर्य्यमिति भावः। विरोधपरिहारस्तु तुल्यकालं यथाक्रमं नले सं सुखं जलेश्वरे च कामनाततिं कान्तिमातिशय्यं पूरयति स्म। तथा हि यदि देव्येनं नल एवायमित्यकथयिष्यत् तदा मय्यनुरक्ता भैमी मामकभ्रमेणैनमेवावरिष्यत्। तत्तु देव्या न कृतं वरुणरूपेण वर्णितत्वादिति। नले सुखं जनयितव्ये यदि वाणी मां नल एवायमित्यकथयिष्यत्तदा नलबुद्ध्या भैमी मामेवावरिष्यत् तत्तु तया न कृतं मद्रूपेण वर्णितत्वादिति विषादादरुणे कान्तिमाऽतिशयितो जनितः। कामनाततिरप्यनेकनलावलम्बिनी चतुर्णामप्यवरणात्

बालां विलोक्य विबुधैरपि मायिभिस्तै-
रच्छिन्नामियमलीकनलोक्तमस्थैः ।

अथ च मत्सन्देहाद्वरुणं भजेन्नलसन्देहान्मां भजेदिति क्रमेण नलवरुणयोः संशयपरम्परां पश्यति स्म। अनेकनलावलम्बनां भैम्याः संशयवल्लीपरम्परां न वर्द्धयतु न छिनत्तु वर्द्धकपूर्त्ति-च्छिदार्थता विशेषमप्रतिपादयन्ती । या हि छेदासमर्था छुरि-का साऽनेकवलविशेषनलावलम्बनां लतातातिं न छिनत्तीति माश्चर्यं। तथापि भैमीं प्रति नले च जलेश्वरे च संशयवल्लीपर-म्परामेककालमेव यदच्छिनत्तच्चित्रम्। या हि न छिनत्तीति सा छिनत्तीति चित्रमिति भावः। मत्सन्देहादेनं भैमी भजेदिति नलभ्रान्तिः। नलसन्देहान्मां भजेदिति वरुणभ्रान्तिः।वरुणवा-चिशब्दसद्भावात्। अपवक्ताक्षादिज्ञानचतुरा भैमी वरुणं न वरिष्यतीति निश्चयेन नलभ्रमनाशः। नलेऽनुरक्ता भैमी मत्प्र-तिपादकशब्दसद्भावान् मां न वरिष्यतीति निश्चयेन वरुणभ्रम-नाश इति वा विशेषमप्रतिपादयन्ती वाणी सरस्वतीति। वा देव्या नामग्राहमहं वर्णितः। अतो मां वरिष्यति न वेति वरुणस्य सन्देहो गतः। इदानीमवशिष्टोऽहमेवमस्येत्वस्येयमनुरक्तेति मां वरिष्यति न वेति नलसन्देहो गत इति भाव इति वा। इत्या-दिव्याख्याविशेषो विचार्याङ्गीकरणीयः ॥ २६ ॥

बालामिति। इयं भगवती सरस्वती निषधाधिराजमुद्दिश्य तां बालां भैमीमाह स्म उवाच। किं कृत्वा। तां भैमीं अलीकन-

आह स्म तां भगवती निषधाधिराजं
निर्दिश्य राजपरिषत्परिवेषभाजम् ॥ २७ ॥
अत्याजिलब्धविजयप्रसरस्त्वया
किं विज्ञायते रुचिपदं न महीमहेन्द्रः ।

लोकत्रयस्वैरमत्यनैषधीकृतात्मभिः मायिभिश्छलपरैरपि विबुधैर्देवैरकलितामप्रतारितां विलोक्य । किम्भूतं नलं । राज्ञां परिषत्सभा तस्याः परि समीपे वेषं शृङ्गारं भजति । परिशेषमिति पाठे परिशेष उपान्तः । बालामपि विबुधैरपि अपिरुभयत्र सम्बध्यते । बाला हि प्रतार्य्यते इयं बालापि न प्रतारिता तेष्वेकस्याप्यवरणात् । ये च विबुधाः ज्ञातारः ते मायिनः खलाः कथं मायिभिरपि बाला न प्रतारितेत्याश्चर्य्यं । राजपरिषदः परिवेषरूपणात् नलस्य चन्द्रत्वं ध्वनितं । परिषत् । सदिरप्रतेरिति षत्वम् (पा० ८।३।६६।) ॥ २७ ॥

अत्याजीति । त्वया महीमहेन्द्रो नलः किं न विज्ञायतेऽपि तु विशेषेणेन्द्रादिभ्यो भेदेन सत्यत्वेन जानीहीत्यर्थः । किम्भूतः । अतिशयेनाजौ सङ्ग्रामे अतिशयिते वा आजौ लब्धः प्राप्तो विजयस्यारिपराभवनस्य प्रसरो बाहुल्यं येन । तथा रुचेरनुरागस्य कान्तेर्वा पदं स्थानं । तथासौ अर्थिनमर्थिनं प्रतीति प्रत्यर्थि या दानवशता दानपरता दाने अर्थिनं प्रत्येव वा वशतया जितेन्द्रियतया वा आहिता कृता या चेष्टा याचकानुकूलव्यापारस्तेन परदारदर्शनादिनिवृत्तिव्यापारेण च [illegible]तवाचन-

प्रत्यर्थिदानवशताहितचेष्टयासौ
जीमूतवाहनधियं न करोति कस्य ॥ २८ ॥

स्वार्थिहेतोः प्राणानपि तृणवद्ददता राजविशेषस्य धियं बुद्धिं दानातिशयेनार्थिपरतन्त्रतया च जितेन्द्रियतया च किमयं जीमूतवाहनधियं कस्य न करोति दानशूरत्वादित्रयमस्य सूचितं। प्रत्यर्थिनो वैरिणो सन्ति प्रत्यर्थिदा अनाः प्राणाः येषां ते अतिशूरास्ते वशा अधीना यस्य तस्य भावस्तत्ता तया कृत्वा कृता या चेष्टा तया शत्रुवशीकरणव्यापारेणेन्द्रबुद्धिं कस्य न करोति अपि तु सर्व्वस्यापि करोति। इन्द्रो यथा शत्रून् करोति तथायमपीति वा ॥ इन्द्रपक्षे अयं महेन्द्रस्त्वया किन्न विज्ञायते अपि लिङ्गत्वेन निश्चयः। किम्भूतः। अतिशयितः आजिः सङ्ग्रामो यस्य। तथा लब्धो विजयेनार्ज्जुनेन कृत्वा प्रसरो वंशविस्तारो येन ततः कर्मधारय[illegible] प्रसव इति पाठे तत्पक्षे जयलाभः। इन्द्रपक्षे लब्धो विजयोऽर्ज्जुनः। विजयत इति विजयो जयो जयन्तो वा प्रसवः पुत्रो येन। हरिपदं तेजःस्थानं। तथा महो उत्सववान्। तथायं प्रत्यर्थिदानवानां शतेषु अहिता प्रतिकूला चेष्टाऽहितस्य शत्रोर्वा चेष्टा शत्रुत्वकृतस्तन्नाशकरो व्यापारस्तेनेन्द्रबुद्धिं कस्य न करोति। अथ चायं महेन्द्रस्त्वया किमित्यत्याजि केन हेतुना त्यक्तः। अयं न विज्ञायते विज्ञ इवाचरति विज्ञायते एवंभूतो न भवति अपि तु विद्वानेवेत्यर्थः। तथा हरिपदं कान्तिस्थानं न। तथा महो नेति। नञावृत्त्या काका

येनामुना बहुविगाढसुरेश्वराध्व-
राज्याभिषेकविकसन्महसा बभूवे।

व्याख्येयं। एवंगुणविशिष्टस्य परित्यागे किञ्चिदपि कारणं न पश्याम इति भावः। महेन्द्रस्त्वया विज्ञाय किमित्यत्याजि उचितमेव कृतमित्यर्थः। किम्प्रश्ने सम्भावनायां वा। त्यागे कारणमाह। लक्ष्मा विना पक्षिणा गरुडेनामृतहरणसमये जयस्य प्रसरो विस्तारो यस्य गरुडेन पराजित इत्यर्थः। तथा अशुचिपदं अननुरागस्थानं। तथा न सहो उत्सवरहितः सदा दैत्यभयात्। अशुचिस्थानं महेन्द्रस्त्वया किन्न विज्ञायते अपि तु ज्ञात एव। यतोऽत्याजि त्यक्त इति वा। अस्मिन् पक्षे न सहोत्सव मन्नः आवृत्तिः। अतिशयितरणे लक्ष्मा विना जयप्रसरो यस्येति वा। विजयस्तु जये पार्थे इत्यमरः। विज्ञायते। उपमानादाचारे कर्त्तुः क्यङ् (पा० ३।१।१०।११)॥२॥

येनेति। येनामुना नलेन बहुतिशयेन विगाढः सेवितो सुरेश्वरस्याध्वा मार्गः त्रिलोकीप्रतिपालनलक्षणः येन। तथा राज्ये योऽभिषेको मङ्गलस्नानं तेन कृत्वा विकसन्महो यस्यैवंविधेन बभूवे जातं। पूर्वेण कर्म्मधारयः। बहुवारं सेवितो देवेन्द्रेण मार्गो लोकपालनप्रकारो यस्येति वा। पश्चात् कर्म्मधारयः। इन्द्रेण लोकपरिपालनसमाश्रितमित्यर्थः। नु भैमि अत्र पञ्चसु मध्ये स्वयम्वरे नामग्राहं नाम गृहीत्वा एवममुना पूर्व्वोक्तेन प्रकारेण मया उदीरितमुक्तं तं नलमनु लक्षीकृत्य तेन चावर्जनं

आवर्जनं तमनु तेन नु साधु नाम-
ग्राहं मया नलमुदीरितमेवमत्र ॥ २९ ॥
यच्चण्डिमा रणविधिव्यसनस्य तत्त्वं
बुध्वाशयाश्रितममुष्य च दक्षिणत्वं।

पतित्वेनाङ्गीकरणं साधु शुभं। सत्यं नलमेनं सर्व्वथा वृणीष्वेति भावः। वह्निपक्षे येनानेन वह्निनाऽनेकवारं अनुभूतो यः सुरेश्वराध्वरेषु देवेन्द्रयज्ञेषु आज्याभिषेको घृतास्रवस्तेन कृत्वा विकस्वरतेजसा जातं। बहुवारं विगाढं आवर्त्तित इन्द्र आयाहीत्यादिना आहूतः सुरेश्वरो यत्र तादृशेषु यागेषु आज्याभिषेकस्तेन कृत्वा विकस्वरतेजसा जातमिति वा। ननु भैम्यत्र पञ्चसु मध्ये नाम गृहीत्वा एवं पूर्व्वोक्तप्रकारेण मयोक्तं तमनलमग्निम्प्रति ते तव वर्जनं साधु अपि तु न साधु आ इति खेदे आवर्जनं पतित्वेनाङ्गीकरणं साध्विति वा नु भैमि तमनु ते वर्जनं न साध्विति वा। पूर्व्वार्द्धेन सर्व्वदा परान्नभोजनेनैव परिपुष्टोऽयमिति त्यागः सूचितः। तथा ननु भैमी मया नाम गृहीत्वा कथितं नलान्यमथ च वह्निमनु ते वर्जनं साधु भद्रं। आ हर्षे नु भैमि तमनु ते आवर्जनं सामर्थ्येन वर्जनं न साधु अपि तु साध्वेवेति वा। आ आवर्जनं सामस्त्येनाङ्गीकरणं तव न साधु किन्तु वर्जनमेव साध्विति वा। नामग्राहं। द्वितीयायामित्यनुवृत्तौ नाम्न्या दिशिग्रहोरिति णमुल् (पा० ३। ४। ५८) ॥ २८ ॥

यदिति। सोऽवधारणे यस्य चण्डिमा क्रूरत्वं रणविधौ

सैषा नले सहजरागभरादमुष्मिन्
नात्मानमर्पयितुमर्हसि धर्म्मराजे ॥ ३० ॥

सङ्ग्रामविधाने व्यसनमेव वैरिणां विगतासुकरणमेवेत्यर्थः सर्व्वा-
नपि वैरिणो मारयत्येवेति भावः। रणविधौ व्यसनमिव व्यसनं
यस्य चण्डिमा क्रौर्य्यं यस्य रणकर्म्मणि व्यसनमिति वा। सैषा त्वं
अमुष्य आशयमभिप्रायमाश्रितं मनसि स्थितं दक्षिणत्वं सरलत्वम्
तत्सर्व्वं बुद्धा ज्ञात्वा पाणिमाश्रितं दानशूरत्वं वा ज्ञात्वा धर्म्म-
सहिते राजनि धर्म्मेण राजमाने वा अमुष्मिन्नले सहजरागभरात्
अकृत्रिमानुरागबाहुल्यादात्मानमर्पयितुं योजयितुं नार्हसि
अपि तु योग्या भवस्येवेति वा। सर्व्वथाऽयं वरणीय एव त्वयेति
भावः। एतेन शूरत्वदातृत्वधार्म्मिकत्वान्युक्तानि। यमपक्षे
हे चण्डि कोपने यस्यामुष्य यमस्य मारणविधिर्व्यसनं प्राणि-
प्राणहरणशीलत्वं आशया दिशा च दक्षिणत्वमाश्रितं तच्चं
निरुपाधिरूपं ज्ञात्वा सैषा त्वं अनले नलान्यस्मिन् नलसदृशे
चास्मिन् धर्म्मराजे यमेऽकृत्रिमप्रेमभराबाहुल्यात् स्वं योजयितुं
अर्हसि। सर्व्वप्राणा एतदधीनाः दक्षिणदिक्पतिश्चायं तस्मा-
दादरणीय इति भावः। चण्डि नलान्यनामधेयश्रवणमात्रात्
कोपने सर्व्वदा सर्व्वप्राणिप्राणहरणमेव व्यसनं दोषं अमुष्य
दिशा दक्षिणत्वं कुलेन सरलत्वमुदारत्वं चाश्रितं न त्वनेनेत्यर्थः।
तत्सर्व्वं तात्विकं बुद्धा सैषा त्वं नलादन्यस्मिन्नात्मानं योजयितुं
योग्या न भवसि अमुष्य मारणविधिर्व्यसनं तत्सत्यं सत्यं। दक्षिणत्वं

किन्ते तथा मतिरमुष्य यथाशयः स्यात्
त्वत्पाणिपीडनविनिर्म्मितयेऽनपाशः।

तु दिगाश्रितं दक्षिणदिक्पतित्वाद्दक्षिण इति देशनिमित्ताऽस्य समाख्या। तदेतद्दृष्ट्वा मया त्वमात्मानमर्पयितुं नार्हसीति वा योजना। एवंविधो न वरणीय इति भावः। अन्यच्च कारणं। अमहज्जरागभरात् महज्जानुरागबाहुल्याभावाच्चेत्यर्थः। यत्रानुरागो नास्ति स न वरणीय एवेति भावः॥ ३०॥

किमिति। अमुष्य नलस्याशयो अभिप्रायस्तव पाणिपीडनस्य पाणिग्रहणस्य विनिर्म्मितये निष्पत्तये अनपाशः अपगता आशा यस्मादपाशः एवंविधो न भवतीत्यनपाशः तत्परो यथा स्यात् तथा किन्ते मतिः बुद्धिः। किंशब्दः सम्भावनायां। यथाऽयं त्वद्वरणाभिलाषभरितान्तःकरणो भवेत् तथा त्वं प्रायेण करिष्यसीति गम्यत इत्यर्थः। असौ नलो भुवनं जगत् चरिष्णून् चरणशीलान् कान् मानवान् मनुष्यान्नो अवति रक्षति अपि तु सर्व्वानप्ययमेव रक्षति। मानवान् अभिमानी नलः कान् न रक्षतीति वा। तस्मात् अमुत्र नले भवती रता नेति न युक्तं किन्त्वस्मिन् रता भवेत्यर्थः॥ असौ ना पुरुषश्रेष्ठः अतोऽमुत्र भवती रताऽनुरक्तेति किन्न युक्तं अपि तु युक्तमेवेति वा। भवतीति सम्बुद्धिर्वा॥ वरुणपक्षे अमुष्य वरुणस्य शयः पाणिर्येन प्रकारेण त्वत्पाणिग्रहणनिष्पत्तयेऽनपाशो न विद्यते पाशो यस्मिन्नेवंविधः पाशरहितो यथा भवेत् तथा ते बुद्धिः किं। किं प्रश्ने। पाशं त्यक्त्वा

काम्यानवानवति नो भुवने चरिष्णून्
नासावमुत्र न रता भवतीति युक्तम् ॥ ३१ ॥
श्लोकादिह प्रथमतो हरिणा द्वितीया-
द्धूमध्वजेन शमनेन समं तृतीयात् ।
तुर्यान्नलस्य वरुणेन समानभावं
सा जानती पुनरवादि तया विमुग्धा ॥ ३२ ॥

त्वत्पाणिग्रहणं करिष्यतीत्यर्थः । त्वत्पाणिग्रहणनिष्पत्तये अस्य शयः करः स्यात् पाशो न । त्वत्पाणिग्रहणं शयेन करिष्यति पाशं त्यक्ष्यतीति भयं मा यासीरित्यर्थ इति वा । असौ भुवनमुदकं तत्र सञ्चरणशीलान् मनुष्यान् कान्तो ऽवति अपि तु जलप्रविष्टान् बुडनादिप्रमादाद्वरुण एव रक्षति उदकसञ्चरणशीलान्मनुष्यान्नो ऽवति अपि तु रक्षतीति वा । नो ऽस्माकं भुवनं पृथ्वीलोकः तत्र सञ्चरणशीलान् मनुष्यान् कादुदकाद्धेतुभूताद्रक्षति सर्वेषां ह्युदकं जीवनमिति वा । अमुत्र भवती न रता नानुरक्तेति न युक्तम् । अमुत्र नरता मनुष्यत्वं न भवतीति युक्तं देवो ऽयमित्यर्थ इति वा । अमुत्र नरता नलत्वं न भवतीति युक्तमिति वा । असौ ना च पुरुषो न भवति अतो ऽमुत्र भवती रतेति युक्तमपि तु नेति वा । अमुत्र भवती न रता नानुरक्तेति न युक्तं अपि तु युक्तमेवेति वा ॥ ३१ ॥

श्लोकादिति । इह चतुर्षु अष्टाशीत्यादिश्लोकेषु मध्ये अष्टाशीति प्रथमतः श्लोकात् हरिणेन्द्रेण समं सह येनामुनेति

त्वं यार्थिनी किल नलेन शुभाय तस्याः
क्व स्यान्निजार्पणममुत्र चतुष्टये ते ।
इन्द्रानलार्यमतनूजपयःपतीनां
प्राप्यैकरूपमिह संसदि दीप्यमाने ॥ ३३ ॥

द्वितीयात् श्लोकात् धूमध्वजेनाग्निना सह यच्चण्डिमेति तृतीयात् श्लोकात् शमनेन यमेन सह किन्त्वे इति तुरीयात् श्लोकात् वरुणेन सह तस्य नलस्य समानभावं तुल्यरूपत्वं जानती अत एव विमुग्धा विशेषेण भ्रान्ता सा भैमी तया देव्या वक्ष्यमाणं पुनरवादि ॥ ३२ ॥

त्वमिति । या त्वं किल नले विषये अर्थिनी साभिलाषा तस्यास्ते तव अमुत्र नले निजार्पणं स्वसमर्पणं शुभाय कल्याणाय तुष्टये च सन्तोषाय च क्व न स्यात् कुतो न भवेदपि तु स्यादेव । किंविधे अमुत्र । इन्द्रस्य अनलस्य अर्यमतनूजो यमस्य पयःपतिर्वरुणस्य एतेषां ऐकरूप्यं दिक्पालांशत्वात् सरूपत्वं प्राप्य इहास्यां संसदि सभायां दीप्यमाने । न तस्मादयं वरणीय इत्यर्थः । या त्वं नलेन साभिलाषा तस्यास्तवामुत्र नले निजार्पणं शुभाय क्व कुतः स्यादपि तु न कुतोऽपि । किमित्यत आह । इन्द्राग्नियमवरुणानां चतुष्टये ऐकरूप्यं नलसारूप्यं प्राप्येह सभायां ज्वलति सति एतान् प्रसन्नानकृत्वा यन्नलवरणं तच्छुभाय न भवेदेव । शापं दास्यन्तीत्यर्थ इति वा । या त्वं नले विषये नार्थिनी एवं वर्ण्यमानमप्येनं नलं न वृणोषि यतस्तस्यास्ते नलसारूप्यं

देवः पतिर्विदुषि नैषधराजगत्या
निर्णीयते न किमु न व्रियते भवत्या।

प्राप्येह सभायां प्रकाशमाने इन्द्रादीनां चतुष्टये मध्ये क कस्मिन्निन्द्रेऽग्नौ यमे वरुणे वा निजार्पणं शुभाय स्यात् कथय। मया बहुशः प्रोच्यमानाऽपि यन्नलं न वृणुषे तस्मात्तेषु सुन्दरतमेषु चतुर्षु मध्ये कं वृणुषे इति कथय इत्यर्थ इति वा। अनेनाचेन्द्रादयो विद्यन्ते न वेति सन्देहो निरस्तः। परन्तु के ते कश्च नल इति विशेषो नोक्तः। अत्रेन्द्रादीनां चतुर्णां त्यागोऽपि प्रतीयते। या त्वं नलेऽर्थिनी तस्यास्ते नलस्वरूपतां प्राप्येह सभायां दीप्यमाने इन्द्रादिषु चतुष्टये निजार्पणं शुभाय क स्यादपि तु न कुतोऽपि। या ह्यन्यनानुरक्ता तस्या अन्यत्र निजार्पणे शुभं कथं भवेत्। अन्यच्च नलरूपधारणादेते प्रकाशन्ते न त्वेतेषां सहजसौन्दर्यमस्ति। अतोऽप्येते न वरणीया इति भावः॥ ३३॥

देव इति। हे विदुषि श्लेषोक्तिचातुरीपरिज्ञानचतुरे भैमि एष पुरोवर्त्ती देवः स्वर्गे क्रीडाकारी अमरश्च धराजगत्याः भूलोकस्य पतिः पालयिता न किन्तु अर्थात् स्वर्गलोकस्य पतिरिन्द्रः त्वया किमु किमिति न निर्णीयते इन्द्रत्वेन किमिति न निश्चीयतेऽपि तु निश्चय इत्यर्थः। किमिति वा न व्रियतेऽपि तु वरणीयस्त्वेत्यर्थः। मया न निश्चित इति कुतोऽवमितं भवत्येति शङ्कायां सत्यां आह। यतो न व्रियत इति हेतूपन्यासः सरस्वत्या कृतः। अयमिन्द्र इति चेत् तव निश्चयः स्यात्तर्हि मनुष्यापे-

नायं नलः खलु तवातिमहा नलाभो
यद्येनमुज्झसि वरः कतरः परस्ते ॥ ३४ ॥

त्वयाऽधिकत्वादयं वृत एव स्यात्। तत्तु न कृतं अत इन्द्रत्वेन त्वयाऽयं न निश्चित इत्यर्थ इति वा। धराणां पर्व्वतानामजनमाजः क्षेपणं तत्र गतिरुपायभूता वज्रस्तेन कृत्वाऽयं ना पुरुषः सामर्थ्यवान् वज्रायुधो देव इन्द्रः पतिर्भर्त्ता भर्तृत्वेन किन्न निश्चीयते निश्चितश्चेत् किं वा न व्रियत इति वा। धराजगत्या वज्रस्य पतिरेष देवः त्वया न निश्चीयते इति न अपि तु निश्चित एव ज्ञात एव किमु न व्रियत इति वा। उशब्दः सम्बोधने। धरान् पर्व्वतान् अजति क्षिपतीति धराज इन्द्रः स एव गतिः शरणं यस्याः प्राच्याः दिशः पतिर्देव इन्द्रो न निर्णीयत इति न परं किं न व्रियते इति वा। इन्द्रश्चेन्नल इव कथं दृश्यत इत्यत आह। अयं खलु निश्चयेन नलो न भवति तव नलवदाभातीति नलाभः। अत्र हेतुमाह। यतोऽतिशयितं महस्तेजो यस्य मनुष्यापेक्षया बहुतेजा इत्यर्थः। अत एव वरणीयः। तथा चायं नलस्तृणविशेषस्तन्तुवदोऽसारभूतो न भवति किन्त्वतिबलोऽतो वरणीय इत्यर्थः। अस्य वरणे निश्चितं अतिशयिता ये महा नन्दनवनक्रीडादय उत्सवाः अननमानः प्राणनञ्च तेषां लाभः प्राप्तिस्तव भविष्यतीति शेषः। इन्द्रवरणे नन्दनवनक्रीडा सुधापानेनामरत्वञ्च त्वया प्राप्स्यत इत्यर्थः। अतिमहतश्चिरकालप्राणनस्य लाभो भविष्यतीति वा। एवंगुणविशिष्टमेनं

अस्य विष्णोर्वा इमं श्रेष्ठं भ्रातृत्वेन स्वामिनमिन्द्रं चेत् त्यजसि तर्हि परोऽन्यः को वरः अपि तु न कोऽपि। मदवचनविश्रामादेनमेव वृणीष्वेति भावः। अथच यद्येनं त्यक्ष्यसि तर्हि तव कतरो वरो ऽभीष्टो भवेन्न कोऽपि किन्तु परः शत्रुरेव भवेदित्यर्थः। अथ च यद्येनं त्यजसि तर्हि परोऽन्यः एतदनन्तरः केन वायुना तरति प्लवते प्रसरति केन जलेन तीर्य्यते शान्तिं प्राप्यते वा यः स कतरोऽग्निर्वरो भवेतेत्यर्थः। अत्रेन्द्रत्यागोऽपि सूचितः। तथाहि एष भूलोकस्य रक्षको देवो राजा नलो नेति निर्णीय निश्चित्य तेन नलत्वाभावलक्षणेनैव कारणेन न व्रियते। किमिति प्रश्नः। युक्तमेवैतत् कृतमिति शेषः। धराज इन्द्र एव गतिर्जीवनोपायो यस्याः प्राच्याः पतिर्देवो न निश्चीयत इति न अपि तु निश्चित एव। न व्रियते किमिति वा इति संशयलेशस्यापि निरासार्थं देवी पुनस्तत्समाह। अयं लक्ष्मभृन्नीं लक्ष्मीमनुरञ्जकोऽतिमहान्नितरां तेजस्वी नलो न भवत्येव यस्त्वया निश्चितं तत्त्यमेवेत्यर्थः। किन्तु नलवदाभासत इत्येव नलाकारधारणादेवास्य भा न तु सहजेत्यर्थः। यद्वा यतो ऽयं नलाख्यतृणविशेषवन्निःसारो भाति तस्मान्नितरां तेजस्वी नलो न भवतीत्यर्थः। यदि चैनं त्यजसि तर्हि ते अष्टः के सुखे तरतीति कतरः सुखसमुद्ररूपो नलो वरो भवेतेत्यर्थः। यद्वा नैषधराजा नल एव गतिर्जीवनोपायो यस्या एवंविधया त्वया इन्द्रो न निश्चीयते किं अपि तु निश्चित एव। यतः पतिर्न व्रियते नलानुरागिणी त्वमिन्द्रोऽयमिति ज्ञात्वैव पतित्वेन नाङ्गीकरोषीत्यर्थः। यस्माद्दे-

त्योरतिक्रान्तं महो यस्य तस्मादसारभूतः। यदि चैनं त्यजसि तर्हि तवास्लाभो नापि तु लाभ एवेति वा। वह्निपक्षे धरतीति धरो वाहनं स चासावजश्च मेषः धर इव पर्व्वततुल्यो वा यो मेषस्तेन कृत्वा या गतिस्तस्य वा या गतिः धरायां भूमावजेन कृत्वा या गतिस्तयोपलक्षितः पाकादिकरणद्वारा त्रैलोक्यरक्षणात् पतिः देवो द्युतिमानमरश्च वह्निर्निश्चीयत इति नापि तु निश्चीयत एव। परमेवंगुणविशिष्टो ज्ञात्वापि न व्रियतेऽपि त्वग्नित्वेन निश्चितो वरणीय एवेत्यर्थः। धरो वाहनमजो यस्य स धराजो वह्निः स एव गतिः शरणं यस्या आग्नेय्या दिशः पतिर्देवोऽग्निः किं न निर्णीयते निर्णीतश्चेत् किमु न व्रियत इति वा। अग्निश्चेन्नलत्वेन किमिति भातीत्यत्राह। अयं निश्चितं नलो न किन्तु ततोऽप्यतितेजस्वी तव नलवदाभातीति वा। अयं त्वत्स्वन्धी नलो न भवति किन्त्वनल एवेत्यर्थ इति वा। एवंगुणविशिष्टमेनं यदि त्यजसि तर्ह्यग्नेः परोऽन्यः श्रेष्ठस्ते को भर्त्ता भविताऽपि त्वेतत्सदृशोऽतितेजस्वी कोऽपि नास्तीत्यर्थः। अथ च तव कोऽभीष्टः अपि तु न कोऽपि किन्तु परः शत्रुरेवेत्यर्थः। अत्रापि त्यागः सूचितः। तथा हि एष ना मनुष्यो न किन्तु धराजगत्या आग्नेय्या दिशः पतिर्देवो वह्निरिति भवत्या निर्णीयते किं यतो न व्रियते त्वया सत्यमेव निश्चितमित्याह। अयं त्वच्चित्तानुरञ्जकोऽतितेजस्वी नलो न किन्तु तदाकारधारणात्तल्लाभः। सहजेयं कान्तिर्न भवतीत्यर्थः। नले क्षणविषये आभा यस्य तेजस्वित्वं क्षणं प्रत्येव न तु दैत्यान् प्रतीत्यर्थ इति

वा। नैषधराजो गतिर्धर्मात्मतया भवत्या एष दीप्यमानो देवो ऽग्निः किमु न निर्णीयते अपि तु निर्णीयत एव यतो न म्रियते। अयं तव पतिर्नलो न भवति किन्तु दैत्यैराक्रान्ते-ज्ञात्मण विशेषज्ञस्तुल्य इति वा। यमपक्षे एष धरान् पर्व्वतान् शृङ्गाभ्यां खुरैर्वाऽजति क्षिपति धराजो महिषः तस्य गत्या तेन वा या गतिस्तयोपलक्षितो धर्म्मरूपत्वात् पतिः पालयिता देवः क्रीडापरोऽमरश्च यमो न निर्णीयते इति अपि तु निश्चित एव। परं किमु न म्रियते यम एव देवः धराजेन महिषेण कृत्वाऽर्थाद्यमस्य गतिर्यस्यां एवंभूता वा दक्षिणदिशः पतिर्न अपि तु भवत्येवेति किमु न निर्णीयते किं वा न म्रियते अपि तु यमत्वेन निर्णयो वरणीयश्चेत्यर्थ इति वा। अतितेज-स्व्ययं निश्चितनलो गहनो नापि तु धर्म्मरूपत्वाद्गहन एव। नलगहन इत्यस्य पचाद्यचि रूपं। यदि चैनमुज्झसि तर्हि तव लाभो न किन्तु हानिरेव। यतस्त्वेतदन्यः श्रेष्ठश्च कतरो वरः अपि तु नास्त्येवेत्यर्थः। अयं नलो न किन्तु तवातिमहतां महानां प्राणानां लाभो यस्मात् सोऽतिमहानलाभः सर्व्वेषां प्राणा एतदधीना अतस्त्वया तस्मिन् वृते तव चिरकालं प्राणनं भविष्यतीत्यर्थः। यद्वा धर्म्मरूपत्वादतिशयितो महः पूजा यस्य स चासावनलाभश्च तेजस्वित्वादग्नितुल्य इत्यर्थः। यदि चैनं त्यजसि तर्हि तव वरः श्रेष्ठः परः प्रभुः कतरोऽपि तु एत-स्मिन् परित्यक्तेऽयमेव महाप्रभुरित्यर्थ इति वा। अथ च के

वरो भविता। अत्रापि त्यागः सूचितः। तथा हि। एष धराजगत्या दक्षिणदिशः पतिर्देवो यमो न अपि तु यम एवेति निश्चित्य तेन कारणेन न म्रियते किं धर्मराजबुद्ध्या देवो न निर्णीयत इति न किन्तु निर्णीयत एव। अतएव पतिर्न म्रियते किमिति वा। अयं दैत्यैराक्रान्ततेजा नलः पितृदेवो यमो नापि तु यम एव परं तव नलवदाभाति नलाकारधारणादित्यर्थ इति वा। यदि चैनं त्यजसि तर्हि श्रेष्ठः सुखसमुद्रो नलो वरो भविता। वरुणपक्षे एष धराजगत्या भूलोकस्य पतिर्न किन्त्वधोगत पातालस्य। अत एव देवः कान्तिमान् अमरश्च वरुणः किं न निश्चीयते किं वा न म्रियते। अयं नलो न किन्तु अतिमहती नलवत् कान्तिर्यस्य सोऽतिमहांस्तव नलाभो भातीति शेषः। यदि चैनमुज्झसि तर्ह्येतदन्यः श्रेष्ठश्च तव को वरो भर्त्ता अपि त्वेतत्सदृशोऽन्यो नास्तीत्यर्थः। धरायां जायन्ते धराजानि स्थावरजङ्गमानि भूतानि तेषां गतिर्जीवनोपायो जलं तस्य पतिर्न अपि त्वपां पतिर्वरुणो देवः किं न निर्णीयते किंवा न म्रियते ... तु निर्णेयो वरणीयश्चेत्यर्थः। अतिमहस्यातिपूज्यस्यानलस्याग्नेरभावः कान्त्यभावो यस्माद्भीताः। वरुणो हि जलरूपत्वादग्निविरोधीत्यर्थ इति वा। यदि चैनं त्यजसि तदा तव वरः श्रेष्ठः कः परः शत्रुरपि त्वयमेव शत्रुरित्यर्थ इति। धरतीति धरो धर्त्ता जगतः पोषकः स चासावजश्च तस्य धराजस्य श्रीविष्णोः गतिः प्रथममयनमाधारो जलं तस्य पतिर्नापि तु तत्पतिर्वरुणः किं न निर्णीयते। उदकं आपो नारा इत्यादिना

श्रीविष्णोराश्रय.। अथ च यदि त्वं एनं अः श्रीविष्णुः इनः स्वामी यस्य तं श्रीविष्णुभक्तं वरुणं त्यजसि तर्हि तव लाभो न किन्तु हानिरेव। तस्मात्तव कतरो वरुण एव परः श्रेष्ठो वर इति वा। 'अत्रापि त्यागः सूचितः। तथा हि। एष धराजगत्याः पूर्वोक्तप्रकारेण उदकस्य प्रतीच्या दिशो वा पतिर्वरुणो देवो नापि तु स एवेति निर्णीयते किम् अपि तु निश्चित एव। यतो न म्रियते नायं नल इत्यादि तुल्यं। यद्येनं त्यजसि तर्हि तवापि मद्गतामनानां प्राणानां लाभो जीवितामीत्यर्थः। यस्मात् ते सुख-समुद्ररूपः श्रेष्ठो नलो वरो भविता। नलप्राप्त्यैव तव प्राणा नान्यथेति भावः। इत्यादिव्याख्या सुधिया योजनीयाः। ग्रन्थवि-स्तारभयान्न लिखिताः। नलपक्षे अयं नैषधराजस्य निषधदेशस-म्बन्धिनो राज्ञः निषधदेशोद्भवानां लोकानां यो राजा तस्य वा गत्या ज्ञानेन कृत्वा पतिः स्वामी देवः क्रीडादियुक्तो राजा वा ना मनुष्यो नलः किं न निश्चीयते किं वा न म्रियते ऽपि तु निषधाधिपो मर्त्य एवायं पञ्चमो नल एवायं इति निश्चे-तव्यो वरणीयश्चेत्यर्थः। खलु यस्मात्त्वामभजन् अलाभः विष्णु-लाभः। नाविष्णुः पृथिवीपतिरिति नलस्य विष्णुत्वादित्यर्थः। यदि चोत्कृष्टवराकाङ्क्षया एनं त्यजसि तर्हि को वरोऽस्मात् परोऽधि-कोऽपि तु नास्तीति नलमेव वृणोष्वेति भावः। नलस्याप्यवरणे ऽभर्तृकैव स्थास्यसीत्यर्थः। एष धराजगत्या भूलोकस्य पतिः स्वामी ना मनुष्यो नलो देवो राजा नापि तु नल एवेति किं न निश्चीयते किंवा न म्रियते अपि तु निश्चेयो वरणीयश्च। यस्मा-

न्नलवरणे तवातिमहतो जीवनस्य लाभो नलप्राप्तावेव तव जीवनं भविष्यतीत्यर्थः। यदि चायं शुभावहं दैवरूपमेनं त्यजसि तर्हि तव कः श्रेष्ठो वरोऽपि लब्धो नास्तीत्यर्थ इति वा। नैषधराज एव गतिर्यस्यास्तया भवत्या मनुष्योऽयं नलो राजा पतिः किं न निश्चीयते किंवा न व्रियते अपि तु उभयमपि कर्त्तव्यं। यद्येनमुज्झसि तर्हि तव निश्चितमतिमहान् अलाभो महदभाग्यं। यस्मादेतादृशोऽन्यः कतरो वरोऽपि तु नास्त्येवेत्यर्थ इति वा। एष देवो न इन्द्रादिरमरो न किन्तु भूलोकस्य पतिः मनुष्योऽतितेजस्वी नल इति किं न निश्चीयते किंवा न व्रियते। यदि च दैवरूपमेनं त्यजसि तर्हि तव लाभो न किन्तु हानिरेव। धरायां जायन्ते धराजाः मनुष्यास्तेषां गत्या प्रकारेण सनिमेषनेत्रत्वादिलिङ्गेनैष देवो नेति किम् न निर्णीयते तथा पतिरिति किमिति न व्रियते निश्चितं ना मनुष्यो नलोऽयं। यदि चैनं त्यजसि तर्हि तव परोऽन्यो वरः श्रेष्ठः कतरो लाभः अपि त्वेतद्वरणात् परः कोऽपि श्रेष्ठः लाभो नास्तीत्यर्थः। एष धरायां भूलोके अतिसौन्दर्य्यादजः काम इति बुद्ध्या प्राणेशो मनुष्यो नलो न तु देवः कश्चिदिति किं न निर्णीयते किं वा न व्रियते निकटस्थानामेषां चतुर्णामेतदाकारधारणात् कृत्रिमं सौन्दर्य्यं तेषामस्य तु सहजमिति दर्शनमात्रेण तारतम्यं ज्ञात्वा एष नलो निश्चेयः वरणीयश्चेत्यर्थः। इत्यादिव्याख्या यथाबुद्धिर्ज्ञातव्या। नलः स्फोटगले राज्ञि पितृदेवे कपीश्वरे इत्यादि विश्वः ॥ ३४ ॥

इन्द्राग्निदक्षिणदिगीश्वरपाशिभिस्तां
वाचं नले तरलिताऽथ समां प्रमाय।
सा सिन्धुवेणिरिव वाडववीतिहोत्रं
लावण्यभूः कमपि भीमसुताऽऽप तापं॥ ३५॥
प्राप्तुं प्रयच्छति न पक्षचतुष्टये तां
तल्लाभशंसिनि न पञ्चमकोटिमात्रे।

इन्द्रेति। अथ लावण्यभूः परमसौन्दर्योत्पत्तिस्थानं सा भीमसुता नले विषये तां पूर्वोक्तां देवः पतिरित्यादिवाचं चेन्द्राग्निदक्षिणदिगीश्वरपाशिभिः समां सह तुल्यां अंपण तेषामपि वर्णयित्रीं प्रमाय निश्चित्य तरलिता सन्देहवशात् नलनिश्चयाभावाद् दोलायमानमनाः सती कमपि अनिर्वाच्यमतिदुःसहं तापं आप। का कमिव सिन्धुवेणिर्गङ्गा सागरसङ्गमा वाडववीतिहोत्रमिव। वडवानलमिव यथा प्राप्नोति नलनिश्चयाभावाद्वाडवानलमिव दुःसहं सन्तापं प्रापेति भावः। नले तरलिता सोत्कण्ठेति वा॥ ३५॥

प्राप्तुमिति। सा भैमी निषधराजो नलस्य सम्बन्धिन्यां विविधायां सतो बुद्धौ सत्यां नलविषये सन्देहे सतीति यावत्। पञ्चमो चासौ कोटिश्च पञ्चमकोटावेव पञ्चमकोटिमात्रे पञ्चमभागरूपे पञ्चमस्थानस्यमिति यावत्। एवम्भूते पक्षानां मध्ये सत्यतरेऽतितरां सत्येऽपि नले विषये श्रद्धामास्तिक्यं न दधे सत्यनलेऽपि नलोऽयमेवेति तस्या बुद्धिर्नोदभूदित्यर्थः। क सति तस्या-

श्रद्धां दधे निषधराडविमतौ मताना-
मद्वैततत्त्व इव सत्यतरेऽपि लोकः ॥ ३६ ॥

भर्गामिनि भैमीप्राप्त्यभिलाषिणि पञ्चचतुष्टये पञ्चानां समीपवर्त्तिनां सदृशानामिन्द्रादीनां चतुष्टये तां श्रद्धां सत्यनलविषयं निश्चयं प्राप्तुं न प्रयच्छति सति भैमीप्राप्त्यभिलाषेणातिमन्दरूपधारणात् कृत्रिमरत्नादिष्विव मायानलेषु बहुरूपातिशयदर्शनान्नलनिश्चयं प्रतिषेधति सति कः कस्मिन्निव मतानां साङ्ख्यादिषड्दर्शनानां मध्ये एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किञ्चनेत्यादिश्रुतिभिः सत्यतरे परमार्थतो वर्त्तमानेऽपि अद्वैतरूपे तत्त्वे स्वरूपे ब्रह्मैक्यबोधे वा विषये लोकोऽविद्यावान् युक्तायुक्तविचारशून्यो जनो यथा श्रद्धां न धत्ते। क्व सति पञ्चचतुष्टये अनेकात्मवादिसाङ्ख्यादिदर्शनचतुष्के तामद्वैतश्रद्धां प्राप्तुं न ददति सति नानात्मत्वसाधकयुक्तिसहस्रैरेकात्मनिषेधके सतीति यावत्। तस्य तत्पदवाच्यस्य लाभस्त्वंमिनीत्यद्वैततत्त्वस्य विशेषणं। साङ्ख्या हि प्रतिशरीरं पुरुषबहुत्वमङ्गीकुर्व्वन्ति। नैयायिकाश्च नानात्मानो व्यवस्थात इति वचनात् आत्मनो नानात्वमङ्गीकुर्व्वन्ति। आर्हताश्च देहप्रमाणात्मस्वाकारमङ्गीकुर्व्वन्ति। बौद्धाश्च स्वसिद्धान्तसिद्धानेकयुक्तिभिरनेकात्मनामेव चित्ततितिवाहुल्यमङ्गीकुर्व्वन्ति। सत् असत्। सदसत्त्वमलक्षणमिति पञ्चचतुष्टयं। सदादिनः साङ्ख्याः। असदादिनो बौद्धाः। सदसदादिनो नैयायिकाः। सपञ्चानिर्व्वचनी-

यत्नवादिनो वेदान्तिनः। न सत् बाधानुपपत्तेः। न हि सद्रजतं गगनादिकं वा बाध्यते। न चासत् प्रतिभासानुपपत्तेः। न हि अत्यन्तासत् शशशृङ्गं कदाचिदप्यवभासते। न च सदसदात्मकं उभयरूपं परस्परविरोधात्। न ह्यसत्सदा असद्भवितुमर्हति। उभयरूपमपि न भवतीत्यपि वक्तुमयुक्तं इत्यादि ज्ञातव्यं। साङ्ख्या हि प्रतिशरीरं भिन्नान् शुद्धस्वभावान् सर्व्वव्यापकान् बहूनात्मन इच्छन्ति। नैयायिका अपि प्रतिशरीरं भिन्नान् सर्व्वव्यापकान् ज्ञानादिनवविशेषगुणवत आत्मन इच्छन्ति। आर्हतास्तु प्रति शरीरं भिन्नान् देहपरिमाणान् सङ्कोचविकाशशीलान् बहूनात्मनोऽङ्गीकुर्व्वन्ति। बौद्धा हि प्रति देहं भिन्नान् क्षणिकज्ञानसन्ततिरूपान् बहूनेवात्मन इच्छन्ति। भैमीप्राप्त्यभिलाषिणि सत्यतरे नले नलसम्बन्धिन्यो विमती सत्यामपि सा श्रद्धा न दधे अपि तु दधावेव। अनेकनलदर्शने सत्ये पञ्चमकोटिस्थे सत्ये नले अविज्ञातेऽपि वस्तौ यस्मात् प्रह्लादते मन इति न्यायेन अयमेव प्रायेण मत्पतिर्भविष्यतीति तस्या मनसि बुद्धिरुदभूदित्यर्थः। मतानां विमतावपि सत्यतरे अद्वैततत्त्वलोकत इति लोकः परीक्षको जनो यथा श्रद्धां धत्ते तथेति सम्बन्धः। प्राप्तुमिति पाठे निषधराट् नलः इन्द्रादिचतुष्टये भैमीप्रतारणार्थं स्वीयस्वरूपधारणात्तां स्वस्मै प्राप्तुं न यच्छति सति तस्माभशंसिनि भैमीप्राप्त्यभिलाषिणि पञ्चमकोटिस्थे अर्थादात्मनि श्रद्धां निश्चयं न दधे भैमीं प्राप्तुं। एतस्मिंश्चतुष्टये प्रतिबन्धके सतीयं मया कथंकारं प्राप्यते ऽपि तु नेति तस्य

कारिष्यते परिभवः कलिना नलस्य
तां द्वापरस्तु सुतनूमदुनोत् पुरस्तात्।
भैमी नलोपयमनं पिशुनौ सहेते
न द्वापरः किल कलिश्च युगे जगत्यां॥ ३७॥

बुद्धिरुदभूदित्यर्थः। मतानां विमतौ सत्यां सदसदादिपक्षच-तुष्टये तां सम्यक् प्रतीतिं निषेधति सति अभेदसिद्धिशंसिनि पञ्चमकोटिमात्रे चतुष्कोटिविनिर्मुक्ते मतान्तरेऽप्यद्वैततत्त्वे यथा लोकः श्रद्धां न धत्त इति व्याख्येयं। लोकः कौतुकदर्शी स-भास्थो जन इयमेनं वरिष्यतीति निश्चयं अयं पञ्चमः सत्य-नल इति वा निश्चयं न दधे। पञ्चमकोटिमात्रे पुंवत्कर्मधार-येत्यादिना (पा० ६।३।४२) पुंवद्भावः॥ ३६॥

कारिष्यत इति। उक्तिविशेषेण पुनरपि सन्देहजनितं सन्तापं वर्णयति। कलिना चतुर्थयुगेन नलस्य परिभवः पराभवः कारि-ष्यते करिष्यते। द्वापरस्तु अयं वा नलोऽयं वाऽनल इति सदेहः। पुनरथ चशब्दफलेन तृतीयं युगं पुनस्तां सुतनुं सुन्दरीं पुर-स्तात् कलेः पूर्व्वमेवादुनोत् अपिपीडत्। कलिर्वरणानन्तरं नल-पराभवं करिष्यति। द्वापरस्तु भैम्यै एनं नलं वरीतुमेव नादा-दित्यर्थः। तयोर्विरोधित्वे कारणमाह। किल यस्मात् कारणात् द्वापरः कलिश्च द्वावपि युगे जगत्यां भूलोके भैमीनलयोरुप-यमनं विवाहं न सहेते। जातं तयोर्विवाहं कलिर्यथा न सोढा तथा भाविनं द्वापरोऽपि न सेहे। यतः पिशुनौ खलौ। निश्चिते

उत्कण्ठयन् पृथगिमां युगपन्नलेषु
प्रत्येकमेषु परिमोहयमाणवाण ।

नलं विवाहे भवत्येव। मन्दं न तु प्रतिबन्धकः। तस्मात्कलिवत् द्वापरस्यापि विरोधित्वाभावेन सा पीडितेति युक्तमेवेत्यर्थः। द्वापरं कलौ च भैमीनलयोरभावात् तयोर्विवाहं न सहेते तौ इत्यर्थः। नलनिश्चयाभावात् सा अतितमं सन्तापमापेति भावः। शब्दश्लेषबलेनेयमुक्तिः। द्वापरः संशये युगमिति विश्वः। कारिष्यते। स्यसिच् सीयुट् तासिष्वित्यादिना (पा० ६।४।६२) इट्। चिण्वदिडागमे अचो ञ्णितीति (पा० ७।२।११५) वृद्धिः। परिभवः। परौ भुवोऽवज्ञाने इति (पा० ३।३।५५) घञो विकल्पितत्वात् ऋदोरप् (पा० ३।३।५७) ॥ ३७ ॥

उत्कण्ठयन्निति। परिमोहयमाणा मोहजनका बाणा यस्यैवंभूतोऽत एव इमां भैमीं प्रत्येकमेषु इन्द्रादिनलपदेषु युगपदेकस्मिन्नेव काले पृथक् पार्थक्येनोत्कण्ठयन् सोत्कण्ठां कुर्वन् अयं वा नलोऽयं वा नल इति बुद्धावेकैकस्मिन् विषये तुल्यकालं पृथक्प्रकारेणोत्कण्ठयन् पृथक्प्रयत्नसाध्यामन्यादृशीमन्यादृशीमुत्कण्ठां सम्यग् जनयन् इति यावत्। एवम्भूतः स पञ्चबाणः निजाः स्वीयाः शिलीमुखाः बाणास्तान् शीलयत्यभ्यस्यति। स्वीयबाणाञ्छितेति यावत्। एवम्भूता पञ्चसङ्ख्या तस्याः साफल्यं सप्रयोजनत्वं यद्यपि तर्हि तदा तस्मिन्नेवावसरे न त्वन्यदेति वयं जानीमहे उत्प्रेक्षामहे। एकस्मिन्नलेऽनुरागस्य पर्या-

जानीमहे निजशिलीमुखशीनिमद्भ्यः ।
साफल्यमाप स तदा यदि पञ्चबाणः ॥ ३८ ॥

येणैकेनैव बाणेन जनने शेषाणां चतुर्णां वैयर्थ्यमेव स्यात् किमयं नाम इति नलेनापलक्षितेषु पञ्चस्वपि प्रत्येकं पञ्चभिरेव बाणैः पृथक्प्रयत्नेन युगपदनुरागजनने पञ्चानामपि बाणानां साफल्यं तदैव जातमित्यर्थः । पञ्चशिलस्योत्कण्ठाविशेषणत्वात् प्रत्येकमित्यस्येन्द्रादिविशेषणत्वात् सम्बन्धभेदान्नार्थोऽनरुक्तं । नलेषु युगपदिमां पृथगुत्कण्ठयन् तथा प्रत्येकमेषु नलेष्वेव युगपत्परिमाह्वयमाणा अर्थाद्भैम्यां विषयेऽनुरागजनका बाणा यस्य स मदनः यदि निजबाणसङ्ख्यासाफल्यमाप तर्हि तदैव नान्यदा। पञ्चस्वपि तस्या युगपत् पृथगनुरागजननात्। तस्यामपि पञ्चानामपि तेषां प्रत्येकं युगपदनुरागजननाच्च। स्वीयबाणसङ्ख्यायाः साफल्यमापेत्यर्थ इति वा। नलेषु तां पृथक् सोत्कण्ठां कुर्वंस्तथा एषु नलेष्विव प्रत्येकमुत्कण्ठां जनयन्नर्थाद्भैमीं प्रति। यतः परिमाह्वयमाणबाण इत्युभयत्रापि उत्कण्ठाजनने हेतुगर्भविशेषणं। सा भैमी पञ्चस्वपि नलबुद्ध्यैव सानुरागाऽभूदिति भावः । तेऽपि तस्यामित्यपि च भावः। पञ्चस्वनुरागात् पातिव्रत्यभङ्गप्रसङ्ग इति न। पञ्चस्वपि परपुरुषतापरिहारेण नलबुद्ध्यैवानुरागात् परिहारः। उत्कण्ठयन्। इयमुत्कण्ठते कामस्तेनामुत्कण्ठयति। हेतुमण्णिच शता। पक्षान्तरे तूत्कण्ठां कुर्वन्निति तत्करोतीति णिच् ॥ ३८ ॥

देवानियं निषधराजरुचस्त्यजन्ती
रूपादरज्यत नले न विदर्भसुभ्रूः ।
जन्मान्तराधिगतकर्म्मविपाकजन्मा
वोन्मीलति क्व च न कस्य च नानुरागः ॥ ३८ ॥

देवानिति । इयं विदर्भसुभ्रूर्भैमी नले रूपात् सौन्दर्य्यान्नानुरज्यत नानुरक्ता नलेऽनुरक्ता परं रूपाद्धेतोरिति नेत्यर्थः । यतो निषधराजरुचो नलतुल्यकान्तीन् देवानिन्द्रादीन् त्यजन्ती । यदि नले रूपाद्धेतोररज्यत् तर्हि नलतुल्यरूपानिन्द्रादीन् नात्यक्ष्यत् । ते तावत् त्यक्ताः । तस्मात्तत्रानुरागे रूपं हेतुर्न भवतीत्यर्थः । तर्हि कथमनुरक्तेत्याशङ्क्याह । जन्मान्तरे अधिगतं पूर्व्वकृतं कर्म्म तस्य यो विपाकः फलजनकोन्मुखता तज्जन्मा तदुत्पन्न एव कस्य च न कस्यापि प्राणिनोऽनुरागः क्व च न कस्मिंश्चित् प्राणिनि उन्मीलति उत्पद्यते पूर्व्वकृतकर्म्मवशादेव कोऽपि कस्मिंश्चित् प्रीतिं बिभर्त्ति । तथा च पूर्व्वजन्मकृतसुकृतविशेषादेवानपेक्षितान्यकारणविशेषो नलेऽनुरागस्तस्याः समभूदित्यर्थः । नलनिश्चयाभावेऽपि रूपमास्तां सत्यपि च नल एवानुरक्ततया नलादिविशिष्टरूपोऽप्यन्यस्तदीयानुरागविषयो माभूत् किन्तु नल एवेत्यर्थान्तरन्यासमतान् पश्य । अनुरागजननं उभयोरपि पूर्व्वकर्म्मविपाको हेतुर्ज्ञेयः । अरज्यत । शत्यन्तिकरणाद्रञ्जतेर्ञ्जित्वात् कर्त्रभिप्रायक्रियाफलविवक्षया तङ् ॥ ३८ ॥

क्व प्राप्यते स पतगः परिपृच्छ्यते यः
प्रत्येमि तस्य हि पुरेव नलं गिरेति ।
सस्मार सस्मरमतिः प्रति नैषधीयं
तत्रामरालयमरालमरालकेशी ॥ ४० ॥

क्वेति । सस्मरा कामसहिता धीर्मतिर्यस्याः सा अरालकेशी कुटिलकेशी भैमी तत्र सभायां सन्देहावसरे वा इति सन्तान विचार्य्य नैषधीयं नलसम्बन्धिनं नलदूत्यकारिणं अमरालयं मरालं स्वर्गनिवासिनं देवाश्रयं वा हंसं प्रति उद्दिश्य सस्मार । इति किं । स पतगः हंसः क्व कस्मिन् स्थाने प्राप्यते । स कः । यो हंसो मया परितः सामस्त्येन एषु मध्ये सत्यं नलं मह्यं कथयेति विश्वास्यतया पृच्छ्यते । स एव किमिति प्रष्टव्य इति चेत् आह । हि यस्मात्तस्य हंसस्य गिरा पुरेव सङ्घटनाकाल इव नलं प्रत्येमि निश्चिनोमि । अदृष्टमज्ञातमपि च नलं दूत्यावसरे यथा हंसवचनेनाहं ज्ञातवती तथाधुनापि नलनिश्चयाभावे परमाप्तस्य तस्य वचनान्नलं निश्चिनोमीति मदनपरवशत्वेनाऽधीरत्वान्नलनिश्चयार्थमाप्ततमं तं हंसं सस्मारेत्यर्थः । प्राप्यत इत्यादि । वर्त्तमानसामीप्ये वर्त्तमानवद्वा (पा० ३।३।१३१) इति लट् । निषधसम्बन्धि नैषधीयं नलवरणलक्षणं कार्य्यमुद्दिश्य हंसं सस्मारेति वा योजना । किल नैषधीयमिति पाठे नलं किल निश्चितं प्रत्येमीति योजना । प्रियदूतभूतमिति पाठो वा ॥ ४० ॥

एकैकमैक्षत मुहुर्महतादरेण
भेदं विवेद न च पञ्चसु कश्चिदेषा ।
शङ्काशतं वितरता हरता पुनस्त-
दुन्मादिनेव मनसेयमिदं तदाह ॥ ४१ ॥
अस्ति द्विचन्द्रमतिरस्ति जनस्य तत्र
भ्रान्तौ दृगन्तचिपिटीकरणादिरादिः ।

एकैकमिति । एषा भैमी महता आदरेण प्रयत्नेन मुहुः एकैकं इन्द्रादीनैक्षत आलोकत । विशेषजिज्ञासया पुनः साभिप्रायं ददर्शेत्यर्थः । अथ च महता दरेण भयेन, पतिव्रतेयं पञ्चापि सादरं कथं पश्यतीति अविदितसादरालोकनकारणेभ्यो जनेभ्योऽपवादभयेनेत्यर्थः । परं पञ्चसु मध्ये कश्चिदल्पीयांसमपि भेदं विशेषं न च नैव विवेद । अनन्तरञ्च वक्ष्यमाणप्रकारेण शङ्काशतं सन्देहपरम्परां वितरता तन्वता वितीर्य च पुनस्तच्छङ्काशतं हरता वक्ष्यमाणप्रकारान्तरैर्युक्तिभिर्नाशयता मनसा इयं भैमी इदं वक्ष्यमाणं बभाषे । [illegible]यदित्यर्थः । उत्प्रेक्ष्यते । उन्मादिनेव उन्मादवतापि भूयसा आदरेण भयेन वा प्रत्येकमीक्षितं तारतम्यञ्च न जानातीति । शङ्काशतञ्च करोति पुनस्त्यजति ददाति च पुनरादत्ते चेत्येवमव्यवस्थितचित्ता भवति । तथैयमप्यव्यवस्थि[illegible]भूदिति भावः । वेद स्मेति पाठे भूतेऽर्थे । लट् स्मेति (पा० ३।२।११८) लट् ॥ ४१ ॥

तमेव विचारमाह । अस्तीति ॥ जनस्य द्विचन्द्रमतिः द्वौ

स्वच्छोपसर्पणमपि प्रतिमाभिमाने
भेदभ्रमे पुनरमीषु न मे निमित्तम् ॥ ४२ ॥
किं वा तनोति मयि नैषध एव काय-
व्यूहं विधाय परिहासमसौ विलासी।

चन्द्राविति बुद्धिः प्रसिद्धाऽस्ति। परं तत्र भ्रान्तौ प्रमाणप्रमित्यै-कत्वे एकस्मिन्नेव चन्द्रे विषये यो अनेकत्वप्रत्ययस्तस्मिन्विषये दृगन्तयोर्नेत्रप्रान्तयोर्यश्चिपिटीकरणं अचिपिटयोश्चिपिटयोः करणं अङ्गुल्यग्रेण निपीडनं तदादिर्यस्य काचकामलादिदोषस्य स दृगन्तचिपिटीकरणादिदोष आदिः प्रथमो हेतुरस्ति। चन्द्रद्वयभ्रान्तौ चिपिटादिः हेतुर्युक्तः। तथा प्रतिमाया आदर्शादौ दृश्यमानस्य मुखादिप्रतिबिम्बस्याभिमानेऽपि प्रतिबिम्बस्फुरणरूपे भ्रान्तिज्ञानेऽपि स्वच्छस्यादर्शादेरुप समीपे यत् समर्पणं प्रापणं दर्पणसन्निधानं तन्निमित्तं अस्तीति शेषः। दर्पणादिस्वच्छवस्तुसन्निधानादलीकमपि प्रतिबिम्बं भासत इत्यर्थः। मे मम पुनरमीषु दृश्यमानेषु भेदभ्रमे एकस्मिन्नले विषये यः पञ्चत्वभ्रमस्तद्विषयो बोधस्तस्मिन् विषये निमित्तं कारणं नास्ति। द्विचन्द्रभ्रान्तौ कारणमस्तीति भ्रान्तिर्युक्ता। एकोऽपि नलः पञ्चधा भासत इति तु मदीया भ्रान्तिः कारणाभावान्न युक्ता। तस्मादत्र एवेति के च न भविष्यन्तीति स्वयमेव संशयञ्चकार परिजहार चेति भावः। अभिमानोऽर्थादिदर्पे ज्ञाने प्रणयहिंसयोरिति निघण्टुः॥ ४२॥

पक्षान्तरमाह। किं वेति॥ वा पक्षान्तरे। असौ प्रत्यक्षदृश्यः

विज्ञानवैभवभृतः किमु तस्य विद्या
सा विद्यते न तुरगाशयवेदितेव ॥ ४३ ॥
एको नलः किमयमन्यतमः किमैलः
कामोऽपरः किमु किमु द्वयमाश्विनेयौ ।
किं रूपधेयभरसीमतया समेषु
तेष्वेव नेह नलमोहमहं वहे वा ॥ ४४ ॥

नैषध एव कायव्यूहं शरीरसमूहं विधाय निर्भाग्यायामपि परिहासं प्रतारणाक्रीडां तनोति किं। यतो विलासी एकोऽप्यसौ नलः एवमपि क्रीडावशात् कायव्यूहं तनोति न त्वन्ये के च न सन्तीत्यर्थः। किन्ना तनोतीति पाठे काकुः। कायव्यूहरचनेऽस्य शक्तिः कथमित्यत आह। विशिष्टस्य ज्ञानस्य विशिष्टं ज्ञानं यैरेवंविधा ये कला ग्रन्थाः तेषां वा वैभवं बाहुल्यं तद्भृतस्तस्य नलस्य तुरगाशयवेदितेव अश्वहृदयज्ञातेव सा कायव्यूहविधानरूपा विद्यापि किमु न विद्यते अपि तु सापि विद्यत एवेति सम्भावना। विज्ञानवैभवभुव इति पाठे। भुवः स्थानभूतस्येत्यर्थः। परिहासः। उपसर्गस्य घञ्यमनुष्ये (पा० ६।३।१२२) सूत्रे बहुलग्रहणाद् दीर्घः ॥ ४३ ॥

एक इति। वा पक्षान्तरे। इह एषु पञ्चसु मध्ये अयमेको नलः किं। अन्यतमः द्वितीय ऐलः पुरूरवाः किं। अपरस्तृतीयः कामः किमु। शिष्टद्वयं आश्विनेयौ अश्विनीकुमारौ किमु। एवं मुख्येषु तेषु पञ्चसु एव अहं नलमोहं किं न वहे। अपि तु तेष्वेव

पूर्व्वं मया विरहनिःसहयापि दृष्टः
सोऽयं प्रियस्तत इतो निषधाधिराजः ।
भूयः किमागतवती मम सा दशेयं
पश्यामि यद्विलसितेन नलाननीकान् ॥ ४५ ॥
मुग्धा दधामि कथमित्थमथापशङ्कां
सङ्क्रन्दनादिकपटः स्फुटमीदृशोऽयं ।

नलबुद्धिं धारयामि। न तु कायव्यूहरचनादेक एव नलः पञ्चधा जात इत्यर्थः । यतो रूपधेयभरस्य सौन्दर्य्यबाहुल्यस्य सीमतया पराकाष्ठात्वेन सर्व्वेषु सदृशेषु साक्षादिमोहो युक्तः । अन्यतमः । स्वार्थे तमप् । सीमशब्दो नान्तः स्त्रीलिङ्गः ॥ ४४ ॥

पूर्व्वमिति । विरहनिःसहया वियोगविक्लवया मया सोऽयं निषधाधिराजः प्रियः प्राणेश इतस्ततः सर्व्वासु दिक्षु पूर्व्वमपि स्वयंवरसमयात् प्रागपि दृष्टः। य इदानीं दृश्यते स मोहवशात् सर्व्वत्र पूर्व्वमपि दृष्ट इत्यर्थः । प्रकृते किमित्यत आह । ममेयं भूयः पुनरपि सैव विरहोद्भूतोद्भ्रान्तता रूपा दशा आगतवती किं। यद्विलसितेन यस्याः सामर्थ्येनालीकानसत्यान्नलान् पश्यामि । अपि पूर्व्वं इत्यनेन भूय इत्यनेन वा योजनीयः ॥ ४५॥

मुग्धेति। अथ पक्षान्तरे। अथवा मुग्धा मोहवशा सती अहं इत्थं अस्ति द्विचन्द्रेत्याद्यनेकरूपां अपशङ्कां दुःशङ्कां कथं दधामि अपि त्वेतदयुक्तमित्यर्थः । यतः स्फुटं निश्चितं अयमीदृशः नलबाहुल्यज्ञानरूपः सङ्क्रन्दनादीनामिन्द्रादीनां चतुर्णां कप-

देव्याऽनयैव रचिता हि तथा तथैषां
गाथा यथा दिगधिपानपि ताः स्पृशन्ति ॥ ४६ ॥
एतन्मदीयमतिवञ्चकपञ्चकस्थे
नाथे कथं नु मनुजस्य चकास्तु चिह्नं।

टस्तेषां माययैवेषेत्यर्थः। हि यस्मादनया देव्यैव सरस्वत्यैवैषां पुरोवस्थितानां सम्बन्धिन्यो गाथाः भूम इत्यादिवर्णनश्लोकास्तथा तथा तेन तेन प्रकारेण रचिताः यथा येन प्रकारेण ता गाथा दिगधिपानिन्द्रादीनपि स्पृशन्ति श्लिष्टशब्दशक्त्याऽभिधावृत्त्या वदन्ति न केवलमित्यपरार्थं। तस्मादिन्द्रादिभिरेव मत्प्रतारणार्थं मायया नलरूपं धृतमित्येव बुद्धिर्युक्ता न तु संशयकल्पेत्यर्थः। तथाशब्दस्य द्विरुपादानाद् यथाशब्दोऽपि द्विर्ज्ञातव्यः। कपटोऽस्त्री व्याजदम्भोपधय इत्यमरः॥ ४६ ॥

एतदिति। एतस्मिन्मदीयायां मतिवञ्चके भ्रामके पञ्चके इन्द्रादिसमूहे तन्मध्यस्थिते नाथे मम प्राणेशे मनुजस्य मनुष्यस्य चिह्नं स्वेदनिमेषरजःस्पर्शम्लानपुष्पमाल्यादिलिङ्गं कथं नु कथमिव चकास्तु प्रकाशतां। अपि त्विन्द्रादिमायया नलस्यस्यापि चिह्नस्य छादितत्वात्तन्न प्रकाशत इति युक्तमित्यर्थः। नलस्य स्वयमवञ्चकत्वेऽपि क्वचिणां गच्छतीति न्यायात् चतुर्णामेव वञ्चकत्वेऽपि तत्सिद्धिः। परिहासवशाद्वा नलस्यास्यापि वञ्चकत्वं युक्तम्। एतद्राजसु दृश्यमानं स्वेदादिचिह्नमिति भिन्नं पदं वा। इतस्त्विदं अमी बर्हिर्मुखा देवाः। धूतं त्यक्तं रजो रेणुःस्वेदो

लक्ष्माणि तानि किममी न वहन्ति हन्त
बहिर्मुखा धुतरजस्तनुतामुखानि ॥ ४७ ॥
याचे नलं किममरानथवा तदर्थं
नित्यार्च्चनादपि ममाफलिनैरलन्तैः ।
कन्दर्पशोषणशिलीमुखपातपीत-
कारुण्यनीरनिधिगह्वरघोरचित्तैः ॥ ४८ ॥

यया एवम्भूता तनुर्येषां तेषां भावो धुतरजस्तनुता रेणुसंस्पर्शरहिततनुता मुखं मालिन्यादि येषां तानि स्वेदराहित्याम्लानपुष्पत्वनिर्निमेषत्वादीनि देवत्वव्यञ्जकानि तानि प्रसिद्धानि चिह्नानि किमिति न वहन्ति धारयन्ति । मयि कृपया तावद्वाञ्छयुक्तानि परन्तु नो॰न्ते कष्टमित्यर्थः । बहिर्मुखपदं कृपाराहित्यसूचकं । नलचिह्नानामस्फुटत्वेऽपि यदि देवचिह्नानि स्फुटान्यभविष्यंस्तर्हि पारिशेष्यान्नलनिश्चयोऽप्यभविष्यत्तान्यपि त्वस्फुटानीत्युभयथापि मया नलो निश्चेतुं न शक्यत इति भावः ॥ ४७ ॥

याचे इति । अहं, मह्यं यूयं नलं प्रयच्छतेति, अमरान् नलं याचे किं । अथवा पूर्व्वापरितोषे । तदर्थं नलप्राप्त्यर्थं [illegible] नित्यार्च्चनादपि ममाऽफलिनैः प्रार्थितमददद्भिस्तैर्देवैर्नलं पूर्य्यतां एतावन्ति दिनानि । नित्यपूजनादपि ये नलं न प्रायच्छंस्तेऽधुना प्रार्थनमात्रेण कथं दास्यन्तीति वृथैव तत्प्रार्थनमित्यर्थः । किंविधैस्तैः । कन्दर्पस्य शोषणाख्यशिलीमुखो बाणस्तेन पातात् पतनात् पीतः शोषितः कारुण्यनीरनिधिः कृपासमुद्रो येषां तानि अत

ईशा दिशां नलभुवं प्रतिपद्य लेखा
वर्णश्रियं गुणवतामपि वः कथं वा ।
मूर्खान्धकूपपतनादिव पुस्तकाना-
मस्तं गतं वत परोपकृतिव्रतित्वं ॥ ४९ ॥

एव गह्वराणि गभीरविलरूपाणि घोराणि कठिनानि चित्तानि येषामेवम्भूतैः । यस्मात् कृतेऽपि नित्यपूजने कामायत्ततया निष्फलत्वादफलितैरित्यर्थः । याचिर्द्विकर्म्मा । न दत्तफलैरिति वा पाठः । फलशब्दादस्त्यर्थे फलबर्हाभ्यामिनच् (पा० ५।२।१२२। वा० ५।) ततो नञ्समासः ॥ ४८ ॥

देवानुपालभते । ईशा इति । हे दिशामीशा दिक्पाला लेखा देवाः, नलो भूः स्थानं यस्यास्तां नलभुवं नलप्रभवां वा वर्णश्रियं रूपशोभां प्रतिपद्य प्राप्य गुणवतां सौन्दर्य्यादिगुणयुक्तानामपि वो युष्माकं परेषामुपकृतिरुपकार एव व्रतं तद्वतां येषां ते व्रतिनस्तेषां भावस्तत्त्वं कथं वा कुतो वा हेतोरस्तं गतं नष्टं स्वयमुपकारकत्वाभावेऽपि स्वाभिलषितायामपि मयि भवदर्थदूत्यकारिणा नलस्याप्याकारे धृते सौन्दर्य्यादिगुणागमनात् परोपकारित्वमप्यागतं तन्मद्विषये कथं विनष्टमित्यर्थः । नलाकारधारणाद्देवा ततो मत्प्रतारणा किमिति क्रियत इति भावः । केषामिव । मूर्खाः अश्रुतशास्त्राः पुरुषा एवाज्ञानवशादन्धास्त एव कूपा अतिगभीरा मूर्खकूपाः कूपास्तेषु पतनात् तदधीनत्वात्तृणविशेषलेखनीभूतनलप्रभवां रेखां वर्णश्रियं लिप्यक्षरशोभां प्राप्य

यस्येश्वरेण यदलेखि ललाटपट्टे
तत् स्यादयोग्यमपि योग्यमपास्य तस्य।
का वासनाऽस्तु विस्मयामिह यां हृदाऽहं
नार्कातपैर्जलजमेति हिमैस्तु दाहम् ॥ ५० ॥

शुद्धत्वादिगुणयुक्तानां दोरकयुक्तानां वा पुस्तकानां यथा वाचकपाठकाद्युपकारकारित्वरूपमस्तङ्गच्छति मूर्खस्य मूर्खत्वादेवोपकाराभावादन्येषां चासमर्पणादित्यर्थः। कूपपतितानामपि पुस्तकानामनुपकारकत्वमेव प्रतिपद्य स्थितानामिति समानकर्तृकत्वं ॥ ४९ ॥

यस्येति। ईश्वरेण यस्य प्राणिनः ललाटपट्टे यदयोग्यमनुचितमपि अलेखि लिखितं तदयोग्यमपि तस्य योग्यं समुचितमर्थं अपास्य प्रतिक्षिप्य स्याद्भवेत्। योग्यमर्थं परित्यज्य तत्परिहारेण स्वयमेव भवेदिति यावत्। अतो योग्यतया कार्य्यकरणाभावे सति इह नलानेकत्वसन्देहेन निश्चयार्थं यां वासनां युक्तिसहं हृदा विस्मयां धारयेयं सा का वासना युक्तिरस्तु भवतु अपि त्वेवंविधा युक्तिर्नास्ति। चित्तेनान्यथाकर्त्तुं विचारितेऽपि ललाटपट्टलिखितादन्यथा न भवतीत्यर्थः। योग्यमपास्यायोग्यमेव भवतीत्यत्र दृष्टान्तमाह। यतो जलजमम्भोजं अर्कातपैरुष्णैरपि सूर्य्यकिरणैर्दाहं नैति हिमैस्तु पुनर्दाहं गच्छति। उष्णस्पर्शो दाहकः शीतस्पर्शस्तु दाहशमक इति लोके दृष्टं। तदिदं विपरीतं जातमिति विरुद्धकार्य्योत्पत्तेर्विषमं नलस्य मम वा ललाटे यदी-

इत्थं यथेह मदभाग्यमनेन मन्ये
कल्पद्रुमोऽपि स मया खलु याच्यमानः ।
सङ्कोचसंज्वरदलाङ्गुलिपल्लवाग्र-
पाणिर्भवन् भवति मां प्रति बद्धमुष्टिः ॥ ५१ ॥
देव्याः करे वरणमाल्यमथार्पये वा
यो वीरसेनिरिह तत्र निवेशयेति ।

अरेणायोग्यमेव लिखितं तर्हि परस्परयोग्यं परस्परं विहाय तस्य मम चायोग्यमेव भविष्यतीति कं प्रकारं चित्ते धारयिष्याम्यपि तु न कमपीति देवानां न कोऽप्यपराध इति भावः ॥ ५० ॥

तर्हि कल्पद्रुमो याच्यतामित्यत आह । इत्थमिति । इह नलैकत्वेऽपि समये वा इत्थमनेन नलानेकत्वभवनप्रकारेण यथा यादृक् ममाभाग्यं नलानिश्चयात् यथा दैवाभावो दृश्यते अनेन हेतुना प्रकारेण वा सोऽतिवदान्यः कल्पद्रुमोऽपि खलु निश्चितं मया नलं याच्यमानः सन् मां प्रति बद्धमुष्टिरतिकार्पण्यमङ्कुचत्करो भवतीत्यहं मन्ये। किम्भूतः। सङ्कोच एव संज्वरः सन्तापो येषां एवंविधानि दलानि किसलयान्येव अङ्गुलयो येषामेवम्भूताः पल्लवा एवाग्रपाणयः हस्ताग्राणि यस्यैवम्भूतः। अनेन एवम्भूतो भवन्। अन्यस्यापि बद्धमुष्टेरङ्गुलयः सङ्कुचिता भवन्ति । कल्पितदानशीलोऽपि मदभाग्यवशान्मां प्रत्यदातेव भवेदिति भावः। अदातृत्वनिश्चयात् भवन्तीति वर्त्तमानप्रत्ययः ॥ ५१ ॥

देव्या इति । अथवा इह स्वयम्बरे एतेषु पञ्चसु मध्ये वा यो

सैषा मया मखभुजां द्विषती कृता स्यात्
स्वस्मै तृणाय तु विहन्मि न बन्धुरत्नम् ॥ ५२ ॥
यः स्यादमीषु परमार्थनलः स माला-
मङ्गीकरोतु वरणाय ममेति चैतां।
तं प्रापयामि यदि तत्र विहाय लज्जां
कुर्व्वे कथं जगति भूरणवति हो विडम्बः ॥ ५३ ॥

वैरिमेति: सत्यनलः तत्त्वं तावज्जानामि अतस्त्वेतां मालां नि-वेशय निक्षिपेत्युक्त्वा देव्याः सरस्वत्याः करे वरणमाल्यं वरणम-धूकमालां अर्पये ददामीति सम्भावना। स्वयमेवैतद्दूषयति। एवं क्रियमाणे सैषा देवी या मखभुजां देवानामिन्द्रादीनां द्विषती वैरिणी कृता स्यात्। तन्मायाप्रकटनादित्यर्थः। भवतु नाम सा तद्वैरिणी स्वकार्य्यसिद्धिस्तु साध्येत्यत आह। तु पुनः तृणाय तृणतुल्यायातिनिःसाराय स्वस्मै स्वरूपाय अकिञ्चित्करात्म-कार्य्यसिद्ध्यं बन्धुरत्नं सुहृन्मध्येऽतिश्रेष्ठां देवीं न विहन्मि। मम यत् किंवा भवतु परंतु देवद्वेषरूपं मित्रविघातं न करोमीत्यर्थः। अन्योऽपि तृणार्थं सुज्ञः रत्नं न विनाशयति। द्विषती। द्विषोऽमित्रे (पा० ३।२।१३१) इति शतरि, उगितश्च ङीप् (पा० ४।१।६)। मखभुजां। द्विषः शतुर्वेति (पा० २।३।६९) षष्ठी॥ ५२॥

य इति। अमीषु पञ्चसु भवत्सु मध्ये यः परमार्थनलः सत्य-नलः स्यात् स मम वरणाय मालामङ्गीकरोतु इत्येवंप्रकारेण इत्युक्त्वा चेति वा मालां तत्र तेषु मध्ये सत्यनलं प्रापयामि तत्पु-

इतरनलतुलाभाजेषु शेषः सुधाभिः
स्नपयति मम चेतो नैषधः कस्य हेतोः ।

नर्म्मज्ञां विसृज्य कथं कुर्व्वे अपि त्वं कर्त्तुमयुक्तं। यतः जगति सर्व्वस्मिन् सभाजने गृह्णति सति हो कष्टं विडम्बः। लज्जात्यागादतिपरिहासो भविष्यतीति शेषः। सर्व्वेषां समक्षमेवं वचने लज्जात्यागात् सर्व्वेऽप्युपहसिष्यन्तीत्यर्थः। हीति खेदे। हि यस्मादर्थे इ खेदे इति वा। इति चेति समुदायप्रकारे। यदि चेति वा ॥ ५३ ॥

इतरेति। इतरैश्चतुर्भिर्नलैस्तुलां साम्यं भजत इति भाग एषु शेषः पञ्चसु मध्ये अन्यः पञ्चमो नैषधः मम चेतः कस्य हेतोः केन कारणेन सुधाभिरमृतैः स्नपयति आप्लुतमिव करोति। रूपसाम्ये सत्यपेष एव मम मनसे यतो रोचते तस्मादयमेव सत्यनलो भविष्यतीत्याशयः। सत्यनलत्वज्ञापकं निरुपाधिकपरमप्रेमसम्वाददृष्टान्तेनान्यथा कथयति। प्रथमेति। वाऽथवा युक्तमेतत् प्रथमचरमयोरादिमान्त्ययोः शब्दयोर्वर्णरत्नैः सख्ये मैत्र्यां सत्यामपि चरमे यास्त्यन्ये शब्दे अनुप्रासभासांच्छेकानुप्रासवृत्त्यनुप्रासलाटानुप्रासाख्यशब्दालङ्कारकान्तीनां विलास उल्लासश्चमत्कारो विशेषेण शोभते। वर्णसाम्ये सत्यपि प्रथमस्यानायासगतत्वाद् द्वितीयस्य तु सदृशस्य पश्चाद्भविप्रयत्नसाध्यत्वाच्चरमे यद्यप्यनुप्रासत्वं स्फुरति तथापि द्वितीयसाहित्ये प्रथमेऽपि यथानुप्रासत्वमस्ति तथा सुन्दरान्तरविच्छेदेन पश्चा-

प्रथमचरमयोर्वा शब्दयोर्वर्णसख्ये
विलसति चरमेऽनुप्रासभासां विलासः ॥ ५४ ॥
इति मनसि विकल्पानुद्यतः सन्त्यजन्ती
क्वचिदपि दमयन्ती निर्णयं नाससाद ।
मुखमथ परितापास्कन्दितानन्दमस्या-
मिह रविरचितावस्कन्दमिन्दुं निनिन्द ॥ ५५ ॥

दवलोक्यमानतयैव पञ्चमस्तेतमे रोचते तेन तत्र सत्यत्वं प्रयोजकं अतः सर्व्वेऽपि तुल्या एवेति भावः। अत्रायमेव श्लोको दृष्टान्तः। अत्र तयोरेव प्रथमचरमशब्दयोर्वर्णसाम्ये सत्यपि चरमे चरमशब्द एवानुप्रासातिशयो न प्रथमशब्दे। प्रथम इत्युक्ते नानुप्रासः। प्रथमचरमयोरित्युक्ते तु चरम एवानुप्रासातिशयो दृश्यते। न तथा प्रथम इत्यर्थ इति वा। यद्वा आद्यपादचतुर्थपादयोर्वर्णसाम्ये सत्यपि चरमे चतुर्थपादेऽनुप्रासभासां विलासो विलसति। उभयोरनुप्रासत्वे सत्यपि चतुर्थेऽनुप्रासभासां विलास इत्युक्तेस्तत्रैवानुप्रासत्वं न तु प्रथमे। स्नपयतीति। मित्त्वपक्षे ह्रस्वः। कस्य हेतोः। षष्ठी हेतुप्रयोगे इति (पा० २।३।२६) षष्ठी ॥ ५४ ॥

इतीति। इति उक्तप्रकारेण मनसि उद्यतः उत्पद्यमानान् विकल्पान् अनेकशङ्कावलंबनबोधान् दोषोद्भावनेन संत्यजन्ती क्वचिदपि पक्षे निर्णयं निश्चयं नाससाद। पञ्चसु मध्ये कस्मिन्नपि पुंसि नलनिश्चयं न प्रापेति वा। अथ पश्चान्नलनिश्चयाभावात्

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं।
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यं॥
स्वादूत्पादभृति त्रयोदशतयाऽऽदेश्यस्तदीये महा-
काव्ये चारुणि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः॥५६॥

परितापेनास्कन्दितो अभिभूत आनन्दो यस्य। परितापेन ह्वत्वा ऽस्कन्दितोऽप्राप्त आनन्दो येनैवम्भूतं वाऽस्या मुखं कर्त्तृ मिहिरेण सूर्य्येण रचितः अवस्कन्दः पराभवो यस्यैवंविधं इन्दुं निमिन्द निष्प्रभदिनचन्द्रसदृशमभूदित्यर्थः। आस्कन्दनमास्कन्दः परा-भवः परितापेन य आस्कन्दः स सञ्जातो यस्यैवंविधो आ-नन्दो यस्येति। तदस्येति (पा॰ ५।२।३६) तारकादित्वादितच् सिद्धिः॥५५॥

श्रीहर्षमिति। अर्द्धं पूर्व्ववत्॥ स्वादूत्पादभृति सहृदयहृ-दयाह्लाददायित्वात् स्वादुरसोत्पत्तिधारके ऽत्यन्तमधुरनवार्थ-सहिते त्रयोदशतया आदेश्योऽभिधेयः सर्गो स्वभावेनोज्ज्वलः व्यरमत् समाप्त इत्यर्थः। व्यरमत्। व्याङ्परिभ्यो रमः (पा॰ १। ३।८३) इति परस्मैपदम्॥५६॥ इति श्रीवेदरकरोपनामक-श्रीमन्नरसिंहपण्डितात्मजनारायणकृते नैषधीयप्रकाशे त्रयो-दशः सर्गः॥१३॥

उत्तरनैषधचरिते।

चतुर्दशः सर्गः।

---

ॐ गणेशाय नमः।

अथाधिगन्तुं निषधेश्वरं सा
प्रसादनामाद्रियतामराणाम्।
यतः सुराणां सुरभिर्नृणान्तु
सा वेधसाऽसृज्यत कामधेनुः॥ १॥

अथाधिगन्तुं निषधेशमेषा
प्रसादनं दानवशात्रवाणाम्।
अचेष्टतासौ महतीष्टसिद्धि-
राराधनादेव हि देवतानाम्॥ २॥

अथेति। अथ विकल्पदूषणानन्तरं सा भैमी निषधेश्वरं नलमधिगन्तुं निश्चेतुं प्राप्तुञ्च षोडशोपचारैरमराणां प्रसादनां परितोषणमाद्रियतादरेण चकार। यतः वेधसा सुराणां कामधेनुरभिलाषप्रसूः सुरभिर्गौरसृज्यत सृष्टा। नृणां तु पुनः कामप्रसूः सा देवप्रसादना सृष्टा। तस्मान्नलनिश्चयार्थं प्राप्त्यर्थञ्च देवपरितोषणं चकारेति युक्तमित्यर्थः॥ १॥

अथेति क्षेपकः। अचेष्टत अकुरुत। शत्रव एव शात्रवाः प्रज्ञादित्वात् स्वार्थेऽण्॥ २॥

प्रदक्षिणप्रक्रमणालवाल-
विलेपधूपाचरणाम्बुसेकैः।
इष्टञ्च मिष्टञ्च फलं सुवाना
देवा हि कल्पद्रुमकाननं नः॥ ३॥
श्रद्धामयीभूय सुपर्वणस्तान्
ननाम नामग्रहणाग्रकं सा।

पूर्व्वोक्तार्थसमर्थनार्थमर्थान्तरन्यासमाह। प्रदक्षिणेति। हि यस्माद् देवाः नोऽस्माकं मनुष्याणां कल्पद्रुमकाननं यहत्ः कल्पवृक्षा एवेति कवेरुक्तिः। किंभूता देवाः। प्रदक्षिणरूपं प्रक्रमणञ्च वलयाकारं परिभ्रमणं तदेवालवालं वृक्षमूले जल-धारणार्थं वलयाकारः सेतुः स च विलेपश्चन्दनादिलेपश्च धूपो दशाङ्गादिः तेषामाचरणानि करणानि तान्येवाम्बुसेकाः प्रद-क्षिणाद्याचरणञ्च उदकस्नपनानि च तैर्वा कृत्वा इष्टमभिलषि-तञ्च मिष्टञ्च स्वभावसुन्दरं सुस्वादु च फलं मनोरथरूपमासा-दिकञ्च सुवाना उत्पादयन्तः। वृक्षा अपि आलवालवृक्षा-र्य्यवेदोक्तनरूदोषनाशकनिविडिङ्गादिलेपदोहदधूपाम्बुसेकैरिष्टं मिष्टञ्च फलं सुवते। आवरणमिति पाठे अङ्कुरत्यङ्कुदेवत।पुष्पा कण्टकादिहतिश्चेति व्याख्येयं॥ ३॥

पूजाप्रारम्भार्थं प्रथमं नमस्कारमाह। श्रद्धेति॥ सा श्रद्धा-मयीभूय आस्तिक्यप्रचुरा भूत्वा तान्सर्व्वयशभागिनः सुपर्वणो देवान् नामग्रहणाग्रकं इन्द्राय नम इत्यादिनामग्रहणपूर्व्वकं

सुरेषु हि श्रद्दधतां नमस्या
सर्व्वार्थसिद्ध्यङ्गमिथःसमस्या ॥ ४ ॥
यत्तान् निजे सा हृदि भावनाया
बलेन साक्षादकृताखिलस्थान्।
अभूदभीष्टप्रतिभूस्तदस्या
वरं हि दृष्टा ददते परन्ते ॥ ५ ॥

ननाम ववन्दे। हि यस्मात् सुरेषु श्रद्धावतां नमस्या नमस्कार एव सर्व्वार्थसिद्धेर्यान्यङ्गानि तेषां मिथःसमस्या परस्परपूरण-हेतुः। श्रद्धापूर्व्वं देवनमस्कार एव कारणसामग्रीसम्पादकः। तस्माद्देवं नमस्कृतवतीत्यर्थः। समस्या यथा पदानां परिपूरणं करोति तथा नमस्या वाञ्छापूरणं करोतीति भावः। श्रद्धा-मयी। प्रकृतवचने मयट्। अग्रकं। शेषाद्विभाषेति कः (पा० ५।४।१५४।) नमस्करणं नमस्या। नमो वरिव इति क्यच् (पा० ३।१।१९।) ॥ ४ ॥

देवपूजाङ्गं ध्यानं प्रथममाह। यदिति ॥ साऽखिलस्थान् सर्व्वगतांस्तानिन्द्रादीन् भावनया ध्यानस्य बलेन सामर्थ्येन निजे हृदि यत्साक्षादकृत प्रत्यक्षीचकार। सर्व्वगतानपि ध्यानबलेनै-कत्रानीय ददर्शेत्यर्थः। स साक्षात्कार एव तस्या भैम्या अभी-ष्टस्य नलप्राप्तिलक्षणस्य प्रतिभूः दाननिश्चयकर्त्ताऽभूत्। हि यस्माद्दृष्टास्ते देवाः परं श्रेष्ठं वरमभीष्टं परिणेतारञ्च ददते प्रयच्छन्ति। न हि देवदर्शनं निष्फलं भवतीत्यर्थः ॥ ५ ॥

इत्यग्रसद्मन्यधिवास्य बुद्ध्या
दध्यावथैनान्नियमैकताना।
सुपर्वणां हि स्फुटभावना या
सा पूर्व्वरूपं फलभावनायाः॥ ६॥
सभाजनं तत्र ससर्ज तेषां
सभाजने पश्यति विस्मिते सा।

पूजानन्तरं पुनरपि ध्यानमाह। इदिति। अथ पूजानन्तरं नियमैकतानाऽनन्यवृत्तिस्तत्परा सती इदेव पद्मं तद्रूपे सद्मनि गृहे एतानिन्द्रादीन् बुद्ध्याऽधिवास्याधिष्ठाप्य दध्यौ सर्व्वगतानामपि देवानां हृदये बुद्ध्या समारोपितं रूपं ध्यानेन साक्षात्कृतेति यावत्। हि यस्मात् सुपर्वणां देवानां या स्फुटा भावना ध्यानबलेन प्रत्यक्षता सा फलभावनायाः कार्य्यसिद्धेः पूर्व्वरूपं प्रथमं स्वरूपं। कारणस्य कार्य्यापेक्षया नियतप्राग्भावित्वाद्देवानां प्रत्यक्षतायाः कार्य्यमात्रं प्रति कारणत्वात् कारणसामग्रीरूपां देवप्रत्यक्षतां ध्यानेनाकृतेत्यर्थः। पूजायाः पूर्व्वमनन्तरञ्च ध्यानस्य दृष्टत्वात् अत्रानित्यत्वाञ्च श्लोकस्य न पौनरुक्त्यं। उपान्वध्याङ्वसः इत्यत्र (पा० १।४।४८) अण्यन्तस्य वसेर्ग्रहणात् स्वहस्तदत्ते मुनिमासने इति च ण्यन्तस्य वसः प्रकृत्यन्तरत्वात् इत्यग्रनीत्याधारस्य न कर्म्मत्वं॥ ६॥

इदानीं देवपूजामाह। सभाजनमिति। सा तत्र स्वयम्बरस्थाने अकस्मादेव देवपूजारम्भाद् अत्यादरेण च पूजनाद्विस्मिते

आमुद्यते यत्सुमनोभिरेवं
फलस्य सिद्धौ सुमनोभिरेव ॥ ७ ॥
वैशद्यहृद्यैर्म्रदिमाभिरामै-
रामोदिभिस्तानथ जातिजातैः।

सार्वर्थ्ये सभाजने सभालोके पश्यति सति तमनादृत्य वा तेषां देवानां सभाजनं प्रीत्याऽऽराधनं ससर्ज चक्रे। यद्यस्मात् फलस्याभीष्टस्य सिद्धौ दाने सुमनोभिः शोभनचित्तैरेवम्भूतैरेव सद्भिः सुमनोभिर्देवैः एवमत्यादरपूजनेन कृत्वा आमुद्यते हर्षेर्भूयते तस्मादेवमपूजयदित्यर्थः। एवमेवैवंमत्येति प्रेवकारयोजना वा। पुष्पैरपि फलसिद्ध्यर्थमामुद्यते विकस्वरीभूयते। सभाजनं। यस्य च भावेनेति (पा० २।३।३७।) षष्ठी चानादर इति (पा० २।३।३८) वा सप्तमी ॥ ७ ॥

वैशद्येति। अथ सा नवीनैर्नवैः स्तवैः स्तुतिश्लोकरूपैः प्रसूनस्तवकैः पुष्पगुच्छैः स्तुतिश्लोकैः पुष्पगुच्छैश्च वा तानिन्द्रादीन् आनर्च। किं विधैः। वैशद्येन स्पष्टतया प्रसादगुणेन हृद्यैः हृदयहृदयप्रियैः। अथ च शुभ्रत्वेन मनोज्ञैः। तथा म्रदिम्ना निष्ठुरटवर्गादिवर्णरहितश्रुतिमधुरवर्णरचनाजनितेन माधुर्य्येण। अथ च सौकुमार्य्येणाभिरामैरत एवामोदिभिर्हर्षजनकैः। अथ च सौगन्ध्यसहितैः। तथा जातैः षड्विंशत्यक्षरजनितचरणाद्यनुष्टुबादिजातैर्निष्पन्नैः। अथ च मालतीसम्भवैः। तथा आर्य्याविशेषरूपया गीत्या अन्विता युक्ताः षट्पदाः षट्चरणाः श्लोका

आनर्च गीत्यन्वितषट्पदैः सा
स्तवप्रसूनस्तवकैर्नवीनैः ॥ ८ ॥

भक्त्या तयैव प्रससाद तस्या-
स्तुष्टं स्वयं देवचतुष्टयं तत्।
स्वेनाननस्य स्फुटतां यियासोः
फूत्कृत्यपेक्षा कियती खलु स्यात् ॥ ९ ॥

यत्र। अथ च गुञ्जन्मधुकरैः। वैशद्यं शब्दार्थालङ्कारापशब्द-भावदोषराहित्यं तेन मनोज्ञैर्वा। जातिः छन्दसि सामान्ये मातृत्वाङ्गोत्रजन्मनोः। गीतिश्छन्दसि गाने चेति विश्वः। हृद्येति। हृदयस्य प्रिय (पा० ४।४।९५।) इति यत् हृदयस्य हृल्लेखेति (पा० ६।३।५०।) हृदादेशः अभिरम्यते यैस्तैरभिरामैः। अ-कर्त्तरि च कारक (पा० ३।३।१९।) इति चकारादसञ्ज्ञा-यामपि करणे घञ्। ज्याद्यादिलक्षणं छन्दोग्रन्थे ज्ञातव्यं। न वा कैरिति पाठे कैर्वा स्तवप्रसूनस्तवकैर्नानर्च अपि तु नानाप्र-कारैः स्तवप्रसूनस्तवकैस्तापूपुजदित्यर्थः ॥ ८ ॥

भक्त्येति। तस्याः पूर्णिमन्यादिगणोदयाच्चैव भक्तिनिर-पेक्षं स्वयमात्मनैव तुष्टं तदिन्द्रादिदेवचतुष्टयं तस्यास्तयैवाल्पी-यस्यापि भक्त्या पुनः प्रससाद प्रसन्नमभूत्। अल्पीयस्यापि भक्त्या प्रसन्नतायां दृष्टान्तमाह। खलु यस्मात् स्वेनात्मनैव स्फुटतां प्राकट्यं यियासोर्यातुमिच्छतः लब्धकुसुमलक्षणतया आसन्न-प्रज्वलनस्याननस्य वह्नेः कियती मन्दलक्षणार्थे फूत्कृतेर्मुखपवनस्या-

प्रमादमासाद्य सुरैः कृतं सा
सस्मार सारस्वतसूक्तिसृष्टेः ।
देवा हि नान्यद्वितरन्ति किन्तु
प्रसद्य ते साधुधियं ददन्ते ॥ १० ॥

पक्षा स्यात् भवेत् अपि त्वन्येव । तादृशोऽग्निर्दिवैरेव फूत्कारैः सन्धुक्षितो दीप्यतेतरामित्यर्थः । तस्मात् स्वतः प्रसन्नस्याल्पयापि भक्त्या पुनः प्रसन्नत्वं युक्तमित्यर्थः । तस्याश्चरित्रादय ते पवित्रात् प्रागेव दृष्ट्या झटिति प्रसेदुरित्यपि पाठः स्पष्टार्थः ॥ ८ ॥

प्रमादफलमाह । प्रमादमिति । सा भैमी सुरैः कृतं प्रमादमासाद्य सरस्वत्या इमाः सारस्वत्यस्ताश्च ताः सूक्तयश्च शोभनोक्तयः श्लेषवाक्यानि तासां सृष्टेर्निर्माणस्य रचनां इत्यर्थः सस्मार । श्लेषार्थे सन्देहं परित्यज्य गाथाक्रमेणेन्द्रादीश्चतुरोऽपि ज्ञात्वा पञ्चमो नल इत्यज्ञासीदित्यर्थः । देवीवचनस्मरणरूपः को नाम प्रमाद इत्यत आह ॥ हि यस्मात् देवा अन्यत्किञ्चिन्न वितरन्ति ददति किन्तु ते देवाः प्रसन्ना भूत्वा साध्वीं कार्यसाधिकां धियं बुद्धिमेव ददन्ते । तदुक्तं महाभारते ॥

"न देवा दण्डमादाय रक्षन्ति पशुपालवत् ।
यन्तु रक्षितुमिच्छन्ति सुबुद्ध्या योजयन्ति तमिति ।"

तस्मादयमेव प्रसादो युक्त इत्यर्थः । सृष्टेः । अधीगर्थेति (पा० २ । ३ । ५२ ।)कर्मणि षष्ठी । ददन्ते । दद दाने इत्यस्य रूपं ॥ १० ॥

शेषं नलं प्रत्यसरेण गाथा
या या समार्थी खलु येन येन।

स्मरणमेव विशदयति। शेषमिति॥ शेषं पञ्चमं सत्यनलं प्रति सचीकृत्य ब्रूमः। किमित्यादिराकर्ण्येति यावत्। एष इत्यादिः साधारणीमिति यावत्। दण्डमित्यादिर्गम्भमिति यावत्। या सर्वेन इत्यादिः शक्नेति यावत्। या या गाथा प्रसादात् पूर्वं येन येनेन्द्रादिदेवेन सह समार्था तुल्यार्था सरस्वत्योक्तेति शेषः। सा भैमी तां तां ब्रूम इत्यादिगाथां ततः प्रसादानन्तरं तदन्येन तस्मात्तस्मादिन्द्रादिरूपाद्वन्याद्दर्थादन्येन शेषशक्त्या प्रतिभासमानेन नलरूपेणार्थेन सह खलु निश्चितमनलगन्तीमसम्बद्धार्थां विशेषं प्रति स्वस्वाकारधारणात् भिन्नमिन्द्रादिदेवं प्रतिसम्बध्य योजयामास। इयमेतस्य गाथेयमेतस्य गाथेति सम्बन्धं चकारेत्यर्थः। ब्रूम इत्यादौ वाला त्रिलोक्येति यावत्। नलस्य सर्वत्रानुस्यूतत्वादिन्द्रादीनान्तु चतसृषु चतसृष्वेव स्वस्वगाथासु अनुस्यूतत्वात्तां तामिन्द्रादिगाथां तदन्येन वज्रादिना सहास्त्वगतं विशेषमजानात्। यद्वेन्द्रेण नलेन चाससमानार्थां तामिन्द्रविषयामेव सस्मार॥ एवमितरदेवचितयेऽपि प्रत्येकगाथामेकविषयामेव सस्मार। एवं चतसृष्वपि गाथासु नलस्यानुवृत्तेरिन्द्रादीनाञ्च व्यावृत्तेरावापोद्वापाभ्यामेते देवा अयमेव नल इत्यज्ञासीदित्याशय इति वा। प्रतिश्लोकं गागान्तेऽपि चतुर्भिश्चतुर्भिः श्लोकैरेकैकस्य प्रतिपादनादेक-

तां तां तदन्येन सहालगन्तीं
ततो विशेषं प्रतिसन्दधे सा ॥ ११ ॥
एकैकवृत्तेः प्रतिलोकपालं
पतिव्रतात्वं जगृहुर्दिशां याः।

गाथात्वसमारोपात्प्रत्येकपर्य्यवसानादेकवचनं। यद्वा पञ्चमं नलं प्रति या या, अत्याजि, येनामुना, यच्छ्रिडमा, किन्ते तथेत्यादिका, गाथा येन येनेन्द्रादिना सह सम्बद्धार्था तदन्येन वज्र्यादिना सहालगन्ती तां तां गाथामेव विशेषं भेदं जानाति स्म। एकैकस्या गाथाया एकैकदेवपर्य्यवसानाच्चतसृणामपि गाथानां नले पर्य्यवसानात्परिशेषप्रमाणादयं पञ्चम एव नल इति विशेषमज्ञासीदित्यर्थः। अस्मिन् पद्येऽमुमेवार्थमुक्तिविशेषेण प्रकटयितुमाह। एकैकेति। उत्तरश्लोकस्यावतारिका कर्त्तव्या॥११॥

एकैकेति। या गाथा एकैकवृत्तेः एकस्मिन्नेकस्मिन्निन्द्रेऽग्नौ यमे वरुणे च वर्त्तमानत्वात् प्रतिलोकपालमेकैकमिन्द्रादिदिक्पालं प्रति दिशामैन्द्र्यादीनां पतिव्रतात्वं जगृहुरङ्गीचक्रुः। प्राच्यादीनामिन्द्रादिप्रतिनियतदेववृत्तितया यत् पातिव्रत्यं तत्पातिव्रत्यं तेनैवाकारेण या अत्याजीत्यादि गाथा अङ्गीचक्रुरित्यर्थः। ता गाथा मिलितास्ततोऽपि तदा प्रसादादनन्तरं असावेकस्य केवलस्य नलस्य वश्या नलैकप्रवणा नलैकाभिधायिनीरेव वेद स्माऽज्ञासीत्। का इव आशा इव। मिलिता दिशो यथा नलस्य वश्याः ऐन्द्र्यादीनां दिशामिन्द्राद्येकैकप्रवण-

वेद स्म गाथा मिलितास्तदासा-
वाशा इवैकस्य नलस्य वश्याः ॥ १२ ॥
या पाशिनैवाशनिपाणिनैव
गाथा यमेनैव समाग्निनैव ।

त्वऽपि सर्व्वासां दिशां चक्रवर्त्तिनलैकवश्यत्वं यथा तथा गाथानामपीत्यर्थः । आशा अर्थिनां मनोरथाः वदान्यतया नलस्य यथा वश्या इति वा । दासा इति वा पाठः । भ्रान्तिदशायामुभयार्थत्वं प्रमादानन्तरं तु नलैकार्थत्वं वेद स्मेति भावः । दिशां पातिव्रत्यं गाथाभिर्व्यञ्जितमित्यर्थः ॥ १२ ॥

येति । किं न इत्यादिर्या गाथा पाशिनैव वरुणेनैव समा तुल्यार्था न त्वन्येनेन्द्रादिना । या चाऽत्याजीत्यादिरशनिपाणिनेन्द्रेणैव समा न त्वन्येन देवेन । या च यच्चण्डिमेत्यादिर्यमेनैव समा न त्वन्येन । या च येनामुनेत्यादिरग्निनैव तुल्या न त्वन्येन । नलस्य सम्बन्धिनीं मिलितां समुदितां चतुष्टयरूपां तां गाथामेव तदा देवप्रमादादनन्तरं सैषा भैमी नलस्य विशेषाय इन्द्रादिभ्यो भेदज्ञानाय मेने । इन्द्रादीनामेकैकस्यामेव गाथायां वर्त्तमानत्वात् । नलस्य तु सर्व्वत्रानुगतत्वादत्याजीत्यादिगाथाचतुष्टयप्रतिपाद्यो यः स एव नल इति तामेव गाथां मिलितां नलस्य भेदज्ञापिकामज्ञासीदिति भावः । या नलस्य गाथेति वा सम्बन्धः । या पाशिनैवेन्द्रेणैव यमेनैवाग्निनैव समा गाथा नलस्य सम्बन्धिनीं मिलितां तामेव अनलस्य नलव्यतिरिक्तस्ये-

तामेव मेने मिलितां नलस्य
सैषा विशेषाय तदाऽनलस्य ॥ १३ ॥
निश्चित्य शेषं तमसौ नरेशं
प्रमोदमेदस्वितराऽन्तराऽभूत् ।

न्द्रादेर्भेदाय मेने । मिलितया तया कृत्वा नले निश्चिते सति नान्तरीयकत्वात्तदितरे देवा अपि तथैव निश्चिता इति भाव इति वा । मिलितां तामेव गाथां नलस्य विशेषाय तथा नलेतरस्येन्द्रादेर्भेदाय मेने इति वा व्याख्येयं । या पाशिनैवेत्यादेरेवकारात् परस्परमनुचयार्थानप्यर्थानङ्गीकृत्य या नलसम्बन्धिनी गाथा पाशिनापीन्द्रेणापि यमेनाप्यग्निनापि तुल्यार्थाऽभूत्तां देवः पतिरित्यादिमिलितां पञ्चार्थां गाथां देवप्रमादादनन्तरं नलस्यैव विशेषाय मेने । प्रमन्देर्देवै. स्वीयस्वीयाकारेषु धृतेषु पूर्वं पञ्चार्थत्वेन प्रतिभातामपीदानीमेकस्य नलस्यैव प्रतिपादिकामज्ञासीदिति भावः । देवः पतिरितीयमेव गाथा विषय इति ज्ञेयं । अवधारणार्थेष्वप्येवकारेषु इयमेव गाथा विषय इति व्याख्येयं । अयं श्लोकः निश्चित्य शेषं, एकैकवृत्तेरिति द्वाभ्यां श्लोकाभ्यां समानार्थः । अनलस्येति । प्रत्येकपर्य्यवसायित्वादेकवचनं ॥ १३ ॥

निश्चित्येति । असौ भैमी शेषमवशिष्टं तं पञ्चमं पूर्व्वोक्तप्रकारेण नरेशं नलं निश्चित्य प्रमोदेन प्रकृष्टहर्षेण मेदस्वितरं अत्यन्तपरिपुष्टं सोल्लासमन्तरं मानसं यस्याः एवंविधाऽभूत् ।

देव्या गिरां भावितभङ्गिराख्य-
च्चित्तेन चिन्तार्णवयादसेदम् ॥ १४ ॥
सा भङ्गिरस्याः खलु वाचि काऽपि
यद्भारती मूर्त्तिमतीयमेव ।
श्लिष्टं निगद्यादृतवासवादीन्
विशिष्य मे नैषधमप्यवादीत् ॥ १५ ॥

नले निश्चिते सति नितरां हृष्टाऽभूदित्यर्थः । रलयोः सावर्ण्यात् नरस्याभावीभस्य तं इति वा । अनन्तरञ्च देव्याः सरस्वत्या गिरां वचनानां भाविता पर्य्यालोचिता भङ्गिः प्रकारो यया विज्ञानाशया गिरां देव्याः सरस्वत्या वा विज्ञातवचोरचना-विशेषा सती नलनिश्चयात् पूर्व्वं चिन्तार्णवयादसा चिन्तासमुद्र-जलजन्तुरूपेण, नलनिश्चये सत्यपि तत्प्राप्त्युपायचिन्तासमुद्र-जलचरेण वा चित्तेन मनसा इदं वक्ष्यमाणप्रकारं आख्यत् ऊचे । मनस्येवैवमचिन्तयदिति भावः । चित्रार्णवेति पाठे वि-चित्रदेवीवचनानुस्मरणजनिताश्चर्य्यसमुद्रजलचरेणेति साश्चर्य्ये-णेत्यर्थः ॥ १४ ॥

किमाख्यदित्याह । सेति । खलु निश्चितं सा प्रसिद्धा मूर्त्ति-मती भारती सरस्वती देवी, इयमेवयं मूर्त्तिमती सा भारत्ये-वेति भारतीत्वं विधेयं । यद्यस्मादस्या वाचि काऽपि लोकोत्तरा भङ्गिः रचनाऽस्ति तस्मादित्यर्थः । यस्मादियमेव मूर्त्तिमती भारती तस्मादस्या वचने निश्चितं सा कापि भङ्गिरस्तीति वा ।

जग्रन्थ सेयं मदनुग्रहेण
वचःस्रजः स्पष्टयितुं चतस्रः ।

तामेव भङ्गीमाह । यत् श्लिष्टमुभयसम्बद्धं वचो निगद्य स्पष्टमुक्त्वा नामवादीनादृतगौरवेणावर्णयत् । विशिष्य विशेषं कृत्वा तेभ्यो विशिष्य वा यदत्याजीत्यादिश्लोकचतुष्टयेन मे मम मह्यं वा नैषधमप्यवादीत् । सर्व्वलोकपालांशस्य नलस्यैव वर्णनं कृतमिति युक्तमिति भावः ॥ १५ ॥

जग्रन्थेति । सेयं वाणी मयि मम वाऽनुग्रहेण कृपया स्पष्टयितुं नलं स्पष्टं ज्ञापयितुं याश्चतस्रोऽत्याजीत्यादीर्वचःस्रजो वचनमाला जग्रन्थ ससर्ज । तासु मध्ये द्वे ते वचःस्रजौ नामग्राहं मया नलमुदीरितं श्रमुष्मिन्नले सहजरागभरादित्येवंरूपे महीमहेन्द्रे नलमुदीरितमित्येवंरूपे वा नलं लचयितुं ज्ञापयितुं क्षमेते समर्थे भवतः । अहो आश्चर्य्यं । ममैवायमेतावन्तं कालं महीयान्मोहः अबोधः । नले स्पष्टं कथितेऽपि एतावन्तं कालं मम निश्चयो नाभूदित्याश्चर्य्यमित्यर्थः । पूर्व्वोक्ता एव चतस्रो वचःस्रजः स्पष्टयितुं तदर्थं स्पष्टीकर्त्तुं ये द्वे ते वचःस्रजौ, त्वं यार्थिनी, देवः पतिरित्येवंरूपे सेयं देवी जग्रन्थ, ते द्वे वचःस्रजौ नलं लचयितुं क्षमे समर्थे । त्वं यार्थिनीत्यनेन प्रथमव्याख्याने स्फुटं नलस्यैव प्रतिपादनात् व्याख्यानान्तरेऽपि च देवान् परित्यज्य सम्यच्य वा नल एव स्वीकरणीय इति यावदर्थं नलस्यैव प्रतिपादनाद्देवः पतिरित्यनेनापि लोकपालांशत्वाद-

द्वे ते नलं लक्षयितुं क्षमेते
ममैव मोहोऽयमहो महीयान ॥ १६ ॥
स्विद्यन्ति वाचो यदमूरमुष्याः
कवित्वशक्तेः खलु ते विलासाः ।

कस्यापि नलस्यैव पञ्चरूपत्वसम्भवादिन्द्रादेस्तासम्भवात्तस्मादन्यस्तत्र कतरो वरोऽपि त्वन्यो नास्तीत्यपि नलस्यैव प्रतिपादनादित्यर्थ इति वा । अत्र पूर्वस्तच्छब्दो विशेष्य वचःस्वरूपपरामर्शार्थः । उत्तरस्तु तत्परामर्शकोऽपि विधेयसंस्पर्शी । यत्तदोश्च नित्यसम्बन्धात् यच्छब्दः सम्बध्यते । श्रन्थि ग्रन्थि दम्भि स्वञ्जीनामिति वक्तव्यमिति (पा० १।२।६। वा० १) नित्यमपितो लिटः कित्त्वविधानाच्छ्रथ्येति रूपं । संयोगात्परस्य लिटो वा कित्त्वमिति केचिदिति अपितो लिटः कित्त्वविधानाद्वा नलोपाभावः समर्थनीयः । युक्त्यन्तरेण वा समाधातव्यं ॥ १६ ॥

स्विद्यन्तीति । अमुष्या देव्या अमूः पूर्वोक्ता वाचः यदनेकार्थतया स्विद्यन्ति क्लेशं भजन्ते खलु निश्चितं कवित्वशक्तेः काव्यनिर्माणसहजप्रतिभाया विलासाः विजृम्भणानि । कवित्वशक्तिं विना श्लेषवचोरचना निर्मातुमशक्येत्यर्थः । किञ्च यस्माद् व्यतिभेदिनोऽपि परस्परापेक्षया नलापेक्षया वा विशेषेण सहस्रनेत्रत्वादिना अतितरां भिन्ना अप्यमी लोकपालाः भूपालस्य नलस्य लीला विलासास्समाविशन्ति अनुभवन्ति नलाकारं बिभ्रति । अथ च नलवर्णकेषु श्लोकेषु मूर्त्तीभूय प्रविष्टा इव

भूपान्नलीनाः किल लोकपालाः
समाविशन्ति व्यतिभेदिनोऽपि ॥ १७ ॥
त्यागं महेन्द्रादिचतुष्टयस्य
किमभ्यनन्दत् क्रमसूचितस्य।
किं प्रेरयामास नले च तन्मां
का सूक्तिरस्या मम कः प्रमोहः ॥ १८ ॥

दृश्यन्त इत्यर्थः। अतः श्लेषवशान्मम भ्रमोऽभूदिति भावः। श्लेषवशान्नलली नाः मन्तो लोकपाला गाथाः समाविशन्तीति वा। अन्योन्यं भिन्ना अपि लोकपाला नललीलाः मन्तोऽंशेन नृपत्वं प्राप्ताः मन्तः किलैकीभवन्ति। अतो नलस्यैव लोकपालांशतया तत्र युक्तानि देवीवचांसि श्लेषं वदन्तीति कवित्वशक्तिविलासा एव ॥ १७ ॥

त्यागमिति। इयं देवी अत्याजि येनेत्यादिश्लोकचतुष्टयेन त्वं यार्थिनी, देवः पतिरित्यादिना गाथाद्वयेनापि क्रमेण सूचितस्य प्रत्यायितस्येन्द्रादिनलचतुष्टयस्य पूर्व्वव्याख्यानप्रकारपरित्यागं किं कथमभ्यनन्दत् युक्तमेतदिति स्तौति स्मेत्यर्थः। नले मां पूर्व्वव्याख्यानप्रकारेण प्रेरयामास च। किं कथं प्रेरयामास एकेनैव वाक्येन द्वयमिति कथंचकाराश्चर्य्यमेतदित्यर्थः। किं शब्दावत्राश्चर्य्ये। नले च नल एवेति। चकारोऽवधारणार्थो वा। तत्तस्मात्कारणादस्या देव्याः का सूक्तिः शोभनवचननिर्म्माणचातुरी अपि तु लोकोत्तरा। मम प्रकृष्टो मोहश्च कः

परस्य दारान् खलु मन्यमानै-
रस्पृश्यमानाममरैर्धरित्रीम् ।
भक्त्येव भर्त्तुश्चरणौ दधानां
नलस्य तत्कालमपश्यदेषा ॥ १९ ॥

अपि तु सोऽपि लोकोत्तरः । अस्य इयमुक्तिः क्व मम मोहश्च क्वेत्यर्थः । एवं देव्या इन्द्रादिचतुष्टयस्य स्वयं परित्यागेऽभ्यनुज्ञाते नलस्य च वरणेऽभ्यनुज्ञाते ममैवं मोहो न युक्त इत्यर्थः । पूर्वं मोहोऽभूदिदानीं तु निवृत्त इत्याशयः । इन्द्रादित्यागं किमर्थमभ्यनन्दत् नले च मां किमर्थं प्रेरयामास उभयमपि तात्र-चकार । तदेतन्मदनुग्रहार्थमेवेति भाव इति वा । त्यागं । चञो: कुघिण्यतो: ७ । ३ । ५२ । इति कुत्वं ॥ १८ ॥

एवं विचारानन्तरं किमभूत्तत्राह । परस्येति ॥ एषा भैमी तत्कालं देवप्रसादसमये एवंभूतां धरित्रीं पृथ्वीं अपश्यत् । किंभूतां । परस्य नलस्य दारान् मन्यमानैरिव परनारीमुद्धावामरैरिन्द्रादिभिरस्पृश्यमानां । खलु इवार्थे । तथा भूपतित्वाद्भर्त्तुर्नलस्य भक्त्येव सेवामुद्धेव चरणौ दधानां धारयन्तीं । अन्यापि भक्त्या भर्त्तुश्चरणौ धारयति । देवत्वात् सरजो भूम्यस्पर्शो मनुष्यत्वात् सरजो भूमिस्पर्शोऽन्ययोर्प्रचितः । देवमनुष्यचिह्नं दर्शितं । दारानिवेति वा पाठः ॥ १९ ॥

सुरेषु नापश्यदवेक्षनाक्ष्णो-
र्निमेषमुर्वीभृति सम्मुखी सा।
इह त्वमागत्य नले मिलेति
सञ्ज्ञानदानादिव भाषमाणम्॥ २०॥

नाबुद्ध बाला विबुधेषु तेषु
रेणुं क्षितेरैक्षत नैषधे तु।
पत्ये स्वजन्याः परिरम्भमुर्व्या
सम्भूतसम्भेदमसंशयं सा॥ २१॥

सुरेष्विति। सा भैमी सम्मुखी सती बुद्धिपूर्व्वं विलोकयन्ती सुरेषु अक्ष्णोर्निमेषं नेत्रपक्ष्मसङ्कोचं नापश्यत् नावैक्षत। उर्वी-भृति नले तु अवैक्षत। देवानामनिमेषत्वान्मनुष्याणाञ्च सनि-मेषत्वादित्यर्थः। तत्रोत्प्रेक्षते। किम्भूतं निमेषं। सञ्ज्ञानदानात् अकारणस्वचकाचिपक्ष्मचेष्टाकरणात् इति भाषमाणमिव। इति किं। हे भैमि त्वमागत्य इह मया चिह्निते नले मिल संयुक्ता भवेति॥ २०॥

नेति। सा तेषु विबुधेषु देवेषु क्षितेः रेणुं भूरेणुं लग्नं नाबुद्ध न ददर्श। नैषधे तु ऐक्षत ददर्श। देवानां रजःसम्बन्धाभा-वात्। नराणां तत्सम्बन्धादित्यर्थः। तत्र असंशयमुत्प्रेक्षते। पत्ये नलाय परिरम्भमालिङ्गनं स्वजन्या ददत्या उर्व्याः सका-शात् सम्भूतसम्भेदमिव सञ्जातसम्बन्धमिव आलिङ्गनवशाद्रेणु-र्नले लग्न इवेत्यर्थः। पत्ये। क्रियया यमभिप्रैति स सम्प्रदा-

स्वेदः स्वदेहस्य वियोगतापं
निर्व्वापयिष्यन्निव संसिसृक्षोः ।
हीराङ्कुरश्चारुणि हेमनीव
नले मयालोकि न दैवतेषु ॥ २२ ॥
सुरेषु मालाममलामपश्यन्-
नले तु बाला मलिनीभवन्तीम् ।

नमिति (पा० १ । ४ । ३२ । वा० १) सम्प्रदानत्वं ॥ २१ ॥

स्वेद इति । तया नले स्वेद आलोकि न दैवतेषु देवेषु । किं करिष्यन्निव । संसिसृक्षोर्भैम्यालिङ्गनं कर्त्तुमिच्छोः स्वदेहस्य नलशरीरस्य वियोगतापं भैमीवियोगजनितं ज्वरं निर्व्वापयिष्यन्निव शमयिष्यन्निव । देवेषु स्वेदस्याभावान्नरेषु च तत्सम्भावादित्यर्थः । उदकं हि तापं शमयति । नलालिङ्गनोत्सुकस्य भैमीदेहस्य वा सात्त्विकस्वेदयुक्तो नलो मया प्राप्त एवेति भैम्या विरहज्वरशान्तिः । उत्प्रेक्ष्यते । चारुणि अत्युत्तमे हेमनि सुवर्णे खचितो हीराङ्कुर इव । अतिगौरदेहरोमकूपस्थस्वेदजलकणझलत्कारो हेमस्थवज्राङ्कुरत्वेनोत्प्रेक्षितः । देवता एव दैवतानि । प्रज्ञादित्वात्स्वार्थे (पा० ५ । ४ । ३८) अण् । क्वचित् स्वार्थिकाः प्रत्ययाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्त इति (पा० ५ । ३ । ६८) परिभाषया षण्ढत्वं ॥ २२ ॥

सुरेष्विति । बाला भैमी सुरेषु मालां अमलां निर्मलामम्लानां चापश्यत् नले तु मलिनीभवन्तीं पूर्वमम्लानां काल-

इमां किमासाद्य नलोऽद्य मद्दों
श्रद्धास्यते मामिति चिन्तयेव ॥ २३ ॥
श्रियं भजन्तां कियदस्य देवा-
श्छाया नलस्यास्ति तथापि नैषाम्।

चेपणोष्मणा च म्लानां मलिनाङ्ग जायमानां अपश्यत्। सुराणामम्लानकुसुमत्वादित्यर्थः। उत्प्रेक्षते। इति चिन्तयेव मलिनीभवन्तीं। इति किं। नलो ऽद्य स्वयम्बरदिने मद्दों मत्सकाशादप्यतिमृदङ्गीं इमां भैमीं आसाद्य प्राप्य मां मालां श्रद्धास्यते किं आदरेणाङ्गीकरिष्यति किं अपि तु नेति ॥ २३ ॥

श्रियमिति। देवा अस्य नलस्य श्रियं शोभां कियद्भजन्तां आश्रयन्तु अपि तु न किञ्चिदपि यस्मात् एषां देवानां नलस्य सम्बन्धिनी तथा तादृशी अतिप्रसिद्धा छायापि कान्तिलेशोऽपि नास्ति। येषां यदीयकान्तिलेशोऽपि नास्ति ते तदीयां शोभां कथमाश्रयन्तामपि तु न कथञ्चिदित्यर्थः ॥ अथ च एषां नलसम्बन्धिनी आदर्शादिस्थिता छाया प्रतिबिम्ब[illegible]नास्ति। प्रतिबिम्बतुल्यास्ते न भवन्तीति यावत्। येषां यदीयप्रतिबिम्बेनापि न साम्यं ते तदीयबिम्बश्रियं कथं भजन्तामित्यर्थः॥ अथ चास्य श्रियं किञ्चिद्भजन्तां नटवन्नलरूपधारणात् किञ्चिच्छोभन्तां। तथापि स्वाभाविकी नलस्य कान्तिरेषां नास्ति॥ अथ चास्य सम्पदं बहु भजन्तां तथापि नलस्य कान्तिरेषां नास्ति। सम्पदा तुल्यत्वेऽपि कान्त्या तुल्यत्वं नास्तीत्यर्थः॥

इतीरयन्तीव तया निरैक्षि
सा नैषधे न त्रिदशेषु तेषु ॥ २४ ॥
चिह्नैरमीभिर्नलसंविदस्याः
संवादमाप प्रथमोपजाता।
सा लक्षणव्यक्तिभिरेव देव-
प्रसादमासादितमप्यबोधि ॥ २५ ॥

अथ चास्य श्रियं कियदस्तु भजन्ती तथापि भूमौ तमःप्रकृतिः छाया देवव्यवहितरविप्रभोपलक्षितः श्यामाकारो नलस्यास्ति एषां तेजोरूपत्वेन नास्ति। तेजोराशित्वेन च नराणां विद्यत इत्यर्थः। तया भैम्या इति पूर्वोक्तप्रकारेणेरयन्तीव कथयन्तीव यत्राहं वर्त्ते स एव नल इति प्रकाशयन्तीव सा छाया नैषधे निरैक्षि दृष्टा तेषु त्रिदशेषु न। छायापि स्वाभावभावाभ्यां देव-त्वनरत्वव्यञ्जिका जातेत्यर्थः। कियदिति क्रियाविशेषणं ॥ २४ ॥

चिह्नैरिति। अस्या भैम्याः प्रथमोपजाता दूत्यकालोत्पन्ना इतरनलतुल्याभागिति पूर्वसर्गोक्ततर्कोत्पन्ना वा देवीश्लोकानु-सन्धानोत्पन्ना वा अयमन्य एव नल इति संवित् बुद्धिरमीभिः पूर्वोक्तैर्भूस्पर्शादिभिश्चिह्नैः संवादं स एवायं नल इति अनु-व्यवसायरूपं आप। पूर्वं मम नलोऽयमिति प्रत्ययो युक्त एव जात इति। एतैश्चिह्नैर्निश्चितवतीत्यर्थः। अनन्तरञ्च सा भैमी देवत्वनरत्वज्ञापकानां लक्षणानां निमेषत्वभूस्पर्शादिचिह्नानां व्यक्तिभिः प्रकटनैरेवासादितं प्राप्तं देवप्रसादमप्यबोधि। एता-

नले निधातुं वरणस्रजन्तां
स्मरः स्म रामां त्वरयत्यथैनां।
अपत्रपा तां निषिषेध तेन
द्वयानुरोधं तुलितं दधौ सा॥ २६॥
स्रजा समालिङ्गयितुं प्रियं सा
रसादधत्तैव बहुप्रयत्नम।

वत्पर्य्यन्तं भूस्पर्शादिचिह्नानि न दृष्टानि इदानीन्तु दृश्यन्ते तस्मान्मम पूजया देवाः प्रसन्ना इत्यज्ञानादित्यर्थः॥ २५॥

नले इति। अथ स्मरः तां वरणस्रजं वरणमधूकमालां नले निधातुं निक्षेप्तुं एनां रामां भैमीं त्वरयति स्म शीघ्रं प्रेरयामास। अपत्रपा अन्यतो लज्जा च तां भैमीं निषिषेध निवारयामास। सर्व्वस्मिन् जने पश्यति सति कथमहमेनं वृणे इति लज्जावशात्तस्या बुद्धिरुदभूदित्यर्थः। तेन कारणेन सा भैमी द्वयानुरोधं स्मरलज्जयोराज्ञा प्रवृत्तिनिवृत्तिसन्देहं तुलितं समानमेव दधौ। भावसन्धिवशादुत्कण्ठापत्रपाभ्यां मालानिक्षेपानिक्षेपदोलायिताभूदित्यर्थः। अन्योऽपि तुल्याभ्यां द्वाभ्यां विरुद्धकार्य्यद्वयार्थं प्रेषितो द्वयोरनुरोधादौदासीन्यमेवावलम्बते। तामिति पुनरुपादानं वाक्यान्तरत्वात् समर्थनीयं। निषिषेध। स्थादिष्वभ्यासेनेति (पा॰ ८।३।६४) षत्वं॥ २६॥

स्रजेति। सा भैमी रसात् प्रीत्या स्रजा मधूकमालया प्रियं नलं समालिङ्गयितुं बहुप्रयत्नं भूयांसमुद्योगं अधत्तैव चका-

स्तम्भत्रपाभ्यामभवत्त्वदीये
स्पन्दस्तु मन्दोऽपि न पाणिपद्मे ॥ २७ ॥
तस्या हृदि व्रीडमनोभवाभ्यां
दोलाविलासं समवाप्यमाने ।
श्रितं धृतैणाङ्ककुलातपत्रे
शृङ्गारमालिङ्गदधीश्वरश्रीः ॥ २८ ॥

रेव । तु पुनस्त्वदीये पाणिपद्मे स्तम्भत्रपाभ्यां हेतुभ्यां मन्दो-ऽप्यल्पोऽपि स्पन्दश्चलनं नाभवत् ॥ २७ ॥

तस्या इति । अधीश्वरी समर्था भूयसी अधीश्वरस्य कस्य-चिद्राज्ञो वा श्रीर्लक्ष्मीस्तस्या भैम्या हृदि श्रितं वर्तमानं शृङ्गारं शृङ्गाररसं आलिङ्गत् । किंभूते हृदि । व्रीडमनोभवाभ्यां दोलाविलासं आन्दोलनजनितां क्रीडां समवाप्यमाने प्राप्यमाणे । कोटिद्वयसम्बन्धात् प्रवृत्तिनिवृत्तिसन्देहं प्राप्ते इत्यर्थः । तथा एणाङ्कश्चन्द्रस्तस्य कुलं कुलोत्पन्नो नल इत्यर्थः । स एवातपत्रं धृतं एणाङ्ककुलातपत्रं येन तस्मिन् । शृङ्गाररस एव सम्राट् भैमीहृदयमेव सिंहासनं नल एव छत्रं लज्जाकामौ दोलाया उभयपार्श्वेन आन्दोलनार्थं स्थितौ चामरधारिणौ वा । तस्या भावसन्धिसम्बलितः शृङ्गारो राजवदुज्जृम्भत इति भावः । दोला दोलनेव भोग.लय: प्रियमालिङ्गन्ति ॥ अधीश्वरस्य नलस्य श्रीरिति वा । अन्य पक्षे व्रीडाकामाभ्यां दोलायमानां भैमीं दृष्ट्वा कामो नलः पूर्वं विप्रलम्भशृङ्गारं प्राप्तः ततः स्वापि

करः स्रजा सज्जतरस्तदीयः
प्रियोन्मुखः सन् विरराम भूयः।
प्रियाननस्यार्द्धपथं ययौ च
प्रत्याययौ चातिचलः कटाक्षः॥ २९॥

तस्याः प्रियं चित्तमुपेतुमेव
प्रभूबभूवाक्षि न तु प्रयातुम्।
सत्यः कृतः स्पष्टमभूत्तदानीं
तयाक्षिलज्जेति जनप्रवादः॥ ३०॥

तं तादृशं दृष्ट्वा तदीयशोभाङ्गीकारात् स्वयमपि तादृशी बभूवेति भावः। आन्दोलिकाछत्रचामरैरयं प्रभुरिति ज्ञायत इत्यर्थः। श्रितमिति पाठे इदीति विषयसप्तमी॥ २८॥

कर इति। स्रजा सज्जतरो नितरां सज्जः कण्ठे निक्षेप्तुमुद्युक्तः कृतमालस्तदीयः करः प्रियोन्मुखः नलसम्मुखं गन्तुं सोऽधोगः सन् भूयः पुनर्लज्जावशाद् विरराम निवृत्तः। तदीयोऽतिचलः कटाक्षश्च प्रियाननस्यार्द्धपथं ययौ च प्रत्याययौ च। दिदृक्षारम्भादर्द्धमार्गं गतोऽपि लज्जावशान्मध्ये मार्गं नलकटाक्षसम्बन्धाच्च पुनः प्रत्यावृत्त इति भावः। अन्योऽप्यतिचलो गतागते करोति॥ २९॥

तस्या इति। तस्याश्चित्तं प्रियं उपेतुमेव प्राप्तुमेव अक्षि तु पुनः नलं प्रयातुं प्राप्तुं न प्रभूबभूव समर्थं नाभूत्। स्पष्टमुत्प्रेक्षे। अक्ष्णि मेघे लज्जेति जनप्रवादो लोकाभाणकः तया तदानीं

कथं कथञ्चिन्निषधेश्वरस्य
कृत्वास्यपद्मं दरवीक्षितश्रि ।
वागदेवताया वदनेन्दुबिम्बं
त्रपावती साऽकृत सास्मितदृष्टं ॥ ३१ ॥
न जानतीवेदमवोचदेनाम्
आकूतमस्यास्तदवेत्य देवी ।

नलवरणसमये सत्यः कृतोऽभूत् । अन्यथा लज्जायाश्चित्तधर्मत्वे चित्तस्य नलप्राप्तिरयुक्ता नेत्रस्य च नलप्राप्तिर्युक्तेत्यर्थः । प्रीत्या चित्तं नल एव वर्त्तते परं लज्जावशात् कटाक्षेण विलोकयितुं नाशकदिति भावः । प्रभूबभूव । ऊर्णौ चेति (पा० ७ । ४ । २६ ।) दीर्घः ॥ ३० ॥

कथमिति । सा भैमी त्रपावती निषधेश्वरस्यास्यपद्मं मुखकमलं कथं कथञ्चिन्महता कष्टेन लज्जाविगमसाहसेन दरवीक्षितश्रि ईषद्विलोकितशोभं कृत्वा वाग्देवताया वदनेन्दुबिम्बं लज्जया सास्मितदृष्टमर्द्धदृष्टमकृत । किञ्चिद्दृष्ट्वा पुनर्व्यावृत्तत्वाददृष्टमकरशोभं चकारेत्यर्थः । त्रपावतीत्युभयत्र हेतुः । एतां मालां नलकण्ठे स्थापयेत्याशयेन देवीमुखमर्द्धवीक्षितं चकारेति भावः ॥ ३१ ॥

न जानतीति । देवी अस्या भैम्यास्तत्पूर्व्वश्लोकसूचितं आकूतमाशयं अवेत्य ज्ञात्वापि न जानतीव एनां भैमीं प्रतीदमवोचत् । इदं किं । हे भैमि त्वपार्मिप्रतिमीरया लज्जाकल्लोलरूपजवनि-

भावस्त्वपोर्मिप्रतिसीरया ते
वितीर्यते लक्षयितुं न मेऽपि ॥ ३२ ॥
देव्याः श्रुतौ नेति नलार्द्धनाम्नि
गृहीत एव त्रपया निपीता ।
अथाङ्गुलीरङ्गुलिभिः स्पृशन्ती
दूरं शिरः सा नमयाञ्चकार ॥ ३३ ॥

कया ते तव भाव आशयः मेऽपि ममापि लक्षयितुं मरस्वत्या अद्य च विश्वास्य सखीभूताया अपि ज्ञातुं न वितीर्य्यते। त्वं लज्जावशादतिगूढं यत् सूचयसि तन्मयापि न ज्ञायते। ततः किञ्चिल्लज्जां त्यक्त्वा स्पष्टं कथयेति परिहासबुद्ध्या तामेव स्वाशयं बोधयितुमेवाचदित्यर्थः। अन्यदपि जवनिकाच्छादितं न ज्ञायते। प्रदीयते लक्षयितुं न मेऽपीति पाठे मे मह्यं। प्रतिसीरा जवनिकेत्यमरः ॥ ३२ ॥

देव्या इति। देव्याः श्रुतौ कर्णे नेति नलस्यार्द्धं नाम्नि गृहीत एव भैम्या उच्चारित एव त्रपया निपीता व्याप्ता सा भैमी लेति द्वितीयमक्षरं उच्चारयितुमशक्ता सती अथानन्तरं स्वस्या अङ्गुलीः, देव्या वा अङ्गुलीः, स्वीयाङ्गुलीभिरेव स्पृशन्ती मृजन्ती निविडं पीडयन्ती शिरो दूरमत्यर्थं नमयाञ्चकार। अभिलाषप्रतिबन्धे दुःखितस्याङ्गुलिमेलनं स्वभावोक्तिः ॥ ३३ ॥

करे विधृत्येश्वरया गिरां सा
पान्था पथीन्द्रस्य कृता विहस्य ।
वामेति नामैव बभाज सार्थं
पुरन्ध्रिसाधारणसंविभागम् ॥ ३४ ॥

विहस्य हस्तेन विकृष्य देवी
नेतुं प्रयाताऽभि महेन्द्रमेताम् ।
भ्रमादियं दत्तमिवाच्छिदेन्द्रे
ततश्चमत्कृत्य करं चकर्ष ॥ ३५ ॥

कर इति । गिरामीश्वरया वाग्देव्या विहस्य अज्ञानमाटनाट्यं कृत्वा सा करं विधृत्य इन्द्रस्य पथि पान्था पथिका कृता । इन्द्रं प्रति वरणार्थं नीता सा भैमी पुरन्ध्रीणामन्यस्त्रीणां साधारणः समानः संविभागः अंशो यस्य पुरन्ध्रिषु वा एवम्भूतं सर्व्वस्त्रीवाचकं वामेति नाम वक्रार्थत्वात् सार्थं नामैव बभाज भेजे । इन्द्रं प्रति देव्या नीयमाना सा वक्राभूदिति भावः। सार्थमेव नाम इति वा । पान्थेति पूर्व्ववत् । पार्थेति पाठे, पथे गताविति धातोर्ज्वलादित्वाण्णो, पथि गन्त्री कृतेत्यर्थः । पुरन्ध्रीति पूर्व्ववत् ॥३४॥

तमेवार्थमुक्तिविशेषेण पुनराह । विहस्येति । वाग्यानन्तरं देवी विहस्य किञ्चिदुत्स्मित्वा एतां भैमीं स्वहस्तेन विकृष्य महेन्द्रमभिलक्षीकृत्य नेतुं प्रयाता प्रस्थिता इन्द्रं प्रापयितुं निर्गता । तत इन्द्रादिगमनोद्योगानन्तरं इयं भैमी चमत्कृत्य किमियमिन्द्रवरणे मां प्रवर्त्तयतीति बुद्ध्वा भीत्वा करं स्वहस्तं चकर्ष ।

भैमीं निरीक्ष्याभिमुखीं मघोनः
स्वाराज्यलक्ष्मीरधृताभ्यसूयाम्।
दृष्ट्वा ततस्तत्परिहारिणीं तां
व्रीडां बिडौजःप्रवणाभ्यपादि ॥ ३६ ॥
त्वत्तः श्रुतं नेति नले मयातः
परं वदस्वेत्युदिताथ देव्या।

आचकर्ष किंभूतमिव करं। भ्रमाद्रज्जुभ्रान्तेः अहिदेहे सर्पशरीरे दत्तमिव स्थापितमिवेत्युत्प्रेक्षा। सर्पदेहे भ्रमाद्दत्तं हस्तं यथा कश्चित् कर्षति तथेत्युपमा वा। ततो देवीकरादिति वा ॥ ३५ ॥

भैमीमिति। स्वाराज्यलक्ष्मीः बिडौजःप्रवणा इन्द्रेऽत्यन्तमनुरक्ता स्वर्गाधिपत्यश्रीः भैमीं मघोन इन्द्रस्याभिमुखीं निरीक्ष्य सपत्नीबुद्ध्या भैम्यामभ्यसूयामसहनत्वं अधृत दधार। ततः अनन्तरं तां भैमीं तत्परिहारिणीं इन्द्रत्यागिनीं दृष्ट्वा इन्द्रेऽनुरक्ता सती व्रीडां लज्जामभ्यपादि प्राप। इयमिन्द्रं नाभिलषति वृथैव मयेर्ष्या कृतेति ललज्जेत्यर्थः। इयं भैमी स्त्रीरत्नभूता सती निर्गुणतयैनं परिहरति तस्याहं प्रिया जातेति लज्जितेत्यर्थः। अभ्यपादि। कर्त्तरि चिण् ॥ ३६ ॥

त्वत्त इति। अथ देव्या इति उदिता परिहासवशादुक्ता भैमी वृथा वृथैव भाषितनैषधाऽभूत्। इति किं। हे भैमि मया त्वत्तः नलविषये नेति श्रुतं निषेधार्थो नकारः श्रुतः। अतः कारणात्परं नलादन्यमभीष्टं वदस्व कथय। अथ च नलविषये

ह्रीमन्मथद्वैरथरङ्गभूमि-
र्भैमी द्रुता भाषितनैषधाऽभूत् ॥ ३७ ॥
इमतत्तु भैमीं दिविषत्तु पाणौ
पाणिं प्रणीयाप्सरसां रसात् सा ।
आलिङ्ग्य नीत्वाऽकृत पान्थदुर्गां
भूपालदिक्पालकुलाध्वमध्यम् ॥ ३८ ॥

नल इति पदे नेति नलनाम्नोऽङ्के श्रुतं अतो नकारात् परमन-न्तरमक्षरं कथयेति । किम्भूता । ह्रीमन्मथयोर्लज्जाकामयोर्द्वैरथस्य द्वाभ्यां प्रवृत्तस्य युद्धस्य रङ्गभूमिर्नृत्यस्थानं समबलह्री-कामवशीकृता । अस्मिन्नले मालां मया क्षेपयेति वृत्त्यैव नलं निर्दिष्टवती न त्वन्यं । न च मालामकारमुच्चारयति सेत्यर्थः । उदिताऽथ पश्चादिति वा । वदस्व । भाषणेऽतिभाषणे सान्त्वन उत्साहे वा तङ् । द्वैरथं । द्विरथमस्त्यस्मिन्निति सम्बन्धेऽण् ॥ ३७ ॥

इमतत्त्विति । सा देवी भैमीं आलिङ्ग्यांकपालिकया धृत्वा भूपालस्य नलस्य दिक्पालकुलस्य च इन्द्रादिचतुष्टयस्य पुरः-सरोऽध्वा मार्गस्तन्मध्यं नीत्वा प्रापय्य पान्थदुर्गां पथिकसिन्दूरा-दिपूजितशिलामयकल्पितमार्गदेवतां अकृत चकार इन्द्रादिप-ञ्चकमार्गमध्ये नीत्वा मुमोचेत्यर्थः । लज्जाभरनिश्चलत्वादति-सौन्दर्याच्च देवतात्वं । केषु सत्तु । रसादुभयाश्रयपरिज्ञानाद्वै-स्याश्च देव्याश्रयापरिज्ञानात् प्रीतेर्वा अप्सरसां उर्वशीप्रभृतीनां पाणौ पाणिं प्रणीय निधाय तालिकादानपूर्व्वं दिविषत्तु इन्द्रा-

आदेशिनामप्यवलोक्य मन्दं
मन्दं नलस्यैव दिशां चलन्तीम्।
भूयः सुरानर्द्धपथादथासौ
तानेव तां नेतुमना नुनोद॥ ३९॥
मुग्धाङ्गभावर्त्तननोलनालं
कृत्वालिङ्गं रवैलक्ष्मलक्ष्यम्।

दिषु इमत्सु मत्सु। उत्सवादौ मञ्चके दुर्गामारोप्य राजवीथिषु भ्राम्यते तथैनामपि चलदुर्गां चकारेत्यर्थ इति वा। दिविषत्सु। सत्सूद्विषद्रुहेत्यादिना (पा० ३।२।६१) क्विप्। हृद्युभ्यां चेति (पा० ६।३।९। वा० १) सप्तम्या अलुक्। हलदन्तादिति (पा० ६।३।९।) सुषामादित्वात् (पा० ८।३।९८) इति वा षत्वं। पान्थानां दुर्गा। पान्था चासौ दुर्गा चेति वा॥ ३८॥

आदेशिनामिति। अथ असौ देवी भूयः पुनरपि अर्द्धपथात् सकाशान्नलं विहाय तानेव सुरानिन्द्रादीन्नेतुमनाः प्रापयितुकामा सती तां भैमीं नुनोद इतश्चलेति प्रेरयति स्मेत्यर्थः। किं कृत्वा। इन्द्रादिसम्मुखमागच्छेत्यादेशितामादिष्टामपि तथा मन्दं मन्दं नलस्यैव दिशां नलसम्मुखमेव चलन्तीं गच्छन्तीं विलोक्य। आदेशः सञ्जातोऽस्याः। अदेशिनामिति पाठे नलं प्रति गच्छेत्यप्रेरितामपीत्यर्थः॥ ३९॥

मुग्धेति। भीमोद्भवा देव्यास्तामङ्कपालीं नुनोदामुचत्। केव। विवोढुः परिणेतुः दृढां प्रथमसुरतारम्भनिर्भरां अङ्क-

भीमोद्भवा तां नुनुदेऽङ्कपाली
देव्या नवोढेव हृढां विवोढुः ॥ ४० ॥
देवी कथञ्चित् खलु नामदेव-
ध्रीचीभवन्तीं स्मितसिक्तसृक्का ।

पाली नवोढा नववधूरिव । अङ्कपालीमोचनमात्रेण मास्यं विवर्जितं न तु लिङ्गं । किं कृत्वा । परिहासवशाल्ललमसुखगमननिषेधिकानां आलीनां सखीनां निवारणव्यञ्जको हुंहुं इति रवः शब्दस्तद्रूपैर्लक्ष्मीचिह्नैर्लक्ष्यं ज्ञेयं । तेषां वा लक्ष्यं विषयभूतं, यद्वाऽर्थान्तरलरणनिषेधिकास्वालिषु कोपवशाद्भूम्या एव हुंहुंकारास्तद्रूपैश्चिह्नैर्लक्ष्यं, अथवाऽलीनां भ्रमराणामिव ये हुंहुंरवचिह्नैर्लक्ष्यं निपतद्भ्रमरं आवर्त्तने परावर्त्तने लोलं चञ्चलं कण्ठदण्ड एव नालं यस्य एवं मुखाब्जं कृत्वा । नवोढापि आलिङ्गनादि कुर्वित्युपदिशन्तीनां सखीनां तासु वा हुंहुंरवचिह्नलक्ष्यं मुखाब्जमावर्त्तयति । अब्जमपि लोलनालं भ्रमरहुंहुंरवलक्ष्यञ्च भवति । रवलचेति पाठे ललमञ्जा इत्यर्थः ॥ ४० ॥

देवीति । देवी तां भैमीमित्याह स्म । किम्भूतां । कथञ्चिन्महताङ्कपालीमोचनादिप्रकारेण कष्टेन खलु निश्चितं अदेवद्रीचीभवन्तीं न देवानञ्चति देवान् प्रत्यगच्छन्त्येवंविधा भवन्ती तां । किम्भूता । स्मितेन ईषद्धासेन सिक्तसृक्का सिक्तौष्ठप्रान्ता स्वाभिप्रायापरिज्ञानात् किञ्चित्कृतहासा । इति किं । हे प्रभा-

आह स्म मां प्रत्यपि ते मृशं का
शङ्का शशाङ्कादधिकास्यबिम्बे ॥ ४१ ॥
एषामकृत्वा चरणप्रणाम-
मेषामनुज्ञामनवाप्य सम्यक् ।

ङ्कात् अधिकं सुन्दरमाह्लादकं आस्यबिम्बं यस्या एवम्भूते, भैमी-सखीप्रायां मामपि प्रति, इयं प्रतार्य्य इन्द्रादिवरणार्थं मां नयतीति । तेन च का पुनः शङ्का अपि त्वेवं शङ्का न कार्य्या मा भैषीरिति । देवानञ्चति देवद्रीची । विष्वग्देवयोरिति (पा० ६ । ३ । ९२ ।) टेरद्र्यादेशे, उगित्वात् (पा० ४ । १ । ६ ।) ङीपि, अच (पा० ६ । ४ । १३८ ।) इत्यकारलोपे, चाविति (पा० ६ । ३ । १३८ ।) पूर्व्वस्याणो दीर्घः । पश्चान्नञ्समासः । अदेवद्रीचीभवन्तीमिति पाठः सभ्यः । अदेवद्रीचीं देवद्रीचीं भवन्तीं नता नञ्समासः, च्विप्रत्ययः । शशाङ्कात् । यस्मादधिकमिति (पा० २ । ३ । ९ ।) ज्ञापकत्वात् पञ्चमी ॥ ४१ ॥

चेन्न प्रतारयसि तर्हि पुनः इन्द्रादिसम्मुखं मां किमिति नयसीत्याशङ्कायामाह ॥ एषामिति ॥ एषामिन्द्रादीनां चरणयोः प्रणाममकृत्वा तथा एषां सम्यग्यथा भवति तथाऽनुज्ञां नलवरणानुमतिं अप्राप्य निजचिह्नप्रकटनमात्रानुमितप्रसादेन लब्धप्रायामपि साक्षाच्छिरःकम्पादिसूचितामनुज्ञामलब्ध्वा सुपर्व्वभिः स्वावज्ञामादिन्द्रादिभिः सह विरोधे सति येऽयं तव वैरसिनि नलं वरीतुं ईहा चेष्टाऽभिलाषो वा सा कथमिवौचिती

सुपर्ववैरे नव वैरसेनिं
वरीतुमोशा कथमौचितीयम् ॥ ४२ ॥
इतीरिते विश्वसिता पुनस्ता-
मादाय पाणौ दिविषत्सु देवी ।
कृत्वा प्रणम्रां वदति स्म सा तान् *
भक्तेयमर्हत्यधुनानुकम्पाम् ॥ ४३ ॥
युष्मान् वृणीते न बहून् सतीयं
शापावमानाच्च भवत्सु नैकम् ।

अपि तु न कथञ्चित् । स्वावज्ञानादिरुद्धाः सन्तः शापन्दा-स्यन्तीति तान् प्रति नीयमे न तु वरणार्थमिति भावः । इय-मौचितीति वा । कतमौचितीत्यपि पाठः ॥ ४२ ॥

इतीति । सा देवी इति पूर्व्वोक्तमीरिते सति विश्वसितां तां भैमीं पाणौ पुनरादाय धृत्वा दिविषत्सु देवेषु विषये नमस्कार-वशात्प्रकर्षेण नम्रां कृत्वा तान् देवानिति वदति स्म । इति किं । भवद्भक्ता इयं भैमी अधुना नलवरणानुमतिरूपामनुकम्पाम-र्हति इति ॥ ४३ ॥

एतद्वरणार्थमागतानामस्माकं नलवरणानुमतिर्दीयता-मिति कथमुच्यत इत्याशङ्कां परिहरति ॥ युष्मानिति ॥ हे लोकपालाः इयं भैमी यस्मात्सती पतिव्रता एकभर्तृकैव तस्मा-

* आह स्म नम्रां प्रविधाय सा तान् इति सं० पुस्तके पाठः ।

नद्वः समेतं नृपमंशमेतं
वरीतुमन्विष्यति लोकपालाः ॥ ४४ ॥
भैम्याः स्रजः सञ्जनया पथि प्राक्
स्वयम्वरं सञ्जनयाबभूव ।

इत्थम् युष्मान् न वृणोति पतित्वेन नाङ्गीकरोति। भवत्सु मध्ये सम्भावमानाच्च एकं न वृणोति। तत्तस्मात् मत्त्वैकवरणपक्षीया-दोषदर्शनाद्धेतोरेकत्र नलस्वरूपे समेतान् मिलितानंशानंश-भूतान्वो युष्मानेवैनं नृपं, अष्टानां लोकपालानां वपुर्धारयत नृप इति वचनात् युष्मद्रूपमेवैनं नलं नृपं वरीतुं अन्विष्यति विचारयति । नन्वं सति पूर्व्वोक्ताभयदोषाभावात् नलमेव वरीतुं वाञ्छतीत्यर्थः । वो युष्माकं समेतानंशानेनं नृपमिति वा ॥ ४४ ॥

परदारत्वादपीयं भवद्भिर्नाभिलषणीयेत्याह॥ भैम्या इति। हे लोकपालाः, वेधाः मात्मैवनानन्तरं स्वमन्दिरागमनवे-लायां पथि स्रजो मालायाः सञ्जनया सङ्गेन षष्ठ सर्गे प्रस्त-प्रमादाधिगतेत्यादिकथितप्रकारेण भ्रान्तिदृष्टनलेषु मध्ये .. दूत्यगतस्य सत्यनलस्य कण्ठे निक्षेपणया कृत्वा भैम्याः स्वयम्वरं प्राक् पूर्व्वमेव सञ्जनयाम्बभूवाकृत । तथा तत्रैव सर्गे तथ्यं मि-थ्यासाविह्याद्युक्तप्रकारेणास्य नलस्यालिङ्गनयालिङ्गनेन भैम्याः सम्भोगं वात्मरतमपि व्यधत्त । अस्य सम्भोगमिति वा । अस्य स्वयम्वरस्य सम्भोगं फलं आलिङ्गनेन चकारेति वा । तस्मात् क

सम्भोगमालिङ्गनयास्य वेधाः
शेषन्तु कं हन्तुमियद्यतध्वम ॥ ४५ ॥
वर्णाश्रमाचारपथान् प्रजाभिः
स्वाभिः सहैवास्खलते नलाय ।
प्रसेदुषो वेदशवृत्तभक्त्या
दित्सैव कीर्त्तेर्भुवमानयद्वः ॥ ४६ ॥

पुनः शेषं अवशिष्टमंशं हन्तुं विनाशयितुं इयत् नलाकारधारणादिप्रकारेण यतध्वं प्रयत्नं कुरुत, अपि तु न कोऽप्यवशिष्टोऽशः। तस्माद्वृथा प्रयासो न कार्य्यः किन्त्वाशैव दातव्येत्यर्थः। वाश्वरतम्यैवाभ्यर्हितत्वात् तत्राप्यालिङ्गनस्याभ्यर्हिततरत्वात्तस्य च मंवृत्तत्वात् कं पुनः शेषं सम्भोगं हन्तुं इयद्यतध्वं इति वा। किमिति पाठे शेषा तु लोकस्थितिरिति कामशास्त्रोक्तन्यायेन शेषं लोकस्थितिरूपं सम्भोगं पुनर्हन्तुं इयत् किं यतध्वं इति व्याख्येयं। मञ्जनालिङ्गनेत्यत्राप्युक्तत्वाद्बुध् ॥ ४५ ॥

इदानीं युक्त्यन्तरेण देवान् सान्त्वयति ॥ वर्णेति ॥ वा पूर्व्वापरितोषे। पूर्व्वमसम्भावितमेवोक्तं मया। किन्तु नलाय कीर्त्तेर्दित्सैव वो युष्मान् भुवमानयत् भैमीस्वयम्वरदर्शनव्याजेन नलाय कीर्त्तिं दातुमेवात्रागमनं युष्माकं न तु भैमीवरणार्थमित्यर्थः। किंभूताय। यतः स्वाभिः प्रजाभिः सह वर्णानां ब्राह्मणादीनां आश्रमाणां ब्रह्मचर्य्यादीनां स्मृत्युक्तादाचारपथात् सकाशाद्-स्खलते अच्युताय। किंभूतान् वः। ईदृशवृत्तभक्त्या प्रसेदुषः

इति श्रुते ऽस्या वचसैव हास्यात्
कृत्वा मनाक्स्वाधरमास्यबिम्बम् ।
भ्रूविभ्रमाकूतकृताभ्यनुज्ञे-
ष्वेतेषु तां साथ नलाय निन्ये ॥ ४७ ॥

मन्दाक्षनिस्पन्दतनोर्मनोभू-
दुःप्रेरमप्यानयति स्म तस्याः ।
मधूकमालामधुरं करं सा
कण्ठोपकण्ठं वसुधासुधांशोः ॥ ४८ ॥

स्वाचाराचरणादेव निष्कपटदूत्यकरणाद्वा प्रसन्नान् । भैम्या इन्द्रादीन् विहाय सौन्दर्य्यादिना गुणेन नल एव वृत इति कीर्त्तिः ॥ ४६ ॥

इतीति । इति पूर्व्वोक्ते देवीवचने श्रुते सति अस्या देव्या वचसैव जाताद्धास्यात् स्मिताद्धेतो आस्यबिम्बं मुखचन्द्रं मनाक्-स्वाधरं चञ्चलाधरं कृत्वा एतेषु देवेषु भ्रूविभ्रमरूपेणाकूतेनाशय-ज्ञापकेनेङ्गितेन कृता कृताभ्यनुज्ञा नलवरणानुमतिर्यैस्तेषु सत्सु । अथानन्तरं सा देवी तां नलाय नलं प्रापयितुं नलार्थं वा निन्ये पुनर्नलसम्मुखीचकारेत्यर्थः ॥ ४७ ॥

मन्दाक्षेति । सा देवी मधूकमालया मधुरं सुन्दरं तस्याः करं वसुधासुधांशोर्भूचन्द्रस्य नलस्य कण्ठोपकण्ठं कण्ठसमीपं आनयति स्म प्रापयति स्म । किम्भूतायाः । मन्दाक्षेण लज्जया निस्पन्दा निश्चला तनुर्यस्याः ससम्भ्राया इत्यर्थः । किम्भूतं करं ।

अथाभिलिख्येव समर्प्यमाणां
राजिं निजस्वीकरणाक्षराणाम्।
दूर्वाङ्कुराढ्यां नलकण्ठनाले
वधूर्मधूकस्रजमुत्ससर्ज॥ ४९॥
तां दूर्वया श्यामलयातिवेलं
शृङ्गारभासन्निभया सशोभाम्।

मनोभुवा नलविषयकामेन दुःप्रेरमपि कामेनापि प्रेरयितुमशक्यं। निष्पन्देति पाठे पूर्ब्बवत्फलं। दुःप्रेरमपि प्रेरयति स्मेति विरोधाभासः॥ ४८॥

अथेति। अथ करस्य नलकण्ठसमीपनयनानन्तरं वधूर्भैमी दूर्वाङ्कुराढ्यां मधूकस्रजं नलकण्ठनाले उत्ससर्ज निक्षिप्तवती। उत्प्रेक्षते। अभिलिख्य समर्प्यमाणां दीयमानां निजेनात्मना नलस्य स्वीकरणं तत्सम्बन्धिनामक्षराणां मया त्वं निश्चितं वृतोऽसीति एवंरूपाणां वर्णानां राजिमिव। निश्चयज्ञापनार्थं हि पत्रं दीयते तद्वदित्यर्थः। मालासज्जनानन्तरं वाङ्गीकरणे निश्चयो जातः। दूर्वाङ्कुराणां श्यामत्वादक्षरसाम्यं मधूकानि लिखिताक्षरसन्निध्यानीयानि। कण्ठस्य नालत्वाम्मुखस्य कमलत्वं॥ ४९॥

तामिति। भूम्वल: तां मालां कण्ठेन विभरांबभूव। किम्भूतां। श्यामलया अत एव शृङ्गाररसस्य भया कान्त्या सन्निभया तुल्यया दूर्वयाऽतिवेलमतितरां सशोभमदीप्तिं। तथा

माला प्रसूनायुधपाशभासं
कण्ठेन भूमृद्विभरांबभूव ॥ ५० ॥
दूर्वाग्रजाग्रत्पुलकावलिं तां
नलाङ्गसङ्गाङ्कुशमुल्लसन्तीम् ।
मानेन मन्ये नमितानना सा
सासूयमालोकत पुष्पमालाम् ॥ ५१ ॥

प्रसूनायुधस्य कामस्य पाशभासं पाशसदृशीं । मालानिक्षेपानन्तरमेव कामपरवशत्वान्मालायाः कामपाशत्वं । श्यामो भवति शृङ्गार इति भरतवचनाच्छृङ्गारस्य श्यामत्वं । भूमृत्पार्वत्यपि । बिभरांबभूव । भीह्रीति (पा० ३।१।३९) श्लुमि, कृञ्चेति (पा० ३।१।४०) भुवोऽनुप्रयोगः ॥ ५० ॥

दूर्वेति ॥ मानेनेर्ष्याजनितकोपेन नमितानना सा भैमी सासूयं गुणवत्यामपि तस्यां दोषारोपसहितं यथा तथा सेर्ष्यमिति यावत् पुष्पमालामालोकत इत्यहं मन्ये शङ्के । किम्भूतां । दूर्वाग्रवदिव दूर्वाङ्कुरा इव च जाग्रती स्फुरन्ती पुलकावलिर्यस्याः तां । तथा नलाङ्गसङ्गाङ्कुशमुल्लसन्तीं शोभमानां सहर्षाञ्च । लज्जानम्रमुखी सत्येव मालासहितं नलवक्षः कटाक्षैर्विलोकितवती । अन्यापि नायिका एवंविधां सपत्नीं मानेन नम्रमुखी सती सेर्ष्यमालोकते । स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्यासङ्गिनि प्रिये इत्यमरः ॥ ५१ ॥

कापि प्रमोदास्फुटनिर्जिहान-
वर्णेव या मङ्गलगीतिरासाम्।
सैवाननेभ्यः पुरसुन्दरीणा-
मुच्चैरुलूलुध्वनिरुच्चचार॥ ५२॥

सा निर्मले तस्य मधूकमाला
हृदि स्थिता च प्रतिबिम्बिता च।
कियत्यमग्ना कियती च मग्ना
पुष्पेषुबाणालिरिव व्यलोकि॥ ५३॥

कापीति। प्रमोदाद्धर्षवशात्कण्ठस्य सगद्गदत्वादस्फुटा अप्रकटा निर्जिहाना निर्गच्छन्तो वर्णा अक्षराणि यस्या एवंविधेव या पुरसुन्दरीणां विलोकयितुमागतानां आननेभ्यः कापि लोकोत्तरा मङ्गलरूपा धवलादिगीतिरासीत् सैवोच्चैरुलूलुध्वनिरुच्चचार उदलसत्। विवाहाद्युत्सवे स्त्रीणां धवलादिमङ्गलगीतिविशेषा गौडदेशे उलूलुरित्युच्यन्ते। सोऽप्यव्यक्तव्यक्तवर्ण उच्चार्यते। स्वदेशरीतिः कविनोक्ता॥ ५२॥

सेति। तस्य नलस्य निर्मले हृदि स्थिता चान्तःप्रतिबिम्बिता च सा मधूकमाला कियती किञ्चिदमग्ना अब्रुडिता कियती च मग्ना ब्रुडिता, पुष्पेषुः कामस्तस्य बाणालिः शरपङ्क्तिरिव व्यलोकि वीक्षिता लोकैरिति शेषः। मधूकप्रतिबिम्बानां किञ्चिदन्तःप्रविष्टरूपबाणांशसाम्यमुपरिस्थितानां चामग्नबाणांशसाम्यं। मालास्पर्शान्नलोऽपि कामपरवशो जात इत्यर्थः॥ ५३॥

रोमाणि सर्व्वाण्यपि बालभावाद्
वरश्रियं वीक्षितुमुत्सुकानि ।
तस्यास्तदा कण्टकिताङ्गयष्टे-
रुद्ग्रीविकादानमिवान्वभूवन् ॥ ५४ ॥
रोमाङ्कुरैर्दन्तुरिताखिलाङ्गी
रम्भाधरा सा सुतरां विरेजे ।
शरव्यदण्डैः श्रितमण्डनश्री
स्मारी शरोपासनवेदिकेव ॥ ५५ ॥

रोमाणीति। तदा तस्मिन् समये कण्टकिता सञ्जातरोमाञ्चाऽङ्गयष्टिः शरीरं यस्यास्तस्या भैम्या वयोरभेदात् बालभावात् कोमलत्वाच्च शिशुत्वाद्वरस्य नलस्य श्रियं शोभां वीक्षितुं उत्सुकानीव सर्व्वाण्यपि रोमाणि उद्ग्रीवा यस्यां क्रियायां सा उद्ग्रीविका क्रिया तस्या आदानमङ्गीकरणं अन्वभूवन्निव । सात्त्विको रोमाञ्चस्तस्य तस्या जात इत्यर्थः। बालाश्च वरश्रियं वीक्षितुं उत्कण्ठिताः खर्व्वत्वादुद्ग्रीवा भवन्ति। कण्टकस्तारकादिः उद्ग्रीविका बहुव्रीहौ कप् ॥ ५४ ॥

रोमेति। रोमाङ्कुरैर्दन्तुरित उन्नतः नतोन्नतोऽखिलाङ्गं यस्याः सा रोमाञ्चयुक्ता. तथा रम्भाधरा बिम्बोष्ठी सा भैमी स्मारी कामसम्बन्धिनी शरोपासनवेदिकेव बाणाभ्यासशालेव सुतरां विरेजे। किम्भूता वेदिका। शरव्यदण्डैः वेध्यभूतैर्दण्डैः श्रिता मण्डनश्रीः अलङ्कारशोभा यया सा। रोमाङ्कुरा शर-

चेष्टा व्यनेशन्निखिलास्तदास्याः
स्मरेषुवातैरिव ता विधूताः।
अभ्यर्थ्य नीताः कलिना मुहूर्त्तं
लाभाय तस्या बहु चेष्टितुं वा ॥ ५६ ॥

व्यदण्डस्थानीयाः। भैम्यपि श्रितमण्डनश्रीः। रोमाञ्चितां तां दृष्ट्वा सर्व्वेऽपि कामपरवशा जाता इति भावः। शराभ्यास उपासनमित्यमरः। दन्तुरङ्कृतं दन्तुरितं ॥ ५५ ॥

चेष्टा इति। तदा तस्मिन् कालेऽस्या निखिलास्ताश्चेष्टा व्यनेशन् विनष्टाः। उत्प्रेक्षते। स्मरेषुवातैः कामबाणपक्षवायुभिः विधूता इव भ्रमणवशात् भीता इव। वाशब्द उत्प्रेक्षान्तरसमुच्चये, इवार्थे वा। तस्या लाभाय भैम्याः प्राप्तये बहुभिः प्रकारैश्चेष्टितुं अभ्यर्थ्य भैमीमेव याचित्वा मुहूर्त्तं घटिकाद्वयं क्षणमात्रं वा कलिना युगेन नीता इव। भैम्याः कामुकेन कलिना स्वस्याल्पविलासितया भैमीमलभमानेन बहुविलाससम्पत्तये भैमीविलासा एव याचितकमण्डनार्थं नीता इवेति भावः। याचितमपि क्षणमात्रमेव नीयते। सात्त्विकक्षोभेन कटाक्षादिव्यापाररहिता सा जातेति भावः। व्यनेशन्नित्यत्र पुषादित्वात् च्लेरङि (पा॰ ३।१।५५।) नशिमन्योरलिट्येत्वं वक्तव्यं (पा॰ ६।४।१२०। वा॰ २) इत्येत्वं। भाष्यकारस्य कैयटस्य पदमञ्जरीकारस्यापि मते छन्दस्येवैत्वं नशिमन्योर्न भाषायां। अनेशन्नस्यपव आभुरस्येति श्रुत्युदाहरणाच्चेरप्येत्वं

तन्व्यास्तमान्द्यस्पृशि यन्नलस्य
स्वेदं करे पञ्चशरश्चकार ।
भविष्यदुद्वाहमहोत्सवस्य
हस्तोदकं तज्जनयाम्बभूव ॥ ५७ ॥
तूलेन तस्यास्तुलना मृदोस्तत्
कम्प्रास्तु सा मन्मथबाणवातैः ।

छन्दस्येवेत्यवसीयते। वृत्तिकृता तु नशिमन्योर्भाषाविषयत्वमङ्गीकृत्य अभिपचोः छन्दोविषयत्वमङ्गीकृत्यैवं समर्थितं। नशिमन्योरलिट्येत्वं छन्दस्यमिपचोरपीत्यादि (पा० ६।४।१२०) (१) काशिका च ॥ ५६ ॥

इदानीं नलस्य सात्त्विकत्वं वर्णयति ॥ तदिति ॥ पञ्चशरः कामः तया भैम्या निक्षिप्तं मान्द्यं मान्द्यां अनुरागवशात् पुनः पुनः स्पृशतीति स्पृक् तस्मिन्नलस्य करे सात्त्विकं स्वेदं घर्मजलं चकार। तद्भविष्यतः उद्वाहरूपस्य महोत्सवस्य सम्बन्धि नियतपरस्वत्वोत्पादने हेतुभूतं हस्तोदकं कन्यादानजलमेव जनयाम्बभूव। नलस्यापि सात्त्विकस्वेदः प्रवृत्त इति भावः। स्वेदजलं न भवति किन्तु हस्तोदकमिति ॥ ५७ ॥

तूलेनेति। मृदोरतिसुकुमार्य्यास्तस्या भैम्यास्तूलेन कार्पासेन मृदुतया यस्मात्तुलना साम्यमस्तीति शेषः। तत्तस्मात्सा मन्मथबाणवातैः कामशरपुङ्खवायुभिः कम्प्रा सकम्पा अस्तु भवतु। कार्पासो हि लघुत्वाद्वातेन सकम्पो भवति। सा च

चित्रीयितं तत्तु नलो यदुच्चै-
रभूत् स भूभृत्पृथुवेपथुस्तैः ॥ ५८ ॥
दृशोरपि न्यस्तमिवास्त राज्ञां
रागाद्दृगम्बुप्रतिबिम्बि माल्यम्।

तत्तुल्या। अतस्तस्याः कामबाणवातैः सकम्पत्वं युक्तमेवेत्यर्थः। तत्तु पुनश्चित्रीयितं आश्चर्यं कृतं यदुच्चैर्भूभृन्महाराजो धीरोऽपि स नलस्तैः कामबाणवातैः कृत्वा पृथुर्महान् वेपथुः कम्पो यस्यैवंविधोऽभूत्, तत्तैः कामबाणैश्चित्रं कृतमाश्चर्यं कृतमित्यर्थः। तूलस्य तूलतुल्यस्य वा वातैः कम्पो युक्तः। अत्युच्चस्य पर्व्वतस्य तु वातैः कम्पोऽतितरामाश्चर्यकारीत्यर्थः। उभावपि तुल्यानुरागौ सात्त्विककम्पयुक्तौ जाताविति भावः। चित्रीयितं। नमोवरिवश्चित्रङः क्यजिति (पा० ३।१।१८) क्यजन्तात् क्तः। क्यचि चेति (पा० ७।४।३३) इत्वमकारस्य॥५८॥

दृशोरिति॥ दृशोरपि अम्बुनि क्रोधजनितेऽश्रुणि प्रतिबिम्बोऽस्यास्तीति एवंशीलं माल्यं सा मधूकमाला रागात्स्नेहविषयात् क्रोधात् अथच तज्जनितान्नेत्रलौहित्याद्धेतोः सभासदां राज्ञां दृशोरपि न्यस्तमिव, येन केनचिद्बलान्निक्षिप्तमिवास्त अतिष्ठत। नेत्रलौहित्यदर्शनादेवं ज्ञातमभूदिति यावत्। तथा कश्चित् क्रुद्धः सन् कस्यचिन्नेत्रे बलादङ्गुल्यादिशल्यं निक्षिपति तदीयनेत्रस्य च लौहित्यं भवति अश्रु च निर्गच्छति। तथा क्रोधाद्दर्शनमात्रेण तत्क्षणमेव तेषां द्वयोरपि नेत्रयोर्निक्षिप्तं शल्यमिवा-

नृपस्य तत्पीतवतोरिवाक्ष्णोः
प्रालम्ब्यमालम्बत युक्तमन्तः ॥ ५९ ॥

भवत्। अत एव तयोर्लौहित्यमश्रु च जातमित्यर्थः। अर्थादयुक्तमेतत्। स केवलमन्तःकरणे शल्यं निक्षिप्तं किन्तु दृशोरपीत्यपिशब्दार्थः। अथ च रागात् नलप्रीत्या भैम्या माल्यं यथा नलकण्ठे न्यस्तं तथा रागात् क्रोधात् नलस्पर्द्धिनां सम्मुखं पश्यतां राज्ञां नेत्रयोरपि शल्यमिव क्षिप्तमभूत्। यतो दृगम्बुप्रतिबिम्बि। नलसमसहमानाः सर्व्वेऽपि राजानो माल्यादर्शनमात्रेण क्रोधेर्ष्यावशाः सङ्कुचितनेत्राः पराङ्मुखाः सन्तस्तां न पश्यन्ति स्मेति भावः। नृपस्य नलस्य अक्ष्णोरन्तः मध्यः कर्तृभूतः प्रालम्ब्यं प्रालम्बं लम्बत्वं हर्षविस्फारितत्वं आलम्बत अङ्गीचकार एतद्युक्तं। हर्षवशाद्धि नेत्रयोर्विस्फारत्वं भवति। प्रालम्बमिति पाठे प्रालम्बनं प्रालम्बः स एवार्थः। उत्प्रेक्षते। किम्भूतयोरक्ष्णोः तत्पीतवतोरिव माल्यं सादरं विलोकमानयोरिव। हर्षजनितं विस्फारत्वं विलोकनजन्यत्वेन उत्प्रेक्षितं। यद्वा नलनेत्रमध्यसम्माल्यमेव प्रालम्बमृजुलम्बितं हारविशेषं अङ्गीचकार। सादरविलोकमानेत्रयोरन्तः प्रतिलम्बितया मालाया ऋजुलम्बितं नेत्रयोर्विस्फारत्वमन्तरेण न घटत इति तदेवाक्षिपति। नलस्तु तां मालां विलोकयन् हर्षवशाद्विस्फारितनेत्रो जात इति भावः। तन्माल्यं रागाद्दृशोर्न्यस्तमिवास्त। नेत्रमध्ये निक्षिप्तं नाक्ष्णादि तदिवाभूत्। युक्तमेतत्। क्रोधाद्धि दृष्टमात्रं वस्तु

स्तम्भस्तथाऽलम्भितमां नलेन
भैमीकरस्पर्शमुदः प्रसादः।
कन्दर्पलक्षीकरणार्पितस्य
स्तम्भस्य दम्भं स चिरं यथाऽऽयत् ॥ ६० ॥

शल्यमिव भवति नेत्रयोश्च लौहित्यमश्रु च भवतीति युक्तमित्यर्थः। तन्माल्यं पीतवतोरिव नलनेत्रं वस्तु शल्यमिव भवति। नलनेत्रयोरन्तः रागात् प्रीतेर्हृद्यत्वं प्राप एतदपि युक्तं। प्रीतेर्हि हर्षो भवति इत्यपि युक्तमेवेत्यर्थ इति वा। प्रालम्बं गुणवचनादित्वात् (पा० ५।१।१२४) ष्यञ्। प्रालम्बमिति पाठे प्रालम्बो हारभेदे स्यादिति विश्वः। राज्ञेति पाठे, आनन्दाश्रुणि प्रतिबिम्बितं माल्यं राज्ञा नलेनानुरागाद्दृशोरपि न्यस्तमिवास्त। न केवलं हृदि किन्तु नेत्रयोरपि धृतमित्यर्थः। अत एव तन्माल्यं पिवतोर्नलनेत्रयोर्मध्यः प्रलम्बत्वमालम्बतेति युक्तं। दीर्घाया मालाया अन्तर्द्धारणार्थं नेत्रमध्येऽपि दीर्घा जात इवेति भावः ॥ ५८ ॥

स्तम्भ इति ॥ मालानिक्षेपसमयजातभैमीकरस्पर्शस्तेन जाता मुत् हर्षस्तस्य प्रसादरूपः स्तम्भः सात्विकभावः नलेन तथा ऽलम्भितमां अतितरां प्राप्तः। यथा स नलः कन्दर्पस्य लक्षीकरणाय लक्ष्यार्थं अर्पितस्यारोपितस्य स्तम्भस्य दम्भं व्याजं कामवेध्यस्तम्भसादृश्यं चिरमायत्। कामवेध्यस्तम्भवद्भैम्याः करस्पर्शजातसात्विकस्तम्भवशान्नितरां निर्व्यापारो जात इति भावः। नितरां कामपीडा सूचिता ॥ ६० ॥

उत्सृज्य साम्राज्यमिवाथ भिक्षां
तारुण्यमुल्लङ्घ्य जरामिवारात् ।
तं चारुमाकारमुपेक्ष्य यान्तं
निजां तनूमाददिरे दिगिन्द्राः ॥ ६१ ॥

मायानलत्वं त्यजतो निलीनैः
पूर्वैरहंपूर्विकया मघोनः ।

इदानीमिन्द्रादिभिः स्वं रूपं धृतमित्याह । उत्सृज्येति ॥ अथ नलवरणानन्तरं ते इन्द्रादयो दिगिन्द्रा दिक्पाला यान्तं गच्छन्तं चारुं सुन्दरं तं अलीकनलाकारं उपेक्ष्योन्मुच्य निजां सहस्रनेत्रत्वादिलक्षणां स्वीयां तनूं आरान्नलसमीप एवाददिरेऽङ्गीचक्रुः । कः कामिव । कश्चिद्राजा साम्राज्यमुत्सृज्य क्षीणपुण्यतया चक्रवर्त्तिपदं त्यक्त्वा भिक्षामिव । तथा कालवशादुच्चतारुण्यमुल्लङ्घ्यातिक्रम्य कश्चिज्जरामिव । उपमाद्वयेनेन्द्राद्याकाराणां नलाकारादतिहीनत्वं सूचितं । साम्राज्यादिपरित्यागेन भिक्षाद्यङ्गीकारे यावद्दुःखं भवति तावन्नलाकारपरित्यागेन स्वाकाराङ्गीकारे तेषां जातमिति भावः । तत्र निजत्वमेव हेतुः । अन्योऽपि विद्वानसमीचीनमपि निजमङ्गीकरोति न तु समीचीनं परकीयं । यातुमिति पाठे स्वर्गमिति शेषः । आददिरे । आङो दोनास्येति (पा० १ । ३ । २०) तङ् ॥ ६१ ॥

यथाक्रमं तेषामाकारस्वीकारमाह । मायेति । मायानलत्वं अलीकनलत्वं त्यजतो मघोनः निलीनैः पूर्वैर्निजगात्रत्वा गोपि-

भीमोद्भवासात्त्विकभावशोभा-
दिदृक्षयेवाविरभावि नेत्रैः ॥ ६२ ॥
गोत्रानुकूलत्वभवे विवाहे
तत्रानिकृन्त्यादिव गोत्रशत्रुः।

तैः पूर्व्वैर्नेत्रैः सहस्रसङ्ख्यजनिता भीमोद्भवायाः सात्त्विकभाव-शोभा रोमाञ्चादिलक्ष्मीस्तस्या दिदृक्षयेव दर्शनेच्छयेवाहं पूर्व्व-महं पूर्व्वमिति यथा भवति तथा, यद्वाहं पूर्व्वमहं पूर्व्वमिति यस्यां क्रियायां सर्व्वे ब्रुवते साहंपूर्व्विका स्पर्द्धात्मिकयाभ्यां आ-विरभावि वेगेन प्रकटीभूतं। इन्द्रेण स्वनेत्रसहस्रं प्रकटितमिति भावः। अन्योऽपि दर्शनात्मकोऽहंपूर्व्विकया प्रकटो भवति। अहं पूर्व्वमहं पूर्व्वमित्यहंपूर्व्विका स्मृतेत्यमरः। अहं पूर्व्विकया। स्वार्थिकः मत्वर्थीयष्ठक् च ॥ ६२ ॥

गोत्रेति ॥ तथा स इन्द्रसखः प्रवरः ददृशे दृष्टः। स कः। गोत्रशत्रुरिन्द्रः यं वरं श्रेष्ठं प्रवरमेतन्नामानं सखायं पुरस्कार पूजितवान् अथ चाग्रेसरमकरोत्। किं कुर्वन्। गोत्रयो-र्वसिष्ठकश्यपादीवंशादिरूपयोरनुकूलत्वेनासमानत्वेन विवाह्य-त्वेन वा भवे जायमाने अथच गोत्रयोर्जन्मकालीनताराणामनुकू-ल्येन तृतीयैकादशचतुर्थदशमादिज्योतिःशास्त्रोक्तसद्राशिकूट-सम्भवेन जायमाने विवाहे विषये विवाहार्थमिति यावत्। आयन् स्वर्गात् स्वयम्वरार्थं आयन् भुवमागच्छन्। एतावन्तं कालमदृष्टोऽभूत् इदानीन्तु प्रकटो जात इत्यर्थः। सखायमिन्द्र-

पुरस्चकार प्रवरं वरं य-
मायन् सखायं ददृशे तया सः ॥ ६३ ॥
स्वकामसम्मोहमहान्धकार-
निर्वापमिच्छन्निव दीपिकाभिः।

मायन् प्राप्नुवन् स प्रवरस्तया दृष्ट इति वा। प्रवरशब्दकत्वेन प्रवरपुरस्कार उत्प्रेक्ष्यते। तस्य गोत्रानुकूलविशिष्टस्य विवाहस्य प्रतिकूल्यादिकरत्वादिव। यतोऽयं गोत्रशत्रुरिति कृत्वं। नलभैमीगोत्रयोरनुकूलत्वेन जायमाने विवाहे स्वयमिन्द्रस्तत्प्रातिकूल्यं कृतवान्। ततश्च विशिष्टस्यापि प्रातिकूल्ये गोत्रयोरपि प्रातिकूल्यं जातं दैवत्वाद्गोत्ररहित्याच्च स्वगोत्रभैमीगोत्रयोरप्यनुकूलत्वाभावात् प्रातिकूल्यं। ततश्च गोत्रयोः प्रातिकूल्येऽपि श्रेष्ठप्रवराङ्गीकरणेनापि यथा कथञ्चिद्विवाहो घटिष्यत इति बुद्ध्या प्रवरमार्यं पुरस्चकारेत्यर्थः। यद्वा गोत्रानुकूलत्वाभावे विवाहे तस्य प्रातिकूल्याद्धेतोः प्रवरं पुरस्चकार समानप्रवरत्वेनापि विवाहनिषेधादित्यर्थः। नाम्नोराशचरयोरांशिकूट सूचकयोर्गणनायां षडष्टकाद्यमद्राशिकूटादिव गोत्रशत्रुरित्यादिज्योतिःशास्त्रादूह्यं। प्रवरं इन्द्रमित्रं ॥ ६३ ॥

स्वकामेति ॥ वायुसखोऽग्निः निजं वपुः उद्गलरीभिरुद्गलरीभिः शिखाभिर्ज्वालाभिः कुरितं व्याप्तं वितेने चकार। भैम्यभिलाषं परित्यज्य पुनरपि ज्वालाव्याप्तं शरीरमङ्गीचकारेत्यर्थः। किं कुर्वन्निव। दीपिकाभिर्वस्त्राग्निज्वलितशिखाभिः

उद्गत्वरीभिस्स्फुरितं निमेने
निजं वपुर्वायुसखः शिखाभिः ॥ ६४ ॥

पत्यौ वृते भीमजया न वह्नि-
र्वह्नि स्वमङ्गाय निजुह्नुवे यः ।
जनादपत्रप्य स हा सहाय-
स्तस्य प्रकाशोऽभवदप्रकाशः ॥ ६५ ॥

सदण्डमालक्ष्य कनेत्रचण्डं
तमःकिरं कायमधत्त कालः ।

स्वस्य कामेन सम्मोहोऽविवेकरूपस्तल्लक्षणो महान्धकारस्तस्य नि-र्वापं शान्तिमिच्छन्निव । उत्पूर्व्वकगमेः, गत्वरश्चेति (पा॰ ३।२।२६४)क्वरबन्तात् । टिड्ढाणञिति (पा॰ ४।१।१५) ङीप् ॥ ६४ ॥

पत्याविति ॥ यः प्रकाशः पूर्व्वं वह्नेरलौकिकनलत्वाङ्गीकारस-मये स्वमात्मानं अङ्गाय शीघ्रं निजुह्नुवे गोपितवान् स तस्य वह्नेः सहायः सखा प्रकाशो दीप्तिः सद्योऽह्ना दिवसेन हेतुनाऽप्र-काशः अप्रकटोऽभवत् । प्रकटीभूतोऽपि सूर्य्यप्रभाच्छादिततया ऽप्रकटो जात इत्यर्थः । हा कष्टं । पत्यौ स्वस्वामिनि वह्नौ भीम-जया न वृते सति जनालोकादपत्रप्य लज्जितेव प्रकटो नाभूत् इति सुप्रोत्प्रेक्षा । अन्योऽपि स्वस्वामिनोऽपकर्षे लज्जया नि-लीयते । ज्वालास्वङ्गीकृतास्वपि रात्रिवत् प्रकाशाभावाद्वह्नि-र्निष्प्रभ एवाभूदिति भावः ॥ ६५ ॥

सदण्डमिति॥ कालो यमः सदण्डं लोहयष्ट्या सह वर्त्तमानं

तत्कालमन्तःकरणं नृपाणा-
मध्यासितुं कोप इवोपनम्रः ॥ ६६ ॥
दृग्गोचरोऽभूदथ चित्रगुप्तः
कायस्थ उच्चैर्गुण एतदीयः ।

आलक्तकेनारक्तं वस्त्रमालक्तकं तद्वदारक्ते नेत्रे ताभ्यां चण्डम-तिभयङ्करं, तथा तमःकिरं अन्धकारमुद्गिरन्तं कालत्वात् । यद्वा स्वीयश्यामलातिशयेन तमसो विक्षेपकं एवंविधं कायं देह-मधत्त प्रकटितवानित्यर्थः । उत्प्रेक्षते । तत्कालं तस्मिन्नवसर-णामन्तरसमये नृपाणामन्तःकरणमध्यासितुमधिष्ठातुं उपनम्र आसन्नीभूतः कालः श्यामः कोप इव मूर्त्तः । कोप एव राज्ञां प्रकटो जात इति भावः । कुपितोऽप्येवंविधो भवति । आलक्तके । तेन रक्तं रागादित्यण् (पा० ४ । २ । १) तमः किरं । इगुप-धेति (पा० ३ । १ । १३५) कः । अन्तःकरणं । अधिशीङिति (पा० १ । ४ । ४६) कर्मत्वं ॥ ६६ ॥

दृगिति ॥ अथ एतदीयो यमसम्बन्धी उच्चैर्नितरामुन्नतो वा गुणः सेवकः । उच्चैर्गुणो यस्यैवंविधो वा । कायस्थो राजसेवकः । गणकजातिविशेषश्चित्रगुप्तनामा लेखको दृग्गोचरः प्रकटोऽभूत् ॥ अथ च काये देहे तिष्ठति कायस्थः एतदीयो नितरां प्रसि-द्धश्चित्रेणाश्चर्यभूतेन नलाकारेण गुप्तश्छादित एवंभूतो गुणः श्यामवर्णः प्रकटोऽभूत् । एवं शब्दश्लेषसामान्येन सूचितयोर्द्वयो-र्विशेषमाह । तत्रैको गणकः तालादिपत्रस्योर्द्ध्वस्योपरि मषीं

ऊर्द्धं तु पत्रस्य मषीद एको
मषेर्ददच्चोपरि पत्रमन्यः ॥ ६७ ॥
तस्यां मनोबन्धविमोचनस्य
कृतस्य तत्कालमिव प्रचेताः ।
पाशं दधानः करबद्धवासं
विभुर्बभावाप्यमवाप्य देहम् ॥ ६८ ॥

द्रव्यान्तरेण द्रवीभूतं कज्जलं ददात्येवंभूतः, प्राणिनां शुभाशुभकर्म्मगणनार्थं मष्या विलिखन्नित्यर्थः । अन्यः कृष्णगुणस्तु मषेरुपरि पत्रं जयपत्रं ददन्मषेः सकाशादहं काल इति पत्रालम्बनं कुर्व्वन् प्रकटोऽभूदित्यन्वयः अतिश्याम इत्यर्थः । चोऽपरस्य समुच्चये त्वर्थे वा ॥ ६७ ॥

तस्यामिति ॥ तस्मिन् काले नलवरणानन्तरं विभुः स्वामी प्रचेता वरुणः आप्यं पार्थिवतैजसाद्यवयवोऽवयवेभ्य प्रचुरतरजलावयवनिर्म्मितमुपभोगयोग्यमसाधं देहमवाप्य बभौ । किंभूतः । तस्यां भैमीविषये कृतस्य मनोबन्धविमोचनस्य अन्तःकरणबन्धमोचनस्य पूर्व्वं भैमीविषये पाशेन बध्वा निश्चलीकृत्य यत्स्थितं मनस्तत्तया नले वृते सति प्रकृष्टचेतस्त्वात् पुनस्तस्मात् बन्धाम्मोचितं तत् तदीयमोचनस्यैव तत्सम्बन्धिनमिव करे बद्धवासं कृतवसतिं पाशं स्वायुधं दधानः । अन्यस्यापि तत्कालमेव कृतवत्सादिबन्धनविमोचनस्य हस्ते पाशो बन्धनरज्जुर्भवति । आप्यं पूर्व्ववत् ॥ ६८ ॥

सहद्वितीयः स्त्रियमभ्युपेया-
दवं स दुर्बुध्य नयोपदेशम्।
अन्यां सभार्य्यः कथमृच्छतीति
जलाधिपोऽभूदसहाय एव॥ ६८॥

सहेति॥ स जलाधिपो वरुणोऽथ च जडस्वामी मूर्खतम इति विचार्य्य असहाय एवाभूत्। इति किं। सहद्वितीयः ससहायः स्त्रियमभ्युपेयात् किं पुनरन्यां। एवं रूपं नयोपदेशं नीतिमार्गं दुर्बुध्य दुष्टमिदमिति विचार्य्य,

मात्रा स्वस्रा दुहित्रा वा न विविक्तासनो भवेत्।
बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति॥

तथा।

कामिनो कामयेदेव निर्जने पितरं सुतं।
सद्वितीयोऽभ्युपेयात्तां मनःपरिणतामपि॥

इत्यादिवाक्यरूपं स्त्रीपुरुषयोरेकान्ते मदनविकारसम्भवादेकेन स्त्रियं प्रति न गन्तव्यं किन्तु ससहायेनैवेति प्रतिपादनपरं नीत्युपदेशं द्वितीयया सहधर्म्मिण्या सह वर्त्तमानः स्त्रियमुपेयादित्युपदेशपरं बुद्धा सभार्य्योऽन्यां कथं ऋच्छति प्राप्नोति अपि तु न कथञ्चित्। न ह्यन्यस्यामनुरक्तमन्यानुसरति न चान्यया तु वृतमन्या वृणोतीति नयस्य पूर्व्वमर्थं त्यक्त्वा द्वितीयमङ्गीकृत्यासहाय एवागत इत्यर्थः। अन्योऽपि जडो नयोपदेशं विपरीतमेव बुध्यते। द्वितीया सहधर्म्मिणीत्यमरः। सहद्वितीयः। विकल्पत्वात् सत्वाभावः॥ ६८॥

देव्यापि दिव्याऽनु तनुः प्रकाशी-
कृता मुदस्तत्क्षणतः सृजन्ती।
अनिङ्कितैस्तामवधार्य चिह्नै-
स्तद्वाचि बाला शिथिलादृताऽभूत् ॥ ७० ॥
विलोकके नायकमेलकेऽस्मिन्
रूपान्यता कौतुकदर्शिभिस्तैः।

इदानीं देव्यापि स्वाकारो धृत इत्याह॥ देव्येति॥ इन्द्रादीनां स्वाकारधारणानन्तरं देव्यापि सरस्वत्यापि चक्रभृतः श्रीविष्णोर्मुदो हर्षान् सृजन्ती प्रेयसितरा दिव्या तनुरतिसुन्दरी मूर्त्तिः प्रकाशीकृता। देव्यापि स्वाकारो धृत इत्यर्थः। अनन्तरञ्च बाला भैमी अनिङ्कितैः प्रकटितैर्वीणाहंसादिभिश्चिह्नैस्तां सरस्वतीं अवधार्य्य ज्ञात्वा तद्वाचि श्लेषवक्रोक्त्यादिरूपायां तस्यां वाण्यां विषये शिथिलादृता परित्यक्ताश्चर्य्याऽभूत्। पूर्व्वं तु मानुषीयमीदृशं कथं वदतीति साश्चर्याभूत् सम्प्रति सरस्वतीं दृष्ट्वाऽस्या एवं उक्तौ किमाश्चर्यं अपि तु न किञ्चिदिति त्यक्ताश्चर्या जातेत्यर्थः ॥ ७० ॥

विलोकक इति॥ अस्मिन्नानादेशेभ्यः समागते नायकमेलके राजसङ्घे विलोकके विलोकयति सति रूपान्यतया मत्स्याकारं परित्यज्य सहस्रनेत्राद्याकारधारणेन कौतुकं दर्शयितुं शीलमेषामेवंभूतैस्तैर्देवीसहितैरिन्द्रादिभिः निर्जले जलदर्शनादिरूपामिन्द्रजालविद्यां विदन्ति जानन्ति तेषां वृत्तिवधात् जीव-

बाधा वनेन्द्रादिभिरिन्द्रजाल-
विद्याविदां वृत्तिवधाद्व्यधायि ॥ ७१ ॥
विलोक्य तावाप्तदुरापकामौ
परस्परप्रेमरसाभिरामौ ।
अथ प्रभुः प्रीतमना बभाषे
जाम्बूनदोर्वीधरसार्वभौमः ॥ ७२ ॥

तोपायस्य स्वयमङ्गीकरणेन नाशात् बाधा व्यधायि पीडा वि-हिता, ततास्थ्यैं कष्टं वा । स्वयम्बरमध्ये इन्द्रजालं प्रकटयता-मैन्द्रजालिकानां विलोककेऽस्मिन् राजमक्के तैर्वृत्तिवधात्तेषां बाधा व्यधायि पीडाविहिता । ऐन्द्रजालिकान् परित्यज्येन्द्रा-दीनामेव विलोकनादित्यर्थ इति तत्त्वार्थी वा । रूपान्तरं धा-रयमाणानिन्द्रादीन् दृष्ट्वा सर्व्वेऽपि साश्चर्या जाता इति भावः । तेः । सा च ते च । पुमान् स्त्रिया (पा० १।२।६७) इत्येक-शेषः ॥ ७१ ॥

विलोक्येति ॥ अथ जाम्बूनदस्य सुवर्णस्योर्वीधरो मेरुस्तस्य सार्वभौमश्चक्रवर्त्ती अत एव प्रभुः समर्थ इन्द्रः प्रीतमनाः सन्तौ भैमीनलौ एतादृशौ विलोक्य बभाषे । किम्भूतौ । आप्तः अन्यो-न्यप्राप्तिरूपः दुरापः अन्योन्येन प्राप्तुमशक्यः कामोऽभिलाषो याभ्यां अत एव परस्परप्रेमरसेनाभिरामौ स्तम्भस्वेदसात्त्विक-भावयुक्तौ । प्रभुर्जाम्बूनदेत्यादिना वरदानसामर्थ्यं सूचितं । प्रीतमना इत्यनेन च स्वेच्छयैव वरं दातुमारब्धवान्न तु या-चितः सन्निति प्रतारणाभावं सूचयति । सार्वभौमः । तदीश्वरः

वैदर्भि दत्तस्तव तावदेष
वरो दुरापः पृथिवीश एव ।
दूत्यन्तु यत्त्वं कृतवानमायं
नल प्रसादस्त्वयि तन्ममायम् ॥ ७३ ॥
प्रत्यक्षलक्ष्यामवलम्ब्य मूर्त्तिं
हुतानि यज्ञेषु तवोपभोक्ष्ये ।

(पा० ५।१।४२) इत्यण्। अनुशतिकादीनाञ्च (पा० ७।३।२०) इत्युभयपदवृद्धिः ॥ ७२ ॥

किमाह सोऽत्यत आह ॥ वैदर्भीति ॥ हे वैदर्भि मया तावत् प्रथमं एष पृथिवीश एव नल एव तव त्वत्सम्बन्धी वरः, अथ च देवप्रसादः अर्थात् तुभ्यं दत्तः । किम्भूतः । भूयोभिरपि तपोभिर्दुरापः । दत्तस्तावद्दत्त एवेति वा । इति भैमीमुक्त्वा नलमाह । हे नल त्वं तु भैमीविषयेऽस्मत्सम्बन्धि दूत्यं यद्यस्मादमायं व्याजरहितं मनःशुद्ध्या कृतवान् तत्तस्मात् त्वयि विषये ममापि वक्ष्यमाणः प्रसादो वरदानमित्यर्थः ॥ ७३ ॥

प्रत्यक्षेति ॥ हे नल अहं प्रत्यक्षेण लक्ष्यां नेत्रदृश्यां मूर्त्तिं तनुमवलम्ब्य धृत्वा यज्ञेषु तव हुतानि हवींषि पुरोडाशादीनि उपभोक्ष्ये । ईदृशेन वरेण मम को लाभ इत्यत आह । हि यस्मात् तद्विदांसो यजमानादयस्तु मखं यज्ञमस्माभिस्साक्षाद्भुक्तमवेत्य मन्त्रादधिकोऽतिरिक्तो यो देवस्तस्य सद्भावे विषये संशेरते । मिमांसका मन्त्रातिरिक्ता कर्मसमवायिनो देवता

संशेरतेऽस्माभिरवेक्ष्य भुक्तां
मखं हि मन्त्राधिकदेवभावे ॥ ७४ ॥
भवानपि त्वद्दयितापि शेषे
सायुज्यमासादयतं शिवाभ्याम्।

नास्त्येवेति वेदाग्निभिः सह विप्रतिपद्यन्ते। तस्मात् तद्विप्रतिपत्तिनिरासद्वारा तुभ्यं कीर्त्तिं दातुं त्वदीययज्ञेषु हुतं प्रत्यक्षेणैव शरीरेण भोक्ष्ये इति भावः। अग्नौ प्रक्षिप्तस्य हविषो भस्मीभावमात्रदर्शनान्मन्त्रप्रकाश्येन्द्रादीनां वाऽदर्शनात् किमयं यज्ञः सत्योऽसत्यो वेति सन्देहे प्रत्यक्षशरीरेण मखभोजने त्वयं सन्देहो गमिष्यति। कस्मिन् सति। मन्त्रादधिके देवेषु भावे विश्वासे सति। मन्त्रमयी देवतेत्येतत्पक्षया प्रत्यक्षायां देवतायामधिकस्य मनोविश्वासस्य युक्तत्वादित्यर्थः। संशयनिवृत्तिरेव महांस्तव लाभो भविष्यतीति भावः। उपभोक्ष्ये। भुजोनवने (पा०१।३।६६) इति तङ्। अस्माभिरिति बहुवचनं देवतान्तराभिप्रायं ॥ ७४ ॥

भवानिति॥ हे नल भवानपि त्वद्दयिता भैम्यपि युवां शेषे भूलोकभोगनिमित्तस्य कर्म्मणः शेषे अवसाने सति शिवाभ्यां ईश्वरपार्वतीभ्यां सायुज्यं सहैक्यं आसादयतं प्राप्नुतं। भवान् शिवेन भैमी च पार्वत्या सहैक्यं गच्छतमित्यर्थः। स्वकर्म्म प्राप्तमिदं स्वयमेव भविष्यति किं वरदानेनेत्यत आह। हि यस्मात् प्रेत्य मरणं प्राप्य अहं कीदृक् प्रेतो देवो मनुष्यो वा स्वर्गस्थो

प्रेत्यास्मि कीदृक् भवितेति चिन्ता
सन्तापमन्तस्तनुते हि जन्तोः ॥ ७५ ॥
तवोपवाराणसि नाम चिह्नं
वासाय पारेसि पुरं पुरास्ते।
निर्वातुमिच्छोरपि तत्र भैमी
सम्भोगसङ्कोचभियाधिकाशि ॥ ७६ ॥

नारकी वा भविष्यामीत्यादिचिन्ता जन्तोः प्राणिनः अन्तःकरणे सन्तापं महांतमाधिं जनयति। वरदानेन चिन्तानिवृत्तौ सन्तापनाशः फलमित्यर्थः। शिवाभ्यां। पुमान् स्त्रिया (पा० १।२।६७) इत्येकशेषः। अस्मीत्यहमर्थेऽव्ययं वा ॥ ७५ ॥

तवेति॥ हे नल निर्वातुमिच्छोरपि मुमुक्षोरपि तव वासाय वसत्यर्थं उपवाराणसि काशीसमीपे पारेसि असिनद्याः परतीरे नामचिह्नं त्वन्नामांकितं तत्प्रसिद्धं पुरं नलपुरमिति यावत् पुरास्ते भविष्यति। इदानीमन्यच निवासेऽपि अतःपरं तत्पुरं राजधानी भविष्यति। मुमुक्षोरपि ते पुरं काशीमधिकृत्य न कृतमित्यर्थः। किमिति। न कृतमित्यत आह। भैम्या सह सम्भोगः सुरतादिसुखं तस्य सङ्कोचोऽल्पत्वं तस्माद्भिया भयेनाधिकाशि पञ्चकोशपरिमितायां काश्यां मुक्तिपुर्यां ब्रह्मचर्यादिनियमे भोगसङ्कोचभिया तत्पुरं न कृतं किन्तु तत्समीप इति भावः ॥ ७६ ॥

धूमावलिश्मश्रु ततः सुपर्वा
मुखं मखास्वादविदां तमूचे ।
कामं मदीनामय कामधेनोः
पयायतामभ्युदयस्त्वदीयः ॥ ७७ ॥

या दाहपाकौपयिकी तनुर्मे
भूयात् त्वदिच्छावशवर्त्तिनी सा ।
तया पराभूततनोरनङ्गात्
तस्याः प्रभुः सन्नधिकस्त्वमेधि ॥ ७८ ॥

धूमेति ॥ ततः धूमावलिरेव श्मश्रु यस्यैवंविधं मखास्वादविदां यज्ञरसाभिज्ञानां देवानां मुखं सुपर्वा देवोऽग्निः इति तं नलमूचे । इति किं । हे नल त्वदीयोऽभ्युदयस्त्वत्समृद्धिः कामं नितरां मदीनामयी त्रिलोकनरूपा कामधेनुस्तस्याः पयायतां दुग्धमिवाचरतु तद्वदपरिमितो भवत्विति । मद्विलोकनमात्रेण तव समृद्धिरनन्ताऽस्त्विति तस्मै वरं दत्तवानित्यर्थः । अन्यत्रापि मुखस्य भूषणं श्मश्रु च युक्तं । कामधेनोः पयो युक्तं । धूमावलिरूपेण श्मश्रुणा ततो व्याप्त इति वा । पयायतां । आचारे कर्त्तुः क्यङ् सलोपश्चेति (पा० ३।१।११) क्यङ्सलोपौ ॥ ७७॥

वरान्तरमाह ॥ येति ॥ हे नल स्फोटादिजनको दाहः, तण्डुलादेः पाकः तयोरौपयिकी कारणभूता मे या तनुर्मूर्त्तिः सा तवेच्छाया वशे वर्त्तत इति वशवर्त्तिनी इत्येवं शीला भूयात् निरग्निकेऽपि देशे यत्र त्वमभिलषसि तत्र दाहपाकयोग्या मम

अस्तु त्वया साधितमन्नमीन-
रसादि पीयूषरसातिशायि ।
यद्भूय विद्मस्तव सूपकार-
क्रियासु कौतूहलशालि शीलम् ॥ ७९ ॥

मूर्त्तिः प्रकटा भवत्वित्यर्थः । अत एव वशवर्त्तित्वात्तस्या मदीयमूर्त्तेः प्रभुः स्वामी सन् त्वं शिवनेत्रज्वालारूपया तया मदीयमूर्त्त्या पराभूततनोर्दग्धशरीरादनङ्गादधिक एधि भव । पूर्व्वमेव सुन्दरत्वेन कामादधिकः, इदानीन्तु मत्तन्वास्त्वद्वशवर्त्तित्वात्त्वद्वशीभूतया तया कामे पराभूते प्रकारान्तरेणाप्यधिकतरो भवति भावः ॥ ७८ ॥

वरान्तरमाह । अस्त्विति । हे नल त्वया साधितं राद्धमन्नं तण्डुलादि मीना मत्स्या रसाः प्रपानकादयः दुग्धादयो वा ते आदयो मुख्या यस्य एवम्भूतमन्यदपि पाकयोग्यं भक्ष्यं पीयूषरसातिशायि पीयूषरसममृतास्वादमप्यतिशेते एवं शीलं तस्मादपि नितरां स्वादु अस्तु भवतु । हे भूप राजन् यद्यस्मात् वयं तव शीलं सूपकाराणां क्रियासु कर्म्मसु विषये कौतूहलशालि तूहलेन शालते शोभते एवं शीलं विद्मः जानीमः तस्मात् तुभ्यमीदृशो वरो दत्त इत्यर्थः । शीलमित्यत्र चित्तमित्यपि पाठः । विद्मः । अस्मदो द्वयोश्चेति (पा० १।२।५९) बहुत्वं ॥ ७९ ॥

वैवस्वतोऽपि स्वत एव देव-
स्तुष्टस्तमाचष्ट नराधिराजम्।
वरप्रदानाय तवावदानै-
श्चिरं मदीया रसनोद्धुरेयम्॥ ८०॥

सर्व्वाणि शस्त्राणि सहाङ्गचक्रै-
राविर्भवन्तु त्वयि शत्रुजेत्रे।
अवाप्यमस्मादधिकं न किञ्चि-
ज्जागर्त्ति वीरव्रतदीक्षितानाम्॥ ८१॥

वैवस्वतोऽपीति। वैवस्वतः सूर्य्यपुत्रो यमोऽपि देवः स्वत एव स्वयमेव तुष्टः सन् तं धराधिराजं नलं इत्याचष्ट अवोचत्। इति किं। हे नल तवावदानैर्दूत्यादिकर्म्मभिर्या गीयपशारङ्ग-भावैर्वा निमित्तैरियं मदीया रसना जिह्वा वरप्रदानाय तुभ्यं वरं दातुं चिरमुद्धुरा उत्सुका, वरं दास्यामीति सोत्कण्ठा स्थि-यत इत्यहमपि वरं दास्यामीत्यर्थः॥ ८०॥

सर्व्वाणीति। हे नल सर्व्वाणि मन्त्रप्रयोज्यब्रह्मास्त्रादिस-हितान्यभ्याससाध्यानि कुन्तखड्गादीनि शस्त्राणि अङ्गानां मो-क्षोपसंहारादीनां मन्त्रा देवतादीनां वा चक्रैः समूहैः सह त्वयि आविर्भवन्तु प्रकटीभवन्तु। मन्त्रशस्त्रादीनि त्वमेव जानीहीति भावः। यतः सर्व्वजेत्रे शत्रूणां जेतरि। किमित्येवं वरदानमि-त्याशङ्क्याह। सङ्ग्रामादपलायनलक्षणे वीराणां व्रते दीक्षितानां गृहीतनियमानां शूराणामस्मात् शस्त्रज्ञानादधिकमुत्कृष्टं कि-

कृच्छ्रं गतस्यापि दशाविपाकं
धर्म्मान्न चेतः स्खलतु त्वदीयं ।
अमुष्मतः पुण्यमनन्यभक्तेः
स्वहस्तवास्तव्य इव त्रिवर्गः ॥ ८२ ॥

श्चिदपि अत्राप्यं न जागर्त्ति स्फुरति तस्मिन् किन्त्वेतदेव तेषां परमं प्राप्यं तस्मादयं वरो युक्त एवेत्यर्थः । दीक्षितानां, कृत्यानां कर्त्तरि वेति (पा० २।३।७१) षष्ठी ॥ ८१ ॥

कृच्छ्रमिति । हे नल कृच्छ्रमतिकष्टदशाविपाकमवस्थापरिवर्त्तं गतस्यापि प्राप्तस्य आपदि पतितस्यापि तव चेतः धर्म्मान्न स्खलतु न चलतु । किम्भूतं चेतः । त्वदीयं त्वदायत्तं । आपदि सर्व्वैरप्यधर्म्म एव क्रियते तव तु चित्तमापद्यपि धर्म्मपरमेव भूयादिति वरो मया दीयत इत्यर्थः । एतस्य वरस्य दाने हेतुमाह । यस्मात् पुण्यममुष्मतोऽनन्यभक्तेः पापानामकर्त्तुः केवलधर्म्मैकसेविनः पुरुषस्य धर्म्मार्थकामसमुदायस्त्रिवर्गः स्वहस्तवास्तव्य इव स्वहस्ते वसति एवम्भूत इव भवति । अनन्यभक्ते धर्म्मे तदायत्तावर्थकामावपि प्राप्येते । कृच्छ्रमित्यादिना भविष्यत्कलिप्रभावः सूचितः । स्खलनतान्तरेदमित्यपि पाठः । अन्यस्य भक्तिर्भजनं तदभावोऽनन्यभक्तिर्धर्म्मातिरिक्तभजनाभावाद्धेतोरिति वा । वसतीति वास्तव्यः, वसेस्तव्यत्कर्त्तरि णिच्चेति (पा० ३।१।९६।वा० २) तव्यत् । वर्गः सङ्घः ॥ ८२ ॥

स्मिताञ्चितां वाचमवोचदेनं
प्रसन्नचेता नृपतिं प्रचेताः ।
प्रदाय भैमीमधुना वरौ ते
ददामि तद्यौतककौतुकेन ॥ ८३ ॥

यत्राभिलाषस्तव तत्र देशे
त्वस्तु धन्वन्यपि तूर्णमम्भः ।
अपो वहन्तीह हि लोकयात्रां
यथा न भूतानि तथा पराणि ॥ ८४ ॥

स्मितेति। प्रसन्नचेताः सन्तुष्टः प्रचेता वरुणः एनं नृपतिं प्रति स्मिताञ्चितां हासविशदां वाचमवोचत्। हे नल अहं तु भैमीं प्रदायाधुना तस्या भैम्या यौतकं युतकयोर्वधूवरयोः सम्बन्धि पारिवर्हं वस्त्राभरणादि तस्य कौतुकेन ते तव द्वौ वरौ ददामि।

कन्यां प्रदाय यत्किञ्चिद्वरायाच प्रदीयते ।
वेदिकायां स्थितायैव तद्यौतकमिति स्मृतमिति ।

युतं युग्मं युतमेव युतकं युतकसम्बन्धि देयं यौतकं। दयिजेति कान्यकुब्जभाषायां ॥ ८३ ॥

यत्रेति। ननु हे नल यत्र धन्वनि निर्जले मरावपि देशे तव जलाभिलाषः तत्र देशे त्वदिच्छामात्रेण तूर्णं शीघ्रं अम्भः जलमस्तु भवतु। जलस्यैव वरदाने हेतुमाह। हि यस्मात् इह लोके पञ्चसु भूतेषु वा मध्ये आपो जलानि भूतानि यथा लोकयात्रां लोकजीवनहेतुत्वं वहन्ति प्राप्नुवन्ति तथा पराणि

प्रसारितापः शुचिभानुनास्तु
मरुः समुद्रत्वमपि प्रपद्य ।
भवन्मनस्कारलवोद्गमेन
क्रमेलकानां निलयः पुरेव ॥ ८५ ॥

भूतेजोवाय्वाकाशलक्षणानि भूतानि लोकजीवनहेतवो न भवन्ति । पानीयं प्राणिनां प्राणा विश्वमेतच्च तन्मयमिति । उदकस्येच्छानुसारित्वं परमः पुरुषार्थ इत्यर्थः । अस्मास्तु जीवनोपाय इति विश्वः ॥ ८४ ॥

प्रसारीति । हे नल मरुर्निर्जलो देशो भवतो मनस्कारोऽभिलाषस्तस्य लवो लेशस्तस्योद्गमेनोदयेन बहूदकत्वात् समुद्रत्वं प्रपद्य प्राप्यापि पुरेव निर्जलत्वदशायां यथासीत् तथैवास्तु भवतु । किंविधः । पूर्वं शुचिभानुना ग्रीष्मसम्बन्धिना सूर्येण प्रसारी विस्तृतस्तापः सन्तापो यस्य । इदानीमपि समुद्रत्वात् शुभ्रकिरणेन चन्द्रेण विस्तारिता आपो यस्य शुचेर्वाडवाग्नेः करेण ज्वालया विस्तारितः सन्तापो यस्येति वा । चन्द्रोदये समुद्रवृद्धिः समुद्रे वाडवाग्निर्युक्तः । तथा पूर्वं क्रमेलकानामुष्ट्राणां निलयः स्थानभूतः । बाहुल्येन तेषां तद्भवत्वात् । इदानीं भवन्मनस्कारलवोद्गमे सति नक्राणां यादोविशेषाणां ये च [illegible]पां निलयः क्रमेलकः मरुर्भवन्मनस्कारलवोद्गमे सति समुद्रत्वं प्रपद्यापि पुरेव शुचिभानुना प्रसारितापो [illegible]पि तु भवत्वेवेति वा । प्रसारिता आपो यस्येति । [illegible] पयमानश्च इति

अम्लानिरामोदभरश्च दिव्यः
पुष्पेषु भूयाद्भवदङ्गसङ्गात् ।
दृष्टं प्रसूनोपमया मयान्यन्-
न धर्म्मशर्म्मोभयकर्म्मठं यत् ॥ ८६ ॥
वाग्देवतापि स्मितपूर्व्वमुर्वी
सुपर्वराजं रभसाद्बभाषे ।

(पा० ५।४।७४) अप्रत्ययः । मनस ऐकाग्र्यकरणं मनस्कारः चित्तस्यैकाग्र्येण चिन्तनमिच्छाविशेषः । चित्ताभोगो मनस्कार इत्यमरः । अतः कृकमीत्यादिना (पा० ८।३।४६) सत्वं ॥ ८५ ॥

वरान्तरमाह । अम्लानिरिति । हे नल भवदङ्गसङ्गाद्धेतोः पुष्पेषु अम्लानिरमङ्कुचद्दर्णावयवत्वं आमोदभरश्च दिव्यः स्वर्गीयः परिमलातिशयश्च भूयात् । यद्यस्मात् प्रसूनोपमया पुष्पमादृश्येन पुष्पसदृशमित्यर्थः । धर्म्मस्य पुण्यस्य शर्म्मणः सुखस्य चोभयस्य पुण्यसुखलक्षणस्य द्वयस्य कर्म्मठं करणे समर्थं अन्यत् पुत्रादिकं वस्तु मया न दृष्टं किन्तु पुष्पमेव देवादिपूजनेन धर्म्मं शिरसि धारणेन परिमलेन वा सुखञ्च करोति । कर्म्मठं । कर्म्मणि घटते कर्म्मणि घटोऽठच् (पा० ५।२।३५) ॥ ८६ ॥

वागिति । वाग्देवता सरस्वत्यपि स्मितपूर्व्वं प्रसन्नत्वात् किञ्चित् स्मितं कृत्वेत्यर्थः । उर्व्वीसुपर्वराजं भूमीन्द्रं रभसाद्धर्षात् इति बभाषे । हे नल तव प्रेयसी भैमी । तस्यास्त्वत्प्राप्तिजनितं सम्मदं हर्षं आचरन्त्याः सत् सत्तः सकाशात्किञ्चित्त

त्वत्प्रेयसोसम्मदमाचरन्त्या
मत्तो न किञ्चिद् ग्रहणोचितं ते ॥ ८७ ॥
अर्थी विनैवार्थनयोपसीदन्-
नाल्पोऽपि धीरैरवधीरणीयः ।
मान्येन मन्ये विधिना वितीर्णः
स प्रीतिदायो बहु मन्तुमर्हः ॥ ८८ ॥

तव ग्रहणोचितं ग्रहीतुं योग्यं किं नापि तु मत्सकाशादपि किञ्चिद्ग्रहीतुमुचितमेव त्वत्प्रियामित्रभूतया मया यद्दीयते तदप्यङ्गीकुर्व्विति । रभसो हर्षवेगयोरिति विश्वः । सम्मदं । प्रमोदामोदसम्मदा इत्यमरः ॥ ८७ ॥

गर्वपरिहारपूर्वं स्ववरस्य ग्रहणयोग्यत्वमेव समर्थयते । अर्थ इति । त्वया मत्समोपमागन्तव्यं इति या अर्थना तया विनैव उपसीदत्समीपमागच्छन् स्वयमेव चाभवन् अल्पोऽप्यर्थः अर्थ्यते अर्थः फलं स धीरैर्मनीषिभिर्नावधीरणीयः नावज्ञेयः किन्त्वङ्गीकरणीय एव । यस्मात् मान्येन मानमर्हता पूज्येन विधिना ब्रह्मणा दैवेन चावितीर्णो दत्तः । याच्ञामन्तरेण लब्धत्वात्स प्रीतिदायः । प्रीत्या दानं प्रीतिदायः अल्पोऽपि बहु मन्तुं गौरवेणाङ्गीकर्त्तुं अर्ह उचित इत्यहं मन्ये । तस्मात्त्वयापि मया योऽल्पोऽप्यर्थो दीयते स ग्रहीतव्य एवेति भावः । धीरैरल्पोऽप्यर्थो नावज्ञायते किन्तु पुनर्महानित्यपेरर्थः । महतोऽपि वरस्याल्पत्वोक्तेर्गर्वपरिहारः । प्रीत्या दायः प्रीतिदायः । कर्तृकरणे कृतेति (पा० २।१।३२) समासः । दीयते दायः, कर्मणि घञ् ॥ ८८॥

अवामा वामार्द्धे सकलमुभयाकारघटनाद्
द्विधा भूतं रूपं भगवदभिधेयं भवति यत् ।

तमेव वरमाह । अवामेति । शम्बज्जपो यस्य तत्सम्बोधनं तादृश. भो नरपते नल मे सत्वं गोप्यं मदीयरहस्यभूतं सेन्दुसं दन्दोर्मा चन्द्रकान्तिस्तया सहितं ईशभागे चन्द्रकान्त्या युतं चन्द्रकलांपितं पार्व्वतीभागे च भूषणीभूतार्द्धचन्द्रयुतं उक्तरीत्या निश्चित आकारः स्वरूपं यस्य। यद्दा ईदृमात्रेण साकारं, विचारे क्रियमाणे अविद्यमानाकारं, तथा स्मरहरमयं काम-तत्स्वरूपं क्रमेण भुक्तिमुक्तिदायि एवम्भूतं तद्रूपं अन्तःकरणे सते साधवेऽर्थात् तुभ्यं। यद्दा हे नरपते सते साधवे ते तुभ्यं अल-मत्यर्थं सिध्यतु समाधिदशायां साक्षाद्भवत्वित्यर्थः । मे तद्रूप-मिति वा। मे मम प्रसादादिति शेष इति वा । स्त्रीणां कामप्र-धानत्वात् स्मरपदेन स्त्रीभागो लक्ष्यते। तथा च पूर्व्वोक्तगुण-विशिष्टं स्मरहरमयं शक्तिशिवरूपं तन्मे रूपं तवान्तः सिद्धत्विति वा। पूर्व्वोक्तं हरमयं मे रूपममलं अन्तः स्मर चिन्तय। तद्रूपं सते ते तुभ्यं सिध्यत्विति वा। तद्रूपममलमन्तः स्मर. तथा शम्बज्जप स्तुहि, तच्च ते सिद्धत्विति वा। शम्बज्जपनं जपो यस्य तादृश हे नल सेन्दुं अमलं कर्पूरगौरं हरं अयं शुभावहविधिभूतं तन्मते विशिष्टं रूपं स्मर। रपते भाषमाणाय स्तुवते सते साधवे तुभ्यं सिद्धातु वा । रपते ते स हरः सिद्धातु साक्षात्कार्य्यसाधको भवत्विति वा। स्तुवते ते तद्रूपं हरो वा स ते शोभनायाभीष्टाय सिद्धातु। यद्दा स्मरहरं शिवं शिवभूतं शम्बज्जप सदा स्तुहि

तदन्तर्मन्त्रं मे स्मरहरमयं सेन्दुममलं
निराकारं शश्वज्जप नरपते सिध्यतु सते ॥ ८९ ॥

सोऽयं मारहरस्ते सिद्ध्यतु साक्षाद्भवत्विति वा । अन्तर्मध्ये मन्त्राः शेषाः आकाराश्च यस्य तादृशमिति वा । तत्किं । यद्रूपं शब्दरूपत्वात् भगवती भगवांश्च भगवन्तौ पार्वतीपरमेश्वरौ अभिधेयं वाच्यं यस्य । यद्वा भगवच्छब्दवाच्यं अर्द्धनारीश्वरं भवति । कथं । यतः द्विधा स्त्रीपुंसरूपौ द्वौ भागौ रूपं भूतं प्राप्तं इति वा । एतत् कुत इत्यत आह । यतोऽर्द्धं दक्षिणभागे अवामा न स्त्री किन्तु पुरुष इत्यर्थः । अर्द्धं वामभागे वामा स्त्री चेति सामर्थ्यादर्द्धशब्दावृत्त्या योज्यं । एवं द्विधाभूतमित्यर्थः । अवामं दक्षिणञ्च आ सामस्त्येन वामञ्चावामञ्चदक्षिणञ्च अवामा वामे च ते अर्द्धे च समौ भागौ भूतं प्राप्तं सत् यद्द्विधा भवतीति वा । परमुभयोराकारयोर्घटनात् सकलं सम्पूर्णैकरूपमित्यर्थः । यद्रूपमर्द्धं वामभागे अवामा अप्रतिकूला प्रसादावदातकान्तमुखी वामा स्त्री भवति पार्वतीरूपं भवतीत्यर्थः । तद्धरमयं रूपमित्युक्तःसामर्थ्याद्दक्षिणार्द्धं महेशः पुरुषरूपं भवति इत्युक्तं भवति । एतेन शक्त्युद्रेकः सूच्यते । कीदृशं हरं स्मरहरं वा सेन्दु तथा अमलं सेन्दुत्वेऽपि कलङ्करहितं । यतः सकलकलामात्रचन्द्रयुतं । कलामात्रं हि निष्कलङ्कं भवतीत्यर्थ इति वा । कलाभिरणिमाद्यैश्वर्य्यैश्चतुःषष्टिकलाभिश्चोपेतमिति वा । यद्रूपमर्द्धं अथासौ वामा च सा शक्त्यात्मको विष्णुः अर्द्धं सा वा लक्ष्मीश्च वा चार्थे यद्वाऽवतीति वा रक्षिका सा लक्ष्मीनारायणात्मकं

भवति। तद्वामनेत्रसेन्दुरूपतया सेन्दुम थ्याने चन्द्रकलोपेतत्वात् सेन्दुर्मा लक्ष्मीभागे च भूषणीभूतार्द्धचन्द्रयोगात् सेन्दुमं शिवाद-भिन्नत्वाद्धरमयं सामर्थ्याद्दक्षिणभागे शिवरूपं एवम्भूतं हरिह-रात्मकं मे रूपं स्मर। पूर्व्ववदिति वा। अर्द्धपूर्व्वभागे अवा ओकारेण तथाऽमाऽनुस्वारेण मा पवर्गपञ्चमव्यञ्जनेन वा प्रणव-पादेनेत्यर्थः। तथा उत्तरभागे अवा ओकारेण तथाऽमाऽनुस्वा-रेण मा पवर्गपञ्चमव्यञ्जनेन वा प्रणवपादेनेत्यर्थः। तथा उत्त-रभागे अवा ओकारेण तथाऽमाऽनुस्वारेण व्यञ्जनमकारेण वा प्रणवेनोपलक्षितं प्रणवद्वयसम्पुटितमित्यर्थः। हरमयं हरेति नामरूपं मे मन्त्रं मया अप्यमानं रहस्यं स्मर चिन्तय जप। शिष्टं पूर्व्ववत्। हरस्य पक्षे तु तस्मै रूपं मन्त्रं अन्तर्मनसि स्मर शश्व-ज्जप। स च ते सिद्धातु। कीदृशं मन्त्रं हरमयं हर इत्येकरूपं तथा निराकारं अश्च अश्च तयोराकारः स्वरूपं स्वरूपे च आ-कारौ निर्गतावाकारौ यस्मात्तं निराकारं हकाररेफयोरुच्चा-रणार्थं यदकारद्वयं तद्रहितं, ह्र, इति व्यञ्जनमात्रहकाररेफम यमित्यर्थः। तथा सेन्दु ईश्च इन्दुश्च ताभ्यां सह वर्त्तमं ईकारेणार्द्धचन्द्रेण युक्तं। तथा कला अनुस्वारस्तत्सहितं ह्रीँका-ररूपमित्यर्थः। सकलं चन्द्रकलोपेतं। सेन्दुमीकारबिन्दुयुत-मिति वा। अमलं शाक्तादिदोषरहितं। तत् किं। यत् रूपमर्द्धे पूर्व्ववद्दक्षिणवामभागयोरवामा वामा च उपलक्षितं प्रणव-द्वयसम्पुटितं। तथा यत् पूर्व्वमुभयोरकारयोर्घटनात्सम्बन्धा-द्विधाभूतं पृथग्भूतमसंयुक्तं सत् भगवान् हरोऽभिधेयो वाच्यो

यस्य तादृग्भवति। प्रत्येकमकारयोगाद्धरेति शिवनाम यद्भवतीत्यर्थः। यद्वा पूर्वं हर इति द्विधाभूतं। अनन्तरं अकारद्वयव्यतिरेकेण व्यञ्जनरूपतया संयोगात्मकत्वमेकीभूतमित्यर्थः। तथा भगवती भुवनेश्वरी अभिधेया यस्य तादृशमिति वा ॥

शिवाद्या वह्निसंयुक्ता ब्रह्मादितयमन्तगा ।
तुरीयस्वरशीतांशुरेव तारासमन्वितः ॥
एष चिन्तामणिर्नाम मन्त्रः सर्व्वार्थसाधकः ।
जगन्मातुः सरस्वत्या रहस्यं परमं मतमित्यागमात् ॥

प्रणवद्वयसम्पुटितभुवनेश्वरीरूपं चिन्तामण्याख्यं मे सरस्वत्याः स्वरूपभूतं मन्त्रं स्मर जप, स च मन्त्रस्ते सिध्यतु। शैवादिचिन्तामणिमन्त्रसम्भवात् मन्मन्त्रेति विशेषणं। हस्य रस्य सस्य ईस्य तादृशं हकाररेफसकारेकारसमाहाररूपं। यद्यपीकारः पश्चान्निर्दिष्टस्तथापि सकारात् पूर्व्वमेव ज्ञेयः। तस्य पश्चान्निर्द्देशो मन्त्रगोपनार्थः। तथा सेन्दु सचन्द्रं निराकारं निर्गताकारचतुष्टयस्वरूपं तादृशं मे मन्त्रं स्मर। इतरत् पूर्व्ववदिति वा। अत्र पक्षे आकाररहितो मन्त्रः। कस्य लस्य कलौ ताभ्यां सहित मन्त्रोऽपि। निराकारं सेन्दुमिति सम्बध्यते। उभयाकारघटनादित्यादि पूर्व्ववत्। तथा च क्लीमिति कामराजवीजं सिध्यति। अस्मिन् श्लोके टीकान्तरकृतो बहूनां शैववैष्णवादिमन्त्राणामुद्धारो विज्ञेयः। अत्र ग्रन्थविस्तरभिया कष्टकल्पनयानया नचोक्तः ॥ ८८ ॥

सर्व्वाङ्गीणरसामृतस्तिमितया वाचा स वाचस्पतिः
स स्वर्गीयमृगीदृशामपि वशीकाराय मारायते।
यस्मै यः स्पृहयत्यनेन स तदेवाप्नोति किं भूयसा
येनायं हृदये कृतः सुकृतिना मन्मन्त्रचिन्तामणिः ॥९०॥

मन्त्रफलमाह। सर्व्वेति। अयं पूर्व्वश्लोकोपदिष्टः मन्मन्त्र-श्चासौ चिन्तामणिश्च चिन्तामणिसञ्ज्ञको मन्मन्त्र इत्यर्थः सर्व्व-कामदत्वान्मन्त्र एव चिन्तामणिः चिन्तामणितुल्यो मन्मन्त्र इत्यर्थः। स पुरश्चरणादिना क्षीणपापेन सुकृतिना येन साध-केन जपादिना हृदये चित्ते कृतः स साधकः सर्व्वाङ्गानि व्याप्नु-वन्ति सर्व्वाङ्गीणानि तैः शृङ्गारादिरसैरेवातिस्वादुत्वादमृत-स्तिमितया आर्द्रया काव्यादिरूपया वाचा हेतुभूतया वाच-स्पतिर्वागीशो भवति। तथा स साधकः स्वर्गीयमृगीदृशां दिव्यानां मृगाक्षीणां रम्भादीनामपि वशीकाराय मारायते कन्दर्पायते। तं दृष्ट्वा उर्व्वशीप्रभृतयो देवाङ्गनाः कामपरवशा भवन्तीत्यर्थः। किञ्च यः पुरुषः कृतपुरश्चरणोऽपि यस्मै फलाय स्पृहयति फलमभिलष्यति सोऽनेन सकृत्पठितमात्रेण मन्त्रेण हेतुना तत्प्राप्नोत्येव किं भूयसा कथनेन मन्त्रविशेषेण वा। नात्र सन्देहः। तस्मात्त्वयाऽयमेव मन्त्रो हृदये धार्य्य इति भावः। सर्व्वाङ्गीणेत्यत्र तत्सर्व्वादेरित्यादिना (पा० ५।२।७) खः। वाचस्पतिः। षष्ठ्याः पतिपुत्रेत्यादिना (पा० ८।३।५३) सत्वं। स्वर्गीयेति। नामधेयत्वाद्वृद्धाच्छः (पा० ४।२।११४) मारायते। कर्त्तुः क्यङ् सलोपश्चेति (पा० ३।१।११) क्यङि। यस्मै। स्पृहेरी-

पुष्पैरभ्यर्च्य गन्धादिभिरपि सुभगैश्चारुहंसेन मां चे-
न्निर्यान्तीं मन्त्रमूर्त्तिं जपति मयि मतिं न्यस्य मय्येव भक्तः ।
सम्प्राप्ते वत्सरान्ते शिरसि करमसौ यस्य कस्यापि धत्ते
सोऽपि श्लोकाननकाण्डे रचयति रुचिरान्कौतुकं दृश्यमस्याः ॥८१

ष्ठितं (पा० १।४।३६) इति सम्प्रदानत्वं । भूयसे । वहेर्लोपो भूचवहेः (पा० ६।४।२५८) इति भूश्रादेशः ॥ ८० ॥

पुष्पैरिति । यः साधकः चारुणा सुन्दरेण हंसेन निर्यान्तीं गच्छन्तीमूह्यमानां हंसवाहनामित्यर्थः । मन्त्रमूर्त्तिं यन्त्रमध्यस्थितमन्त्रवर्णरूपेण परिणमदाकारां मन्त्रस्थान्तरशरीरां वा मां देवीं सुभगैरतिमनोहरैः सुकुमारैः सुगन्धिभिश्च पुष्पैः गन्धधूपादिभिः षोडशोपचारैरपि अभ्यर्च्य तथा मयि मतिं न्यस्य विषयान्तरादाकृष्य ध्यानबलेन स्थिरीकृत्य देवतान्तरपरिहारेण मय्येव विषये भक्तः सर्व्वात्मकतया मामेव सेवमानः सन् चेद्यदि जपति तर्हि असौ जापको वत्सरान्ते संवत्सरावसाने प्राप्ते जाते सति यस्य कस्यापि स्त्रीबालमूकादेरपि शिरसि करं धत्ते स्थापयति सोऽपि स्त्रीबालादिरप्यकाण्डेऽसमयेऽकस्माद्वा रुचिरान् रसभावगुणालङ्कारयुतान् दोषरहितान् श्लोकान्रचयति । यस्तु सिद्धमन्त्रः सन् विविधान् श्लोकान्रचयति, किं वाच्यमित्यपेरर्थः । एतदस्याः कौतुकं दृश्यं, अनुभवनायमस्याश्चमत्कारो द्रष्टव्य इत्यर्थः । एवं सम्पूज्य हंसवाहनादिध्यानपूर्व्वकप्रकारेण मनसा चेज्जपति तर्हि वत्सरमात्रेण सिद्धमन्त्रः सन्नेवंविधं सामर्थ्यं लभत इति भावः ॥ ८१ ॥

गुणानामास्थानीं नृपतिलक नारीतिविदितां
रसस्फीतामन्तस्तव च तव वृत्ते च कवितुः ।

गुणानामिति । हे नृपतिलक राजश्रेष्ठ नल अहं वैदर्भी भैमीसयं च वैदर्भीसञ्ज्ञां रीतिं अल्पपदसमाससमासं वा रचनाविशेषं क्रमेण तव वृत्ते त्वत्सम्बन्धिनि वरित्रे विषये कवितुः काव्यकरणे युक्तस्य श्रीहर्षादेस्तु अधिकण्ठ अन्वहं सदा परीरम्भस्यालिङ्गनस्य चुम्बनादिविलासस्य यदाचरणं करणं तदेव शरणं जीवनोपायो यस्या एवम्भूतां परीरम्भक्रीडया वा हेतुभूतया ।आरम्भारम्भाआलिङ्गनाप्रारम्भार्थं त्वच्चरणयोः पतन्ती अथ च परीरम्भस्य श्लेषालङ्कारस्य क्रीडाया वक्रोक्त्यादिविलासस्य आ सामस्त्येन यच्चरणं ज्ञानं तदेव शरणं यस्यामेवंविधामधिकं यथा तथातितरां रचयितुं कर्त्तुं भवित्री भविष्यामि । किम्भूतां । गुणानां सौन्दर्य्यपातिव्रत्यादीनां, अथ च श्लेषप्रसादादीनां आस्थानीं समासरूपां अवस्थितिभूतां । तथा नारीति स्त्रीति विदितां । नारी चेत्तर्हि भैम्येव जातेति प्रसिद्धां । अथच रीतिषु पाञ्चाल्यादिषु विदिता तथा नेत्यरीतिविदिता तथाविधापि नेति नारीति विदिता तादृशीं पाञ्चाल्यादिरीतिषु मध्येऽतिप्रसिद्धामिति यावत् । तथा तवान्तर्हृदये रसेन स्वीयभाभाग्येन नलविषयानुरागेण स्वस्मिन् नलानुरागेण वा स्फीतामतिपूर्णां, अथ वान्तःश्लोकमध्ये रसैः शृङ्गारादिभिः परिपूर्णां एवम्भूतां भैमीं त्वत्कण्ठालिङ्गनपरां । त्वच्चरणशरणां त्वद-

भवित्री वैदर्भीमधिकमधिकण्ठं रचयितुं
परीरम्भक्रीडाचरणशरणामन्वहमहम्॥ ८२॥
भवद्वृत्तस्तोतुर्मदुपहितकण्ठस्य कवितु-
र्मुखात् पुण्यैः श्लोकैस्त्वयि घनमुदेयं जनमुदे।
ततः पुण्यश्लोकः क्षिति भुवनलोकस्य भविता
भवानाख्यातः सन् कलिकलुषहारी हरिरिव॥ ८३॥

कवयिष्यामि प्रत्यहमहं करिष्यामीति भावः। एतदपि वरदानं। नरिति सम्बुद्ध्यन्तं पृथक्कृत्य राजश्रेष्ठ नः पुरुषेति सम्बोध्य पाति अस्यादि रीत्या विदितां पाश्चात्त्यादिरीतिषु च विदितामिति वा।

श्लेषः प्रसादः समता माधुर्यं सुकुमारता।
अर्थव्यक्तिरुदारत्वमोजः कान्तिसमाधयः।

इति वैदर्भमार्गस्य प्राणा दशगुणाः स्मृता इति आलङ्कारिकाः।

आख्यानीं क्रोवमाख्यानमित्यमरः। धातिष्ठन्त्यस्यामधिकरणे ल्युट्। टिड्ढात्ङीप्। नारीत्यत्र पक्षे ऋल्लोप (पा० ६।३।१११) इति दीर्घः। कवितुः। कव्ट वर्णने, कवृङ् स्तुतावित्यस्य वा। अधिकण्ठं। सप्तम्यर्थे व्ययीभावः॥ ८२॥

वरान्तरमाह। भवदिति। मदुपहितकण्ठस्य मयाधिष्ठितकण्ठस्य भवता वृत्तस्य चरित्रस्य स्तोतुः कवितुः कवेर्मुखात् सकाशात्त्वयि विषये पुण्यैश्चारुभिरमलैश्च श्लोकैः पद्यैर्यशोभिश्च घनं निविडं यथा तथा जनानां मुदे हर्षाय उदेयं उदेतव्यं। ततोऽनन्तरं तस्माद्वा हेतोर्भवान् क्षितिभुवनलोकस्य भूविष्टप-

देवी च ते च जगदुर्जगदुत्तमाङ्ग-
रत्नाय ते कथय कं वितराम कामम्।
किञ्चित्त्वया न हि पतिव्रतया दुरापं
भस्मास्तु यस्तव वत व्रतलोपमिच्छुः ॥ ९४ ॥

जनस्य कलियुगसम्बन्धिकलुषहारी पातकहरणशीलः सन् हरिः श्रीविष्णुरिव पुण्यश्लोक इति आख्यातो भविता भविष्यति। यद्वा पुण्यश्लोकः सन् क्षितिभुवनलोकस्य कलिकलुषहारी हरिरिव भविता। पुण्यौ चारू निर्मलौ श्लोकौ पद्ययशसी यस्येति विग्रहः। पुण्यश्लोको नलो राजेति पुण्यश्लोकत्वं। कर्कोटकस्येत्यनेन कलिनाशित्वमुक्तं। उदेयं। अचोयदिति (पा० ३।१।९७) यत् ॥ ९३ ॥

देवीति। देवी च ते च इन्द्रादयः भैमीं जगदुरित्यूचुः। इति किं। हे भैमि त्वं जगतस्त्रैलोक्यस्योत्तमाङ्गं शिरस्तस्य रत्नाय भूषणमणिभूतायै अतिसौन्दर्य्ययुक्तायै ते तुभ्यं कं कामं वितराम दद्याम अपि तु न कमपि। अस्मद्दानयोग्यं नास्तीत्यर्थः। हि यस्मात् यद्यपि पतिव्रतया त्वया किञ्चिदपि वस्तु दुरापं नास्ति किन्तु पातिव्रत्यात् सर्व्वमपि त्वया सुप्रापमेव तथापि यस्तव व्रतलोपं पातिव्रत्यभङ्गं इच्छुः अभिलषति त्वया सह रन्तुमिच्छेत् स भस्मैवास्तु। वत कष्टं, अनुचितकर्म्मा स इत्यर्थः। कामं। अकर्त्तरि च कारके संज्ञायां (पा० ३।३।१९) इति कर्म्मणि घञ्। त्वया। खल्वर्थयोगे षष्ठीनिषेधात् तृतीया। व्रतलोपं। न लोकाव्ययनिष्ठेत्यादिना (पा० २।३।६९) षष्ठीनिषेधात् द्वितीया ॥ ९४ ॥

कूटकायमपहाय नो वपु-
र्बिभ्रतस्त्वमसि वीक्ष्य विस्मिता।
आप्नुमाकृतिमतो मनीषितां
विद्यया हृदि तवाप्युदीयताम्॥ ८५॥
इत्थं वितीर्य्य वरमम्बरमाश्रयत्सु
तेषु क्षणादुदलसद्विपुलः प्रणादः।

वराम्बरमाह। कूटेति। हे भैमि त्वं नोऽस्मान् वीक्ष्य यतो विस्मितासि अतो मनीषितामाकृतिं आकारं स्वेच्छाशरीरं प्राप्नुं तवापि हृदि मनसि विद्यया नाम्न्या देहस्वीकारहेतुभूतया मन्त्रादिशक्त्या उदीयतां उत्पद्यतां। अस्माकं हृदि यथोदितं तथा तवापीत्यपिशब्दार्थः। अपिशब्दात्वमप्यापीति केचित्। किम्भूतान्नः। कूटकायं स्वेच्छामात्रेण धृतं मायामयशरीरं अपहाय त्यक्त्वा पुनर्दिव्यं निजं वपुर्बिभ्रतो धारयतः। अन्यापि प्रभुर्यद्वस्तुदर्शनात् सेवकादिः साश्चर्य्या भवति तद्वस्तु तस्मै प्रयच्छति। उदीयतामिति। भावे लः॥ ८५॥

इत्थमिति। इत्थं पूर्व्वोक्तप्रकारेण नलाय भैम्यै च वरं वितीर्य्य दत्वा देवीसहितेषु तेष्विन्द्रादिषु अम्बरं आश्रयत्सु स्वर्गम्प्रति गन्तुं उद्यतेषु प्रारब्धगगनगमनोद्योगेषु सत्सु क्षणात् क्षणमात्रेण उत्तिष्ठतां स्वं स्वं शिविरं प्रति गन्तुं उत्थितानां नृपाणां परिजनालपनैः सेवकभाषणैः जयजीवादिशब्दैः, राज्ञामेववा अश्वाद्यानयनार्थं परिजनान् प्रति भाषणैः कृत्वा, विपुलो दश-

उत्तिष्ठतां परिजनालपनैर्नृपाणां
स्वर्वासिवृन्दहतदुन्दुभिनादसान्द्रः ॥ ९६ ॥
न दोषं विद्वेषादपि निरवकाशं गुणमये
वरेण प्राप्तास्ते न समरसमारम्भसदृशं।

दिग्व्यापी प्रणादः उदलसत् उदित इत्यर्थः। कीदृशः। भैमीनलविवाहोत्सवहर्षादागच्छन्नाकनायकहर्षाद्वा स्वर्वासिवृन्दैर्देवसङ्घैर्हतानां दुन्दुभीनां नादैः सान्द्रो निबिडीभूतः। देवेषु निर्गतेषु राजानोऽप्युत्थितास्तेषां तत्सेवकानाञ्च महान् कलस्य संजातः। देवैस्च दिव्यवाद्यान्याहतानीत्यर्थः। वरं। जात्यभिप्रायेणैकवचनं। सा च तेच तेषु। पुमान् स्त्रिया (पा०१।२। ६७) त्येकशेषः। उत्तिष्ठतां। ऊर्द्धकर्म्मत्वात्तङ् न ॥ ९६ ॥

नेति। प्रतिकूला नृपतयः पुण्यश्लोके विद्वेषाद्भैमीप्राप्तिजनितविशिष्टमत्सरादपि हेतोरसुन्दरशीलतादिकं दोषं न जगुर्जगदुः। यतो नले निरवकाशं अप्रमन्तं। यतः गुणमयं सौन्दर्य्यसौशील्यादिगुणबहुले पुण्यश्लोके वा, वैरिणापि सन्नेव दोषः प्रकाश्यते नत्वसन्। सुहृदान्तु सन्नपि दोषो गोप्यते तथा च विद्वेषे सत्यपि गुणमयत्वात् दोषलेशसम्भावनाया अप्यभावाद्दोषं नोचुरित्यर्थः। तथा बलाद्भैमीहरणार्थं समरसमारम्भस्तस्य सदृशं तद्योग्यमधिक्षेपपरुषभाषणादिकमपि च नोचुः। यतः यमवरेण प्राप्तास्ते लब्धदिव्यास्ते वा, यतःस्ततः प्रभूरे वरेण च नितरां दुर्द्धर्षं। तस्मादसामर्थ्यात् किञ्चिन्नोचुरित्यर्थः। किन्तु

जगुः पुण्यश्लोकं प्रति नृपतयः किन्तु विदधुः
स्वनिश्वासैर्भैमीहृदयमुदयन्निर्भरदयम्॥ ८७॥
भूभृद्भिर्लम्भितासौ करुणरसनदीमूर्त्तिमद्देवतात्वं
तातेनाभ्यर्थ्य योग्याः सपदि निजसखीर्दापयामास तेभ्यः।

गत्यन्तररहिताः सन्तो निजासामर्थ्यसूचकस्फुरदवदनस्तवकैः स्वनिश्वासैः कवोष्णैर्निजमुखनामितैः कृत्वा भैमीहृदयं उदयन्ती निर्भरा बहुला दया यस्य एवम्भूतं अतिसकृपं विदधुः चक्रुः। अतिदीनांस्तान् दृष्ट्वा भैमी नितरां सकृपाऽभूदिति भावः। भैम्या हृदयभूतं प्राणरूपं नलं स्वनिश्वासैः सकृपं चक्रुरिति वा॥८७॥

भूभृद्भिरिति। भूभृद्भिः राजभिः करुणरसस्य शोकस्थायिभावस्य रसस्याथ च जलस्य नदी तस्या मूर्त्तिमत्या देवताया भावं लम्भिता प्रापिता जलदेवतास्थाने स्थापिता, तन्निश्वासैः करुणरसार्द्रीकृतचित्ता सती असौ भैमी सपदि ममाशाप्राप्तेरेते नितरां दुःखितास्तस्मादतिसुन्दरीर्मत्सखीरेतेभ्यो देहीत्यञ्जलियोजनेनार्थात्तातमेवाभ्यर्थ्य सम्प्रार्थ्य निजसखीः सहचरीस्तातेन पित्रा तेभ्यो राजभ्यो दापयामास। तेभ्यः सखीदाने भीमं प्रावर्त्तयदित्यर्थः। ते राजानोऽपि वैदर्भ्या अलाभात् कृतं गमने देहत्यागे विषये मनो यैः तेषां प्राणानां वाञ्छा सतीः सखीभिर्निजघ्नुः। भैमीसखीलाभात् प्रारब्धगमनात्प्राक् पुनर्न्यवर्त्तयन्नित्यर्थः। किम्भूताभिः सखीभिः। यतः भैम्याः सकाशात् इन्द्रादिदेवेभ्यः वरप्राप्तया दृष्छिकशरीरनिर्माणादिरूपां विद्यां संश्रित्य

वैदर्भ्यास्तेऽप्यलाभात् कृतगमनमनःप्राणवाञ्छा विजघ्नुः
सख्याः संशिक्ष्य विद्यां सततधृतवयस्यानुकाराभिराभिः॥९८॥
अहह सह मघोना श्रीप्रतिष्ठासमाने
निलयमभि नलेऽथ स्वप्रतिष्ठासमाने।

सख्यभ्यस्य सततं प्रत्यहं धृतो वयस्याया भैम्या अनुकारो याभिः तुल्यशरीरकलाकौशलाभिरित्यर्थः। ततश्च सर्व्वेऽपि भैमीप्राप्तिबुद्धैव स्वप्राणान् रचितवन्त इति भावः। खभिर्द्विकर्म्मा। सख्याः। आख्यातोपयोगे (पा० १।४।२९) इत्यपादानत्वं॥९८॥

अहहेति। अथ राजभ्यः सखीदानानन्तरं मघोना इन्द्रेण सह श्रीः सम्पत् प्रतिष्ठा माहात्म्यं ताभ्यां समाने, स्वं निजं निलयं स्थानं अभिलक्षीकृत्य प्रतिष्ठासमाने जिगमिषति नले नभसो गगनात्सकाशात्पारिजातादिदेववृक्षाणां पुष्पवृष्टिरपतत्। अहहेति हर्षे। भैम्या नले वृते हृष्टैर्देवैर्नलस्योपरि पुष्पवृष्टिः कृतेत्यर्थः। उत्प्रेक्षते। बद्धा धृता मूर्त्तिर्यया सा मूर्त्तिबद्धा यद्वा मूर्त्त्या बद्धा युता साकारा, गलन्तः पतन्तोऽलयो भ्रमरा यस्यैवंविधं मध्वेव वाष्पो यस्याः। अधःपतनजनितदुःखमुक्तसकज्जलाश्रुबिन्दवो यस्याः। एवम्भूतामरभर्त्तुः इन्द्रस्य कीर्त्तिरिति वा। पुष्पाणां शुभ्रत्वात् कीर्त्तित्वं। भैम्या चावृतत्वादिन्द्रस्य कीर्त्तिर्गलितेति युक्तं। स्वर्गादधःपाते दुःखादश्रु च युक्तं। स्त्रीणामश्रु सकज्जलं भवति। मकरन्दो वाष्पस्थाने। तदनुगतो भ्रमरः कज्जलस्थाने। समानशब्दस्य समासान्तर्गतत्वात्साचात्

अपतदमरभर्त्तुर्मूर्त्तिबद्धेव कीर्त्ति-
र्गलदलिमधुवाष्पा पुष्पवृष्टिर्नभस्तः ॥ ९९ ॥
स्वस्थामरैर्नृपतिमंशममुं त्यजद्भि-
रंशच्छिदा कदनमेव तदाध्यगामि ।
उत्का स्म पश्यति निवृत्य निवृत्य यान्ती
वाग्देवतापि निजविभ्रमधाम भैमीम् ॥ १०० ॥

तुल्यार्थयोगाभावान्मघोनेति तृतीयार्थमनुप्रासार्थं च साक्षात् मरुत्वच्छब्दः समयोजि । प्रतिष्ठासमान इति । समवप्रेति (पा० १। ३।२२) तङो विधानात्, पूर्व्ववत् सन (पा० १।३।६२) इति तङ् ॥ ९९ ॥

स्वस्येति । तदा स्वर्गगमनसमये अमुं नृपतिं मनं त्यजद्भि-रमरैः अंशस्य छिदा कर्त्तनेन यत्कदनं दुःखं तदेवाध्यगामि प्रापि । यतः स्वस्येन्द्रादेरंशं । लोकपालांशत्वाद्राज्ञः । स्वहस्ता-दिकर्त्तने यादृग् दुःखं भवति तादृशमेव तेषां नलपरित्यागे जातमिति भावः । यान्ती स्वर्गं प्रतिगच्छन्ती वाग्देवतापि भैमीं निवृत्य निवृत्य पुनः पुनः व्याघूर्ण्य वलितग्रीवं यथा तथा प-श्यति स्म । किम्भूतां । निजविभ्रमाणां स्वीयवचनवागर्थादिवि-लासानां धाम स्थानभूतां । किम्भूता । उत्का, कियत्सहवास-मात्र भूतगुणगणप्रेमभरतया सोत्कण्ठा परित्यक्तुमशक्तेत्यर्थः । अथवा निजसारस्वतं विलासगृहं यान्ती गच्छन्ती । छिदा षिद्भिदादिभ्योऽङ् (पा० ३।३।१०४) ॥ १०० ॥

सानन्दं तनुजाविवाहनमहे भीमः स भूमीपति-
र्वैदर्भीनिषधाधिपौ नृपशतानिष्टोक्तिनिर्मृष्टये।
स्वानि स्वानि धराधिपाश्च शिविराण्युद्दिश्य यान्तः क्रमा-
देको द्वौ बहवश्चकार सृजतः स्मातेनिरे मङ्गलं॥ १०१ ॥

सानन्दमिति। स भीम एको भूमीपतीराजा तनुजाया भैम्या विवाहनं पाणिग्रहणं तल्लक्षणे महे महोत्सवे विषये माङ्गलिकतूर्य्यवादनादिकं मङ्गलं सानन्दं सहर्षं यथा तथा चकार। वैदर्भीनिषधेश्वरौ च द्वौ चणमात्रं तत्र स्थितावेव अशुचका ये नृपमल्लाः नृपाणां वा ये जनास्सेवकास्तेषां अनिष्टोक्तयः कर्णकठोराणि यानि मृषादोषारोपणवचनानि तासां नितरां मृष्टये परिमार्जनाय अशुभवचनानाकर्णनाय नृत्तगीतवाद्यबहुलं प्रेक्षणीयकादिदर्शनश्रवणादिरूपं मङ्गलं सृजतः स्म चक्राते। अमङ्गलं नाकर्णनीयमिति नृत्यगीताद्याकर्णनव्याजेनामङ्गलपरिहारं चक्रतुः। बहवः सर्व्वे धराधिपाश्च स सेनाऽपि स्वानि स्वानि शिविराणि सेनानिवेशानुद्दिश्य लक्षीकृत्य यान्तो गच्छन्तः सन्तः प्राप्तभैमीसदृशवनिताः पटहनिस्वनादिरूपं मङ्गलमातेनिरे चक्रुः। वाद्यानि वादयामासुरित्यर्थः। एतच्च सर्व्वं क्रमशः पूर्व्वं भीमश्चकारानन्तरं भैमीनलौ चक्राते ततो राजानश्चक्रुरिति क्रमः। किञ्चैको द्वौ बहवः इति क्रमः। तथा चकार सृजतःस्म चक्रिर इति च क्रमः। सानन्दमिति सर्व्वत्र सम्बन्धः। श्रेष्ठजामातृलाभाद्भीमस्य हर्षः।

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरःसुतं
श्रीहीरःसुषुवे जितेन्द्रियचयं मामल्लदेवी च यं।
यातस्तस्य चतुर्दशः शरदिजज्योत्स्नाच्छसूक्तेर्महा-
काव्ये चारुणि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः ॥१०२॥

परस्परलाभाङ्कैमीनलयोः। सुन्दरभैमीसखीलाभाद्राज्ञामिति च यथासङ्ख्यं। विवाहनं। एतस्मान्नपुंसके भावे, ल्युट् चेति (पा० ३।३।११५) ल्युट् ॥ १०१ ॥

श्रीहर्षमिति। अर्द्धं पूर्व्ववत् ॥ शरदिजा शरत्कालीना ज्योत्स्ना चन्द्रिका तद्वदमला निर्म्मला निर्दोषा प्रसन्ना ह्लादजनिका च शोभना उक्तिर्यस्य तस्य श्रीहर्षस्य कवेः कृतौ महाकाव्ये चतुर्द्दशानां पूरणः सर्गः समाप्तः ॥ चतुर्द्दशानां पूरण इत्यर्थे। तस्य पूरणे डडिति (पा० ५।२।४८) डट्। शरदिजेति। सप्तम्यां जनेर्ड इति (पा० ३।२।९७) डप्रत्यये, प्रावृट्शरत्कालदिवां जे इति (पा० ६।३।१५) सप्तम्या अलुक् ॥ १०२ ॥

इति श्रीवेदरकरोपनामकश्रीनरसिंहपण्डितात्मजनारायणकृते नैषधीयप्रकाशे चतुर्द्दशः सर्गः ॥

---

# उत्तरनैषधचरिते ।

## पञ्चदशः सर्गः ।

---

ॐ गणेशाय नमः ।

श्रीर्जयति ।

अथोपकार्य्यां निषधावनीपति-
र्निजामयासीद्वरणस्रजाञ्चितः ।
वसूनि वर्षन् सुबहूनि वन्दिनां
विशिष्य भैमीगुणकीर्त्तनाकृतां ॥ १ ॥

श्रीलक्ष्मीनृसिंहो जयति । अथ भैम्याः स्वयम्वरे वरणस्रजा मधूकमालया अञ्चितः पूजितः स निषधावनीपतिर्नलो [illegible] देवान् प्रसाद्य भैम्या नले वृते ताभ्यां वरान् दत्त्वा देवेषु [illegible] स्वर्गगमनेषु सत्सु अनन्तरं भीमेन स्वनिवासार्थं रचितां निजां स्वीयां नलेनैव वा कारितां पटमयद्रव्यादिरूपामुपकार्य्यामयासीत् ययौ । किं कुर्व्वन् । अन्येषां वन्दिनां साधारणेन सुबहूनि वसूनि वर्षन् भैमीगुणानां कीर्त्तनमासामस्त्येन कुर्व्वन्तीति कृतः तेषां तु वन्दिनां विशिष्य विशेषं कृत्वा वर्षन् अन्यापेक्षया तेभ्योऽधिकं प्रयच्छन् । वन्दिनां । सम्बन्धसामान्ये षष्ठी ॥१॥

तथा पथि त्यागमयं वितीर्णवान्
यथाऽतिभाराधिगमेन मागधैः।
तृणीकृतं रत्ननिकायमुच्चकै-
श्चिकाय लोकश्चिरमुञ्छमुत्सुकः॥ २॥

धनदानस्य सुबहुत्वमेव वर्णयति। तथेति। अयं नलः पथि त्यागकोऽर्थ्यर्थं साधारण्येन दीयमानं धनं तथा तेन प्रकारेण वितीर्णवान् दत्तवान् यथा येन प्रकारेण मागधैर्वन्दिजातिविशेषैः अतिभाराधिगमेन अतिशयितगुरुत्वप्राप्त्या बहुतरलब्धधनस्य वोढुमशक्यत्वात् परिपूर्णत्वाच्च निरपेक्षत्वात् तृणीकृतं तृणवत्त्यक्तं रत्ननिकायं रत्नसमूहं उच्चकैर्नितरामुत्सुकोऽहमहमिकया ग्रहीतुं प्रवृत्तो लोक उञ्छं भूपतितमणिकणगणं चिरं बहुकालं चिकाय उच्चित्याददे रत्ननिकायं उञ्छमिति रूपकं। उच्चकैर्बहुमूल्यं रत्ननिकायमिति वा। अनेनास्य दानप्रचुरत्वमुक्तम्। उञ्छो धान्यानां कणश आदानं। रत्नादाने त्वौपचारिकः प्रयोगः। न कर्म्मणि घञ्। वितीर्णवानिति पाठे त्यागमिति भावे घञ्। दानं चकारेत्यर्थः। निकाय्येति पाठे निवासः। अधिकरणे ण्यत्। आय् धात्वादेः कत्वञ्च, पाय्यसान्नाय्यनिकाय्येत्यादिना (पा० ३।१।१२८) निपात्यते। चिनोतेर्णल्यायादेशे चिकायेति भाषायां, चञोरिति (पा० ७।३।५२) कुत्वम्॥ २॥

अपास्य न स्यात् सदसि त्रियान्वयात्
कुतोऽतिरूपः सुखभाजनं जनः ।
अमूदृशी तत्कविवन्दिवर्णनै-
रवाकृता राजकरञ्जिनोकवाक् ॥ ३ ॥

अपेति। असाविव दृश्यत इत्यमूदृश्येतत्सदृश्यन्यापि, भैम्यद-त्तानि राजकानि नृपसङ्घातानि रञ्जयन्त्येवंशीलास्तदनुजीवि-नो लोकास्तेषां मृषा वाक् दोषारोपणरूपा, तस्य तयोर्वा भैमी-नलयोः कवयः प्रबन्धकर्त्तारो वन्दिनश्च प्राकृतादिभाषावर्णन-चतुरास्तेषां वर्णनैः कर्तृभिरवाकृता तिरस्कृता। तेषां प्रचुर र-तारस्वरवर्णनतिरोहितत्वात् सा वाक्ताभ्यां नाकर्णितेत्यर्थः ग-वाकृता अशब्दरूपा कृता ध्वनिमात्रं श्रुतं, न त्वर्थव्यञ्ज ब्दः श्रुत इति वा। असौ का। सदसि नानादेशमिलित नसमाजे तत्समक्षं त्रियान्वयात् सम्बन्धादस्य नलस्य लज्जा न स्यात् अपि तु लज्जया भवितुं युक्तं न च तया जातमिति निर्लज्जोऽय-मित्येका वाक्। तथाऽतिरूपः सुन्दरो जनः श्रीरामचन्द्रजा-नकीवत् कुतः सुखभाजनं सुखस्थानं अपि तु रूपवान् जनो दुःखमेवेति दृष्टत्वात्। सुरूपयोरनयोरपि दुःखञ्च भवितैवेत्यन्या वागवाकृतेति विरोधाभासः। सदसि त्रियान्वयाद्धेतोर्लज्जास्य न स्यादन्यस्य तु स्यादेवेति। अयं निर्लज्जोऽतिसुरूपश्च। भवा-दृशो जनो भैमीप्राप्तिजनितसुखभाजनं कुतोऽपि न। रूपवान् हि रम्यां प्रियां न लभते। अतो रूपवन्तो भवन्तोऽपि प्रियां

अदोषतामेव सतां विवृण्वते
द्विषां मृषादोषकणाधिरोपणाः ।

रम्यां गालभतेति स्वं स्वं प्रभुं प्रति सेवकवचनमिति वा । अति-सुरूपो भैमीलक्षणो जनः । अतः सुखभाजनमपि तु न एवंभू-तानां राज्ञामप्राप्तेरिति वा । अमूदृशी । अदःशब्दे उपपदे दृशः, त्यदादिषु दृश (पा० ३।२।६०) इति कञि, दृग्दृशवतुषु आ सर्व्वनाम्नः (पा० ६।३।८९) इत्यात्वे, अदसोऽसेर्दादुरिति (पा० ८।२।८०) उत्वे च, टिड्ढाणञिति (पा० ४।१।१५) ङीप् । अवाक्कृतेति पदद्वयं ॥ २ ॥

राजकीयैर्जनैर्निन्दायां कृतायामपि तयोर्निर्दोषत्वमाह । अदोषतामिति । द्विषां मृषाऽविद्यमानस्य दोषकणस्य दोषलेश-स्याधिरोपणा आरोपाः सतां अदोषतामेव निर्दोषत्वमेव विवृ-ण्वते प्राकट्येन कथयन्ति । कथं । यतः सत्ये दूषणे सति विद्यमाने ऽलीकं असत्यमविद्यमानं आधातुं आरोपयितुं खलानां जातु कदाचित् उद्यमः प्रयत्नारम्भो न भवेत् । सति दोषे विद्यमा-नत्वादेव नारोपः । अयं तावदारोप्यते । अतश्चासति दोषे त-दारोपणं निर्दोषतामेव वक्तीत्युभयथापि परदोषोद्घाटनमनु-चितमित्यर्थः । सर्व्वथा तौ निर्दोषाविति भावः । सत्ये दूषणे सति खलानामलीकं दोषमाधातुं उद्यमः कदापि न भवेत्-अपि तु सत्यदोषाभावेऽलीकमपि दोषं वदन्ति, ततश्च निर्दोष-त्वमेवागतमिति वा । अथ च सत्ये परब्रह्मस्वरूपे श्रीरघुनाथे विषये सति असाधौ दूषणाख्ये राक्षसे अवद्यं अलीकं दुष्टम-

न जातु सत्ये सति दूषणे भवे-
दलीकमाधातुमवद्यमुद्यमः ॥ ४ ॥
विदर्भराजोऽपि समं तनूजया
प्रविश्य हृष्यन्नवरोधमात्मनः ।
शशंस देवीमनुजातसंशया
प्रतीक्ष जामातरमुत्सुके नलं ॥ ५ ॥

प्रियं कर्त्तुं उद्यमः किं कदाचिन्न भवेत् अपि तु श्रीरामचन्द्रे-विषयेऽपि दूषणाख्येन राक्षसेनाप्रियं कर्त्तुं उद्यमः कृत एव। तथापि यथा स निर्दोषस्तथा तैर्निन्दायां कृतायामपि निर्दोषा वेव तावपीत्यर्थः। यद्वा वह्नौ सीतायाः पातिव्रत्यपरीक्षणाद-परीक्ष्यपरिग्रहादिदोषे असत्यपि परब्रह्मस्वरूपे श्रीरघुनाथे कदाचित्तमेवालीकं दोषमाधातुं प्रयत्नः किं न स्यादपि तु लोकः प्रयतत एव तथापि तत्त्वतः स निर्दोष एव तथा ताव-पीति भावः। वैरिभिः सत्यमणुकमलीकं भवति। सुषोद्यन्तु किमुतेति सूचितं। द्विषां। कर्त्तरि षष्ठी ॥ ४ ॥

विदर्भेति। विदर्भराजोऽपि उत्तमजामातृप्राप्त्या हृष्यन् सन् तनूजया समं सह आत्मनोऽवरोधमन्तःपुरं प्रविश्य भैमी नलं वरिष्यत्यन्यं वेति अनुजातः पुनः पुनर्जातः संशयो यस्याः तां देवीं भैमीमातरं शशंस इदमवोचत्। इति किं। हे उत्सुके जामातरि नले उत्कण्ठिते त्वं नलं जामातरं भैमीपतिं प्रतीक्ष्व जानीहि ॥ ५ ॥

तनुत्विषा यस्य तृणं स मन्मथः
कुलश्रिया यः पविताऽस्मदन्वयं ।
जगत्त्रयीनायकमेनकं वरं
सुता परं वेद विवेक्तुमीदृशं ॥ ६ ॥
सृजन्तु पाणिग्रहमङ्गलोचिता
मृगीदृशः स्त्रीसमयस्पृशः क्रियाः ।

नामग्रहमात्रेण सूचितस्य नलस्य गुणगणं वर्णयति । तन्विति । यस्य तनुत्विषा कायकान्त्या हेतुना स सौन्दर्य्येण प्रसिद्धो मन्मथः तृणमिवाकिञ्चित्करः । तथा यः कुलश्रिया वंशपरिशुद्ध्या कृत्वा कौलीन्यात् प्रसिद्धतराणामस्माकमन्वयं पविता पावनं कर्त्ता । अस्मत्तोऽपि महान् कुलीन इत्यर्थः । जगत्त्रय्यां नायकमेनकं वरममुं ईदृशमीदृग्गुणं नायकरत्नं वरं परिणेतारं विवेक्तुं निर्णेतुं परं केवलं तव सुता वेद जानाति नान्योऽस्मदादिः । न विद्यते परः श्रेष्ठो यस्मादिति वरविशेषणं वा । पविता । लुट् ॥ ६ ॥

सृजन्त्विति । स भीमः इति प्राह स्म च मूते स्म निर्ययौ चान्तःपुराच्चिरगाच्च । चकारो विवाहत्वरां द्योतयति । इति किं । हे मृगीदृशो हरिणेक्षणाः सुवासिन्यो भवत्यः पाणिग्रहो विवाहस्तद्रूपे मङ्गले उचिताः तथा स्त्रीणां समय आचारस्तं स्पृशन्ति योषिदाचारप्राप्ता दुर्गादिकुलदेवतापूजा तैलयवारम्भादिक्रियाः सृजन्तु कुर्व्वन्तु । वयन्तु पुनः श्रुतीनां स्मृतीनां विधीन्

श्रुतिस्मृतीनान्तु वयं विदध्महे
विधीनिति स्माह च निर्ययौ च सः ॥ ७ ॥
निरीय भूपेन निरीक्षिताननां
शशंस मौहूर्त्तिकसंसदंशकम्।
गुणैररीणैरुदयास्तनिस्तुषं
तदा स दातुं तनयां प्रचक्रमे ॥ ८ ॥

श्रुत्यर्थान् जुहोमोत्यादीन् मधुपर्कादिकान् स्मार्त्तान् वैदिकांश्च विदध्महे कुर्म्महे इति। एवमादिश्य तदानीमेव निर्गत इत्यर्थः। पाणिग्रहमङ्गलोचिता योषिदाचाराश्च वृद्धाः। सुवासिनीति-शेषणं वा। ममयम्पुत्राः। स्पृशोऽनुदके (पा० ३।२।५८) इति क्विन्। वयं। अस्मदो द्वयोश्चेति (पा० १।२।५९) बहुवचनं ॥ ७ ॥

निरीयेति। भूपेन भीमेन निरीयान्तःपुरान्निर्गत्य वैवाहिकं लग्नं शशंस। निरीक्षिताननां मौहूर्त्तिकानां ज्यौतिषिकानां संसत्सभा अंशकं वैवाहिकं मुहूर्त्तं शशंस। स च भीमस्तदा तस्मि-न्नंशके नलाय भैमीं दातुं प्रचक्रमे मुहूर्त्तविलम्बानुरोधेन प्रा-थमिकान्श्रौतस्मार्त्तान् विधीन् अचीकरदित्यर्थः। किम्भूतमं-शकं। अरीणैः सम्पूर्णैर्जामित्रगुणैरुपलक्षितं। तथा शुक्रगुर्वाद्युदया-स्तमयप्रयुक्तदोषैर्निस्तुषं रहितं। ग्रहाणां गुणदोषादिकं ज्योतिः-शास्त्रादवगन्तव्यं। निरीय। आगतौ। मौहूर्त्तिका मुहूर्त्तज्ञा इत्यमरः। मुहूर्त्तं वेदेत्यर्थे क्रतूक्थादी (पा० ४।२।६०) त्यादिना उक्थादित्वाट्ठक्। अंशमेवांशः, स्वार्थे कप्। अरीणैः। ल्वादि-

अथावदद्दूतमुखः स नैषधं
कुलञ्च बाला च ममानुकम्प्यताम् ।
स पल्लवत्वद्य मनोरथाङ्कुरं
चिरेण नस्त्वच्चरणोदकैरिति ॥ ९ ॥

तथोत्थितं भीमवचःप्रतिध्वनिं
निपीय दूतस्य स वक्त्रगह्वरात् ।

त्वात्, षादितश्चेति (पा० ८।२।४५) निष्ठानत्वं । निस्तुषं । निर्गतं तुषात् । तुषो दोषलेशः ॥ ८ ॥

अथेति । अथ लग्नांशके सन्निहिते दूता एव मुखं यस्य स भीमः नैषधमित्यवदत् । इति किं । भवता मम कुलं बाला च कृपयाऽनुकम्प्यतां अङ्गीक्रियतां । बालायामनुगृहीतायां सर्व्वोऽपि मम वंशोऽनुगृहीतःस्यादित्यर्थः । तथा चिरेण चिरकालेन नोऽस्माकं सर्व्वेषां स प्रसिद्धस्त्वत्सम्बन्धविषयो मनोरथरूपाङ्कुरः अद्यास्मिन् दिने त्वच्चरणोदकैः त्वदीयचरणक्षालनोदकैः पल्लवतु पल्लववदाचरतु पल्लवितो भवत्वित्यर्थः । पल्लवसहितो भवत्वित्येकं पदं । कन्याप्रदानसन्देशहरं प्रेष्य तं सविनयमाकारयतिस्मेति भावः । अन्यत्रापि चिरं सञ्चितोऽङ्कुरो जलैः पल्लवितो भवति । पल्लवतु । आचारे क्विप् ॥ ९ ॥

तथेति । स नलः दूतस्य वक्त्रादेव गह्वरात् तथा पूर्व्वोक्तप्रकारेण यथा भीमेनोक्तं तथैवोदितं भीमवचसः प्रतिध्वनिं निपीय आदरेणाकर्ण्य इति ब्रुवन् तस्मै दूताय बहु प्रचुरं वस्त्रा-

व्रजामि वन्दे चरणौ गुरोरिति
ब्रुवन् प्रदाय प्रजिघाय तं स्रक् ॥ १० ॥
निपीतदूतालपितस्ततो नलं
विदर्भभर्त्ताऽऽगमयाम्बभूव सः ।
निशावसाने श्रुतताम्रचूडवाग्-
यथा रथाङ्गस्तपनं धृतादरः ॥ ११ ॥
क्वचित्तदा लेपनदानपण्डिता
ऽमप्यहृक्लागमगात्पुरस्कृता ।

स्रक्वागादि प्रदाय तं दूतं प्रजिघाय प्राहिणोत । इति किं । हे दूत अहं व्रजामि गत्वा च मदीयगुरोः श्वशुरस्य चरणौ वन्दे नमस्करोमीति । प्रतिशब्दत्वरूपेण न राजादेशानुवादस्य न्यूनाधिकताशंका परिहृता । व्रजामि । वन्दे । वर्त्तमानसामीप्य इति (पा० ३।३।१३१) भविष्यति लट् ॥ १० ॥

निपीतेति । ततो दूतप्रत्यागमनानन्तरं निपीतं सादरं श्रुतं दूतालपनं दूतवचनं येन स विदर्भभर्त्ता भीमो धृतादरः सादरः सन् नलमागमयांबभूव प्रतीक्षितवान् । पुनरपि दूतैरानाययति स्मेति वा । यथा निशावसाने ब्राह्मे मुहूर्त्ते श्रुता प्राभातिको ताम्रचूडस्य कुक्कुटस्य वाक् येन स रथाङ्गश्चक्रवाको धृतादरः सन् तपनं सूर्य्यं प्रतीक्षते कदा वा उदेष्यतीति । कृकवाकुस्ताम्रचूड इत्यमरः ॥ ११ ॥

क्वचिदिति । तदा नलागमनसमये क्वचित् स्थाने लेपनदाने

अलम्भि तुङ्गासनसन्निवेशना-
दपूपनिर्म्माणविदग्धयादरः ॥ १२ ॥
मुखानि* मुक्तामणितोरणैस्तदा
मरीचिभिः पान्थविलासमाश्रितैः ।

सुधालेपचित्रादिकर्म्मणि पण्डिता कुशला काचिद्रमणी पुरस्कृता निर्म्माणार्थमेव मन्त्राविता सतो स्वप्रार्थनावशात् कमप्यहङ्काराभिमानमगात् प्राप अनिर्व्वचनीयं गौरवं धृत्वा सुधालेपादि चकारेत्यर्थः । चतुष्कनिर्म्माणार्थं हरिद्राचूर्णमिश्रितं तण्डुलपिष्टं तस्य दाने आलेपकरणं कुशला । काचिद्विजने रमणोये वा प्रदेशे तस्यां भैम्यां अङ्गोद्वर्त्तने कुशलेति वा । तयोर्भैमीनलयोर्वा । तथा क्वचित् प्रदेशेऽपूपनिर्म्माणे मण्डकरचनायां विदग्धया चतुरया कयाचित्तुङ्गासने उच्चतुङ्गाख्यासने सन्निवेशनादुपवेशनाद्धेतोरादरो गौरवमलम्भि प्राप्तं । उच्चासनसन्निवेशादादरो वह्नितापभयाभावः प्राप्त इति वा । जातावेकवचनं । काश्चिच्चित्रादिकर्म्म काश्चिच्च अपूपादिनिर्म्माणं चक्रुरिति भावः ॥ १२ ॥

मुखानीति । तस्य पुरस्य तथा तत्कालम्भिनाभविलासिप्रना-मपि मुखानि द्वारोपान्तरूपाण्याननानि मुक्तायुक्तानां मणीनां रत्नानां मुक्तानाञ्च मणीनाञ्च वा तोरणेभ्यः उद्गतैर्निर्गतैः अत एव पान्थविलासं उत्प्याय दूरं प्रसर्पणशीलानां पान्थानां विलासमाश्रितैर्मरीचिभिः किरणैः कृत्वा वरागमनसमये प्रसा-

* मुक्तामयेति पाठान्तरकाश्चित्कुरुः ॥

पुरस्य तस्याखिलवेश्मनामपि
प्रमोदहासक्कुरितानि रेजिरे ॥ १३ ॥
पथामनीयन्त तथाधिवासना-
न्मधुव्रतानामपि दत्तविभ्रमाः ।
वितानतामातपनिर्भयास्तदा
पटच्छिदाकालिकपुष्पजा स्रजः ॥ १४ ॥

हहासेन हर्षजहासेन कुरितानि मिश्रितानि च रेजिरे सर्व्वा-
ण्यपि पुरद्वाराणि गृहद्वाराणि वा मुक्तामणितोरणैरलङ्कृता-
नि। सर्व्वं पुरञ्च सानन्दमभूदिति भावः। हास्यं मुखे भवति।
तस्य पुरस्य सम्बन्धिनां वेश्मनामिति व्याख्याने न केवलं पुरलो-
कानां मुखानि प्रमोदहासकुरितानि किन्तु गृहाणामपि अपे-
रर्थः। तोरणात्तदेति पाठे तोरणात् पान्थविला श्रितैः
उत्थाय द्वारप्रसर्पणशीलैरिति व्याख्येयं ॥ १३ ॥

पथामिति। पटच्छिदाभिर्वस्त्रच्छेदैर्निर्मितानि अकालिका-
न्यसमयजानि यस्मिन् काले यानि न भवन्ति तादृशानि पु-
ष्पाणि तेभ्यो जातास्तन्निर्म्मिताः स्रजो मालाः तदा वरागम-
नसमये पथां पुरमार्गाणां वितानतां उल्लोचतां अनीयन्त
प्रापिताः। किम्भूताः। यथा मालत्यादिपुष्पाणां वासस्तथाधि-
वासनात् सुगन्धिद्रव्यैः परिमलारोपणान्मधुव्रतानामपि दत्तो
विशिष्टो भ्रमो याभिः। सर्व्वदा मधुन्येव ये निवसन्ति तेषामपि
अकृत्रिमाण्येवैतानि पुष्पाणीति तेषामपि दत्तभ्रान्तयः किमु

विभूषणैः कञ्चुकिता बभुः प्रजा
विचित्रचित्रैः स्नपितत्विषो गृहाः।
बभूव तस्मिन्मणिकुट्टिमैः पुरे
वपुः स्वमुर्व्याः परिवर्त्तितोपमं॥ १५॥

तान्येषामिति मधुव्रतपदेन सूचितम्। तथा वस्त्रमयत्वादातपनिर्भया उच्चत्वमाचरन्तिताः। अस्त्री वितानमुल्लोच इत्यमरः। छिदाकालिकेति च पूर्व्ववत्॥ १४॥

विभूषणैरिति। तस्मिन् पुरे प्रजाः पौरा जानपदाश्च विभूषणैरलङ्कारैः कञ्चुकिताः नानारत्नकान्तिच्छादितसर्व्वावयवाः सन्तः बभुः शुशुभिरे। तथा वर्णमात्रकल्पितेषु निर्जीवेष्वपि रूपकेषु जीवत्त्वमापादनादिचमत्कारकरणाद्विचित्रैः आश्चर्य्यकारिभिः कुड्यलिखितनानावर्णरूपकैः स्नपितत्विषः उज्ज्वलीकृतदीप्तयो गृहा बभुः। एवं जङ्गमस्थावररूपान्यतया तथा मणिकुट्टिमैश्च मणिबद्धभूमिभिश्च कृत्वा उर्व्याः स्वं सहजं मृन्मयवपुः केनापि ब्रह्मादिना परिवर्त्तिता उपमा यस्य तद्रूपान्तरं प्रापितमिव बभूव। पातालस्य रम्यत्वात् पातालमुपरि जातमित्यर्थ इत्युत्प्रेक्षा। परिवर्त्तिता विनिमयिता उपमा उपमानं स्वर्गादि येन उपमानत्वेन प्रसिद्धस्य स्वर्गस्य उपमेयत्वं कृतं, स्वयञ्च तस्योपमानं जातमित्यर्थः इति वा। स्वरुच्या इति पाठे स्वर्गात् सकाशात् परिवर्त्तितोपममिव बभूवेत्यर्थः। मणिकुट्टिमैः उपलक्षिते पुरे वा। सर्व्वमपि तदा सालङ्कारं जातमिति भावः। कञ्चुकस्तारकादिः॥ १५॥

तदा निस्स्वानतमां घनं घनं
ननाद तस्मिन्नितरां ततं ततं।
अवापुरुच्चैः सुषिराणि राणिता-
ममानमानद्धमियत्तयाऽध्वनीत् ॥ १६ ॥
विपञ्चिराक्रादि न वेणुभिर्न ते
प्रणीतगीतैर्न च तेऽपि झर्झरैः।

तदेति। तदा नलागगमनसमये तस्मिन् घनं कांस्यतालादिकं घनं निबिडं यथा निस्स्वानतमां निरतिशयं शब्दं चकार तथा ततं वीणादिवाद्यं ततं विस्तृतं यथा तथा नितरां ननाद शब्दं चकार। तथा सुषिराणि सच्छिद्राणि वंशादिवाद्यानि उच्चैर्नितरां राणितां शब्दत्वं अवापुः। तथा आनद्धं मुरजादिवाद्यमियत्तयेदंपरिमाणत्वेनामानमपरिच्छेद्यं यथा तथाऽध्वनीत्। घनं दृढावयवं बहुसङ्ख्यमिति घनविशेषणं वा। तथा ततं तन्तुरूपेण विस्तृतं बहुसङ्ख्याकमिति ततविशेषणं वा। तथा इयत्तयाऽमानं बहुसङ्ख्यमित्यानद्धविशेषणं वा। चतुर्विधमपि वाद्यं तत्र नादितमित्यर्थः। ततं वीणादिकं वाद्यमानद्धं मुरजादिकं। वंशादिकं तु सुषिरं कांस्यतालादिकं घनमित्यमरः॥ राणितां। अवश्यं रणतीति, आवश्यकाधमर्ण्ययोर्णिनिः (पा० ३। ३।१७०) इति णिनौ राणीति तेषां भावस्तत्ता तां। अध्वनीत् अतो हलादेरिति (पा० ७।२।७) वृद्धिविकल्पः॥ १६ ॥

विपञ्चिरिति। वेणुभिर्वंशध्वनिभिर्विपञ्चिर्वीणाध्वनिर्ना-

न ते झडुकेन न सोऽपि ढक्कया
न मर्द्दलैः सापि न तेपि ढक्कया॥ १७॥
विचित्रवादित्रनिनादमूर्च्छितः
सुदूरचारी जनतामुखारवः।
ममौ न कर्णेषु दिगन्तदन्तिनां
पयोधिपूरप्रतिनादमेदुरः॥ १८॥

च्छादि। ते च वेणुध्वनयः प्राणीतं प्रारब्धं गीतं यैः द्रुतमध्यादिमूर्च्छनादिपूर्व्वमुच्चैर्गायद्भिर्गायकैर्गायकगीतैर्नाच्छादिषतेति सर्व्वत्र विपरिणामेन व्याख्येयम्। झर्झरैर्झर्झराख्यैः कांस्यमयैर्वाद्यविशेषैर्ध्वनिभिः कृत्वा तेऽपि गायकध्वनयोऽपि न च नैवाच्छादिषत। झडुकेन लब्धीयसा कांस्यमयेन वाद्यविशेषेण ते झर्झरध्वनयो नाच्छादिताः। ढक्कया वादित्रविशेषेण सोऽपि झडुकध्वनिर्नाच्छादि। मर्द्दलैर्म्मृदङ्गध्वनिभिः सा ढक्काऽपि नाच्छादि। ढक्कया तेऽपि मर्द्दला अपि नाच्छादिताः। अनपचितगौरवलाघवं वाद्यमात्रं तत्र मिलितं। समश्रुतितालमाना अपि विपञ्च्यादिध्वनयः वादककौशलात् प्रत्येकं भेदेनोपलब्धा इति भावः। विपञ्च्यते स्वरोऽस्यां विपञ्चिः, औणादिक इप्रत्ययान्तः॥ १७॥

विचित्रेति। विचित्राणि नानाविधानि वादित्राणि तेषां निनादैः मूर्च्छितः वर्द्धितः तथा सुतरां दूरचारो दूरसञ्चरणशीलः, जनता जनसङ्घातस्तस्या आरवो मुखशब्दः, पयोधिपूरं समुद्र-

उदस्य कुम्भीरथ शातकुम्भजा-
श्चतुष्कचारुत्विषि वेदिकोदरे
यथाकुलाचारमथावनीन्द्रजां
पुरन्ध्रिवर्गः स्नपयाम्बभूव तां ॥ १९ ॥

प्रवाहे प्रतिनादेन प्रतिशब्देन पयोधिपूरस्य तटे प्रतिशब्द-स्तेन वा मेदुरः परिपुष्टः सन् दिगन्तदन्तिनां दिक्प्रान्तवर्त्ति दिक्पालहस्तिनां कर्णेषु न ममौ तत्कर्णानपि परिपूर्य्य वहि-र्निर्गत इत्यर्थः। नानाजातीयमिश्रणादेकीभूतो जनशब्दो दिगन्तपर्य्यन्तं समुल्ललासेति भावः। स दूरेति पाठे स महानि-त्यर्थः ॥ १८ ॥

उदस्येति। अथ सर्व्ववाद्यवादनानन्तरं पुरन्ध्रिवर्गः स्त्रीसम-यज्ञकुलवृद्धसुवासिनीसमूहः चतुष्कसंज्ञेन नानावर्णकल्पितस्व-स्तिकसर्व्वतोभद्रादिमण्डनेन चार्व्वी रमणीया त्विट् कान्ति-र्यस्य एवम्भूते कूर्म्मपृष्ठचतुरस्रहस्तमात्रोच्छ्रितत्वादिसुकल्पिते वेदिकाया उदरे मध्ये शातकुम्भजाः सुवर्णघटिताः कुम्भीः उद-स्योत्क्षिप्य यथाकुलाचारं स्त्रीणां भैम्याश्च कुलाचारानतिक्र-मेणाथ मङ्गलं मङ्गलगीतिपूर्व्वं यथा तथा तामवनीन्द्रजां भैमीं स्नपयांबभूव। मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथेति वच-नादेकोऽथशब्द आनन्तर्य्ये, द्वितीयस्तु मङ्गले इति ज्ञेयं। यथा विधानं नरनाथनन्दिनीमिति च पाठः। स्नपयाम्बभूव। मित्त्वा-द्उपधाह्रस्वः ॥ १९ ॥

विजित्य दास्यादिव वारिहारिता-
मवापितास्तत्कुचयोर्द्वयेन ताः।
शिखामवापुः सहकारशाखिन-
स्त्रपाभरग्लानिमिवाननैर्मुखैः ॥ २० ॥

असौ मुहुर्जातजलाभिषेचना
क्रमाद्दुकूलेन सितांशुनोज्ज्वला।
द्वयस्य वर्षाशरदोस्तदातनीं
मनाभितां साधु बबन्ध सन्ध्यया ॥ २१ ॥

विजित्येति। ताः कुम्भ्यः तस्या भैम्याः कुचयोर्द्वयेन गौरवत्वकाठिन्यादिगुणातिशयेन विजित्य दास्यादिव वारिहारितां जलवाहित्वमवापिताः प्रापिताः सत्यः आननैर्मुखैः सहकारशाखिन आम्रवृक्षस्य शिखां त्रपाभरेण जनितां ग्लानिं वैवर्ण्यं कालिमानमिव अवापुः वहन्ति स्म। पराजितोऽपि ह्रीभरेण नम्रमुखो वारिवाहितां प्रापितः सन् ग्लानिं धत्ते। कलशीमुखे माङ्गलिकाम्रपल्लवा निक्षिप्यन्ते इत्याचारः। अवापुः। वह प्रापणे लङि ॥ २० ॥

असाविति। मुहुर्जातं जलाभिषेचनं यस्या असौ भैमी, क्रमात्सितांशुना सिततन्तुदुकूलेन क्षौमाम्बरेणोज्ज्वला भूषिता सती, वर्षासु शरदस्तासां द्वयस्य सन्ध्यया सन्धिना तदातनीं तदाभवां तात्कालिकीं मनाभितां तुल्यतां साधु सम्यक् बबन्ध दधौ। वर्षाश्च कृतजलाभिषेका, शरच्च शीतांशुना चन्द्रेणो-

असौ प्रभिन्नाम्बुददुर्दिनीकृतां
निनिन्द चन्द्रद्युतिसुन्दरीं दिवं ।
शिरोरुहौघेन घनेन संवृता
तथा दुकूलेन सितांशुनोज्ज्वला ॥ २२ ॥

विरेजिरे तच्चिकुरोत्कराः किराः
क्षणं गलन्निर्मलवारिविप्रुषां ।
तमःसुहृच्चामरनिर्ज्जयार्ज्जिताः
सिता वमन्तः खलु कीर्त्तिमुक्तिकाः ॥ २३ ॥

ज्ज्वला द्वयोः सम्बन्धिन्युभयगुणोपेता, वस्त्रपरिधानात् पूर्व्वं प्रावृट्सदृशी अनन्तरं शरत्सदृशी जातेत्यर्थः ॥ २१ ॥

असाविति । असौ दिवं निनिन्द तत्तुल्या जातेत्यर्थः । किम्भूतां दिवं । आदौ वर्षासु प्रभिन्नैरतिघनैः चरद्भिर्वा अम्बुदैः दुर्द्दिनीकृतां जलप्लावितां, अनन्तरं शरदारम्भे चन्द्रद्युतिसुन्दरीं । किंभूतासौ । कचिदर्थता शिरोरुहौघेन केशपाशरूपेण घनेन मेघेनोपलक्षिता । तथा दुकूलेनैव सितांशुना चन्द्रेणोज्ज्वला । जलाभिषेकस्थानेषु वर्षोदकक्षरणं चन्द्रिकास्थाने दुकूलमिति बोध्यं ॥ २२ ॥

विरेजिर इति । तस्याश्चिकुरोत्कराः केशसङ्घा विरेजिरे शोभन्ते स्म । किम्भूताः । गलतां निर्मलानां वारिविप्रुषामुदकबिन्दूनां क्षणं किरन्तीति किरा विक्षेपका उदबिन्दून् मुञ्चन्त इत्यर्थः । किंभूता इव । तमसः सुहृदीनि सदृशानि अतिश्यामानि चाम-

मदीयसा स्नानजलस्य वाससा
प्रमार्ज्जनेनाधिकमुज्ज्वलीकृता ।
अदभ्रमभ्राजत साऽश्मगाणनात्
प्रकाशरोचिः प्रतिमेव हेमजा ॥ २४ ॥
तदा तदङ्गस्य बिभर्त्ति विभ्रमं
विलेपनामोदमुचः स्फुरद्रुचः ।

राणि तेषां निर्ज्जयेनार्ज्जिताः स्वीकृत्य सङ्गृहीताः सिताः शुभ्राः कीर्त्तिरूपा सुक्तिका वसन्तः खलु । इवार्थे खलुशब्दः । कृष्णचामरादर्णिसमुन्दरमान्तकशपाश इति भावः । विमृषां । कर्म्मणि षष्ठी ॥ २३ ॥

मदीयमेति । सा भैमी अदभ्रमधिकं अभ्राजत अशोभत । किंभूता । मदीयसा स्नानजलस्य प्रमार्ज्जनेन प्रोञ्छनकारिणा वाससा मदीयसा वाससा कर्त्तृणा स्नानजलस्य प्रमार्जनेन करणेन पूर्व्वापेक्षया अधिकं यथा तथा उज्ज्वलीकृता । केव । अश्मशाण-नात् शिलोत्तेजनाद्धेतोः प्रकाशं पूर्व्वापेक्षयाऽतिदीप्ता रोचि-र्दीप्तिर्यस्याः सा हेमजा सौवर्णा देवादीनां प्रतिमेव । शिला घर्षणादीपितेति सुवर्णकारपरिभाषा । प्रमार्ज्जनेन । प्रथमपक्षे नंद्यादित्वात् कर्त्तरि ल्युः । द्वितीयपक्षे भावे ल्युट् । शाण तेजने । भौवादिकः । तस्माल्ल्युट् ॥ २४ ॥

तदेति । सुवर्णं दरमीषत् स्फुटद्विकसन्काञ्चनकेतकीदलं तस्मात् सौरभं सौगन्ध्यं यद्यभ्यस्यति शिक्षते तदा तर्हि तदङ्गस्य

दरस्फुटत्काञ्चनकेतकीदलात्
सुवर्णमभ्यस्यति सौरभं यदि ॥ २५ ॥
अवापितायाः शुचिवेदिकान्तरं
कलासु तस्याः सकलासु पण्डिताः ।
क्षणेन सख्यश्चिरशिक्षणास्फुटं
प्रति प्रतीकं प्रतिकर्म्म निर्ममुः ॥ २६ ॥
विनापि भूषामवधिः श्रियामियं
व्यभूपि विज्ञाभिरदर्शि चाधिका ।

भैमीशरीरस्य विभ्रमं विलासं विशिष्टां भ्रान्तिं वा बिभर्त्ति । किंभूतस्य विलेपनस्य । यत्कर्दमादेरङ्गरागेण आमोदं मुञ्चति तस्य । तथा स्फुरन्ती रुक् दीप्तिर्यस्य । स्वाभाविकगौरकान्तिनः अभ्यङ्गानन्तरमङ्गरागः कृत इति भावः । यदि तर्हीति सम्भवादभ्यस्यति बिभर्त्तीति न लिङ्, लिङर्थे लट् । क्रियानिष्पत्तिस्तु न विवक्षणीया ॥ २५ ॥

अवापिताया इति । सकलासु गीतालङ्करणादिषु कलासु विद्यासु पण्डिताः कुशलाः सख्यः शुचिगोमयाद्यनुलिप्तं सर्व्वतो भद्रादिभूषितं वेदिकाया अन्तरं मध्यं शृङ्गारस्थानं अवापितायाः प्रापितायास्तस्याः भैम्याः प्रति प्रतीकं प्रत्यवयवं चिरशिक्षणादङ्ककालाभ्यासात् स्फुटं निरतिशयं अत एव क्षणेन प्रतिकर्म्म अलंकरणं निर्ममुश्चक्रुः ॥ २६ ॥

विनेति । भूषां मण्डनं विनापि श्रियां कान्तीनामवधिः

न भूषयैषाऽतिचकास्ति किन्तु सा
ऽनयेति कस्यास्तु विचारचातुरी ॥ २७ ॥

परमशोभा इयं भैमी विज्ञाभिः अलङ्कारचतुराभिः सखीभिः व्यभूषि विशेषेणामण्डि। अधिका अनलङ्कृताङ्गकान्तितोऽधिककान्तिरदर्शि च। परंतु विचारचातुरी एकतरनिश्चयरूपे विचारे प्रावीण्यं कस्यास्तु न कस्यापि। इति किं एषा भूषया पूर्व्वापेक्षया अधिकं न चकास्ति किन्तु सा भूषैवानया भैम्या कृत्वाऽधिकं शोभते। भैम्या भूषणानाञ्च परस्परसम्पर्काच्छोभातिशयो यो दृश्यते तत्र भूषणैर्भैम्याः शोभातिशयो न जनितः किन्तु भैम्या भूषणानामिति विवेकः कस्यापि नाभूदित्यर्थः। पूर्व्वापेक्षयाधिकं वा शोभते स्मेति भावः। भूषां विनापि श्रियामवधिरियं विज्ञाभिर्विशेषेण बहुना प्रयासेनाभूषि पूर्व्वापेक्षया इयमधिका किमिति तारतम्यज्ञानार्थं पुनः पुनः विलोकिता च। परमियं भूषया नाधिचकास्ति किन्तु सा भूषाऽनयेति तात्त्विकविचारचातुरी कस्यास्तु पुनः सख्या जातेत्यर्थादपि तु न कस्याश्चित्। प्रयासेनालङ्कृत्य पुनः पुनर्विलोक्यापि विज्ञाभिरपि अनया मण्डनं मण्डितं मण्डनैर्वा इयं मण्डिते इति तारतम्यं न ज्ञातमेव। परं भूषणानां वैयर्थ्यं साधारणत्वं वाधिकशोभाकारित्वं वेति किमपि न निश्चितं किन्तु भ्रान्ता एव जाता इत्यर्थ इति वा। तस्या निरतिशया कान्तिर्जातेति भावः। पूर्व्वोक्ता चातुरी कस्यास्तु कस्याश्चिदेव विदुष्या न

विधाय बन्धूकपयोजपूजने
कृतां विधोर्गन्धफलीबलिश्रियम् ।
निनिन्द लब्धाधरलोचनार्चनं
मनःशिलाचित्रकमेत्य तन्मुखम् ॥ २८ ॥

तु सर्व्वस्या इति वा। अलङ्कृतं तद्वपुषैव मण्डनमिति विचारचातुरी कस्यचिन्मल्लनामा महाप्राज्ञस्य कस्य ब्रह्मणो वाऽस्तु। मया श्रीहर्षेण ब्रह्मणा वा एवं निर्मितुं शक्यते नान्येनेत्यर्थ इति वा। कस्याः पुनर्न जाता अपि तु सर्व्वस्या अपीति वा॥ २७॥

विधायेति। लब्धं प्राप्तं अधराभ्यां लोचनाभ्याञ्च कृत्वा अर्चनं पूजनं येन। ओष्ठनेत्रेण रमणीयमिति यावत्। एवंविधं तन्मुखं भैमीमुखं कर्तृ माङ्गलिकं मनःशिलाख्यगैरधातुविशेषनिर्म्मितं चित्रतिलकं एत्य प्राप्य बन्धूकेन पयोजाभ्यां नीलोत्पलाभ्याञ्च पूजने पूजाद्वयं कृत्वा, अनन्तरं कृतां विधोश्चन्द्रसम्बन्धिनीं गन्धफल्या चम्पककलिकया कृता बलिः पूजा तज्जनितां श्रियं कान्तिं निनिन्द। यदि बन्धूकोत्पलैः चन्द्रस्य पूजां कृत्वा चम्पककलिकां चन्द्रस्य शिरसि न्यस्यति तदा तां चान्द्रलक्ष्मीं न्यक्करोतीत्यभूतोपमेत्यर्थः। बन्धूकस्य अधरस्य नीलोत्पलयोर्लोचनयोश्चम्पककलिकाया मनःशिलातिलकस्य चन्द्रस्य वदनस्य चोपमानोपमेयभावः। चम्पको हेमपुष्पकः। एतस्य कलिका गन्धफलीत्यमरः॥ २८॥

महीमघोनां मदनान्धतातमी
नमःपटारम्भणतन्तुसन्ततिः।
अबन्धि तन्मूर्द्धजपाशमञ्जरी
कयापि धूपग्रहधूमकोमला ॥ २९ ॥
पुनः पुनः काचन कुर्वती कच-
च्छटाधिया धूपजधूमसंयमं।

श्लोकत्रयेण केशप्रसाधनं वर्णयति। महीति। कयापि केशप्रसाधनचतुरया सख्या तस्या भैम्या मूर्द्धजपाशः केशपाशः तद्रूपा सौगन्ध्याद्दैर्घ्याच्च मञ्जरी प्रथमोद्भिन्नकलिकाङ्कुरदण्डः अबन्धि संयता। किंभूता मञ्जरी। महीमघोनां भूमीन्द्राणां मदनेन कामविकारेण अन्धता विवेकशून्यता सैव तमी तामसी रात्रिस्तस्यास्तमोरूपस्य पटस्यावरकत्वाद्विवेकरूपस्यारम्भणे निर्म्माणे विषये तन्तुसन्ततिः सूत्रपरम्परा तानकरूपा। तथा धूपग्रहणसाधनस्य सच्छिद्रस्य धातुमयस्य करण्डकादेः सम्बन्धिना दह्यमानकर्पूरागरुचन्दनादिपरिमलबहुलेन धूमेन कोमलेषच्छुष्का तद्वदतिसुन्दरी नितरां श्यामा। राजानो रात्रौ नीलं पट्टवस्त्रादिकं परिधाय विचरन्तीति वा। नलपराया अपि तस्याः केशपाशं दृष्ट्वा राज्ञां कामोद्रेकाद्विवेकशून्यता भवतीति भावः॥ २९ ॥

पुनः पुनरिति। काचन सखी तस्याः भैम्या मूर्द्धजः केशपाश स्तल्लक्षणं सूक्ष्मघनप्रलम्बकृष्णत्वसाम्याच्चामरं चिराङ्कना

मखोत्थितैस्तर्कितनिजभ्रमा
बबन्ध तन्मूर्द्धजचामरं चिरात्॥ ३०॥

बलस्य कृष्टेव हलेन भाति या
कलिन्दकन्या घनभङ्गभङ्गुरा।
तदार्पितैस्तां करुणस्य कुड्मलै-
र्जहास तस्याः कुटिला कचच्छटा॥ ३१॥

कालेन बबन्ध। चिरकालहेतुमाह। किंभूता। कचच्छटाधि
र्म्मीकेशपाशभ्रान्त्या सादृश्यात् धूपजस्य धूमस्य मङ्कमं
संयमनं बन्धनं कुर्व्वती। तथा तद्भ्रान्तिदर्शनीनां स्त्रि
न्योन्यमुखविलोकनपूर्व्वविलसदीषद्धास्यैः छला तर्कितः कं
पाशभ्रमेण धूपजधूमसंयमनरूपो निजः स्वीयः भ्रमो
॥ ३०॥

बलस्येति। कुटिला अतिवक्रा या तस्याः कचच्छटा कु
श्रेणिः बलस्य बलभद्रस्य हलेनाकृष्टा सती घनैर्निविडैर्भ स्त-
रङ्गैर्भङ्गुरा उच्चावचा कलिन्दस्य पर्व्वतस्य कन्या यमुनेव भाति
च। कचच्छटा तां यमुनां तदा तस्मिन् समये अर्पितैः शिरसि
न्यस्तैः करुणाख्यस्य वृक्षस्य कुड्मलैः कलिकाभिर्जहास। यमुना
पराकर्षणकृतेन महीयसा भङ्गेन पराभवेन भग्ना पुष्परहिता
च। स्वयं तु स्वभावकुटिला पुनरपि कुसुमैरञ्चिता चेति हासो-
युक्त इत्यर्थः। श्यामा अतिवक्रा पुष्पालङ्कृता च तस्याः कुन्त-
लश्रेणिर्नितरां शोभते स्मेति भावः। पूर्व्वं तत्तुल्या अभूत्

धृतैनया हाटकपट्टिकालिके
बभूव केशाम्बुदविद्युदेव सा ।
मुखेन्दुसम्बन्धवशात सुधाजुषः
स्थिरत्वमूहे नियतं तदायुषः ॥ ३२ ॥
ललाटिकासीमनि चूर्णकुन्तला
बभुः स्फुटं भीमनरेन्द्रजन्मनः ।

इदानीं तु अधिका जातेति भावः । जाताभेवेति वा । यमुनाकर्षणं हरिवंशादौ ज्ञेयम् ॥ ३१ ॥

ललाटप्रसाधनं वर्णयति । धृतेति । एनया अलिके ललाटे या हाटकस्य सुवर्णस्य पट्टिका धृता सा केशाम्बुदानां कुन्तलरूपजलदानां तेषु वा विद्युदेव बभूव । तत्प्रभायास्तस्याः कथं स्थिरत्वमित्यत आह । मुखेन्दुसम्बन्धवशाद्धेतोः सुधाजुषोऽमृतं सेवमानस्य तदायुषो विद्युदवस्थानस्य स्थिरत्वं नियतं निश्चितं अहमूहे तर्कयामि । अमृतपानादमृतत्वं तस्या जातमित्यर्थः । सुवर्णपट्टिकया ललाटमलङ्कृतमिति भावः । यदायुष इति वा पाठः । ऊहे । ऊह वितर्के ॥ ३२ ॥

कुन्तलान् वर्णयति ॥ ललाटिकेति । ललाटे रचिताया रेखाकाराया ललाटिकायाः पत्रपाश्याया अलङ्कारविशेषस्य सीमनि पर्यन्तप्रदेशे भीमनरेन्द्रजन्मनो भैम्याश्चूर्णकुन्तला वक्रकुण्डलीभूताः केशाः कज्जलरूपस्य धूमस्य वलयः श्रेण्यः स्फुटमिव बभुः । किंभूता वलयः । मनःशिलायाश्चित्रकं तिलकं

मनःशिलाचित्रकदीपसम्भवा
भ्रमीभृतः कज्जलधूमवल्लयः ॥ ३३ ॥
अपाङ्गमालिङ्ग्य तदीयमुच्चकै-
रदीपि रेखा जनिताञ्जनेन या ।
अपाति सूत्रं तदिव द्वितीयया
वयःश्रिया वर्द्धयितुं विलोचने ॥ ३४ ॥

तद्रूपो यो दीपः तस्मात्सम्भवो यासान्ताः । तथा भ्रमीः सङ्कुच्य वक्रीभावान् बिभ्रति भृतः धारयन्त्यः । नलस्य मनःशिलाति-लकेनैव कामोद्दीपनात् तस्य दीपत्वं । धूपधूमसम्भवा कज्ज-लश्रेणिः किल भ्रमियुक्ता भवति । पत्रपाश्या ललाटिकेत्य-मरः । कर्णललाटात् कनलङ्कारे (पा० ४।३।६५) इति कन् ॥ ३३ ॥

श्लोकचतुष्टयेन कज्जलालङ्कारं वर्णयति । अपाङ्गमिति ॥ अञ्जनेन जनिता या रेखा सा तदीयमपाङ्गमालिङ्ग्य स्पृष्ट्वा उच्च-कैर्नितरामदीपि शुशुभे । द्वितीयया तारुण्यरूपया वयःश्रिया कर्त्र्या विलोचने भैमीनेत्रे वर्द्धयितुं शैशवापेक्षया विशाले कर्त्तुं तद्रेखादीपनं सूत्रमिव अपाति । प्रायो हि सुन्दर्यो नेत्रे तत्-प्रान्तनिर्गतया कपोलकर्णापान्तस्पर्शिन्याञ्जनरेखया भूषयन्ति । शिल्पिनश्च किमपि लेखितुं वर्द्धयितुं चालिख्यमानस्य वर्द्धमा-नस्य चाकारवक्रिमपरिहाराय मषीखटिकाद्युपलिप्तसूत्राभि-घातेन रेखापातनं कुर्व्वन्ति । यद्यपि नेत्रयोर्वृद्धिर्नास्ति तथापि

अनङ्गलीलाभिरपाङ्गधाविनः
कनीनिका नीलमणेः पुनः पुनः ।
तमिस्रवंशप्रभवेन रश्मिना
स्वपद्धतिः सा किमरञ्जि नाञ्जनैः ॥ ३५ ॥
असमविपातां सुषमां विदर्भजा-
दृशाववाप्याञ्जनरेखयान्वयं ।

शैशवापेक्षया तारुण्येन कटाक्षविक्षेपादिविलासवशाद्दैर्घ्यं प्रतीते दैर्घ्यकरणार्थं सूत्रपातो युक्तः । नेत्रे कज्जलाञ्चिते इति भावः ॥ ३४ ॥

अनङ्गेति । अनङ्गलीलाभिः कटाक्षविक्षेपरूपैः कामविलासैः कृत्वा पुनः पुनरपाङ्गधाविनो नेत्रप्रान्तस्पर्शिनः कनीनिका नीलमणेर्नेत्रतारकारूपस्येन्द्रनीलरत्नस्य तमिस्रवंशप्रभवेनाथ च श्यामान्वयजेनातिकृष्णेन रश्मिना सकज्जलं स्वाकृपा सा स्वपद्धतिर्निजागमनसरणिः किमरञ्जि अञ्जनेन । सदा तन्मार्गगमनेन स्वसम्बन्धात्तारकानीलमणिकिरणैरेव नेत्रप्रान्तौ नीलीकृतौ न तु कज्जलैरिति उत्प्रेक्षा । कामोल्लसितनिरतिशयकटाक्षश्रीतुल्याञ्जनशोभालङ्कारतां जगामेति भावः ॥ ३५ ॥

असमविपातामिति । विदर्भजादृशौ अञ्जनरेखया अन्वयं सम्बन्धमवाप्य स्मरेण बाणीकृतयोर्बाणत्वं प्रापितयोः पयोजयोः नीलोत्पलयोः सुषमां परमां शोभां असमविपातां अलभतां । किंभूतयोः । सव्यापसव्यबाणाकर्षणाद्भुजद्वयेऽधिकरणे ज्याकिण

भुजद्वयज्याकिणपद्धतिस्पृशोः
स्मरेण बाणीकृतयोः पयोजयोः ॥ ३६ ॥

तदक्षितत्कालतुलागसा नखं
निखाय कृष्णस्य मृगस्य चक्षुषी ।
विधिर्यदुद्धर्त्तुमियेष तत्तयो-
रदूरवर्त्तिक्षततां स्म शंसति ॥ ३७ ॥

पद्धतिः ज्याघातजवैवर्ण्यरूपकिणमार्गः तां स्पृशत इति स्पृशो तयोः । नलमुष्टिग्राह्यकार्मुकबाणाकर्षणात् कर्णान्तविश्रान्तयो-र्नेत्रनीलोत्पलबाणयोर्भुजज्याकिणसम्भावना युक्ता । अञ्जनरेखे किणतुल्ये नेत्रे च स्मरनीलोत्पलबाणतुल्ये इति भावः ॥ ३६ ॥

तदक्षीति । विधिर्ब्रह्मा तदक्ष्णोर्मृगनेत्राधिकयोर्भैमीनेत्रयोः तत्काले तस्मिन् पाणिग्रहोचिताञ्जनप्रसाधनसमये तुला सा-म्यकरणं तद्रूपेणागसाऽपराधेन हेतुना नखं निखाय कृष्णस्य कृष्णसारहरिणस्य चक्षुषी उद्धर्त्तुं उन्मूलयितुं यत् इयेष अभि-ललाष तयोः कृष्णसारनेत्रयोः अदूरवर्त्ति समीपवर्त्ति यत् क्षतं तस्य भावस्तत्ता सा तन्नखनिखननकर्म्म शंसति स्म । क्षतमाख्यत स्फुटमिति पाठे स्फुटं प्रकटमुत्प्रेक्षायां वा अदूरवर्त्ति च क्षतं ययोस्ते अदूरवर्त्तिक्षते तयोर्भाव इति वा । मृगनेत्रसमीपे न-खनिखननाकारं क्षतं भवति ॥ ३७ ॥

विलोचनाभ्यामतिमात्रपीडिते
ऽवतंसनीलाम्बुरुहद्वयी खलु।
तयोः प्रतिद्वन्द्विधियाऽधिरोपया-
म्बभूवतुर्भीमसुताश्रुती ततः ॥ ३८ ॥
धृतं वतंसोत्पलयुग्ममेतया
व्यराजदस्याः पतिते दृशाविव।

शोकद्वयेनावतंसनीलोत्पले वर्णयति। विलोचनाभ्यामिति। खलु यतः भीमसुतायाः श्रुती कर्णौ विलोचनाभ्यां आकर्णपूर्णत्वादतिमात्रमतितरां पीडिते पराक्रान्ते ततस्मादात्मपराभवकारिणोस्तयोर्नेत्रयोः प्रतिद्वन्द्विनी तुल्यबले इमे नीलोत्पले इति धिया बुद्ध्येव स्वशिरसि अवतंसरूपनीलाम्बुरुहद्वयीं अधिरोपयाम्बभूवतुः आरोपितवन्तौ दधतुरित्यर्थः। उत्प्रेक्षा। खलु वोत्प्रेक्षायां। अन्योऽप्यधिकेन पराभूतस्तस्मादात्मानं तद्विरोधिनं सन्निधापयति। नीलोत्पलकरणीयं कर्म नेत्राभ्यामेव कृतं न तु नीलोत्पलाभ्यामधिकं किञ्चित् कृतं, नीलोत्पले कर्णभूषणीकृते इति च भावः॥ ३८॥

धृतमिति। एतया कर्णयोरुपरि धृतं वतंसोत्पलयुग्मं, भैमीतत्कर्णौ वा पश्यतः कस्यचिद्रसिकस्य विलासिनो दृशाविव व्यराजत्। किंभूतस्य। मनोभुवा कामेन अविवेकित्वमेवान्ध्यं तदुद्भूतनेत्रत्वं गमितस्य प्रापितस्य। किंभूते दृशौ। अस्यां भैम्यां पतिते निपत्ते। ततो रसिकत्वादेवापरावृत्य लगित्वा सम्बध्य स्थिते

मनोभुवान्ध्यङ्गमितस्य पश्यतः
स्थिते लगित्वा रसिकस्य कस्यचित् ॥ ३९ ॥
विदर्भपुत्रीश्रवणावतंसिका-
मणीमहःकिंशुककार्म्मुकोदरे ।
उदीतनेत्रोत्पलबाणसम्भृति-
र्नलं परं लक्ष्यमवैक्षत स्मरः ॥ ४० ॥

स्थिरतरं इत्युत्प्रेक्षा । कश्चिद्विलासी भैम्याः कर्णौ प्रथममेव दृष्टवान् ततस्तस्य नेत्रे कर्णयोरेव लग्ने स्थिते नोत्पलद्वयमित्यर्थः । नेत्रगमनादेवास्यान्ध्यं । अन्यदपि पतितं वस्तु कुत्रापि लगित्वा तिष्ठति ॥ ३९ ॥

रत्नावतंसं वर्णयति । विदर्भेति । स्मरः नलं परं केवलं श्रेष्ठं वा लक्ष्यमवैक्षत आगच्छन्तं प्रतीक्षितवानित्यर्थः । किंभूतः । विदर्भपुत्रीश्रवणयोरुपरि अवतंसिकाया मण्यः भूषणभूता या माणिक्यादिरत्नखचितसुवर्णकम्बिका तत्सम्बन्धीनि माणिक्यादिरत्नानि तासां महस्तेजस्तदेव किंशुककार्मुकं पलाशकुसुमधनुः तस्योदरे विषये उदीता समुत्पन्ना नेत्रयोरवतंसोत्पलयोश्च तद्रूपाणां चतुर्णां बाणानां सम्भृतिः सामग्री नेत्ररूपाभ्यां वा नीलोत्पलाभ्यां बाणसामग्री यस्य । एवंविधचापे समारोपितबाण इत्यर्थः । स्वलङ्कृतकर्णकज्जलाञ्चितनेत्रसौन्दर्यविलोकनमात्रेण नलः कामपरो भविष्यतीति भावः । अवतंसिकापदेनैव श्रवणलब्धावपि तिमन्निधिसूचनार्थं श्रवणपदप्रयोगो युक्तः । लक्ष्यस्मरणात् स्मरः ॥ ४० ॥

अनाचरन्तथ्यमृषाविचारणां
तदाननं कर्णलतायुगेन किं ।
बबन्ध जित्वा मणिकुण्डले विधू
द्विचन्द्रबुद्ध्या कथितावसूयका ॥ ४१ ॥
अवादि भैमी परिधाप्य कुण्डले
वयस्यायाभ्यामभितः समन्वयः ।

श्लोकद्वयेन कुण्डलप्रसाधनमाह । अनाचरदिति ॥ मादृग्यात् स्फुरितया द्विचन्द्रबुद्ध्या द्वौ चन्द्राविति भ्रान्तिज्ञानेनैतौ द्वौ चन्द्रौ तदोत्कर्षं न सहेते इति भैम्यास्तदाननस्य वा पुरस्तादसूयकौ स्पर्द्धाकारिणौ कथितौ प्रतिपादितौ मणिकुण्डले रत्नखचिते सुवर्णताटङ्के एवंविधौ द्वौ चन्द्रौ जित्वा तदाननंकर्तृ कर्णलतायुगेन कृत्वा बबन्ध किं । ननु द्विचन्द्रबुद्धेरेव स्वरूपेणासत्यत्वात् स्त्रीत्वाच्च तदर्थेऽर्थे कथं तस्य प्रवृत्तिरित्याशङ्क्याह । किम्भूतं । तथ्यमृषा विचारणां अनया कथितं सत्यमसत्यं वेति विमर्शनमनाचरदकुर्व्वाणं । शोभामयमदेन मत्तत्वादित्यर्थः । किं किमिति बबन्ध न अपित्वनुचितमेतत्कृतं । यतः सत्यासत्यविचारणाभावादिति भाव इति वा । अन्योऽपि दुर्मदः सत्यासत्यविचारमकुर्व्वन् कस्यचिदसूयकस्य वचनादनपराधिनमपि कञ्चित्पाशादिना बध्नाति । चन्द्राकारे मणिताटङ्के तया धृते इति भावः ॥ ४१ ॥

अवादीति । कयाचिद्वयस्यया सख्या कुण्डले परिधाप्य

त्वदाननेन्दोः प्रियकामजन्मनि
श्रयत्ययं दौरधरी धुरं ध्रुवं ॥ ४२ ॥
निवेशितं यावकरागदीप्तये
लगत्तदीयाधरसीम्नि सिक्थकं ।

कर्णयोर्निक्षिप्य भैमी अवादि इत्युक्ता । इति किं । हे भैमि तवाननेन्दोः आभ्यां कुण्डलाभ्यां अभित उभयोः पार्श्वयोरयं समन्वयः समीचीनःसम्बन्धः । प्रियस्य नलस्य कामो रत्यभिलाषस्तस्य जन्मन्युत्पत्तौ विषये दौरधरी पूर्वोत्तरराशिस्थगुरुशुक्रयोर्मध्यराशिस्थचन्द्रस्य दुर्धराख्यस्य महायोगस्य सम्बन्धिनीं धुरं भारं ध्रुवं निश्चितं आश्रयतीति । ध्रुवमुत्प्रेक्षायां वा । दुर्धराख्ये महायोगे जातपुत्रादिर्यथा वृद्धिं प्राप्नोति तथा कुण्डलान्तरालगतमुखचन्द्रदर्शनमात्रेण नलस्य रमणाभिलाषो वृद्धिं प्राप्स्यतीति भावः । गुरुभार्गवयोर्योगश्चन्द्रेणैव यदा भवेत् । तदा तु दुर्धरायोग इति ज्योतिर्विदां मतमिति शास्त्रादनुसन्धेयम् ॥ ४२ ॥

अधरप्रसाधनमाह । निवेशितमिति ॥ तदीयोऽधरोऽष्ठस्तस्य सीम्नि ऊर्द्धदेशे यावकस्यालक्तकस्य रागो लोहितिमा तस्य दीप्तये प्रकाशनाय निवेशितं न्यस्तं यच्चानेन लगत्संलग्नं सिक्थकं मधूच्छिष्टं, स्वस्य जनकानि मधूनि हीनरसतया परित्यज्य माधुर्यातिशयात् सुधयाऽमृतस्य सधर्म्मिणि तुल्यायां तत्रैवाधरसीम्नि निवस्तु नित्यं स्यात् उत्सुकमुत्कण्ठितमिव रराज । सुधया

रराज तत्रैव निवद्धमुक्तकं
मधूनि निर्धूय सुधासधर्म्मिणि ॥ ४३ ॥
स्वरेण वीणेत्यविशेषणं पुरा
स्फुरत्तदीया खलु कण्ठकन्दली ।
अवाप्य तन्त्रीरथ सप्त मुक्तिका-
मरानराजन् परिवादिनी स्फुटं ॥ ४४ ॥

सिक्थकस्य कदाचिदप्यसम्बन्धात्तत्त्वाभावात्तां परित्यज्य मगकमिव तत्रैव स्थितमित्यर्थः । प्रसाधिका अलक्तकस्य स्थित्यर्थं अधरे सिक्थकं निवेशयन्ति, अधरस्य मधुनोऽधिकत्वं सूचितं । अन्यदपि हीनमाश्रयं परित्यज्योत्तममाश्रयति । लुप्तोपमेयं । सधर्म्मिणि धर्म्मादनिच् केवलात् (पा० ५।४।१२४) इति धर्म्मशब्दादनिचि, समानस्य छन्दसीत्यत्र (पा० ६।३।८४) छन्दसीति योगविभागात् समानस्य स आदेशः । समानधर्म्मा या सा सधर्म्मा तस्यां, मन इति (पा० ४।१।११) न ङीप् ॥ ४३ ॥

कण्ठप्रसाधनमाह । स्वरेणेति । तदीया कण्ठ एव कन्दली अतिसौकुमार्य्यादिगुणत्वाद्दैर्घ्याद्वतपयसः कुन्दस्य दण्डाऽतिमधुरेण स्वरेण कृत्वा पुरा पूर्व्वं अविशेषणं विशेषणरहितं यथा तथा सामान्येन वीणेयमित्येव खलु निश्चितं अस्फुरत् अभासत, न तु रुद्रवीणादिवल्लकीणाभेदेषु विशेषतयेयमिदं मत्वेत्यर्थः । अथालङ्कारसमये सप्त मुक्तिकासरान् सुचप्रोतमौक्तिकहारानेव तन्त्रीर्मध्यमाभिधानात् षड्जम न वनिवश्चितपञ्चमादिरागाः

उपास्यमानाविव शिक्षितुं ततो
मृदुत्वमप्रौढमृणालनालया ।
विरेजतुर्माङ्गलिकेन सङ्गतौ
भुजौ सुदत्या वलयेन कम्बुनः ॥ ४५ ॥

पट्टसूत्रादिरचिताः सप्त तन्त्रीरवाप्य, विपञ्ची सा तु तन्त्रीभिः सप्तभिः परिवादिनीत्यमरवचनात् स्फुटं प्रकटं परिवादिनीति विशिष्टसञ्ज्ञा सती अराजत् अशोभत । स्फुटमुत्प्रेक्षायां वा । वीणाभ्योऽपि मधुरतरस्वरा, कण्ठकन्दलीसप्तसरमुक्ताहारालङ्कृता चेति भावः ॥ ४४ ॥

भुजप्रसाधनमाह । उपेति ॥ माङ्गलिकेन मङ्गलं प्रयोजनमस्य मङ्गलार्थरचितेन कम्बुनः शङ्खस्य वलयेन कङ्कणेन सङ्गतौ युक्तौ सुदत्या भैम्या भुजौ विरेजतुः । उत्प्रेक्ष्यते । अप्रौढा बाला या मृणालनाला तया विमदण्डेन ततः भुजाभ्यां सकाशात् मृदुत्वं शिक्षितुं उपास्यमानाविव सेव्यमानाविव । मृणालादपि कोमलतरौ भुजावित्यर्थः । गौडदेशे विवाहकाले शङ्खवलयधारणमाचारः । बालेन चाभ्यासः सुकर इत्यप्रौढपदं । नालानालमथास्त्रियामित्यपि क्वचित्पाठात् महाकविप्रयोगान्नालाशब्द आबन्तोऽपि । ततः । आख्यातोपयोग (पा० १।४।२९) इत्यपादानत्वम् । माङ्गलिकेन । प्रयोजनमिति (पा० ५।१।१०९) ठञ् ॥ ४५ ॥

पदद्वयेऽस्या नवयावरञ्जना
जनैस्तदानीमुदनीयतार्पिता ।
चिराय पद्मौ परिरभ्य जाग्रतो
निशीव विश्लिष्य नवा रविद्युतिः ॥ ४६ ॥
कृतापराधः सुतनोरनन्तरं
विचिन्त्य कान्तेन समं समागमम् ।

श्लोकद्वयेन पदप्रसाधनमाह । पदेति ॥ तदानीं तस्मिन् प्रसाधनसमये अस्याः पदद्वये ऽर्पिता रचिता नवा आर्द्रा यावकरञ्जना अलक्तकरञ्जना जनैर्भवादयसमये जाता अतिरक्ता रविद्युतिरिव उदनीयत अतर्क्यत । किम्भूता रविद्युतिः । निशि रात्रौ सूर्य्यस्यास्तमयवशात् पद्माभ्यां सह विश्लिष्य दिने पुनः पद्मौ चिराय परिरभ्य जाग्रती तिष्ठन्ती । रविद्युतिर्यथा पद्मेषु श्रियमधिकां करोति तथा यावकरञ्जना तत्पादयोरिति भैमीचरणौ पद्मतुल्याविति भावः । चिराय विश्लिष्येति वा । चिरवियुक्तावन्योन्यं प्राप्य गाढमालिङ्ग्य तिष्ठत इति उक्तिः ॥ ४६ ॥

कृतेति ॥ पूर्व्वं विरहावस्थायां बहुतरसन्तापकारित्वात् सुतनोर्भैम्याः कृतोऽपराधो येन स कुसुमेषुः काम एव पावकः अनन्तरं तु अधुना कान्तेन नलेन समं सह भैम्याः समागमं विचिन्त्य स्फुटं निश्चितं चरणौ सिषेवे अपराधमार्जनायेत्यर्थः । कामस्याग्नित्वे हेतुमाह । यतः सोऽग्निः रागचिह्नः रागो लोहितिमैव चिह्नं यस्य रक्तिमा वह्निरयमिति ज्ञायते । अथवा अनु-

स्फुटं सिषेवे कुसुमेषुपावकः
स रागचिह्नस्तरुणौ न यावकः ॥ ४७ ॥
स्वयं तदङ्गेषु गतेषु चारुतां
परस्परेणैव विभूषितेषु च।

राग एव चिह्नं यस्य। अनुराग एव हि काममनुभावयति। तस्मात् कामाग्निरेवायं न त्वयं यावकोऽलक्तकः स पावको नेति वा। अन्योऽपि प्रोषितभर्तृकायाः कस्याश्चित् कृतापराधः संस्तत्प्रियागमनं विचिन्त्यापराधमार्जनाय तत्पादयोः पतति। सालक्तकतत्पददर्शनादेव नलस्य कामोद्रेको भवितेति भावः॥ ४७॥

सहजशोभामाहात्म्यं वर्णयति। स्वयमिति॥ स्वयं भूषणं विनैव परस्परानपेक्ष्यश्च तस्या भैम्या अङ्गेषु मुखाद्यवयवेषु प्रत्येकं स्वीयस्वीयसौष्ठववशात्तरुणिमारोहवशाच्च चारुतां गतेषु सत्सु परस्परेणैवान्योन्येनैव च विशेषेण भूषितेषु प्रत्येकं सौन्दर्य्ये सत्यपि अन्योन्यमाहचर्य्यवशात् करानुगुणौ भुजौ भुजानुगुणौ करावित्येकस्याङ्गस्यापरेण तस्य च तेनैव सर्व्वाङ्गयोग्याङ्गसामग्रीसङ्घट्टनात् सुन्दरतरेषु सत्सु तानि मनःशिलातिलकादीनि अलङ्करणानि किमूचिरे अपि तु स्वकरणप्रयोजनं न किञ्चिदूचुः। यद्यस्मात्तेषामलङ्करणानां तत्पूर्व्वोक्तं प्रकारं करणं निर्म्माणं वृथैव बभूव दुःखवशान्न किञ्चिदूचुः। किमप्यधिकं न चक्रुरित्यर्थः। आश्रितत्वादनिराकार्य्यत्वेन स्थितान्येवेति भावः। तत्तेषां करणं वृथैवाभूत्। अत एव करणमलं इत्य-

किमूचिरेऽलङ्करणानि तानि तत्
वृथैव तेषां करणं बभूव यत् ॥ ४८ ॥
क्रमाधिकामुत्तरमुत्तरं श्रियं
पुपोष यां भूषणचुम्बनैरियं ।
पुरः पुरस्तस्थुपि रामणीयके
तया ववाधेऽवधिवुद्धिधोरणिः ॥ ४९ ॥

मन्वयनाम मान्वयं जातमिति भावः । अन्यं वृथाकरणं येषामिति च बहुव्रीहिणापि मान्वयं जातमित्यर्थं । पूर्व्वमलंशब्दस्य भूषणार्थत्वं पश्चादप्रयोजकत्वान्निषिद्धार्थत्वमिति चेत्यर्थः । किमूहिरे इति पाठे किमर्थं धृतानि न जाने इति शेष इति वा ॥ ४८ ॥

भूषणकान्त्युत्कर्षं वर्णयति । क्रमेति । इयं भैमी भूषणचुम्बनैर्भूषणसम्बन्धैः कृत्वा उत्तरमुत्तरं यथा तथाऽपे क्रमेण पूर्व्वपूर्व्वभूषणापेक्षया उत्तरोत्तरभूषणेनाधिकामतिशयितां यां श्रियं पुपोष तयालङ्कारशोभया रामणीयके सौन्दर्य्ये पुरः पुरस्तस्थुषि स्थिरतरे सति अवधिः बुद्धिरियत्ता बुद्धेर्धोरणिः परम्परा ववाधे बाधिता । इतोऽन्यद्रामणीयकं नास्तीति यदि बुद्धिर्भवेत्तदा अवधिर्भवेत् पूर्व्वरामणीयकेयत्तावाधेन रामणीयकान्तरेण पुनर्न स्फुरति सति अवधिर्बाधित इत्यर्थः । तस्या भूषणे शोभा निरवधिरभूदिति भावः । धोरणिरिति देश्यशब्दः ॥ ४९ ॥

मणीसनाभौ मुकुरस्य मण्डले
बभौ निजास्यप्रतिविम्बदर्शिनी ।
विधोरदूरं स्वमुखं विधाय सा
निरूपयन्तीव विशेषमेनयोः ॥ ५० ॥
जितस्तयास्येन कलानिधिर्दधे
द्विचन्द्रधीसाक्षिककायमायताम् ।

मणीति । मणीसनाभौ मौक्तिकादिरत्नतुल्येऽतिस्वच्छे मुकुरस्य मण्डले दर्पणतले पुनर्निजास्यस्य स्वमुखस्य दर्पणसङ्क्रान्तप्रतिविम्बं पश्यत्येवंशीला दर्शिनी सा भैमी मुखं विधोः दर्पणरूपस्य प्रतिविम्बरूपस्य वा चन्द्रस्य अदूरं निकटवर्त्ति विधाय कृत्वा एतयोर्मुखचन्द्रयोर्विशेषं तारतम्यं निरूपयन्तीव विचारयन्तीव बभौ । सन्निधौ हि विशेषः स्फुरति । विम्बापेक्षया प्रतिविम्बस्य न्यूनत्वात्तस्यैव चन्द्रत्वमिति विशेषो निरूपित इति भावः । भूषणानन्तरमादर्शविलोकनमिति स्त्रीजातिस्वभावः । प्रतिविम्बदर्शिनी । आभीक्ष्ण्ये णिनिः ॥ ५० ॥

जित इति । तया आस्येन जितः कलानिधिश्चन्द्रो नेत्रचिपिटीकरणादिनिमित्ता हस्तस्थितादर्शनिमित्ता वा द्वौ चन्द्राविति धीर्यस्य पुरुषस्य स एव साक्षी साक्षाद्द्रष्टा यस्याः सा माया यस्यैवम्भूतः कायो यस्य चन्द्रस्य तस्य भावस्तत्ता तां दधे बभार । एकत्वादहं भैमीमुखेन जित इति मायामयानेककायत्वं चन्द्रेण धृत इत्यर्थः । अत्र च पूर्व्वोक्तप्रकारद्वयेन

तथापि जिग्ये युगपत् सखीयुग-
प्रदर्शितादर्शबहूभविष्णुना ॥ ५१ ॥
किमालियुग्मार्पितदर्पणद्वये
तदास्यमेकं बहु चान्यदम्बुजम् ।

माक्षिणी द्वौ चन्द्राविति बुद्धिरेव प्रमाणं। कलानिधिपदेनानेक-शिल्पज्ञत्वान्मायिककायव्यूहनिर्म्माणकलामपि वेत्तीति सूचितं। द्वाभ्यामेकजयस्य सुकरत्वात् करस्थितादर्शच्छलेनानेककायत्वं यद्यप्यङ्गीकृतं तथापि युगपत् समकालं सखीयुगेन प्रकर्षेण दर्शिताभ्यामादर्शाभ्यां कृत्वा तयोर्बाहुना अनेकेनापि बहूभविष्णुना बहूभवनशीलेन सता तन्मुखेन चन्द्रो जिग्ये जित एव। हस्तस्थ-दर्पणसहितसखीदर्पणद्वयं प्रतिफलितमुखप्रतिबिम्बैः सह बिम्ब-भूतस्य मुखस्यानेकत्वान्मुखतुल्यदर्पणद्वयेन सह बिम्बभूतस्य मुखस्य स्वसदृशैरादर्शैः स्वप्रतिबिम्बैः सह वा अनेकत्वात् पञ्चसु द्वयोर्विजयस्य सुकरत्वादित्यर्थः। पूर्वं शोभया जितोऽपि स-ख्याधिक्येन सुखं जेतुमारब्धवांस्तथापि सुखस्याधिकतरसङ्ख्य-त्वाच्च शशाङ्केति भावः। बहूभविष्णुनेति च्विः ॥ ५१ ॥

किमिति। आलियुग्मेनार्पितं दर्शितं दर्पणद्वयं बहुषु प्रति-बिम्बेषु मध्ये एकमेकं संख्यायोग्यमथ च मुख्यं तदास्यं भैमीमुखं अन्यच्च हिमेषु शिशिरर्तुषु अथ च कान्देषु केदारादिहिमेषु निर्वाप्य निवार्य्य निर्वाणं विनाशमथ च मोक्षं कृत्वा प्राप्येति यावत्, निशासमाधिभिः रात्रिसम्बन्धिभिः सङ्कोचैरथ च पर-

हिमेषु निर्वाप्य निशासमाधिभि-
स्तदीयसालोक्यमितं व्यलोक्यत ॥ ५२ ॥
पलाशदामेति मिलच्छिलीमुखै-
र्वृता विभूषामणिरश्मिकार्मुकैः ।
अलक्षि लक्ष्यैर्धनुषामसौ तदा
रतीशसर्व्वस्वतयाभिरक्षिता ॥ ५३ ॥

मात्मदर्शनोपायैः कृत्वा तदीयं भैमीमुखसम्बन्धि सालोक्यं सा-
दृश्यमथ च सालोक्यलक्षणां मुक्तिं इतं प्राप्तं बहु अनेकमम्बुजं
किं लोकैर्व्यलोक्यत। किमुत्प्रेक्षायां। भैमीमुखप्रतिबिम्बतो ही-
नत्वात् पद्मानि केदारादिहिमचूर्णमानि भूत्वा तन्मुखप्रतिबि-
म्बस्य समीपे स्थितानि किमित्यर्थः। पद्मेभ्यो मुखमधिकमिति
भावः। अम्बुजमिति जात्येकवचनं। निर्वापणं निर्वापस्तं करोति
णुन्ताल्ल्यपि निर्वाप्येति हिमेष्वात्मानं विनाश्येत्यर्थः। सालोक्यं।
समानस्येति योगविभागात् स आदेशः ॥ ५२ ॥

पलाशेति। असौ भैमी पलाशानां किंशुकानां दाम माले-
यमिति भ्रान्त्या मिलन्त आगच्छन्तः शिलीमुखा भ्रमरा यत्रै-
वम्भूतैरथ च किंशुकानां धनुराकारत्वात् मिलद्बाणैर्विभूषा-
मणीनां विशिष्टालङ्कारसम्बन्धिमाणिक्यादिरत्नानां रश्मिरूपैः
कार्मुकैरिन्द्रधनुर्भिर्वृता वेष्टिता सती तदा भूषणानन्तरकाले
रतीशस्य कामस्य सर्व्वस्वतया परमधनत्वेन हेतुना धनुषां
लक्ष्यैर्लक्षसङ्ख्यैर्धनुर्भिः अभि सामस्त्येन रक्षितेव लोकैरलक्षि

विशेषतीर्थैरिव जह्नुनन्दिनी
गुणैरिवाजानिकरागभूमिता ।
जगाम भाग्यैरिव नीतिरुज्ज्वलै-
र्विभूषणैस्तत्सुषमा महार्घताम् ॥ ५४ ॥

लङ्कृता । कुन्ताः प्रविशन्तीतिवद्धनुषां धनुर्द्धराणामित्यर्थः । ...नया ...सर्व्वस्वभैमीं कामो रक्षतीत्यर्थः ॥५३॥

विशेषेति । तस्या भैम्याः सुषमा स्वाभाविकी परमा शोभा विशिष्टैर्भूषणैः कृत्वा महार्घतामतिश्रैष्ठ्यं जगाम । का कैरिव । जह्नुनन्दिनी स्वत एव श्रेष्ठापि गङ्गा विशेषतीर्थैः प्रयागादिभिरिव । तथा आजानिकरागभूमिता जननं जनः न जनो ऽजनः अजनेन निर्वृत्तं । तेन निर्वृत्तं (पा० ५।१।७८) इति ठक् इकादेशः अनुशतिकादित्वादुभयपदवृद्धिः । आजानिकः सहजो रागस्तस्य भूमिः स्थानं पुत्रादिस्तस्य भावस्तत्ता सहजा स्नेहपात्रता गुणैः शीललावण्यादिभिरिव । तथा नीतिरुज्ज्वलै-र्नीतिसाधितफलप्रतिबन्धनाशनात् प्रकाशैर्भाग्यैः पूर्व्वकृतशुभ-कर्म्मभिरिव । भागीरथी सर्व्वत्र श्रेष्ठैव परं प्रयागादौ माहा-त्म्यातिशयः । यत्रानुरागस्तत्र श्रैष्ठ्यं परंतु शीलादिना अनु-रागस्य निरतिशयत्वं । तथा नीतिमार्गानुसरणं श्रेष्ठमेव पर-न्तूज्ज्वलैर्भाग्यैरनुगृहीतं श्रेष्ठतरं भवतीत्यर्थः । मण्डनैस्तस्या निरतिशया शोभाऽभूदिति भावः । उज्ज्वलैरिति उपमानो-पमेयैः सम्बन्धनीयं । अशुभकर्म्मणोऽपि भाग्यस्याभिधायकत्वात्

नलात् स्ववैश्वस्त्यमनाप्नुमानता
नृपप्रिया भीममहोत्सवागताः।
तदङ्घ्रिलाक्षामदधन्त मङ्गलं
शिरःसु सिन्दूरमिव प्रियायुषे॥ ५५॥

तन्निष्टत्त्यर्थे भाग्यविशेषणमेव वा। उपमानत्रयेण क्रमेण पा-
वित्र्यं गुणवत्त्वं भाग्यवत्त्वञ्च सूचितं। विशिष्यन्ते इति विशेषाः
पचाद्यच्॥ ५४॥

नलादिति। नलात् सकाशात् स्वस्यात्मनो वैश्वस्त्यं वैधव्यमनाप्नुं
अप्राप्नुमानता भैमीचरणप्रणामप्रवणा भीमस्य कन्यास्वयम्व-
ररूपे महोत्सवे आकारिताः सत्य आगता नृपप्रिया अन्य-
राजमहिष्यः प्रियायुषे स्वप्राणेश्वरजीवनाय मङ्गलरूपसिन्दूर-
मिव स्वशिरःसु तस्या भैम्या अङ्घ्रोश्चरणयोर्लाक्षां अलक्तकं
अदधन्त अधारयन्। पत्युरायुर्विवृद्धये अन्याः स्त्रियः ता एव
वा यथा शिरःसु सिन्दूरं धारयन्ति। तथा प्रणामप्रसन्नया
भैम्या एतदीयाः प्राणेशा रक्षणीया इति प्रार्थितो नलः स्वप्रा-
णेशान् रक्षिष्यतीति बुद्ध्या स्वभर्तृचिरञ्जीवनाय भैमीचरणयोः
प्रणामं कृतवत्य इति भावः। प्रणामादेव वा आर्द्रा लाक्षा
लग्ना। विश्वस्ताविधवे समे इत्यमरः। वैश्वस्त्यं। ब्राह्मणादित्वात्
ष्यञ् (पा० ५।१।१२४)। दध धारणे, लङि।

हरिद्रा कुङ्कुमञ्चैव सिन्दूरं कज्जलं तथा।
कूर्पासकञ्च ताम्बूलं माङ्गल्याभरणं शुभम्॥

अमोघभावेन सनाभिताङ्गताः
प्रसन्नगीर्वाणवरान्तरस्रजाम् ।
ततः प्रणम्याधिजगाम सा ह्रिया
गुरुर्गुरुभ्यः पतिसत्यताशिषः ॥ ५६ ॥
तथैव तत्कालमथानुजीविभि
प्रसाधनासञ्जनशिल्पपारगैः ।

केशसंस्कारकवरीकरकर्म्मविभूषणं ।
भर्त्तुरायुष्यमिच्छन्ती दूरयेन्न पतिव्रता ॥
इति स्कान्दावचनम् ॥ ५५ ॥

अमोघेति । ततो मण्डनानन्तरं प्रणम्य कृतगुर्वादिचरणप्रणामा सती ह्रिया गुरुः अधिकलज्जेत्यर्थः, सा भैमी गुर्वोः पूज्यतमयोः पित्रोस्तथा ब्राह्मणानां वाङ्मनःकायकर्म्मभिः पतिमव्यभिचरन्तीनां पतिव्रतानां वृद्धासभगसुवासिनीनाञ्च अविधवा सुभगा अष्टपुत्रा भवेति आशिष अधिजगाम आलभत। किम्भूता आशिषः। अमोघभावेन सफलत्वेन प्रसन्नानां गीर्वाणानां देवानां पूर्व्वोक्ता वरास्तत्सम्बन्धिन्योऽन्तरस्रजो वर्णमालास्तासां सनाभितां बन्धुत्वं गताः प्राप्ताः, सत्यत्वेन तत्तुल्याः ॥ ५६ ॥

तथैवेति। तथैव भैम्या वेदिकोदरे यथा मङ्गलस्नानादि कृतं तेनैव प्रकारेण क्रमेण च तत्कालं तस्मिन्नेव कालेऽथ मङ्गलस्नानानन्तरं प्रसाधनासञ्जनं भूषणकरणं तत्सम्बन्धि शिल्पं

निजस्य पाणिग्रहणक्षणोचिता
कृता नलस्यापि विभोर्विभूषणा ॥ ५७ ॥
नृपस्य तत्राधिकृताः पुनः पुन-
र्विचार्य्य तान् बन्धमवापयन् कचान् ।

विज्ञानं कौशलं तस्य पारगैः विशेषविशेषज्ञैः शृङ्गारादिभिः अनुजीविभिः सेवकैर्निजस्य विभोः स्वस्वामिनो नलस्यापि पाणिग्रहणक्षणोचिता विवाहकाले योग्या विवाहरूपोत्सवयोग्या वाविभूषणा कृता रचिता । निजस्येति स्वयंप्रवृत्तिः सूचिता । विभोरित्यविलम्बः सूचितः । भूषयतिश्चुरादिः तस्माद्युच ॥ ५७ ॥

श्लोकद्वयेन केशप्रसाधनमाह । नृपस्येति । तत्र केशप्रसाधनेऽधिकृता नापितादयः पुनः पुनर्विचार्य्य धूपजधूमसंशोषणं कङ्कतिकादिना प्रसाधनं कृत्वा, अथ च धूपजधूमस्यापि विद्यमानत्वात् पुनः पुनस्तद्भ्रान्तिवशादेते केशा एव न धूम इति चिराल्लिखित्य, कानि पुष्पाणि कुत्र स्थाप्यानीति योग्यायोग्यभावं विचार्य्य वा, नृपस्य तान् कचान् धम्मिल्लादिरचनाविशेषग्रन्थिरूपं बन्धं अवापयन् प्रापयामासुः । तान् कान् । यैः कचैः शरदि शरदः पक्षान् त्यजति शरत्त्यक् तस्य कलापिसंसदो मयूरसङ्घस्य सम्बन्धी कलापलीलोपनिधिः कलापलीलाया उपनिधिः माम्यमपालापि आच्छादितः, तदपेक्षयाधिकैर्जातमित्यर्थः । कलापलीलारूपो य उपनिधिः कविसमयसिद्धः प्रति-

कलापलीनोपनिधिर्गरुत्त्यजः
स यैरपालापि कलापिसंसदः ॥ ५८ ॥
पतत्रिणां द्राघिमशालिना धनु-
र्गुणेन संयोगजुषां मनोभुवः।

निधिः स यैराच्छादि जित इवेत्यर्थ इति वा। नलकेशैर्विला-
सस्य गृहीतत्वात् निर्विलासतया निरर्थकं बर्हिभारं त्यजति
इति सूचनाद्गरुत्त्यज इति पदं साभिप्रायं। यैः केशैः पत्रत्या-
गिन्या मयूरसंहतेः कलापशोभानिक्षेपः अपालापि गृहीत्वा
नास्तीत्यपलापितः। यः परस्य निक्षेपं गृहीत्वा न दत्त्वा परं प्रता-
रयति स राज्ञोऽधिकृतैः पुरुषैः पश्चाद्दण्ड्यो शिक्षणीयो भवति।
मयूराः शरदि पक्षान्मुञ्चन्ति। पुमानुपनिधिर्न्यास इत्यमरः।
अत्रापयन्। आप्नोतेर्ण्यन्तात् लुङि द्वितीयस्यैकाचो द्वित्वं गत्यर्थ-
त्वादणौ कर्तुर्णौ कर्मत्वम्। अलम्भयन्निति वा पाठः ॥ ५८ ॥

पतत्रिणामिति। अर्जिता लब्धा मार्जनश्रीरभ्यङ्गजनिता स्नि-
ग्धशोभा येन। तथा द्राघिम्ना शालते एवंशीलेन तस्य नलस्य
कचेन केशपाशेन सह समेत्य सम्बन्धं प्राप्य कुड्मलैर्मल्लिकादि-
कोरकैः कर्तृभिः, द्राघिमशालिना तथा अर्जितमार्जनश्रिया
पुनः पुनः अङ्गुल्यादिना घर्षणालब्धमार्जनसम्बन्धिस्निग्धशोभे-
नेव भ्रमरमालारूपेण धनुर्गुणेन संयोगजुषां सहितानां मनो-
भुवः कामस्य पतत्रिणां सौभाग्यं सादृश्यमालम्भि केशपाशस्य
भ्रमरमालारूपेण कामधनुर्गुणेन साम्यं। कोरकाणाञ्च पुष्प-

कचेन तस्यार्जितमार्जनश्रिया
समेत्य सौभाग्यमलम्भि कुड्मलैः ॥ ५९ ॥
अनर्घ्यरत्नौघमयेन मण्डितो
रराज राजा मुकुटेन मूर्द्धनि ।
वनीपकानां स हि कल्पभूरुह-
स्ततो विमुञ्चन्निव मञ्जुमञ्जरीं ॥ ६० ॥
नलस्य भाले मणिवीरपट्टिका-
निभेन लग्नः परिधिर्विधोर्बभौ ।

कन्दर्पबाणैः नलस्य च कामेनेत्यर्थः । अतिविशालनीलतरकान्ति कान्तकुन्तलकेशपाशदर्शनमात्रेण भैमी कामवशा भवितेति भावः । कचेन । जात्येकवचनम् ॥ ५९ ॥

मूर्द्धप्रसाधनमाह । अनर्घ्येति ॥ अनर्घ्यरत्नौघमयेन अमूल्य-दिव्यमाणिक्यादिरत्नघटितेन मुकुटेन मूर्द्धनि मण्डितो राजा स नलः हि यस्माद्वनीपकानां याचकानां अतिधनदानात् कल्प-भूरुहः कल्पवृक्षस्ततो हेतोः मञ्जुमञ्जरीं कल्पवृक्षोचितां रम्यां रत्नाङ्कुरपरम्परां विमुञ्चनुद्गिरन्निव रराज । वृक्षो हि बाल-पल्लवपुष्पफलयुक्तां मञ्जरीमुद्गिरति । कल्पवृक्षस्य मञ्जरी रत्न-फलत्वाद्रत्नमयी। मञ्जरीस्थाने मुकुटरत्नकिरणा वा । मञ्जर्या-कारा मुकुटमणिकिरणा ऊर्द्धं निर्गच्छन्तीत्यर्थः । अर्घमर्हतीत्यर्थे दंडादित्वाद्यः । मञ्जरीरिति च पाठः ॥ ६० ॥

भालप्रसाधनमाह । नलस्येति । रत्नखचिताया वीरसम्ब-

तदा शशाङ्काधिकरूपतां गते
तदानने मातुमशक्नुवन्निव॥ ६१॥
बभूव भैम्याः खलु मानसौकसं
जिघांसतो धैर्य्यभरं मनोभुवः।

न्विन्या वीरपुरुषधार्य्यया वीरपट्टिकानाम्ना वाऽऽख्यातया: सुवर्णपट्टिकाया: श्रवणयुगपश्चाद्भागमात्रव्यापिन्या मिषेन व्याजेन नलस्य भाले ललाटे लग्नः सन् विधोश्चन्द्रस्य परिवेषो बभौ। मुखचन्द्रेऽपि चेत् परिवेशः सम्पूर्णमण्डले किमिति न दृश्यत इत्यत आह। किं कुर्व्वन्निव। तदा प्रियासङ्गमकाले भूषणकाले च हर्षवशाद्भूषणवशाच्च शशाङ्काधिकरूपतां चन्द्रापेक्षयाधिकपरिमाणत्वं गते प्राप्ते तदानने मातुं तुल्यप्रमाणताञ्च प्राप्तुमशक्नुवन्निव। अल्पपरिमाणस्य यदलङ्करणं तदधिकपरिमाणस्यैकदेश एव तिष्ठति न तु सर्व्वं मण्डयितुं शक्नोति तस्मात् मुखैकदेशे भाल एव परिधिः स्थित इति युक्तमिति भावः। मणिकिरणानां मण्डलाकारत्वेन पट्टिकायाः परिवेशाकारत्वं युक्तम्। अशक्तिमुद्वहन्निति च पाठः ॥ ६१ ॥

श्लोकत्रयेण तिलकं वर्णयति। बभूवेति। मनोभुवो धनुःसमीपे सम्भृता सञ्जीकृता उपभ्रु भ्रुवोः समीपे तस्य नलस्य वर्त्तुलं चित्रं तिलकरूपिणी गुलिकेव मृन्मयगोलक इव बभूव। किम्भूतस्य। भैम्या मानसौकसं मनसि वर्त्तमानं धैर्य्यभरं धैर्य्यबा-

उपभ्रतद्वर्त्तुलचित्ररूपिणी
धनुःसमीपे गुलिकेव सम्भृता ॥ ६२ ॥
अचुम्बि या चन्दनविन्दुमण्डली
नलीयवक्त्रेण सरोजतर्जिना ।

हन्तासय च धैर्यभरमेव मानसमर्गानिवामिनं हंसं पचिलान्न-विद्यते धैर्य्यभरो यस्येवंविधं वा हंसं जिघांसतो हन्तुमिच्छतः। भुवोः कामधनुस्त्वं तिलकस्य च गुलिकात्वं। भ्रूसमीपस्थितवर्त्तु-लतिलकदर्शनमात्रेण भैमी कामवशा भविष्यतीति भावः। अन्यो ऽपि हंसं हन्तुमिच्छन् चत्रियो धनुषि गुलिकां सन्धत्ते। राज्ञश्च तिलको वृत्तो वर्त्तुलो नृपवैश्ययोरिति वचनात्। मानसौक-स्त्वात्मेत्यायां खलु। चित्रं स्यादद्भुतालेख्यतिलकेष्विति विश्वः। चित्रश्च तद्रूपश्चेति कर्म्मधारयादिनिर्वा। चित्ररूपतेति वा पाठे तिलकस्वरूपतेत्यर्थः ॥ ६२ ॥

अचुम्बीति। वृत्तत्वादिना गुणेन सरोजतर्जिना कमलजैत्रेण तदधिकेनापि च कमलतर्जनवशादेव चन्द्ररूपेण नलीयेन व-क्त्रेण या चन्दनविन्दुमण्डली मण्डलाकारश्चन्दनतिलकः अचुम्बि विधृता, तथा चन्दनविन्दुमण्डल्या चन्द्रस्येव सखी श्रियं श्रिता सलक्ष्मीका का चन रोहिण्यादिमध्ये तारका शशांकवर्त्तिनी मध्यवर्त्तिनीकृता। तथा चन्द्रमध्यवर्त्तिनी का चन सश्रीका तारका स्वस्य सखी सहचरी कृता सा तत्तुल्या जातेत्यर्थ इति वा। का चन कापि तारका सखी न कृता किन्तु या का चन

श्रियं श्रिता काचन तारका सखी-
कृता शशाङ्कस्य तयाङ्कवर्त्तिनी ॥ ६३ ॥

न यावदग्निभ्रममेत्युदूढतां
नलस्य भैमीति हरेर्दुराशया ।
स बिन्दुरिन्दुः प्रहितः किमस्य सा
न वेति भाले पठितुं लिपीमिव ॥ ६४ ॥

चन्द्राङ्कवर्त्तिनी भवेत् सा सर्व्वापि सख्येव कृतेति वा । सरोजतर्जिनश्चन्द्रस्य मध्यवर्त्तिनी रोहिण्यादिर्भवेत्तर्हि चन्दनवृत्तितिलकसरोजतर्जौ नलमुखचन्द्रस्तत्तुल्यो भवेन्न चैवमित्यर्थः । तदा तन्मुखपद्मचन्द्राभ्यामधिकतमं जातमिति भावः । काञ्चनेति पाठे अतिशयितां श्रियं श्रिता ॥ ६३ ॥

नेति । हरेरिन्द्रस्य इति एवंरूपया दुराशया अनुपपद्यमानासम्भावितचिन्तयास्य नलस्य भाले ललाटे सा भैमी किमस्ति न वेति सन्दिह्यमानरूपां लिपिं ब्रह्मलिपिं अक्षरपङ्क्तिं सन्देहनिरासाय स्पष्टं पठितुं वाचयितुं स चन्दनबिन्दुरेवेन्दुश्चन्द्रः प्रहितः प्रेषित इव इत्युत्प्रेक्षा । इति किं । भैमी यावदग्निभ्रमं अग्निप्रदक्षिणीकरणपर्य्यन्तं नलस्य उदूढतां परिणीततां भार्य्यात्वं नैति गच्छतीति । यद्यपि स्वयम्बरो जातस्तथापि यावत्सप्तपदी गमनं भैमी नलभार्य्या न भवतीतीन्द्रस्य दुराशया स बिन्दुश्चन्द्र एव प्रहितः किं । पतित्वं सप्तमे पदे इति स्मृतिप्रामाण्याद् यावदग्निभ्रमणं भैमी नलसक्तां नैति । ब्रह्मलिपेर्नि-

कपोलपालीजनितानुविम्बयोः
समागमात् कुण्डलमण्डलद्वयी।
नलस्य तत्कालमवाप चित्तभू-
रथस्फुरच्चक्रचतुष्कचारुताम्॥ ६५॥
श्रितास्य कण्ठं गुरुविप्रवन्दना-
द्विनम्रमौलेश्चिवुकाग्रचुम्बिनी।

स्वयं चन्द्रद्वारा बुद्धा तत्प्राप्त्यर्थं वयं प्रयतामह इति दूराशया लिपिवाचनार्थं प्रेषिता ललाटे स्थितश्चन्द्र इव तिलको रराज इति भावः। यावदग्निभ्रममव्ययीभावः। लिपौ। ऋदिकारादितीकारः (पा० ४।१।४५। मि० कौ) ॥ ६४ ॥

कर्णभूषणं वर्णयति। कपोलेति। तत्कालं तस्मिन्मण्डनसमये नलस्य कुण्डलमण्डलद्वयी कर्णभूषणीभूतमण्डलाकारकुण्डलद्वयी कपोलपाल्यां प्रशस्तातिस्वच्छनलकपोलयुग्मे जातौ निजौ स्वीयौ अनुविम्बौ प्रतिविम्बौ तयोः समागमात् सम्बन्धाद्धेतोश्चित्तभूरथे कामरथे स्फुरद्विलसत् चक्रचतुष्कं तस्य चारुतां सौन्दर्य्यमवाप। रथस्तुस्त्रक्रो भवति। पाली फलकं, चतुष्कं परिमाणोपाधिके सङ्ख्यार्थे। सङ्ख्यायाः सञ्ज्ञा सङ्घेति (पा० ५। १।५८) कन्। तत्र प्राणिसङ्घे यद्यपि प्रत्ययस्तथाप्यत्रौपचारिकः प्रयोगः ॥ ६५ ॥

श्रितेति। अस्य कण्ठं श्रिता मुक्तावलिः मौक्तिकहारलता आस्यमेव चन्द्रमास्तस्मात् स्रवन्ती या सुधा तस्यास्तुन्दिलं स्थूलं

अवाप मुक्तावलिरास्यचन्द्रमः-
स्रवत्सुधातुन्दिलविन्दुवृन्दताम् ॥ ६६ ॥
यतोऽजनि श्रीर्बलवान् बलं द्विषन्
बभूव यस्याजिषु वारणेन सः।

विन्दुवृन्दं तस्य भावस्तत्ता तामवाप। किम्भूतस्य। गुरूणां पित्रादीनां विप्राणाञ्च वन्दनया विनम्रा मौलिर्यस्य अत एव किम्भूता हारावली चिवुकाग्रचुम्बिनी हन्वग्रस्पर्शिनी। मुक्तानां स्थूलत्वं वर्त्तुलत्वं च सूचितं। पूर्णचन्द्रदर्शनवत्त्वद्दर्शनाद् गुर्वादीनां प्रीतिर्जातेति भावः ॥ ६६ ॥

श्लोकत्रयेण भुजभूषणं वर्णयति। यदिति। स तद्भुजो नलभुजो मुद्राभिरङ्गुलीयकैः सहितः समुद्रस्तस्य भावं अथ च दण्ड्यदण्डनादिराजधर्मपरिपालनान्मुद्रा नियमस्तत्साहित्यं बभार भेजे। ऊर्मिका दधारेति भावः। स कः। यतः यस्माद्भुजाज्जाता: श्री शोभा राज्यलक्ष्मीर्वा अजनि उत्पन्ना। तथा आजिषु यस्य भुजस्य वारणेन यत्कर्तृकेन शत्रुविमर्द्दनेन कृत्वा बलं शत्रुसैन्यं द्विषन् पराभावुकः सन् स नलो बलवानुत्साहयुक्तः शक्तियुक्तो वा बभूव। यत्कृतनिवारणेन बलवान् शत्रुसैन्यं पराभावुकोऽभूदिति वा। वाशब्दश्चार्थे। ततश्चाजिषु बलं द्विषन् स नलो यस्य यत्कर्तृकेण सङ्ग्रामेण बलवानभूदिति भावः। शत्रुसैन्यं द्विषन् स प्रसिद्धोऽतिबलोऽपि शत्रुः सङ्ग्रामेषु यस्य कर्म्मभूतस्य वारणं निराकरणे बलवान् न बभूवेति वा। आजिषु बलं द्विषन् स

अपूपुरत्तान् कमलार्थिनो घनान्
समुद्रभावं स बभार तद्भुजः ॥ ६७ ॥

प्रसिद्धः शत्रुर्यस्य सङ्ग्रामे विषये बलवान्नाभूदिति वा। वारणानामिनः स्वामी वारणेनस्थामो स च अतिप्रसिद्ध ऐरावतः स वारणेनः सः यस्य नलभुजबलं द्विषन् बलेन सह स्पर्द्धमानः सङ्ग्रामेषु बलवानभूत्। हीनबलोऽप्युत्तमैतद्भुजबलस्पर्द्धया बलवत्त्वप्रतिष्ठां लेभे। वरं विरोधोऽपि समं महात्मभिरितिन्यायादिति भाव इति वा। सङ्ग्रामेषु बलं दैत्यं पराभावुकः स इन्द्रोऽपि यस्याजिषु येन भुजेन सह सङ्ग्रामे बलवान्नाभूत् इन्द्रादप्ययं बलीति भाव इति वा। बवयोरभेदाद्वलनं वलः पलायनं तद्वा, सङ्ग्रामेषु यत्कृतेन निवारणेन स बलारातिरपि बलवान् पलायनपरोऽभूत् न तु स्थातुं शक्त इति वा। यत्करस्तानतिप्रसिद्धान् घनान् बहून् कमलां लक्ष्मीमर्थयन्ते एवं शीलान् याचकान् अपूपुरत् परिपूर्णांश्चकार अतिवदान्य इत्यर्थः। बहून् सुन्दरवधूकाङ्क्षिणो वरान् यः पपार, बहवो ब्राह्मणा येन विवाहिता इत्यर्थ इति वा। अथ च सागरत्वं भेजे यस्मात्सागराल्लक्ष्मीरजनि यदुत्पन्नेन वारणेनैरावताख्येन सबलारातिः आजिषु बलवानभूत्। यश्च तृष्णार्थं जलाभिलाषिणो मेघान् पूरयति। रामनामाद्यङ्किता मुद्रिका मुद्रा। यदुद्भुता, पपार यस्तानिति च पाठः। सलिलं कमलं जलमित्यमरः। कमला श्रीवरस्त्रियोरिति विश्वः। वलनं वलः।

कृतार्थयन्नर्थिजनाननारतं
बभूव तस्यामरभूरुहः करः ।
तदीयमूले निहितं द्वितीयवत्
ध्रुवं दधे कङ्कणमालवालताम् ॥ ९८ ॥
रराज दोर्मण्डनमण्डलीजुषोः
स वज्रमाणिक्यसितारुणत्विषोः ।

चङ्क्रमणे कविधानात्कः । अपूपुरदिति पूरयते र्लुङि ह्रस्वे, दीर्घो लघोरिति (पा॰ ७।४।९४) अभ्यासस्य दीर्घः । पपार, पृधातोः पूरणार्थाल्लिट्, इटं बाधित्वा परत्वाद् वृद्धिः ॥ ९७ ॥

कृतेति । तस्य करः अमरभूरुहः कल्पवृक्षो यतः बभूव । किं कुर्व्वन् अर्थिजनान् याचकलोकान् बहुधनदानादनारतं सदा कृतार्थयन् प्राप्तप्रयोजनान् कुर्व्वन् । तस्मात्मणिबन्धरूपे तदीयकरमूले निहितं स्थापितं द्वितीयवद्वितीयेन वैवाहिकेन सूत्रमयेन माङ्गलिकेन कङ्कणेन युक्तम् मीवर्ण कङ्कणमालवालतां दधे तदीयकरकल्पतरोः कङ्कणमालवालस्थाने जातमित्यर्थः । वृक्षमूले चालवालद्वयं भवति । मिलितमुद्रिकाद्वयवत् द्वयोर्मिलितयोर्घटनात् द्वितीयवदिति वा । ध्रुवमुत्प्रेक्षायाम् । विनिवेशितं तदेति पाठः साधुः ॥ ९८ ॥

रराजेति । स नलः रराज । किं कुर्व्वन्निव । दोर्मण्डनं बाहुभूषणं तस्य मण्डलीं श्रेणीं जुषेते इति जुषी तयोरङ्गदादिवर्त्तुलबाहुभूषणाश्रयोर्वज्रमाणिक्यानां क्रमेणसितारुणत्विषोः

सितेतरै वर्षन् दशदिङ्मुखोन्मुखौ
यशःप्रतापाववनीजयार्जितौ ॥ ६९ ॥

घने समस्तापघनावलम्बिनां
विभूषणानां मणिमण्डले नलः ।
स्वरूपरेखामवलोक्य निष्फली-
चकार सेवाचणदर्पणार्पणम् ॥ ७० ॥

सितेतरैर्हीरेतरैः माणिक्यादिभिः सितेतरकदीप्तिभिर्वा सितेतरैर्दिगादिकर्माच्छादितप्राच्यादिदशदिङ्मुखानामुन्मुखौ तत्र प्रसरन्तौ अवनीजयेनार्जितौ क्रमेण यशःप्रतापौ वर्षन् प्रसारयन्निव। हीरकमाणिक्यानां मण्डनाश्रितत्वात् तद्दीप्त्योरपि मण्डनाश्रितत्वं युक्तं। यशःप्रतापौ सितरक्तशोभाविति कविसङ्केतः। इवाध्याहारः ॥ ६९ ॥

घन इति। नलः समस्ता ये अपघनाः हस्तमस्तकाद्यङ्गानि तानवलम्बन्ते एवं शीलानि तत्र स्थितानि तेषां विभूषणानां घने सान्द्रे मणिमण्डले रत्नसङ्घे स्वरूपस्य स्वाकारस्य रेखां परमां शोभां स्वलावण्यपरमां मर्यादां वावलोक्य सेवायां चणाः प्रसिद्धाः सेवाचतुरा नापितादयस्तेषां दर्पणार्पणं प्रतिबिम्बदर्शनार्थं मुकुरार्पणं निष्फलीचकार। आदर्शकृत्यस्य रत्नैरेव कृतत्वादिति भावः। मङ्गलमादर्श इति बुद्ध्या तैर्दर्पणं आनीतं तेन च विलोकितं इति तेषां सेवाचातुर्यं। सेवाचणेति तेनवित्त (पा० ५।२।२६) इति चणप् ॥ ७० ॥

व्यलोकि लोकेन न केवलं चलन्-
मुदा तदीयाभरणार्पणद्युतिः।
अदर्शि विस्फारितरत्नलोचनैः
परस्परेणैव विभूषणैरपि ॥ ७१ ॥
ततोऽनु वार्ष्णेयनियन्तृकं रथं
युधि क्षतारिक्षितिभृज्जयद्रथः।

व्यलोकीति। चलन्तो व्याघुट्य व्याघुट्योत्पद्यमाना मुत् यस्य तेन निरन्तरहर्षेण लोकेन तदीयानां तस्यीयानां आभरणानां अर्पणद्युतिः संस्थानविशेषे स्थापनजनिता शोभा केवलं न व्यलोकि किन्तु विस्फारितानि प्रसारितकिरणानि रत्नान्येव लोचनानि येषामेवंविधैर्विस्फारितैरत्नलोचनैः कृत्वा वा अचेतनैर्विभूषणैरपि परस्परेणान्योन्यस्यादर्शीव विलोकितेव अन्योन्यशोभाविलोकनार्थं अचेतनैरपि तैर्नेत्राणि प्रसारितानीत्यर्थः। आभरणशोभा सर्व्वैर्विलोकिता मण्डनमात्रस्य खचितरत्नमिति भावः ॥ ७१ ॥

तत इति। ततो भूषणधारणादनु पश्चात् स सन्तो नृपः वार्ष्णेयनामा नियन्ता सारथिर्यस्य, अथ च कृष्णः सारथिर्यस्य तं रथं किरीटवान् सहजकिरीटयोगात् किरीटिनामा पृथासूनुरर्जुन इवारूढवान्। किम्भूतो सन्तो अर्जुनश्च। युधि क्षताः भङ्गं प्रापिताः अरिक्षितिभृतां वैरिनृपाणां जयन्तो जयदातारो ऽपि रथा येन। क्षतवैरिनृपसामी जयद्रिपुरथो यस्येति वा। क्षता

नृपः पृथासूनुरिवाधिरूढवान्
स जन्ययात्रामुदितः किरीटवान् ॥ ७२ ॥
विदर्भनाम्नस्त्रिदिवस्य वीक्षितुं
रसोदयादप्सरसस्तमुज्ज्वलं ।
गृहाद्गृहादेत्य धृतप्रसाधना
व्यराजयन् राजपथाननर्घाधिकं ॥ ७३ ॥

वैरिनृपाणां जयन्तो रथा लक्षणया अर्शआदित्वाद्वा महारथा-तिरथार्द्धरथप्रमुखा योधा येनेति वा । अर्जुनपक्षे युद्धे हतो ऽभिमन्युवधादरिः शत्रुभूतः क्षितिभृद्राजा जयद्रथो येन । क्षतोऽरीणां कौरवाणां सम्बन्धी राजा जयद्रथो येनेति वा । तथा जनी वधूर्महती जन्यो वरस्तत्सम्बन्धिन्यां यात्रायां मुदितो हृष्टः । जन्या वरपक्षीयास्तैः सह यात्रया वा हृष्टः । अथ च युद्धसम्बन्धिन्यां विजययात्रायां हृष्टः । तथा मुकुटेन मण्डितः, वरयात्रार्थं निर्गत इत्यर्थः । वार्ष्णेयः । वृष्णेरपत्यं, इतश्चानिञ (पा० ४।१।१२२) इति ढक् । नियन्तृकं । नद्यृतश्चेति (पा० ५।४। १५३) कप् ॥७२॥

इदानीं वरसन्दर्शनार्थं पुरनारीसम्भ्रममाह । विदर्भेति । अथ रथारोहणानन्तरं विदर्भेति नाम त्रिदिवस्य कुण्डिनरूपस्य स्वर्गस्याप्सरसः सुन्दरनार्य एव स्वर्वेश्या उज्ज्वलं प्रकाशमानं मूर्त्तं शृङ्गाररूपं वा तं नलं रसोदयदर्शनानुरागाभिवृद्धिहेतो र्वीक्षितुं विशेषेण द्रष्टुं धृतप्रसाधनाः सालङ्काराः सत्यः गृहात्

अजानती कापि विलोकनोत्सुका
समीरधूतार्द्धमपि स्तनांशुकं ।
कुचेन तस्मै चलतेऽकरोत् पुरः
पुराङ्गना मङ्गलकुम्भसम्भृतिं ॥ ७४ ॥
सखीं नलं दर्शयमानयाङ्कतो
जवादुदस्तस्य करस्य कङ्कणे ।

गृहाद्देत्यागत्य निसर्गरम्यान् राजपथान् अधिकं नितरां व्यराजयन् तद्योगात्तेऽप्यधिकं शुशुभिरे इत्यर्थः । तासामति-सौन्दर्य्यमुक्तम् । सर्व्वाऽपि तद्दर्शनार्थमागता इति भावः ॥ ७३ ॥

अजानतीति। नलस्य दर्शनोत्सुका अत एव समीरेण धूतार्द्धं कम्पितार्द्धमपि स्तनांशुकं चोलकाख्यं कुचावरणवस्त्रं अजानती अनावृण्वती कापि पुराङ्गना चलते वरयात्रोन्मुखाय तस्मै नलाय पुरोऽग्रभागे कुचेन कृत्वा मङ्गलकुम्भस्य शुभसूचकशकु-नरूपपूर्णकुम्भस्य सम्भृतिं सम्भारमुपढौकनमकरोत्। समीरधूतेत्य-नेनाचेतनस्याप्यनुरागोत्पादना कुचस्यातिसौन्दर्य्यमिति च व्य-ज्यते। वरस्य च पुरः पूर्णकलशदर्शनेन शुभाय भवति। तस्मै। क्रियया यमभिप्रैति स सम्प्रदानं ॥ ७४ ॥

सखीमिति। सोऽयं नलः समागच्छतीत्येवं करेण सखीं नलं दर्शयमानया दर्शयन्त्या कयापि प्रदर्शनार्थमेवाङ्कत उत्सङ्गात् सकाशाज्जवाद्वेगादुदस्तस्य करस्य सुवर्णहीरकधारातीक्ष्णा-

विषज्य हारैस्त्रुटितैरतर्कितैः
कृतं कयापि क्षणलाजमोक्षणं ॥ ७५ ॥
लसन्नखादर्शमुखाम्बुजस्मित-
प्रसूनवाणीमधुपाणिपल्लवम्।
यियासतस्तस्य नृपस्य जज्ञिरे
प्रशस्तवस्तूनि तदेव यौवतं ॥ ७६ ॥

ग्रभागे कङ्कणाख्ये भूषणे विषज्य वेगाभिघातवशाल्लगित्वा त्रुटितैस्छिन्नैर्हारैर्मत्तविलोकनरसादतर्कितैरज्ञातविच्छेदाधःपतनैर्हारैस्तदीयमुक्ताफलैः कृत्वा क्षणमात्रं क्षणं उत्सवस्तत्सम्बन्धि वा लाजमोक्षणं कृतम्। अन्यरमणीनिरन्तरक्रियमाणलाजमोक्षणमध्ये मौक्तिकमोक्षणमपि तद्भ्रमकार्य्यभूदित्यर्थः। दर्शयमानया। णिचश्चेति(पा॰१।३।७४)कर्त्रभिप्राये क्रियाफले शानचि हृक्रोरित्यत्र अभिवादिदृशोरात्मने पदे चेति वक्तव्यात् (पा॰ १।४।५३।वा॰) द्विकर्म्मकत्वात् सखीमिति कर्म्मत्वं। सखीरिति वा पाठः॥ ७५ ॥

लसदिति। तत् युवतीनां समूहो यौवतमेव यियासतो वरयात्रोन्मुखस्य तस्य नृपस्य प्रशस्तवस्तूनि शुभसूचकमङ्गलद्रव्याणि जज्ञिरे। किम्भूतं। नखा एवादर्शा मुखान्येवाम्बुजानि स्मितान्येव प्रसूनानि पुष्पाणि वाण्य एव मधूनि पाणय एव पल्लवानि इतरेतरयोगद्वन्द्वः समाहारो वा लसन्तः स्फुरत्कान्तयो नखादर्शादयो यस्य तत्। एवंविधपुरनारीदर्शनाद्भैमी-

करस्थताम्बूलजिघत्सुरेकिका
विलोकनैकाग्रविलोचनोत्पला ।
मुखे निचिक्षेप मुखद्विराजता-
रुषेव लीलाकमलं विलासिनी ॥ ७७ ॥

पाणिग्रहो नितरां मम शुभायैव भवितेति तस्य बुद्धिरुदभूदिति भावः । अतिसौन्दर्यं तासां सूचितं । दध्याज्यादर्शादिदर्शनं शुभावहमिति वसन्तराजग्रन्थे ज्ञातव्यम् । आरोप्यमाणस्य प्राधान्यात्क्लीबे इति बहुवचनम् ॥ ७६ ॥

करेति । एकिका कापि विलासिनी पुरनारी करस्थं ताम्बूलं जिघत्सुर्भक्षयितुमिच्छुः सती करस्थलीलाकमलं मुखे निचिक्षेप । यतो नलविलोकने विषये एकाग्रे तत्परे विलोचनोत्पले यस्याः सा । ताम्बूलभ्रान्त्या कमलं मुखे निक्षिप्तमित्यर्थः । कथेव मुखलक्षणे राजनि विद्यमाने कमलस्य द्वितीया राजता तया जातया रुट् क्रोधस्तयेव उत्तमेन मन्मुखेन सहैतत् स्पर्द्धत इति क्रोधादिव मुखे कमलं निक्षिप्तमित्यर्थः । नलसौन्दर्यातिशयदर्शनेन विमनस्कतोक्ता । जिघत्सुः । लुङ्सनोरित्यादिना (पा० २।४।३७) घसादेशः, घस्लृ अदन इत्येतस्माद्वा सनन्तादुः । न लोकेति (पा० २।३।६९) षष्ठीनिषेधात्ताम्बूलं जिघत्सुरिति द्वितीयेति योगविभागात् समासः ॥ ७७ ॥

कयापि वीक्षाविमनस्कलोचने
समाज एवोपपतेः समीयुषः ।
घनं सविघ्नं परिरम्भसाहसै-
स्तदा तदालोकनमन्वभूयत ॥ ७८ ॥
दिदृक्षुरन्या विनिमेषवीक्षणा
नृणामयोग्यां दधती तनुश्रियं ।

कयेति । कयापि स्वैरिण्या वीक्षया नलदर्शनेन विमनस्के त्यक्तविषयान्तरे लोचने यतस्तस्मिन् समाजे जनसङ्घे एव समीयुषः समागतस्योपपतेर्जारस्य परिरम्भे आलिङ्गनविषये साहसैर्निर्विचारिभिः निर्भयप्रवर्त्तनैः कृत्वा तदा नलविलोकनसमये तदालोकनं नलदर्शनं घनं नितरां सविघ्नं यथा तथान्वभूयत । जारकर्तृकैर्जारकर्मकैर्वा आलिङ्गनैर्व्यवधानतया नलः सम्यक् नादर्शीत्यर्थः । तदा तदाचित् कदाचित्कृतत्वान्नलस्यालोकनं कृतं न तु निरन्तरमिति वा । देवयात्रावरयात्रादिके जारादीनां कामशास्त्रे समय उक्तः ॥ ७८ ॥

दिदृक्षुरिति । नलदिदृक्षुरत एव दर्शनानुरागवशेन विगतपक्ष्मसङ्कोचे वीक्षणे विशिष्टे नेत्रे यस्याः सा । तथा नृणां भूलोकवासिनामयोग्यां दिव्यां तनुश्रियं दधती अन्या काचिन्नारीत्यं प्राप्तदेवाङ्गनासाम्यापि दर्शनौत्सुक्यात् पदाग्रमात्रेणैव यद्यस्मान्महीमस्पृशत् तावता केवलं तावन्मात्रेणैव नाप्सरोऽभवत् । अप्सरसोऽप्यनिमेषनेत्रां अमनुष्यां दैवैकभोग्यां कायकान्तिं

पदाग्रमात्रेण यदस्पृशन्मही
न तावता केवलमप्सरोऽभवत् ॥ ७८ ॥
विभूषणस्रंसनशंसनार्पितैः
करप्रहारैरपि धूननैरपि ।

विबुधाः पदैकदेशेनापि भूमिं न स्पृशन्ति, इयं तु निर्निमेषदर्शनात्मकतयाङ्गुष्ठादिमात्रेण केवलं भूमिं स्पृशती तेनैव धर्मेण तत्तुल्या नाभूत् अन्यत् सर्व्वं सादृश्यमेवेत्यर्थः । अप्सरोऽभवदिति । अप्सरःशब्दस्य बहुत्वेऽपि अन्येत्यपेक्षयाऽभवदित्येकवचनमपि युक्तम् । आपः सुमनसो वर्षा अप्सरसः सिकताः समाः । एताः स्त्रियां बहुत्वे स्युरेकत्वेऽप्युत्तरत्रमिति वचनादेकवचनान्तादप्सरःशब्दात् न च्विः । बहुजनपृष्ठवर्त्तिनो भित्त्यादिव्यवहिता वा पदाङ्गुष्ठमात्रेण भुवं स्पृशन्तः प्रोन्नमिताङ्गाः पश्यन्तीति दिदृक्षूणां स्वभावः ॥ ७८ ॥

विभूषणेति । अपरा अन्तःकरणे शरीरमध्ये असान्तं सम्मदं शरीरमानाधिकमानं वहिरवस्थितं नलदर्शनजं प्रमोदं विभूषणानां स्रंसनस्य शंसने तव मण्डनं गलितं तव मण्डनं गलितमिति प्रत्येकं कथने विषयेऽपि तैर्दत्तैः करप्रहारैरपि धूननैरपि तच्छरीरकम्पनैश्च कृत्वा प्रसभं बलात्कारेण स्वसखीषु पुरा सम्प्रापयतीव प्रावीविशदिव, विचित्तत्वेन शब्दमशृण्वन् करेण ताड्यते पतितविस्मृतभूषणादिसंवेदनाय कम्प्यते चेति। तथान्यदपि कुसूलमानमध्याद्व्रीधूमादि वहिरवसंस्थितं सत्

अमान्तमन्तःप्रसभं पुराऽपरा
सखीषु सम्प्रापयतीव सम्मदं ॥ ८० ॥

वतंसनीलाम्बुरुहेण किं दृशा
विलोकमाने विमनीबभूवतुः।
अपि श्रुती दर्शनसक्तचेतसां
न तेन ते शुश्रुवतुर्मृगीदृशाम् ॥ ८१ ॥

बलात्कारेण करताडनैः करकृतैर्धूननैश्चान्तर्माप्यत इति च लौकिकी रीतिः। नलदर्शनानुरागादतिविमनस्का जाता इति भावः। पुरा सम्प्रापयतीति। पुरि लुङ्चास्मे (पा० ३।२।१२२) इति भूते लट् ॥ ८० ॥

विभूषणभ्रंशशब्देन किमिति ज्ञापित इत्यत आह। वतंसेति। नलदर्शने सक्तं चेतो यासां मृगीदृशां श्रुती कर्णावपि वतंसनीलोत्पलेन कर्णभूषणनीलाम्बुरुहेणेव दृशा नेत्रेण नलं विलोकमाने सत्यौ यस्माद्विमनीबभूवतुर्व्याकुले जाते तेन हेतुना ते श्रुती किं भूषणस्रंसनं न शुश्रुवतुः। चक्षुषी किल श्रवणानर्हत्वान्न शृणुतां, कर्णौ तु श्रोतुं योग्यावेवेत्यपेरर्थः। ताः सुदृशो यथा नलविलोकनेन विमनस्का जातास्तथा तत्कर्णावपि विमनस्कौ जाताविति वा अपेरर्थः। विमनीबभूवतुः। अरुर्मनश्चक्षु (पा० ५।४।५१) इति च्विः। सलोपश्च ॥ ८१ ॥

काश्चिन्निर्माय चक्षुःप्रहतिचुलुकितं तास्वशङ्किष्ट कान्ता
मौग्ध्यादाचूडमोघैर्निचुलितमिव तं भूषणानां मणीनाम् ।
साहस्रीभिर्निमेषाकृतमतिभिरयं दृग्भिरालिङ्गितः किं
ज्योतिष्टोमादियज्ञश्रुतफलजगतीसार्वभौमभ्रमेण ॥ ८२ ॥

काश्चिदिति । पश्यन्तीषु तासु मध्ये कान्ताः सुन्दर्य्यः काश्चित्पुरनार्य्यः भूषणानां ये मणयः तेषां भूषणभूतानां वा मणीनां रत्नानामोघैः समूहैः आचूडं शिखामभिव्याप्य निचुलितमाच्छादितमिव तत्र बुडितमिव तं नलं चक्षुःप्रहतिभ्यां अर्द्धसङ्कुचितकरकुड्मलाभ्यां चुलुकितं पीतं निर्म्माय कृत्वा प्रहृतिप्रमाणाभ्यामतिविशालाभ्यां चक्षुर्भ्यां सादरं दृष्टिं कृत्वा इति मौग्ध्यादनैपुण्यादशङ्किष्ट तर्कयामासुः । इति मौग्ध्यं किं । निमिषे पक्ष्मसङ्कोचेऽकृतमतिभिरनिमिषाभिः साहस्रीभिः सहस्रसङ्ख्याभिर्दृग्भिर्दृष्टिभिर्ज्योतिष्टोमराजसूयादियज्ञानां वेदाच्छ्रुतं यत्फलं साध्यं तद्रूपा या जगती भुवनं स्वर्गस्तस्याः सार्व्वभौमश्चक्रवर्त्तीन्द्रस्तस्य भ्रमेणायं नल आलिङ्गितः स्पृष्टः किं । अचेतनैरपि रत्नैश्चसहस्रैर्नेत्रवत्त्वादिन्द्रोऽयमिति भ्रान्त्या इन्द्रस्य सहस्रनेत्रत्वादनेनाप्यस्माभिः सम्बन्धं युक्तमिति बुद्ध्या समालिङ्गितः । किमिति उत्प्रेक्षा । एतदेव च मौग्ध्यं सौन्दर्य्यं रत्नबाहुल्यं चोक्तं । सहस्रशब्दो यज्ञेऽपरिमितवाची । सहस्रं परिमाणं यासां ताः साहस्र्यः तदस्य परिमाणमित्यर्थे, शतमानविंशतिकसहस्रवसनादण्णित्यण् (पा० ५।१।२७) ॥ ८२ ॥

भवन् सुद्युम्नः स्त्री नरपतिरभूद्यस्य जननी
तमुर्वश्याः प्राणानपि विजयमानस्तनुरुचा ।
हरारब्धक्रोधेन्धनमदनसिंहासनमसा-
वलंकर्म्मीणश्रीरुदभवदलङ्कर्त्तुमधुना ॥ ८३ ॥

भवन्निति । सूर्य्यनप्ता मनोः पुत्रः सुद्युम्नाख्यो नरपतीराजा पार्व्वतीवनप्रवेशनिमित्तेन शिवशापनेन हेतुना इलाख्या स्त्री भवन् स्त्रीत्वं प्राप्तः सन् बुधाद्गर्भधारणेन यस्य जननी अभूत् । उर्वश्याः प्राणान् रूपातिशयात् स्वर्वेश्यायाः प्राणभूतं प्राणप्रियमतिसुन्दरं तं पुरूरवसमपि तनुरुचा कायकान्त्या विजयमानः पराभावुकोऽसौ नलः अधुनेदानीं हरेणारब्धः कृतः क्रोधस्तस्येन्धनं दाह्यो मदनस्तस्य सिंहासनं दग्धत्वात्कामेन शून्यमलङ्कर्त्तुं योग्यतया भूषयितुं अलङ्कर्म्मीणा कर्म्मक्षमातिसमर्था स्वाभाविकी भूषणजनिता च श्रीः शोभा यस्यासौ एवम्भूत उदभवत् जात इति परस्त्रिय आत्मपुरित्यन्तिमश्लोकेन सम्बन्धः । जीर्णः कामो दग्धः पुरूरवास्त्वनेनैव जितः तस्मात् शून्यं कामसिंहासनं भूषयितुमयं काम एवोत्पन्नः । अतिसुन्दरोऽयमिति भावः । कृतयुगादौ तु इलो नाम राजा मृगयासक्त्याद्धरनिवारितमुमावनमेकाकी प्रविष्टः स्त्री बभूव । तामेकाकिनीं सुन्दरीं दृष्ट्वा चन्द्रपुत्रो बुधः कामातुरः सन् स्वाश्रमं नीत्वा तस्यां पुरूरवोनामानं पुत्रमजीजनदिति भविष्योत्तरपुराणे कथा । विजयमानः । विपराभ्यामिति (पा० १।३।१९) शानच् । कर्म्मक्षमोऽलङ्कर्म्मीण इत्यमरः ॥ ८३ ॥

अर्थी सर्व्वसुपर्व्वणां पतिरसावेतस्य यूनः क्रते
पर्य्यत्याजि विदर्भराजसुतया युक्तं विशेषज्ञया ।
अस्मिन्नाम तया वृते सुमनसः सन्तोऽपि यन्निर्ज्जरा
जाता दुर्मनसो न सोढुमुचितास्तेषां तु सानौचिती ॥८४॥
अस्योत्कण्ठितकण्ठलोठिवरणास्रक्सारभिर्दिग्धवैः
स्वं वक्षः स्वयमस्फुटन्न किमदःशस्त्रादपि स्फोटितं ।

अर्थीति । विशेषज्ञया गुणानामधिकतरत्वं विदुष्या विदर्भराजपुत्र्या अर्थी मां वृणोष्वित्यर्थयमानः सानुरागोऽप्यसौ सर्व्वसुपर्व्वणां सर्व्वदेवतानां पतिरिन्द्रोऽपि एतस्य प्रत्यक्षलक्ष्यातिसौन्दर्य्यस्य यूनः पूर्णतारुण्यस्य नलस्य क्रते निमित्तं पर्य्यत्याजि। सानुरागत्वे प्रभुत्वेऽपि सौन्दर्य्यादिगुणानां न्यूनत्वाद्यत् परित्यक्तस्तद्युक्तमुचितमेव क्रतमित्यर्थः । नाम प्राकाश्ये, तु पुनर्निर्जरा इन्द्रादयस्तत्तारेऽपि देवाः श्रिष्टा नाम प्रसिद्धाः शोभमानान्तःकरणा अपि सुमनसः प्रसिद्धाः सन्तोऽपि वा सुमनस इति सञ्ज्ञया ख्याताः सन्तोऽपि तया भैम्या अस्मिन्नले वृते सति यद्दुर्मनसः सविषादमनसो जाताः सा तेषामनौचिती अनुचितकारिता, सोढुं चन्तुं नोचिता न युक्ता । न हि साधुभिः कार्य्यवशादपि स्वधर्मः परित्यज्यते, एतैस्तु परित्यक्तमतः पं न सहामह इत्यर्थः । क्रतेऽव्ययम् ॥ ८४ ॥

अस्येति । अस्य नलस्य चिरकालं वरणमालाशेषार्थमुत्कण्ठिते कण्ठे लोठिन्यास्तलन्त्या हृदयावलम्बिन्या वरणस्रजः

व्यावृत्योपनतेन हा शतमखेनाद्य प्रसाद्या कथं
भैम्या व्यर्थमनोरथेन च शची साचीकृतास्याम्बुजा ॥ ८५ ॥

साक्षिभिः प्रत्यक्षदर्शिभिर्दिग्धवैश्चतुर्भिरिन्द्रादिभिर्दिक्पालैस्त्र-पाभावात् स्वयमस्फुटदविदीर्यमाणमपि स्वं वक्षः अमुष्य नलस्य शस्त्रादपि हेतोः किमिति न स्फोटितं विदारितं नलेन सार्द्धं भैम्यर्थं युद्धमपि कृत्वा किमिति न मृतं। शूराणां रणे मरणमपि यशसे भवति न तु लज्जापरित्याग इति भावः। छुरिकादि-प्रक्षेपेण स्वयमेव वा किमिति न स्फोटितमिति वा। अग्न्यादय-स्तावत्तिष्ठन्तु हा सापत्नमं कष्टं अद्य भैम्यां विषये व्यर्थमनोरथेन सता व्यावृत्य परावृत्य उपनीतेन शचीसमीपे प्रणामवशान्न-म्रेण शतमखेन शतयज्ञकरणलब्धस्वर्गाधिपत्येन देवेन्द्रेणापि शचीन्द्राण्यपि च कथं प्रसाद्यानुनेतुं शक्या। यतः कोपवशादव-ज्ञावशाद्वा साचीकृतं वक्रीकृतमास्यमेवाम्बुजं यया। सम्मुखान-वलोकनात् प्रसादनार्थमनेन कृतमपि प्रणामाञ्जल्यादिकं न द्रक्ष्यति ततः कथं प्रसाद्या। भैमी न लब्धा शची च रुष्टेत्युभय-भ्रंशोऽपि जातमितीन्द्रस्य महत् कष्टं जातमिति भावः। दिक्षु भटैः शूरैर्नृपैः स्वं वक्षः किमिति न स्फोटितं। नृपा मनुष्या-स्तिष्ठन्तु देवेन्द्रस्यापीदृशी दशा जातेति वा। उपगतेति पाठे शचीसमीपे गतेनेत्यर्थः ॥ ८५ ॥

मा जानीत विदर्भजामविदुषीं कीर्त्तिं मुदः श्रेयसीं
सेयं भद्रमचीकरन्मघवता न स्वं द्वितीयां शचीं।
कः शच्या रचयाञ्चकार चरितं काव्यं स नः कथ्यता-
मेतस्यास्तु करिष्यते रसधुनीपात्रे चरित्रे न कैः॥ ८६॥

मा जानीतेति। भोः सख्यो यूयं विदर्भजां मुदो हर्षात् सका-
शात् कीर्त्तिं श्रेयसीं श्रेष्ठतरामविदुषीमजानतीं मा जानीत किन्तु
हर्षापेक्षया कीर्त्तिः प्रशस्यतरेति भैमी वेत्त्येवेति जानीत। य-
स्मात् सेयं भैमी मघवता प्रयोजकेन स्वमात्मानं द्वितीयां शचीं
भद्रं साधु नाचीकरत् न कारयामास। इन्द्रे वृते तत्पत्नीला-
भ्वक्षचीशब्दवाच्यत्वं भवेत् न त्वेमा वृतस्तस्माद्वितीया शची ना-
भवदिति युक्तमेव अनया कृतमित्यर्थः। इन्द्रे वृतेऽपि कीर्त्तिर्भवि-
ष्यतीत्याशङ्क्य नेत्याह। शच्याश्चरितं कः कविः सर्गबन्धनादिरू-
पेण वर्णनात्मकं काव्यं प्रबन्धं रचयाञ्चकार स शचीवर्णनकारी सो
ऽस्माकमग्रेऽस्मभ्यं च कथ्यतां यद्यस्ति, अपि त्वनिरूपणान्नास्त्येव।
एतस्यास्तु भैम्याः पुनारसानां शृङ्गारादीनामेव रसानां जला-
नां धुनी नदी तस्याः पात्रे स्थानभूतेऽथ च रसनदीप्रवाहरूपे
शीलादिचरित्रे विषये कैः पराशरव्यासशुकादिभिः काव्यं न
करिष्यतेऽपि तु तैरपि भारतादौ तद्वर्णनकाव्यं करिष्यते किं
पुनः श्रीहर्षादिकविभिरित्यर्थः। इन्द्रवरणेन यद्यपि स्वर्गसुख-
प्राप्तिस्तथापि तत्पत्नीलाभ्वक्षचीत्वेऽपि तस्याः कुत्रचित् केनाप्यव-
र्णितत्वादिन्द्रापेक्षयाधिककीर्त्तेर्नलस्य वरणे पुण्यश्लोकत्वात् सर्वै-

वैदर्भीवङ्गजन्मनिर्म्मिततपःशिल्पेन देहश्रिया
नेत्राभ्यां स्वदते युवायमवनीवासः प्रसूनायुधः ।
गीर्व्वाणालयसार्व्वभौमसुकृतप्राग्भारदुःप्रापया
योगं भीमजयानुभूय भजतामद्वैतमद्य त्विषां ॥ ८७ ॥

रपि वर्णनीयत्वात्तत्प्रसङ्गात् स्वस्यापि वर्णनीयत्वान्महती कीर्त्ति-र्भविष्यति सा च स्वर्गसुदः सकाशाच्छ्रेयसीति विचार्य्येन्द्रपरि-त्यागद्वारा स्वर्गसुखमपि परित्यज्य भैम्या नलो वृत इति युक्त-कारित्वादेतादृशी कापि विदुषी नास्तीति भावः । दिव इति पाठे स्वर्गसुखादित्यर्थः । करिष्यते च्छान्दसत्वादिट् ॥ ८६ ॥

वैदर्भीति । हे सख्यः अवन्यां वासः स्थितिर्यस्य स प्रसूना-युध इव कामरूपोऽयं नलनामा युवा तरुणो देहश्रिया काय-कान्त्या कृत्वा पश्यन्तीनामस्माकं नेत्राभ्यां स्वदते रोचते । किम्भू-तया । वैदर्भ्या बहुजन्मभिरनेकजन्मसु वा निर्म्मितस्य कृच्छ्रचा-न्द्रायणादिजन्यस्य तपसः सुकृतस्य शिल्पेन फलभूतया । अतिसु-न्दरमम् प्रीत्यास्मन्नेत्रे पश्यत इत्यर्थः । विशिष्टया देहश्रियोप-लक्षितो वा । अशरीरोऽपि भैमीपुण्यबाहुल्यवशात् सशरीरकाम इवेति भाव इति वा । सोऽयं नलः भीमजया सह योगमद्य दा-म्पत्यसम्बन्धमनुभूय त्विषां कान्तिभराणामन्यत्रात्यन्तासत्त्वेना-द्वैतं सामस्त्यं भजतां आश्रयतु । उभयोरेकत्र मेलनादयमेव कान्तीनामाश्रयः कान्तिस्वरूपो वा भवतु नान्य इत्यर्थः । किम्भू-तया । गीर्व्वाणालये स्वर्गलोके सार्व्वभौम इन्द्रस्तस्य सुकृतप्राग्-

स्त्रीपुंसव्यतिषञ्जनं जनयतः पत्युः प्रजानामभू-
दभ्यासः परिपाकिमः किमनयोर्दाम्पत्यसम्पत्तये ।
आसंसारपुरन्ध्रिपूरुषमिथःप्रेमार्पणक्रीडया-
प्येतज्जम्पतिगाढरागरचनात् प्राकर्षि चेतोभुवः ॥८८॥

भारः पुण्यराशिस्तेनापि दुष्प्रापया अलभ्यया । शतमखजन्येन पुण्येन स्वर्गचक्रवर्त्तित्वं येन लब्धं तेनापि दुष्प्रापत्वादस्याः सौभाग्यातिशयो नलस्य चन्द्रापेक्षया सौभाग्यातिशयः पुण्यातिशयश्च गीर्व्वाणालयेत्यादिना सूचितः । अन्योऽप्यष्टाङ्गयोगमनुभूय बहुपुण्यदुष्प्रापयापि भीमात् हराज्ज्ञातया ईश्वरप्रसादलभ्यया विद्ययाऽद्वैतं परमात्मस्वरूपं भजति । नेत्राभ्यां । रुच्यर्थानामिति (पा० १।४।३३) सम्प्रदानत्वं । प्राग्भारदुःप्रापया । तृतीयेति योगविभागात् समासः ॥ ८७ ॥

स्त्रीति । स्त्रीपुंसयोः सर्व्वयोः व्यतिषञ्जनं विशेषेणातितरां सम्मेलनं जनयतः कुर्व्वतः प्रजानां पत्युर्ब्रह्मणः पुनरसंयोजनशिक्षणलक्षणोऽभ्यासोऽनयोर्नलभैम्योर्दाम्पत्यसम्पत्तये जायापतिभावस्योत्कर्षाय परिपाकिमः परिपाकेन निर्वृत्तः स्वारस्येन परिणततया कोऽभूत्किं, सर्व्वस्त्रीपुंसयोजनाभ्यासः अत्युत्तमानुरूपतदुभयसङ्घट्टेन फलितः किमित्यर्थः । तथा चेतोभुवः कामस्यापि आसंसारं संसारं मर्य्यादीकृत्य सर्गादिमारभ्य प्रलयपर्य्यन्तं पुरन्ध्रिपूरुषयोः स्त्रीपुंसयोर्मिथः प्रेमान्योन्यमनुरागस्तस्यार्पणमासञ्जनं तदेव सदा मनोविनोदनरूपा क्रीडा लीला तयापि

ताभिर्दृश्यत एष यान् पथि महाज्यैष्ठीमहे मन्महे
यद्दृग्भिः पुरुषोत्तमः परिचितः प्राग्मञ्चमञ्चन् कृतः।

एतज्जम्पत्योरनयोर्नलभैमीरूपयोर्गाढस्नेहेणाप्यनेन यस्य मिथोऽनुरागस्य रचनाज्जननाद्धेतोः प्राकर्षि प्रकृष्टकाष्ठापन्नया जातं। अनुरागजननक्रीडाया प्रकर्षोऽत्रैव विश्रान्तः। उत्तरत्राप्येवमनुरागस्याभावादित्यर्थः। एतादृशौ स्वरूपौ समानानुरागौ चान्यौ स्त्रीपुंसौ कालत्रयेन स्त इति भावः। व्यतिषक्तं। उपसर्गात् सुनोतीति (पा० ८।३।६५) षत्वं। परिपाकिमः। भावप्रत्ययान्तात्, पृथ्वादिभ्य (पा० ५।१।१२२) इति इमनिच्। जम्पती। जायाया जभावः॥ ८८॥

ताभिरिति। महत्या अतिप्रसिद्धाया ज्येष्ठानक्षत्रयुक्ताया ज्येष्ठपूर्णिमायाः सम्बन्धिनि महे उत्सवे, महत्यतिप्रसिद्धे वा ज्यैष्ठीमहे यद्दृग्भिर्यामां नेत्रैः प्राग् जन्मान्तरेऽथवान्यापेक्षया प्रथमं मञ्चं पर्य्यङ्कं अञ्चन् प्राप्तः मञ्चस्थो मार्गं गच्छन् श्रीपुरुषोत्तमः परिचितो बहुवारं दृष्टः कृतस्ताभिरेव स्त्रीभिः पथि वरयात्रायां यान् रथस्थ आगच्छन्नेष नलो दृश्यते। एतादृक्पुण्यं याभिरस्मादृशाभिरर्जितं ताभिरेवायं द्रष्टुं शक्यो न त्वन्याभिरित्यर्थः। अथ च याभिः पुरुषोत्तमो दृष्टस्ताभिरेव तत्तुल्योऽयमपीति ज्ञातुं शक्यते न त्वन्याभिरित्यर्थः। ताभिरेव साभिलाषं कटाक्षैर्दृश्यते याभिरेवं सुकृतं कृतं। अन्याभिस्तु कौतुकेनापि वीक्षितुं न शक्यते किं पुनः सानुरागं कटाक्षैरिति।

सा स्वीराट् पतयालुभिः शितिभिनैः स्यादस्य दृक्चामरैः
सस्ने माघमघाभिघातियमुनागङ्गौघयोगे यया ॥ ८९ ॥

ऐन्द्रे गुरुः शशी चैव प्राजापत्ये रविस्तथा।
पूर्णिमा ज्यैष्ठमासस्य महाज्यैष्ठीति कीर्त्तितेति ॥

पुरुषोत्तमतुल्योऽयं मन्महे शानीमहे इति भावः। वाक्यार्थः कर्म। उत्कलदेशे ज्यैष्ठपूर्णिमायां इन्द्रनीलगिरिनिवासिनः श्रीपुरुषोत्तमस्य महोत्सवः क्रियते। तत्र च श्रीकृष्णबलभद्र-प्रमुखप्रतिमाधिष्ठिता विरचितमत्रभूमिका मञ्चाः पृथक् नि-र्गच्छन्तीति तस्य दर्शनं भूयसे श्रेयसे भवतीति पौराणिकाः। यदाहुः।

दोलारूढं तु गोविन्दं मञ्चस्थं मधुसूदनं।
रथस्थं केशवं दृष्ट्वा पुनर्जन्म न विद्यते इति ॥

यथा। यया स्त्रिया अघाभिघातिनी पातकविनाशिनी यमुना गङ्गा च तयोरोघयोर्योगे सङ्गमे प्रयागाख्ये माघं मस्ने मकरस्थे रवौ माघे मास्यविच्छेदेन स्नानं कृतं सास्य नलस्य पत-यालुभिरतिचञ्चलैः शितिभिनैः कृष्णधवलैर्दृक्चामरैर्नेत्रैरेव चा-मरैर्नेत्रव्यापाररूपैश्चामरैः स्वीराट् स्त्रीराजैव स्यात् भवेत् इति मन्महे। राजा हि कृष्णधवलैश्चामरैर्वीज्यते। प्रयागे माघ-स्नानजन्यसुकृतात् स्त्री राजत्वं प्राप्नोति तत्र स्नानेन।

सितासिते तु यैः स्नानं माघमासे युधिष्ठिर।
न तेषां पुनरावृत्तिः कल्पकोटिशतैरपीति।

वचनात् स्त्रीषु श्रेष्ठा सैव भवेदिति वचनादित्यर्थः। अयञ्च कटाक्षैर्यां पश्यति सा सर्व्वाभ्योऽप्यधिका सा च भैम्येव नान्या। भैम्या च प्रयागे सकलमाघस्नानफलं लब्धं यतो भैमीसदृशी कापि कुत्रापि नास्तीति भावः। ज्यैष्ठीति। ज्येष्ठानक्षत्रयुक्ता पौर्णमासीति। नक्षत्रेण युक्तः कालः (पा० ४।२।३) इत्यणि वृद्धिः। तद्युक्तमासाभिधायित्वेऽपि सास्मिन् पौर्णमासीत्यादिना (पा० ४।२।२१) ज्यैष्ठी इत्येव भवति। ज्येष्ठीत्येव पाठे वृद्ध्यभावश्चिन्त्यः। सञ्ज्ञापूर्वस्य विधेरनित्यत्वाद् वृद्ध्यभावः कथञ्चित् समर्थनीयः। स्त्रीरात्विति सम्बन्धषष्ठ्या निर्धारणषष्ठ्या वा समासः। स्त्री इति पृथक्वा पदं। अत एव सा स्त्री इत्यर्थः। अकर्म्मकधातुभिर्योगे, देशः कालो भावो गन्तव्योऽध्वेत्यादि (पा० १।४।५१। सि० कौ० कारकवार्त्तिकेन माघस्य कालवाचित्वात् कर्म्मकत्वे धातोः सकर्म्मकत्वात् कर्म्मणि विहितेन तङा तस्याभिहितत्वान्माघः सस्ने इति प्राप्ते माघमिति द्वितीया चिन्त्या। अत्रार्थे हरदत्तमिश्रैर्गतिबुद्ध्यादिसूत्र (पा० १।४।५२) अकर्म्मकाणामिति कालभावाध्वदेशव्यतिरिक्तकर्म्मरहितानामित्यर्थो ग्राह्य इति सिद्धान्तितं। एवं कर्म्मणि च (पा० ३।४।६८) इत्यादावपि यत्राकर्म्मकग्रहणं तत्र सर्व्वत्र द्रष्टव्यं। तेनात्र माघस्य कर्म्मत्वेऽपि सस्ने इति भावे लिट् सिद्धो भवति। यद्वा माघं यस्यां क्रियायां यथा तथा स्नातायाः मम सर्व्वपापक्षयपूर्व्वकसर्व्वमनोरथसिद्धिर्भवतु इति सङ्कल्प्येत्यर्थः। कलुषं वृजिनैनोघेत्यमरः। यमुनागङ्गेति पूर्व्वनिपातोऽनियमः पूर्व्ववत् परिहरणीयः॥ ८८॥

वैदर्भीविपुलानुरागकलनात् सौभाग्यमत्राखिल-
क्षोणीचक्रशतक्रतौ निजगदे तद्वृत्तवृत्तक्रमैः।

वैदर्भीति। हे सख्यः तस्य नलस्य सम्बन्धीनि वृत्तान्यधीतानि यानि वृत्तानि पद्यानि तेषां क्रमैः नलविषये कविभिः कृतैः अस्मदादिभिश्च पठितैः काव्यैर्वृत्तैरतीतैः सकलद्वीपाधिपादिराजेन्द्रदेवेन्द्रादिदिक्पालपरित्यागरूपस्य चरित्रक्रमैः परिपाटीभिर्वा कृत्वा वैदर्भ्या भैम्या विपुलस्य नलविषयानुरागस्य कलनात् ज्ञानात् अखिलक्षोणीचक्रे शतक्रताविन्द्रे चास्मिन्नले स्त्रीसम्बन्धिसकलवरप्रेमास्पदत्वादिलक्षणं सौभाग्यं निजगदे स्पष्टं कथितं। निश्चितमस्माभिरिति यावत्। अतिसुन्दरीयमिन्द्रादीन् परित्यज्य यस्मादेनमवृत तस्मादयमेव सुभगतमो नान्य इति सर्व्वैर्निश्चितमित्यर्थः। भैमीकृतान्नलविषयविपुलानुरागस्याङ्गीकरणाद्धेतोस्तस्या एव वृत्तस्य भूतस्य चक्षुःप्रीत्यादिकामदशाः स्फुटं विरहव्यथानुरूपस्य वृत्तस्य चरित्रस्य क्रमैऽतिप्रसिद्धा ये वृत्ता वृत्तक्रमास्तैर्वा निगदितं। भैम्या अप्येतद्विषयमहानुरागजनितपूर्व्वविरहव्यथाभिरेवायं सकलसौभाग्यनिधानमिति सर्व्वेषां पुरस्तात् कथितमिति भाव इति मुख्योऽर्थः। वैदर्भ्या विपुलानुरागेण नलस्य वर्णनादिति वा। किञ्चान्यच्च अस्माकमयमास्माकः स चासौ नरेन्द्रश्च भीमस्तस्माद् भवतीति भूर्भैमी तस्याः सुभगता सौभाग्यं तस्याः सम्भूतये उत्पत्तये महासमृद्धये वा देवस्य इन्द्रस्यावरणेन त्यागेन सापत्न्याभा-

किञ्चास्माकनरेन्द्रभूसुभगतासम्भूतये लग्नकं
देवेन्द्रावरणप्रसादितशचीविश्राणिताशीस्तुतिः ॥ ९० ॥
आसुत्राममपासनान्मखभुजां भैम्यैव राजव्रजे
तादर्थ्यागमनानुरोधपरया युक्तार्जि लज्जामृजा ।

देन प्रसादितया सन्तोषितया शच्या विश्राणितं दत्तं सुभगा पुत्रवत्यविधवा भवेत्यादिकमाशीर्वचनं लग्नकं प्रतिभूरभूत् । शचीदत्ताशीःसहस्रबलाद्भैम्यपि सुभगेति निश्चितमित्यर्थः । आशीःश्रुतिरिति पाठे आशिषां श्रवणं । अथवा आशिष एव सत्यत्वाच्छ्रुतिर्वेद इत्यर्थः । अयन्तु पाठः साधीयान् । अनयो-रन्योन्यमनुरागे। चितं सौभाग्यमपि भविष्यतीत्यनुमानम् । वृत्तं । गन्ध्यथने वृत्तमिति (पा० ७।२।२६) सिद्धं । आस्माकेति सम्बन्धोऽणि, तस्मिन्नणि चेति (पा० ४।३।२) आस्माकादेशः । लग्नकशब्दो नपुंसकोऽपि । तस्या भैम्या वृत्तानां जातानां -त्तानां हंसप्रेषणादिचरितानां क्रमाः परिपाट्यस्तैर्निजगदे त वा ॥ ९० ॥

आसुत्रामेति । भैम्यैव आसुत्राममिन्द्रमभिव्याप्य मख-भुजां देवानामपासनात्त्यागाद्धेतोः राजव्रजे विषये लज्जाया मृजा परिमार्जनं युक्ता आर्ज्जि कृता । यत्कृतं तद्युक्तमित्यर्थः । यतः तस्मै इदं तदर्थं तस्य भावस्तादर्थ्यं तेन भैमीनिमित्तेन राज्ञामागमनं यन्निमित्तोऽनुरोधो दाक्षिण्यं तत्र परया । यो हि यदर्थमागच्छति स तस्य दाक्षिण्यं कुर्व्वन् लज्जां मार्ष्टीत्यु-

आत्मानं त्रिदशप्रसादफलतां पत्ये विधायानया
ह्रीरोधापयशःकथानवसरः सृष्टः सुराणामपि ॥ ९१ ॥

षितमेवेत्यर्थः। मदर्थमागतानामेषां मत्प्राप्तिर्नाभूत् लज्जा च जातेत्युक्तमेतदिति राजस्य समरूपत्वेनेन्द्रादीनपि भैमी नावृणोत्। ततश्च यदीन्द्रादयोऽपि त्यक्तास्तत्र मानुषाणामस्माकं का कथेति तेषां लज्जामार्जनं भैम्यैव युक्तं कृतमिति भावः। स नलोऽर्थः प्रयोजनं यस्य तस्य भावस्तादर्थ्यं तेन नलप्रयोजनत्वेन नलवरणार्थं यदागमनं तत्र यः पक्षपातस्तन्निष्ठया नलानुरक्तया अत एव इन्द्रादीनां त्यागः कृत इति वा। तर्हि इन्द्रादीनां लज्जारोधाऽकीर्त्तिश्च कृतेति देवद्रोहादशुभाशङ्कां परिहरति। अनया भैम्या पत्ये नलायात्मानं त्रिदशप्रसादस्य फलतां वररूपत्वं विधाय सुराणामिन्द्रादीनामपि ह्रीरोधापयशसां कथायाः कथामात्रस्यापि अनवसरः अवकाशाभावः सृष्टः कृतः। अस्मान्नावृणोदिति सजातीयान् क्षत्रियांश्च प्रति लज्जा अस्माकं पश्यतां नलमवृणोदिति शेषः। नलं स्वीकृत्य देवानपमानितवतीत्यपयशः। देवैश्च प्रसन्नीभूय वरत्वेन नलाय भैमी दत्ता। एतदर्थमेव ते पृथिव्यामागता न भैम्यभिलाषेणेति लोकप्रतीतेर्यया देवानामपि लज्जादिमार्ज्जनं कृतमिति सर्व्वानुरागादनयोः शुभपरम्परैव भविता नाशुभशङ्कालेशोऽपीति भावः। पत्ये नयत्येति पाठः समीचीनः। आत्मानं त्रिदशप्रसादफलतां नयत्या प्रापयन्त्येत्यर्थः। आसुत्रामं। अत्राभिविधावाङ्। अत्र-

इत्यान्निपुरनुप्रतीकनिलयालङ्कारसारश्रिया
ऽहंकुर्व्वत्तनुरामणीयकममूरालोक्य पौरस्त्रियः।
सानन्दं कुरुविन्दसुन्दरकरस्यानन्दनं स्यन्दनं
तस्याध्यास्य यतः शतक्रतुहरितक्रीडाद्रिमिन्दोरिव ॥ ९३॥

यीभावे, अनश्चेति (पा०५।४।१०८) टच्। मृजा। भिदादित्वादङ् (पा०३।३।१०४) ॥ ९१ ॥

इतीति। अमूः पौराणां स्त्रिय इति पूर्व्वोक्तप्रकारेण यथास्फूर्ति यथाभिप्रायमन्योन्यमालेपुः संवादं चक्रुः। किम्भूताः। कुरुविन्दवत् पद्मरागवत् सुन्दरौ रक्तौ करौ यस्य तस्य आनन्दनं वेगवत्त्वादिगुणयोगादानन्दकारिणं स्यन्दनं रथमध्यास्य यतो गच्छतस्तस्य नलस्य अनुप्रतीकं प्रत्यवयवं निलयं स्थानं येषां तेषामलङ्काराणां सारश्रिया श्रेष्ठशोभया क्वत्वा करसौन्दर्य्यादहमधिकमिति हस्तसौन्दर्य्यं वदति, हस्तसौन्दर्य्यादहमधिकमिति करसौन्दर्य्यमित्येवं प्रत्येकमहं कुर्व्वदहङ्कारं कुर्व्वत् तनुरामणीयकं शरीरसौन्दर्य्यमालोक्य सानन्दा हर्षपराः। कस्येव। पद्मरागवद्रक्तकिरणस्य नन्दनवनमभिव्याप्य मर्य्यादीकृत्य चास्थितं नन्दनसमीपे स्थितं। शतक्रतोर्हरितदिक् प्राची दिक् तस्याः क्रीडाद्रिमुदयाचलमधिष्ठाय गच्छत उदितस्येन्दोरिव। तत्कायकान्तिं विलोक्य यथा सानन्दा भवन्ति तथेत्यर्थः। चन्द्रोदये स्त्रीणां हर्षः। स्यन्दनमध्यास्य। अधिशीङिति (पा०१।४।४६) त्याधारस्य कर्म्मत्वं। यतः। इण् शतरि रूपं ॥ ९२ ॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यं।
यातः पञ्चदशः कृशेतररसस्वादाविहायं महा-
काव्ये तस्य हि वैरसेनिचरिते सर्गो निसर्गोज्ज्वलः ॥ १५ ॥

श्रीहर्षमिति। अर्द्धं पूर्व्ववत्। कृशेतरेणातिभूयसा रसेन स्वादावमृतकल्पे नलीयचरिते पञ्चाधिकानां दशानां पूरणः पञ्चदशः। स्वादाविति भाषितपुंस्कं ॥ ८३ ॥

इति श्रीबिदरकरोपनामकश्रीनरसिंहपण्डितात्मजनारायणकृते नैषधीयप्रकाशे पञ्चदशः सर्गः ॥ १५ ॥

## उत्तरनैषधचरिते ।

### षोडशः सर्गः ।

---

श्रीनलभीमसंज्ञौ जयतः ।

वृतः प्रतस्थे स रथैरथो रथी
गृहान् विदर्भाधिपतेर्धराधिपः ।
पुरोधसं गौतममात्मवित्तमं
द्विधा पुरस्कृत्य गृहीतमङ्गलः ॥ १ ॥
विभूषणांशुप्रतिबिम्बितैः स्फुटं
मृगाक्षिवदातैः स्वनिवासिभिर्गुणैः ।

वृत इति । अथो रथारोहणानन्तरं रथैः कुन्ताः प्रविशन्तीतिवद्रथिभिर्वृतस्तथा रथी प्रशस्तरथोपेतः स धराधिपो नलः विदर्भाधिपतेर्गृहान् प्रति प्रतस्थे ययौ । किम्भूतः । आत्मवित्तमं ब्रह्मज्ञानिमध्ये श्रेष्ठं गौतमं गौतमगोत्रं एतन्नामानं वा पुरोधसं द्विधा द्वाभ्यां प्रकाराभ्यां पुरस्कृत्याग्रे कृत्वा सम्पूज्य च विवाहे कार्यभारं तस्मिन्नारोप्य वा गृहीतानि स्वीकृतानि दध्यक्षतपूर्णकलशादीनि मङ्गलानि येन । रथैः सह वर्त्तमानैः पुरुषैर्वा प्रतस्थे। समवप्रविभ्यः स्थः (पा० १।३।२२) इति तङ् ॥ १ ॥

विभूषणेति । मृगेक्षणानां चामरधारिणीनां विधुप्रभैश्चन्द्र-

मृगेक्षणानां समुपासि चामरै-
र्विधूयमानैः स विधुप्रभैः प्रभुः ॥ २ ॥
परार्ध्यवेशाभरणैः पुरःसरैः
समं जिहाने निषधावनीभुजि ।

धवलैः तथा विधूयमानैश्चाल्यमानैश्चामरैः स प्रभुर्नलः समुपासि वीज्यते स्म स्फुटमुत्प्रेक्षे । विभूषणानां रत्नखचितनिजमण्डनानामंशुषु किरणेषु प्रतिबिम्बितैः, तथा सुधावदातैरत्युज्ज्वलैः, स्वस्मिन्निव सन्नद्धवर्णैः, श्रुतशीलसौन्दर्यादिभिर्गुणैरिव प्रत्यक्षीभूतैर्नलगुणैरिव चामरैरुपासीत्यर्थः । चामराण्यपि विभूषणांशुप्रतिबिम्बितानि । स्फुटं निश्चितं । ईदृशैश्चामरैरेव गुणैरिति वा ॥ २ ॥

परार्ध्येति । निषधावनीभुजि नले परार्ध्यानि श्रेष्ठानि वेशाभरणानि रूपालङ्कारा येषां तैः पुरःसरैः समं सह जिहाने चलति सति वृत्रशात्रव इन्द्रः सुनासीर इति पदस्याभिधेयतां वाच्यत्वं यदि दधार तर्हि रूढिमात्रं दधार न तु शोभनं नासीरं सेनामुखं यस्येति यौगिकतया । शुद्धवृत्त्या मुख्यया वृत्त्या नले एव दृश्यते न त्विन्द्रे । त्रिविधाः शब्दाः केवलयौगिकाः केवलरूढाः योगरूढाश्च । तत्र पाचकादयो यौगिकाः । तैलपायिकादयो रूढिकाः । आतपत्रादयो योगरूढिकाः । तदेवं तादृशाग्रेसराभावादिन्द्रस्य सुनासीरपदवाच्यत्वं यद्यस्ति तर्हि रूढ्यैवास्तु व्युत्पत्त्या तु नल एवोचितमित्यर्थः ।

दधे सुनासीरपदाभिधेयतां
स रूढिमात्रादपि वृत्रशात्रवः ॥ ३ ॥
नलस्य नासीरसृजां महीभुजां
किरीटरत्नैः पुनरुक्तदीपया ।
अदीपि रात्री वरयात्रया तया
चमूरजोमिश्रतमिस्रसम्पदा ॥ ४ ॥
विदर्भराजः क्षितिपाननुक्षणं
शुभक्षणासन्नतरत्वसत्वरः ।

इन्द्रादप्यधिको नलः । तत्पुरःसराश्चेन्द्रपुरःसरदेवेभ्योऽप्यधिका इति भावः । परार्द्धे भवानि परार्द्ध्यानि परावराधमोत्तमपूर्व्वाच्चेति (पा० ४।३।५) यत् । शत्रुरेव शात्रवः प्रज्ञादित्वात् स्वार्थेऽण् । वृद्धःश्रवाः सुनासीर इत्यमरः ॥ ३ ॥

नलस्येति । तया भैमीवरस्य नलस्य यात्रया रात्री अदीपि शुशुभे । किम्भूतया । नलस्य नासीरसृजां सेनायामग्रेसरीभूतानां महीभुजां राज्ञां किरीटरत्नैः स्वैनैवान्धकारनिराकरणात् पुनरुक्ता व्यर्थीकृता दीपा यस्यां तया । तथा चमूरजोभिर्मिश्रा बहुकृता तमिस्रसम्पत्तिभिरसङ्घो यया । महान्धकारेऽपि रत्नदीपप्रकाशैर्भूयिष्ठप्रकाशत्वाददीपीत्यर्थः । महान्धकार एव हि वीप्यः शोभन्त इत्यर्थः । राज्ञां सेनामुखाग्रवर्त्तित्वेन नलस्य चक्रवर्त्तित्वं सूचितं । अदीपि । भावे लः ॥ ४ ॥

विदर्भेति । विदर्भराजो यान् क्षितिपानेव दूतान् अनुक्षणं

दिदेश दूतान् पथि यान् यथोत्तरं
चमूममुष्योपचिकाय तच्चयः ॥ ५ ॥
तरस्विद्विपद्वीपिभिरंशुकैर्नभो
नभस्वदाध्मापनपीनितैरभूत् ।

वारंवारं नलाकारणार्थं दिदेश प्राहिणोत्। तेषाञ्च यः पूर्वमेकः प्रेषितस्तदनन्तरञ्चान्यः । एवमुत्तरोत्तरमनतिक्रम्य पथि अमुष्य नलस्य चमूमुपचिकाय भूयसीमकरोत् । किम्भूतः । शुभस्य क्षणस्य लग्नस्य समयस्यासन्नतरत्वेन सैकस्येन सत्वरो वेगवान् । भूयांसो नृपाः प्रेषिताः । दूता इत्यनेनादरातिशयः सूचितः ॥ ५ ॥

तरेति । तरस्वतां वेगवतां अश्वानां ध्वजिनी सेना, तरस्विनी ऽस्या यस्यां सा वा, तस्य ध्वजभवैरंशुकैर्वस्त्रैर्निमित्तैस्तया नभस्वता वायुना कृतं यदाध्मापनं परिपूरणं तेन पीनितैः पुष्टीकृतैः सजीवसिंहादितुल्यैर्निर्मितैः सिंहैर्द्वीपैर्हस्तिभिर्द्वीपिभिर्व्याघ्रैः कृत्वा तत्सेनाया उपरितनं नभस्याकाशं वनं विपिनतुल्यमभूत् अजनि । किम्भूतं वनं । विचित्राणि नानावर्णानि चीनदेशोत्पन्नानि सूक्ष्माणि ध्वजसम्बन्धीनि चाम्बराणि वस्त्राणि तान्येव वसथो लतास्ताभिर्वेष्टितं वेष्टितं । वने सिंहादयो वृक्षा लताश्च सन्ति । ध्वजपदेन वृक्षा अपि लक्ष्यन्ते । तरस्विना ऽस्या यस्य नलस्य तरस्वदश्वा वा या ध्वजिनी प्रकृतत्वात्तस्यैव सा ध्वजिनी नभसि नभस्वदाध्मापनपीनितैरंशुकै-

नरखदश्वध्वजिनीध्वजैर्वनं
विचित्रचीनाम्बरवल्लिवेल्लितम् ॥ ६ ॥
भुवाऽऽह्वयन्तीं निजतोरणस्रजा
गजालिकर्णानिलखेलया ततः ।
ददर्श दूतीमिव भीमजन्मनः
स तत्प्रतीहारमहीं महीपतिः ॥ ७ ॥

ध्वजैः पताकाभिः कृत्वा वनमभूत्। किम्भूता। ध्वजिनी हरिभिरश्वैर्हस्तिभिर्द्वीपिभिर्वा द्वीपान्तरवासिभिः सेनाचरीभूतैराअभिरुपलचिता। वनमपि सिंहादिभिरुपलचितं। विचित्रेति पूर्ववदिति वा। वनपचे वनो मृगविशेषः। ऊर्द्धं विस्तृतत्वादम्बरगामिन्यो वल्लयः ॥ ६ ॥

भुवेति। ततः प्रस्थानानन्तरं स महीपतिर्नलस्तस्य भीमस्य प्रतीहारभूमिं भीमजन्मनो भैम्या दूतीमिव ददर्श। किम्भूतां। द्वारे निबद्धा गजास्तेषामालिः पङ्क्तिस्तस्याः कर्णानिलेन कृत्वा खेलति चलतीति खेला तया निजया स्वीयया पुष्पदलरचितया तोरणस्रजा तल्लचणया भुवा अनुरागातिशयोत्सुकतया आह्वयन्तीं शीघ्रमागच्छेति भूसंज्ञया आकारयन्तीं। दूत्यपि चलन्त्या भुवाह्वयति। राजगृहद्वारदर्शनेनातिसत्वरोऽभूदिति भावः। स्त्री द्वार्द्वारं प्रतीहार इत्यमरः। पचाद्यच्। प्रतीहारः। उपसर्गस्य घञीति (पा० ६।३।१२२) दीर्घः ॥ ७ ॥

श्लथैर्दलैस्तम्भयुगस्य रम्भयो-
श्चकास्ति चण्डातकमण्डिता स्म सा ।
प्रिया सखीवास्य मनस्थितिस्फुरत्-
सुखागतप्रश्नितर्तूर्यनिस्वना ॥ ८ ॥

श्लथैरिति । सा द्वारभूमिः रम्भयोः कदल्योर्द्वारमण्डनार्थं शकुनार्थञ्च रोपितस्तम्भयुगस्य [illegible] युग्माद्वा श्लथैः शिथिलैर्दलैः पत्रैः कृत्वा लम्बमानचण्डातकमङ्गेन वस्त्रेण मण्डिता भूषितास्य नलस्य प्रियाया भैम्याः सखीव चकास्ति स्म । किम्भूता सा । अनुरागवशान्नलमपि अन्तःकरणे या नलस्य स्थितिस्तया स्फुरन् सदा चित्तनिवासेनाभासमानः यः सुखेनागतस्यागमनस्य सम्बन्धी प्रश्नः सुखेनागत इत्येवंरूपः प्रश्नः स कृतः प्रश्नितः सुखागतप्रश्नतां प्रापितस्तूर्यनिस्वनो यया सा । चिरप्रोषिते हि नायके समागच्छति सति प्रेयस्यां त्रपया तूष्णीं स्थितायां चण्डातकमण्डिता तत्सखी सुखागतप्रश्नं करोतीति स्थितिः । अत्र दलानि चण्डातकस्थाने । तूर्यनिस्वनाश्च सुखागतप्रश्नस्थाने । कदलीस्तम्भौ ऊरुस्थानीयौ । अर्द्धोरुकं वरस्त्रीणां यच्चण्डातकमंशुकमित्यमरः । नृपाय मुक्तं पुरः पश्चाच्च प्रलम्बि वर्त्तुलभागद्वयं । कदलीसदृशं वस्त्रं नर्त्तकीभिरन्तःपरिधीयमानं चण्डातकं । प्रश्नितेति । तत्करोतीति ण्यन्तान्निष्ठा न तारकादिः ॥ ८ ॥

विनेतृभर्तृद्वयभीतिदान्तयोः
परस्परस्मादनवाप्तवैशसः।
अजायत द्वारि नरेन्द्रसेनयोः
समागमः स्फारमुखारवोद्गमः॥ ९॥
निर्दिश्य बन्धूनित इत्युदीरितं
दमेन गत्वार्द्धपथे कृतार्हणं।
विनीतमाद्वारत एव पद्गतां
गतं तमैक्षिष्ट मुदा विदर्भराट्॥ १०॥

विनेत्रेति। नरेन्द्रौ भीमनलौ तयोः सेनयोः समागमो राजगृहद्वारि एवम्भूतोऽजायत जातः। किम्भूतयोः। विनेतृ शासकं नलभीमलक्षणं भर्तृद्वयं तस्माद्भीतिस्तया दान्तयोः शान्तयोः। ताभ्यां नियमिततादृक्कलहादिसंरम्भयोः अत एव परस्परस्मादन्योन्यस्मादनवाप्तमलब्धं युद्धनिमित्तं वैशसं मारणं येन। सैन्यद्वयमेलने हि कलहो भवति परं सौहार्द्दान्नियमितत्वादनयोर्नाभूदित्यर्थः। तथा स्फारोऽतिमहान् मुखारवस्याऽस्फुटवर्णविशेषस्य मुखध्वनेरुद्गम उदयो यत्र॥ ९॥

निर्दिश्येति। विदर्भराड् भीमः मुदा उचितो जामातेति हर्षेण तमैक्षिष्ट नलमद्राक्षीत्। किम्भूतं। भीमेनैव सम्मुखं गत्वा बन्धून् सुहृदो भ्रातॄन् वा स्वमातापितृसम्बन्धिनो निर्दिश्याज्ञाप्य प्रस्थाप्य इत्यनेन यथा आगम्यतामित्यादिप्रकारैरुदीरितमुक्तं। बन्धुमुखेन ज्ञापितमार्गं तथा दमाख्येन भैमीभ्रात्रा

अथायमुत्थाय विसार्य्य दोर्युगं
मुदा प्रतीयेष तमात्मजन्मनः ।
सुरस्रवन्त्या इव पात्रमागतं
धृताभितोवीचिगतिः सरित्पतिः ॥ ११ ॥
यथावदस्मै पुरुषोत्तमाय तां
स साधुलक्ष्मीं वङ्गवाहिनीश्वरः ।

ऽर्द्धपद्यं कृताऽर्हणा ऽर्घ्यादिपूजा यस्मै । तथाऽनुद्धतवेशत्वादि नीतं । अत एव द्वारत आद्वारमीमासिताः(?) निजकृत्य यथादृत्तीर्थं पद्गतां पादचारित्वं गतं प्राप्तं । दमनेन वस्तून् पुरः प्रस्थाप्य दत इत्युदीरितमिति वा । आद्वारतः पदद्वयं पद्गत इति, पादस्य पदाऽऽज्यातिगोपहतेष्विति (पा० ६।३।५२) पादस्य पत् ॥ १० ॥

अथेति । अथ नलदर्शनानन्तरं अयं भीम उत्थाय प्रत्युत्थानं कृत्वा आत्मजन्मनो भैम्याः पात्रं योग्यं आगतं तं नलं दोर्युगं विसार्य्य प्रसार्य्य मुदा प्रतीयेष आलिलिङ्ग । कः कमिव । सरित्पतिः सुरस्रवन्त्या भागीरथ्या आगतं पात्रं प्रवाहमिव नौकादिकं वा । किम्भूतः । धृतेऽभितः पार्श्वद्वये वीचीगती तरङ्गपरम्परे येन । वीचितति रित्यपि पाठः ॥ ११ ॥

यथावदिति । अथालिङ्गनानन्तरं महीभृतां राज्ञां पतिर्वङ्गवाहिन्या ईश्वरः स्वामी स भीमः सर्व्वविदे सर्व्वविद्याविज्ञाय शिवाय शुभश्रवणकीर्त्तनायात एव पुरुषोत्तमाय पुरुषश्रेष्ठायास्मै नलाय साधुलक्ष्मीं समीचीनकायकान्तिं अत एव शिवां

शिवामथ स्वस्य शिवाय नन्दिनीं
ददे पतिः सर्व्वविदे महीभृताम् ॥ १२ ॥
असिस्वदद्यन्मधुपर्कमर्पितं
स तद्व्यधात्तर्कमुदर्कदर्शिनां।

शुभरूपां तां भैमीं स्वस्य नन्दिनीं कन्यां यथावद्वेदोक्तविधिना ददे। मधुपर्कात् पूर्व्वं कन्यादानमित्याचारः। मधुपर्कादिविधिपूर्व्वं ददे। दातुमारब्धवानिति वा। अथ बहुनदीपरः समुद्रः पुरुषोत्तमाय तां कन्यां लक्ष्मीं यथाददात्तत् साधु, तथा पर्व्वतराजो हिमालयः सर्व्वज्ञाय श्रीमहादेवाय स्वपुत्रीं पार्व्वतीं ददे तदपि साधु। यद्वा मैनाकादिपर्व्वतानां पालयिता समुद्रः शिवरूपाय विष्णवे शुभरूपां लक्ष्मीं ददे तत्साधु। अथ वा बहुनदीयुक्तो हिमालयः पुरुषोत्तमरूपाय श्रीहराय पार्व्वतीरूपां लक्ष्मीं लक्ष्मीरूपां पार्व्वतीमिति वा। नलाय पुरुषोत्तमायेव शिवायेव भैमीं लक्ष्मीमिव शिवामिव भीमः समुद्र इव हिमवानिवेत्युपमालङ्कारो व्यज्यते। साधुलक्ष्मीमित्यत्र समासान्तविधेरनित्यत्वात् कबभावः ॥ १२ ॥

इदानीं विवाहविधिमाह असिस्वददिति। स नलः अर्पितं भीमेन दत्तं मधुमिश्रितं कांस्यपात्रस्थं दधिमधुघृतरूपं मधुपर्कं यदसिस्वदत् आस्वादितवान् तदास्वादनं उदर्कदर्शिनां विवाहोत्तरफलपरिपाकभूताधरचुम्बनादिविचारिणां लोकानां इति तर्कं ऊहं व्यधात् चक्रे। इति किं। यद्यस्मादेष नलो भीम-

यदेष पास्यन्मधु भीमजाधरं
मिषेण पुण्याहविधिं तदा कृतं ॥ १३ ॥
वरस्य पाणिः परघातकौतुकी
वधूकरः पङ्कजकान्तितस्करः।

जाधररूपं मधु पास्यन् पास्यति तस्मात् तदा मधुपर्कदानावसरे मधुपर्कास्वादनमिषेण पुण्याहविधिं शुभनक्षत्रादियुक्तपुण्यदिनकृत्यं मङ्गलपूर्व्वमुपक्रममकृत। अन्योऽपि शुभकार्य्यं करिष्यन् शुभविवाहदिनादौ तदीयमारम्भं करोति। तथा तेनापि भैमीधरपाने मुहूर्त्तश्चक्र इति जनैः तर्कितमित्यर्थः। अधरस्यापि स्वादुत्वमुक्तम्। असिस्वददिति। चौरादित्वात् स्वदेर्लुङ्। ये तमपि पापदेशं मन्यन्ते तैः पत्नाभावोऽनुसन्धेयः। अपिस्वददिति पाठाभावादर्थस्य दुर्योज्यत्वाच्च चौरादिक एव। पास्यन्। लृटः शत्रिति (पा० ३।२।१२४) शता। पुण्यञ्च तदहश्चेति, राजाह इति (पा० ५।४।९१) टचि पुण्यसुदिनाभ्यामह्नः क्लीवतेति पुण्याहं तत्र विधिरिति विग्रहः ॥ १३ ॥

वरस्येति। वरस्य पाणिः परघातकौतुकी शत्रुमारणकुतूहली, वधूकरः पङ्कजकान्तितस्करः कमलश्रीचोरो यस्मात्तस्मात् कारणात् किमु सुराज्ञि राजन्वति तत्र तस्मिन्विदर्भमण्डले विदर्भराज्ये तौ वरवधूकरौ कर्कशैः कुशैः नितरां बद्धौ उभयहस्तयोः कुशबन्धनपूर्व्वकं पाणिग्रहणमभूत्। तत्र कुशबन्धने कारणोत्प्रेक्षा क्रियते। एको हिंस्रोऽपरश्चौर इति सापराधत्वात्

सुराज्ञि तौ तत्र विदर्भमण्डले
ततो निबद्धौ किमु कर्कशैः कुशैः ॥ १४ ॥

विदर्भजायाः करवारिजेन यन्
नलस्य पाणेरुपरि स्थितं किल ।
विशङ्क्य सूत्रं पुरुषायितस्य तद्
भविष्यतोऽस्मायि तदा तदालिभिः ॥ १५ ॥

किमु बद्धावित्यर्थः । अन्यत्रापि सौराज्ये अन्यघातकतस्करौ कठिनतरदोरकैर्बध्यते । पाणिग्रहणं जातमिति भावः । कुशैः पाणिबन्धनमाचदेशाचारः, यथाक्रमं करयोः शौर्यं मार्दवञ्च सूचितं । सुराज्ञि । राजाहस्सखिभ्यष्टच् (पा० ५।४।९१) इत्यस्य नियततत्पुरुषविषयत्वादत्र बहुव्रीहिविषयत्वाट्टचः प्राप्त्यभावः ॥ १४ ॥

विदर्भेति । विदर्भजायाः करवारिजेन यत् तदा पाणिग्रहणसमये नलस्य पाणेरुपरि स्थितं तदुपरिस्थानं किल निश्चितं विपरीतरतेर्भविष्यतः पुरुषायितस्य पुरुषवदाचरितस्य विपरीतरतस्य इति यावत् सूत्रं सूचनाकारि विशङ्क्य विशेषेण सम्भाव्य कौतुकविलोकनार्थं निकटस्थिताभिस्तदालिभिरस्मायि ईषद्धसितं । विपरीतरते हि स्त्रीपाणिरुपरि भवति विवाहे वधूकरो वरकरस्योपरि भवति । सूत्रञ्च सूचनाग्रन्थ इति विश्वः ॥ १५ ॥

सखा यदस्मै किल भीमसंज्ञया
स यक्षसख्याधिगतं ददौ भवः।
ददे तदेष श्वशुरः सुरोचितं
नलाय चिन्तामणिदाम कामदं॥ १६ ॥

बहोर्दुरापस्य वराय वस्तुन-
स्थितस्य दातुं प्रतिबिम्बकैतवात्।
बभौतरामन्तरवस्थितं दधद्
यदर्थमभ्यर्थितदेशमर्थिने॥ १७ ॥

इदानीमित आरभ्य न तेन वार्धिस्थिति यावद्विवाहोचितं यौतुकं प्रतिपादयति। सखेति। भीमसंज्ञया भीम इति नाममात्रेण सखा स्वस्यापि भीमनामत्वात् किलेत्यैतिह्ये स भवो महेश्वरः अस्मै भीमाय यक्षेण कुबेरेण सह सख्यात् मैत्री तेनाधिगतं प्राप्तं यच्चिन्तामणीनां दाम मालां ददौ, एष श्वशुरो भीमः तत्कामदं सकलाभिलषितदं [illegible] सुराणामुचितं चिन्तामणिदाम नलाय ददे। [illegible] तात्पर्यं। सुरोचितमिति पाठे सम्यगुचितम्॥ १६ ॥

तदेव वर्णयति। बहोरिति। यच्चिन्तामणिदाम बभौतरां। किम्भूतं। बहोरपरिमितस्य तस्य तथा दुरापस्य दुर्लभस्य दिव्यस्य वराय जामात्रे दातुं स्थितस्य पुरःपुञ्जीकृतस्य रत्नहेमवसनादेर्वस्तुनः पदार्थसमूहस्य स्वस्मिन् प्रतिबिम्बस्य कैतवाद्व्याजात् अन्तरवस्थितं स्वस्य मध्ये स्थितमर्थिने याचकायाभ्यर्थितं प्रार्थितं

असिं भवान्याः क्षतकामरासुरं
वराय भीमः स्म ददाति भासुरम् ।
ददे हि तस्मै धवनामधारिणे
स शम्भुसम्भोगनिमग्नयाऽनया ॥ १८ ॥

सत् तदानीमेव दातुमर्हं अर्थं वस्तुजातं दधत् धारयदिव । ददाविति पूर्वेण सम्बन्धः । यदा यदा याचिष्यते तदा तदस्मै तस्मै दातव्यमिति बुद्ध्या स्वनाम सार्थकीकर्तुं वस्तुजातं पुरःस्थापितमेवेत्यर्थः । ददाविति भाषितपुंस्कं ॥ १७ ॥

असिमिति । भीमः क्षतः कामराख्यो महिषाख्यो ऽसुरो येन तं भासुरं देदीप्यमानं भवान्या दुर्गाया असिं खड्गं वराय ददाति स्म । तस्याः खड्गोऽनेन कथं प्राप्त इत्यत आह । हि यस्मात् स्फुटं वा शम्भुना सह सम्भोगस्तत्र निमग्नया सुरतरसासक्तया ऽनया दुर्गया वैरिहननानन्तरं स्वस्याः प्रयोजनाभावात् सुरतासक्तौ खड्गधारणस्य रसभङ्गकत्वाच्च धवनामधारिणे भीम इति शिवनामधारकाय शम्भुसदृशाय तस्मै भीमाय ददे । शम्भोः सम्यगविच्छेदेन निरन्तरं भोगाय निमग्नया दक्षिणार्द्धेन प्रविष्टया वा तदस्य तया प्रसादो दत्तः । लुलायो महिषो वाहद्विषत्कासरसैरिभा इत्यमरः । भासुरं । भञ्जभासमिति (पा० ३।२।१६१) घुरच् ॥ १८ ॥

अधारि यः प्राङ्महिषासुरद्विषा
कृपाणमस्मै तमदत्त कुकुदः।
अत्यापि तस्या हि धवार्द्धभाजिना
स दक्षिणार्द्धेन पराङ्गदारणः॥ १८॥
उवाह यः सान्द्रतराङ्गकाननः
स्वशौर्य्यसूर्य्योदयपर्व्वतव्रतम्।

अधारीति। महिषासुरद्विषा दुर्गया प्राक् यः खड्गोऽधारि, कुकुदः कन्यादाता भीमः तं कृपाणं खड्गं सत्कारपूर्व्वं सालङ्कारमस्मै अदत्त। कथं तेन लब्ध इत्याशङ्क्याह। हि यस्मादर्धनारीश्वरत्वाद् धवस्य भर्त्तुः शिवस्य अर्द्धभाजिना अर्द्धप्रविष्टेन तस्याः पार्व्वत्या दक्षिणार्द्धेन दक्षिणशरीरभागेन पराङ्गदारणः स खड्गः अत्याजि त्यक्तः। मत्खड्गेन धववामार्द्धं विशता यदीयदक्षिणार्द्धेन तद्विदार्य्यत इति भिया त्यक्तः। अदायीति पाठेऽनर्थो न। तस्या दक्षिणार्द्धेन तस्मै यस्माद्दायीत्यर्थः। अयं पाठः साधीयान्। सत्कृत्यालङ्कृतां कन्यां यो ददाति स कुकुद इत्यमरः॥ १८॥

उवाहेति। यः स्वस्य भीमस्य खड्गस्यैव वा शौर्य्यं प्रतापरूपो यः सूर्य्यस्तस्योदयस्तत्सम्बन्धी पर्व्वत उदयाचलस्तस्य व्रतं नियमं सदा सूर्य्योदयकारित्वलक्षणं उवाह धृतवान्। किम्भूतः। सान्द्रतराणि अत्यर्थं सूक्ष्माणि अङ्गकानि अङ्गानि सूद्रामुद्रपत्त्रीवल्लीरूपाणि तेषां काननं जीवनं यत्र दधार इति

सनिर्झरः शाणनधौतधारया
समूढसन्ध्यः क्षतशत्रुजासृजा ॥ २० ॥
यमेन जिह्वा प्रहितेव या निजा
तमात्मजां याचितुमर्थिना स्पृशम् ।

यावत । मान्दरवाणां वा पूर्व्वोत्तरभागेऽन्तानां काननं समूहो यत्र । उदयाचलपक्षे मान्दराणि अङ्कप्रु ऊर्द्धाधोभागेषु वनानि यस्य । तथा शाणनेन निष्कर्षणचर्घणेन धौतया उज्ज्वलीकरणेन दत्तपानीयधारया कृत्वा सनिर्झरः सप्रवाहः । धारैव निर्झरीभूतेत्यर्थः । उदयाचलोऽपि सनिर्झरो भवति । तथा क्षतेभ्यः खण्डितेभ्यः शत्रुभ्यो जातेनासृजा रक्तेन कृत्वा मस्तके ऊढा धृता प्रातःसन्ध्या येन । प्रातःसन्ध्यास्थाने रक्तमेव येन धृतमित्यर्थः । सम्यगधृता सन्ध्यात् सरक्तपः फलकर्मान्तर्येन अतिदृढसम्बन्धित्यर्थ इति वा । यद्वा क्षतशत्रुजासृजा समूढः प्राप्तः सन्धिर्यस्य मारुफलकसन्धिपर्यन्तं शत्रुशरीरे निमग्न इत्यर्थः । उदयाचलोऽप्यूढप्रातःसन्ध्य उदयाचलतुल्योऽभूदित्यर्थः । तमधत्तेति पूर्व्वेण सम्बन्धः । अङ्कुतिपक्षे, अन्य (पा० ५।३।८५) इति कः ॥ २० ॥

यमेनेति । स भीमः तामसिपुत्रिकां छुरिकामपि अस्मै ददे न केवलं खड्ग इत्यपरर्थः । न केवलं पुत्रीमपि तु छुरिकामपि । तां कां । स्पृशमर्थिना भैम्यनुरागिणा यमेन तं भीमं भैमीं मह्यं देहीति आत्मजां याचितुं दूतीप्रेषणावसरे निजा स्वीया

स तां ददे ऽस्मै परिवारशोभिनीं
करग्रहार्हामसिपुत्रिकामपि ॥ २१ ॥
यदङ्कभूमौ बभतुः स्वयोषिता-
मुरोजपत्रावलिनेत्रकज्जले ।
रणस्थलस्थण्डिलशायितात्रते
गृहीतदीक्षैरिव दक्षिणीकृते ॥ २२ ॥

प्रहिता प्रेषिता या जिह्वेव । नियतं प्राणहारित्वादसमजिह्वा-तुल्या अतितीक्ष्णा शौर्येण तुष्टो यमो यां भीमाय दत्तवान् । किम्भूतां । परिवारशालिनीं चर्मकोशेन शोभमानां । अथ सखी-लक्षणपरिजनशोभिनीं । करग्रहार्हां हस्तग्रहणयोग्यां साधुमुष्टि-देशां । पूर्वं यद्यपि भैमी दत्ता तथापि परिवारसाहित्येने-दानीं दत्तेत्यर्थः । छुरिकां सखीषु जातकलेन ददाविति भावः । छुरिका चासिपुत्रिकेत्यमरः । याचिद्धिकर्मा ॥ २१ ॥

यदिति । यस्याः शस्त्र्या अङ्कभूमौ पट्टिकायां ऊर्द्धाधोदेशौ स्वयोषितां स्वस्य स्त्रीणां उरोजपत्रावलिः कस्तूरिकालिखित-स्तनपत्रवल्ली नेत्रकज्जलञ्च एते इव बभतुः शुशुभाते । किम्भूते । रणस्थले या स्थण्डिलशायिता व्रतवशाद्यो वेदिकायां शेते स स्थण्डिशायी तद्भाव एव व्रतं तत्र विषये गृहीता दीक्षा यैः स्वी-कृतनियमविशेषेण भूपतिभिः शत्रुभिः दक्षिणीकृते व्रताङ्गदक्षि-णात्वेन शस्त्रे दत्ते । दीक्षोपदेशिने हि स्त्रीणां रत्नमलङ्कारादि दक्षिणात्वेन दीयते छुरिकयैवं स्वकृतमारणद्वारा शत्रूणां रण-

पुरैव तस्मिन् समदर्शि तत्सुता-
भिकेन यः साहढनाटिनाम्निना ।
नलाय विश्राणयति स्म तं रथं
नृपः सुलंघ्याद्रिसमुद्रकापथं ॥ २३ ॥

स्थलस्थण्डिलशायितावतमुपदिश्य तस्मात्तस्थैव दक्षिणात्वेन दत्तं पत्रावलीतिलककज्जलं इव । लोहमुद्गरश्यामवर्णः स्नानपत्रावली-तिलककज्जलत्वेनाभ्युपेतः इयं कृपाणिका निश्चितपरविदारणा वैरिनार्य्यश्च नेधयात्यस्मत्कज्जलपत्रावल्य इति । स्थण्डिलशायी-ति । स्थण्डिलाच्छयितरि व्रते (पा० ४।२।१५) इत्यण् ॥ २२ ॥

पुरेति । तस्य भीमस्य सुतायां अभिकेनानुरागिणा दया भैमी दातव्येति बुद्ध्यायं न प्रेषितः किन्तु शत्रुभराक्रान्तभूभा-रनिराकरणद्वारा त्वमस्माकं सुहृदिति प्रेषित इति साहादेयं नाटयति, एवंशीलनाम्निना पुरैव दूतीप्रेषणावसर एव यो रथः तस्मिन् भीमे समदर्शि प्रेषितो दत्तः, नृपो नलाय तं रथं विश्राणयति स्म ददौ । किम्भूतं । सुलंघ्या अनायासेनाति-क्रमणीया अद्रयः अत्युच्चपर्व्वताः समुद्राः कापथा विषमनि-म्नगर्त्तरूपा मार्गाश्च यस्य । सर्व्वत्र सञ्चरणसमर्थं । कदध्वा का-पथः समा इत्यमरः । कापथ इति । कापथ्यक्षयोरिति (पा० ६।३।१०४) कादेशः । ऋगादिना (पा० ५।४।७४) समासा-न्तोऽप् ॥ २३ ॥

प्रसूतवत्ता नलकूबरान्वय-
प्रकाशितास्यापि महारथस्य यत् ।

तमेव वर्णयति । प्रसूतेति । अस्यापि भीमेन नलाय दत्तस्यापि महता जवादिगुणयुक्तस्य रथस्य प्रकृष्टा सूतवत्ता सूतो विद्यते यस्य स सूतवान् तद्भावः सूतवत्ता सारथिमत्ता, प्रकृष्टश्चासौ सूतश्च तद्वत्ता वा, यस्मान्नलस्य कूबरेण युगन्धरेण सह योऽन्वयः सम्बन्धः, नलेन सह वा यः कूबरस्यान्वयः, तेन प्रकाशिता प्रकटीकृता शोभिता च, तत्तस्मात्कारणात्तस्य रथस्य पुष्पकवत्कामगामि धनदविमानवत् प्रकृष्टता उत्कृष्टगुणयुक्तता पुष्पकात् सकाशाद्वा जवादिगुणैरधिकत्वात् कुबेरस्य दृष्टान्त उदाहरणं तस्य वर्णनेन तत्सामर्थ्येनानुमीयते अनुमानजन्यज्ञानस्य विषयीक्रियते। न केवलं कुबेरस्य महारथस्य किन्त्वस्यापीति समुच्चयेन व्याप्तिदर्शनपरःसन् उपनयनिगमने सूचयन्नपिशब्दः । कुबेरस्यापि महारथस्यायुतसंख्याकस्य पुष्पकविमानेन कृत्वा प्रकृष्टता प्रकृष्टगमनत्वं प्रकृष्टेन कृता शोभमानता वा भवति। एवं कुबेरदृष्टान्तवर्णनादस्य पुष्पकप्रकृष्टता भविष्यतीत्यनुमीयते । यतोऽस्यापि कुबेरस्य नलकूबराख्येनान्वयेन सन्तानेन पुत्रेण प्रकाशिता प्रकटिता शोभिता प्रसूतवत्ता जनयितृता इति साधर्म्यदृष्टान्तः । अथ वर्णनानुमानन्त्वेवं । विमतो महारथः पुष्पकः प्रकृष्टो भवितुमर्हति नलकूबरान्वयप्रकाशितप्रसूतवत्त्वात् । यो यो नलकूबरान्वयप्रकाशितप्रसूतवत्तावान् स पुष्पकः प्रकृष्टः । तथा कुबेर इत्यनुमानवशादेतत् सर्वमुच्यते

कुबेरदृष्टान्तबलेन पुष्पक-
प्रकृष्टतास्य तयोऽनुमीयते ॥ २४ ॥
महेन्द्रमुच्चैःश्रवसा प्रतार्य य-
न्निजेन पत्या कृतसिन्धुरन्चितम् ।
स तद्ददेऽस्मै हयरत्नमर्पितं
पुरानुबद्धुं वरुणेन बन्धुताम् ॥ २५ ॥
जवादयोगिक्षितदूरदृक्पथ-
स्तथाक्षियुग्माय ददे मुदं नयः ।

इति यथा कथञ्चित् श्लोको व्याख्येयः । किन्तु प्रकृष्टः सुतः पुत्र इति वा । पुष्पकस्य नलः सारथिर्नास्ति तेन तत्तुल्यता नास्ति । किन्तु तत्पतिना कुबेरेणेति, अस्य तु नलः सारथिस्त्वयं रथो रमणीय इति भावः । कुबेरस्तु युगन्धर इत्यमरः ॥ २४ ॥

महेन्द्रमिति । सिन्धुः समुद्रो नाम्ना उच्चैःश्रवसा अश्व चोन्नतकर्णेन सल्लक्षणेनाश्व च दीर्घकर्णेन दुर्लक्षणेनाश्वेन महेन्द्रं प्रतार्य यद्धयरत्नं निजेन पत्या स्वस्वामिना वरुणेन अन्वितं युक्तमकृत वरुणायाददित्यर्थः । स भीमस्तद्धयरत्नं अस्मै नलाय ददे । अनेन कथं तल्लब्धमित्यत आह । किंभूतं । वरुणेन बन्धुतामलोकमैत्रीं अनुबद्धुं वर्द्धयितुं पुरा दूतीप्रेषणावसरेऽर्पितं भीमाय दत्तं । उच्चैःश्रवसोऽप्यधिकमश्वं तस्मै ददाविति भावः ॥ २५ ॥

जवादिति । योऽश्वो लोकानामक्षियुग्माय नेत्रयुग्माय दिदृक्षायाः स्वीयरूपदर्शनेच्छाया आदरस्तस्य दासतां दासत्वं

ददद्दिदृक्षादरदासतां यथा
तथैव तत्पांशुलकण्ठनालताम् ॥ ७६ ॥

ददानः पारवश्यं कुर्व्वन् जवाद्धतो अवारीकृतः अर्व्वाक्कृतो दूरो बहुयोजनो दृक्पथो नेत्रपथो येन दूरं गतत्वान्नेत्रयोरविषयः सन् यथा नेत्रयुग्माय मुदं प्रीतिं न ददे, दर्शनाभावात्प्रीतिं नोत्पादितवानित्यर्थः, तथा पुनरागमनसमयेऽपि तथैव दिदृक्षादरदासतया तस्य नेत्रयुगस्य पांशुलं रेणुयुक्तं कण्ठनालं यस्य तस्य भावस्तत्ता तां सञ्चूर्णयोत्कण्ठितत्वं ददन्मुदं न ददे। तमश्वं ददद् इति पूर्व्वेण सम्बन्धः। यथातथाशब्दौ व्यत्यस्तौ योज्यौ। रूपादिविलोकनकौतुकिभिर्यावदश्वो द्रष्टुमारब्धस्तावद्वेगवशाद् दूरं गतत्वान्न दृष्टः। इदानीं यद्यपि न दृष्टस्तथापि व्यावृत्यागमनेऽवश्यं द्रक्ष्याम इति बुद्ध्या व्यापारान्तरपरित्यागपुरःसरं तद्रूपादिविशेषदर्शनादरान्नेत्रे प्रसार्य्य तत्रैव यावत् स्थितास्तावत् पुनरागमनसमयेऽपि खुरक्षतक्षोणीरेणुसम्बन्धान्न दृष्टः। तथा चोभयथापि दर्शनाभावादुत्कण्ठाया अपरिपूर्णत्वान्नेत्रयुगस्य हर्षो नाभूदित्यर्थः। अतिजवनोऽश्व इति भावः। जवादप्रतिषिद्धो दूरो दृक्पथो येनातिदूरं नेत्राभ्यामनुगतमार्ग इति यावदेवंभूतो योऽक्षियुगाय दर्शनहर्षं तथाऽनादृत्य यथा दिदृक्षादरदासतां ददानः सन्तथैव तस्य नेत्रयुगस्य द्रष्टुर्वा शुष्ककण्ठत्वं ददे। निरन्तरदर्शनाभावात्तादृशी प्रीतिर्न जाता, किन्तु पूर्व्वोक्तप्रकारेण नेत्रयोर्द्रष्टुर्वा भूरेणुसम्बन्धात् शुष्ककण्ठ-

युग्मम्

दिवस्पतेरादरदर्शिनादरा-
दढौकि यस्तम्प्रति विश्वकर्म्मणा ।

त्वमेव जातमित्यर्थः। द्रष्टव्यदर्शनाद्धि दृष्टमार्गस्य प्रतिषेधो भवति अत्र तु वेगातिशयाद्दर्शनाभावात् प्रतिषेधस्तस्येति वा। अथ च जलरहितः कृतो दूरो दृष्टिगोचरो यो मार्गः स पिपासोर्नेत्रयुगाय हर्षं ददाति किन्तु जलावलोकने पारवश्यं तथापि पिपासोः शुष्ककण्ठत्वं वेत्युक्तिरिति वा। दासतामिति पाठे दिदृक्षादरस्य दानपात्रं ददावित्यर्थः। दाञ् दाने, दाशगोघ्नौ सम्प्रदान इति (पा० ३।४।७४) निपातनाद्दयतेऽस्मै इति दानपात्रं। पारावारे परार्वाचीतीरे पात्रमित्यमरः। पक्षे नास्ति वारि यस्मिन्नसाववारिः। पक्षे वारणं वारः ण्यन्तात् घञ् स नास्त्यस्यासौ। अववारशब्दादवारिशब्दाच्च च्विः॥ ९६॥

दिवस्पतेरिति। दिवस्पतेरिन्द्रस्य भैम्यनुरागवशाद्भीमं आदरदर्शिना विश्वकर्मणा यः तं भीमं प्रत्युद्दिश्य आदरादढौकि उपदारूपेण प्रेषितः स भीमस्तमेकं महापरिमाणं माणिक्यं तन्मयं तद्रूपं तन्निर्मितं वा महोन्नतमत्युच्चं पतत् ग्र . पतत् गण्डूषजलताम्बूलोद्गारादि गृह्णातीति ग्रहः तं नलेन प्रयोजनेन याचितवान् अङ्गीकारितवान् नलाय ददावित्यर्थः। प्रभोर्यस्मिन्नादरः तं तदनुजीविनः स्वस्वशिल्पेन सेवन्त इति लोकरीतिः। पतद्ग्राहः पतद्ग्रह इत्यमरः। दिवस्पतेः। तत्पुरुषे कृतीति (पा० ६।३।१४) बाहुलकात् षष्ठ्या अलुकि कस्कादि-

समेकमाणिक्यमयं समोज्ज्वलं
पतद्ग्रहं ग्राहितवास्तलेन सः ॥ २७ ॥

नलेन ताम्बूलविलासिनोज्झितै-
र्मुखस्य यः पूगकणैर्भृतो न वा ।
इति व्यवेचि स्वमयूखमण्डला-
दुदञ्चदुस्राकणचारुणश्चिरात् ॥ २८ ॥

त्वादिसर्जनीयस्य (पा० ८।३।४७) सः । षष्ठ्याः पतिपुत्रेति (पा० ८।३।५३) छन्दोविषयत्वात् लोके गत्यर्थसकर्मकत्वात् कर्मणि णिच् । पतत् गृह्णातीति पतद्ग्रहः । पचाद्यचि (पा० ३।१।१३४) पततो ग्रह इति (पा० ३।३।५८) अप् ॥ २७ ॥

नलेनेति । उदञ्चदुस्राकणचारुणा उदित्वरांशुतसूर्य्यवदा मुन्दरादतिरक्तात् ऊर्द्धप्रसरत्किरणोऽतिशयितो यः स्वीयो रूपगुणस्तेन चारोर्बा रक्ततरात् स्वमयूखस्य मण्डलात् सङ्घा-द्धेतोः ताम्बूलविलासिना ताम्बूलरससमास्वादिना पूगनागव-ल्लीदलखण्डत्यागिना नलेन गृहीतरसत्वात् उज्झितैस्त्यक्तैर्मा-णिक्यशकलसदृशैरुद्गाररूपैः पूगकणैः क्रमुकाल्पशकलैः अयं भृतः पूरितो न वा पूरित इति यः पतद्ग्रहः चिराद्भूयसा का-लेन सूक्ष्मेक्षिकया क्रमेण मुकुन्दसंशयैर्लोकैर्व्यवेचि निश्चितस्तं ग्रा-हितवानिति पूर्वेण सम्बन्धः । समीपं गत्वा सूक्ष्मेक्षिकयाऽयमि-दानीं पूगकणैः भृत इति निश्चितः कदाचित् कदाचिच्च इदानीं न भृत इत्यपि निश्चित इत्यर्थः । भृताभृतत्वसन्देहे रक्तमयू-

मयेन भीमं भगवन्तमर्चता
नृपेऽपि पूजा प्रभुनाम्नि या कृता।
अदत्त भीमोऽपि स नैषधाय तां
हरिन्मणीभाजनभाजनं मखन ॥ २८ ॥
छदे सदैव छविमस्य बिभ्रतां
न केकिनां सर्पविषं प्रसर्पति।

समणकुमं हेतुः। माणिक्यमयत्वादनिरक इत्यर्थः। इदानीं ता-
मसस्यामवसरात्काविन्युपचारे भूतवदित्युपचारः। यद्वा तस्यै-
वारक्तत्वाज्जनस्याद्भारत्यागभ्रमः। अमी पूगकणाः किंवा कि-
रणममूहा इति सन्देहस्मिरास्मिर्णीति इति वा ॥ २८ ॥

मयेनेति। भगवन्तं षड्गुणैश्वर्यसम्पन्नं भीमं शिवमर्घादिभिरु-
पचारैरर्चता पूजयता शैवेन मयनाम्ना ऽसुरेण प्रभुनाम्नि शिव-
नामधारके नृपेऽपि भीमेऽपि या पूजा कृता उपदा अकारि स
भीमोऽपि तां पूजां पूजारूपहरिन्मणीमारकतमणिसम्बन्धि विषा-
पहारसमर्थं अतिविस्तृतं भोजनार्थं भाजनं नैषधायादत्त मयेन
तस्मै दत्तं सोऽपि नलायादत्तेति। अपिशब्दः समुच्चयार्थः।
अर्चयतिर्भावादिकः ॥ २८ ॥

छद इति। अस्य भोजनपात्रस्य छविं नीलां द्युतिं सदैव
छदेऽपि बिभ्रतां केकिनां मयूराणां सर्पविषं न प्रसर्पति तच्छ-
रीरं नाक्रामतीत्यर्थः। स भगवान् शिवोऽत्र पात्रे एतदाधार-
त्वेन कालकूटस्वेदभोक्ष्यत् तर्हि नीलकण्ठत्वं नाधास्यत्। अत्र

न नीलकण्ठत्वमधास्यदत्र चेत्
स कालकूटं भगवानभोक्ष्यत ॥ ३० ॥

विरोध्य दुर्वाससमस्खलद्दिवः
स्रजं त्यजन्नस्य किमिन्द्रसिन्धुरः ।
अदत्त तस्मै स मदच्छलात् सदा
यमभ्रमातङ्गतयेव वर्षुकं ॥ ३१ ॥

पात्रे विषभक्षणे कृते सति तज्जीर्णतया नीलकण्ठत्वं न स्यादित्यर्थः । लिङ्निमित्ते ऌङ् क्रियातिपत्तौ (पा० ३।३।१३९) इति ऌङ् । भुजोऽनवन इति (पा० १।३।६६) तङ् ॥ ३० ॥

विरोध्येति । स भीमस्तस्मै नलाय मदच्छलाद् दानजलव्याजात् सदा वर्षुकं वर्षणशीलं यं हस्तिनं अदत्त स दुर्वाससं विरोध्य रोषयित्वा तच्छापादिन्द्रसिन्धुर ऐरावतो दिवः सकाशादस्खलत् पतितः किं । भुवमागत ऐरावणः किमित्यर्थः । विरोधे हेतुः । अस्य दुर्वाससः स्रजं मालां त्यजन् भुवि क्षिपन् । अत्र पौराणिकी कथा । कदाचिदैरावतमारुह्य गच्छते इन्द्राय दुर्वाससा प्रसादेन मन्दारपुष्पमाला दत्ता सा चेन्द्रेण करीन्द्रकुम्भे स्थापिता स तां शुण्डादण्डेनाधश्चिक्षेप ततः कुपितेन मुनिना त्वमपि मालावदधः पततीति शप्तः तन्मूलेयमुत्प्रेक्षा । वर्षुकत्वे पुनरुत्प्रेक्षते । अभ्रमातङ्गतया ऐरावतत्वेनेव । ऐरावतो हि सदा मदजलं स्रवति अयमपि तावत् स्वर्गाद्भ्रष्टः स एवेति सदा दानजलं मुञ्चतीत्यर्थः । अभ्रवन्मातङ्गस्तत्तया वा श्यामत्वात् सजलघनतुल्य

मदान्मदग्रं भवताथवा भिया
परं दिगन्तादपि यात जीवत।
इति स्म यो दिक्करिणः स्वकर्णयो-
र्विनाह वर्णस्रजमागतैर्गतैः ॥ ३२ ॥
बभार बीजं निजकीर्त्तये रदौ
द्विषामकीर्त्त्यै खलु दानविप्रुषः।

इत्यर्थः। अस्य भीमस्य सम्बन्धित्वेनास्वल्पकिमिति वा। वर्षुक-
मषपतेः (पा० ३।२।१५४) त्युकञ्॥ ३१॥

मदादिति। यो गजः स्वकर्णयोरागतैर्गतैरागमनैर्गमनैश्च
कृत्वा वर्णस्रजं वर्णमालां विनैव दिक्करिणो दिग्गजान् प्रति
दत्याह स्मेव। इति किं। भो दिग्गजाः भवतां बलाभिमानश्चे-
दस्ति तर्हि मदाद् युद्धं कर्त्तुं यूयं मदग्रे भवत मम पुरस्तात्ति-
ष्ठत। अथवा चेन्मदो नास्ति तर्हि भिया दिगन्तस्था यूयं दिग-
न्तादपि परं यात गच्छत। पलायितास्च सन्तः तत्रैव सुखेन
जीवत स्वप्राणान् रचत। इयं लुप्तोत्प्रेचा॥ ३२॥

बभारेति। यो गजो निजकीर्त्तये रदौ दन्तौ बीजं कारणं ब-
भार, द्विषामकीर्त्त्यै दानविप्रुषो दानोदबिन्दूनेव कारणं बभार।
खलूत्प्रेचायां। दन्ताभ्यां परविदारणात् स्वस्य यशःसमुत्पन्नेस्त-
योः कीर्त्तिकारणत्वम्। अथ च कीर्त्तिलक्षणस्य शुभ्रत्वात् कारणे-
नापि तादृशेनैव भवितुं युक्तमिति। दन्तौ कीर्त्तिबीजभूतकन्दा-
विव मदजलगन्धाघ्राणमात्रेण परगजानां भङ्गात् दानबिन्दूनां

श्रवःश्रमैः कुम्भकुचां शिरःश्रियं
मदे मदस्वेदवतीमुपास्त यः ॥ ३३ ॥

न तेन वाहेषु विवाहदक्षिणी-
कृतेषु सङ्ख्यानुभवेऽभवत् क्षमः।
न शातकुम्भेषु न मत्तकुम्भिषु
प्रयत्नवान् कोऽपि न रत्नराशिषु ॥ ३४ ॥

मदकीर्त्तिलक्षणत्वं। कार्य्यस्य श्यामत्वात् कारणेनापि तादृशेनैव भवितुं युक्तमिति श्यामदानविन्दव एवाकीर्त्तेर्वीजमिवेत्युत्प्रेक्षा। तथा मुहुर्मुहुर्गतागतैः श्रवःश्रमैः कर्णप्रयासैरेव व्यजनचालनैः कृत्वा कुम्भाविव कुचौ यस्यास्तां मदस्वेदवतीं दानरूपघर्मोदकयुक्तां शिरःश्रियं घर्मजलापहरणद्वारा तस्या एव मुदे हर्षाय उपास्त सिषेवे। एवम्भूतं शिरो दधानः प्रीतिमुदपादयदित्यर्थः। कामकेलिखिन्नां कुम्भकुचां कामिनीं स्वेदमपनयन् कामी तालवृन्तचालनेन वीजयतीति मदस्य स्वेदरूपेण शिरःश्रियः स्त्रीत्वरूपणम्। अधत्तेत्यपि पाठः ॥ ३३ ॥

नेति। तेन भीमेन नलाय विवाहे दक्षिणीकृतेषु कन्यादानदक्षिणात्वेन दत्तेषु वाहेषु रथादिषु तुरङ्गेषु वा सङ्ख्यानुभवे सङ्ख्याज्ञाने प्रयत्नवानपि कोऽपि कश्चिदपि न क्षमः इयन्तो वा दत्ता इत्येवं सङ्ख्यापरिच्छेदे समर्थो नाभवत्, तथा शातकुम्भेष्वनेकभूषणभूतघटिताघटितकाञ्चनेषु न, तथा मत्तकुम्भिषु गलन्मदमातङ्गेषु न, तथा रत्नराशिषु न क्षमोऽभवदिति। सर्व्वत्र विवाहद-

करग्रहे वाम्यमधत्त यस्तयो:
प्रसाद्य भैम्या नु च दक्षिणीकृत:।
कृत: पुरस्कृत्य ततो नलेन स
प्रदक्षिणस्तत्क्षणमाशुशुक्षणि: ॥ ३५ ॥

क्षिणीकृतेत्यपि च। बहुतरं यौतुकं दत्तवानीति भाव: ॥ ३४ ॥

करेति। य आशुशुक्षणिरग्निस्तयो: करग्रहे विवाहे विषये वाम्यं वक्रत्वं अधत्त भेजे। भैम्यभिलाषाल्नलाकारधारणादिद्वारा पूर्वं विरुद्धोऽभूदनु च पश्चान्नलवरणावसरे भैम्या स्तुतिध्यानादिना प्रसाद्य सन्तोष्य दक्षिणीकृत: आनुकूल्यं नीत: सोऽग्नि:। तत: पाणिग्रहानन्तरं नलेन पुरस्कृतोल्लेखनादिसंस्कारपूर्वमग्रे प्रतिष्ठाप्य तत्क्षणं तस्मिन्विवाहसमये प्रदक्षिण: प्रकर्षेणापसव्य: कृत: प्रदक्षिणभागेन वलयाकारेण वेष्टित:। अथ च य: पूर्वं यौतकदानकाले वामभागेऽभूत् पश्चाद्भैम्या फूत्कारादिना प्रबोध्यानुकूल: कृत:। अथ च दक्षिणभागे कृत: सोऽर्चनादिभि: सम्पूज्य नलेन सुतरामनुकूल: कृत:। अथ च प्रकर्षेण दक्षिणभागे कृत:। अन्योऽपि महान् पूर्वं विरोध्यते स विवाहादौ प्रसाद्यानुकूल: क्रियते इत्युक्ति:। अत्र क्वचित् क्वचिद्विधिक्रमभङ्गो देशाचाराच्छाखाभेदात् कुलाचारविशेषाद्वाद्भुव्य:। स एन: श्रीहर्षकवेरज्ञानलेशोऽपि। अत एव पूर्वं यथाविधीति प्रायुङ्क्त। आशुशुक्षणि:। आशाशुमिच्छति आङि शुषे: सन्नन्ताच्छन्दसि साधु:। शिष्टप्रयुक्तत्वाद्भाषायामपि साधुत्वं ज्ञेयम् ॥ ३५ ॥

स्थिरा त्वमश्मेव भवेति मन्त्रगा-
गनेशदाशास्य किमाशु तां श्रिया।
शिला चलेत प्रेरणया नृणामपि
स्थितेस्तु नाचालि बिडौजसापि सा॥ ३६॥
प्रियांशुकग्रन्थिनिबद्धवाससं
तदा पुरोधा विदधे विदर्भजां।

स्थिरेति। हे भैमि इममश्मानमारोहेत्युच्चार्य त्वं अश्मेव स्थिरा भवेति नलेनोच्चारिता मन्त्ररूपा वाक् तां भैमीमाशास्य शिलावन्निश्चला भवेति तस्यै आशिषं दत्वा आशु अनेशत् अनाशत्। उच्चारिता वर्णा प्रध्वस्ता भवन्ति। तत्रोत्प्रेक्षते श्रिया किं। किमिति तस्या लज्जयेत आह। शिला अल्पतेजसां नृणामपि प्रेरणया करचरणव्यापारमात्रेण चलेत् स्वस्थानादन्यत्र गच्छेत् सा तु भैमी पुनः अतिप्रभाविणा बिडौजसा इन्द्रेणापि स्थितेः मनोव्यापारमात्रस्वीकृतनलपतित्वरूपाया मर्यादायाः सकाशान्नाचालि। पतिव्रताभीमा न त्याजितेति स्थिरतरत्वेनाधिकाया भैम्या अहं हीनेति स्वदोषं विचिन्त्य लज्जैव नष्टेत्यर्थः। वैधमश्मारोहणं तेन कारितमिति भावः। नश अदर्शने अस्माल्लुङि पुषादित्वादङि नशिमन्योरलिट्येत्वमिति (पा० ६।४।१२०।वा० ८) एत्वे रूपं॥ ३६॥

प्रियेति। तदा वह्निसन्निधिकाले पुरोधा गौतमो विदर्भजां प्रियस्य नलस्यांशुकेन सह ग्रन्थिना निबद्धं वासो यस्यास्तामेवं-

जगाद विच्छिद्य पटं प्रयास्यतो
नलाददविश्राममिवैष विश्ववित् ॥ ३७ ॥
ध्रुवावलोकाय तदुन्मुखभ्रुवा
निर्दिश्य पत्याभिदधे विदर्भजा ।

विधां विदधे चकार । उत्प्रेचते । पटं विच्छिद्य कर्त्तित्वाऽरण्ये भैमीं विहाय प्रयास्यतो गमिष्यतो नलात् सकाशादेष पुरोधा अविश्रामं विश्रामाभावं जगादेव । वस्त्रं छित्वा त्वां हित्वाऽयं गमिष्यतोऽत्यतस्त्वया विश्रामो न कार्य इत्यस्य वस्त्रेण सह स्ववस्त्रस्य ग्रन्थिं दत्त्वैवानेन सह विचरणीयमित्युवाचेत्यर्थः । कथमेतज्ज्ञातमत आह । यतो विश्वं सर्व्वं वेत्तीति कालत्रयज्ञ इत्यर्थः । तस्माद्भविष्यदपि तेन ज्ञातमित्यर्थः । कलिना पराभूतो नलो द्यूतद्वारा हारितसर्व्वस्वः स्वीयैस्त्यक्तो वापरेण कलिना पचिरूपेण तद्धारणार्थं विक्षिप्तस्य वस्त्रस्यापहाराद्वस्त्रान्तराभावाद्भैमीवस्त्रार्द्धधारी सन् निद्राणायास्तस्या वस्त्रार्द्धं विच्छिद्य तां महारण्ये तत्याजेति भारते कथा । वैधमुभयवस्त्रग्रन्थिबन्धनं तेन कृतमिति भावः । विदधदिति पाठे कुर्व्वन् सन्निति योजना ॥ ३७ ॥

ध्रुवेति । तस्य ध्रुवस्य दर्शनार्थमुन्मुखी भ्रूर्यस्य तेन पत्या नलेन विदर्भजा निर्दिश्याज्ञाप्य ध्रुवस्यावलोकनार्थं अभिदधे उक्ता । तदुन्मुख्या भ्रुवा कृत्वा संज्ञाप्येति वा । न तु स्थूलस्य ध्रुवस्य स्वयंदर्शनयोग्यत्वात् सा स्वयमेव तं पश्येत् । तेन किमिति

किमस्य न स्यादणिमाक्षिमात्तिक-
स्तथापि तथ्यो महिमाऽऽगमोदितः ॥ ३८ ॥
धवेन साऽदर्शि वधूररुन्धतीं
सतीमिमां पश्य गतामिवाणुताम् ।

दर्शनं कारितमित्यत आह । अस्य ध्रुवस्य अणिमा सूक्ष्मपरिमाणत्वं अक्षिमात्तिको नेत्रगोचरः किं न स्यादपि तु स्यादेव यद्यपि तथापि स्वयंदर्शनयोग्यत्वेऽपि आगमोदितो महिमा वेदोक्तगौरवं सत्योऽस्त्विति शेषः । श्रुत्युक्तं हि प्रमाणमित्यर्थः । श्रुतिर्हि ततो वधूं ध्रुवमीक्षयेदिति ध्रुव दर्शितं ध्रुवं पश्यामि प्रजां विन्देय इति सा ब्रूयात् तस्मात् स्वयं द्रष्टुमशक्यत्वेऽपि तत्प्रवादमर्यादेति युक्तमित्यर्थः । वध्वा ध्रुवदर्शनं कारितमिति भावः । एतत् सर्वं कविवचः । अयं च यद्यप्यणुत्वं प्रत्यक्षं तथापि ज्योतिःशास्त्रोक्तं ध्रुवमण्डलस्य महापरिमाणत्वं सत्यमेव ॥ ३८ ॥

धवेनेति । सा वधूर्धवेन नलेन अणुतामतिसूक्ष्मत्वं गता-मिमां सतीं पतिव्रतामरुन्धतीं त्वं पश्येत्युक्त्वा अदर्शि दर्शिता । तत्राणुत्वे उत्प्रेक्षते । वरणात् पूर्वमेव हृदि कृतस्य मनोरथमात्रेण हृदये कृतस्य भूपतेः कृते तृणीकृतस्वर्गपतेः तृणत्वापादनेन त्यक्त इन्द्रो ययैवंभूतात्त्वज्ञानादिव लज्जयेति शेषः । अत्र हि परिणीता सतीन्द्रं तृणप्रायमकरोत् इयं तु हृदि धारणमात्रादकरोदिति । सतीत्वोपायमेवाधिका सतीति लज्जया सकाशादणुत्वं गतेव कृशामित्यर्थः । स्वतः कृशत्वमेव उत्प्रेक्षितं । भूपतेर्जनादिति

कृतस्य पूर्वं हृदि भूपतेः कृते
तपोऽरुन्धतीदर्शनादिति ॥ ३९ ॥

प्रसूनता तत्करपल्लवस्थितै-
रुडुत्वमुज्झितैर्व्योम्नि विहारिभिः पथि ।
मुखेऽमराणामनले रदावलि-
र्भाजि लाजैरनयोज्झितैर्द्युतिः ॥ ४० ॥

तया प्रतिष्ठाहुतिधूमपद्धति-
र्गता कपोले मृगनाभिशोभिताम् ।

शब्दद्वयसामान्यवाच्यपि नलभैमीलक्षणं विशेषं पर्यवस्यति। वैध-मरुन्धतीदर्शनं कारितमिति भावः। अदर्शि। ण्यन्तात्कर्मणि। अभिवादिदृशोरिति (पा० १।४।५३ वा० १) अणौ कर्त्तुर्णौ कर्मत्वं। तस्य चाभिहितत्वाद् द्वितीयाभावः॥ ३९ ॥

प्रसूनतेति। तस्याः भैम्याः करयोरेव पल्लवयोः स्थितैर्वर्त्त-मानैर्लाजैः प्रसूनता पुष्पत्वं अभाजि प्राप्ता। पल्लवेषु च पुष्पाणि युक्तानि तथा अनया भैम्या उज्झितैः करान्मुक्तैर्व्योम्नि विहर-णशीलैः सद्भिः पथि करादग्न्यन्तरालरूपे मार्गे उडुत्वविर्नक्षत्र-शोभा भेजे। व्योम्नि नक्षत्राणि युक्तानि। तथाऽमराणां मुखेऽनलेऽनया हुतैः रदावलिः दन्तपंक्तेर्द्युतिः शोभा भेजे। मुखे दन्तपंक्तिर्युक्ता। वैधो लाजहोमस्तया कृत इति भावः॥ ४० ॥

तयेति। तया भैम्या प्रतिष्ठा करकुड्मलाभ्यां स्वीकृता आ-हुतिधूमपद्धतिः हूयमानलाजादिद्रव्यसम्बन्धिनी धूमपरम्परा

ययौ दृशोरञ्जनतां श्रुतौ श्रिता
तमालनीलामलिकेऽलकायिता ॥ ४१ ॥

अपह्नुतः स्वेदभरः करे तयो-
स्त्रपाजुषोर्दानजलैर्मिलन्मुहुः ।
दृशोरपि प्रस्नुतमश्रु सात्त्विकं
घनैः समाधीयत धूमलङ्घनैः ॥ ४२ ॥

कपोले मृगनाभिशोभितां कस्तूरीशोभां जाता प्राप्ता। तत ऊर्द्ध्वं गच्छन्ती दृशोश्चक्षुषोरञ्जनतां ययौ प्राप। ततोऽप्यूर्द्ध्वं गच्छन्ती श्रुतौ कर्णयोस्तमालनीलावतंसभूत तमालदलमादृश्य श्रिता। ततोऽप्यूर्द्ध्वतरं गच्छन्ती अलिके ललाटेऽलकायिता चूर्णकुन्तलवदाचरिता तत्तुल्या जातेत्यर्थः। कपोले कस्तूरी दृशोरञ्जनं श्रुतौ तमालं ललाटे चालका इति युक्तम्। वैधधूमग्रहणं कृतमिति भावः। मृगनाभिशोभेति। कर्तर्युपमान इति (पा० ३।२।७९) णिनौ मृगनाभिशोभिनो तस्या भावस्तत्ता, त्वत्तलोरिति (पा० ६।३।३५ वा० २) पुंवत् ॥ ४१ ॥

अपह्नुत इति। त्रपाजुषोर्लज्जावतोस्तयोः करे वर्त्तमानः स्वेदभरः सात्त्विकघर्मजलसङ्घो दानजलैर्ब्राह्मणेभ्यो दक्षिणादानार्थं उत्सृष्टैः सङ्कल्पजलैः सह मुहुर्वारं वारं मिलन् सम्बन्धं प्राप्नुवन् सन् अपह्नुतः दानजलयोगात् सात्त्विकः स्वेदोऽयमिति लोकेन न ज्ञात इत्यर्थः। करे मुहुर्मिलन् पुनः पुनरुद्भवन् दानजलैरपह्नुत इति वा। तत्रापि कामविकारवशात् स्वेदं लोको

बहूनि भीमस्य वसूनि दक्षिणां
प्रयच्छतः सत्त्वमवेक्ष्य तत्क्षणं ।
जनेषु रोमाञ्चमितेषु मिश्रतां
ययुस्तयोः कण्टककोरकश्रियः ॥ ४३ ॥
बभूव न स्तम्भविजित्वरी तयोः
श्रुतिक्रियारम्भपरम्परात्वरा ।

प्राप्स्यतीति भिया वा। दृशोरपि सम्बन्धि प्रसृतं गलितं सात्त्विकं कामविकारजमश्रु घनैः सान्द्रैर्धूमलक्ष्मैर्धूमाक्रमणैः कृत्वा समाधीयत परिहृतं ताभ्यामित्यर्थात् तैरेव कर्तृभिरपलपितं वा। परस्परस्पर्शात्तयोः स्वेदादयः सात्त्विकाः प्रवृत्ता इति भावः॥४२॥

बहूनीति। बहूनि वसूनि दक्षिणां प्रयच्छतो दक्षिणात्वेन ददतो भीमस्य सत्त्वं दानशौण्डत्वमवेक्ष्य तत्क्षणं तस्मिन्नेव क्षणे आश्चर्यातिशयेन रोमाञ्चमितेषु प्राप्तेषु जनेषु मध्ये तयोर्भैमीनलयोरपि कण्टककोरकश्रियः कण्टककलिकाशोभा मिश्रताम् ऐक्यं प्रापुः। सात्त्विकोऽपि रोमाञ्चोऽन्यजनवदाश्चर्यादयं जात इत्युपलक्षित इति भावः ॥ ४३ ॥

बभूवेति। श्रुतिक्रियाया वेदविहितलाजाहोमाग्निपरिभ्रमणादिकाया आरम्भस्य परम्परा एकस्मादनन्तरमन्यस्यारम्भस्तस्मादनन्तरमन्यस्यैवमव्यवहितो य उत्तरोत्तरभावस्तद्विषयत्वरा वेगिता, तयोरवश्यापेक्षितायामपि कर्माङ्गितायां सात्त्विकजनितस्य द्रवलनात्मकस्य स्तम्भस्य विजित्वरी जयनशीला

न कम्पमस्याप्तिमनुष्यदग्रतः
स्थितोऽपि वह्निः समिधा समेधितः ॥ ४४ ॥

दमस्वसुः पाणिममुष्य गृह्णतः
पुरोधसा संविदधेतरां विधिः ।
महर्षिणेवाङ्गिरसेन साङ्गता
पुलोमजामुद्वहतः शतक्रतोः ॥ ४५ ॥

न बभूव तत्रापलम्लाप। स्तम्भवशात्तौ किमपि कर्म शीघ्रं कर्त्तुं समर्थौ नाभूतामिति भावः। तया समिधा यज्ञकाष्ठेन समेधितः संवर्द्धितो वह्निरपि अग्रतः स्थितः सन् तयोः कम्पमस्याप्तिं सात्त्विककम्पबाहुल्यं नालुम्पत् न शमयति स्म। शीतजं हि कम्पमग्निः शमयति न तु सात्त्विकं तस्य तत्रासमर्थत्वादित्यर्थः। तयोरन्यः सात्त्विकापत्नापेऽपि स्तम्भकम्पौ लोके ख्यातावेति भावः। अवर्त्ततास्तम्भेति पाठे न स्तम्भविजितवरेति नञ्समासः। अलुम्पत्। शे मुचादीनामिति (पा० ७।१।५८) नुम् ॥ ४४ ॥

दमेति। दमस्वसुः पाणिं गृह्णतोऽमुष्य नलस्य सम्बन्धिनो वैवाहिकस्य श्रौतस्य विधेः साङ्गता ऽङ्गसाहित्यं पुरोधसा संविदधेतरां नितरां साकल्येन चक्रे। प्रधानमात्रं नलेन कृतं अङ्गानि तु पुरोधसा कृतानीति भावः। कस्य केनेव। पुलोमजामुद्वहतः शतक्रतोः सम्बन्धिनो विधेः साङ्गता आङ्गिरसेन महर्षिणा बृहस्पतिनेव ॥ ४५ ॥

स कौतुकागारमगात् पुरन्ध्रिभिः
सहस्ररन्ध्रीकृतमौचितं ततः ।
अधात् सहस्राक्षननुत्वमित्रता-
मधिष्ठितं यत् खलु जिष्णुनामुना ॥ ४६ ॥
तथागनाया निरगोपि नो क्रिया
न सम्यगालोकि परस्परक्रिया ।

स इति। ततः वैवाहिकविधेरनन्तरं स नलः पुरन्ध्रिभिरन्तःपुरनारीभिरौचितं वधूवरचेष्टादिदर्शनार्थं सहस्ररन्ध्रीकृतं तृणकाष्ठादिरचितं बहुच्छिद्रगवाक्षं वधूवरसंवेशार्थं रचितशृङ्गारवेदिकं कौतुकागारं कुतूहलावहं दूर्वायवाङ्कुरादिनवमङ्गलद्रव्यसहितं गृहमगात् ययौ। यद्गृहं जिष्णुना जयशीलेनामुना नलेनाधिष्ठितं सत् विलोकितुं नेत्रसहस्रावकाशदायिरन्ध्रसहस्रधारिणा सहस्राक्षस्य कवचेन सह मित्रतां साम्यं अधात् बभार तदपि जिष्णुनेन्द्रेणाधिष्ठीयते खलु उत्प्रेक्षायां निश्चये वा ॥ ४६ ॥

तथेति। वरेण वध्वा चाशनाया बुभुक्षा ह्रिया लज्जया तथा पूर्ववत् नो निरगोपि निःशेषिता आहृत्य न भुक्तमित्यर्थः। तथा परस्परक्रियाऽन्योन्यं चेष्टादिव्यापारोऽपि ह्रियैव सम्यक् सम्मुखदर्शनेन नालोकि न विलोकिता किन्तु दृष्टिनमात्रेणेत्यर्थः। तथा अहं दिनत्रयं यथाविधि मुक्तसम्भोगं त्यक्तसुरतं सस्पृहं स्मरेच्छासहितं यथा तथाऽशायि शयितं। अहमिति सर्व्वत्र

विमुक्तसम्भोगमशायि सस्पृहं
वरेण वध्वा च यथाविधि त्र्यहम् ॥ ४७ ॥
कटाक्षणाज्जन्यजनैर्निजप्रजाः
क्वचित् परीहासमचीकरत्तराम्।

याञ्चं। विध्यतिक्रमभयात् दिनत्रयं ताभ्यां सह भुक्तं अन्योन्यं विलोकितं सहनिद्रितञ्च। परं लज्जयाऽनया च नाहति भुक्तम् नायापाङ्गं दृष्टं न च चुम्बनालिङ्गनादिपूर्व्वं शयितमित्यर्थः। एकत्र शयनं त्रिरात्रं ब्रह्मचर्य्यं चेति विधिः। अशनाया। अशना-यादन्यधनाया (पा० ७।४।३४) इति साधुः। त्र्यहं। समाहारे द्विगौ राजादिना (पा० ५।४।९१) इति टच्, न सङ्ख्यादेः समा-हार इति (पा० ५।४।८९) अह्नादेशाभावः। रात्राह्नाहाः (पा० २।४।२९) इति पुंस्त्वं। अत्यन्तसंयोगे द्वितीया (पा० २।२।२९। त्र्यहं विमुक्तसम्भोगमिति योजना ॥ ४७ ॥

कटाक्षेति। भोजकुलस्य भीमपूर्व्वशाखक्षत्रियवंशस्याङ्कुरो बालो दमः क्वचिद्भीमदृक्पथागोचरे कस्मिंश्चिद्देशे जन्यजनै-र्वरयात्रिकैर्वरपक्षीयैः सह निजप्रजाः परिहासपात्रभूतपौरवार-स्त्रीमुख्याः ताभिः प्रयोज्याभिरित्यर्थः, कटाक्षणात् अक्ष्णोः परिहासं स्मेरवक्रोक्त्यादिना अर्थान्तरोपदर्शनरूपं उपहासमची-करत्तरां अतितरां कारयामास। तथा क्वचिच्च वरयात्रया निमित्तेनागतान्नलपक्षीयानन्यान् राजलोकान् धरापुरोभिः दासीस्वैरिणीसैरन्ध्रीप्रभृतिभिः पुरसुन्दरीभिर्वाराङ्गनाभिर-

धराप्सरोभिर्वरयात्रयागता-
नभोजयद्भोजकुलाङ्कुरः क्वचित् ॥ ४८ ॥
स कश्चिदूचे रचयन्तु तेमनो-
पहारमत्राङ्ग रुचेर्यथोचितं ।

भोजयत् भोजनमकारयत् । परिवेशनार्थं काश्चित् सहभोजनार्थं काश्चिदादिष्टवानित्यर्थः । विवाहे कनीयसामेवोपहासकरणयोग्यत्वादङ्कुरपदप्रयोगो युक्तः । कटाक्षशब्दात् तत्करोतीति (पा० ३।१।२६ वा० १) ण्यन्तात् ल्युट् । निजप्रजाः । हृक्रोरिति (पा० १।४।५३) कर्म्मत्वं । आगतान् । भुजेः प्रत्यवसानार्थत्वात्, गतिबुद्धीति (पा० १।४।५२) कर्म्मत्वं । अभोजयत् । निगरणचलनार्थेभ्यश्चेति (पा० १।३।८७) परस्मैपदं ॥ ४८ ॥

तमेव प्रकारमाह । स इति । स इमः कश्चिन्नलपक्षीय एवमूचे स्वजनमुखेनेति शेषः । अङ्ग हे वरयात्रिक अत्र पात्रे आसु परिवेषिकासु मध्ये वा काश्चन स्त्रियः तव रुचेरभिलाषस्य यथोचितं उचितमनतिक्रमेण तेमनाख्यस्य व्यञ्जनस्य उपहारमानयनं रचयन्तु कुर्व्वन्तु यावदभिलाषं तेमनमानयन्तु किमिति प्रश्नः काकुः । एता एवं कुर्व्वन्तु त्वं भुङ्क्ष्वेति भोजनोपदेशो वा । एवमुत्तरत्रापि । तथा पिपासतः तृष्णालोस्तव पानार्थं सर्व्वतोमुखं जलमपि अर्पयन्तां ददतु । तथा ओदनमपि कामं यथेच्छमर्पयन्तां ॥ परिहासस्तु अत्र आसु मध्ये विविक्ते स्थाने वा अङ्गरुचेः स्तनजघनाद्यङ्गानां रुचेर्दर्शनाद्यभिलाषस्योचितं

पिपासतः कास्य न सर्व्वतो मुखं
नवार्पयन्त्यामपि काममोदनं ॥ ४९ ॥
मुखेन तेऽत्रोपविशत्वसाविति
प्रयाच्य दृष्टानुमतिं खलाहसत् ।

यथा भवति तथा तव मनसः अपहारं अपहरणं रचयन्तु स्तनादिदर्शनादिनान्तःकरणहरणं कुर्व्वन्तु इत्यर्थः । काय-कान्तेर्हेतोः सौन्दर्य्यातिशयान्मनोहरणं कुर्व्वन्त्वित्यर्थः । तथा पिपासतश्चुम्बनेच्छोस्तव सर्व्वतो नेत्रादिचुम्बनस्थाने दर्शनमात्रेण कामस्य हर्षकरं मुखमर्पयन्त्यां । बहूनां चुम्बनस्थानानामेकत्र मुखे वर्त्तमानत्वान्मुख्यमेव तव ददत्वित्यर्थः । अथ च कामस्य मोदनं हर्षकरं वराङ्गमपि चुम्बनार्थमर्पयन्त्यां । अथ च मुखं पिपासतस्तव सर्व्वदा वराङ्गमेव ददतु । स्यात्तमनं तु निद्वाम-मित्यमरः । पूर्व्वव्याख्याने तत्रत्युभयत्र योज्यं । मुखं सर्व्वत इति, उभसर्व्वतसोः कार्य्येति द्वितीया (सि० कौ० ३६।२।५०) । तव ते इति च सम्बन्धसामान्ये षष्ठी ॥ ४८ ॥

मुखेनेति । काचित् खला वक्रोक्त्यादिभाषिणी हे वरयात्रिक असौ मत्सखी पुरुषो वाऽत्र स्थाने ते तव मुखेनोपलक्षिता सम्मुखमिति यावत् त्वदुपायेन वा त्वदाज्ञयेति यावत् त्वया सह भोजनार्थं तव पुरस्ताद्वा भोजनार्थं उपविशतु इति प्रयाच्य सम्प्रार्थ्य मुखेनोपविशत्विति दृष्टा दत्ताऽनुमतिरनुज्ञा येन तं वरयात्रिकं पश्चादहसत् । हासे कारणमाह । हि यस्मात्तेन साधनेन

वराङ्गभागः स्वमुखं मतोऽमुना
स हि स्फुटं येन किलोपविश्यते ॥ ५० ॥
युवामिमे मे स्तनमे इतीरिणा
गले तथोक्त्वा निजगुच्छमेकिका ।

किलोपविश्यते स हि वराङ्गभागो गुह्यदेशः अमुना जनेन स्वस्यात्मनो मुखं स्फुटं निश्चितं अतो मुखेन करणेनोपविशत्वित्येवमर्थपरं तद्वचनमज्ञात्वा तेनानुज्ञायां दत्तायां कटिदेशाधःप्रदेशेन किलोपविश्यत इत्येवं वदता अनेन स्वमुखं वराङ्गत्वेन मतं यस्मात्तस्माद्धास्यं युक्तमित्यर्थः। सर्व्वजनबोधपुरःसरं जहासेति वा। अथ च ते मुखेनोपविशतु अपि तु पुरीषोत्सर्गार्थमुपविशत्विति प्रयाच्य तदीयं जुगुप्सितमर्थं गृहीत्वा स्पष्टानुमतिं तमहसत्। मुखं निःसरणं वर्चः प्रागस्योपाययोरपीति विश्वः॥५०॥

युवामिति। इमे पुरवर्त्तिन्यौ युवां मे मम स्तनमे उत्तमस्त्रियौ भवादृशे स्त्रीरत्ने न दृष्टे इतीरिणो वदतः स्तुवतः, अथ च मत्सम्बन्धिन्यौ प्रियतमे भवतां इति परिहासाद्वदतः कस्यचिज्जनस्य वरपक्षीयस्य गले यथा त्वयोच्यते तथेत्युक्त्वा तयोर्द्वयोर्मध्ये एकिका एकैव निजगुच्छं रज्जुस्थाने हारविशेषमेव इत्युक्त्वा न्यधत्त। इतीति किं। हे जन्य त्वं अदः पूर्वोक्तं इमे मे इति शब्दं वदन् तु पुनः छगलः छागो न भासि अपि त्वेवंशब्दं कुर्व्वन् छाग एव स्फुरसि। अथ च तुच्छः स्तनशून्यो गलः कण्ठो यस्यैवंभूतो न भासि। अजस्य गले स्तनौ तिष्ठ-

न भाम्यदस्त्त् कगलो वदन्निति
न्यधत्त जन्यस्य ततः परास्रजम् ॥ ५१ ॥
ननाय वालव्यजनं विधुन्वती
दमस्य दास्या निभृतं पदेऽर्पितात्।

तस्यान्तु तादृक्शब्दोऽपि स्तनग्रहस्य इति कारणान्न शोभसे। अयं च रज्जुरहितकण्ठो न भासीति रज्जुस्थाने हारं धत्ते स्मेति। उभयतो लम्बमानो हार एव गलस्तनस्थाने भवत्वित्यर्थः। ततः अनन्तरं परा द्वितीया रज्जुवद्धारमेव धृत्वा अजमिव तमाकृष्य कण्ठे बद्धा दूरं निनाय। अजो हि मेमे शब्दं करोति रज्ज्वा कण्ठे बद्धा आकृष्यत इति परिहासः। अयं च स्रक्कण्ठो यामरहितो न भासीति निजगुच्छं स्वहस्तास्थितपुष्पपल्लवस्तवकं गले मुखान्तः न्यधत्त नितरां बलाच्चिक्षेप, द्वितीया च दत्तपल्लवपुष्पग्रासं छागमिव चकर्षेति परिहासः। अथवैवमस्मान् स्तुतिं कुर्वन् तुच्छगलो हाररहितकण्ठो न भासीति वदन्तो गले हारं परितापवशाच्चिक्षेपेति वा। यद्वा अस्मत्प्रेरणा भवत्यो मे प्रियतमे इति वदंस्त्वं शून्यकण्ठो न भासि मयापि त्वं वरणीय इति मालास्थाने हारमेव चिक्षेप। परा च तत्रैव धृत्वा परिहासमिषेण भोगार्थं चकर्षेति भावः। मि मे मे इति परिहासपक्षे युवामिति विन्दुच्युतकेन एवं वदन् युवा तरुणः छाग इति वा योज्यं। अकृष्यत् लुङ्॥ ५१ ॥

ननायेति। ननाय ननार्थं वालव्यजनं मयूरपिच्छतालवृन्तं

अहासि लोकैः सरटात् पटोज्झिनी
भयेन जङ्घायतिलङ्घिरंहसः ॥ ५२ ॥
पुरस्थलाङ्गूलमदात खला बृसी-
मुपाविशत् तत्र ऋजुर्वरद्विजः ।

चामरं वा विधुन्वती कम्पयन्ती नलसेवापरा काचित् सुन्दरी दमस्य दास्या निभृतं गुप्तं यथा तथा पश्चादागत्य पदे चरणसमीपे अर्पितात् मुक्तात् सरटात् कृकलासात् भयेन पटमुत्पाव्य- वंशीभूता त्यक्तवस्त्रा दिगम्बरी भूता सती लोकैरहासि हसिता जनहासं हेतुरभूदित्यर्थः। किम्भूतात् सरटात्। जङ्घाया आयतिर्दैर्घ्यं तमप्यतिलङ्घयन्‌ रंहो वेगो यस्य तस्मात्। अत एव भयहेतोः सरटस्योर्ध्वारोहणं जातिस्वभावः ॥ ५२ ॥

पुर इति। काचित् खला भर्त्रा समागताय कस्मैचिद्द्विजाय पुरस्थं अग्रे स्थितं लाङ्गूलं पुच्छं यस्यां क्रियायां तद्यथा तथा कूर्माकारां वृसीं ऋषीणामासनं अदात् दत्तवती। वरः श्रेष्ठः वरस्य नलस्य वा द्विजः तत्र तस्यां पुरस्थलाङ्गूलतायामेव वृस्यामुपाविशदुपविष्टः। यतो ऋजुः तस्याः कौटिल्यमजानानः। सा च खला निजामतः स्मोथाज्ञानस्य आसनं मया भ्रान्त्या अन्यथा स्थापितमिति वदा वदती स्वाज्ञानं नाटयन्तीत्यर्थः। तं पुनरुत्थाप्य पश्चात्कृतं पुच्छं यस्याः सा एवम्भूता चासौ सा च वृसी तत्सदा तां प्रददाति प्रददती एवम्भूता सती अहसत्। उपविष्टस्योरुद्वयमूलान्तरे स्थितमासनपुच्छं शिश्नमिव

पुनस्तमुत्थाप्य निजामतेर्वदा
ऽहसच्च पश्चान्नकृतपुच्छनत्रदा ॥ ५३ ॥
स्वयं कथाभिर्वरपक्षसुभ्रुवः
स्थिरीकृतायाः पदयुग्ममन्तरा।
परेण पश्चान्निभृतं न्यधापयत्
ददर्श चादर्शतलं हसन् खलः ॥ ५४ ॥

भविष्यतीति बुद्ध्या मया पुरोलाङ्गूलमामनं चिप्तं। मदभिप्राय-मजानानोऽचतुरः पशुतुल्यः पशोश्च पश्चादेव पुच्छेन भवित-व्यमिति ज्ञापयितुं परिहासबुद्ध्यैव तां हमीं पश्चात्पुच्छं ददाना ऽहसदिति भावः। अज्ञया मया उपहासमानर्हस्योपहासाय प्रवृत्तमिति निजनिन्दां कुर्व्वन्तीति केचित्। आमनस्यापमा-नभिज्ञाया निजायाः स्वमत्या अमतेर्वदति वा। हषीणामा-मनं हमीत्यमरः ॥ ५३ ॥

स्वयमिति। कश्चित् खलः परिहासचतुरः स्वयं स्वेनैव कथा-भिर्हंसदौत्यादिवार्त्ताभिः स्थिरीकृतायाः कथाश्रवणप्रवणीकृता-या वरपक्षसुभ्रुवो नलपक्षीयायाः सुन्दर्या वरस्य पक्षे पार्श्वे स्थितायाः पादयुग्मं अन्तरा चरणद्वयमध्ये परेण स्वमखेन प्रयो-ज्येन निभृतं गुप्तं यथा तथा पश्चाद्भागेनादर्शतलं दर्पणं न्यधाप-यत् अस्थापयत्। हसन् प्रतिबिम्बितानुजघनकाममदनदर्पणं दद-र्श च। भगादिदर्शनादवहासः। पश्चादनन्तरं ददर्शेति वा। पद-युग्मं। अन्तरान्तरेण युक्तेति (पा०२।३।४) द्वितीया ॥ ५४ ॥

अथोपचारोद्धुरचारुलोचना
विलासनिर्वासितधैर्य्यसम्पदः ।
स्मरस्य शिल्पं वरवर्गविक्रिया
विलोकऋं लोकमहासयन्मुहुः ॥ ५५ ॥

अथेति । अथ कामरहितकेवलपरिहासानन्तरं वरवर्गाणां नलपक्षीयराजमहानां विक्रिया मनोविकारो याभ्यस्तया यासां मन्दर्शनेन नलपक्षीयानां कामविकारो भवति ता वराङ्गना विलोकऋं द्रष्टारं लोकं मुहुरहासयन् । तद्रूपादिदर्शनसमुत्पन्नकामविकारं वरलोकं दृष्ट्वा लोकोऽहसदिति भावः । कीदृश्यः । उपचारेण कटाक्षक्षेपादिना स्वानुरागज्ञापिके प्रीतिविलोकने विषये उद्धुराण्युत्कटानि चारूण्यतिविशालानि चतुराणि विलोचनानि यासां ताः । तथा विलासैः कटाक्षविक्षेपादिभिः कृत्वा निर्वासिता त्याजिता धीराणां विलासिनां धैर्य्यसम्पद् याभिस्ताः । तथा स्मरस्य शिल्पं कृतिरतिसुन्दरं । उपचारे परिवेषणादावुद्धुरास्तात्पाश्चारुनेत्राश्चेति वा । उपचारोद्धुरचारुलोचनानां विलासैस्त्याजिता धैर्यसम्पद्येन तस्य स्मरस्य शिल्पं विलसितं कर्त्रृ वरवर्गविकारदर्शिनं लोकं मुहुरहासयदिति वा । स्वाशयज्ञापनोत्सुकानि चारूणि नेत्राणि यासु । तथा विलासैः पूर्व्वोक्तैरेव त्याजिता धैर्यसम्पद्याभिर्यासु वा । तथा कामजनिता वरवर्गस्य विक्रिया विकाराः कर्त्र्यो विलोकऋं लोकं मुहुरहासयन्निति वा । इदानीं कामचेष्टापुरःसरं परिहासः प्रकृत इति भावः । ५५ ॥

तिरोवलद्वक्त्रसरोजनालया
स्मिते स्मितं यत्र खलु यूनि बालया।
तया तदीये हृदये निखाय तद्-
व्यधीयतासम्मुखलक्ष्यवेधिता ॥ ५६ ॥
कृतं यदन्यत्करणोचितत्यजा
दिदृक्षुचक्षुर्यदवारि बालया।

तदेवाह तिर इति। कस्मिंश्चिद्यूनि तरुणे स्मिते सानुरागं हसिते सति कयाचिद्बालया तिरो वक्रं वलद्वक्त्रसरोजनालया वलतो मुखकमलस्य दण्डो ग्रीवा यस्या एवम्भूतया सत्या यत् स्मितं ईषद्धासि तया बालया तदीये हृदये हासितुर्वक्षसि तत् स्मितमेव निखाय खनित्वा आरोप्य असम्मुखस्य लक्ष्यस्य वेध्यस्य वेधिता वेधकता व्यधीयत कृता खलूत्प्रेक्षायां। पराङ्मुखलक्ष्य-वेधकत्वं धनुर्विद्यायां निपुणस्य भवति। यः पराङ्मुखः सन् लक्ष्यं विध्यति। पराङ्मुख्यापि तस्मिन्नात्मानुरागो निवेशित इत्यर्थः। स्मितं लज्जा सानुरागसूचिका। मया स्वानुरागज्ञापनार्थं हास्ये कृते अनया हास्यपूर्वं लज्जितं चेत्तर्हि इयमप्यनुरक्तेति निश्चितवन्तं तत् स्मितमेव कामबाणीभूय अपीडयदिति भावः। बालत्वादेव वलितग्रीवत्वं। प्रौढा तु सम्मुखमेव हसति। स्मिते स्मितमिति कर्त्तरि भावे क्तः। वेधिता विधेस्तौदादिकात्ता-च्छील्ये णिनिः ॥ ५६ ॥

कृतमिति। करणस्य कर्त्तव्यस्य उचितं परिवेषणादि तत्य-

हृदस्तदीयस्य तदेव कामुके
जगाद वार्त्तामखिलां खलं खलु ॥ ५७ ॥
जलं ददत्याः कलितानतेर्मुखं
व्यवस्यता साहसिकेन चुम्बितुम्।

अति तया बालया यदन्यदप्रस्तुतं व्यापारान्तरं कृतं। तथा पुनः पुनर्दिदृक्षुः दर्शनेच्छुः किञ्चिद्दृगन्तमात्रेण द्रष्टुं प्रवृत्तमपि चक्षुर्यदवारि अर्द्धपथात् परावर्त्तितं तदेवान्यत्करणं चक्षुर्वारणरूपं द्वयमेव कामुके विषये तदीयस्य हृदः बालासम्बन्धिनो मनसः अखिलां वार्त्तामाशयं जगाद। यतः खलं सूचकं खलु-र्निश्चितं निश्चितं वा। दुर्ज्जनो ह्यन्यदीयमनोगतमन्यस्मै निवेदयति। लज्जानुभववशादिमयप्यनुरक्तेति सोऽज्ञासीदिति भावः। खले इति पाठे स्वाशयद्योतनपरेङ्गितज्ञानचतुरे इति कामुक विशेषणं ॥ ५७ ॥

जलमिति। कस्मैचित् पिपासुं जलं पाययमानायाः पादप्रक्षालनार्थं वा कस्मैचिज्जलं ददत्याः अत एव कलितानतेः नम्रीभूतायाः कस्याश्चित् सुन्दर्य्याः समीपवर्त्ति मुखं जनमध्ये चुम्बितुं व्यवस्यता कृतोद्यमेनात एव साहसिकेनाविचार्य्यकारिणा केनचित् कामुकेन पतद्वारिणि पदे मन्दपाणिना विलम्बार्थं विरलाङ्गुलिसङ्गमलग्नजलपाणिना सता पादप्रक्षालनसलिलपाणिना वा सता अन्यस्यां चुम्बनसामग्र्यां सत्यां एकपङ्क्तिनिविष्टानामन्येषां तत्र विचरतां वा ईक्षणस्य दर्शनस्य ईक्षणानां नेत्राणां वा वञ्चनार्थं प्रतारणार्थमनीक्षणार्थं क्षणोऽवसरः प्रती-

पदे पतद्वारिणि मन्दपाणिना
प्रतीक्षितोऽन्ये क्षणवञ्चनक्षणाः ॥ ५८ ॥
युवानमालोक्य विदग्धशीलया
स्वपाणिपाथोरुहनालनिर्म्मितः।
श्लथोऽपि सख्यां परिधिः कलानिधौ
दधावहो तं प्रति गाढबन्धताम् ॥ ५९ ॥

क्षितो विलम्बेन गवेषितः। पानपक्षे पानक्षणे पदे चरणे विर-लाङ्गुलिभ्यः पतद्वारि यस्मिंस्तथाभूते। पादप्रक्षालनपक्षे पत-द्वारिणि पदे मन्दपाणिनेति योज्यं। अन्यनिरीक्षणावसरं स-म्प्रतीक्ष्य तन्मुखं चुचुम्बेति भावः॥ ५८ ॥

युवानमिति। विदग्धशीलया चतुरया कयाचित् सुन्दर्य्या युवानं कञ्चित्तरुणमालोक्य कलानां सकलविद्याचातुर्य्याणां निधौ स्थानभूतायां स्वाशयज्ञायां प्रियसख्यां अथ च सखीरूपे चन्द्रे स्वपाणिभ्यामेव पाथोरुहनालाभ्यां कमलाभ्यां निर्म्मितो रचितः कण्ठाश्लेषरूपः परिधिः श्लथोऽपि शिथिलसम्बन्धोऽपि तं नेत्रलक्ष्यं युवानं प्रति लक्षीकृत्य गाढबन्धतां दृढबन्धनत्वं दधौ बभार। अहो आश्चर्य्यं। कलानिधौ च परिवेषो युक्तः श्लथस्य गाढत्वविरोधात्। सख्यां चन्द्रे वा कृतस्यालिङ्गनस्य परिधेस्तद्वन्धनरूपत्वादाश्चर्य्यं। सदालिङ्गनच्छुरियं स्वाशय-ज्ञापनाय सखीं आलिङ्गितवती मामेवालिलिङ्गेति तदाशयम-ज्ञासीदिति भावः॥ ५९ ॥

नतभ्रुवः स्वच्छनखानुबिम्बन-
च्छलेन कोऽपि स्फुटकम्पकण्टकः ।
पयो ददत्याश्चरणे भृशं चतः
स्मरस्य बाणैः शरणे न्यविक्षत ॥ ६० ॥
मुखं यदस्मायि विभज्य सुभ्रुवा
ह्रियं यदालम्ब्य नतास्यमासितम् ।

नतेति। स्मरस्य बाणैर्भृशं चतः नितरां पीडितोऽत एव स्फुटो जातः सात्त्विकः कम्पः कण्टको रोमाञ्चश्च यस्य स कोऽपि कामी स्वच्छनखेषु तदीयेषु अनुबिम्बनच्छलेन प्रतिबिम्बनच्छलेन प्रतिबिम्बव्याजेन पयो दुग्धं जलं वा परिवेषयन्त्याः पाययमानायाः कस्याश्चिन्नतभ्रुवः चरणे एव शरणे रचितृणी न्यविक्षत प्राविशत्। कामपीडाशान्त्यर्थं चिरं चरणावलोकनव्याजेन प्रार्थनाप्रणतिमन्वशामकार्षीदिति भावः । भीतः सकम्पो बाणैः सशल्यः सन् कश्चिच्छरणं विशति चत इवेति लुप्तोत्प्रेचा । चरणो ऽस्त्रियामित्यमरोक्तेश्चरणे इति द्वितीया द्विवचनान्तं । चरणाविति च पाठः । शरणमिति पाठे चरणरूपद्वयं रचितारमिति व्याख्येयं । न्यविक्षत । नेर्विश इति (पा०१।३।१७) तङ् ॥ ६० ॥

मुखमिति । तयैवान्यया वा सुभ्रुवा मुखं विभज्य वक्रीकृत्य यदस्मायि ईषद्धासि तथापि ह्रियं अवलम्ब्य लज्जामाश्रित्य नतास्यमानम्रमुखं यथा तथा यत् आसितं स्थितं मृदु मञ्जुलं गद्गदमस्पष्टवर्णं यथा तथा च वाक्यार्थः । अत्रादि युवा तदेव

अवादि वा यन्मृदु गद्गदं युवा
तदेव जग्राह तदाप्तिलग्नकम्॥ ६१॥
विलोक्य यूना व्यजनं विधुन्वती-
मवाप्तसत्त्वेन भृशं प्रसिष्विदे।
उदस्तकण्ठेन मृषोष्मनाटिना
विजित्य लज्जां ददृशे तदाननम्॥ ६२॥
स तत्कुचस्पृक्कचेष्टिदोर्लता-
चलद्दलाभव्यजनानिलाकुलः।

त्वयं तस्या आप्तिलग्नकं प्रातिनिधायकमिति जग्राह ज्ञातवानित्यर्थः। [illegible] मया लब्धेति निश्चिकायेति भावः। वा समुच्चये॥ ६१॥

विलोक्येति। यूना व्यजनं विधुन्वतीं चालयन्तीं सुन्दरीं अकस्माद्विलोक्य तद्दर्शनादेवाप्तसत्त्वेन आप्तसात्त्विकभावेन सता भृशं प्रसिष्विदे सात्त्विकः स्वेदः प्राप्त इत्यर्थः। आनन्दोद्रिक्तो मनोविकारः सत्त्वं तमेव प्रस्वेदं निह्नोतुं नाशितुं मृषा अलीकं ऊष्माणं प्रस्वेदनिमित्तं सन्तापं नाटयत्यवंशीलेनाभिनयता स्वेदापाकरण[illegible]कृतमुखेन सता लज्जां विजित्य तदाननं तस्या आननं ददृशे, स्वाभिप्रायज्ञापनार्थं तथा अपश्यदिति भावः। प्रसिष्विदे। षोपदेशत्वात् षत्वं। प्रसिस्विद इति पाठस्त्वन्यः॥ ६२॥

स इति। स पूर्वोक्तो युवा व्यजनं चालयन्त्यास्तस्याः पूर्वो-

अवाप नानानलनालशृङ्खला-
निबद्धनीडोद्भवविभ्रमं युवा ॥ ६३ ॥

काया: स्त्रिय: कुचयो: स्पृष्टकाख्यमालिङ्गनं चेष्टते करोत्य-
वंशीला दोर्लता बाहुवल्ली तस्या: सम्बन्धि चलद्दलाभं चपल-
पर्णतुल्यं व्यजनं तालवृन्तं तस्यानिलेन कम्पनसञ्जातवायुना
आकुला विवशीकृत:। स्तनस्पर्शिभुजचालितव्यजनविलोकनमात्र
सञ्जातानुरागतरल: सन् नानानलानां अनेकशरकाण्डानां
नालस्य सहस्य नलनालानां नलदण्डानां वा या शृङ्खला नि-
बन्धनहेतुत्वात्तेषां परस्परग्रथननिर्मित: पञ्जरस्तया नितरां
बद्ध:सङ्कुचितप्रचारीकृत: नीडोद्भव: पक्षी तस्य विभ्रमं पञ्जर-
मध्य एव यद्दिशिष्टं भ्रमणं अथ च तस्य विलासं साम्यं अवा-
प जनसम्मर्देऽप्यनुरागातिशयाद् व्यजनचालनचलद्भुजान्तर्वर्त्ति
तत्कुचयो: परम्परयापि संस्पर्शे सांसर्गिकप्रीत्या साक्षादिव
तत्कुचस्पृष्टकालिङ्गनमनुभवन् जनशङ्कया यथेष्टं चेष्टितुमशक्त:
कामातुर: पञ्जरबद्धपक्षिनिर्बन्धमिवानुभवदिति भाव: ।
लतायाश्च चलद्दलत्वं युक्तं । व्यजनचालनव्याजाच्चलतो भुज-
स्यापि स्तनस्पर्शे स्पृष्टकालिङ्गनत्वं युक्तम्। नलजालेति पाठ:
समीचीन: । नलनालेति पाठे नानाविधा: कण्टकानां नल-
सम्बन्धिन्य: कण्टबन्धनकारिण्य: शृङ्खला इत्यर्थ: ॥ ६३ ॥

आवञ्छटा कापि कटाक्षणस्य सा
तथैव भङ्गी वचनस्य काचन ।
यया युवभ्यामनुनाथने मिथः
क्षणोऽपि दूतस्य न शोषितः श्रमः ॥ ६४ ॥
पपौ न कश्चित् क्षणमास्यमेल्लितं
जलस्य गण्डूषमुदीतसम्मदः ।

आवेति। सा कापि वर्णयितुमशक्या भावोद्गमनचतुरा कटाक्षणस्य नेत्रप्रान्तवक्रवीक्षणस्यावञ्छटा भङ्गिः परम्परा वा तथैव तद्वच्चितैव सा काचन कापि वक्रोक्त्यादिरूपा वचनभङ्गी रचनापि अभूदिति शेषः। सा का। यया कटाक्षावञ्छटया वचनभङ्ग्या च कर्त्र्या युवभ्यां मिथः परस्परं अनुनाथने अन्योन्यप्रार्थने विषये क्षणोऽप्यल्पोऽपि दूतस्य श्रमः प्रयासो न शोषितोऽविफलीकृतः। यया कृत्वा युवभ्यां न शोषित इति वा। आत्मनैव चेष्टाविशेषरचनाद्वारा त्वं किमेष्यसि अहं वा गच्छामीत्यादिप्रश्ननिश्चयाद्दूतस्यानवसर इति भावः। धूर्तवैदग्ध्यं सूचितं। युवतीच युवा चेत्यत्र, पुमान् स्त्रिया (पा० १।२।६७) कर्त्तरि तृतीया चतुर्थी वा। शोषितः। तत्करोतीति ण्यन्तान्निष्ठा ॥ ६४ ॥

पपाविति। कश्चित्कोऽपि युवा आस्येन मुखेन मेल्लितं योजितं करपुटे पानार्थं धृतं जलस्य गण्डूषं पेयं जलं क्षणमात्रं न पपौ। यत उदीतसम्मदः उत्पन्नानुरागः। तथापि किमिति न पपावित्यत आह। तत्राधरसम्पृक्ते करपुटधृते जले प्रतिबिम्बितं

चुचुम्ब तत्र प्रतिबिम्बितं मुखं
पुरः स्फुरन्त्याः स्मरकार्मुकभ्रुवः ॥ ९५ ॥
हरिन्मणिर्भोजनभाजनेऽर्पिते
गताः प्रकोपं किल वारयात्रिकाः ।
स्रुतं न शाकैः प्रवितीर्णमस्ति व-
स्त्विपेदमेवं हरितेति बोधिताः ॥ ९६ ॥

पुरः स्फुरन्त्या विलसन्त्याः स्मरकार्मुकवद्भ्रुवौ यस्यास्तस्या मुखं चुचुम्ब । उद्दीतमन्मदः सन् वा चुम्बितवान् । जले पीते प्रतिबिम्बाभावात् पानार्थं गृहीते जले तस्या मुखप्रतिबिम्बे प्रतिबिम्बजनितमुखचुम्बनदर्शनकौतूहलवशात्तस्या यावदवस्थानं तावन्न पपौ । गतायां तु प्रतिबिम्बाभावात् पपाविति भावः । पुरः स्फुरन्त्या जलं ददत्या एव मुखमिति वा ॥ ९५ ॥

हरिदिति । हरिन्मणिर्भोजनार्थं भाजने पात्रेऽर्पिते पुरः स्थापिते सति पत्रावलीभ्रान्त्या शाकपूर्णत्वभ्रान्त्या वा किल स्फुटं प्रकोपं नितरां रोषं प्राप्ता वारयात्रिका वरपक्षीया राजानो भीमसम्बन्धिभिर्लोकैरिति बोधिताः । इति किं । इदं वो युष्मभ्यं प्रवितीर्णं पात्रं शाकैः पलाशादिवृक्षपलाशैर्वास्तुकादिश्यामव्यञ्जनैरेव वा न स्रुतं तद्रचितं पूर्णं वा किन्त्वोदनादियुक्तमपि हरितनीलया त्विषा स्रुतं न पत्रावली नापि शाका इत्येवं ज्ञापितास्ततस्तुष्टा इत्यर्थः । वारयात्रिकाः । वरयात्रा प्रयोजनमेषां इत्यर्थे प्रयोजनमिति (पा० ५।१।१०९) ठक् ॥ ९६ ॥

ध्रुवं विनीतः स्मितपूर्व्ववाग् युवा
किमप्यपृच्छन्न विलोकयन्मुखं।
स्थितां पुरस्स्फाटिककुट्टिमे वधूं
तदङ्घ्रियुग्मावनिमध्यबद्धदृक् ॥ ६७ ॥

अमी लसद्बाष्पमखण्डिताखिलं
वियुक्तमन्योन्यममुक्तमार्द्दवं।
रसोत्तरं गौरमपीवरं रसा-
दभुञ्जतामोदनमोदनं जनाः ॥ ६८ ॥

ध्रुवमिति। विनीतः ध्रुवमाचारवानिव स्मितपूर्व्ववाक् मुखं न विलोकयन् अपश्यन् युवा तस्याः अङ्घ्रियुग्मस्यावनिमध्ये भूमिभागे बद्धदृग्व्यापारितनेत्रः सन् पुरः स्फाटिकमणिकुट्टिमे स्थितां वधूं किमप्यपृच्छत्। अयं स्फाटिककुट्टिमप्रतिबिम्बिततदङ्गदर्शनार्थमेव गाढीमिषेण तां स्थिरीचकारेति भावः। अधोदर्शनार्थमेव मुखं न विलोकितं। अयं श्लोकः क्वचित् ॥ ६७ ॥

अमी इति। अमी जनाः रसात् स्वादविशेषानुरागादोदनं अभुञ्जत। किम्भूतं। लसद्बाष्पं विलसदूष्माणं ईषदुष्णं। तथा अखण्डितश्चासावखिलः समग्रोंऽशः पाकेऽपि अविच्छिन्नं तण्डुलमिति यावत्। अभग्नमखिलं स्वरूपं यस्येति वा। तथा पाकसमये नवनीतलेपात् अन्योन्यं वियुक्तमसंलग्नसिक्थकं। तथा अमुक्तं अत्यक्तं मार्द्दवं येन सुजातिशालिबीजत्वादतिकोमलं। तथा रसोत्तरं स्वादुबहुलं। तथा गौरं चन्द्रधवलं। तथा अपीवरं जीरकादिसुजातिशालिबीजत्वात् सूक्ष्मं दीर्घतण्डुलं अत एवा-

वयोवशस्तोकविकस्वरस्तनीं
तिरस्तिरश्चुम्बति सुन्दरे दृशा।
स्वयं किल स्रस्तमुरस्थमम्बरं
गुरुस्तनी ह्रीणतराऽपराऽऽददे॥ ६९॥

मोदनं हर्षहेतुं। परिमलबाहुल्याद्वा आमोदनं। अचतले गल-द्राघत्वं। मार्दवात्यागे अन्योन्यवियुक्तत्वं। अतःकारणान्मा-र्दवैः परस्परविरोधाभासः॥ ६८॥

वय इति। सुन्दरे जन्यजने दृशा वयोवशेन निर्गच्छदाग-गच्छच्छैशवतारुण्यपारतन्त्र्येण स्तोकमीषद्विकस्वरौ उन्नमितम-ण्डलौ स्तनौ यस्यास्तां वयःसन्धौ वर्त्तमानां मुग्धां तिरस्तिरो वक्रं वक्रं यथा चुम्बति पश्यति सति सानुरागकटाक्षमात्रेणापि चुम्बनजन्यं सुखमनुभवति गुरुस्तनी तारुण्यभरपीवरदृढतरकु-चाऽपरान्या स्त्री तदनुरागाद्ध्रीणतरा अतिसलज्जा सती यथा-स्थानस्थितमपि स्वयमात्मनैव स्रस्तं किल स्थानच्युतं जातमिवो-रस्थमम्बरं हृदयावरणं बलाद्विगलितं कृत्वा पुनस्तदाच्छा-दनाय आददे अङ्गीचकार। मुग्धां प्रत्यनचरं हृदयावरण-सञ्ज्ञानं चकार। विदग्धस्त्रीरीतिरीदृशी। अथ च त्वमिमा-मल्पस्तनीं मुग्धां त्वत्सम्भोगसहनाक्षमां किं पश्यसि पक्वमालूर-समानस्तनीं त्वत्सम्भोगक्षमां मां पश्येति स्वाशयज्ञापनायादृष्ट-मपि पीनघनस्तनयुग्ममदर्शयदिति भावः। ह्रीणतरा। तसि-लादिष्विति (पा० ६।३।३५) पुंवद्भावः॥ ६९॥

यदादिहेतुः सुरभिः समुद्भवे
भवेत्तदाज्यं सुरभि ध्रुवं ततः।
वधूभिरेभ्यः प्रवितीर्य्य पायसं
नदीघकुल्यातटसैकतं कृतम्॥ ७०॥
यदप्यपीता वसुधालयैः सुधा
तदप्यदः स्वादु ततोऽनुमीयते।

यदिति। सुरभिः कामधेनुर्गौर्वा। अथ च सौरभ्ययुक्तः पदार्थः समुद्भवे उत्पत्तिविषये यस्यादिहेतुः दुग्धादिद्वारा परम्परया मूलकारणं ततो ध्रुवं तस्मादिव सौरभ्यधर्म्मयुक्तकारणादिव यदाज्यं सुरभि भवेत् तस्मात् कारणगुणा हि कार्य्ये समवयन्तोऽतिसुरभीभवितुमर्हन्ति. तदाज्यमेभ्यो जनेभ्यो वधूभिः प्रवितीर्य्य परिवेष्य पायसं क्षीरपक्वतण्डुलमन्नं नदीघकुल्यानां घृतप्रवाहरूपाणां कृत्रिमाल्पसरितां तटयोः सैकतं कृतम्। पूर्व्वं पायसं परिवेष्य तस्योपरि धाराप्रवाहरूपं घृतं क्षिप्तं द्विधा भूय घृतमभितः स्थितं पायसं शुभ्रत्वात् घृतकुल्यासैकतमिव शोभते स्मेति भावः। आत्मसौरभ्यवाङ्कन्यामुकम्। यदाज्यमित्येव पाठः॥ ७०॥

यदपीति। यदपि वसुधालयैर्मनुष्यैः सुधा अमृतं न पीता तदपि तथापि सुधारसाज्ञानेऽपि अदः आज्यं ततोऽमृतादपि सकाशात् स्वादु मिष्टमित्यनुमीयते। यस्मात् सुधाश्चसः अमृतान्ना देवा अपि कर्त्तौ उपबुधेन अग्निना दग्धगन्धिते विनाशि-

अपि क्रतूपर्बुधदग्धगन्धिने
स्पृहां यदस्मै दधते सुधान्धसः ॥ ७१ ॥
अबोधि नो ह्रीनिभृतं मदिङ्गितं
प्रतीत्य वा नादृतवत्यसाविति ।

तस्मै रम्भाय यस्मै घृताय स्पृहां इच्छां दधते । यागे हि हुतं घृतं देवा भुञ्जते । यद्यमृतादधिकरसं नाभविष्यत्तस्मादमृतादा अपि देवा यागानलविकृतगन्धमप्येतत्सानुरागं कथमभ्यवहरिष्यन् अभ्यवहरन्ति तावत्तस्मादमृतादपि विकृतगन्धमपि घृतमधिकरसं । किमुत स्पष्टमौरभमिति भावः । मनुष्यैरपि सुधा यस्मान्न पीता सुधान्धसोऽपि विशिष्टायास्मै यस्मात् स्पृहयन्ति तस्मादपि च हेतोरदो घृतं सुधायाः स्वादुतरमनुमीयते । एकोऽन्यरसत्वाद्बुद्धिपूर्व्वममृतं नास्वादयत्येव । अन्ये च नित्यं प्राप्तामृता अपि यस्माद्घृताय स्पृहयन्ति तस्माद्धेतुद्वयादमृतादप्यधिकमेतदनुमीयते इति वा । क्रतूपर्बुधेन दग्धस्तासौ गन्धश्च सोऽस्यास्तीति कर्म्मधारयादिनिः । स्पृहेरीप्सित (पा० १।४।३६) इति सम्प्रदानत्वम् ॥ ७१ ॥

अबोधीति । असौ बाला ह्रीनिभृतं बाललाज्ज्ञावशाद्विस्पष्टं इति च हेतोर्भावसूचकं मदिङ्गितं भ्रूविक्षेपादि मम चेष्टितं नो अबोधि अज्ञासीत् किंवा । अथवा प्रतीत्य ज्ञात्वा ननु रागान्नादृतवती अज्ञातवतीत्येवंरूपां पुनः पुनर्जायमानां यूनो धियं संशयबुद्धिं कियन्तं मार्गं गतापि बाला निवृत्य परावृत्य

लुनाति यूनः स्म धियं कियद्गता
निवृत्य बालादरदर्शनेषुणा ॥ ७२ ॥
न राजिकाराद्धमभोजि तत्र कै-
र्मुखेन सीत्कारकृता दधद्दधि ।
धुतोत्तमाङ्गैः कटुभावपाटवा-
दकाण्डकण्डूयितमूर्द्धतालुभिः ॥ ७३ ॥
वियोगिदाहाय कटूभवत्त्वप-
स्तुषारभानोरिव खण्डमार्द्रकम् ।

आदरदर्शनं सादरकटाक्षविलोकनं तदेवेषुणा लुनाति स्म चिच्छेद । तदिङ्गितज्ञानपुरःसरं स्वानुरागं प्रकटीचकारेत्यर्थः । तादृग्विलोकनात् सदिङ्गितं ज्ञात्वा इयमप्यनुरक्तेति युवा निश्चिकायेति भावः । कियद्गता । द्वितीयाश्रितेति (पा० २।१।२४) समासः । कियद्दूरं यातया गतेति क्रियाविशेषणं वा ॥ ७२ ॥

नेति । युग्मं । तत्र भोजनगृहे भोजनावसरे वा राजिकाभी राद्धं साधितं दधि दधत् दधिमिश्रितं व्यञ्जनं तत्कटुत्वातिशयात् सीत्कारकृता मुखेन कैर्जनैर्नाभोजि अपि तु सर्वैरपि भुक्तं । किम्भूतैः । कटुभावपाटवात् कटुत्वातिशयात् धुतोत्तमाङ्गैः कम्पितशिरोभिः । तथा भोजनकाले शिरःकण्डूयनस्य शास्त्रवचनैर्निषिद्धत्वादकाण्डे अकाले कण्डूयिते मूर्द्धतालुनी यैः तैः । मुखस्यैव भोजनसाधनत्वे सिद्धेऽपि सीत्कारादिविशिष्टत्वद्योतनार्थं मुखेनेत्युक्तं । राजिकाराद्धभोजिनामियं जातिः ॥ ७३ ॥

वियोगीति । वियोगिनां स्त्रीपुंसां दाहाय पीडार्थं कटू-

मितं मृदु प्रागथ दाहदायि तत्
खलः सुहृत्पूर्व्वमिवाहृतिन्मनः ॥ ७४ ॥
नवौ युवानौ निजभावगोपिना-
वभूमिषु प्राग्विहितभ्रमिक्रमम् ।
दृशोर्विधत्तः स्म यदृच्छया किल
त्रिभागमन्योन्यमुखे पुनः पुनः ॥ ७५ ॥

भवन्दमित्विषो दीप्तयो यस्यामत्यद्दीप्तेमुपारभाने। यन्द्रस्याहृतं खण्डमिव मितं श्वेतं तथा प्राक् प्रथमं मृदु प्रथमस्पर्शममये कोमलं अथ पश्चान्मुखप्रक्षेपानन्तरं तालुजिह्वादेस्तीक्ष्णातिशयाद्दाहदायि दाहकारि आहृतं आनीतं तद्राजिकारागाद्धमभाजीति पूर्व्वेणान्वयः । तुषारभानोः मकाशादाहृतमिति वा । क इव । खल इव । किम्भूतः । पूर्व्वं सुहृदापातरमणीयस्ततोऽनन्तरमहितो वैरी । रायी इति कान्यकुब्जभाषायां । मोहरया इति दाक्षिणात्यभाषया राजिकानां नाम ॥ ७४ ॥

नवाविति । वयःसन्धौ वर्त्तमानौ नवावप्रगल्भौ अत एव निजभावगोपिनौ स्वानुरागापह्नवपरौ कौचिद् युवानौ अभूमिषु लोकव्यवहारायोग्येषु स्वयोग्येषु वा अनुद्देशेषु वा वस्तुषु प्राक् पूर्व्वं विहितः कृतः भ्रमेर्निरर्थकभ्रमणस्य क्रमः परम्परा यत्र येन वा एवम्भूतं दृशोर्नेत्रयोस्त्रिभागं तृतीयांशरूपं कटाक्षं अन्योन्यमुखे पुनः पुनः विधत्तः स्म चक्रतुः यदृच्छया किल । अन्यविलोकनवत् स्वेच्छामात्रेण कममप्राप्तमन्योन्यमुखाविलोकन

व्यधुस्तमां ते मृगमांससाधितं
रसादशित्वा मृदु तेमनं मनः ।
निशाधवोत्सङ्गकुरङ्गजैरदः
पलैः सपीयूषजलैः किमश्रपि ॥ ७६ ॥
परस्पराकूतजदूतकृत्ययो-
रनङ्गमाराद्धुमपि क्षणं प्रति ।

कुरुतः न त्वनुरागेणेति लोकप्रतीतिर्यथा स्यादेवं वस्त्वन्तरविलोकनव्याजेनान्योन्यमुखं कटाक्षैर्वीक्षांचक्राते इति भावः । विभागमिति पूर्ववत् समर्थनीयम् ॥ ७५ ॥

व्यधुरिति । ते जन्यजना मृगमांसैः साधितं राद्धं संस्कृतं मृदु तेमनाख्यं व्यञ्जनविशेषं रसात् प्रीत्याऽशित्वा भुक्त्वा इति मनो व्यधुस्तमां नितरां चक्रुः । इति किं । अदः तेमनं निशाधवश्चन्द्रः तस्योत्सङ्गे वर्त्तमानः कुरङ्गो हरिणस्तस्माज्जातैः सपीयूषजलैः अमृतरूपैः जलैः सह वर्त्तमानैः पलैर्मांसैरश्रपि किं अपाचि किं । रसातिशयान्मनसा एवं तर्कितवन्तस्ते इत्यर्थः । तेमनस्यातितरां स्वादुत्वमुक्तम् । अश्रपि । श्रा पाके इत्यस्मात् कर्म्मणि चिणि घटादित्वान्मित्वाद्ध्रस्वः ॥ ७६ ॥

परस्परेति । परस्परस्याकूतात् चेष्टाविशेषादेव जातं दूतकृत्यं सम्भोगसम्मतिर्ययोः कयोश्चिद्यूनोः स्त्रीपुंसयोरनङ्गमाराद्धुं सुरतं कर्त्तुं यः क्षणः समयस्तं प्रति उद्दिश्य सदा क्रियमाणनियमापेक्षया कियच्चिरायुषा कियच्चिरं किञ्चिदधिककाल-

निमेषणेनैव कियच्चिरायषा
जनेषु यूनोरुदपादि निर्णयः ॥ ७७ ॥
अहर्निशा वेति रताय पृच्छति
क्रमोष्णशीतांशुकरार्पणादिव ।
ह्रिया विदग्धा किल तन्निषेधिनी
न्यधत्त सन्ध्यामधुरेऽधरेऽङ्गुलीम् ॥ ७८ ॥

मायुर्वर्त्तमानता यस्यैवंभूतेन कियच्चिरकालस्थायिना निमेषणेनाक्षिपक्ष्मसङ्कोचनेनैव कर्त्रा करणेन वा जनेषु सखीवर्गजनेषु वर्त्तमानेषु सत्सु अपि निर्णयः निश्चय उदपादि कृतः जातो वा। कदा सम्भोग इति इङ्गितेन पृष्टे सति नेत्रे निमील्य किञ्चित्कालं स्थित्वा जने निद्राणे सति आगन्तव्यमिति रात्रिः सङ्केतसमय इति निरणायीति भावः। उदपादि। चिण्तेपद इति (पा० ३।१।६०) कर्त्तरि कर्म्मणि वा चिण् ॥ ७७ ॥

अहरिति। विटे कामुके रताय आवयोः सम्भोगं कर्त्तुं अहर्निशा वेति उष्णकरघर्म्मोपलक्षितं दिनं वा शीतांशुकरशैत्योपलक्षिता रात्रिर्वा समय इति क्रमेणोष्णशीतयोरनयोरुपरि करार्पणादेव चेष्टितात् काममपि पृच्छति सति विदग्धा चतुरा तत्प्रश्नाशयज्ञा ह्रियोपलक्षिता अनन्तरमिङ्गितेनैव तन्निषेधिनी तयोर्दिननिशयोर्निषेधं कुर्व्वाणा सन्ध्यावन्मधुरे रमणीयेऽधरे स्वीयोष्ठेऽङ्गुलीं न्यधत्तास्थापयत्। अनभिमतमर्थं निषेधन्त्यः स्त्रियो मातः किमेवं ज्ञातमित्याद्यभिधायाधरेऽङ्गुलीं स्थाप-

क्रमेण कूरं स्पृशतोऽस्मणः पदं
सिताञ्च शीता चतुरेण वीक्षिता।
दधौ विदग्धाकणितेऽधरेऽङ्गुली-
मनौचितीचिन्तनविस्मितं किल॥ ७९॥

कियत् त्यजन्नोदनमानयन् कियत्
करस्य पप्रच्छ गतागतेन या।

यन्तीति जातिः। किल प्रसिद्धं। लोकस्य चैवमेव प्रतीतिर्जाता। सा तु तन्निषेधव्याजेन दिने रात्रौ वा अनवसरः सन्ध्यैव रतसमय इत्यकथयदिति भावः। यद्वा दिने सूर्यालोकात् रात्रौ चन्द्रालोकात् द्वयमप्यनुचितं। किन्तु महान्धकारमलिना सन्ध्यैव रन्तुं योग्येति भावः॥ ७८॥

क्रमेणेति। अयं श्लोकः क्षेपकः। कूरं भक्तं सितां शर्करां। किमिदमनेनानुचितं क्रियत इत्यनौचितीचिन्तनेन विस्मितं किल विस्मितेव। अरुणिते यावकेनेवेत्यर्थः। भावः स एव॥ ७९॥

कियदिति। कृतसुरतकालनिर्णयः स एव युवा कियदल्पं ओदनं पुरःस्थितां वीक्ष्य त्यजन् पात्रे स्थापयन् कियदोदनं च सम्प्रति पुनरानयन् सन् करस्य भक्तपरस्यागवशात् परोगमनेन सम्प्रति भक्तानयनवशादागमनेन च क्रमेण त्वां प्रत्यहं किमेष्यामि त्वं वा मां प्रति किमेष्यसीति यां पप्रच्छ सा आननं नम्रं व्यधत्त लज्जया किल। किलेत्यलीके। लोकप्रतीतौ अनया लज्जया मुखं नम्रीकृतं इति। तत्वतस्तु मुखनम्रीकरणेनाहमा-

अहं किमेष्यामि किमेष्यसीति सा
व्यधत्त नम्रं किल लज्जयाननं ॥ ८० ॥
यथामिषे जग्मुरनामिषभ्रमं
निरामिषे चामिषमोहमूहिरे।
तथा विदग्धैः परिकर्म्मनिर्म्मितं
विचित्रमेते परिहस्य भोजिताः ॥ ८१ ॥
नखेन कृत्वाधरसन्निभां निभाद्
युवा मृदुव्यञ्जनमांसफालिकां।

गमिष्यामीति मन्दर्शितवतीति भावः। तं वीक्ष्य मुखं नम्रीकृत्य स्वचरणौ पश्यन्ती त्वमेवागत्य मच्चरणयोर्निपतेति वा भावः। भोजनसमये भोक्ता कियन्तं ओदनं विभज्य स्थापयति कियन्तं दध्यादिना सह भोक्तुं गृह्णातीति जातिः। कियन्तं त्यजन् बहु-त्वात् पुनर्ददानः कियन्तञ्च पुनः पात्रं प्रत्यानयन्निति वा ॥ ८० ॥

यथेति। वारयाचिका यथा येन प्रकारेणामिषे मांसे अनामिषस्यामिषाद्यन्नस्य भ्रमं जग्मुः, यथा येन प्रकारेण निरा-मिषे मांसलेशवर्जितेऽपि तेमनादौ रूपस्वादादिभिः आमिष-मोहं मांसभ्रमं ऊहिरे तर्कितवन्तः तथा तेन प्रकारेण विद-ग्धैर्नितरां कुशलैःसूपकारैः कर्तृभिः एते वारयाचिकाः परि-कर्म्मभिः साधनद्रव्यैर्निर्म्मितं चित्रमन्नं परिहस्य पूर्व्वोक्तं भ्रम-निमित्तं परिहासं भोजिताः ॥ ८१ ॥

नखेनेति। कश्चिद् युवा मृद्वीं व्यञ्जनमांसस्य फालिकां खण्डं

ददंश दन्तैः प्रशशंस तद्रसं
विहस्य पश्यन् परिवेषिकाधरं ॥ ८२ ॥
अनेकसंयोजनया तथा कृते-
र्निकृत्य निष्पिष्य च तादृगर्जनात् ।
अमी कृताकालिकवस्तुविस्मयं
जना बहु व्यञ्जनमभ्यवाहरन् ॥ ८३ ॥

नखेन कृत्वा निभात् व्याजात् अधरसन्निभां आम्राकारां द्विधा कृत्वा पूर्व्वमधरसदृशीमपि नखेन द्विधा कृत्वा, मध्ये नखेन रेखाकरणान्नितरां मध्यस्थितरेखाधरसदृशीं वा कृत्वा दन्तै-र्ददंश परिवेषिकाधरं मांसव्यञ्जनदायिन्याः अधरं पश्यन् विहस्यैतादृशी स्वादुतरा मांसफालिका कदापि नोपभुक्तेत्यादिप्रकारैस्तस्याः फालिकायाः सुस्वादुतां प्रशशंसास्तावीच्च । स्वादुतरं त्वदीयाधरमेव दशामीति इमन्नर्मस्मिन्मांसखण्डे तदधरतामारोपयन् स्वाशयं तामज्ञापयदिति भावः ॥ ८२ ॥

अनेकेति । अमी जना वारयात्रिका बहु मूलकन्दपुष्पपत्रफलादिरूपं शाकादिव्यञ्जनमभ्यवाहरन् बुभुजिरे । किं विशं । अनेकेषां नानाविधमरीच्यादिद्रव्याणां संयोजनया मस्वस्सेन तथा कृतेः वस्त्वन्तरस्येव गन्धरसादिकरणात् तादृग्रसादिनिर्माणात् तथा निकृत्य नितरां कर्त्तित्वा निष्पिष्य चूर्णीकृत्य चाकारसाम्यादिना तादृगर्जनात् वस्त्वन्तरसादृश्यस्य सम्पादनात् रूपान्तरेण गन्धादिकारणाद्धेतोः कृतः आकालिकेऽसम-

पिपासुरस्मीति विबोधिता मुखं
निरीक्ष्य बाला सुहितेन वारिणा ॥
पुनः करे कर्त्तुमना गलन्तिकां
हसात् सखीनां सहसा न्यवर्त्तत ॥ ८४ ॥

यप्रभवे वस्तुनि विस्मय आश्चर्यं येन इति क्रियाविशेषणं वा। तथा आकृतेः आकारादिति वा। फलादि कर्त्तित्वा राजिकादध्यादिसंयोगाद्रसान्तरोत्पत्तिस्तथा रूपान्तरापत्तिश्च। गोधूमादिपिष्टा शर्करासम्बन्धाद्रसान्तरोत्पत्तिरित्यादिवैदग्ध्याद् भोक्तृणां विस्मयोऽधिवासनविशेषाच्चाकालिकभ्रमो युक्तः ॥ ८३ ॥

पिपासुरिति। वारिणा अम्बुना सुहितेन तृप्तेन विटेन मुखं निरीक्ष्याहं पिपासुः पातुमिच्छुरस्मि इति विबोधिता विज्ञापिता बालाऽबुद्धवक्रोक्त्याद्यभिप्रायविशेषा अप्रौढा पुनरपि करे गलन्तिकां पात्रं सुवर्णभाजनं कर्त्तुमनाः सती तदाशयज्ञानामतिचतुराणां सखीनां हसाद्धास्याद्धेतोः सहसा झटिति सुप्तप्रबुद्ध इव जलपायनारम्भसम्भ्रमान्न्यवर्त्तत परावृत्ता। सहसा सस्मिता सतीति वा। कर्मान्तरपरित्यागेन सामान्येन पिपासुरस्मीति वदन्नयमेतदीयाधरं पिपासुरस्तीत्येतदाशयमियं न जानातीति सखीभिः कृताद्धास्यादियमपि तदाशयं ज्ञात्वा गलन्तिकां पुनर्नीत्यापयदिति भावः। पूरणगुणेत्यादिना (पा० २।२।११) सुहितार्थयोगे षष्ठीसमासनिषेधादेव वारिणेति तृतीया ॥ ८४ ॥

युवा समादित्सुरमत्रगं घृतं
विलोक्य तत्रैणदृशोऽनुबिम्बनं।
चकार तन्नीविनिवेशितं करं
बभूव तच्च स्फुटकण्टकोत्करम्॥ ८५॥
प्रलेहजस्नेहकृतानुबिम्बना
चुचुम्ब कोऽपि श्रितभोजनस्थलः।

युवेति। अमत्रगं पात्रस्थं घृतं समादित्सुर्ग्रहीतुकामः कश्चित् युवा तत्र घृते एणदृशः पुरस्थाया मृगाक्ष्याः परिवेशिकाया अनुबिम्बनं प्रतिबिम्बं विलोक्य करं स्वहस्तं तस्य बिम्बस्य नीविषु भङ्गीनिबद्धनाभिचुम्बितवस्त्रविच्छित्तिषु निवेशनशीलं चकार तत्रास्थापयदित्यर्थः। तच्च तस्याः प्रतिबिम्बं स्फुटाः कण्ठकोत्करा यस्मिन् सरोमाञ्चमभूदित्यर्थः। स्वप्रतिबिम्बनीविग्रन्थिमोचनार्थं नाभिनीविसविधे स्पर्शकारिणस्तत्करस्य चेष्टां दृष्ट्वा तस्य स्वसम्भोगवासनां ज्ञात्वा तदानीमेतस्मिन्ननुरागाद्रोमाञ्चिताभूत् तादृश्याश्च प्रतिबिम्बितत्वात् प्रतिबिम्बमपि रोमाञ्चितमभूदिति भावः। द्वयोरप्यनुरागस्तुल्यो जात इति भावः॥ ८५॥

प्रलेहेति। कोऽपि विटः लिह्यत इति लेहः प्रकृष्टो लेहः प्रलेहः स्वरणादिद्रव्ययुक्तः आर्द्रकादिसंस्कृततक्रादिनिर्म्मितो द्रवद्रव्यविशेषः तस्माज्जाते स्नेहे तैलादौ कृतमनुबिम्बनं यया कृतं स्थितमनुबिम्बनं यस्या वा एवंविधां पुरस्थां सुन्दरीं, श्रितं

मुहुः परिस्पृश्य कराङ्गुलीमुखै-
स्ततोऽनुरक्तैः स्वमवापितैर्मुखम् ॥ ८६ ॥
अराधि यन्मीनमृगाजपत्त्रिजैः
पलैर्मृदु स्वादु सुगन्धि तेमनम्।
अशाकि लोकैः कुत एव जेमितुं
न तन्नु सङ्ख्यातुमपि स्म शक्यते ॥ ८७ ॥

भोजनस्थलं येन एवंविधः सन् प्रतिबिम्बितां तामेव कराङ्गुलीमुखैः कराङ्गुल्यग्रैर्मुहुः परिस्पृश्य स्पृष्ट्वा चुचुम्ब। कीदृशैः। स्वमुखं समवापितैस्तया रक्तैः स्वभावात् उष्णस्य तस्य स्पर्शाद्वा ततोऽनु तस्मादनुरागात् किं। अङ्गुल्यग्रैः रक्तत्वादनुरागाच्चुम्बिता। किमुत्प्रेक्षा। रिक्तैरिति पाठे मुहुः परिस्पृश्य ततोऽनु तदनन्तरमेव रिक्तैः प्रलेहशून्यैरेव स्वमुखं प्रापितैः कराङ्गुलीमुखैश्चुचुम्बेत्यर्थः। प्रलेहेति। वटकादिनिक्षेपात् तैलादिबिन्दवस्तरन्ति तत्र जातं प्रतिमुखं प्रतिबिम्बमङ्गुल्या स्पृशति तत्र प्रलेहचलनात् प्रतिबिम्बभङ्गभयात् अङ्गुल्यग्रैर्लेहनकलात् परम्परया चुम्बितवानिति भावः। तां प्रति स्वानुरागमदर्शयदिति भावः ॥ ८६ ॥

अराधीति। मीनेभ्यः मत्स्येभ्यः चित्रकादिमृगेभ्यः अजेभ्यः छागेभ्यः पत्त्रिभिस्तित्तिरलावकादिभक्ष्यपक्षिभिश्च जातैः पलैर्मांसैर्मृदु स्वादु सुगन्धि पाकेन परिमलविशेषयुक्तञ्च यत्तेमनाख्य व्यञ्जनं सूपकारैरराधि साधितं तद्वाऽऽकल्पालोकैः सङ्ख्या-

कृतार्थनश्चाटुभिरिङ्गितैः परा
परासि यः किञ्चनकुञ्चितभ्रुवा ।
क्षिपन्मुखे भोजनलीलयाङ्गुलीः
पुनः प्रसन्नाननयाऽन्वकम्पि सः ॥ ८८ ॥

अकारि नीहारनिभं प्रभञ्जना-
दधूपि यच्चागरुसारदारुभिः ।
निपीय भृङ्गारकसङ्गि तच्च तै-
रवर्णि वारि प्रतिवारमीदृशम् ॥ ८९ ॥

तुमपि न शक्यते स्म । जेमितुं तु पुनः कुत एव शक्यं किं, अपि तु भोक्तुं शक्यं नाभूदेव । जेमितुं । जिमु अदने ॥ ८७ ॥

कृतेति । किञ्चन किञ्चित्कुञ्चिते वक्रीकृत्योत्क्षिप्ते भ्रुवौ यया कयाचित्तदिङ्गितैरञ्जलिबन्धादिचेष्टितैः चाटुभिः प्रियवचनैश्च कृताऽर्थना सम्भोगप्रार्थना येन तथाविधो यो विटः पुरा पूर्वं परासि निरस्तः प्रसन्नाननया सरसदृष्टिव्यञ्जितप्रसादमुख्या तया भोजनलीलया ग्रासमिषेण मुखेऽङ्गुलीः प्रक्षिपन् अङ्गुली-संस्पर्शेन तां प्रतिदीनत्वं सूचयन् स पुनरन्वकम्पि अनुगृहीतः तद्दैन्यं दृष्ट्वा सम्भोगस्तयाऽनुमत इति भावः ॥ ८८ ॥

अकारीति । यद्वारि प्रभञ्जनात् व्यजनादिवायुसङ्गाद्धेतोः नीहारनिभं तुषारतुल्यमकारि यच्च अगरुसारस्य कृष्णागरो-र्दारुभिरधूपि धूपितभृङ्गारके सुवर्णपानपात्रे सङ्गः स्थितिर्यस्या-स्तीति तद्वारि । तत्र भोजनावसरे भीमगृहे वा निपीय नितरां

त्वया विधातर्यदकारि चामृतं
कृतञ्च यज्जीवनमम्बु साधु तत्।
वृथेदमारम्भि तु सर्व्वतोमुखं
तथोचितः कर्त्तुमिदंपिवस्तव ॥ ९० ॥

पीत्वा तैर्जलैः प्रतिवारं पुनः पुनरीदृशं वक्ष्यमाणप्रकारेणावर्ण्णि अस्तावि। प्रतिवारं निपीयेति वा। अगरुरित्येव पाठः। भृङ्गारः कनकालुकेत्यमरः। अल्पत्वे कन् ॥ ८९ ॥

जलवर्णनमेवाह। त्वयेति। हे विधातः त्वया च अम्बु उदकं यदमृतमन्नं अकारि यच्च जीवनमन्नमकारि तद्द्वयमपि साधु उचितमेव कृतम्। अमृततुल्यरसत्वात्प्राणधारणहेतुत्वाच्चान्वर्थत्वाद्युक्तमेवैतत् तस्य मञ्ज्ञाद्वयमित्यर्थः। तु पुनरिदं सर्व्वतोमुखमन्नं वृथाऽऽरम्भि कृतं अन्वर्थत्वाभावान्निरर्थकमेतत् कृतं। यस्मादिदं जलं पिबति इदंपिबोऽस्मदादिपुरुषस्तथा सर्व्वतः सर्व्वदिक्षु मुखानि यस्यैवंविधस्तव कर्त्तुमुचितः अस्मदादेर्बहूनि मुखानि सर्व्वेष्वप्यवयवेषु त्वं चेदकरिष्यत् तर्हि अस्मदादिरिदमा तृप्तिं पातुमशक्ष्यत् न त्वेकेन मुखेनेति। नितरां शैत्यमाधुर्य्यादिगुणयुक्तमेतदिति भावः। तौ तुल्ययोगत्वद्योतकौ। पयःकीलालममृतं जीवनं भुवनं वनं। पुष्करं सर्व्वतो मुखमित्यमरः। इदंपिबः। पाघ्राध्मादिना (पा० ३।१।१३७) शः ॥ ९० ॥

सरोजकोशाभिनयेन पाणिना
स्थितेऽपि कूरे मकरेव याचते ।
सखि त्वमस्मै वितर त्वमित्युभे
मिथो न वादाद्ददतुः किलौदनम् ॥ ८१ ॥
इयं कियच्चारुकुचेति पश्यते
पयःप्रदाया हृदयं समावृतम् ।

सरोजेति । उभे सख्यौ इति मिथो वादाद् द्वैमत्यात् किलौदनं न ददतुः किलेति व्याजे । इति किं । हे सखि त्वं पात्रमध्ये कूरं ओदने स्थितेऽपि सरोजकोशवदभिनय आकारो यस्य स्तन वराङ्गप्रार्थनासूचकेन पाणिना कूरं याचतेऽस्मै कामुकाय कूरं वितर देहि । द्वितीया वदति त्वं वितरेति । विवदमाने कूरदापनव्याजेन तत्प्रार्थितस्तनवराङ्गदानेऽन्योन्यं प्रवर्त्तयन्त्यौ मिथोऽन्योन्यं लज्जावशादेकतरा रिरंसुरपि नाङ्गीचकारेति भावः । अनुवादादिति पाठे उक्तरूपादनुवादादुभे ऽपि स्वल्पमोदनं

ध्रुवं मनोज्ञा व्यतरद्यदुत्तरं
मिषेण शृङ्गारधृतेः करद्वयी ॥ ९२ ॥
अमीभिराकण्ठमभोजि तद्गृहे
तुषारधारामृदितेव शर्करा ।
इयं द्विपद्वष्कयणीपयःसुतं
सुधाह्रदात् पङ्कमिवोद्धृतं दधि ॥ ९३ ॥

कुचौ यस्याः सति। सुवर्णकलशीपरिमाणौ सुवर्णवर्णौ चैतस्याः कुचाविति तं प्रत्यसूचयदिति भावः। उभावपि मिथोऽनुरागादन्योन्यालोकनपराविव तस्थतुरिति भावः। अन्योन्यमभिप्रायज्ञः केनचिन्मिषेण प्रश्नोत्तरं ददाति ॥ ९२ ॥

अमीभिरिति। अमीभिर्जन्याजनैस्तद्गृहे भीमगृहे आकण्ठं अतिबद्धं यथा शर्कराऽभोजि भुक्ता। तुषारधारया हिमोदकेन मृदितेव मिश्रितेव। तथा इयं द्विपन्द्या अश्ववैरिण्या महिष्या बष्कयिण्याः चिरप्रसूतायाः पयो दुग्धं तस्मात् सुतं जातदुग्धपरिणामभूतं दध्यप्यभोजि। सुधाह्रदादमृतस्यागाधजलाशयादुद्धृतं पङ्कमिवोत्पुञ्जितम्। शर्कराऽतिशीता शुभ्रा च दध्यप्यमृतवत् स्वादु शुभ्रं घनं चेति भावः। तद्गृहेऽमीभिर्विशिष्टं दध्यभोजि। तुषारधारया मृदिता अन्यकरणत्वं प्रापिता शर्करेव सुधाह्रदादुद्धृतं पङ्कमिवेति दधिविषयमेवोत्प्रेक्षाद्वयं वा। दध्नः शैत्यं शौक्ल्यं स्वादुत्वं घनत्वं च सूचितं। एतेन पयः शृतमिति पाठे शर्करा अभोजि। शृतं पक्वं तप्तं महिषीपयश्चाभोजि दधि

तदन्तरन्तः सुषिरस्य बिन्दुभिः
करम्बितं कल्पयता जगत्कृता ।
इतस्ततः स्पष्टमचोरि मायिना
निरीक्ष्य तृष्णाचलजिह्वतां धृता ॥ ८४ ॥

स्वाभाजि इति सम्बन्धः। चिरप्रसूता बष्कयिणीत्यमरः। महिष्या दधि स्वादुतरं भवति। द्विषःशतुर्वेति वचनात् द्वयं द्विषन्तीति द्वितीयया द्वितीयाश्रितेति (पा० २।१।२४) योगविभागात् समासः। द्विषद्बष्कयिणी। पुंवत्कर्मधारयेत्यादिना (पा० ६।३।४२) पुंवद्भावः। शृतं। शृतं पाके (पा० ६।१।२७) इति साधुः ॥ ८३ ॥

तदन्तरिति। तद्दधि निरीक्ष्य सातिशयात् तृष्णया स्वाद-वासनया चला चञ्चला अधरप्रान्तलेहिनी सलालसा जिह्वा यस्य तस्य भावस्तत्ता तां धृता बिभ्रता, तथा अन्तरन्तर्मध्ये मध्ये सुषिरस्य छिद्रस्य बिन्दुभिः शरीरे शिर इतिवद्भेदोपचाराच्छिद्ररूपैर्बिन्दुभिः करम्बितं मिश्रितं व्याप्तं तद्दधि कल्पयता कुर्वता जगत्कृता इतस्ततः सर्वप्रदेशेभ्यस्तद्दधि स्पष्टमचोरि प्रकटमपहृतं, स्पष्टं सम्भावनायां अपहृतमिवेत्यर्थः। अपहरन्कथं न दृष्ट इत्यत आह। यतो मायिना। अदृश्यतयाऽपहृतमित्यर्थः। सफेनक्षीरस्य दध्याकारेण परिणामे दधनि छिद्राणि दृश्यन्ते। ब्रह्मणा अदृश्यतया दधनि वर्त्तमानः सारो भागो जिह्वया गृहीतः, अन्यथा छिद्राणि कथं दृश्यन्ते। अन्येन ग्रहीतुं न शक्यते इति तदुत्प्रेक्षा। येन

ददामि मे तन्न रुचेर्यदास्पदं
न यत्र रागः सितयापि किं तया।
इतीरिणे विम्बफलं पलच्छला-
ददायि विम्बाधरयारुचच्च तत्॥ ८५॥

निर्म्मितं तस्य ब्रह्मणाऽपि जिह्वा चाञ्चल्यनिर्म्माणात् स्वादतमं दधीति ध्वन्यते॥ ८४॥

ददामीति। विम्बफलतुल्यो ऽधरो यस्यास्तया सुन्दर्या पलव्याजात् मांसव्याजाद् विम्बमञ्जफलं परिवेषितं मांसखण्ड-मेव विम्बाकारं कृत्वा इतीरिणेऽधरचुम्बनवासनया भाषमा-णाय विटाय अदायि दत्तं। तत् विम्बाकारं फलं तस्मा अरु-चच्च स्वदितमित्यर्थः। मदभिप्रायं ज्ञात्वा स्वीकारपुरःसरं पलरूपविम्बव्याजान्निजाधरदानमेव प्रतिज्ञातमिति सन्तुष्टो ऽभूदिति भावः। इति किं। हे विम्बोष्ठि यद्रुचेः प्रीतेरास्पदं यत्र वस्तुनि मम प्रीतिः तन्मे मह्यं त्वं न ददासि। यद्वा यद्रुचे-रास्पदं न भवति तन्मह्यं न ददासि। तथा मम यस्यां रागः प्रीतिर्नास्ति तया सितयापि शर्करयापि किं अपि तु न किञ्चित् प्रयोजनं। माधुर्य्यमर्य्यादयापि शर्करयापि प्रयोजनं नास्त्यभि-लाषाभावात्। अन्येन नास्तीति किं वाच्यमित्यपिना सूच्यते। अथ च यत्र लौहित्यं नास्ति तया श्वेतया प्रकरणाच्छर्करयापि किं। तस्मान्मे यत्रानुरागो रक्तिमकान्तिश्च तन्मह्यं देहीति। कृतं तयेति पाठे तया पूर्य्यतां। फलच्छलादिति पाठे फलदान-

समं ययोरिङ्गितवान् वयस्ययो-
स्तयोर्विहायोपहृतप्रतीङ्गिताम्।
अकारि नाकृतमवारि सा यया
विदग्धयाऽरञ्जि तयैव भाववित्॥ ९६॥

प्रसङ्गव्याजात्। बिम्बाकारोऽधरो यस्या इति सप्तम्युपमानेत्या-
दिना (पा० २।२।२४। वा० ५) नोत्तरपदलोपी समासः। अरु-
चत् पुषादित्वादङ् (पा० ३।१।५५)। द्युद्भ्यो लुङीति (पा० १।
३।९१) परस्मैपदम्॥ ९५॥

सममिति। यो ययोर्वयस्ययोः सख्योर्विषये स्वाभिप्राय-
ज्ञापनार्थं समं युगपत् इङ्गितवान् भ्रूक्षेपादिचेष्टितवान् अभूत्
स तयोर्मध्ये उपहृतं कृतं प्रतीङ्गितं तदभिप्रायगोपनाकारसूचक-
प्रतिचेष्टितं यया तामेकां विहाय स्थितः सन् तयैवारञ्जि द्वि-
तीययैव प्रत्यनुरञ्जितः। तया कया। यया चतुरया विदग्धया
आकृतं प्रतीङ्गितं नाकारि प्रतीङ्गितं कुर्व्वाणा सा सखी जन-
समक्षमिङ्गितकरणमयुक्तमित्यवारि निषिद्धा। यतो भाववित्
वैदग्ध्यस्य वेत्ता। द्वितीयया तदिङ्गितदर्शनात्तस्मिन्ननुरागा-
ज्ज्ञात्वा प्रतीङ्गितं नाकरोत् जनसमक्षमेतदनुचितमिति
व्याजेन सत्प्रियं प्रतीयमिङ्गितं किमिति करोतीति सापत्न्येर्ष्यया
च तां वारितवतीति तस्या वैदग्ध्यं। स च तदीयगुप्तभावज्ञा-
नाद्भाववित् सहचरीसमक्षमिङ्गितं कुर्व्वाणा इयमपि चतुरा।
द्वितीया इङ्गितं नाकरोत्ताञ्च न्यवारयदिति इयमेव चतुरा

सखीं प्रति स्माह युवेङ्गितेङ्गिनी
क्रमेण तेऽयं सहते न दित्सुताम् ।
विलोम तद्व्यञ्जनमर्प्यते त्वया
वरं किमस्मै न नितान्तमर्थिने ॥ ९७ ॥

सख्यनुरक्ता चेति स चतुरो द्वितीयस्यामेवानुरक्तोऽभूदिति भावः। विहाय स्थितः सन् इति योजना। अन्यथा हानस्य पुरुषःकर्त्ता रञ्जनस्य स्त्रीतिभिन्नकर्तृत्वात्क्त्वा न स्यादिति। अ-र्थान्तरन्यासोऽलङ्कारः ॥ ९६ ॥

सखीमिति। यून इङ्गितं चेष्टां ईक्षते एवंशीला काचित् स्वसखीं प्रत्याह स्म इत्यवोचत्। हे सखि यस्मादयं क्रमेण परि-पाट्या ते दित्सुतां त्वत्कर्तृकां व्यञ्जनस्य दातुमिच्छुतां न सहते तस्मात्त्वया नितान्तमतिचञ्चलतयाऽर्थिने याचकायास्मै यूने वरं श्रेष्ठं अभीष्टं तत्तेमनादि व्यञ्जनं विलोम विपरीतं क्रमर-हितं यथा तथा किं नार्प्यते न दीयते अपि तु त्वलज्जिकायास्मै युगपत् क्षिप्यतामिति छलोक्तिः। अथवा आलिङ्गनचुम्बनादि वा-त्स्यायनपरिपाट्या तव वराङ्गदानेच्छुतां न सहते तस्मादतितरल-तयाऽर्थिने सम्भोगविलम्बमसहमानायास्मै वरं केवलं श्रेष्ठं वा न विद्यते वरं श्रेष्ठं यस्मात् अवरमधोदेशे वर्त्तमानं वा रोम-रहितं तद्भगलक्षणं व्यञ्जनं अवयवः किमिति त्वया नार्प्यते अपि त्वर्पयेत्युपहासः। अतिसम्भोगान्नितरां तान्तं ग्लानमिति व्यञ्जनविशेषणं वा। व्यञ्जनं लाञ्छनं श्मश्रुनिष्ठानावयवेष्वपी-

समाप्तिलिप्येव भुजिक्रियाविधे
र्दलोदरं वर्त्तुलयाऽऽलयीकृतम्।
अलङ्कृतं चीरवटैस्तदश्नतां
रराज पाकार्पितगैरिकश्रिया॥ ९८॥

त्यमरः। नितरां तातमिति पक्षे अनुनासिकस्य क्वीति (पा० ६।४।१५) दीर्घः॥ ९७॥

समाप्तीति। चीरवटैर्दुग्धमध्यक्षिप्तैर्माषमाधितैर्वटकाख्यैः पक्वान्नविशेषैः सम्बन्धादलङ्कृतं तत्पूर्वोक्तं वटकव्यतिरिक्तव्यञ्जनं वर्त्तुलया वृत्ताकारया पाकेन तत्सम्बद्धदारकाग्निसंयोगेनार्पितया निर्म्मितया गैरिकश्रिया शैलरक्तधातोरिव श्रिया वटकानामेव शोभया रराज। विशिष्टवटकसम्बन्धाद् व्यञ्जनान्तरं रेज इत्यर्थः। विशिष्टया श्रियोपलक्षितैः चीरवटैरलङ्कृतं सत् रेज इति वा। किमिव अश्नतां भुञ्जानानां तेषां भुजिक्रियाविधेः भोजनविधेः समाप्तेः। वटकदर्शनमात्रेणान्यत्र रुच्यभावाद् व्यञ्जनान्तरविरतेः सम्बन्धिन्या लिप्या समाप्तिसूचिकया छकाररूपपुष्पिकारूपया आलयीकृतं आस्पदीकृतं दलोदरं श्रीनालादिपत्रमध्यमिवेत्युपमोत्प्रेक्षा वा। वर्त्तुलया वृत्तया समाप्तिलिप्याश्रितं। पाकेन बालकेनार्पितया गैरिकश्रियालङ्कृतं दलोदरमिति वा योज्यं। पोतःपाकोऽर्भक इत्यमरः। ग्रन्थलेखनसमाप्तिपत्रे समाप्तिसूचकं छकारादिवर्त्तुलमक्षरं दाक्षिणात्यैः क्रियते गैरिकचिह्नितञ्च क्रियते, एवं भोजनसमाप्तिसूचकं चीरवटकादि इति॥ ९८॥

चुचुम्ब नोर्वीवलयोर्वशीं परं
पुरोऽधिपारि प्रतिबिम्बितां विटः।
पुनः पुनः पानकपानकैतवा-
च्चकार तच्चुम्बनचुक्कृतान्यपि ॥ ९९ ॥
घनैरमीषां परिवेषकैर्जनै-
रवर्षि वर्षोपलगोलकावली।

चुचुम्बेति। कश्चिद्विटः पुरोऽग्रे अधिपारि पानकरसपूर्णे सुवर्णादिपानपात्रे प्रतिबिम्बितां उर्वीवलये उर्वशीमिवातिसुन्दरीं काञ्चित्परं केवलं चुचुम्बेति न किन्तु पुनः पानकस्य द्राक्षादिमाधितमधुररसप्रधानपेयद्रव्यरूपस्य यत्पानं तस्य कैतवात् प्रतिबिम्बितायाः तस्याः चुम्बनस्य सम्बन्धीनि चुक्कृतानि चुमिति पानकानुकरणशब्दस्य करणान्युच्चारणानि तान्यपि चकार। चुम्बनादिना तस्यां स्वानुरागं प्रकटीचकारेति भावः। अमरोवर्वरी पारी पानपात्रकमुच्यत इति चीरस्वामी। मध्यर्थेऽव्ययीभावः। चुक्कृतानि नपुंसके भावे क्तः ॥ ९९ ॥

घनैरिति। घनैर्बहुभिः परिवेषकैरनेकव्यञ्जनदायिभिर्जनैरथ च तैरेव घनैर्मेघैरमीषां भुञ्जानानां राज्ञां कृते वर्षोपलाः करकास्तत्तुल्यानामेलाकर्पूरशर्करालवङ्गतण्डुलपिष्टरचितानां गोलकानामतिवृत्तानां लड्डुकाविशेषाणामथ च करकारूपाणां गोलकानामावलीपङ्क्तिरवर्षि वितीर्णा वृष्टा च। कीदृशैः। परिवेषणकर्मत्रयाच्चलन्त्यो या भुजास्तासां भूषणेषु

चलद्भुजा भूषणरत्नरोचिषा
धृतेन्द्रचापैः श्रितचान्द्रसौरभा ॥ १०० ॥
कियद्बहु व्यञ्जनमेतदर्प्यते
ममेति तृप्तैर्वदतां पुनः पुनः।

रत्नानि तेषां रोचिषा कान्त्या कृत्वा धृतमिन्द्रचापं यैर्नाना-प्रकारकान्तिभिरित्यर्थः। अथ च तदेवेन्द्रचापो येषु। कीदृशी। श्रितं चान्द्रं कर्पूरसम्बन्धि सौरभं सौगन्ध्यं यया। अथ च चन्द्र एव चान्द्रः सूर एव सौरस्तयोर्भा श्रिता चान्द्रसौरभा यया। सा शीतत्वदीप्तत्वाभ्यां चन्द्रसूर्य्यसदृशीत्यर्थः। रात्रिदिनयोर्जा-यमानत्वाद्वा क्रमेण तत्कान्तिसदृशी। चन्द्रसम्बन्धिनश्चान्द्राश्चन्द्र-कान्ताः एवं सौराः सूर्यकान्तास्तेषां भा श्रिता यया वा। चन्द्र-सम्बन्धि मनोज्ञत्वं सादृश्यं श्रितं ययेति वा। विश्वप्रकाशे सुरभि-शब्दो मनोज्ञवाची ॥ १०० ॥

कियदिति। एतत्तेमनादिव्यञ्जनं मम कियत् किंपरिमाणं बहु अर्प्यते ऽपितु तृप्ता वयमिति नार्पणीयमिति तृप्तैर्नराः पुनः पुनर्वदतां तेषां अन्यासां कियत्सङ्ख्यं बह्वेतद्व्यञ्जनमर्प्यते इत्ये-तद्बहुत्वसङ्ख्येयत्वा भवद्भिः पृच्छ्यते किमिति कलेनामूनि व्यञ्ज-नानि सङ्ख्यातुं गणयितुं असौ गोलकावली भूयसी बहुतरा कठिनी खटिकेव तैः परिवेषकैरढौकि अर्पिता। भवद्भिर्व्यञ्ज-नसङ्ख्या पृष्टा तर्ह्यनया कठिन्या एतानि गणयतेति कठिनी वार्पितेत्युत्प्रेक्षा। इति वदताममूनि सङ्ख्यातुमिव व्याजेनासौ

अमूनि सञ्ज्ञातुमसावढौकि तैः
कलेन तेषां कठिनीव भूयसी ॥ १०१ ॥
विदग्धबालेङ्गितगुप्तिचातुरी-
प्रवल्हिकोत्पाटनपाटवे हृदः ।

बहुतरा कठिन्यर्पितेति वा योज्यं। कठिन्या च सञ्ज्ञायते एत-
ज्ज्ञापनममूनीति ममेति वदतामिति चैकवचनबहुवचनानि जा-
तिविवक्षया विज्ञातव्यानि ॥ १०१ ॥

विदग्धेति। कश्चित्कामुको विदग्धायाश्चतुराया बालाया
मुग्धाया इङ्गितगुप्तौ चेष्टितगोपनविषये चातुरी यत्कौशलं मेव
दर्शयता प्रवल्हिका गुप्ताभिप्रायप्रबन्धविशेषः तस्या उत्पा-
टने भेदने ज्ञानविषये यत्पाटवं सामर्थ्यं प्रावीण्यं तत्र विषये
तदौचित्तीं विदग्धबालेङ्गितानामानुगुण्यं स्पृशद्भिः गतैस्तदनुरू-
पैराकृतशतैर्बहुभिरिङ्गितैः कृत्वा निजस्य हृदः स्वीयाभिप्रायस्य
टीकां विवरणं प्रबन्धं प्रकर्षेण कृतवान्। गुप्तान्यपि मदिङ्गि-
तानि ज्ञातवानिति चतुरोऽयमनुरक्तश्चेति तदनुगुणैः स्वीयचे-
ष्टितैस्तां स्वाशयं बोधितवानिति भावः। बालाया अपि विदग्ध-
सखीशिक्षया वैदग्ध्यादिङ्गितकरणं सहजमौग्ध्यात् सलज्जतया
तद्गोपनञ्च युक्तं। विदग्धः कश्चन युवा बाला च काचन तयो-
रिङ्गितगुप्तिर्वा। यद्वा विदग्धस्येङ्गितं बालायाश्चार्थादिङ्गितस्यैव
तयोर्विषये या चातुरी तत्प्रवल्हिकोत्पाटनपाटवे विषये तयो-
रौचित्तीं स्पृशद्भिः। अत्र द्वयोरपि भवतोराशयो मया ज्ञात

निजस्य टीकां प्रबबन्ध कामुकः
स्पृशङ्गिराकूतशतैस्तदौचितीं ॥ १०२ ॥

घृतप्लुते भोजनभाजने पुरः-
स्फुरत्पुरन्ध्रिप्रतिबिम्बिताकृतेः ।
युवा निधायोरसि लड्डुकद्वयं
नखैर्विलिख्याथ ममर्द निर्दयं ॥ १०३ ॥

विलोकिते रागितरेण सस्मितं
क्रियाऽथ वैमुख्यमिते सखीजने ।

इतीङ्गितैस्तज्ज्ञापनद्वारा अतिचतुरोऽहमेव त्वया भजनीय इति बालां प्रति स्वाशयं ज्ञापितवानिति भावः । अन्योऽपि विदग्धो ऽतिगहनायाः प्रबन्धिकाया मदनं विषयेऽनेकैराशयैर्व्याख्यां करोति ॥ १०२ ॥

घृतेति । कश्चिद्युवा घृतप्लुते आज्यपूर्णे प्रसृतघृते वा भोजनभाजने पुरःस्फुरन्त्या विलसन्त्याः पुरन्ध्र्याः प्रतिबिम्बिता या आकृतिस्तस्या उरसि लड्डुकद्वयं मोदकयुग्मं निधाय नखैर्विलिख्य, अथ पश्चान्निर्दयं ममर्द यदाऽऽवयोःसंयोगो भावी तदैवं तव कुचावुपचरिष्यामीति लक्षनखक्षतविमर्दं करिष्यामीति वा स्वाशयं बोधितवानिति भावः । घृतेन प्लुतं घृतप्लुतं यस्मिन्निति वा । आहिताग्न्यादित्वात् परनिपातः (पा० २।२।३७) ॥ १०३ ॥

विलोकिते इति । रागितरेण केनचित् कामुकेन सखीरूपे जने सस्मितं विलोकिते सति अथ विलोकनानन्तरं क्रिया

तदालिरानीय कुतोऽपि शार्करीं
करे ददौ तस्य विहस्य पुत्रिकाम् ॥ १०४ ॥
निरीक्ष्य रम्याः परिवेषिका ध्रुवं
न भक्तमेवैभिरवाप्ततृप्तिभिः ।
अशक्नुवद्भिर्बहुभुक्तवत्तया
यदुज्झिता व्यञ्जनपुञ्जराजयः ॥ १०५ ॥

वैमुख्यं पराङ्मुखत्वं इते गते सति तस्य सखीजनस्यालिः सखी कुतोऽपि कस्मादपि स्थानात् शार्करीं शर्करया रचितां पुत्रिकाम् आनीय विहस्य वैमुख्यात् सन्दिहानस्य करे ददौ । अधरादिचुम्बनायाङ्गेषु शर्करातुल्यरसामेनामहमेव दास्यामि स्वहस्तस्थितामेनां जानीहीति सञ्ज्ञां चकारेति भावः । सखीसमूहे वैमुख्यमिते सति तासां सखीनां काचित् सखी तदन्तर्वर्त्तिन्यन्या वा शार्करीं पुत्रिकां ददौ । शर्करा पुत्रिका परिवेषणेन मिषेणाहं त्वां भजामीति स्वदानसञ्ज्ञामकरोदिति भावः इति वा । शार्करीमिति ईकारप्रत्ययः । पुत्रिका । पुत्रात्कृत्रिम इति कन् ॥ १०४ ॥

निरीक्ष्येति । बहुभुक्तवत्तया अत्याहारेणाशक्नुवद्भिर्भोक्तुमसमर्थैरेभिर्वारयात्रिकैः यद्यस्माद्व्यञ्जनपुञ्जानां राजयः परम्परा उज्झितास्त्यक्तास्तस्माद्रम्याः परिवेषिका निरीक्ष्य अवाप्ततृप्तिभिः गतबुभुक्षैरेतैर्भुक्तमेव न इति ध्रुवमहं मन्ये । यावत् चिरं तावत् तथैव दर्शनादियमुत्प्रेक्षा । एता निरीक्ष्यावाप्ततृप्तिभिरेतैः

पृथक् प्रकारेङ्गितशंसिताशयो
युवा ययोदासि तयापि तापितः।
ततो निराशः परिभावयन् परा-
मपेतयाऽतोषि सरोषयैव सः ॥ १०६ ॥

ध्रुवं निश्चितं नैव भुक्तमिति वा। यथा लोको मन्यत इति शेषः। तथा व्यञ्जनपुञ्जपरम्परास्त्यक्ताः। यथैभिर्न भुक्तमिति लोको मन्यत इत्यर्थ इति वा ॥ १०५ ॥

पृथगिति। पृथक्प्रकारैर्नानाविधैरिङ्गितैश्चेष्टितैः कृत्वा शंसितः कथित आशय अभिप्रायो येन स युवा यया स्त्रिया उदासि उदासीनोकृतः। प्रतीङ्गितेन सम्भावितयोदासीनतया तयापि तापितः क्वथितः। उदासीना हि दुःखं न जनयति, अनयापि तु तादृश्या अपि दुःखं जनितमिति विरोधार्थो ऽपिशब्दः। ततोऽनन्तरं तस्यां निराशः तस्याः सकाशान्निराशो निर्गताभिलाषः सन् परां तदन्यां परिभावयन्निङ्गितेनानुकूलयन् सानुरागं पश्यन् स युवा सरोषया तयैव पूर्वमुदासीनयैव परितोषितो न तु द्वितीययेत्यर्थः। सरोषा हि दुःखं जनयति न तु सुखं तयापि तादृश्यापि सुखं जनितमिति विरोधादाश्चर्य्यं। जनसमक्षमिङ्गितकरणमयुक्तमिति तयेङ्गितं पूर्व्वं न कृतं स तु तदाशयमजानानोऽनुरागेणेयं प्रतीङ्गितं नाकरोदिति बुद्ध्याऽन्यामपश्यत्, ततश्च सा सपत्नीबुद्ध्या मेर्ष्या जातेति मय्यनुरक्तैवेयं पूर्व्वं तु गाम्भीर्य्यादिङ्गितं नाकरोत् सानु-

पयःस्मिता मण्डकमण्डनाम्बरा
वटाननेन्दुः पृथुलड्डुकस्तनी ।
पदं रुचेर्भोज्यभुजां भुजिक्रिया
प्रिया बभूवोज्ज्वलकूरहारिणी ॥ १०७ ॥

रागैव च सरोषा भवतीति रोषादनुरागमनुमाय सन्तुष्ट इति भावः । उपेतयेति पाठे रोषात्तदुपसारेणार्थात् समीपमागतयेत्यर्थः ॥ १०६ ॥

पय इति । भुजिक्रिया भोजनक्रिया भोज्यभुजां भक्ष्यं भुञ्जानानां तेषां प्रिया तृप्तिजननी अथ च स्त्री बभूव । किम्भूता । पयो दुग्धमेव स्मितं हासो यस्याः । तथा क्वचिन्मृदुस्पर्शा क्वचिदत्यन्ताग्निसंयोगेन शोणबिन्दवो मण्डका अपूपा एव पट्टसूत्रादिरचितरूपमण्डनयुक्तानि अलङ्कारभूतानि वा अम्बराणि वस्त्राणि यस्याः । तथा अतिवृत्तमाषसाधितवटकरूपकुङ्कुमोद्वर्त्तनरक्तभावेनाह्लादक आननेन्दुर्मुखचन्द्रो यस्याः । तथा पृथुलड्डुकस्तनी स्थूलातिकठिनरूपौ मोदकरूपौ स्तनौ यस्याः सा । तथा उज्ज्वलकूरहारिणी विविक्तशुभ्रौदनरूपमौक्तिकमालावती । पक्षे उज्ज्वलकूरेण मनोहारिणी । यतो रुचेर्ग्रासाभिलाषस्याथ च कान्तेरनुरागस्य च पदं स्थानं । प्रियापि पूर्वोक्तगुणसहिता रुचेः पदं भवति । यतः प्रियेति वा । भोज्यभुजां । भोज्यं भक्ष्य इति (पा० ७।३।६९) साधुः ॥ १०७ ॥

चिरं युवाकूतशतैः कृतार्थन-
स्थिरं सरोषेङ्गितया च निर्धुतः ।
सृजन् करत्नाननलीलयाञ्जलीन्-
न्यषेचि किञ्चिद्विधुताम्बुधारया ॥ १०८ ॥
न षड्विधः खिङ्गजनस्य भोजने
तथा यथा यौवतविभ्रमोद्भवः ।

चिरमिति । कयाचिद्वध्वा कश्चिद्युवा किञ्चिद्विधुतया वक्रचालितयाम्बुधारया कृत्वा असेचि सिक्तः । किम्भूतः । आकूतशतैरिङ्गितसहस्रैः कृतार्थनः कृतप्रार्थनः सन् चिरं सरोषं कोपव्यञ्जि इङ्गितं यस्यास्तस्या भावस्तत्ता तयैव वारम्वारं निर्धुतो निराकृतः सन्नपि तया करचालनस्य लीलया व्याजेन प्रसादप्रार्थनासूचकानञ्जलीन् करयुगसम्पुटान् सृजन् रचयन्, अञ्जलीनिति वचनेन वारम्वारमञ्जलेः करणं सूचितं। वारिधाराकम्पनेन त्वत्प्रार्थना मयाङ्गीकृता करयुगयोजनादिरसेति सूचितं। इयं स्वीकारचेष्टा करचालनं भुजिक्रियासमाप्तिं द्योतयति ॥ १०८॥

नेति। षड्विधा मधुराम्ललवणतिक्तकटुकषायास्वादरूपषट्प्रकारो रसः खिङ्गजनस्य रसिककामुकसङ्घस्य भोजने विषये तथा तोषं न अधत्त उदपादयत्। यथा यौवतं स्त्रीसङ्घस्तस्य विभ्रमो विलासस्तस्मादुद्भवो यस्य स रसो स्तृषां समुल्लसन् वर्द्धमानः अपारशृङ्गारमयः निर्मर्य्यादानेकविधविभावानुभावव्यभिचारिसंयोगजन्यशृङ्गाररूपः सप्तमो रसस्तोषमधत्त। सप्तमत्वं

अपारशृङ्गारमयः समुन्मिषन्
भृशं रसस्तोषमधत्त सप्रमः ॥ १०९ ॥
मुखे निधाय क्रमुकं नलानुगै-
रथोज्झि पर्णालिरवेक्ष्य वृश्चिकम् ।
दमार्पितान्तर्मुखवासनिर्मितं
भयाविलैः स्वभ्रमहासिताखिलैः ॥ ११० ॥
अमीषु तथ्यानृतरत्नजातयो
विदर्भराट् चारुनितान्तचारुणोः ।

मधुराद्यपेक्षया षोयं न लाद्यरसापेक्षया । षड्भ्यो रसेभ्योऽन्यस्या-भावाद्भोजने सप्तमरसस्य सद्भावादाश्चर्यम् ॥ १०९ ॥

मुख इति । अथ हस्तप्रक्षालनानन्तरं नलानुगैस्तैराजभिः क्रमुकं पूगफलं मुखे निधाय वृश्चिकमवेक्ष्य दमेनार्पिता दत्ता पर्णालिर्नागवल्लीदलपंक्तिरोज्झि त्यक्ता । किम्भूतं वृश्चिकं । अन्तर्मुखवासेन कर्पूरकस्तूरीखदिररसादिरूपेण मुखसौगन्ध्य-कारिणा निर्मितं । किम्भूतैः । भयेन दंशनभिया आविलैर्व्याप्तैः । अत एव स्वभ्रमेणावृश्चिके वृश्चिकबुद्ध्या हासिता हासं प्रापिता अखिला द्रष्टारो यैः । दमेनार्पितः पर्णमध्ये वर्त्तमानो योऽन्त-र्मुखे वासस्तेन निर्मितामिति वा ॥ ११० ॥

अमीष्विति । विदर्भस्य राजा दमो वा क्रमेण चारु सुन्दरं नितान्तं चारु अतिसुन्दरञ्च तयोरिच्छतयोस्तथ्यानृतयोः सत्या-सत्ययोः रत्नजातयोर्मध्ये एकं तव प्रियं रत्नजातं त्वं स्वयमेव

स्वयं गृहाणैकमितीत्युदीर्य्य तद्
द्वयं ददौ शेषजिघृक्षवे हसन् ॥ १११ ॥
इति द्विवारं शुचिमिष्टभोजिनां
दिनानि तेषां कतिचिन्मुदा ययुः ।
द्विरष्टसंवत्सरवारसुन्दरी-
परीष्टिभिस्तुष्टिमुपेयुषां निशि ॥ ११२ ॥

गृहाणेति । अमीषु वारयात्रिकेषु विषये उदीर्य्य कृत्रिमत्वादति-रमणीयकान्तिविशिष्टं अलीकरत्नजातं जिघृक्षवे ग्रहीतुमिच्छवे वारयात्रिकाय हसंस्तदज्ञानहेतोः किञ्चिद्धास्यं कुर्व्वन् तयोः सत्यासत्ययोर्रत्नजातयोर्द्वयं युग्मं तद्रूपं वा द्वयं ददौ । अमीषु मध्ये शेषजिघृक्षव इति वा । इह द्वयोर्मध्ये शेषजिघृक्षव इति वा । शेषजिघृक्षवे । द्वितीयेति (पा० २।१।२४) योगविभागात् समासः ॥ १११ ॥

इतीति । इति पूर्व्वोक्तप्रकारेण द्विःकृत्वो द्विवारं दिवारात्रौ च शुचि अदोषं मिष्टं स्वादु च भोजिनां भुञ्जानानां तेषां वारयात्रिकाणां कतिचित् पञ्चषाणि दिनानि मुदा ययुः पञ्च-षट् दिनानीति महर्षाः तत्रोपुरित्यर्थः । किम्भूतानां । निशि द्विर्द्वौ वारा अष्टौ द्विरष्टौ षोडश सम्वत्सरा यासां ता वारस्य सङ्घस्य सुन्दर्य्यो वेश्या दास्यादयस्तासां परीष्टिभिसुस्वनादि-सेवाभिः तुष्टिं सन्तोषं उपेयुषां प्राप्तवतां । द्विरष्टेति असुचः कृत्वसुचो बाधकत्वाद् द्विरिति द्विशब्दर्द्विःकृत्व इत्यचापवादत्रि-

उवास वैदर्भगृहेषु षट्पा
निशाः कृशाङ्गीं परिणीय तां नलः।
अथ प्रतस्थे निषधान् सहानया
रथेन वार्ष्णेयगृहीतरश्मिना ॥ ११३ ॥
परस्य न स्प्रष्टुमिमामधिक्रिया
प्रिया शिशुः प्रांशुरसाविति ब्रुवन्।

पये कचिदुत्सर्गस्यापि समावेश इति परिभाषया यथाकथञ्चित् परिहर्त्तव्यम् ॥ ११२ ॥

उवासेति। नलः कृशाङ्गीं तां परिणीय वैदर्भगृहेषु षट्‌षट्‌ा प्रमाणमासां ता निशा उवास षट्‌षाणि दिनानि तत्र स्थितवानित्यर्थः। अथ सप्तमे दिने अनया भैम्या सह रथेन निषधान् प्रतस्थे। किम्भूतेन। वार्ष्णेयनाम्ना सारथिना गृहीता रश्मयो यस्य। षट्‌षाः। सङ्ख्याव्ययेति (पा० २।२।२५) समासे बहुव्रीहौ सङ्ख्येय इत्यादिना (पा० ५।४।७३) डचि टिलोपः। निशाः। अत्यन्तसंयोगे च (पा० २।१।२८) इति द्वितीया ॥ ११३ ॥

परस्येति। इति ब्रुवन् स नलो भैमीं स्वयमात्मनैव रथे अध्यरूरुहदध्यारोपयत्। इति किं। इमां पतिव्रतां भैमीं स्प्रष्टुं स्पर्शनेन्द्रियविषयीकर्त्तुं परस्य मदन्यस्य नाधिक्रिया अधिकारः। प्रिया भैमी शिशुरल्पप्रमाणा असौ रथस्तु प्रांशुरुच्चतर इति स्वयमारोढुमसमर्थेति, तत्तस्माद्धेतोः जनैश्चितो लोकैर्वीक्षितः

रथे स भैमीं स्वयमध्यरूरुह-
न्न तन् किलाश्लिक्षदिमां जनेक्षितः ॥ ११४ ॥
इति स्मरः शीघ्रमतिश्चकार तं
वधूं च रोमाञ्चभरेण कर्कशौ।
स्खलिष्यति स्निग्धतनुः प्रियादियं
मदीयसो पीडनभीरुदोर्युगात् ॥ ११५ ॥

सन्निमां भैमीं नालिलिङ्ग किलेति व्याजे, तत्त्वतस्तु जनसमक्ष-मालिलिङ्गेव। किन्त्वेवं ब्रुवन् धात्रीं परिजहारेति भावः। कर्मत्वस्याविवक्षितत्वाद्रथ इत्यधिकरणे सप्तमी। अध्यरूरुहत्। णौ चङि (पा० ७।४।१) इत्युपधाह्रस्वत्वे, दीर्घो लघोः (पा० ७।४।९४) इत्यभ्यासदीर्घः। अश्लिक्षत्। श्लिष आलिङ्गन इति धातुः कुक्। क्षयोगे षः। अश्लिष्यदिति पाठे लुङ् ॥ ११४ ॥

इतीति। इति हेतोः शीघ्रमतिः त्वरितबुद्धिः शीघ्रमुचितोपायस्फुरणशीलः तयोरन्योन्यविषयः स्मरः तं नलं वधूं भैमीञ्च उभौ रोमाञ्चानां भरेण बाहुल्येन कर्कशत्वचौ चकार अन्योन्यसंस्पर्शादुत्पन्नसात्त्विकरोमाञ्चौ जाताविति भावः। इति किं। मदीयसी स्निग्धा तनुर्नितरां कोमला मसृणाङ्गी च इयं भैमी, अतः प्रियान्नलात् सकाशात् स्खलिष्यति निःसरिष्यति यतः पीडने निविडधारणे भीरु दोर्युगं बाहुयुगं यस्य तस्माच्छिथिलधारिण इति। इतीव शीघ्रमतिः स्मरः ॥ ११५ ॥

तथा किमाजन्मनिजाङ्कवर्द्धितां
प्रहित्य पुत्रीं पितरौ विषेदतुः ।
विसृज्य तौ तं दुहितुः पतिं यथा
विनीततालक्षगुणीभवद्गुणं ॥ ११६ ॥
निजादनुव्रज्य स मण्डलावधे-
र्नलं निवृत्तौ चटलापतां गतः ।
तडागकल्लोल इवानिलं तटा-
द्धृतानतिर्व्यावरृते विराटराट् ॥ ११७ ॥

तथेति । तौ पितरौ तं दुहितुः पतिं जामातरं नलं विसृज्य सम्प्रेष्य यथा विषेदतुः विषण्णौ तथा आजन्मप्रभृति निजाङ्कयोः स्वीयोत्सङ्गयोर्वर्द्धितां वृद्धिं प्रापितां पुत्रीं प्रहित्य प्रस्थाप्य विषेदतुः किं अपि तु नेति वैधर्म्योपमा । किम्भूतं । विनीततया सविनयत्वेन लक्षगुणीभवन्तः शौर्य्यादयो गुणा यस्य तं । सुतावियोगादपि सगुणजामातृवियोगो नितरां तयोर्दुःसहो जात इत्यर्थः । प्रहित्य । हि गतौ, क्यपि तुक् । विषेदतुः । सदेर॰ --भ्यासस्यापि । सदिरप्रतेरिति (पा॰ ८।३।६६) षत्वं ॥ ११६ ॥

निजादिति । स विराटराड् भीमो नलमनुव्रज्यानुगम्य निजान्मण्डलावधेः सकाशान्निवृत्तौ परावृत्तिसमये चाटु प्रियवचनं लपति भाषत इति चटुलापस्तद्भावं गतः प्राप्तः प्रियभाषणः धृताङ्गीकृता नतिर्नमस्कारो येन स एवम्भूतः सन् व्यावरृते निजगृहान् प्रति परावृत्तः । क इव तडागकल्लोल इव ।

पितात्मनः पुण्यमनापदः क्षमा
धनं मनस्तुष्टिरथाखिलं नलः ।
अतः परं पुत्रि न कोऽपि तेऽहमि-
त्युदश्रुरेष व्यसृजन्निजौरसीं ॥ ११८ ॥
प्रियः प्रियैकाचरणाश्रिणेण तां
पितुः स्मरन्तीमचिकित्सदाधिषु ।

यथा ऽनिलं वायुमनुगम्य तटाभिवृत्तौ चटुला आपो यस्य तद्भावं गतः सन् तीरात् सकाशात् तडागतरङ्गो व्यावर्त्तत इत्युपमा। चटुलाप इत्यत्र कर्म्मण्यण्। (पा॰३।२।१) पश्चे ऋगादिना (पा॰५।४।७४) समासान्तः। स तु तत्पुरुष एवेति कश्चित् तदुपेक्ष्यम् ॥ ११७ ॥

पितेति। इत्युक्त्वा उद्गतान्यश्रूणि यस्य स एष भीमो निजा-मौरसीं स्वीयक्षेत्रबीजाभ्यामुत्पादितां भैमीं व्यसृजत् प्राहिणोत्। इति किं। हे पुत्रि आत्मनस्तव पुण्यं धर्म्म एव पिता हितका-रित्वादहितनिवारकत्वाञ्च तथा तव क्षमाः सहनशक्तयः अना-पदः न विद्यन्त आपदो याभ्यस्ता आपन्नाशिका इत्यर्थः, तव मनसस्तुष्टिः सन्तोषः अलुब्धत्वमेव धनं। अथानन्तरं अखिलमेव तवेष्टं नल एव, किं बहुना तदतिरिक्तसकलाभीष्टदत्वात् सर्व्वं नल एवेति भावः। अतः परं अद्यतनदिनप्रभृति अहं भीमस्ते कोऽपि सम्बन्धी बान्धवो न भवामीति ॥ ११८ ॥

प्रिय इति। प्रीणाति हर्षं जनयति प्रियो नलः पितुः स्मरन्तीं

शशाम तन्मातृवियोगवाडवो
न तु प्रियप्रेममहाम्बुधावपि ॥ ११९ ॥
असा महीभृद्दहुधा तु मण्डित-
स्तया निजोपत्यकयेव कामपि।

तां भैमीं प्रियस्य मनीषितस्यैकस्य वस्तुन आचरणात् करणात् मनीषितस्य यदेकं मुख्यं केवलं वा करणं तस्माद्वा आधिषु पितृवियोगजमानसपीडासु मध्ये चिरेण बहुना कालेनाचिकित्सत् उपचचार। कस्यचिदिष्टस्य मेलनात् पितृवियोगदुःखं चिरेणात्याजयदित्यर्थः। चिरकालं पितुः स्मरन्तीमिति वा। स सर्व्वजनप्रसिद्धस्तस्या मातृवियोग एवासह्यतरत्वाद्वाडवो वडवानलः तु पुनः प्रियस्य नलस्य प्रेमा निरुपाधिकस्नेहस्तद्रूपे महाम्बुधौ सत्यपि तथा अप्रच्युतप्राच्यरूप एव तस्थिवान् तस्मिन्नतिप्रियं कुर्व्वत्यपि स लेशमपि न शान्त इत्यर्थः। पितृवियोगदुःखान्मातृवियोगस्य गौरवं सूचितं विशेषतश्च कन्यानां। अपिरौचित्ये। जलानलयोर्विरोधेऽपि वाडवस्याम्बुधावेव स्थितिर्युक्तेत्यर्थः। शशामेति न तु प्रियेत्यपि च स्पष्टार्थः। पितुः। अधीगर्थेत्यादिना (पा० २।३।५२) षष्ठी। अचिकित्सत्। कित निवासे रोगापनयने चेत्यस्माद् गुप्तिज्किद्भ्य इति (पा० ३।१।५) स्वार्थे सन्। कितस्योदात्तेत्सु पाठात्सन्नन्तादपि परस्मैपदमेव न त्वात्मनेपदमिति सिद्धान्तः ॥ ११८ ॥

असाविति। असौ महीभृन्नलः तु पुनर्बहुधा अनेकप्रकारं

भुवा कुरङ्गेक्षणदन्तिचारयो-
र्बभार शोभां कृतपादसेवया ॥ १२० ॥
तदेकतानस्य नृपस्य रक्षितुं
चिरोढया भावमिवात्मनि श्रिया ।
विहाय सापत्न्यमरञ्जि भीमजा
समग्रतद्वाञ्छितपूर्त्तिवृत्तिभिः ॥ १२१ ॥

मण्डितो नानारत्नादिभिरलङ्कृतस्तया भैम्या कामप्यतिशयितां शोभां बभार । किम्भूतया । कुरङ्गवद्धरिणवदीक्षणं विलोकनं दन्तिवद्धस्तिवच्चारो गतिस्तयोर्भुवा स्थानभूतया हरिणाक्ष्या गजगत्या च । तथा कृता पादसेवा यया । कयाक इव । निजोपत्यकया पर्व्वतासन्नभूम्या महीभृत् पर्व्वत इव । बहुभिर्गैरिकादिधातुभिर्मण्डितः । किम्भूतयोपत्यकया । हरिणानामीक्षणस्य हस्तिनां भक्षणस्य गमनस्य वा स्थानभूतया । तथा कृता प्रत्यन्तपर्व्वतानां सेवा श्रयणं यया । कृता प्रत्यन्तपर्व्वतैः सेवा यस्या इति वा ॥ १२० ॥

तदिति । चिरोढया चिरकालं ध्रियमाणया अथ चिरपरिणीतया श्रिया राज्यलक्ष्म्या तदेकतानस्य तदेकनिष्ठस्य भैमीतत्परस्य नृपस्यात्मनि विषये भावमनुरागं रक्षितुं स्थिरीकर्त्तुमिव सापत्न्यमेकभर्त्तृकस्त्रीद्वयान्योन्येर्ष्यां विहाय समग्राणां तस्या भैम्या वाञ्छितानां पदार्थानां पूर्त्तिः पूरणं तस्यां वृत्तिभिर्वर्त्तनैरुपायैः कृत्वा भीमजाऽरञ्जि प्रीणिता । सम्पद्वैभवेन दुर्लभा-

ससारमालावलितोरणां पुरीं
निजाद्वियोगादिव लम्बितालकाम्।
ददर्श पश्यामिव नैषधः पथा-
मथाश्रितोड्डीविकमुन्नतैर्गृहैः ॥ १२२ ॥

न्यपि तदाङ्कितानि नलेन पूरितानि ततश्च सा परितुष्टेति भावः। अन्यापि चिरपरिणीता विदुषी नवोढायामनुरक्तस्या-त्मनि अनुरागरक्षणार्थं सापत्न्यं त्यक्त्वा आत्मनो ज्यैष्ठ्यं रचयन्ती सती नवोढाया हितकरणेन प्रीतिं जनयति ॥ १२१ ॥

ससारेति। अथ वक्रमार्गलङ्घनानन्तरं नैषधः पुरीं प्रिया-मिव ददर्श। किम्भूतां। ससारमालावलिरिन्द्रनीलपरम्परा अत एवाम्रदलादिरचितमालारूपाणि तोरणानि यस्याः। इन्द्रनी-लमालावलियुक्तानि तोरणानि वहिर्द्वाराणि यस्यास्तां तथा। ऽत एव निजाद्वियोगाल्लम्बितालकामिव प्रसारितचूर्णकुन्तला-मिव। तथा उन्नतैरत्युच्चैर्गृहैः कृत्वा आश्रिता ऽङ्गीकृता उड्डी-विका ऊर्ध्वीकृतकण्ठतया विलोकनं यथा स्यादेवंपश्यामिव। विलोकिकामिव उच्चगृहत्वाद्दूरत एव दृष्टवानित्यर्थः। पथा-मिति पाठे मार्गाणां पश्यामिव। अन्यापि नायिका प्रोषिते ना-यके प्रसाधितालङ्कारा सती उड्डीविकया प्रियागमनमार्गान् पश्यति। ससाराणां नीलत्वादलकत्वं। पथामिति कर्तृकर्मणो-रिति (पा०२।३।६५) कर्मणि षष्ठी ॥ १२२ ॥

पुरीं निरीक्ष्यान्यमना मनागिति
प्रियाय भैम्या निभृतं विसर्ज्जितः।
ययौ कटाक्षः सहसा निवर्त्तितुं
तदीक्षणेनार्द्धपथे समागमम्॥ १२३॥
अथ नगरधृतैरमात्यरत्नैः
पथि समियाय स जाययाऽभिरामः।

पुरीमिति। अयं मत्प्रियो मनाक् ईषत् पुरीं निरीक्ष्य अन्यमना दृश्चित्त इतिहेतोः अस्मिन्नवसरेऽयं सम्यक् निरीक्षितुं शक्यत इति बुद्ध्वा भैम्या प्रियाय प्रियं वीक्षितुं निभृतं गुप्तं यथा तथा विसर्जितः प्रेषितो निजकटाक्षः सकलां पुरीमनवलोक्यैव किञ्चिन्निरीक्ष्य भैम्यनुरागबाहुल्यात् सहसाऽसमय एव पुरीनिरीक्षणान्निवर्त्तिना शीघ्रं परावृत्तेन तदीक्षणेन नलकटाक्षेण सहार्द्धपथ एव समागमं सङ्गमं ययौ। उभावपि परस्परानुरागेण क्षणमात्रमप्यन्योन्यानवलोकनं न सहेते स्मेति भावः। नितरामनुरागः सूचितः। पुरीनिरीक्षेति पाठे पुरीनिरीक्षणेऽयमन्यमनाः किमिति वोढुं प्रेषितः। रहस्यं ज्ञातुं दूतोऽपि गुप्तं प्रेष्यते। प्रियाय। क्रियार्थोपपदस्येति (पा० २।३।१४) चतुर्थी॥ १२३॥

अथेति। अथ पुरीसमीपप्राप्त्यनन्तरं जायया कृत्वाभिरामः स नलो नगरे धृतैः स्थापितैरमात्यरत्नैः सह पथि समियाय मेलनं प्राप। किम्भूतैः। कुतूहले भैमीसहितनलदर्शनकौतुके

मधुरिव कुसुमश्रिया सनाथः
क्रममिलितैरलिभिः कुतूहलोत्कैः ॥ १२४ ॥

कियदपि कथयन् स्ववृत्तजातं
श्रवणकुतूहलचञ्चलेषु तेषु।
कियदपि निजदेशवृत्तमेभ्यः
श्रवणपथं स नयन् पुरीं विवेश ॥ १२५ ॥

अथ पथि पथि लाजैरात्मनो बाहुवल्ली-
मुकुलकुलसकुल्यैः पूजयन्त्यो जयेति।

विषये उत्कैः उत्कण्ठितैः। तेन वा उदूर्द्धं कं शिरो येषां ऊर्द्धीकृतशिरोभिः। कः कैरिव। कुसुमश्रिया चम्पकादिपुष्पशोभया सनाथो रमणीयो मधुर्वसन्तः क्रमेण वसन्तागमपरिपाट्या मिलितैर्मध्वास्वादकौतुकेनोत्कण्ठितैरलिभिरिव। यथा संयुज्यते तथेत्युपमा ॥ १२४ ॥

कियदिति। स नलः पुरीं विवेश। किं कुर्व्वन्। स्वयम्वरवृत्तान्तश्रवणकुतूहलचञ्चलेषु तेषु मन्त्रिप्रवरेषु कियत् स्वसम्बन्धवृत्तजातं स्वदौत्येन्द्रादिमायाप्रभृतिरूपं प्रवृत्तं वृत्तान्तं सङ्क्षेपेण कथयन्। तथा कियदपि निजदेशवृत्तं स्वराष्ट्रजातमेभ्योऽमात्येभ्यः सकाशात् श्रवणपथं नयन्नाकर्णयन्। ग्रामगतजातिः। अमुत्रेति पाठे अदःपरस्मिन्नत्रापीति वचनादमुत्रेत्यनेन व्यवहितोऽपि स्वयम्वरःपरामृश्यते ॥ १२५ ॥

अथेति। अथ पुरप्रवेशानन्तरं जनानां कुमार्य्योऽकृतविवाहाः

क्षितिपतिमुपनेमुस्तन्दधाना जनाना-
मम्लानजलमृणालीसौकुमार्य्यं कुमार्य्यः ॥ १२६ ॥

अभिनवदमयन्तीकान्तिजालावलोक-
प्रवणपरपुरन्ध्रीवक्त्रचन्द्रान्वयेन ।
निखिलनगरसौधाट्टावलीचन्द्रशालाः
क्षणमिव निजसञ्ज्ञां सान्वयामन्वभूवन् ॥१२७॥

कन्यास्तं क्षितिपतिं उपनेमुः समीपमागत्य नमश्चक्रुः। किम्भूताः। पथि पथि प्रतिमार्गं आत्मनो बाहुवल्लीनां भुजरूपलतानां मुकुलकुलेन कलिकावृन्देन मकु[illegible]र्लाजैर्मङ्गलद्रव्यतया शकुनदर्शनेन जय सर्व्वोत्कर्षेण वर्त्तस्वेति शब्दपूर्व्वं पूजयन्त्यः। तथा अम्लानजन्मजातायाः मृणाल्या बिसस्येव सौकुमार्य्यं मार्द्दवं दधानाः। पुरप्रवेशे शकुनार्थं कुमार्य्य इत्युक्तं। मकुन्दैः। दिगा-दित्वाद्यत् (पा० ४।३।५४) ॥ १२६ ॥

अभीति। निखिलानां नगरसम्बन्धिनां सौधानां सुधा-धवलितगृहाणामट्टावल्या उपरितनभा[illegible]यस्तासामु-परि चन्द्रशालास्तृतीयशिरोगृहाः। अट्टावलीनां गवाक्षविवराणि वातायनाख्याः, अभिनवा नवोढा दमयन्ती तस्याः कान्ति-जालस्यादृष्टपूर्व्वस्यावलोके प्रवणानामुत्सुकानां पुरन्ध्रीणां वक्त्र-चन्द्रस्यान्वयेन सम्बन्धेन कृत्वा क्षणमिव क्षणमात्रं यावत्तन्मुख-सम्बन्धस्तावत्पर्य्यन्तं निजसञ्ज्ञां स्वीयं नाम मुखचन्द्रसम्बन्धि-तया सान्वयं चन्द्रयुक्ताः शाला गृहाणि चन्द्रशाला चन्द्राणां

निषधनृपमुखेन्दुश्रीसुधां सौधवाताय-
नविवरगरश्मिश्रेणिनालोपनीताम्।
पपुरसमपिपासापांशुलत्वोत्परागा-
न्यखिलपुरपुरन्ध्रीनेत्रनीलोत्पलानि॥ १२८॥

वा सम्बन्धिन्यः शाला इति योगसहितामन्वभूवन्। सान्वया-मिवेति वोत्प्रेक्षा। सर्वा अपि पुनर्नार्यो गवाक्षविवरैर्भैमी-मपश्यन्। तानि च तन्मुखसम्बन्धेन यौगिकत्वेन कविनोत्प्रेक्षि-तानि॥ १२७॥

निषधेति। अखिलानां सकलानां पुरपुरन्ध्रीणां नेत्राण्येव नीलोत्पलानि निषधनृपस्य मुखेन्दुश्रीस्तल्लक्षणां सुधामसृतं पपुः सादरमालोकितवन्ति। किम्भूतां सुधां। सौधवातायनानां विव-रेभ्यश्छिद्रेभ्यो गच्छन्तीर्बहिर्निर्गच्छन्त्यो रश्मिश्रेणयो नयनकि-रणपंक्तयस्तद्रूपा ये नाला विसयुक्तत्वादन्यजलपानसाधनभूताः कमलनालदण्डास्तैरुपनीतां नेत्रसमीपं प्रापितां। किम्भूतानि नीलोत्पलानि। असमयाऽतुल्ययाऽतिभूयस्या पिपासया पाने-च्छया पांशुलत्वं शुष्कत्वं सोत्कण्ठतरत्वञ्च तेनैव उत्कृष्टा उद्ग-च्छन्तो वा परागाः कौसुमरजांसि येषु तानि। गवाक्षविवरैः कृत्वा नलमुखशोभां सर्वा अपि सादरं ददृशुरित्यर्थः। कुमा-रीणां समीपगत्या पौरस्त्रीणाञ्च गवाक्षान्तर्गत्या कौतुकमात्रेण दृष्टेरार्जवेन कनीनिकानीलरश्मीनां नानारूपाणामुचिततर-त्वमुक्तं। अन्योऽपि पिपासात्यन्तशुष्ककण्ठो दूरस्थं कूपाद्युदकं

अवनिपतिपथाट्टस्त्रैणपाणिप्रवाल-
स्खलितसुरभिलाजव्याजभाजः प्रतीच्छन्।
उपरि कुसुमवृष्टीरेष वैमानिकाना-
मभिनवकृतभैमीसौधभूमिं विवेश ॥ १२९ ॥
इति परिणयमित्थं यानमेकत्र याने
दरचकितकटाक्षप्रेक्षितं चानयोस्तत्।

सच्छिद्रकमलनालादिना पिबति न लोकवारमेव यद्वा पिबत्य-
न्तर्हृदयपीडाभिया ॥ १२८ ॥

अवनीति। स नलोऽभिनवकृतस्य नूतननिर्मितस्य भैमीसम्बन्धिनः सौधस्य शान्तिधामाद्यलङ्कृतां भूमिं उपरितनीं वा भूमिं विवेश। किं कुर्व्वन्। कौतुकविलोकनार्थं गगने स्थितानां वैमानिकानां देवानां कुसुमवृष्टीः उपरि शिरस्यादरेण प्रतीच्छन् स्वीकुर्व्वन्। किम्भूता वृष्टीः। अवनिपतिपथे राजमार्गे अट्टेषु विपणिस्थेष्वट्टालिकेषु वर्त्तमानानां स्त्रैणानां स्त्रीवृन्दानां पाणिप्रवालेभ्यः स्खलिताः सुरभयः पाकजपरिमलविशेषयुक्ता-लाजास्तेषां व्याजं मिषं भजन्ति ताः। शकुनार्थं कीर्य्यमाणानां लाजानां शुभत्वादूर्द्ध्वदेशात् स्त्रंसनाच्च पुष्पवृष्टित्वं। ता अपि पल्लवेभ्यो निर्गच्छन्ति। वैमानिकाः। चरत्यर्थे ठक् ॥ १२९ ॥

इतीति। दिविषदां देवानामधीशा देवा इन्द्रादयश्चत्वारो देवा नाकं स्वर्गं प्रतिगन्तुं प्रणिदधुरिव गन्तुमचिन्तयन्निव तत्वतस्तं विहाय गन्तुं वाञ्छां नास्त्येवेतीवशब्दः सूचयति।

दिवि दिविषदधीशाः कौतुकेनावलोक्य
प्रणिदधुरिव गन्तुं नाकमानन्दसान्द्राः ॥ १३० ॥
श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम्।

किम्भूताः। अनयोर्भैमीनलयोः इति पूर्व्वोक्तप्रकारं परिणयं विवाहं इत्थमुत्तरीत्या च एकत्र एकस्मिन् याने रथे यानं स्थित्वागमनं तथा दरचकितं ईषत् सभयं सलज्जं यत्कटाक्षैरन्योन्यविलोकनं तच्चैतत्सर्व्वं दिवि आकाशे स्थित्वा कौतुकेनावलोक्यानन्देन परमहर्षेण सान्द्राः पूर्णाः। अथेति पाठे तयोर्गेहप्रवेशानन्तरमित्यर्थः। स्वयम्वरानन्तरमेव देवा विनिर्गता इति चतुर्द्दशे सर्गे यद्यप्युक्तं तथापि भूमेर्निर्गत्य नलपुरप्रवेशपर्य्यन्तं नलभैमीकौतुकविलोकनार्थं गगने स्थिता इति दिविपदेन सूचितम् इदानीं पुनः स्वर्गं प्रति निर्गता इत्युक्तेर्न कोऽपि विरोधः। किं वा अनन्तरसर्गसङ्गत्यै कलिनलद्वेषारम्भस्याप्रस्तुततां परिहर्त्तुं नलः पुरं प्रविष्टो देवाश्च स्वर्गं जग्मुः। गच्छताञ्च तेषां मध्ये मार्गे कलेरुत्तरप्रत्युत्तरदानादिना प्रसक्तानुप्रसक्तावतरणाय युक्तमुक्तम् ॥ १३० ॥

श्रीहर्षमिति। पूर्वार्धः पूर्ववत्। किम्भूते काव्ये चतुर्द्दशतयीं विद्यां विदद्भिः जानद्भिः सरस्वतीजाग्रदधिष्ठानकाश्मीरदेशोद्भवैरपि विदद्भिः परीक्षापूर्व्वं महिते पूजिते दोषलेशेनापि रहिते सर्व्वगुणपूर्णे। तथा तद्भुवि तस्माच्छ्रीहर्षाद्भवतीति तद्भूः

काश्मीरैर्महिते चतुर्दशतयीं विद्यां विदद्भिर्महा-
काव्ये तद्भुवि नैषधीयचरिते सर्गोऽगमत् षोडशः ॥ १३१ ॥

तस्मादुत्पत्तिरर्थस्येतिविधे वा । नैषधेशेति पाठे नैषधस्यामावी- शस्येति व्याख्येयम् । काश्मीरैरिति पूजार्थे, मतिबुद्धीति (पा० ३। २।८८) इति क्तः, क्तस्य च वर्त्तमान इति (पा० २।३।६७) षष्ठीविधानात् तृतीया चिन्त्या । पूजितो यः सुरैरपीत्यादि- शिष्टप्रयोगदर्शनाद्वर्त्तमानार्थे विहितस्य क्तस्य योगे षष्ठी भवति चकारात् प्रयोजनानुरोधेनान्योऽपि सूत्रार्थो निर्वर्ण्यः । चतुर्थ्यर्थे बहुलं छन्दसीत्यतो बहुलग्रहणं वानुवर्त्य काश्मीरैः करणभूतै- र्महः पूजा सञ्जातास्येति महित इति । तारकादेराकृतिगण- त्वात् इतजान्तत्वाभावं वा समाश्रित्य क्तान्तत्वेऽपि कल्पयमानां महित इत्यादिभट्टिप्रयोगे समासदर्शनात्, मतिबुद्धिपूजार्थेभ्य- श्चेति चकाराद्भूतेऽपि शिष्टप्रयोगानुसारेण क्तप्रत्ययमङ्गीकृत्य क्तस्य च वर्त्तमान इति षष्ठीप्राप्त्यभावात् कर्त्तरि तृतीयैवेति वा यथा कथञ्चित् समर्थनीयं । चतुर्दशतयीं । सङ्ख्याया अव- यव इति (पा० ५।२।४२) तयप् । टिड्ढाणञिति (पा० ४।१।१५) ङीप् । विद्यां विदद्भिः । न लोकेति षष्ठीनिषेधः । तद्भुवि । भाषितपुंस्कत्वं नुमभावः । षोडशः पूर्ववत् ॥ १३१ ॥

इति श्रीवेदरकरोपनामश्रीनृसिंहपण्डितात्मजनारायण- कृते नैषधीयप्रकाशे षोडशः सर्गः ॥ १६ ॥

---

# उत्तरनैषधचरिते।

## सप्तदश: सर्ग:।

---

श्रीलक्ष्मीन्दसिंहौ जयतः।

अथारभ्य वृथाप्रायं धरित्रीधावनश्रमं।
सुराः सरस्वदुल्लोलल्लीला जग्मुर्यथागतम् ॥ १ ॥
भैमीमप्राप्य भुवस्तस्मै चिरं चित्ते धृतामपि।
विद्यामिव विनीताय न विपेदुः प्रदाय ते ॥ २ ॥

अथेति ॥ सर्गसङ्गतिरुक्तैव। अथ स्वर्गगमनचिन्तनानन्तरं धरित्रीं प्रति धावनेन जनितं श्रमं वृथैव वृथाप्रायं व्यर्थमिवारभ्य विधाय अगाधत्वेनानुपलक्षितहर्षविषादतया अथ च तटभूमिं प्रति निष्प्रयोजनमागमनेन ततः पुनर्यथागतं व्यावर्त्तनेन च सरस्वतः समुद्रस्य उल्लोलास्तरङ्गास्तद्वल्लीला येषां तत्तुल्याः सुराः आगमनमनतिक्रम्य यथागतं स्वर्गं जग्मुः। भैमीमप्राप्यैव जग्मुरित्यर्थः। भैम्यलाभात् श्रमस्य वैयर्थ्यं। नलभैमीवरदानद्वारात्मगौरवरक्षणात् प्रायःशब्दः प्रायोजि न तु वृथैवेत्युक्तम्। वृथा वृथात्वं प्राप्यते प्राप्नोति वा वृथाप्रायम्। यथागतं अव्ययीभावः। यथागतं तथा जग्मुरिति वा ॥ १ ॥

तदेवाह। भैमीमिति। ते देवाश्चिरं चित्ते धृतामपि

कान्तिमन्ति विमानानि भेजिरे भासुराः सुराः।
स्फाटिकाद्रेस्तटानीव प्रतिबिम्बा विवस्वतः॥ ३॥
जवाज्जातेन वातेन बलाक्रष्टबलाहकैः।
श्वसनात् स्वस्य शीघ्रत्वं रथैरेषामिवाकथि॥ ४॥

भैमीं तस्मै भुवः पत्ये नलाय प्रदाय दत्त्वा न विषेदुः पश्चात्तापं न प्राप्ता इत्यर्थः। कस्मै कामिव। विनीताय शिष्याय चिरं चित्ते धृतां अभ्यस्तां विद्यामिव। दत्तापि विद्या चित्ताद्यथा नोपरमते तथा तस्मै दत्तापि सा सगुणतया तेषां चित्तान्नोपररामेति॥ २॥

कान्तीति। भासुरास्तेजोरूपाः सुराः कान्तिमन्ति रत्नर्द्धिप्राणि विमानानि यदृच्छया गामिनो रथान् भेजिरे आरूरुहुः। के कानिव। विवस्वतः सूर्य्यस्य भासुराः प्रतिबिम्बाः स्फाटिकाद्रेः कैलासस्य तटानीव। प्रतितटं प्रतिफलितत्वात् प्रतिबिम्बानां बहुत्वं। भासुराः। भञ्ज भासमिति (पा० ३।२।१६१) घुरच्॥ ३॥

जवादिति। जवात् निजवेगात् जातेन वातेन कृत्वा बलात् आक्रष्टाः सहचरीकृता मेघा यैः एषां देवानां रथैः श्वसनात् वायोः सकाशात् स्वस्यात्मनः शीघ्रगामित्वं द्रढ्ढिमाणमस्य अकथीव कथितमिव। आक्रष्टबलाहकस्य वायोः पश्चाद्गामित्वात् परस्खलितानां रथानां शीघ्रत्वमित्यर्थः। शीघ्रशब्दोऽत्र धर्म्मिवचनः। वेगजेन वातेन गमनेनेति वा। वाधातोर्भावे क्तः। श्वसनात्। पञ्चमीविभक्ते (पा० २।३।४२) इति पञ्चमी॥ ४॥

क्रमाद् दवीयसां तेषां तदानीं समदृश्यत।
स्पष्टमष्टगुणैश्वर्य्यात् पर्य्यवस्यन्निवाणिमा ॥ ५ ॥
ततान विद्युता तेषां रथे पीतपताकताम्।
लब्धकेतुशिखोल्लेखा लेखा जलमुचः क्वचित् ॥ ६ ॥

क्रमादिति। क्रमाद्गमनाद् दवीयसां दूरतराणां तेषां तदानीं अणिमा अणुत्वं स्पष्टं प्रकटं समदृश्यत। किम्भूत इव। अष्टानां गुणानां अणिमादीनामैश्वर्य्यात् आधिपत्यात् पर्यवस्यन्निव पृथक्कृत इव। सर्व्वेभ्यो महिमादिभ्यो गुणेभ्यः पृथग्भूतत्वादिव स्पष्टं दृष्ट इत्यर्थः। स्थूलमपि वस्तु दूरत्वात् सूक्ष्मं दृश्यते। तेषामष्टौ गुणा वर्त्तन्ते तन्मध्ये अणिमैव तस्मिन् समये स्पष्टो दृष्टो नतन्य इत्यर्थः। तस्मिन् काले पर्य्यवस्यन् स्फुटीभवन्निति वा स्पष्टमुत्प्रेक्षते। तेषां रथानामिति वा। देवानामष्टगुणैश्वर्य्यात् तत्सम्बन्धाद्रथेष्वप्यणिमासमागम इति व्याख्येयम्। दवीयसां। अतितरां दूराणां ईयसुनि, स्थूलदूरेति (पा० ६।४।१५६) यणादिपरलोपे पूर्व्वस्य गुणः। अणिमा। पृथ्व्यादिः ॥ ५ ॥

ततानेति। क्वचित् कस्मिंश्चिदाकाशप्रदेशे लब्धकेतुशिखया ध्वजाग्रेणोल्लेखो योगो यया, तत्सम्बन्धात्प्रकटितविद्युत्प्राकट्येति यावत्, एवंविधा जलमुचो मेघस्य लेखा पङ्क्तिस्तेषां देवानां रथे विद्युता कृत्वा पीता पताका यस्य तद्भावं ततान। ध्वजाग्रसम्बन्धात् प्रकटिता विद्युद् ध्वजाग्रे पीता पताकेवाभूदित्यर्थः ॥ ६ ॥

पुनः पुनर्मिलन्तीषु पथि पाथोदपंक्तिषु।
नाकनाथरथालम्बि बभूवाभरणं धनुः॥ ७॥
जज्ञे जलदजालानां वज्रिवज्रानुबिम्बनैः।
जाने तत्कालजैस्तेषां जाताऽशनिसनाथता॥ ८॥
स्फुटं सावर्णिवंश्यानां कुलछत्रं महीभुजां।
चक्रे दण्डभृतश्चुम्बन् दण्डश्चण्डरुचिं क्वचित्॥ ९॥

पुनरिति। इतस्ततो गमनवशात् पथि पुनः पुनर्मिलन्तीषु सम्बध्यमानासु पाथोदा मेघास्तेषां पङ्क्तिषु वर्त्तमानं धनुरिन्द्रधनुर्मार्गसम्बन्धवशात् नाकनाथरथमालम्बते एवंशीलं सम्बद्धं सदिन्द्ररथस्तस्याभरणं बभूव। इन्द्ररथे वर्त्तमानं धनुरागलन्तीषु मेघपङ्क्तिषु क्षणं भूषणमभूदिति वा। मेघा हि सेन्द्रचापाः शोभन्ते॥ ७॥

जज्ञ इति। जलदजालानां जज्ञे तस्मिन् काले इन्द्रादिगमनसमये जातैर्वज्रिणो वज्रस्यानुबिम्बैः प्रतिबिम्बैः कृत्वा तेषां मेघजालानां अशनिना वज्रेण सनाथता सस्वामिकता जातेति जाने। तदाप्रभृति प्रायेण मेघानां सवज्रत्वमित्युत्प्रेक्षा॥ ८॥

स्फुटमिति। दण्डभृतो यमस्य दण्डः क्वचिदाकाशप्रदेशे चण्डरुचिं सूर्य्यं चुम्बन् स्पृशन् सन् तं सूर्य्यमेव सावर्णिमनोर्वंशे जातानां महीभुजां राज्ञां कुलछत्रं कुलश्रेष्ठं अथ च कुलक्रमायातं राजचिह्नं छत्रं स्फुटमिव चक्रे। स्वयं वृत्तत्वादधो दण्ड-

नलभैमभुवोः प्रेम्णि विस्मिताया दधौ दिवः।
पाशिपाश शिरःकम्पस्रस्तभूषश्रवःश्रियम्॥ १०॥
पवनस्कन्धमारुह्य नृत्यत्तरकरः शिखी।
अनेन प्रापि भैमीति भ्रमश्चक्रे नभःसदाम्॥ ११॥

सम्बन्धाच्छत्रमिवेत्युत्प्रेक्ष्यते। सूर्यमण्डलं प्राप्त इति भावः। उदयेऽस्तमये च समानो वर्णो यस्य स सवर्णः सूर्यस्तस्यापत्यं सावर्णिः। अत इञ् (पा० ४।१।९५) इतीञ्। वंशः। दिगादित्वाद्यत्॥ ९॥

नलेति। पाशिपाशो वरुणपाशो नलभैमभुवोरनन्यतुल्ये प्रेम्णि विषये विस्मिताया दिवो विस्मयवशादेव शिरःकम्पेन स्रस्ता भूषा भूषणं यस्मादेवंविधस्य श्रवसः कर्णस्य श्रियं लक्ष्मीं दधौ। तस्यास्ताटङ्करहितः कर्ण इव शुशुभ इत्यर्थः। अनेन दिवो नायिकात्वं व्यज्यते॥ १०॥

पवनेति। पवनस्य चन्द्रसूर्याद्याधारेषु आवहादिषु सप्तसु स्कन्धेषु मध्ये ताराचक्राधारभूतं स्कन्धमारुह्य नृत्यत्तरा उद्गच्छन्तः कराः किरणा ज्वालारूपा यस्य स शिखी वह्निः अनेनाग्निना भैमी प्रापि इति नभःसदां देवानां भ्रमं चक्रे। भैमीप्राप्तिहर्षादयं नृत्यति किमिति सर्वेषां देवानां भ्रान्तिर्जातेत्यर्थः। अन्योऽपि नववधूलाभे कस्यचिन्मित्रस्य स्कन्धमारुह्य नृत्यत्करो भवति॥ ११॥

तत्क्षणा भारती दूनौ विरहाद्भीमजागिराम्।
अध्वनि ध्वनिभिर्वीणैरनुकम्पैर्व्यनोदयत् ॥ १२ ॥
अथायान्तमवैक्षन्त ते जनौघमसित्विषम्।
तेषां प्रत्युद्गमप्रीत्या मिलद्व्योमेव मूर्त्तिमत् ॥ १३ ॥
अद्राक्षुराजिहानं ते स्मरमग्रेसरं सुराः।
अक्षाविनयशिक्षार्थं कलिनेव पुरस्कृतम् ॥ १४ ॥

तत्क्षणाविति। भारती वाणी भीमजागिरां भैमीवाणीनां विरहाद् दूनौ सन्तप्तौ तेषां देवानां कर्णौ अध्वनि मार्गेऽनुकम्पैः भैमीवाण्याः सकाशानन्यूनैः वीणैः वीणासम्बन्धिभिर्ध्वनिभिः व्यनोदयत् सुखिनौ चकार। मुख्याभावे अनुकल्पोऽपि कार्यार्थमङ्गीक्रियते। स्तनादीनां द्वित्वनिष्ठा जातिः। प्रायेण गृह्यत इति वचनात् कर्णाविति प्रतिनियतापेक्षं द्विवचनं ॥ १२ ॥

अथेति। अथ वाणीवीणाक्वणितश्रवणानन्तरं ते देवीदेवा असितत्विषं खङ्गतुल्यकान्तिं आयान्तं सन्मुखमागच्छन्तं जनौघमवैक्षन्त अपश्यन्। उत्प्रेक्षते। तेषां देवानां प्रत्युद्गमनस्य प्रीत्या वाञ्छया मिलद्युज्यमानं मूर्त्तिमच्छरीरं व्योमाकाशमिव। यतः सशरीरस्य क्रियावत्त्वं युक्तम्। जनौघं मषीत्विषमित्यपि पाठः ॥ १३ ॥

अद्राक्षुरिति। ते सुरा अग्रेसरं पुरःसरमाजिहानमागच्छन्तं स्मरं अद्राक्षुः। उत्प्रेक्षते। तज्जनौघस्वामिना कलिना अक्षाणामिन्द्रियाणां अथ च द्यूतपाशकानां सम्बन्धिनोऽविन-

अगम्यार्थं तृणप्राणाः पृष्ठस्थीकृतभीह्रियः ।
शम्भलीभुक्तसर्व्वस्वा जना यत्पारिपार्श्विकाः ॥ १५ ॥
बिभर्त्ति लोकजिद्भावं बुद्धस्य स्पर्द्धयेव यः ।
यस्येशतुल्यवैवात्र कर्तृत्वमशरीरिणः ॥ १६ ॥

यस्य अविनीतत्वस्य शिक्षार्थं पुरस्कृतमिवाग्रेकृतमिव अथ च पूजितमिव। स्मरो दौन्द्रियवैकृतं कर्त्तुं जानाति इति इन्द्रियार्था अक्षशब्दकृत्वेन द्यूतपाशकेषु विषये नलमविनयं शिक्षयितुं पाशकाज्ञानद्वारा नलं निग्रहीतुं कलिना पूजितः पुरः प्रेषितश्च। प्रायेणत्युत्प्रेक्षा ॥ १४ ॥

अगम्येति। एवम्भूता जना यस्य कामस्य परितः पार्श्वयोश्चरन्तीति पारिपार्श्विका वयस्या इत्यर्थः सेवका वा। किम्भूताः। गन्तुमशक्यानामनर्हाणाञ्च राजादीनां मात्रादीनाञ्च सम्भोगार्थं तृणमिवानायासत्याज्याः प्राणा येषां ते। अत एव पृष्ठस्थीकृते पश्चात्कृते परित्यक्ते भीह्रियौ यैस्ते वधभयं पापभयं लोकलज्जा चेत्येतत्सर्व्वं यैस्त्यज्यते तादृशा निर्भया निर्लज्जाश्चेत्यर्थः। तथाऽप्राप्याभेद्यस्त्रीभेदनकृतप्रतिज्ञाभिः शम्भलीभिः कुट्टिनीभिर्भुक्तं सर्व्वस्वं येषां ते। सन्तीति शेषः। पारिपार्श्विकाः पूर्व्ववत् ॥ १५ ॥

बिभर्त्तीति। यः स्मरो लोकान् जयतीति लोकजित् तस्य भावं सर्व्वजनविजयितां बिभर्त्ति। उत्प्रेक्षते। बुद्धस्य स्पर्द्धयेव। जिनो हि मारजित् इतिख्यशत्रुस्पर्द्धयेव मारजिल्लोकजिज्जिन

ईश्वरस्य जगत्कृत्स्नं सृष्टिमाकुलयन्निमाम् ।
अस्ति योऽस्त्रीकृतस्त्रीकस्तस्य वैरमनुस्मरन् ॥ १७ ॥

इत्यभिधानात् लोकजित्पदवाच्यत्वं बिभर्त्ति इत्यर्थः । तथा यस्याशरीरिणः शरीररहितस्य दग्धदेहत्वादनङ्गस्यात्र लोके कामिनीमनोविकारं प्रति मैथुनद्वारा सर्व्वजनान् प्रति वा कर्तृत्वं स्मृतं । अत्रोत्प्रेक्ष्यते । विश्वकर्त्तुरीशस्य तुलयेव स्पर्द्धयेव । ईश्वरो हि स्मरहरत्वात् स्मरस्य शत्रुः तस्मात् स्पर्द्धयेव तस्याशरीरकर्तृत्वं स्वयमविनयेनाङ्गीकृतमित्यर्थः । यथाऽशरीरिण एवेश्वरस्य कर्तृत्वमिति न्यायविदः । तथाऽयमप्यनङ्ग एव सन् कार्य्यकारीत्यर्थः । जिनमहेशाभ्यां जितोऽपि लोकजित्वनाशरीरकर्तृत्वेन च यः पुनस्ताभ्यां सम एवंविधोऽतिबलवानिति भावः ॥ १६ ॥

ईश्वरस्येति । अस्त्रीकृताः शस्त्रीकृताः स्त्रियो येन एवंविधो यः काम ईश्वरस्येमां सृष्टिं ईश्वरेण निर्म्मितं कृत्स्नं जगदाकुलयन्नन्यथावृत्ति चेतः स्ववशं कुर्व्वन् अथच पीडयन्नस्ति । उत्प्रेक्ष्यते । तस्येश्वरस्य देहदाहजनितं वैरं स्मरन्निवास्तीव । देहदाहो मम अनेन कृतस्तस्मादेतेन रचितमेतदीयं जगत्पीडयिष्यामीति बुद्ध्या ईश्वरस्य किञ्चिदपकर्त्तुमसमर्थः तदीयं जगत् स्त्रीरूपेण शस्त्रेण पीडयंस्तेन सह स्पर्द्धत इत्यर्थः । प्रत्यनीकाख्य आयुधान्निष्कृतोऽस्त्री येनेति स्त्रिया अस्त्रीत्वकरणे विरोधाभासश्च । अथ वा या ईश्वरेणापि त्रिपुरवधे मोहिनी स्त्री शस्त्री-

चक्रे शक्रादिनेत्राणां स्मरः पीतनलश्रियाम्।
अपि दैवतवैद्याभ्याममचिकित्स्यमरोचकम्॥ १८॥

कृता मानेनापि स्त्री अस्त्रीकृता इत्येकविषयतया स्पर्द्धा। शक्ति-रूपा हि श्रीविष्णुः त्रिपुरवधे भगवता शरतां नीत इत्यागमः। अनुस्मरन्निति लुप्तोपमा। सृष्टिशब्दो नियतस्त्रीलिङ्गः। त-त्परामर्शाच्चेमामिति निर्देशः। अस्त्रीकृतेत्यत्रानस्त्रमस्त्रं कृता-ऽस्त्रीकृतेति च्वौ (पा० ७।४।२६) इति ईकारः। पक्षेऽण्। न स्त्री अस्त्री अस्त्रीकृता स्त्रीयेनेति समासः। न दृतश्चेति (पा० ५।४। १५३) कप्॥ १७॥

कुलकम्। चक्र इति। स्मरः कामः पीतनलश्रियां आदरदृष्ट-नलशोभानां शक्रादिनेत्राणामिन्द्राग्न्यादिनेत्राणां दैवतवैद्याभ्यां नासत्याभ्यामपि न चिकित्स्यं प्रतिकर्त्तुं न शक्यं अरोचकं रुच्य-भावं चक्रे। अधिकरूपस्य नलस्य दृष्टत्वात्तस्माद्धीनरूपे स्मरे दृष्टे तन्नेत्राणां प्रीतिर्न जाता। न केवलं स्मरं दृष्ट्वा न प्रीतास्ते किन्तु दस्रावपि। तयोरपि नलाद्धीनत्वादित्यर्थः। स्मरदस्रेभ्योऽपि नलोऽधिक इति ध्वन्यते। स्मरमनादृत्य परस्खलिता इति भावः। अथवा अरोचकं सर्व्वथा अन्नादिरुच्यभावो रोगविशेषः। स कर्म्मजत्वाद्दैववैद्याभ्यामपि चिकित्सितुमशक्यः किं पुनर्नृवैद्यैरिति समासोक्तिः। भङ्ग्यन्तरेण नलरूपातिशयप्रकाशतात्पर्य्यमुक्तं। उपमानतिरस्कारात् प्रतीपञ्च पीतनलश्रियामिति तृतीयादि-ष्विति (पा० ७।१।७४) पुंवद्भावात् नपुंसकह्रस्वत्वाभावान्नुड्भावः।

यत्तत् क्षिपन्तमुत्कम्पमुत्थायुकमथारुणम् ।
बुबुधुर्विबुधाः क्रोधमाक्रोशाक्रोशघोषणं ॥ १९ ॥

अर्चिष्किमस्यमिति । शक्यार्थे अचोयदिति (पा० ३।१।९७) यत् । दुश्चिकित्समिति पाठे कर्मणि खल् । दुर्जन्वर्थः । खलयोगात्र लोकेति (पा० २।३।६९) षष्ठीनिषेधाद्द्वाभ्यामिति तृतीयाद्विवचनं । अरोचकमिति । रोगाख्यायां ण्वुल्बहुलमिति (पा० ३। ३।१०८) ण्वुल् ॥ १८ ॥

यत्तदिति । अथ विबुधाः सुराः क्रोधं बुबुधुः दहृशुः । कीदृशं । यत्तत् क्षिपन्तं यद्यदग्रे पतति तत् क्षिपन्तमित्यर्थः । पुनः किंविधं । उद्गतः कम्पो यस्य तं उत्कम्पं । तथा उत्थायुकं उत्थानशीलं । तथा अरुणं रक्तं । तथा आक्रोशाक्रोशघोषणं आक्रोशः शापगालिप्रदानादिपुरःसराक्रान्तघोषो यस्य तं । क्रुद्धोऽप्येवंविधो भवति । मारदर्शनानन्तरं ... लिङ्गलोष्टपाषाणादि परप्रहारार्थं मुष्टबन्धं नितरां मर्व्वाङ्गकम्पनं जनैर्वार्य्यमाणमपि आवेशातिशयात् केशाकेशि योद्धुं पौनःपुन्येनोत्तिष्ठन्तं लोहितीभूतमर्व्वाङ्गं क्रोशं मर्य्यादीकृत्याभिव्याप्य वा परनिन्दां वाक्यसंक्षेपं यस्य । अतिदूरं श्रूयमाणपरुषभाषिणमिति यावत् । एवम्भूतं मशरीरं क्रोधं तत्र जनौघे ते देवा बुबुधिरे । एतैश्चिह्नैः क्रोधोऽयमिति ज्ञातवन्त इत्यर्थः । क्रोधाक्रान्तस्य जातिरियं । आक्रोशभूषणमिति पाठे आक्रोशो भूषणं यस्येत्यर्थः । उत्थायुकमिति उकञ् ॥ १९ ॥

यमुपासन्त दन्तौष्ठक्षतासृक्स्निग्धचक्षुषः।
भ्रुकुटीफणिनीनादनिभनिश्वासफूत्कृतः॥ २०॥
दुर्गं कामाशुगेनापि दुर्गं दुर्वाससमवनम्य यः।
दुर्वाससोहृदयं लोकान् सेन्द्रानपि दिधक्षति॥ २१॥
वैराग्यं यः करोत्युच्चैरञ्जनं जनयन्नपि।
हते सर्वेन्द्रियाच्छादि प्रज्वलन्नपि यस्तमः॥ २२॥

यमिति। एवंविधा जना यं क्रोधं उपासन्त सिषेविरे। किंविधाः। दन्तैः क्षतं यदोष्ठक्षतं व्रणं तस्मिन् असृक् रुधिरं तस्य स्निग्धभूते चक्षुषी येषां ते दन्तोष्ठक्षतासृक्स्निग्धचक्षुषः। किम्भूतं क्रोधं। भ्रुवोराक्षेपः सङ्कोचो भ्रुकुटी सैव फणिनी तस्या नादः फूत्कारस्तत्तुल्यास्तन्निभा निश्वासा निर्गच्छन्नासावयव फूत्कारो येषामेवम्भूता जना यं सेवन्ते तं बुबुधिर इति [illegible]वेण सम्बन्धः। क्रोधवशाद् दन्तैरोष्ठौ दश्यते नेत्रे रक्ते जायेते श्वासफूत्काराश्च निर्गच्छन्ति। यस्य सेवका एवंविधा इत्यर्थः॥ २०॥

दुर्गमिति। यः क्रोधो मदनवाणेनापि लङ्घितुमशक्यमत एव दुर्गमं गिर्यादिविषमदुर्गरूपं एवम्भूतं रुद्ररूपस्य दुर्वाससो मुनेर्हृदयं मानसमाश्रित्य शक्रादिसहितान् सर्वानपि लोकान् शापाग्निना दग्धुमिच्छति। अन्योऽपि क्षुद्रो वाणेनाप्राप्यमतिविषमगिर्यादिदुर्गमाश्रित्य सर्व्वानपि पीडयति। रूपकं समासोक्तिश्च॥ २१॥

वैराग्यमिति। यः क्रोधोऽतितरां मुखादिलौहित्यं कुर्व्वन्

पञ्चेषुविजयासक्तौ भवस्य क्रुध्यतो जयात्।
येनान्यविगृहीतारिजयकालनयः श्रितः॥ २३॥

यावत् स्वकार्य्यं करोति तावदुद्वेगमपि जनयति। तथा नितरां प्रदीप्तोऽतिवृद्धोऽभिभवंश्चक्षुरादीनि सर्व्वाणि बाह्याभ्यन्तरेन्द्रियाणि आच्छादयत्येवंशीलमज्ञानमपि उत्पादयति। प्रसिद्धं तम आलोकाभावाच्चक्षुरिन्द्रियमेवाच्छादयति रूपाग्रहणात्। ननु रसनादीनि तमस्यपि रसगन्धादीनां ग्रहणस्य सर्व्वसाक्षित्वात्, इदं तु क्रोधवशान्मनसोऽनवस्थानात् सहकारिसन्निधानाभावाच्चक्षुरादीनां रूपादिस्वविषयग्रहणासामर्थ्यजननात् सर्व्वेन्द्रियाच्छादि एवमाश्चर्य्यजनकं तमस्तु यः स्मृत इत्यर्थः। अथ च यः पूर्व्वोक्तप्रकारेण वैराग्यफलभूतं जनयितुं रञ्जनं करोति प्रज्वलितश्च तमो यथा कथञ्चिद्भूतो गत्वा व्याख्येयं। अथ वा अपिर्विरोधार्थः। यो लौहित्यं जनयति यश्च प्रीतिमुत्पादयति स एव अप्रीतिमिति कथं। यश्च प्रकर्षेण दीप्तस्तेजोरूपः सोऽन्धकारं रञ्जनश्च इयं कथं स्मृते। तत्रापि सर्व्वेन्द्रियाच्छादनमिति विरोधाभासः। वैराग्यशब्दस्य लौहित्याभावात् प्रीत्यभावार्थश्लेषात्तमःशब्दस्य वाधकार्थश्लेषात्। परिहारस्तूक्तप्रकारेण॥ २२॥

पञ्चेष्विति। पञ्चेषुविजयासक्तौ कामजयविषये ऽभिनिवेशे सति क्रुध्यतो भवस्य कुप्यतो महेश्वरस्य जयात् स्ववशीकरणाद्धेतोः येन क्रोधेन अन्यविगृहीतारिजयकालनयः परेण प्रारब्धविग्रहे शत्रौ स्वजयस्य समयस्तत्पराभवारम्भसमयः स इत्येवंरूपो

हस्तौ विस्तारयन्निभ्ये बिभ्यदर्धपथस्थवाक्।
सूचयन् काकुमाकूतैर्लोभस्तत्र व्यलोकि तैः॥ २४॥
दैन्यस्तैन्यमया नित्यमत्याहारामयाविनः।
भुञ्जानजनसाकूतपश्या यस्यानुजीविनः॥ २५॥

नीत्युपदेशः श्रितोऽङ्गीकृतः। अन्यदा यो जेतुमशक्यः सोऽन्येन विगृहीतो यदा भवति तदा जयो भवतीति नीत्युपदेशोऽन्यदा जेतुमशक्यस्य भवः स्मरेण सह विग्रहसमये जितत्वात् जित इवेत्युत्प्रेक्षा। महेश्वरोऽपि येन स्ववशीकृतस्तस्य क्रोधस्य माहात्म्यमशक्यवर्णनमिति भावः। विगृहीतारिजये अयं सप्तमीसमासः। अरेर्जयकाल इति षष्ठीसमासो वा॥ २३॥

पञ्चभिः कुलकं। हस्ताविति। इभ्ये धनिनि विष हस्तौ द्वावपि पाणी लोभाद् विस्तारयन् प्रसारयन्। दास्यति न वेति हेतोः बिभ्यत् भयं प्राप्नुवन्। अत एव अर्धपथस्थवाक् हृदयान्निर्गत्य कण्ठमागत्य मुखादनिःसरन्ती वाणी यस्यैवम्भूतः। खण्डोक्तिं वदतीति यावत्। तथा आकूतैः काकुं सूचयन्, अङ्गुलीमुखनिक्षेपादिचेष्टितैर्देहि देहीत्यादि भयदैन्यादिविकृतां वाणीं ज्ञापयन्। एवम्भूतो मूर्त्तो लोभस्तत्र जनौघे तैर्देवैर्व्यलोकि दृष्टः। ललज्जिह्वः स्खलद्वचा इति पाठे रसास्वादार्थं चञ्चलजिह्वो भयादस्पष्टापूर्णवाक् चेत्यर्थः। लुब्धस्येयं जातिः॥ २४॥

दैन्येति। नित्यं दैन्यस्तैन्यमयाः सदा दीनत्वचौरत्वे प्रचुरे येषु तादृशा दैन्यचौर्य्यरूपा वा। तथा अत्याहारामयाविनः

धनिदानाम्बुवृष्टेर्यः पात्रपाणाववग्रहः।
स्वान् दासानिव हा निःस्वान्विक्रीणीतेऽर्थवत्सु यः॥ २६॥

जाठरवह्नाननुरूपाहारगौरवादजीर्णरसलाभित्यं दीर्घरोगिणः। तथा ऽयमेव सकलं भोच्यते मह्यं भोक्तुं न ददाति समीचीनोऽयमोदनः कीदृग्घृतं दधि मह्यं किं वितीर्यमस्मै किमित्यादि दृष्टदृष्ट्याशयादिना भुञ्जानजनसाकूतपश्याः। अभ्यवहरतो लोकस्य साभिप्रायं विलोककाः एवम्भूता यस्य लोभस्य सेवकाः स व्यलोकीति पूर्व्वेण सम्बन्धः। इयमपि जातिः। आमयावीति आमयस्योपसङ्ख्यानं दीर्घश्च (पा०५।२।१२२। वा०१) ॥ २५॥

धनीति। पात्रपाणौ सम्प्रदानभूतब्राह्मणहस्ते विषये धनिदानाम्बुवृष्टेः समृद्धधनानां नराणां सङ्कल्पसम्बन्धिजलवर्षणस्य यो लोभः अवग्रहः प्रतिबन्धकः। वृष्टेस्त्ववग्रहः सम्भाव्यते। महाधनिकोऽपि यद्वशात् पात्रपाणौ जलं न वितरतीत्यर्थः। तथा निःस्वान् निर्द्धनान् स्वान् आत्मनः स्वीयान् पुत्रदारादीन् वा अर्थवत्सु धनिकेषु विषये विक्रीणीते निर्गतस्नेहाभिमानिनः। कश्चन विनिमय्य स्ववशवर्त्तिनो दासीपुत्रानिव वितरति। हा खेदे, निःस्वेन च धनलोभवशादात्मा स्वीया वा पुत्रादयो धनिकेषु विक्रीयन्ते। दासा यथा स्वेच्छया धनार्थं क्रीयन्ते तथेत्यर्थः। व्यलोकीति पूर्व्वेण सम्बन्धः॥ २६॥

एकद्विकरणे हेतू महापातकपञ्चके।
न तृणं मन्यते कोपकामौ यः पञ्च कारयन्॥ २७॥
यः सर्व्वेन्द्रियसद्मापि जिह्वां वञ्चवलम्बते।
तस्यामाचार्य्यकं याञ्चापटवे वटवेऽर्जितुं॥ २८॥

एकेति। तौ कोपकामौ महापातकपञ्चके ब्रह्मवधादिपञ्च-महापातकसङ्घमध्ये एकद्विकरणे एकस्य पातकस्य द्वयोश्च करणे क्रमेण हेतू कारणभूतौ यस्मादत एव तयोरल्पकार्य्यकारित्वाद् यो लोभः पञ्च कारयन् तृणतुल्यावपि तौ न मन्यते। यतः स्वयं पञ्चापि महापातकानि नरकादीनि कारयति कोपाच्च योऽपि ब्राह्मणो हन्यते तस्यैकं ब्रह्मवधं प्रति हेतुत्वं कामाद्गुरुतल्पगमनं स्त्रीकामाच्च तद्भर्त्तुर्ब्राह्मणस्य वधश्चेति महापातकद्वयं प्रति तस्य हेतुत्वं। धनादिलोभात्तु ब्रह्मवधः सुवर्णस्तेयञ्च रसलोभात् सुरापानं कामलोभात् स्त्रीजातिप्रदर्शितधनलोभाद्वा गुरुतल्पगमनं। इष्टसङ्गहलोभादेतैश्चतुर्भिरपि सह संसर्ग इत्येवं लोभस्य पञ्चापि महापातकानि प्रति हेतुत्वादधिकत्वात् कोपकामौ अकिञ्चित्करौ मन्यते। ताभ्यामप्यधिको लोभ इति भावः। एकद्विकरणे इत्यत्र सङ्ख्याया अल्पीयस्या (पा० २।२।३४ वा० ७) इत्येकशब्दस्य पूर्व्वनिपातः। तृणे इति मन्यकर्म्मण्यनादर इत्यादिना (पा० २।३।१७) चतुर्थ्या वैकल्पिकत्वात् पक्षे द्वितीया॥ २७॥

यः सर्व्व इति। यो लोभः सर्व्वेन्द्रियसद्मापि सर्व्वेन्द्रियाणि

पथ्यां तथ्यामगृह्णन्तमेवं बन्धुप्रबोधनाम् ।
गृह्यमाश्लिष्य नोज्झन्तं मोहमैक्षन्त हन्त ते ॥ २९ ॥

षडिन्द्रियाणि सन्ति यस्य एवंविधोऽपि घ्राणं गन्धलुब्धं चक्षू-
रूपलुब्धमित्यादिप्रकारेणेत्यर्थः, बहु यथा जिह्वामवलम्बते न
तथान्यानीन्द्रियाणि । किं कर्त्तुं । तस्यां जिह्वायां याञ्चाप-
टवे याञ्चापटुर्ब्रह्मचारी शिष्यस्तस्मै वटवे याञ्चाशक्तिकुशलाय
आचार्य्यकं गुरुत्वमर्जितुं । लुब्धस्यैषा रीतिः । अयमत्र तात्प-
र्य्यार्थः । यो लोभो द्रवाचं प्रति विप्रियवाक्यरचनाय यत्सामर्थ्यं
नैपुण्यं तद्विषये गुरुतां विधातुमिव तस्याः सकाशात् प्रियवच-
नसम्भाषणाभ्यां कर्त्तुमिव शिष्यभूतस्तामतितरां सेवत इत्यर्थः ।
लोभवशात् सर्व्वोऽपि याञ्चाप्रियवाक्यानि ब्रूते इति भावः ।
याञ्चावटवे पटवे इति पाठे पटवे दृढाय याञ्चावटवे इत्यर्थः ।
याञ्चाचाटुपटुविषये जिह्वायां स्वस्य गुरुतां विधातुमिवेत्यु-
त्प्रेक्षा । आचार्य्यकमिति पूर्व्ववत् ॥ २८ ॥

पञ्चभिः कुलकम् । पथ्यामिति । पथ्यां हितां तथ्यां सत्यां
मातापित्रादिना कृतां बन्धुप्रबोधनां एवं सत्कर्म्म कुरु असत्मा
कार्षीरित्यादिरूपां प्रवर्त्तनां अगृह्णन्तमनङ्गीकुर्व्वाणं यतो
ऽज्ञानबहुलं । तथा गृह्यं अलीकं अप्रामाणिकमपि रञ्जितत्वे-
नानात्मभूतानि जडान्यपि देहेन्द्रियादीनि अनाद्यविद्यावि-
लासवशादात्मत्वेन आश्लिष्य प्रतिपद्य सहस्रशो विद्यमानमपि
नोज्झन्तं न त्यजन्तमेवम्भूतं मोहं ते देवास्तत्र जनौघे ऐक्षन्त

श्वः स्वप्राणप्रयाणेऽपि न स्मरन्ति स्मरद्विषम् ।
मग्नाः कुटुम्बजम्बाले बालिशा यदुपासिनः ॥ ३० ॥

...दृशः । हितस्य प्रियस्य चानङ्गीकरणात् अनिष्टशून्यापरित्यागाच्च । हन्तेत्याश्चर्य्ये खेदे वा । मूढस्येव जातिः ॥ २८ ॥

श्वः स्वदति । यदुपासिनः यस्य मोहस्य सेवका बालिशा मूर्खा अथवा स्वयमज्ञत्वाभिमानात् परोपदेशानङ्गीकाराच्च शिशुभूता एवम्भूता जनाः कुटुम्बजम्बाले मग्नाः पुत्रकलत्रादिरूपकुटुम्बरूपे कर्दमे बुडिता अपि मृतोऽयं पुत्रः किं करोमि इदं कलत्रं किंवा करिष्यति अस्य पौत्रादेः किं भविष्यति इत्यादिप्रकारेण पुत्रादियोगक्षेममात्रपराः शिश्नोदरपरायणाः सन्तः श्वः परेद्यवि अतिसन्निहित इति यावत् जातस्य हि ध्रुवो मृत्युरित्यादिवचनप्रामाण्यादरात् अपि सन्निहिते प्राणगमने ज्ञाते सति सन्निपातादिना आतुरत्वेऽपि वा श्वः प्राणप्रयाणे निश्चिते सत्यपि संसारसमुद्रतारकं स्मरहरं न ध्यायन्ति किन्तूक्तप्रकारेण मरणसमयेऽपि कुटुम्बचिन्तामेव कुर्व्वन्तीत्यर्थः । इदमपि मूढलक्षणं । बाल्ये निमग्नोऽन्योऽपि किमपि न स्मरति । श्व श्व इति पाठे वीप्सायां द्विः श्वः । स्वप्राणेति पाठे स्वस्य प्राणानामित्यर्थः । द्विषमिति कर्म्मत्वविवक्षया द्वितीया । स्मरद्विष इति अधीगर्थेति (पा०२।३।५२) षष्ठी ॥ ३० ॥

पुंसामनल्पनिर्वाणज्ञानदीपमयात्मनाम्।
अन्तर्म्लापयति व्यक्तं यः कज्जलवदुज्ज्वलम् ॥ ३१ ॥
ब्रह्मचारिव्रतस्थायियतयो गृहिणं यथा।
त्रयो यमुपजीवन्ति क्रोधलोभमनोभवाः ॥ ३२ ॥

पुंसामिति। यो मोहः, न लब्धं निर्वाणं विनाशो येन स ज्ञानरूपो दीपस्तन्मयस्तत्प्रचुर आत्मा मनो येषां ज्ञानिनां वसिष्ठादीनां उज्ज्वलमप्यन्तर्निर्मलमप्यन्तःकरणं संज्ञां व्यक्तं प्रकटं म्लापयति मलमहितं करोति। मोहमोहिताः कामाधीनाः सन्तो ज्ञानिनोऽपि विश्वामित्रादयः स्वमनो मेनकादिदेवाङ्गनाप्रवणञ्चक्रुः। पूर्व्वमुज्ज्वलस्यापि मनसो मोहेन मालिन्यं कृतं। ज्ञानिनामपि चेतांसीत्यादिमार्कण्डेयवचः प्रमाणं। न लब्धः साक्षात्कृतो निर्वाणोपयोगी मोक्षोपयोगी ज्ञानदीपरूपः स्वप्रकाशज्ञानरूप आत्मा यैस्तेषां अद्वैतज्ञानरहितानामिति वा। किमिव। कज्जलवत्। यथा मध्यस्थापितस्य दीपस्य कज्जलं सुधाधवलितानां घटादीनां मध्यं मलिनयति ॥ ३१ ॥

ब्रह्मेति। ब्रह्मचारी व्रतस्थायी वानप्रस्थः यतिः सन्न्यासी एते त्रयोऽप्याश्रमिणो गृहिणं गृहस्थं यथा अन्नाच्छादनार्थं उपजीवन्ति सेवन्ते,

यस्मात् त्रयोऽप्याश्रमिणो ज्ञानेनान्नेन चान्वहम्।
गृहस्थेनैव धार्य्यन्ते तस्माज्ज्येष्ठो गृहाश्रमी ॥

जाग्रतामपि निद्रा यः पश्यतामपि योऽन्धता।
श्रुते सत्यपि जाड्यं यः प्रकाशेऽपि च यस्तमः॥ ३३॥
कुरुसैन्यं हरेणेव प्रागलज्जत नार्ज्जुनः।
हतं येन जयन् कामस्तमोगुणजुषा जगत्॥ ३४॥

इति स्मार्त्तवचनात्, तं सचीकृत्य वा प्राणधारणं कुर्व्वन्ति, तथा क्रोधलोभमनोभवा यं मोहं सेवन्ते यं लघीकृत्य वा स्वरूपं लभन्ते। मूढ एव क्रुद्धो लुब्धः कामी च भवति॥ ३२॥

जाग्रतामिति। यो मोहो जाग्रतां सावधानानामपि निद्रा अविवेकरूपं निश्चैतन्यं। तथा यः पश्यतां चाक्षुषज्ञानवतामपि अन्धता चक्षुराच्छादनाद् द्रष्टव्यदर्शनाभावरूपसदसद्स्वग्रहणं संसारस्यानित्यदुःखरूपतां जानतामपि तदपरित्यागहेतुत्वाद्ज्ञानरूप इत्यर्थः। तथा यः श्रुते वेदशास्त्राधिगमे सत्यपि मूढत्वेन श्रेयाज्ञानरूपं जाड्यं विधिनिषेधाद्यनिर्णयरूप इ[illegible]ः। तथा यश्च प्रकाशे सौराग्नेयचाक्षुषाद्यालोके सत्यपि व्य-घटपटाच्छादनरूपतयान्धकाररूपः। प्रकटेऽप्यर्थे प्रतीतप्रति-बन्धक इत्यर्थः॥ ३३॥

कुर्व्विति। तमोगुणजुषा अज्ञानरूपेण तमोगुणसेविना येन मोहेन हतं जगत् जयन् कामो नालज्जत। क इव। तमोगुणजुषा आश्रिततमोगुणेन हरेण संहारकेण रुद्रेण प्राप्तकालतया प्राक् हतं ग्रस्तं कुरुसैन्यं पश्चाद्विनाशयन् अर्ज्जुन इव। मया हतमि-त्यभिमानेन लज्जां यथा नाप। अन्येन हतस्य पश्चात् स्वेन

चिह्निताः कतिचिद्देवैः प्राचः परिचयादमी ।
अन्ये न केचनाचूडमेनःकञ्चुकमेचकाः ॥ ३५ ॥
तत्रोद्वेल इवार्णोधौ सैन्येऽभ्यर्णमुपेयुषि ।
कस्याप्याकर्णयामासुस्ते वर्णान् कर्णकर्कशान् ॥ ३६ ॥

हनने हि लज्जा युक्ता सा तु कामस्य न जातेत्यर्थः । मूढ एव कामपरवशो भवतीत्यर्थः । ईश्वरः प्राक् कुरुसैन्यं शूलेन हन्ति पश्चादर्जुनः शरेणेति द्रोणपर्व्वकथा ॥ ३४ ॥

कुलकं । चिह्निता इति । अमी कामादयः कतिचित् कतिपयैर्देवैरिन्द्रादिभिः प्राचः पूर्व्वजातात् परिचयात् पटुतरात् संसर्गात् चिह्निताः चिह्नैर्निश्चिताः ।देवानामपि कामाद्यायत्तत्वात् प्राचीनः परिचयः । अन्ये तदुपजीविनो बौद्धादयः केचन विशेषेण न ज्ञाताः । यत आचूडं शिखामभिव्याप्य मर्य्यादीकृत्य वा एनसा पापरूपेण कञ्चुकेन मेचकाः श्यामवर्णाः । यो हि नीलवस्त्रादिना आवृतदेहः स विशेषतो न लक्ष्यते श्यामत्वाच्च बुद्ध इत्यर्थः ॥ ३५ ॥

तत्रेति । उद्वेले त्यक्तमर्य्यादे अर्णोधौ समुद्र इवातिगम्भीरे तत्र तस्मिन् काले सैन्ये अभ्यर्णे उपेयुषि सामीप्यं गते सति ते देवाः कस्याप्यनुपलक्षिताकारस्य चार्वाकस्य कर्णकर्कशान् वर्णानाकर्णयामासुः । अभ्यर्णे । अर्दश्चाविदूर्य इति (पा० ७।२।२५) नेट् । गुरी उद्यमे मर्यादाधारणे च । उद्यमत्यागिनीत्यर्थः ॥ ३६ ॥

ग्रावोम्मज्जनवद्यज्ञफलेऽपि श्रुतिसत्यता ।
का श्रद्धा तत्र धीवृद्धाः कामाध्वा यत् खिलीकृतः ॥ ३७ ॥
केनापि बोधिसत्त्वेन जातं सत्त्वेन हेतुना ।
यद्वेदमर्मभेदाय जगदे जगदस्थिरम् ॥ ३८ ॥

तानेव वर्णानाह । ग्रावेति । ग्रावोम्मज्जनवद् ग्रावाणः प्लवन्तीति प्रतिपादितपाषाणतरणवत् ज्योतिष्टोमादियज्ञानां साध्ये स्वर्गादौ फलेऽपि ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादिश्रुतीनां सत्यता यथार्थता ग्रावोम्मज्जनवाक्यस्य प्रत्यक्षबाधितत्वाद्यागानन्तरमेव स्वर्गादेरदृष्टत्वात् ज्योतिष्टोमादियागप्रतिपादिका श्रुतिरपि प्रत्यक्षबाधिता । तथा च यागश्रुतिरप्रमाणं प्रत्यक्षविरुद्धत्वात् ग्रावोम्मज्जनश्रुतिवदिति प्रयोगात् यागश्रुतेरपि स्वर्गादावसत्यतेति च व्याख्येयं। अत्र विरुद्धलक्षणया सत्यत्वेऽप्यसत्येत्यर्थः । एवमन्येषामपि वेदवाक्यानां श्रुतित्वाविशेषादप्रमाणत्वे हे धीवृद्धा बुद्धिमन्तो देवास्तत्र फले श्रुतौ वा युष्माकं का श्रद्धा कथमास्तिक्यं अपि त्वप्रामाणिकेऽर्थे श्रद्धा न कार्य्या । यत् येन कारणेन यद्दशादेदोक्तविध्यतिक्रमभिया कामाध्वा यदृच्छाचारमार्गः खिलीकृतो बद्धस्त्यक्त इत्यर्थः । श्रुतिमात्रस्याप्रमाणत्वाद्यज्ञे यजमानर्त्विजां कतिचिदहानि यद्ब्रह्मचर्यं तदप्यप्रमाणिकत्वात् त्यजतेति भावः । धीवृद्धा इत्युपहासः । अतिमूर्खा भवन्त इत्यर्थः ॥ ३७ ॥

केनेति । केनाप्यज्ञातनाम्ना बोधिसत्त्वेनातिप्राज्ञेन जिनभ-

अग्निहोत्रं त्रयीतन्त्रं त्रिदण्डं भस्मपुण्ड्रकं।
प्रज्ञापौरुषनिःस्वानां जीवो जल्पति जीविका ॥ ३९ ॥

द्वारकेण वेदस्य मर्मभेदाय जातमुत्पन्नं। वेदमर्मभेदः कर्त्तुमारब्ध इति यावत्। कथमत आह। यद्यस्मात् सत्त्वेन हेतुना सत्त्वरूपेण लिङ्गेन, यत् सत् तत् क्षणिकं यथा पट इत्यादिरूपेण, जगदस्थिरं क्षणिकं जगदे। प्रत्ययादिसत्त्वलिङ्गेन विश्वस्य क्षणिकत्वसिद्धावुभयलोकानुगतं स्थिरमेककर्त्तारमधिकारिणमाश्रित्य वेदैर्विहितानां विधिनिषेधानां निराश्रयतया वेदस्याप्रामाण्यप्रतिपादनाद्वेदमर्मभेदः कृत इत्यर्थः। बौद्धसिद्धान्तस्तु ग्रन्थान्तराद्बोद्धव्यो विस्तरभयादत्र नोक्तः। अयं वक्ता पूर्व्वस्माद्भिन्नश्चार्वाक एव वा स्वमतं वेदाप्रामाण्यं बौद्धसंवादेन द्रढयति। केनेति। सत्त्वेन हेतुना यस्माज्जगदस्थिरं जगदे तस्मात् केनापि लोकोत्तरप्रज्ञेन तेनैव चार्वाकेण वेदमर्मभेदाय बौद्धेन जातं। तदीयमताङ्गीकरणात् तद्रूपेणैव जातमित्यर्थः। जगादेति पाठे यद्बोधिसत्त्वं जगदस्थिरं जगादेति व्याख्येयम्। क्षणिकत्वे सिद्धे येन पापं कृतं स नष्ट एवेति किमिति पापाद्भयमित्यादि प्रकरणाज्ज्ञेयम् ॥ ३८ ॥

अग्नीति। नित्यं काम्यञ्च सायम्प्रातर्होमरूपं अग्निहोत्राख्यं कर्म्म, त्रयी च तन्त्रमीमांसा वेदत्रयसम्बन्धि वा यत्तन्त्रं वेदविहितोऽन्योऽपि कर्म्मकलापः, तथा त्रयो दण्डा यत्र तत्पाशुपतमतं, तथा भस्मनः पुण्ड्रस्तिलको यत्रैवंविधं शैवादिमतमेतत्

शुद्धिर्वंशद्वयीशुद्धौ पित्रोः पित्रोर्यदेकशः।
तदनन्तकुला दोषाददोषा जातिरस्ति का॥ ४०॥

सर्व्वं, प्रज्ञाया बुद्धेः पौरुषेण सामर्थ्येन तीक्ष्णया प्रज्ञया निःस्वानां हीनानां प्रज्ञया पौरुषेण च वा हीनानां, वचनेन चौर्य्येण च बलाद्वा ग्रहीतुमसमर्थानां पुरुषाणां जीविका जीवनोपायः। तद्वेषधारणधर्मेण द्रव्यमर्ज्जितुमेव न तु तात्त्विको धर्म्मः। परलोकसाधनमिव वेदप्रामाण्यवादिनां भवति इति जीवो बृहस्पतिर्जल्पति वदति। वाक्यार्थः कर्म्म। तदुक्तम् तेनैव।

अग्निहोत्रं त्रयो वेदास्त्रिदण्डभस्मपुण्ड्रकं।
बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः॥

भस्मगुण्ठनमिति वा वचने पाठः। तस्मादग्निहोत्राद्यप्रमाणमेवेति भावः। जीविकेति। धात्वर्थनिर्द्देशे णमुल्॥ ३९॥

इदानीं ब्राह्मणादिजातिधर्म्मानसहमानो जातिं दूषयति। शुद्धिरिति। विशुद्धमातापितृजत्वं हि ब्राह्मणादेर्लक्षणं। सा शुद्धिर्दुर्निरूपा। यद्यस्मात् पित्रोर्मातापित्रोर्यौ पितरौ मातामहपितामहौ मातामहीपितामह्यौ च तयोरेकशः प्रत्येकं वंशद्वयीशुद्धौ सत्यां, एवं तयोरपि पितामहादिमातृपितामहादिमातृपितामह्यादिमातामहमातुःपितामहादिमातामहीमातुःपितामह्यादिशुद्धौ सत्यां एवं ब्राह्मणे यावत् प्रत्येकं शुद्धौ सत्यां शुद्धिः परीक्षणीया। तत्तस्मादनन्तकुला एवमपरिमितवंशभेदात्। अत एव दोषा दुर्विज्ञेयाः। शुद्धसन्तानस्त्रीपुंसयोः पारम्पर्य्यतया शुद्धेः सन्देहात्। इन्द्रादीनामहल्यादीनाञ्च

कामिनीवर्गसंसर्गैर्न कः सङ्क्रान्तपातकः ।

नाश्नाति स्नाति हा मोहात् कामक्षाममिदं जगत् ॥ ४१ ॥

पुराणप्रामाण्येन व्यभिचारदर्शनादशुद्धेर्निश्चयाच्च जातिसङ्कररूपाद्दोषात् का जातिरदोषास्ति अपि तु न कापि । यदाहुः ।

अप्येकपङ्क्त्यां नाश्नीयात् सम्बन्धैः स्वजनैरपि ।

को हि जानाति किं कस्य प्रच्छन्नं पातकं भवेदिति ॥

तथा । अनादाविह संसारे दुर्वारे मकरध्वजे ।

कुले च कामिनीमूले का जातिः परिकल्पितेति ॥

तस्मात् सङ्कीर्णयोनित्वात् सर्व्वा अपि जातयो दुष्टा एवेति जातिधर्म्मान् विहाय स्वेच्छाचारं कुरुतेति भावः । यद्वा तस्मादाब्राह्मणमनन्तानां कुलानामदोषाभावाद्व्यभिचारादिदोषरहिता जातिः कास्ति अपि तु न कापि । पूर्व्वपूर्व्वपित्रादिव्यभिचारादिदोषात् सर्व्वापि जातिर्दुष्टैवेति व्याख्याता । यद्वा तदेति च पाठः सम्यक् । तयोः पित्रोरनन्तकुलानां दोषाभावेन कृत्वाऽदोषा जातिरस्ति अपि तु महति कुले कस्य चिद्दोषसम्भवात् सर्व्वापि जातिर्दुष्टैवेति व्याख्या । यच्छब्दसामर्थ्यात्तच्छब्दाध्याहारः । एकशः । सङ्ख्यैकवचनादिति (पा० ५।४।४३) शस् ॥ ४० ॥

अन्यदप्याह । कामिनीति ।

आहारो द्विगुणः स्त्रीणां बुद्धिस्तासां चतुर्गुणा ।

षड्गुणो व्यवसायश्च कामश्चाष्टगुणः स्मृतः ॥

इति वचनात् पुरुषापेक्षया अष्टगुणकामानां कामिनीनां स्त्रीणां नानाजातीयानां वर्गः संघस्तस्य संसर्गैर्यौनैः सम्बन्धैः कृत्वा

ईर्ष्यया रक्षतो नारीर्धिक् कुलस्थितिदाम्भिकान्।
स्मरान्धत्वाविशेषेऽपि तथा नररक्षतः॥ ४२॥

कः पुरुषः सङ्क्रान्तं प्रविष्टं पातकं यत्र एवंविधो न अपि तु।

संवत्सरात्तु पतति पतितेन सहाचरन्।

इति शास्त्रात् कृतपातकस्त्रीसंसर्गात् सर्व्वोऽपि प्राणी सङ्क्रान्तपातक एव। तस्मात् काम्यत इति कामः फलं तेन क्षामं रहितं एकादश्युपवासादिव्रतं नियमो यस्य। मदनेन कृत्वा क्षीणं निष्फलं व्रतं यस्य वा तज्जगत् सर्व्वोऽपि लोकः सोहादिचाराभावाद् वृथैति यावत्, नाश्नाति न भुङ्क्ते एकादश्यादौ वृथैव च स्नाति तीर्थादौ हा कष्टम्। स्वयं शुचित्वेऽपि स्त्रीव्यभिचारादिदोषसंसर्गात् स्त्रीणां शुचित्वेऽपि दुष्टसंसर्गात् सर्व्वेषां पातकित्वादुपवासादि वृथैव करोति। केवलं प्रयास एव तस्य भवतीत्यर्थः। तस्मात् स्वेच्छाचार एव कार्य्य इति भावः। चार्वाकमते विधिनिषेधाभावान्नैव दोष इत्यर्थः। तेषां सदोषत्वाज्ज्ञातिरपि सर्व्वा सदोषैवेत्युक्तं भवति। अभिलाषेण कृत्वा नष्टं व्रतं यस्य। एकादश्यां भोजनाभिलाषे सत्यपि न भुङ्क्ते, अभिलाषे सत्येवामावास्यादौ स्त्रीनिवृत्तिः, स्नाति च तीर्थादौ, तत्सर्व्वं वृथैव। कामोपहतत्वाद् वहिः शोधयन्नन्तरशुद्धमित्यर्थः। क्षामः। क्षायो म इति (पा० ८।२।५३) मः॥ ४१॥

ईर्ष्येति। ईर्ष्यया असहनत्वमात्रेण हेतुना नारीः रक्षतस्तासां परपुरुषदर्शनमपि कर्त्तुं अप्रयच्छतः कुलस्थितिर्ब्राह्मण्यादिजातेरसाङ्कार्य्येणावस्थानं तद्रूपेण दम्भेन चरन्ति ये तान्

परदारनिवृत्तिर्या सोऽयं स्वयमनादृतः ।
अहल्याकेलिलोलेन दम्भो दम्भोलिपाणिना ॥ ४३ ॥

पुरुषान् स्त्रीरक्षणमेव कुलस्थितिं मन्यमानान् धिक् ते निन्द्याः । निन्द्यत्वे दाम्भिकप्रयुक्तत्वमेव हेतुः । किम्भूतान् । स्त्रियः पुरुषाश्च विवेकशून्या यतोऽतःस्मरान्धत्वस्याविशेषे साधारणे सत्यपि तथा नारीवन्निर्बन्धेन नरमरक्षतः परदारसंसर्गादनिवारयतः । न हि जातिसङ्करो नारीणामेव व्यभिचारेण प्रयुक्तो यतस्ता एव रक्षणीयाः किन्तु पुरुषाणामपि व्यभिचारेण । यदि रक्षणीयं तर्हि द्वयमपि । न चैवं क्रियते । तस्मादन्यतरस्यैव रक्षणे जातिसङ्करस्यैव तावदस्थ्यात् कुलस्थित्यभावान्नारीमात्ररक्षणं तेषां दम्भ एवेत्यर्थः । तस्मादीर्ष्यां त्यक्त्वा नरस्य वेश्यादाविव स्त्रीणामपि नरान्तरे प्रवृत्तिप्रतिषेधं माकुरुध्वमिति भावः । ईर्ष्ययेत्यनेनेर्ष्यैवात्र हेतुर्न तु धर्म इति सूचितं । अत्र च स्मरान्धत्वाविशेषेऽपि नारीरक्षतोऽनेकपतिभ्यः किन्त्वेकमेव तस्याः कुर्व्वतः । नरं तु स्त्रीवदरक्षतः । स्त्रिया यथा एक एव पतिस्तथा नरस्यैकैव स्त्रीति न किन्तु ते बह्वीः कुर्व्वन्ति तस्मादपि निन्द्यास्ते अत्रापि ईर्ष्यैव हेतुः ॥ ४२ ॥

परेति । परदारेभ्यो या निवृत्तिः ताः सादरं न द्रष्टव्याः किं पुनः स्प्रष्टव्या इत्येतदर्थप्रतिपादकं शास्त्रं सोऽयं परवञ्चनरूपो दम्भः अहल्यया गौतमस्त्रिया सह केलिः कामक्रीडा तत्र लोलेन तत्परेण दम्भोलिपाणिनेन्द्रेण स्वयमात्मनैवानादृत

गुरुतल्पगतौ पापकल्पनां त्यजत द्विजाः ।
येषां वः पत्युरत्युच्चैर्गुरुदारग्रहे ग्रहः ॥ ४४ ॥

उपचितः । परदारागमनप्रायश्चित्तविभागोऽप्येतेन दूषितः । अन्यं प्रति तन्न कार्य्यमिति उपदिशन्ति स्वयं तु तदेव कुर्वन्तीत्युपहासोऽपि सूचितः । अहल्यासम्भोगलम्पट इन्द्र एव दाम्भिकोऽन्ये परदारपराङ्मुखाः सर्व्वेऽपि दाम्भिका एवेति भावः । वज्रहस्तत्वात् परदारमर्षणं कृतवान् तस्मादयं शास्त्रीयो निषेधो न भवति किन्त्वशक्तत्वाद्दम्भ एवेति ॥ ४३ ॥

अन्यच्चाह । गुर्व्विति । भो द्विजा यूयं गुरुतल्पगतौ पित्रादिभार्य्यासम्भोगे विषये पापकल्पनां,

ब्रह्महा मद्यपस्तेनस्तथैव गुरुतल्पगः ।
महापातकिनस्त्वेते तथा विश्वासघातिनः ॥

इत्यादिवचनानुरोधेन महापातकसम्भावनां त्यजत। यस्माद्येषां वो युष्माकं पत्युः स्वामिनो द्विजराजस्य चन्द्रस्य देवानां गुरोर्वेदादिपाठयितुर्बृहस्पतेर्दाराः तेषाङ्ग्रहे सम्भोगे अत्युच्चैरतितरां ग्रहोऽभिनिवेशः, अयत इति शेषः । वेदादिपाठनात् बृहस्पतेर्देवगुरुत्वं। तस्मात् तद्भार्य्यागमने चन्द्रस्य दोषलेशोऽपि न, तत्सेवका यूयमपि गुरुतल्पगमनं कामं कुरुतेति भावः । यथोक्तं।

राज्ञि धर्म्मिणि धर्म्मिष्ठाः पापे पापाः समे समाः ।
राजानमनुवर्त्तन्ते यथा राजा तथा प्रजा इति ॥

अयमप्युपहासः। गुरुशब्दबलेनैवमुक्तं। मह इति पाठे उत्सवः।

पापात्तापा मुदः पुण्यात् परासोः स्युरिति श्रुतिः।
वैपरीत्यं द्रुतं साक्षात्तदाख्यात बलाबले ॥ ४५ ॥

अथ च तेजःसमूहो गुरुतल्पगमनेऽपि प्रत्यक्षमुदेत्येव न तु पतित इत्यर्थः। इन्द्रादिनिकटे वाल्मीकिप्रमुखा द्विजास्तिष्ठन्ति तेषां सम्बोधनं। बृहस्पतेर्भार्य्यायां गर्भमुत्पाद्य तत्सुतस्वीकारार्थं योद्यमानिन्द्रादीन् प्रति चन्द्रेण महारणारम्भसंरम्भेण तेजः प्रकटितं। अनन्तरं ब्रह्मणा गुरुभार्य्यां त्याजितोऽपि स गर्भजपुत्रं गृहीतवानिति पौराणिकी कथा। तल्पस्तु शयनीये स्यात्तल्पं मन्त्रकलत्रयोरिति विश्वः ॥ ४४ ॥

पुण्यो वै पुण्येन कर्म्मणा पापः पापेनेत्यादिश्रुतिं दूषयति। पापादिति। परा गता असवो यस्य मृतस्येत्यर्थः तस्य प्राणिनः इह कृतान्निषिद्धाचरणजात् पापात्तापा दुःखानि पुण्यादिह कृताद्विहिताचरणजाद्धर्म्मान्मुदः सुखानि स्युर्भवन्ति इति श्रुतिराह। साक्षात्प्रत्यक्षेण द्रुतं शीघ्रं वैपरीत्यं दृश्यत इति शेषः। प्रयागादौ प्रातर्माघस्नानं कुर्व्वतो भवद्भिमतसुकृतकारिणः पुरुषस्य तदानीमेव दुःखं भवति। भवदनभिमतपरदारसङ्गमादिपापकारिणस्तदानीमेव सुखं भवतीति वैपरीत्यमनुभूयते। अथ चैवं श्रुतिः श्रवणमात्रं न तु तत्र किञ्चित्प्रमाणं। किञ्च मृतस्य किंवा भविष्यतीति को वेद जीवतो तावद्वैपरीत्यमनुभूयते तत्तस्मात् श्रुतिप्रत्यक्षयोर्विषये यूयं बलाबले स्वयमेव आख्यात कथयत भवन्त एव विचारयन्त्वित्यर्थः। प्रमाणयोः

सन्देहेऽप्यन्यदेहाप्तेर्विवर्ज्यं वृजिनं यदि।
त्यजत श्रोत्रियाः सत्रं हिंसादूषणसंशयात् ॥ ४६ ॥

परस्परविरोधे सबलत्वेन दुर्बलत्वेन च व्यवस्था क्रियते। ततश्च यथा प्रत्यक्षानुमानविरोधे प्रत्यक्षं बलीयः। तथा श्रुतिप्रत्यक्षविरोधे प्रत्यक्षमेव बलीय इति निश्चित्य पापात् सुखमनुभूयत इति पापं सर्व्वैः कार्य्यमिति भावः। प्रबलदुर्बलत्वव्यवस्थापकस्य न्यायस्याप्ययमुपहासः ॥ ४५ ॥

सन्दिग्धेऽपि परलोके त्याज्यमेवाशुभं बुधैरित्यादिप्रतिबाधाद्दूषयति। सन्देह इति। तत्र तत्र व्यभिचरितत्वाच्छ्रुतिप्रामाण्यानिश्चयात् पापं न कार्य्यं जन्मान्तरे निरयादिदुःखभयादित्येके वदन्ति, अन्ये च येन कृतं स तु दग्धोऽन्यदेहप्राप्तिस्तस्य स्यादित्यत्र का प्रत्याशेति वादिविप्रतिपत्तेस्तान्यदेहाप्तेः सन्देहे सत्यपि पाचिकोऽपि दोषः परिहर्त्तव्य इति न्यायेन यदि देहान्तरं स्यात् तर्हि पापफलं दुःखमनुभूयेतेति बुद्ध्या यदि वृजिनं पापं विवर्ज्यं सर्व्वथा न कार्य्यं तर्हि हे श्रोत्रियाः-श्छन्दोध्यायिनो वशिष्ठादयो यूयं सत्रं अनेककर्तृकं यागं त्यजत मेवं कुर्ध्वं। कुतः। पशुहिंसायाः सम्बन्धिनो दोषस्य संशयात् सन्देहात्। मा हिंस्यात् सर्वा भूतानि, अहिंसा परमो धर्म्म इत्यादि श्रुतिस्मृतिवशाद्यागेऽपि हिंसा न कार्य्येत्येके। विधिबलादशङ्कितपापोत्पत्तिः सा कार्य्यैवेत्यन्ये इति सन्देहे यागीयपशुहिंसा चेत् पापहेतुः स्यात्तदा नेष्टप्राप्तिः किन्त्वनिष्टमेव

यस्त्रिवेदीविदां वन्द्यः स व्यासोऽपि जजल्प वः ।
रामाया जातकामायाः प्रशस्ता हस्तधारणा ॥ ४७ ॥
सुकृते वः कथं श्रद्धा सुरते च कथं न सा ।
तत्कर्म्म पुरुषः कुर्य्याद्येनान्ते सुखमेधते ॥ ४८ ॥

स्यादिति पाचिकोऽपि दोषः परिहरणीय इत्यनेनैव न्यायेन यागमपि त्यजत न चेदेवं पापमपि कुरुतेति भावः । संश्रयादिति पाठे सम्बन्धादित्यर्थः । कलुषं वृजिनेत्यमरः ॥ ४६ ॥

त्याज्यमेवाशुभं बुधैरित्यपि सव्यभिचारमाह । य इति । यस्त्रिवेदीविदां वेदत्रयवेदिनां वो युष्माकं वन्द्यो नमस्करणीयः स व्यासोऽपि इति भारतादौ जजल्पोक्तवान् । इति किं । जातकामायाः कामार्त्ताया रिरंसोः रामाया अज्ञातकुलशीलाया अपि रमणाय हस्तधारणा पाणिग्रहणं अङ्गीकरणञ्च प्रशस्ता युक्तैव । न केवलं वाल्मीकिः किन्तु व्यासोऽपीत्यपिशब्दार्थः । तद्वचनं भवद्भिः पूज्यत्वादङ्गीकर्त्तव्यमित्यपि सूच्यते ।

स्मरार्त्तां विकलां दीनां यो न कामयते स्त्रियम् ।
ब्रह्महा स तु विज्ञेयो व्यासो वचनमब्रवीत् ॥

इत्याद्यर्ज्जुनतीर्थयात्राविषये ऊर्व्वश्यादिप्रसङ्गे च भारतादौ रामायणे च शूर्पनखाद्युक्तौ प्रसिद्धं । ततश्च पापवर्ज्यकार्य्यमित्यप्युच्यते । उभयथापि दोष इति भावः । वेदविदामिति कृत्यानामिति (पा० २।३।७१) षष्ठी ॥ ४७ ॥

युक्त्यन्तरेण पूर्व्वोक्तमेवाह । सुकृत इति । सुकृते चाश्रा-

बलात् कुरुत पापानि सन्तु तान्यकृतानि वः ।
सर्व्वान् बलकृतानर्थानकृतान् मनुरब्रवीत् ॥ ४९ ॥

यणादौ वो युष्माकं कथं केन हेतुना श्रद्धा आस्तिकता अपि तन्नुचितमेतत्। सा च श्रद्धा सुरते कामिनीविषये न कथमिति। तथा तत्र भवितुं युक्तं। यस्मात् पुरुषस्तत्कर्म्म व्यापारं कुर्य्यात् येन कर्म्मणा कृत्वाऽन्ते कर्म्मावसान एव सुखमेधते वर्द्धतेऽनुभूयते पुरुषेणेत्यर्थः। जन्मान्तरे व्रतादिजन्यं सुखं सन्दिग्धं सुरतजन्यञ्च सर्व्वस्य स्वानुभवसाचिकं। तस्माच्चान्द्रायणादि सुकृतं त्यक्त्वा सुरतमेवाङ्गीकर्त्तव्यमिति भावः। एतेन मासैरष्टभिरह्ना च पूर्व्वेण वयसायुषा। प्राज्ञस्तत्कर्म्म कुर्व्वीत येनान्ते सुखमेधत इत्यादि विडम्बितं। दुरिते चेति पाठे परदारगमनादावित्यर्थः। यतः परदारगमनानन्तरमेव सुखं दृश्यते ॥ ४८ ॥

बलादिति। भो द्विजा यूयं पापानि परस्त्रीगमनादीनि बलादनुमतावसत्यामपि कुरुत तानि पापानि वः सम्बन्धीनि कृतान्यप्यकृतानि सन्तु फलदायीनि मा भवन्त्वित्यर्थः। यतो मनुर्बलेन कृतान् सर्व्वानर्थान् व्यापारान् अकृतानेवाब्रवीत्। मनुवचनप्रामाण्यात् बलाद् पापं कुरुतेत्यर्थः। बलाद्दत्तं बलाद्भुक्तं बलाद्दासीकृतञ्च यदित्यन्यार्थमपि मनुवचनं छलेनार्थान्तरपरिकल्पनया प्रकृते निदर्शयन् प्रतिबन्धो विडम्बयति ॥ ४९ ॥

स्वागमार्थेऽपि मा स्थास्मिंस्तीर्थिका विचिकित्सवः।
तं तमाचरतानन्दं स्वच्छन्दं यं यमिच्छथ ॥५०॥
श्रुतिस्मृत्यर्थबोधेषु क्वैकमत्यं महाधियां।
व्याख्या बुद्धिबलापेक्षा सा नोपेक्ष्या सुखोन्मुखी ॥५१॥

स्वागमेति। भोस्तीर्थिकाः सम्प्रदायागतविद्या यूयमस्मिन् पूर्व्वोक्तमनुवचनरूपस्वीयागमप्रतिपाद्येऽर्थेऽप्रमेये आत्मारामः स्यादिति वार्थे विषये विचिकित्सवः संशयालवो मा स्थ भवथ। इदं कार्य्यं न वेति संशयः परित्याज्य इत्यर्थः। मनुना श्रुत्या वा इदं कथं प्रतिपादितमित्युभयत्राप्यनादरपरा वा मा भवत। तर्हि किं कार्य्यमित्यत आह। यूयमानन्देन परदारगमनादि यं यं इच्छथ तं तं स्वच्छन्दं स्वेच्छया निःसंशयमादरेणाचरत। आत्मारामः स्यादिति श्रुतिप्रामाण्यात्, पूर्व्वोक्तस्मृतिप्रामाण्याच्च संशयं परित्यज्य आदरेण यदृच्छया सुखमुपभुङ्ध्वमिति भावः। सम्प्रदायागमे यद्यपि निन्दापरास्तथापि स्वागमे निन्दा न युक्तेत्यपि सूचितम्। मा निरनुबन्धकस्ततो न लुङ्। तीर्थेनागमेन चरति ठक्। सदुपाध्यायो वा तीर्थं तस्मादस्त्यर्थे ठन् ॥ ५० ॥

पूर्व्वोक्तश्रुतिस्मृतीनामर्थमज्ञात्वा त्वयैवमुक्तं व्याख्यानमप्रमाणमित्याशङ्क्याह। श्रुतीति। श्रुतिस्मृत्यर्थबोधेषु महाधियामप्यैकमत्यमविसम्वादः क्वास्ति अपि तु सर्व्वत्रापि विसम्वाद एव बुद्धिबलेन परस्परविजयात्। एवं सति व्याख्या पदार्थवाक्या-

यस्मिन्नस्तीति धीर्देहे तद्दाहे वः किमेनसा।
क्वापि किन्तत् फलं न स्यादात्मेति परसाक्षिके॥ ५२॥

र्थनिरूपणं बुद्धिबलं प्रज्ञाबलमपेक्षते एवम्भूता। यथा यस्य स्फुरति स तथा व्याख्याति। अत एवाद्वैतवादिनः श्रुतीरभेदपरत्वेन द्वैतवादिनस्तु भेदपरत्वेन व्याचक्षते। सा व्याख्या सुखोसुखी अनायाससाध्याऽक्लिष्टा अथ च सुखपर्य्यवसायिनी नोपेक्ष्या नानादरणीया सैवाङ्गीकार्य्येत्यर्थः। श्रुतिस्मृतीनामस्मद्व्याख्यात एवार्थोऽङ्गीकार्य्यः। स्वेच्छाचारमेव कुरुतेति भावः। ऐकमत्यमित्यत्र एका समाना अविसम्वादिनी मतिरित्यर्थः, चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ्॥ ५१॥

त्वन्मताङ्गीकारे निरयादिप्राप्तिः स्यादित्यत आह। यस्मिन्निति। यस्मिन् देहे अहमस्मि इति धीः गौरः कृश इत्याद्याकारः प्रत्ययः तस्य शरीरस्य दाहे सति वो युष्माकमेनसा पापेन किं अपि तु पापेन निरयपातादि किञ्चिदपि न कार्य्यते। अयमाशयः। देह एवात्मा देहातिरिक्तो वा। यद्याद्यः कल्पस्तर्हि येन देहेन पापं कृतं तस्य विनष्टत्वाद्देहात्मवादिनां वः पापेन किं कर्त्तुं शक्यते अपि तु न किञ्चिदित्यर्थः। अथ देहातिरिक्त एवात्मा देहे विनष्टेऽपि देहान्तरे देशान्तरे कालान्तरे च पुण्यपापफलानां भोक्तास्ति तत्राप्येवं वक्तव्यं, स किं स्वसाक्षिकः परसाक्षिको वा। नाद्यः अहंप्रत्ययस्य देहविषयत्वेनैव सिद्धेस्तदतिरिक्तालम्बनकल्पनानवकाशात्। ततश्च तद्दाहे वः किमेन

सत्येतदेव पुनरायातं। द्वितीयं दूषयति। परो वेदादिः साक्षी यस्य तस्मिन् देहान्तरे देशान्तरे कालान्तरे च फलभाक्तरि देहातिरिक्ते वेदप्रतिपादिते आत्मनि तस्य पापस्य निरयादि फलं चेत् स चेत् फलस्य भोक्ता तर्ह्यात्मनेति वैतारात्म-त्वाविशेषादिति यावत् तस्मात् क्वाप्यात्मान्तरेऽपि तत् किं न स्यादपि तु भवितव्यमेव। तेन देहेन पातके कृते तदतिरिक्ते नात्मना चेत् फलं भोक्ष्यते तर्हि देवदत्तेन पापे कृतेऽप्यात्म-त्वाविशेषाद्यज्ञदत्तेनापि तत्फलमुपभोक्तव्यमित्यापद्यते। किञ्च पापफलदुःखानुभवालम्बनस्य विनाशे तत् पातकफलं देहव्य-तिरिक्ते परप्रत्ययवेद्ये आत्मनि चेद्भवेत् तथापि न दोषः। दुःखं ह्युपभुज्यमानं प्रतिकूलं भवति। उपभोक्ता चाहङ्का-रास्पदः। देहो विनष्ट आत्मा तु नोपभोक्तेति फलसम्बन्धेऽपि न दोषः। ततश्च पापकारिणो देहस्य विनष्टत्वान्मृतोऽरेव चापवर्गत्वान्न कश्चित् फलभोक्तेति स्वेच्छाचारमेव कुर्वीत भावः। यद्वा परश्चासौ साक्षी च परसाक्षी स एव परसाक्षिक आत्मेति आत्मलक्षणपरे देहातिरिक्ते साक्षिणि तदस्ति चेत् तत्फलं तर्हि क्वापि पाषाणादौ वा तत्फलं किं न स्यादपि तु स्यादेवान्यत्वाविशेषात्। तस्माद्देहातिरिक्त आत्मा नास्त्येव देहश्च नष्टः। कस्य पापफलं स्यादिति भावः। यद्वा क्वापि जन्मान्तरीयदेहान्तरे आत्मास्तीति पापफलं चेत् स्यात्तर्हि परो देवदत्ताद्यात्मा साक्षी यस्य तस्मिन्नात्मान्तराधिष्ठिते देवदत्तादिदेहेऽपि परस्य वा देवदत्तादिदेहस्य साक्षिण्या-

मृतः स्मरति जन्मानि मृते कर्म्मफलोर्मयः।
अन्यभुक्तैर्मृते तृप्तिरित्यलं धूर्त्तवार्त्तया॥ ५३॥
जनेन जानतास्मीति कायं नायं त्वमित्यसौ।
त्याज्यते ग्राह्यते चान्यद्देहो श्रुत्यातिधूर्त्तया॥ ५४॥

तानि किं न स्यादपि त्वविशेषात् स्यादेवेति। अलमतिप्रसङ्गेन॥ ५२॥

पुनरपि देहातिरिक्तात्मवादिनमुपहसति। मृत इति। गतप्राणो नष्टशरीरत्वान्निरन्वयध्वस्तपूर्व्वानुभवसंस्कारोद्बोधोऽपि प्राणी पूर्व्वजन्मानि अनेकजन्मतत्कर्मजात्यादीनि पूर्व्वमहं ब्राह्मणोऽभवमित्यादीनि स्मरति। मृते च कर्म्मणां सुकृतदुष्कृतरूपाणां फलानि सुखदुःखरूपाणि तेषामूर्म्मयः परम्परा भोगा वा भवन्ति। तदधिकरणा भवन्तीत्यर्थः। तथान्येषां ब्राह्मणानां भुक्तैर्भोजनैः कृत्वा मृते ध्वस्तदेहे प्रेते तृप्तिर्भवतीति धूर्त्तानां परवञ्चनमात्रेण स्वोपजीविनां वार्त्तयाऽप्रामाणिकेन वार्त्तामात्रेण अलं सा न कार्य्या इत्यर्थः। सर्व्वमप्येतद्व्यधिकरणत्वादनुपपन्नं। स्वभोजनादिलाभाय परं प्रतारयति। तस्माद्देह एव आत्मेति भावः। अन्यभुक्तैरित्यत्र अन्येषां ब्राह्मणानां भुक्तैरिति षष्ठीसमासः॥ ५३॥

देहातिरिक्तात्मप्रतिपादिकां श्रुतिमप्युपहसति। जनेनेति। अतिधूर्त्तया नितरां परवञ्चनपरया तत्त्वमसीति, स वा एष महानज आत्मेत्यादिश्रुत्या प्रयोजककर्त्र्या कोऽयमस्मीति अहं-

एकं सन्दिग्धयोस्तावत् भावि तत्रेष्टजन्मनि ।
हेतूनाहुः स्वमन्त्रादीनसाङ्गानन्यथा विटाः ॥ ५५ ॥

प्रत्ययविषयं जानता स्थूलोऽहं कृशोऽहं इत्याद्यहंप्रत्ययविषयो देह एव न तु तदतिरिक्तः कश्चिदिति देहमेवात्मानं जानता जनेन प्रयोज्येनायमस्मीति प्रत्ययविषयस्त्वं न भवसीति असौ देहस्त्यज्यते अहं प्रत्ययविषयत्वं नेति शेषः । लोके देहोऽहंप्रत्ययविषयमात्मलक्षणवस्तु ग्राह्यते अङ्गीकार्य्यते । अहो आश्चर्य्यं कष्टं वा महदनुचितमेतदित्यर्थः । देहे आत्मभावं परित्यज्य तस्मिन्नात्मनि नित्यतां गृहीत्वा दीक्षातपआदिभिर्देहं कर्शयत तदतिरिक्तात्मवेदनं कुर्व्विति श्रुत्या लोक उपदिश्यत इत्यर्थः । विप्रलम्भकवाक्यत्वेन श्रुतिमात्रमप्रमाणं वार्त्तामात्रेणाल्लं मा न कार्य्येत्यर्थः । अन्योऽपि धूर्त्तः अन्येन रत्नादि त्याजयति काचादि ग्राहयति । कलद्वयस्याप्यनभिहितत्वाद्भयच्च इत्तीया ॥ ५४ ॥

ननु पुत्रेष्ट्या पुत्रस्य प्रत्यक्षोपलम्भात् ज्योतिष्टोमादेरपि फलस्यानुमानात् श्रुतिमात्रस्य प्रामाण्यात् कथं श्रुतेर्धूर्त्तत्वं इत्याशङ्क्य दूषयति । एकमिति । भावनाभावनाभ्यां सन्दिग्धयोरर्थयोः पुत्रादिलाभालाभयोर्मध्ये एकमिष्टमनिष्टं वा तावन्निश्चितं भावि भविष्यति । तत्र तयोर्मध्ये तया सति वा इष्टस्य पुत्रादेर्जन्मनि लाभे सति विटा धूर्त्ताः परवञ्चनचतुराः स्वमन्त्रादीन् हेतून् कारणभूतान् । अस्माभीरुद्रजपादि त्वदर्थं कृतं तेन च त्वया पुत्रादि लब्धमिति वदन्तीत्यर्थः । अन्यथा

एकस्य विश्वपापेन तापेऽनन्ते निमज्जतः।
कः श्रौतस्यात्मनो भोगिन् भारः स्याद् दुरितेन ते ॥ ५६ ॥

पुत्राद्यलाभे सति तानेव सन्धानसाङ्गानङ्गविकलतया फलस्यासाधकान् प्राचीनपूर्वविरोधादिविपरीतफलकारिणश्चाहुः। सामग्रीसाकल्याभावाद्ब्राह्मणदक्षिणाभावात् फलं न जातं विपरीतञ्च जातमिति धूर्त्ताः परान् वञ्चयन्तीत्यर्थः। तस्माद्दृष्टफलपुत्रेष्ट्यादिदृष्टान्तेनादृष्टकर्म्मण्यपि फलकल्पना निरवकाशेति श्रुतिरप्रमाणैवेति भावः ॥ ५५ ॥

श्रुतिप्रामाण्याभ्युपगमादेवाद्वैतश्रुत्या एकात्मवादिमतमनिष्टापत्त्या दूषयति। एकस्येति। विश्वेषां सर्व्वेषां परदारागमनादिजनितेन पापेन हेतुनाऽनन्तेऽक्षये तापे निरयादिदुःखे निमज्जतः अनन्तदुःखमनुभवतः सतः श्रौतस्य एकमेवाद्वितीयं ब्रह्म, नेह नानास्ति किञ्चन, इत्यादिश्रुतिसिद्धैकस्याद्वितीयस्यात्मनो हे भोगिन् पापाश्रयशील ते तवैकस्य दुरितेन को भारो गौरवं स्यात् अपि तु पूर्णस्य शकटस्य शूर्पेणेव न कश्चिद्भारो भवेत्। एकात्मवादिमते प्रामाणिकस्यैकस्यैवात्मनो यदि सकलशरीरेणाधिकरणसम्बन्धस्तदा तत्फलानन्तान्निरयादिदुःखानुभवावसरे तवैकस्यैव पापेन कृता पापाचयराशिस्ततस्तस्य न कोऽपि भारः स्यात्। किञ्च तैर्यत् पुण्यं कृतं तत्त्वयैव कृतमिति पापे कृतेऽपि तव दोषो नेति यथेच्छं पापं कुर्व्वित्यर्थः। अपि चात्मैक्यात् स्वपरव्यवहाराभावे परदारत्वपरस्वत्वाद्यभा-

किन्ते वृन्तहृतात् पुष्पात् तन्मात्रे हि फलत्यदः ।
न्यस्य तन्मूर्द्ध्नान्यस्य न्यास्यमेवात्मनो यदि ॥ ५७ ॥

त्वात् परदारागमनादौ पापलेशस्याप्यभावात् स्वेच्छाचारमेव कुर्व्वित्यर्थः । भोगे तात्पर्य्यपर्य्यालोचनया विना भयशीलेत्युपहासः । तस्मादेकात्मश्रुतिरुपासनपरा ज्ञेया न तु तात्त्विकीति भावः ॥ ५६ ॥

देवपूजादिबुद्धिं निराकरोति । किमिति । ते देवपूजक वृन्तात् प्रसवबन्धनात् सकाशात् हृतं अवचितं चम्पकादिकं पुष्पं तस्माद्धेतोस्ते तव किं प्रयोजनं प्रत्युत दोष एवेत्यर्थः । हि यस्माददः पुष्पं तन्मात्रे वृन्तायत्तत्वे एव वर्त्तमानमेव फलति फलरूपेण परिणमते न तु तेन विना । एवं अवचिते फलोत्पत्ति-प्रतिबन्ध एव भवति न त्वन्यत् फलमित्यर्थः । अथ देवपूजादौ विनियोगात् साफल्यमिति चेत्तदयुक्तम् । अन्यतः शालग्राम-शिवलिङ्गादेः पाषाणस्येव मूर्द्धि न्यासो यदि चेत्तत्र न्यस्तं सफ-लीभविष्यति इत्याशयः, तर्हि अन्यस्य शिलातोऽभिन्नस्य पा-षाणस्य मूर्द्धि तत् न्यस्य निधेहि । एतन्न्यस्यैवेति वा न्यास्यमेवेति वा । किञ्च भवन्मते भेदस्य औपाधिकत्वात् परमेश्वरस्य सर्व्वत्र सत्त्वाच्छालग्रामादेः स्वशिरसश्चैक्याद्देवपूजापि पृथक् वृथेति स्वशिरस्येव पुष्पाणि क्षिपेत्युपहास इति भावः । न्यास्यं । हल-न्तत्वात् ण्यत् ॥ ५७ ॥

तृणानीव घृणावादान् विधूनय वधूरनु ।
तवापि तादृशस्यैव का चिरं जनवञ्चना ॥ ५८ ॥
कुरुध्वं कामदेवाज्ञां ब्रह्माद्यैरप्यलङ्घिताम् ।
वेदोऽपि देवकीयाज्ञा तत्राज्ञा काधिकार्हणा ॥ ५९ ॥

वैराग्यजननार्थमन्यदप्याह। तृणानीति। हे पुरुष मुखं श्लेष्मागारं स्तनौ मांसग्रन्थी इत्यादीनि वधूरनु स्त्रीरुद्दिश्य घृणावादान् जुगुप्सावचनानि निःसारत्वेन तृणानीव विधूनय त्यज। यतस्तादृशस्य मांसादिमयस्यैव तवापि गर्हितस्यापि स्त्रियो तेन प्रकारेण निन्दा इति चिरं का जनवञ्चना लोकप्रतारणा कार्य्येति भावः। स्त्रियो व्यभिचारिण्यः पापनिरता इति निन्दावाक्यानि तवापि व्यभिचारिणो न युक्ता इति वा ॥ ५८ ॥

कुरुध्वमिति। हे अज्ञा मूर्खा ब्राह्मणा यूयं,

अहल्याया जारः सुरपतिरभूदात्मतनयां ।

प्रजानाथोऽयासीत्,

इत्यादि स्मरणात् ब्रह्मविष्णुमहेशादिभिरप्यलङ्घितः काम एव देवस्तस्य स्त्रोपारवश्यलक्षणामाज्ञां कुरुध्वं। यस्माद्वेदोऽपि श्रुतिस्मृती ममैवाज्ञेति श्रीभगवद्वचनाद्देवकीया आज्ञा। अतस्तत्र वेदरूपायां देवाज्ञायां कामाज्ञातोऽधिकार्हणा पूज्या मान्या काऽपि तु देवत्वाविशेषाद्देवाज्ञैव कार्य्या कामाज्ञापि माननीयैवेत्यर्थः। आज्ञाद्वयमपि समानं। तस्मात् कामदेवाज्ञामपि कुरुध्वं न त्वेकत्र पक्षपातः कार्य्य इति भावः। यद्वा

**प्रलापमपि वेदस्य भागं मन्यध्वमेव चेत्।**
**केनाभाग्येन दुःखान्न विधीनपि तथेच्छथ॥ ६०॥**

तत्र द्वयोराज्ञयोर्मध्ये अधिकमर्हणं यस्याः सा काऽऽज्ञा अपि तु पूर्व्ववदविशेषाद् द्वयमपि सममेवेत्यर्थः। द्वयोर्मध्येऽधिकार्हणा केति यूयमेव कथयतेति। ब्रह्मादिभिरप्यङ्गीकृतत्वाच्छिष्टपरिगृहीतलक्षणप्रामाण्यात् प्रत्यक्षलक्षणसुखहेतुत्वाच्च कामदेवाज्ञैवाधिकार्हणा योग्या। वेदा हि ब्रह्मादीनामेवाज्ञा ब्रह्मादयश्च कामदेवाज्ञाकारिणः। ततश्च यदीयाऽऽज्ञा भवद्भिरनुष्ठीयते तैरपि अनुष्ठीयते या सा भवतां सुतरामनुष्ठेयेति भाव इति वा। पक्षपातात् तारतम्याज्ञानाच्च मूर्खत्वं। वेदा हीति च पाठः। कामदेवाज्ञामेव कुरुध्वं यस्माद्वेदोऽपि देवाज्ञा। तत्र वेदेऽधिका का पूजा अपि तु कामदेवाज्ञैवानुष्ठेया। ब्रह्मादिभिरपि अनुष्ठितत्वादिति वा। का विगर्हणेति पाठे तत्र कामाज्ञायां का निन्दा कोऽनादर इत्यर्थः। दैवकीया। गर्गादिषु जनपदयोः कुक् च त्यत्र दैवस्यचेति वक्तव्यत्वात् (पा०४।२।१३८) कुक्कः॥ ५८॥

श्लोकत्रयेण मीमांसकान् परिहसति। प्रलापमिति। महता प्रयासेन यस्य प्रामाण्यमुपपादितं तस्य वेदस्यैव कञ्चन भागमंशं सोऽरोदीद्यदरोदीत् तद्रुद्रस्य रुद्रत्वं इत्याद्यर्थवादमन्त्रनामधेयात्मकं प्रलापमिवानर्थकवचोरूपं चेन्मन्यध्वं अङ्गीकुरुध्वं। आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामित्यादिना पूर्व्वपक्षसूत्रेण प्रतिपादितस्यानर्थक्यस्य, विधिना त्वेकवाक्यत्वादित्यादिना सिद्धान्तसूत्रेण स्तुत्यर्थवादादिरूपप्रयोगेऽभिहितेऽपि

श्रुतिं श्रद्धत्य विक्षिप्ताः प्रक्षिप्तां ब्रूथ च स्वयं।
मीमांसामांसलप्रज्ञास्तां यूपद्विपदापिनीम्॥ ६१॥

श्रुतिमार्थक्याभावादतिक्रतत्वादर्थवादादि वेदभागमनर्थकवचनप्रायं चेन्मान्यध्वे तर्हि बहुधनव्ययायाससाध्यत्वाद्दुःखजनकान् ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादीन् विधिभागानपि केन भाग्याभावेन तथा प्रलापरूपान् नेच्छथ नाङ्गीकुरुथ अपि तु तानपि प्रलापरूपानेव स्वीकुरुथेत्यर्थः। सर्व्वोऽपि वेदो विधिरूपः प्रलापरूपो वास्तु। न त्वर्द्धजरतीन्यायः समाश्रयितुं युक्त इति भावः। वेदत्वाविशेषेऽप्यभाग्यमेव वैषम्यहेतुरित्यर्थः। दुःखशब्दस्य नपुंसकत्वेऽपि दुःखं करोतीति णिजन्तात् पचाद्यचि दुःखानिति ज्ञेयम्॥ ६०॥

प्रकारान्तरेण मीमांसकानुपहसति। श्रुतिमिति। हे मीमांसायां वेदविचारे मांसला परिपुष्टा प्रज्ञा बुद्धिर्येषां ते यूयं श्रुतिं वेदं प्रत्यक्षं श्रद्धत्य आदरेण स्वीकुरुथ। अक्षरमात्रमपि सार्थकं मन्यध्वे। तथा विक्षिप्ता वादिभिर्निराकृता भ्रान्तचित्ताः पूर्व्वापरानुसन्धानविकलाः सन्तस्तामेव श्रुतिं यूपसम्बन्धिनं द्विपं दापिनीं दापयन्तीं स्वयमात्मनैवाङ्गीकृतप्रामाण्यामपि प्रक्षिप्तां केनचिदज्ञकेन खिलरूपां निक्षिप्तां च ब्रूथ। चकारः पूर्व्वापरविरोधद्योतनार्थः। पूर्व्वापरानुसन्धानविकलत्वाद्वेदविचारचतुरा साध्वी भवतां बुद्धिरित्युपहासार्थं मीमांसेत्यादिसम्बोधनं। मांसलेत्यनेन च स्थूलदृष्टय आपातग्राहिणो यूयं

धर्म्माधर्म्मौ मनुर्ज्जल्पन्नशक्यार्जनवर्जनौ ।
व्याजान्मण्डलदण्डार्थी श्रद्दधायि मुधा बुधैः ॥ ६३ ॥

मिव प्रत्येतु विश्वासेन निश्चिनोतु ब्रूहि, अपि तु न कोऽपि। यदीयास्तित्वनास्तित्वयोः श्रुतेरेव सन्देहस्तत्प्रामाण्यात् पामरो भवादृश एव परलोकं मन्यते न तु प्रामाणिकः कश्चिदिति भावः ॥ ६२ ॥

स्मृतिप्रामाण्यमपि दूषयति। धर्म्मेति। बहुधनव्ययायाससाध्यत्वाच्छीतभयात्तीर्थस्नानाद्यशक्तत्वात् अग्नौ चरणसन्तापनादिरूपतया तत्तदिन्द्रियवेगस्य परिहर्त्तुमशक्यत्वात् सुखानुभवमूलत्वाच्च क्रमेणाशक्यं अर्जनं वर्जनं च ययोस्तौ धर्म्माधर्म्मौ बुद्धिपूर्व्वं जल्पन् बहुधा प्रतिपादयन् मन्वन्तराधिपतिरादिराजो मनुर्मुख्यस्मृतिकर्त्ता ब्रह्मपुत्रः स्वायम्भुवो व्याजाद्धर्म्माधर्म्मोपदेशकस्मृतिप्रणयनमिषेण विधिनिषेधातिक्रमनिमित्तप्रायश्चित्तद्वारा मण्डलस्य राष्ट्रस्य लोकस्यापराधं निमित्तीकृत्य दण्डार्थद्रव्यमभिलाषुको यतस्तस्माद् बुधैः पण्डितमन्यैः मुधा वृथैव श्रद्दधायि आदृतः। अधर्म्माचरणं सुकरमित्यधर्म्ममेव सर्व्वः करोति। ततश्च येन केनाप्युपायेन अर्थग्रहणोपाय एव दण्डो मनुनाभिहितो न धर्म्म इत्यर्थः। अबुधैरिति वा। मनुवचनमूलत्वात्। स्मृतिमात्रस्याप्रामाण्यमुक्तम् ॥ ६३ ॥

व्यासस्यैव गिरा तस्मिन् श्रद्धेत्यद्धा स्थ नास्तिकाः।
मत्स्यस्याप्युपदेश्यान् वः को मत्स्यानपि भाषताम्॥ ६४॥

पुराणप्रामाण्यं दूषयति। व्यासस्येति। दासदारिकाव्यभिचारजातस्य भ्रातृजायायां पुत्रोत्पादनशीलस्य व्यासस्यैव कविनृपया गिरा तस्मिन् धर्मे परलोके व्यास एव वा श्रद्धा भावना आस्तिक्यबुद्धिरित्येतत् तस्माद्धेतोरद्धा निश्चितं यूयं नास्तिका युक्तिज्ञा वाक्यविचारचतुराः स्थ भवथ। विरुद्धलक्षणया एवंविगीतेन व्यासेन प्रतिपादिते धर्मे परलोके तस्मिन् वा येषामास्तिक्यबुद्धिस्ते यूयं सुविज्ञतमा इति भावः। अथ च नास्तिकाः कुविन्दतुल्या मूर्खा इत्यर्थः। व्यासस्येत्येकवचनेनैवकारेण विगीतत्वं सूचितं। मूलापरिग्रह्या भारतादीनां पुराणानाञ्चोपहासः कृतः। मत्स्यपुराणं तु मत्स्यरूपधारिणा विष्णुना मनवे प्रोक्तमिति पृथगुपहसति। मत्स्यस्योपदेश्यान् वो युष्मान् मनुप्रभृतीन् को भाषतां युष्माभिः सह संवादं कः करोतु। यतो मत्स्यानपि को भाषतां। मत्स्या अपि संवादार्हा न भवन्ति तदुपजीविनस्तच्छिष्या भवन्तस्तु दूरे इति। को भाषतां युष्मान् मन्वादीन् मत्स्यान् को वदतु अपि तु न कोऽपि। यतो मत्स्योपदेश्यान् जलस्थलचारिभ्यो ये हीना मत्स्यास्तच्छिष्यास्तन्निर्देशकारिणः ततश्चोपदेशकापेक्षयोपदेश्यस्य हीनत्वान्मत्स्यशब्देनापि नाभिधेया इति भावः। एवं कूर्मपुराणादीनामुपहासः। अथ च मनुसम्बन्धित्वेन सर्व्वोऽपि मानवशब्दवाच्यो यथा तथा मत्स्य-

पण्डितः पाण्डवानां स व्यासश्चाटुपटुः कविः।
निनिन्द तेषु निन्दत्सु स्तुवत्सु स्तुतवान्न किम् ॥ ६५ ॥
न भ्रातुः किल देव्यां स व्यासः कामात् स्माऽसृजत्।
दासीरतस्तदासीद्यन्मात्रा तत्राप्यदेशि किम् ॥ ६६ ॥

सम्बन्धिनां मात्स्यशब्दाभिधेयत्वं युक्तं न तु मत्स्यशब्दाभिधेयत्वमिति को मत्स्यानपि भाषतामिति युक्तमुक्तमिति व्याख्येयं। नास्तिका इति तत्त्वमधीते वेद तेत्यर्थे वसन्तादेराकृतिगणत्वात् (पा० ४।२।६३) ठक्। मत्स्यस्येति। कृत्यानामिति (पा० २।३। ७१) कर्त्तरि षष्ठी ॥ ६४ ॥

पूर्व्वोक्तमेव व्यासस्याप्रमाणत्वं श्लोकद्वयेनाह। पण्डित इति। पण्डितो बुद्धिमानत एव कविरौत्प्रेक्षिकस्यार्थस्य वर्णकः तथा पाण्डवानां युधिष्ठिरादीनां चाटुनि प्रियवचने पटुः एवम्भूतः स भवद्भिराप्तत्वेनाङ्गीकृतो व्यासस्तेषु दुर्य्योधनादीन् निन्दत्सु न निनिन्द किं? तथा तेषु श्रीकृष्णादीन् स्तुवत्सु सत्सु न स्तुतवान् किं? तेषु निन्दत्सु स्वयमपि निनिन्द तेषु स्तुवत्सु स्वयमपि तुष्टावेति। पूर्व्वविशेषणयुक्तस्यापि व्यासस्य पराधीनत्वात् तत्प्रणीतं भारताद्यप्रमाणमेवेति भावः। अन्योऽपि पण्डितः प्रभुचित्तानुगुणमेव व्यवहरति तद्वदयमपीत्यर्थः ॥ ६५ ॥

नेति। स भवदीयो व्यासो भ्रातुर्विचित्रवीर्य्यस्य देव्यां महिष्यां कामात् स्मरपरवशत्वादनुरागान्न समासृजत् व्यवहरति स्म? किलेति उपहासे श्रुतौ च। अस्मद्बुद्ध्या तावत्

देवैर्द्विजैः कृता ग्रन्थाः पन्था येषां तदादृतौ ।
गां नतैः किं न तैर्व्यक्तं ननोऽप्यात्माऽधरीकृतः ॥ ६७ ॥

कामादेव सङ्गतः । पौराणिकास्तु देवरात् सुतोत्पत्तेर्धर्म्यत्वा-त्तस्याः सुतोत्पादनार्थं मात्राज्ञप्तस्तस्यां सक्त इति वदन्ति । तस्मात्तद्यथा तथाऽस्त्वित्यर्थः । तदा पुत्रोत्पादनोपलक्षिते काले दास्यां रत आसीदिति यत् प्रसिद्धं तत्र दासीरतेऽपि मात्रा सत्यवत्याऽदेशि आदिष्टः किं ? कथयतेति प्रश्नः । काकुरूपप्रश्ना-र्थः । अपि तु तत्र तावन्नादिष्टः । तस्मादुभयत्रापि स्मरप-रवशत्वादेव प्रवृत्तः । एवंविधस्यानायत्तत्वात् तद्वचनमप्रमाण-मिति भावः । समासृजत् । दंशसञ्जेति (पा० ६।४।२५) नलोपः ॥ ६६ ॥

इदानीं देवद्विजगोभजनं दूषयति । देवैरिति । देवै-र्ब्रह्मादिभिः द्विजैर्याज्ञवल्क्यादिभिश्च कृता ग्रन्थाः पुराणानि स्मृतयश्च त एव येषां भवादृशानां वैदिकानां तदादृतौ तेषां देवानां द्विजानाञ्चादृतौ आदरे विषये पन्थाः । देवा ब्राह्म-णाश्चावश्यं भजनीया इत्युपदेशपराः प्रमाणमिति यावत् । स्व-पूजार्थमेव तैर्ग्रन्था निर्मिताः । तद्वचनग्रन्थप्रामाण्यात् देवादी-नाद्रियन्ते एवम्भूता मूर्खा ये तैर्युष्माभिस्तद्ग्रन्थप्रामाण्यादेव गां पशुरूपां सुरभिं नतैः सद्भिस्ततः पशोर्गोरपि सकाशात् आत्मा स्वरूपं व्यक्तं स्पष्टं नाधरीकृतः किं ? ननोऽथ च हीनो न कृतः किं ? अपि तु कृत एव । नमस्कार्यापेक्षया नमस्कर्तुर्हीनत्वात् पशोरपि सकाशाद्भवन्तो मूर्खतमा इत्यर्थः । व्यक्तं मन्ये इति

साधु कामुकताऽमुक्ता शान्तस्वान्तैर्मखोन्मुखैः।
सारङ्गलोचनासारां दिवं प्रेत्यापि लिप्सुभिः॥ ६८॥

यावदिति वा। स्वार्थपरवचनस्याप्रामाण्यत्वाद्देवब्राह्मणसुरभिवन्दनं निर्मूलत्वात्त्याज्यमेवेति भावः। देवैर्द्विजैः कृता ये ग्रन्थाः येषां वः पन्थाः प्रमाणं तैर्भवद्भिस्तस्य पथः तेषां देवादीनां वा ग्रन्थादीनां वा आदरणनिमित्तं गां नतैः ततोऽप्यात्मेति पूर्ववत्॥ ६७॥

इदानीं परलोकमङ्गीकृत्यापि यज्वनां ब्रह्मचर्य्यादि परिहसति। साध्विति। शान्तविषयभोगपराङ्मुखं स्वान्तं चित्तं येषां तैर्मखोन्मुखैर्गृहीतदीक्षैरपि यज्ञेषु सोत्साहं प्रवृत्तैर्याज्ञिकैः कामुकता सम्भोगलोभिता यदमुक्ता न त्यक्ता तत् साधु युक्तं। यद्वा साध्वी सुखकारिणी सा चासौ कामुकता सा न मुक्ता। शान्तस्वान्तैर्यज्वभिः कामुकता साधु मुक्ता त्यक्ता। साध्विति काक्वा विरुद्धलक्षणया नैव मुक्ता किन्तु सम्भोगैकनिष्ठा एव ते इति व्याख्येयं। सर्व्वत्रापि हेतुगर्भविशेषणमाह। किम्भूतैः सारङ्गलोचनाभिः सुन्दरीभिः सारां श्रेष्ठां तां रसः सारः श्रेष्ठः पदार्थो यस्यां तादृशीं वा दिवं प्रेत्यापि मृत्वापि लिप्सुभिः रम्भादिकाम्ययैव बहुधनव्ययायाससाध्यान् यज्ञानेव कुर्व्वन्ति। तैः कामुकता नैव त्यक्ता। अन्येषान्तु यावज्जीवमेव कामुकत्वं यज्वनां तु मरणानन्तरमपीति प्रेत्यापीत्यनेन सूचितं। तस्माद्दीक्षासमयेऽपि ब्रह्मचर्य्याङ्गीकरणेनात्मा न वञ्चनीय इति भावः, दिवं। न लोकेति (पा० २।३।६९) षष्ठी॥ ६८॥

कः शमः क्रियतां प्राज्ञाः प्रियाप्रीतौ परिश्रमः ।
भस्मीभूतस्य भूतस्य पुनरागमनं भ्रमः ॥ ६९ ॥
उभयी प्रकृतिः कामे सज्जेदिति मुनेर्मतं ।
अपवर्गे तृतीयेति भणतः पाणिनेरपि ॥ ७० ॥

एतदेवोपजीव्याह । क इति । हे प्राज्ञाः प्रकर्षेणाज्ञा मा मूर्खाः तस्माच्छमः शान्तिः कः अपि तु न कोऽपि । शमाङ्गीकरणेन परलोकसाधनेऽपि काम्यमानकमनीयकामिनीसम्भोगफलत्वाद्व्यर्थैव शान्तिस्तस्मान्न कार्य्येत्यर्थः । तर्हि किं कार्य्यमित्यत आह । प्रियायास्तरुणरमणीयरमण्याः प्रीतौ प्रेम्णि तस्याः सुखोत्पादने विषये परिश्रमो भूयान् प्रयासः क्रियतां कर्त्तव्यः । शान्तिः का अपि तु न कापि । भो प्राज्ञा बुद्धिमन्तस्सारतम्यविचारचतुराः प्रियाप्रीतौ प्रयासः कार्य्यः । सद्यःसुखहेतुत्वादिति वा । परस्त्रीगमने लोकान्तरे निरयादि भविष्यतीत्याशङ्क्याह भस्मीभूतस्य मृतस्य देहस्य भूतस्य जातस्य देहिनो वा पुनरागमनं लोकान्तरे क्रिम्यादिदेहप्राप्तिरिति यद् भ्रमः, परलोकस्यैवाभावात्, ततसङ्गातेऽपि चदेहस्यैवात्मत्वात्तस्य च भस्मीभूतत्वात् केन नरकादि भुज्यते । तस्माद्यावज्जीवं यथेच्छं सुखं भोक्तव्यमिति भावः । प्रियाप्राप्ताविति च पाठः ॥ ६९ ॥

मोक्षाधिकाराभावात् ब्रह्मचर्य्यादिपरित्यागेन काम एव सेवनीय इति शब्दच्छलेन वृद्धसम्मत्या स्वीयं मतं द्रढयति । उभयीति । अपवर्गे तृतीयेति भणतः पाणिनेरपि मुनेः उभयी

विभ्रत्युपरि यानाय जना जनितमज्जनाः ।
विग्रच्छायाग्रतः पश्चाद्गत्वरीरभ्रविभ्रमं ॥ ७१ ॥

प्रकृतिः स्त्रीपुंसलक्षणा द्वयोर्व्यक्तिः कामलक्षणे पुरुषार्थे मैथुने धर्मे सज्जेत् आसक्ता भवेदिति मतमन्तःकरणाभिप्रायो लक्ष्यत इति शेषः । अयमाशयः । अपवर्गे तृतीयेति वदतः पाणिनेः मैथुनधर्मे अशक्तेन नपुंसकेन तीर्थयात्रा ब्रह्मचर्यादिद्वारा मोक्षे प्रयतितव्यं स्त्रीपुंसलक्षणा व्यक्तिर्मैथुने शक्तत्वात् कामभोगे अधिकारिणी न तु तीर्थयात्राद्वारा मोक्ष इति । तस्मात् कामाश्रैव कार्य्येत्यर्थः । न केवलमस्मदाचार्य्यस्यैव सम्मतं किन्तु भवदीयस्य पाणिनेरपीत्ययमेवार्थः । अथ चैवं वदतः पाणिनेरप्ययमाशयः । धर्मार्थलक्षणा द्वयी व्यक्तिः, अथ च पूर्व्वप्रयोज्यत्वात् प्रकृतिः कामे सम्बद्धा भवेत् । धर्मार्थकाममोक्षाः स्युरित्यादौ कामाव्यवहितपूर्व्वत्वेन तस्या उक्तत्वात् । तृतीया तु कामलक्षणा व्यक्तिरथ च पूर्व्वप्रयोज्यप्रकृतिरपवर्गे सम्बद्धुमर्हा । अपवर्गाद्व्यवहितपूर्व्वत्वेन तस्या उक्तत्वात् । तस्मादपवर्गे निमित्ते कामाख्या तृतीयैव व्यक्तिर्युक्ता इत्युक्तत्वात् । मोक्षं प्रति कामस्यैव हेतुत्वात् प्रीतिरेव सुतरां कार्य्येति भावः । अपवर्गः फलप्राप्तिरिमं सूत्रार्थं शब्दच्छलेन अन्यथोत्प्रेक्ष्य वृद्धसम्मतिः स्वीयमतसमर्थनार्थं दर्शिता । तृतीया प्रकृतिः षण्ढ इत्यमरः । उभयीत्ययजः स्थानिवत्त्वात्तयप्ग्रहणात् ङीप् । सज्जेत् । अर्हार्थे लिङ् ॥ ७० ॥

गङ्गास्नायिनो दूषयति । उपरियानाय स्वर्गं गन्तुं अथ

एनसानेन तिर्य्यक् स्यादित्यादिः का विभीषिका।
राजिलोऽपि हि राजेव स्वैः सुखी सुखहेतुभिः॥ ७२॥

चोर्द्धदेशं गन्तुं जनितमज्जनाः कृतगङ्गास्नानाः, अथ च कृता-धोगमना जना अग्रतो युद्धाय पश्चाद्गत्वरः पश्चाद्गमनशीलः उरभ्रो मेषस्तस्य विभ्रमं सादृश्यं बिभ्रति धारयन्ति। मज्जना-दूर्द्धगमनं विरुद्धमिति विपरीतार्थकारित्वान्मेषवन्मूर्खा एवेति गङ्गास्नानेन स्वर्गो भवति इति भ्रान्तिरेवेति भावः। विग्रह-स्यति पाठ उपरि यानाय कृतगङ्गास्नाना मार्गं गच्छन्तो मेषस्य भ्रान्तिं सादृश्यं धारयन्ति। शीतबाधया नीचग्रीवतया गमनात् शरीरस्याग्रतः शिरोदेशे पश्चात् कटिदेशे च हस्तयोर्धारणात् कृतगङ्गास्नानानां गङ्गास्नानसमयेऽपि मेषतुल्यत्वं। यथा जलम-ध्येऽघमर्षणे दक्षिणकरेण प्राणानायच्छतः पृष्ठस्थितबाहुर्भवति, तदा नीचग्रीवतया उरभ्रसादृश्यं पश्चात्स्थितहस्तस्य च पुच्छ-सादृश्यमिति मेषतुल्यास्ते जनाः। उर्द्धंजिगमीषोर्नीचैर्भावस्य विरुद्धस्य करणादुपहास इति व्याख्येयं। यानाय विग्रहायेति। तुमर्थेति (पा० २।३।१५) चतुर्थी॥ ७१॥

परलोकसङ्गावेऽपि देहान्तरप्राप्तावपि च न किञ्चिदनिष्ट-मित्याह। एनसेति। अनेन लोकैः क्रियमाणेन ब्रह्महत्यादिनमा पातकेन तिर्य्यक् क्रिमिपत्यादिः स्याद्भवेदित्यादिरित्येवम्प्र-कारा का विभीषिका भयोपदर्शनं किं? अपि त्वनिष्टहेतुत्वा-भावान्न किञ्चिदेतत्। हि यस्माद्राजिलोऽपि हीनः सर्पविशेषो

हताश्चेद्दिवि दीव्यन्ति दैत्या दैत्यारिणा रणे।
तत्रापि तेन युद्ध्यन्तो हता अपि तथैव ते ॥ ७३ ॥

जलव्यालोऽपि स्वैः स्वीयैः सुखहेतुभिर्भेकभक्षणजलाहारसजातीयतरुणीसम्भोगादिभिः सुखकारणैः राजेव सुखी। स्वजात्यनुगुणाहारविहारसम्भोगादीनि विचित्राण्येव सर्व्वेषां सुखसाधनानि। ततः स्वपापफलभूते तिर्यग्योनित्वे जातेऽपि सुखसद्भावान्न किञ्चिदनिष्टमित्यर्थः। समौ राजिलडुण्डुभावित्यमरः। विभीषिका धात्वर्थनिर्देशे ण्वुल्तृचाविति (पा० ३।१।१३३) ण्वुलि, भियो हेतुभये षुगिति (पा० ७।३।४०) षुगागमे प्रत्ययस्थादित्। (पा० ७।३।४४) इतीत्वम् ॥ ७२ ॥

युद्धे हतानां स्वर्गप्राप्तिरित्यादि भारतवचनं दूषयति। हता इति। सङ्ग्रामे हताः सम्मुखं पतिता दिवि दिव्यन्ति क्रीडन्ति इति चेद्यदि तर्हि दैत्यारिणा विष्णुना रणे हताः हिरण्यकशिपुप्रभृतयो दैत्यास्तत्रापि स्वर्गेऽपि तेन सह युद्ध्यन्तो युद्धं कुर्व्वन्तु। यस्माद्धता मारिता अपि दैत्या भवदीयमते तथैव रणे सम्मुखपतनात् स्वर्गे जीवन्त एव। ततस्त यं यं वापि स्मरन् भावमित्यादिवचनप्रामाण्यान्मरणसमयेऽपि दैत्यैर्दैत्यारिणा सह विरोधस्य चित्ते धृतत्वात् स्वर्गप्राप्तावप्यसुरभावस्य तथैव वर्त्तमानत्वात् तत्रापि तेन सह योद्धव्यमेव। तत्रापि युद्ध्यन्त एवेति कुत्रचित् पुराणादौ नाकर्ण्यते। तस्माद्रणे पतितानां मरणादधिकं किञ्चिदपि नास्ति। रणादपलायनात् स्वर्ग

स्वञ्च ब्रह्म च संसारे मुक्तौ तु ब्रह्म केवलं।
इति स्वोच्छित्तिमुक्त्युक्तिर्वैदग्धी वेदवादिनाम्॥ ७४॥

इत्यादि चात्रधर्म्मप्रतिपादकं वाक्यजातमप्रमाणमेवेति भावः। हता अपीत्यच हतौ अपीति पदेन हतौ हिंसायां कृतायामपि मरणे प्राप्तेऽपि। अन्यत् पूर्व्ववत्। हतावपीति वा पाठः॥ ७३॥

इदानीं मायावेदान्तसिद्धान्तं दूषयति। स्वमिति। संसारे संसरणावसरे स्वं जीवात्मरूपः प्रपञ्चः, तथा अनाद्यविद्याविलासवासनाविद्यमानभेदं ब्रह्म चेति द्वयमप्यस्ति। तौ समप्राधान्यबोधनार्थौ। मुक्तौ तु मोक्षे सञ्जाते पुनराविद्यकजीवव्यवहारनिवृत्तेः केवलं स्वप्रपञ्चरहितं ब्रह्मैव वर्त्तते। घटोपाधिनिवृत्तेर्घटाकाशनिवृत्तावाकाशमात्रस्यावस्थानवत् संसारोपाधिनिवृत्तेः स्वनिवृत्तौ एकमेवाद्वितीयं ब्रह्मेति ब्रह्मात्मना सम्पत्तिर्भवतीत्यर्थः। तथापि प्रपञ्चस्य शुक्तिरजतवन्मिथ्यादृश्यत्वादित्येवं स्वस्योच्छित्तिरेव मुक्तिनाम्ना उक्तिर्वचनं तत्र वैदग्धी नानारूपोक्तिनिरूपणकौशलं वेदवादिनां वेदान्तमतानुसारिणां। आत्मार्थं सर्व्वं तस्योच्छेदः प्रतिपादित इति महत् कौशलमिति मायावेदान्तमतोपहासः। वेदवादिनामित्यनेन च्छान्दसास्त किञ्चिदपि न जानन्तीति सूचितम्। अपि च संसारे द्वयं मुक्तौ त्वेकं, ततश्च द्वयं परित्यज्यात्मोच्छेदपुरःसरमेकं मूर्खादन्यः कोऽपि नेच्छते। तस्मान्मूर्खा एव त इति भावः। वेदवेदिनामिति च पाठः। वेदवेदितेति पाठे स्वोच्छित्तिमुक्त्युक्तौ

मुक्तये यः शिलात्वाय शास्त्रमूचे सचेतसाम्।
गोतमं तमवेत्यैव यथा वित्थ तथैव सः ॥ ७५ ॥

वैदग्धीरूपा वेदार्थज्ञातता। आत्मविनाशो मुक्तिर्वेदार्थपरिज्ञानं नामेत्युपहासः ॥ ७४ ॥

न्यायवैशेषिकसिद्धान्ताभिमतां मुक्तिं दूषयति। मुक्तय इति। यः सचेतसां चैतन्यवतां सुखदुःखाद्यनुभवाभावात् शिलात्वाय पाषाणावस्थारूपायै मुक्तये मुक्तिं प्रतिपादयितुं शास्त्रमूचे न्यायदर्शनं निर्ममे, तदत्यन्तविमोचोऽपवर्ग इत्यनेन सकलविशेषगुणोच्छेदनान् मुक्तिरिति मुक्तस्य शिलातुल्यत्वं प्रत्यपादयत्, यूयं तं स्वयमेवावेत्य विचार्यैव गोतमं एतन्नामानं मुनिं यथा वित्थ जानीथ स एव तथा नान्य इत्यर्थः। स गोतम इति यथा युष्माकं सम्मतस्तथा ममापीत्यर्थः। वैशेषिकास्तु तदीयमतानुसारिण इति भावः। अथवा नायं परं नाम्ना गोतमः किन्तु प्रकृष्टो गौर्गोतमः पशुरेव। सचेतसां शिलारूपमुक्तिप्रतिपादनादित्यर्थतोऽपि गोतम एवेति भावः। आत्यन्तिकी दुःखनिवृत्तिर्मोक्षः इति सुखमपि दुःखानुषङ्गित्वाद्धेयमिति वदता, सशरीरं वाव सन्तं प्रियाप्रिये न स्पृशत इति च तत्र प्रमाणमुदाहरतां वैशेषिकाणामपीयमेव युक्तिः सम्मतेति न्यायवैशेषिकसिद्धान्तोपहासोऽनेन कृत इति ॥ ७५ ॥

दारा हरिहरादीनां तन्मग्नमनसो भृशम्।
किं न मुक्ताः पुनः सन्ति कारागारे मनोभुवः॥ ७६॥
देवश्चेदस्ति सर्व्वज्ञः करुणाभागवन्ध्यवाक्।
तत्किं वाग्व्ययमात्रान्नः कृतार्थयति नार्थिनः॥ ७७॥

हरिहरादिध्यानान्मुक्तिरिति वचनानि दूषयति। दारा इति। हरिहरादीनां लक्ष्म्यादयो दाराः स्त्रियो भृशं निरन्तरं तेष्वेव मग्नं ध्याननिश्चलं मनो यासां एवंविधा अपि किं कस्माद्धेतोर्मनोभुवः कारागारे सन्ति? सदैव कामपरवशास्तिष्ठन्तीत्यर्थः। तस्मान्न पुनर्मुक्ता इति। एतेन

सकृदुच्चारितं येन शिव इत्यक्षरद्वयं।

तथा।

मय्यर्पितमनोबुद्धिर्यः स मामेति पाण्डव॥

इत्यादिवचनैर्हर्यादिध्यानमात्रं मोक्षकारणमिति प्रतिपादयतः शैवादिशास्त्रस्य मुक्त्यभावेन व्यभिचारित्वादप्रामाण्यम्॥ ७६॥

ईश्वरवादिनो नैयायिकादीन् दूषयति। देव इति। भूम्यादि सकर्तृकं कार्य्यत्वाद् घटादिवदित्यादिना विचित्रस्य कार्य्यजातस्यास्मदादिविलक्षणेन कर्त्रा भवितव्यमिति सर्व्वज्ञस्य परमकारुणिकस्य सत्यवचसः सर्व्वकर्त्तुः प्रभोरीश्वरस्य साधितत्वात् सर्व्वज्ञः कालत्रयवस्तुविज्ञानवांस्तथा करुणाभाक् कृपावान् तथा अवन्ध्या सत्या वेदरूपा वाक् यस्य, नैयायिकादिमते ईश्वरप्रणीतत्वादाप्तवचनत्वाद्वेदानां प्रामाण्यात् स्वतः प्रामाण्यस्य

भविनां भावयन् दुःखं स्वकर्म्मजमपीश्वरः ।
स्यादकारणवैरी नः कारणादपरेऽपरे ॥ ७८ ॥

दूषितत्वादित्यर्थः । अथ च सफला यथोक्तार्थसाधिका वाग् यस्य स सत्यवाक् । भवत्सिद्धान्तेन देवश्चेदस्ति तर्हि अर्थिनो भुक्तिमुक्त्याद्यभिलाषिणो नोऽस्मान्, भवन्तः प्राप्तमनोरथा भवन्त्विति वाग्व्ययमात्राद् वाग्विसर्गमात्ररूपेण व्ययेन किं कस्मान्न कृतार्थयति । तस्मान्नास्तीति भावः । अनेनाप्युपहासः सूचितः ॥ ७७ ॥

इदानीं कर्म्ममीमांसकमतावलम्बिनायोग्योपालम्भनमाह । भविनामिति । भविनां संसारिणां स्वकर्म्मजं स्वकृतपापजातं पापफलभूतं दुःखं भावयन् कुर्व्वन्, स्वयं भवदपि भावयन् पुनः स्वयं प्रवर्त्तयन् ईश्वरो नोऽस्माकमकारणवैरी दायादत्वादिहेतुं विनैव शत्रुः स्यात् । अपरेऽन्ये परेऽन्ये पुनः कारणाद्दारचौर्य्याद्यपहारबन्धुवधादेव वैरहेतोर्वैरकारिणो भवन्ति । भविनां न इति वा सम्बन्धः ।

ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा ।

कर्म्मफलदात्रेश्वरेण चेत् कर्म्मानुगुणं फलं भवेत् तर्हि ईश्वरेण कर्त्तव्यं न किञ्चिदस्ति । तादृशात् कर्म्मण एव दुःखोत्पत्तेः । एवं सति स चेदनुभावयति तर्ह्यस्मदादीनां द्वेष एव तेन कृतः स्यात् । तस्मात्तस्य दयालुत्वादयो गुणा गताः । तस्मात् कर्म्मण एव प्राधान्यादीश्वरो नास्त्येवेति भावः । पञ्चमी भयेन (पा० २। १।३७) इत्यत्र पञ्चमीति योगविभागात् कारणाद्वैरीति समासं कृत्वा पश्चान्नञ्समासः ॥ ७८ ॥

तर्काप्रतिष्ठया साम्यादन्योन्यस्य व्यतिघ्नताम्।
नाप्रामाण्यं मतानां स्यात् केषां सत्प्रतिपक्षवत्॥ ७८॥

अन्यदप्याह। तर्केति। प्रमाणानुग्राहकयुक्तिमद्रूपस्य तर्कस्याप्रतिष्ठा तया पर्य्यवसानेन कृत्वा यत् साम्यं तुल्यत्वं तस्मात् तुल्यत्वाद्धेतोः सुन्दोपसुन्दन्यायेन विनिमयेन अन्योऽन्यं परस्परं व्यतिघ्नतां दूषयतां केषां मतानां प्रमाणत्वेन सम्मानाना-मनुमानादीनां, अथ च सत्वासत्वैकात्म्यनानात्म्येश्वरत्वानीश्वरत्वादि प्रतिपादयतां दर्शनानामप्रामाण्यं न स्यादपि तु सर्व्वेषामपि तुल्यबलत्वेन परस्परविरोधादप्रमाणत्वमेव स्यात्। किञ्च सत्प्रतिपक्षो विरुद्धसाध्यसाधको हेतुर्यस्य तदनुमानं सत्प्रतिपक्षं तद्वत्। तस्यैवाप्रामाण्यं स्यादिति सम्बन्धः। वैशेषिकादयो यथा कृतकत्वाद्घटवदनित्यं शब्दं वदन्ति। मीमांसका निरवयवत्वादात्मवन्नित्यं शब्दं वदन्ति। तत्रोत्तरेण पूर्व्वप्रदर्शिते दोषविशेषे पूर्व्वस्य यथाऽप्रामाण्यं तद्वदित्यर्थः। सत्प्रतिपक्षानुमाने यथाऽप्रामाण्यं द्वयोरपीत्यर्थः, सप्तम्यर्थे वतिः, तर्क्यन्ते निश्चीयन्तेऽर्था यैस्ते तर्का अनुमानानि तेषामप्रतिष्ठया समबलद्वितीयसद्भावेनानिश्चितस्वरूपयेत्यर्थ इति च व्याख्येयं। गगनं नित्यममूर्त्तं द्रव्यत्वादात्मवत्। गगनमनित्यमस्मदादिवाह्येन्द्रियग्राह्यगुणाधारभूतत्वाद्घटवदिति इति सत्प्रतिपक्षानुमानयोरिवेत्यर्थः ॥ ७८ ॥

अक्रोधं शिक्षयन्त्यन्यैः क्रोधना ये तपोधनाः।
निर्द्धनास्ते धनायैव धातुवादोपदेशिनः॥ ८०॥
किं वित्तं दत्थ तुष्येयमदातरि हरिप्रिया।
दत्त्वा सर्व्वं धनं मुग्धो बन्धनं लब्धवान् बलिः॥ ८१॥

अन्यच्चाह। अक्रोधमिति। क्रोधना अकारणरोषणा ये तपोधनास्तपःसर्व्वस्वाः दुर्व्वासःप्रभृतयो ये ते क्रोधो बहुनर्थकारित्वात् सर्व्वथा त्याज्य इति अक्रोधं क्रोधाभावमन्यैः प्रयोज्यैः शिक्षयन्ति, अन्ये क्रोधाभावं शिक्षन्ते तान् क्रोधो न कार्य्य इति प्रयोजयन्ति उपदिशन्तीति यावत्। स्वयन्तु क्रुद्धा यत् किञ्चिदाचरन्ति अन्यांस्त्वेवमुपदिशन्तीत्युपहासः। तथा येऽतिनिर्धनास्ते धनायैव स्वस्य धनप्राप्त्यर्थमेव लोहादिधातूनां सम्बन्धिनं वादं स्पष्टं वचनं अन्योन्यरिपुमित्राभावज्ञानेन धातूनां संयोगात् स्वर्णरूप्यादि मया कर्त्तुं शक्यते मदुपदेशात् त्वमपि कुरु इत्येवं रूपं धातुवादं उपदिशन्तीत्येवंशीला भवन्ति। परन्तु स्वस्मै किञ्चित्तेन दातव्यं इत्येवं परप्रतारणाबुद्ध्यैव न तु तत्त्वतः। यतः स्वयं निर्धना इति हेतुः। तादृक्सामर्थ्यसद्भावे तेषामधनत्वं न युज्यते। ततश्च स्वयमतोर्णः स कथं परांस्तारयति। अनेन धातुवादिनामप्युपहासः। अन्यैः प्रयोज्यकर्त्तुरनभिहितत्वात् कर्त्तरि तृतीया। क्रोधनाः। क्रुधमण्डार्थेभ्यश्चेति (पा० ३।२।१५१) युच्॥ ८०॥

इदानीं दानधर्म्मं दूषयति। किमिति। भो जना यूयं वित्तं

दोग्धा द्रोग्धा च सर्व्वोऽयं धनिकश्चेतसा जनः ।
विलङ्घ्य लोभसंक्षोभमेकदा यद्युदासते ॥ ८२ ॥

यदि यज्ञादौ दक्षिणात्वेन पात्रेभ्यः किमिति दत्थ अपि तु कस्मैचिदपि न देयं यस्मादियं हरिप्रिया विष्णोः प्रेयसी सम्पद्रूपा लक्ष्मीः अदातरि अकृतदानोपभोगे कृपणे तुष्टा प्रीतिं प्राप्नोति तत्रैव वसतीत्यर्थः । दाने बाधकमाह । यस्मात्पुरा सर्व्वो दानव्यसनपरः तदोदर्कविचारशून्यः स्मृतिपुराणादौ श्रद्धावांश्च बलिः सर्व्वं धनं श्रीवामनाय दत्त्वा बन्धनं लब्धवान्, वाक्पाशेन बद्धः सन् पातालप्रवेशरूपं बन्धनं प्राप्तवान् इति पुराणकथा । दानं कर्त्तव्यमित्यत्र स्मृत्यादिकमेव प्रमाणं बलिप्रभृतीनां दानस्य शुभोदर्कं जातमित्यत्रापि तदेव प्रमाणं । तथा च कर्तृद्रव्यपात्रशुद्ध्यादियुक्तेऽपि दानविधौ सति ... फलादर्शनाददातरि च लक्ष्म्याः स्थैर्यदर्शनाच्चान्वयव्यतिरेकाभ्यां दानधर्मः सर्व्वथा त्याज्य एवेत्युक्तं भवति भावः । हरिप्रियेत्यनेन श्रीहरिणापि याचकत्वाङ्गीकारात् लक्ष्मीप्रीत्यर्थमदातृत्वमेवाङ्गीकृतमिति च सूचितं ॥ ८१ ॥

पात्राभावाद्दानं न कर्त्तव्यमित्याह । दोग्धेति । अयं प्रत्यक्षग्रहणयोग्यः सर्व्वोऽपि जनो धनिन आढ्यान् नरान् दोग्धा दोहनशीलः स्वामिभक्तदानादिविध्युपदेशादिना येन केनाप्युपायेन धनिकेभ्यो धनमाकर्षतीत्यर्थः । तथा द्रोग्धा मनसा तद्विषये द्रोहकरणशीलश्च, कथमेनं हन्यामेतस्य धनादि च कथं

दैन्यस्यायुष्यमस्तैन्यमभक्ष्यं कुक्षिवञ्चना।
स्वाच्छन्द्यमृच्छतानन्दकन्दलीकन्दमेककम्॥ ८३॥

गृह्णीयामित्यादिप्रकारेण तद्विषये द्रोहमेव चिन्तयतीत्यर्थः। सर्व्वोऽप्येवमिति कथमुच्यत इत्यत आह। लोभमंक्षोभं द्रव्याद्यभिलाषजनितं मनसो नितरां क्षोभं कर्म्मण्यपारवश्यलक्षणविकारं अभिलाषातिरेकं वा विसृज्य यद्युदासते उदासीना भवन्ति परस्वाकर्षणादेरुपरता भवन्ति तर्ह्येको द्वौ वा न तु तृतीयस्तादृशस्त्वल्पीयांसस्माद्युक्तमेवोक्तमित्यर्थः। तस्मात् परप्रतारणप्रयोजनक एव दानार्थं धर्माद्युपदेश इति भावः। परप्रतारकत्वात् पात्रलाभावाद्दानं कस्मैचिदपि न कर्त्तव्यमित्यर्थः। तारकत्वात् पात्रलाभावाद्दानं कस्मैचिदपि न कर्त्तव्यमित्यर्थः। दोग्धा, द्रोग्धा विषद्येति पाठे लोभातिरेकं बलान्निरुद्ध्येत्यर्थः। दोग्धा, द्रोग्धा विषह्येति पाठे लोभातिरेकं बलान्निरुद्ध्येत्यर्थः। दोग्धा, द्रोग्धा इति ताच्छील्ये तृन्। तद्योगे च, न लोकेति (पा० २।३।६९) षष्ठीनिषेधाद्भुजिन इति द्वितीया। एको द्वौ वा एक द्वाः। सङ्ख्याव्ययेत्यादिना (पा० २।२।२५) समासे कृते बहुव्रीहौ, सङ्ख्येय इति (पा० ५।४।७३) डच्समासान्तः॥ ८२॥

इदानीं विधिनिषेधजातं दूषयन्नुपसंहरति। दैन्येति॥ अस्तैन्यं चौर्य्याभावो दैन्यस्य निर्द्धनत्वस्यायुष्यं वर्द्धकमित्यर्थः। चौर्य्यं यावन्न क्रियते तावद्दैन्यं नापयाति तस्मात्तत् कर्त्तव्यमेवेति भावः। तथा अभक्ष्यं लशुनगृञ्जनग्राम्यशूकरादि, तद्वर्जनमिति यावत्, तत्कुक्षिवञ्चना, स्वोदरविप्रलम्भनमेव। स्वादूत्तममभक्ष्यमिति परित्यागे जठरवञ्चनैव भवति न तु स धर्म्मः। तस्मात् किं बहुना

इत्थमाकर्ण्य दुर्वर्णं शक्रः सक्रोधतां दधे।
अवोचदुच्चैः कस्कोऽयं धर्म्ममर्म्माणि कृन्तति॥ ८४॥
लोकत्रयीं त्रयीनेत्रां वज्रवीर्य्यस्फुरत्करे।
क इत्थं भाषते पाकशासने मयि शासति॥ ८५॥

आनन्दस्य सकलसुखस्य कन्दलो प्ररोहः कन्दं मूलभूतमेकक असहायं केवलं स्वाच्छन्द्यं स्वेच्छाचारित्वं स्वच्छत आश्रयत। श्रौतस्मार्त्तसकलविधिनिषेधान् परित्यज्य सर्व्वदुःखहेतुत्वात् स्वेच्छाचारमेव कुरुतेत्युपदेशानस्मात्ममाकर्णयतेति शेषः। आयुष्यं। तस्मै हितमिति (पा०५।१।५) यत्। असौन्यं। सेनशब्दात् सेना-द्यन्नलोपश्चेत्यत्र (पा०५।१।१२५) सेनादिति योगविभागात् यति, अर्थाभावेऽव्ययीभावः। एवमसक्त्येत्यत्रापि। विन्दतेति वा। विद्लृ लाभे लोट्॥ ८३॥

इत्थमिति। शक्रः, इत्थं पूर्व्वोक्तं दुर्व्वर्णं वेदादिदूषकचार्वा-कस्य दुष्टवर्णवाक्यमाकर्ण्य सक्रोधतां दधे सकोपोऽभूदित्यर्थः। अनन्तरं उच्चैर्नितरां तारस्वरं इत्यवोचत्। इति किं। एतेषु मध्ये अनिश्चितरूपोऽयं कस्कः श्रुत्यादिमूलानि धर्मरहस्यभू-तानि वेददूषणात् कृन्तति छिनत्ति। कोऽयं कोऽयं एवं भाषत इति वक्तृविशेषनिश्चयाय कोपाभिव्यञ्जकसम्भ्रमोक्तौ कस्कशब्दः कस्कादित्वात् साधुः॥ ८४॥

क्रोधमेव द्योतयन् वेदप्रामाण्यं प्रतिजानीते। लोकेति। पाकशासने पाकासुरमर्द्दिनि मयि त्रयीनेत्रां प्रसिद्धचतुर्दयो-

वर्णासङ्कीर्णतायां वा जात्यलोपेऽन्यथापि वा।
ब्रह्महादेः परीक्षासु भङ्गमङ्ग प्रमाणय॥ ८६॥

गोचरार्थगोचरीकरणसमर्थवेदत्रयरूपनेत्रां वेदविहिताचरणवेदनिषिद्धवर्जनकारिणीं लोकत्रयीं धर्मस्थापनपूर्वं शासति परिपालयति सति क इत्थमेवं मत्सम्भर्गाद्रूपणमा... भाषते। किम्भूते। वज्रवीर्य्येण स्फुरन् प्रकाशमानः करो यस्य तस्मिन्। वज्रेत्यादिना वेदादिनिन्दकस्य कण्ठच्छेदसामर्थ्यं स्वस्य सूचितम्। मयीति करेण हृदयस्पर्शनपूर्वं क्रोधाहङ्काराविष्काराभिनयः। वज्रहस्तः पुरन्दर इत्यादिवाक्यप्रतिपाद्ये मयि प्रत्यक्षदृश्ये सति श्रुतिप्रामाण्यं को वान्यथा कर्त्तुं समर्थ इति। वज्रवीर्य्येत्यनेन विग्रहवत्त्वं सूचितं। ग्रावोन्मज्जनवत्, अग्निहोत्रं त्रयीत्यादि वेदाप्रामाण्यप्रतिपादनं चार्वाकवाक्यं दूषितमिति ज्ञेयं। शासति मयि शासन्तं मासनादृत्येत्यनादरे सप्तमी वा॥ ८५॥

श्लोकद्वयेन शुद्धिर्वंशद्वयीत्यादि यज्जातिदूषणं कृतं तत्परिहरति। वर्णेति। अङ्ग रे चार्वाक ब्राह्मणादिवर्णानामसङ्कीर्णतायां सत्यां अन्योन्ययोनिसङ्कराभावे सति यो जात्यलोपो ब्राह्मणत्वादिजातेर्लोपाभावः सद्व्यवहारविषयत्वं तस्मिन् वा विषये ऽन्यथापि वर्णसङ्कराज्जात्यभावे वा विषये परीक्षासु शुद्धत्वादिज्ञापकेषु सत्याद्युक्तेषु जलादिदिव्येषु विषये ब्रह्महादेर्ब्राह्मणक्षत्रियादिवधकारिणोऽभियोज्यस्य भङ्गं पराजयं

ब्राह्मण्यादिप्रसिद्धाया गन्ता यन्नेच्छते जयम् ।
तद्विशुद्धिमशेषस्य वर्णवंशस्य शंसति ॥ ८७ ॥

प्रमाणय सन्दिग्धस्यार्थस्य कोऽयन्तरनिरासेन निश्चायकं कुरु । यदि ब्राह्मणत्वादिशुद्धिर्न स्यात्तर्हि ब्रह्मवधादौ कृतेऽपि ब्रह्महा नाप्नोति प्रतिज्ञातत्वसिद्धभूतो भङ्गो न स्यात् । भवति च तावत्तस्माद्भङ्गेनैव हन्यमानस्य तत्पित्रादिपरम्परायाश्च सङ्कीर्णत्वाद् ब्राह्मण्यादिजातेरस्थिरत्वं कथितं । यत्र च सङ्कराज्जातिशुद्धिर्नास्ति तस्य वधादौ कृतेऽपि ब्र... ...प्रतिज्ञातो भङ्गो नास्त्येवेति । वर्णसङ्कराज्जातिलोपे व्यतिरेकमुखेन भङ्ग एव प्रमाणं धूम इव वह्न्यभावेऽपीत्यर्थः । अङ्गेति प्राकृत्यद्योति सम्बोधनं । मिथ्यात्वपरीक्षायामभियोक्तुर्भङ्गेऽभियोज्यजातिशुद्धिः पातित्याभावश्च । अभियोज्यभङ्गे तु हन्यमानादेर्जातिशुद्धौ सत्यामपि अभियोज्यस्यैव सङ्कीर्णजातित्वं पातित्यञ्चेति निश्चयसिद्धेर्भङ्गमेव प्रमाणयेत्यर्थ इति व्याख्येयं । यथा मति व्याख्या ज्ञातव्या ॥ ८६ ॥

पूर्व्वोक्तमेव द्रढयति । ब्राह्मण्येति । ब्राह्मण्यमादिर्यस्य क्षत्रियादिजातिविशेषस्य तेन प्रसिद्धायां यद्वा ब्राह्मणी आदिर्यस्याः क्षत्रियादिस्त्रियाः सा ब्राह्मण्यादिः सा चासौ प्रसिद्धा च तस्या इयमुत्तमा ब्राह्मणीत्यादिप्रकारेण रूढयाः स्त्रियः गन्ता कामुकस्तां संभुञ्जानो नरो दिव्ये जयं न ईच्छते पश्यतीति, यत्, न प्राप्नोतीत्यर्थः । तज्जातीयानीचणमेव कर्त्तुं अश-

जलानलपरीक्षादौ संवादो वेदवेदिते ।
गलहस्तितनास्तिक्यां धिक् धियं कुरुते न ते ॥ ८८ ॥

यस्य वर्णवंशस्य ब्राह्मणादिवर्णभङ्गस्य मातापित्रादिपरम्परया विशुद्धिर्नितरां निर्दोषत्वं शंसति कथयति । ब्राह्मणोऽभिचारो नरो ब्राह्मणोऽहं ब्राह्मणीं नागममिति प्रतिज्ञाय यदा दिव्यं करोति तदा स पराजयत एवेति तावत्प्रत्यक्षं । तथा च गम्याया गन्तुश्च पारदार्यादिदोषदूषितत्वेऽपि तन्मातापित्रादि परम्पराया ब्राह्मण्यादिविशुद्धिः तत्पराजयेनैव स्पष्टं कथिता । यदि जातेः शुद्धिर्नाभविष्यत् तर्ह्येवं प्रतिज्ञायां कृतायामपि तयोर्ब्राह्मणत्वाभावाद्भङ्गो नाभविष्यत् । स तु दृश्यत इति भङ्ग एवान्यथानुपपत्त्या जातिशुद्धौ प्रमाणमित्यर्थः । ब्राह्मण्यादिप्रसिद्धायां गन्ता ना पुरुषो यदजयं भङ्गमीक्षते तद्भङ्गेक्षणमिति वा व्याख्या । गन्तेति तृच् । अन्यथा । न लोकेति (पा० २।३।६९।) षष्ठ्यभावः स्यात् । प्रसिद्धायामिति पाठे विषयसप्तमी । अन्या व्याख्या क्लिष्टत्वादुपेक्ष्या ॥ ८७ ॥

इदानीं संवादादपि वेदस्य प्रामाण्यमित्याह । जलेति । हे चार्वाक वेदेन वेदिते बोधिते वेदमूलजलानलयोस्ताभ्यां वा या परीक्षा शुद्धत्वनिश्चयः स आदिर्यस्य तुलादिव्यादेस्तादृशेऽर्थे संवादो यथोक्तदर्शनरूपः स ते तव धियं बुद्धिं गलहस्तितं बलान्निर्वासितं नास्तिक्यं यस्यास्तां न कुरुते धिक् । वाक्यार्थः कर्म । अनुचितमेतदित्यर्थः । जलदिव्ये हि जलमग्नः पुरुष आकर्णपूर्ण-

पुरुषमुक्तशरप्रत्यानयनमपेक्षमाणो यद्यनानीते शर उन्मज्जति तर्ह्येवाशुद्धः, आनीते तु शुद्ध इति वेदोक्तं जलदिव्यं, तच्च तथैव दृश्यत इति संवादः । वह्निदिव्ये तु तप्तलोहादौ दाहादाहाभ्यामशुद्धिशुद्धी इत्यप्युक्तं वेदेन । तत्रापि संवादः । तस्मिन् प्रामाण्यहेतौ संवादे सत्यपि नास्तिक्यं न जहातीत्याश्चर्यम् । मूर्खतरोऽसीति भावः । तव धिग्धियं निन्द्यां बुद्धिं निराकृतनास्तिक्यां न कुरुतेऽपि तु करोत्येव । दूषयतीत्यर्थः । तव धिक् निन्द्यां न करोति अपि तु धिक्करोत्येवेत्यर्थः । धियमिति वा । यतो निराकृतनास्तिक्यामित्युभयत्रापि हेतुगर्भसंवादेन नास्तिक्यापनयात् स्वरूपहानेर्धिक्कार एव कृत इत्यर्थः । जलानलपरीक्षादौ ते तत्रापि यतः संवादः सम्प्रतिपत्तिरस्ति तेन कारणेन सञ्जातगलहस्तमालिङ्गितकण्ठं नास्तिक्यं यस्यां तां स्वीकृतनास्तिक्यां बुद्धिं त्वं धिक्कुरु इत्यर्थ इति वा । अत्र गलहस्तशब्दः परीरम्भपरः । यतस्तत्रापि संवादोऽस्ति । तेन स्वीयां धिग्धियं नास्तिक्यवादाद् दुष्टां बुद्धिं दूरीभितनास्तिक्यां कुर्विति वा  कुत्सिता रुतिः शब्दो यस्य तत्सम्बोधनं कुरुते कुरुद । तथा हे अविद्यमानमते अविनीत चार्वाक वैदिके जलानलपरीक्षादौ यस्मात् संवादोऽस्ति तस्मादाश्रितनास्तिक्यां नास्तिकमतिं धिक् मा निन्देत्यर्थः । इति यत्तदोः सम्बन्धमाश्रित्य वा व्याख्येयम् । नास्ति मतिरस्येत्यर्थे, अस्ति नास्ति दिष्टं मति (पा० ४।४।६०) इति ठकि नास्तिकः । मतिः परलोकविषया । तद्भावो नास्तिक्यं । ब्राह्मणादित्वात् ष्यञ् ॥ ८८ ॥

सत्येव पतियोगादौ गर्भादेरध्रुवोदयात्।
आक्षिप्तं नास्तिकाः कर्म्म न किं मर्म्म भिनत्ति वः ॥ ८९ ॥

इदानीं स्मृते कर्म्मफलोऽमय इत्यादीनि वाक्यानि दूषयति। सतीति। पतियोगः ऋतौ स्त्रिया भर्तृसम्बन्धः शुक्रशोणितसन्निपातलक्षणः, अयुग्मासु गमनं निषिद्धतिथ्यादिवर्जनं एतदादिर्यस्तैतादृशे वीजक्षेपादौ कर्षणजलसेकादौ च वर्त्तमान एव दृष्टकारणसामग्र्यां सर्व्वदा सत्यामपि गर्भादेरध्रुवोदयादनिश्चितादुद्भवात्। कस्मिंश्चित् काले ऽनुत्पत्तेर्हेतोराक्षिप्तमलौकिकस्य परलोकसाधनस्य भावेऽदृष्टकारणसामग्रीत एव सदा स्यात्। न चैवमस्ति। तस्माद्धर्म्माधर्म्मरूपमदृष्टं कारणान्तरमर्थापत्तिप्रमाणकं कर्म्म शुभाशुभफलकमदृष्टं भो नास्तिका अवैदिकत्वाद्दुष्टमनसो वो युष्माकं मर्म्म हृदयं किन्न भिनत्ति अपि तु विदारयत्येव। कुतो हेतोर्न भिनत्तीति वा। एतन्निदर्शनेन सचेतसो हृदयेन विदारितुं युक्तं तन्न जातमित्याश्चर्य्यं। मूर्खतमा भवन्त इत्यर्थः। कर्म्म वो मर्म्म दर्शनरहस्यरूपं न किं दूषयति किन्तु दूषयत्येवेति वा। सर्व्वोद्देशेन नास्तिका इति बहुवचनम्। गृहस्थास्तिचतुरासु पत्नीषु सतीष्वपि पुत्राद्यसम्भवे एवं वदन्ति अस्माभिरपत्यप्राप्तिहेतुकं कर्म्म प्राक् न कृतम्। अथ वा ... प्रेतकृत्येनाप्यदंशेन केनचित् प्रेतेन प्रतिबन्धः कृतस्तस्मादपत्यं न भवतीत्यादि वा कथयन्ति। तस्माल्लोकप्रवादपारम्पर्य्यादर्थापत्तेरदृष्टं कारणान्तरमङ्गीकर-

याचतः स्वं गयाश्राद्धं भूतस्याविश्य कञ्चन ।
नानादेशजनोपज्ञाः प्रत्येषि न कथाः कथम् ॥ ९० ॥

णीयम् । आदिशब्दाभ्यां कृषिवाणिज्यस्वामिसेवादिव्यवसाया-त्मकलावाप्तयश्च व्याख्याताः ॥ ८९ ॥

मृतः स्मरति, अन्यदेहैर्मृतैरपि, सन्देहेऽप्यन्यदेहाप्तेरित्या-देहान्तरमाह । याचत इति । पापवशादप्राप्तसद्गतेः पिशाचत्वा-दियोनिप्राप्तस्य स्वसम्बन्धिनमुदासीनं वा यं कञ्चनाविश्य स्वस्व-रूपेण तच्छरीरमधिष्ठाय स्वसम्बन्धि गयाश्राद्धं निजदुर्गतिं परिजिहीर्षया गयायां श्राद्धप्रयागे माघस्नानादिजन्यं पुण्यवि-शेषं याचतो मम सद्गतिप्राप्त्यर्थमिदं करणीयमिति प्रार्थय-मानस्य, एवं कृते मोचिष्यामीति वदतः प्रेतस्य, सम्बन्धिनोः नानादेशेभ्य आगता जनास्तेभ्य उपज्ञाः अतार्किकैः ज्ञाताः सत्यत्वेन सर्वेषां सम्मताः कथाः कथं न प्रत्येषि । तासु कथं न विश्वसिषि । अपि तु नानाविधप्रामाणिकजनसंवादसिद्धत्वात् पूर्वजन्मकथनात् पूर्वं मयार्चितावत् सुवर्णादि निचितं तत् पश्य-तेति निध्यादिदर्शनसंवादाद् देशान्तरकालान्तरप्रवृत्तिकथ-नाद् गयाश्राद्धादौ कृते तस्य सद्गतेरनुमानाच्च ताः सर्वथा विश्वसितुं योग्या इत्यर्थः । एतेन सौर्यादिभावविशेषपरलोक-देहान्तरप्राप्तिधर्माधर्ममूलस्वर्गनरकादिप्राप्तीनां प्रामाण्यं स-मर्थितं । नानादेशजनेन उपज्ञानुभविता याभाग्न्याः सर्वप्रमा-णिका इत्यर्थः ॥ ९० ॥

*नीतानां यमदूतेन नामभ्रान्तेरुपागतौ ।*
अद्वत्से संवदन्तीं न परलोककथां कथम् ॥ ९१ ॥
जज्वाल ज्वलनः क्रोधादाचख्यौ चाक्षिपन्नमुं ।
किमात्थ रे किमात्थेदमस्मदग्रे निरर्गलम् ॥ ९२ ॥

को हि तद् वेदेत्यादेरुत्तरमाह । नीतानामिति । प्राणापकर्षणार्थं यमेनैव प्रेषितेन यमदूतेन देवदत्तमानयेत्यादिष्टेन सनामतया भ्रान्तेर्हेतोः स्थूलशरीराल्लैङ्गिकं शरीरमाकृष्य यो देवेनानायितः सोऽयमानीत इति यमसामीप्यं नीतानां मरणीयादन्येषां जनानामुपागतौ सत्यामानायितो यः सोऽयं न भवति पुनरयं मर्त्यलोकं नेय इत्येतत्सदृशमन्यमानयेति यमचित्रगुप्ताभ्यामुक्ते सति प्रत्यावृत्तौ भौतिकशरीरमध्ये लैङ्गिकशरीरे पुनः प्रविष्टे सति तद्बान्धवैरेतावत् पर्य्यन्तं किं जातं त्वं कुत्र गतः किंवा तत्र दृष्टमित्यादि प्रश्ने कृते यमदूतैर्यमं प्रापितस्तेन च पुनरायुःशेषादत्र पातितोऽहम् । स्वर्गो नरकस्त्वेवंविध इतिप्रकाशकश्रुतिस्मृतिप्रमाणेषु यथा स्वर्गादिरूपं श्रुतं तादृशस्यैव तस्य कथनात् संवदन्तीं संवादं कुर्व्वन्तीं परलोकसम्बन्धिनीं अस्तित्वकथां कथं कुतो हेतोस्त्वं न अद्धत्से परलोकास्तित्वे प्रमाणरूपां न मन्यसे वद । न किञ्चिदविश्वासे कारणमस्ति । तस्मात् परलोकोऽस्त्येवेति भावः ॥ ९१ ॥

जज्वालेति । अथ ज्वलनोऽग्निः क्रोधाज्जज्वाल, अमुं चार्वाकं आक्षिपन् परुषभाषणैरधिक्षिपन्निति आचख्यौ, ऊचे च । इति

महापराक्रिणः श्रौतधर्म्मैवावनजीविनः ।
क्षणाभक्षणमूर्च्छालु स्मरन विस्मयमेऽपि न ॥ ८३ ॥

किं । रे चार्वाक नीच त्वमस्माकं वैदिकानामग्रे निरर्गलं निर्भयं यथा तथा इदं पूर्व्वोक्तप्रकारं किमात्थ किं ब्रूषे इति । अतः परमेवं चेद्वक्ष्यसि तर्हि तव कण्ठाहमेव कुण्ठयिष्यामीत्यर्थः । क्रोधाविष्टजातिरियं । क्रोधावेशद्योतनार्थमेव वीप्सायां पुनरुक्तिः ॥ ८२ ॥

इदानीं नास्ति स्नातीत्यादेरुत्तरमाह । महेति । रे क्षणं क्षणमात्रमभक्षणेनाभोजनेन मूर्च्छालातिविह्वल रे नास्तिक द्वादशादिवर्षादि व्रतोपवासमासाध्यमचाप्राप्त...व्रतवतस्तान् ब्रह्मचारिणः श्रौतस्मार्त्तरूपेणैकेन बलेन जीविनः प्राणधारणशीलानेवम्भूतान् मनुष्यान् स्मरंश्चिन्तयन्नपि किं न विस्मयसे । एतावन्ति दिनान्येतेऽभोजनाः कथमासन इत्याश्चर्यं न प्राप्नोषीत्येतन्महच्चित्रम् । क्षणमात्रमप्यभोजनपीडायाः स्वेनैवानुभवे मासोपवासादिकारिणां जीवितधारणस्य प्रत्यक्षदर्शने च सत्यपि भवादृश एव मूर्खो न विस्मयत इत्यर्थः । तथा चिरमभोजनेऽपि जीवितधारणसामर्थ्यादृष्टमेवास्त्येवेति । एकादश्युपवासादिकं धर्म्ममन्वयव्यतिरेकाभ्यां जानीहीति भावः । पराक्रिणः । शेषत्वाविवक्षायां द्वितीयाबहुवचनं । शेषत्वविवक्षया अधीगर्थेति (पा० २।३।५२) षष्ठ्येकवचनं वा । मूर्च्छालु । अस्त्यर्थे सिध्मादिषु क्षुद्रजन्तूपतापाभ्यां चेष्यत इति वचनादुपतापकारित्ववचनादपकारकारित्वाल्लच् । विस्मयसे न किमिति च पाठः ॥ ८३ ॥

पुत्रेष्टिश्येनकारीरीमुखा दृष्टफला मखाः ।
न वः किं धर्म्मसन्देहमंदेहजयभानवः ॥ ८४ ॥

इदानीं ग्रावान्मज्जनवत्, एकं सन्दिग्धयोस्तावदित्यादेरुत्तरयति । पुत्रेति । भो नास्तिकाः पुत्रप्राप्त्यर्थं विहितः पुत्रफलको यागः पुत्रेष्टिः, श्येनेनाभिचरन् यजेतेति वेदवाक्यविहितः श्येनसाधनकोऽभिचारफलको श्येनः, तथा कारीरीं निर्वपेत वृष्टिकाम इति वंशाङ्कुरसाधनको वृष्टिफलको यागः कारीरीत्युच्यते, एते यागा मुखमादिर्येषां ते, तथा दृष्टप्रत्यक्षानुभूयमानसुतसम्भूतिवैरिमारणजलवर्षादिरूपं फलं प्रयोजनं येषां ते मखा वो नास्तिकानां युष्माकं धर्म्मोऽस्ति वा नास्ति इति धर्म्मसम्बन्धी सन्देहो वेदवाक्यविहितादृष्टफलकयागादिरूपो धर्म्मस्तत्सम्बन्धी वा, अदृष्टफलकयागादिविधायकवेदवाक्यान्येव वा धर्म्महेतुत्वाद्धर्म्मस्तत्सम्बन्धी वा यः प्रामाण्याप्रामाण्यसन्देह एव मन्देहा सन्ध्योदये सूर्य्यग्रासार्थमुत्पद्यमाना षष्टिसहस्रसार्द्धतिस्रः कोटयो राक्षसाः तेषां जये विनाशे भानवः सूर्य्यरूपा विनाशका न किं भवन्ति । एवं दृष्ट्वापि धर्मं न मन्यसे चित्रमित्यर्थः । किं न अपि तु भवन्त्येवेति वा ।

तिस्रः कोट्योऽर्द्धकोटी च मंदेहा नाम राक्षसाः ।
उदयन्तं सहस्रांशुमतियुद्ध्यन्ति ते सदा ॥
गायत्र्या चाभिमन्त्र्योर्द्धं जलन्त्रिः सन्ध्ययोः क्षिपेत् ।
तेन शाम्यन्ति ते दैत्या वज्रभूतेन वारिणा ॥

दण्डताण्डवनैः कुर्व्वन् स्फुलिङ्गालिङ्गितं नभः ।
निर्ममेऽथ गिरामूर्म्मीर्भिन्नमर्म्मेव धर्म्मराट् ॥ ८५ ॥
तिष्ठ भोस्तिष्ठ कण्ठोष्ठं कुण्ठयामि हठादयम् ।
अपष्ठु पठतः पाठ्यमधिगोष्ठि शठस्य ते ॥ ८६ ॥

इत्यादिवाक्यप्रामाण्याद्गायत्र्याभिमन्त्रितजलप्रक्षेपेण तन्ना-शपुरःसरमेव सूर्य्योदयात् सूर्य्य एव तान् विनाशयतीत्युच्यते । तथा च सूर्य्यो यथा तान्नाशयति तथा मखैरपि भवदीयसन्देहो विनाश्य एवेति प्रामाणिकमेव सर्व्वं जानीहि ॥ ८४ ॥

दण्डेति । अथाऽग्निवचनानन्तरं धर्म्मराड्यमः स्वायुधस्य दण्डस्य ताण्डवनैरितस्ततश्चालनैः नभः स्फुलिङ्गालिङ्गितमग्निकणाकीर्णं कुर्व्वन् रचयन् चार्वाकवाक्शरैर्भिन्नमर्म्मेव विदारितजीवस्थान इवासहमानो गिरामूर्म्मीर्वाक्यपरम्परा निर्म्ममे ऊचे इत्यर्थः । ऊर्म्मिपदेन वाचामप्रतिहतप्रसरत्वं सूचितं । ऊर्म्मिर्वा स्त्रियामिति स्त्रीलिङ्गेऽपि ॥ ८५ ॥

तदेवाह । तिष्ठेति । भो नास्तिक तिष्ठ तिष्ठ क्षणमात्रं सहस्व धर्म्मदूषणाद्विरमेति वा । अयमहं अधिगोष्ठि गोष्ठ्यामिन्द्रादिसभायां अपष्ठु प्रतिकूलं पाठ्यं पठनार्थं वचनं पठतो भाषमाणस्य शठस्य वाक्छलमात्रनिष्ठस्य नास्तिकाधमस्य ते तव कण्ठोष्ठं कण्ठनालमोष्ठौ च हठाद्बलात्कारेणेदानीमेव कुण्ठयामि वर्णोच्चारणाशक्तं करोमि दण्डेन चूर्णयामीत्यर्थः । सर्व्वाणि विशेषणानि दण्डत्वज्ञापने हेतवः । अथ चैवंविधस्य ते

वेदैस्तद्वपिभिस्तद्वत् स्थिरं मतशतैः कृतम्।
परं कस्ते परं वाचा लोकं लोकायत त्यजेत्॥ ९७॥
समज्ञानान्नभूयिष्ठपान्थवैमत्यमेत्य यम्।
लोके प्रयासि पन्थानं परलोके न तं कुतः॥ ९८॥

अपि गोष्ठिकथामधिकृत्य वाचो युक्तौ कण्ठोष्ठं कुण्ठयामि युक्त्या प्रतिहतत्वादकुसमसमर्थं करोमि। सर्व्वमपि भवच्छास्त्रं दूषयिष्यामीत्यर्थः। वाग्व्यापारं प्रति कण्ठोष्ठस्यैव दण्डो युक्तः। अयमपि क्रोधाहङ्कारादिस्फारे। तिष्ठ तिष्ठेति क्रोधातिशयद्योतनार्थं पुनरुक्तिः। कण्ठोष्ठं प्राण्यंगत्वादेकवद्भावः। कुण्ठयामि, वर्त्तमानसामीप्ये भविष्यति लट्॥ ९६॥

इदानीं श्लोकत्रयेण परलोकं धर्मञ्च साधयन् को हि वेद, तर्काप्रतिष्ठयेत्येवमादेरुत्तरमाह। वेदैरिति। चतुर्भिः ऋग्वेदादिभिर्वेदैर्यथास्थितमाकृतं तद्वत्तस्य वेदस्य वेषच्छाया तद्युक्तैः तदंशोपजीविभिः वेदानुसारिभिर्मतानां शतैः स्मृतिपुराणादिभिः वादिप्रतिवादिभेदैर्मीमांसादिशास्त्रैश्च स्थिरं कृतं निश्चयेन व्यवस्थापितं परं श्रेष्ठं अन्यञ्च स्वर्गादिलक्षणं लोकं हे लोकायत नास्तिकाधम परं केवलं ते वाचा निर्युक्तिकेन वचनमात्रेण कोऽपि विद्वान् त्यजेत् अपि तु न। किन्तु सर्व्वैरपि तद्युक्तिभिः परलोकः स्वीकृत एवेत्यर्थः। तदस्तित्वे सन्देहापादिनो को हि वेदेत्यादिश्रुतिरन्यपरेति भावः॥ ९७॥

समेति। एकस्मिन्मार्गादावर्थे समज्ञाना तुल्यमतयोऽन्ये

स्वकन्यामन्यसात्कर्त्तुं विश्वानुमतिदृश्वनः।
लोके परत्र लोकस्य कस्य न स्याद्दृढं मनः॥ ८९॥

ऽन्यमहाश्च भूयिष्ठा बहुतरमहाश्च पान्थास्तेषां वैमत्यं मार्गान्यत्वविरोधमेत्य प्राप्य ज्ञात्वा वा इह लोके यं पन्थानं त्वमेव प्रयासि परलोकेऽपि विषये त्वमेव तादृशमेव मार्गं कृत्वा हेतोर्न गच्छसीति प्रश्नः। अपि तु तमेतमेव गच्छेत्युपदेशो वा। यथा केनचिद्ग्रामो दक्षिणो वा काशीमार्ग इति मार्गं पथिकेषु पृष्टेषु पञ्चषैर्वाममार्गे कथिते सति पञ्चाशद्भिर्दक्षिणमार्गे कथिते "द्वैधे बहूनां वचनं ग्राह्यं इत्यादि" न्यायात् कृत्स्नेन पञ्चाशदुक्तमार्गेणैव गम्यते, एवं परलोकेऽप्यन्यविमतिं निरस्य बहुनुगत एव मार्गः किमिति नाश्रियत इत्यर्थः। परलोकमार्गस्य लक्षणया धर्मस्तं कथं न मन्यसे, अपि तु तमेवाङ्गीकुरु। परलोकसत्तानिश्चयमपि गन्तव्यमार्गवत् कुर्विति भावः। तर्काप्रतिष्ठयेत्यस्याप्येतदुत्तरं ज्ञेयं॥ ८८॥

बहुसम्मतिमेव दर्शयति। स्वकन्यामिति। स्वकन्यामात्मपुत्रीमन्यसात्कर्त्तुमन्यस्मै वराय ऋषीणां देयां कर्त्तुं विश्वेषां सर्वेषां श्रुतिस्मृतिपुराणानां लोकानां चानुमतिं सम्मतिं दृष्टवतोऽनुभवतः तथा कुर्वतः कस्य जनस्य परत्र लोके स्वर्गादौ मनो दृढं निःसन्देहं निश्चलं न स्यादपि तु सर्वस्यापि स्यादेव। न केवलमन्यस्यैव किन्तु चार्वाकस्य तत्रापीत्यर्थः। सर्वोऽपि परलोकबाधभिया स्वकन्यामन्यस्मै ददाति। यदि

कस्मिन्नपि मते सत्ये हताः सर्व्वमतत्यजः।
तद्दृष्टा व्यर्थतामात्रमनर्थस्तु न धर्म्मजः॥१००॥

परलोको नाभविष्यत्तर्हि स्वपुत्रीमन्यस्मै कथमदास्यत्। अयमाचारः सर्व्वेषां सम्मतः। स च त्वयाप्यन्यस्मै पुत्रीदानादङ्गीकृत एव। अन्यथा स्वपुत्र्याः स्वेनैव ग्रहणमापद्येत। तस्मादन्येषामनुमतिं गृहीत्वैव यथा कन्याऽन्यस्मै दीयते तथा बहुसम्मतिदर्शनात् परलोकमप्यङ्गीकुर्व्विति भावः। अन्यस्मात्। देयेत्याचेति (पा०५।४।५५) सातिः। विप्रेति पूर्व्ववत्॥ ८८॥

श्लोकद्वयेन श्रुतिसत्यार्थबोधेषु, तर्काप्रतिष्ठयेत्यादेरुत्तरमाह। कस्मिन्निति। धर्म्मपरलोकादिप्रतिपादनपराणां बहूनां मतानां मध्ये एकस्मिन्नेकस्मिन्नपि मते सत्ये सत्यत्वेनाङ्गीकृते सति सर्व्वमतत्यजः सर्व्वमतत्यागिनः परस्परविरोधात् सर्व्वमतासत्त्ववादिनो नास्तिका यूयं हता मारिताः। तत्रायं सन्धिः। मतानामसत्यत्ववादिभिः किञ्चिन्मतं सत्यमङ्गीक्रियते न वा, चेदङ्गीक्रियते तर्हि कस्यापि कन्यादानादिप्रतिपादकस्य स्वीयमतस्यैव वा सत्यत्वाङ्गीकारात् सर्व्वमप्रमाणमिति सर्व्वासत्यत्ववादिनो व्याघाताय सिद्धान्ताभ्यां दूषिता एवेति वैदिकसिद्धान्तो निर्द्दोष इत्यायातं। न वेत्यपि पक्षे नास्तिकमतस्याप्यसत्यत्वादसत्यभूतस्य दूषकत्वाभावान्निर्द्दोषो वैदिकः पक्षः सिद्ध एवेत्यपि नास्तिका दूषिताः। निर्द्दोषत्वेऽपि वैदिकपक्षानङ्गीकारे स्वपक्षोऽपि तैर्नाङ्गीकार्य्य इत्यादि ज्ञेयम्। एवञ्च तस्यैकस्य मतस्य

क्वापि सर्व्वैरवैमत्यात् पानित्यादन्यथा क्वचित्।
स्थातव्यं श्रौत एव स्याद्धर्म्मे शेषेऽपि तत्कृते ॥ १०१ ॥

दृष्ट्या सत्यतामागमेनोभयवादिसिद्धतया पुत्रेष्ट्यादौ पुत्रजन्मादिफलसिद्धौ सत्यां यत्र क्वचित् फलव्यभिचारस्तत्र कर्म्मणो वैफल्याद् व्यर्थतामात्रं फलसाधनत्वराहित्यमात्रं तु पुनः अधर्म्मः प्राचीनपुत्रवियोगादिर्निरर्थकः। दुःखराशिः धर्म्मजो न, पुत्रेष्ट्यादिधर्म्मजन्यो न भवति, विपरीतं तु धर्म्मेण न जन्यते, किन्तु प्राचीनदुष्कर्म्मनिमित्तमेव। केवलं तु काकतालीयन्यायेन तस्य पुत्रेष्ट्याद्यनन्तरभावित्वं। न च तावतैव तत्कार्य्यत्वमिति व्याप्तेरित्यर्थ इत्यादि ज्ञातव्यम्। कस्मिन्नपि मातृगमनादिनिषेधे स्वकन्यादानादौ विषये च वैदिके मते सत्ये सति तस्मिन्नंशे सत्यत्वेऽङ्गीकृते सति सर्व्वमतमसत्कृतमिति वदन्तो नास्तिका हताः। मातृगमननिषेधादेरंशस्य भवद्भिरपि परिपालनादित्यर्थः। तथा च तद्दृष्ट्या कन्यादानमातृगमननिषेधादिरूपाणां सत्यानां विधिनिषेधांशानां दृष्टान्तेनान्यत्रांशे व्यर्थतामात्रं वचनमात्रेण व्यर्थमित्युच्यते न तु धर्म्मजो वास्तवोऽनर्थः प्रयोजनाभावः। तद्दृष्टान्तेन व्यर्थतामात्रमन्यत्राव्यर्थतैवेति सत्यत्वमतिप्रसङ्गेन ॥ १०० ॥

उपसंहरति। क्वापीति। सर्व्वैर्नास्तिकैरपि क्वापि कस्मिन्नपि अहिंसाकन्यादानादौ श्रौते वेदोक्त एव धर्म्मे स्थातव्यं। कुतः। अवैमत्यात् सर्व्वेषामित्यर्थः। शेषः श्रौतानां बौद्धानां माध्यमि-

कानामपि सम्प्रतिपत्तेः। अहिंसादेस्तैरप्यनिषिद्धत्वादङ्गीकृतत्वा-च्चेत्यर्थः। स्थातव्यमेवेति वा। तथा क्वचिद्वर्णाश्रमाधिकारविहिते अन्यथा करणे निषिद्धाचरणे च पातित्यदोषाद्विहिताकरण-निषिद्धाचरणप्रत्यवायभयादपि श्रौत एव धर्म्मे स्थातव्यं। अन्यथा वैमत्येऽपि श्रौत एव क्वचित् कस्मिंश्चिद्धर्म्मे स्थातव्यं। कुतः। पा-तित्यात्। यत्तु श्रौते धर्म्मे तेषां विप्रतिपत्तिस्तदनङ्गीकारेऽपि प्रत्यवायः स्यादित्यङ्गीकार्य्य एवेत्यर्थ इति वा। एवं शेषेऽपि नित्यनैमित्तिकाभ्यामतिरिक्ते काम्ये ज्योतिष्टोमादावपि स्था-तव्यं। कुतः। तत्कृते तस्य वेदस्य कृते कारणाद्वेदविहितत्वा-विशेषादित्यर्थः। यद्वा तत्कृते वेदमूलत्वाच्छेषे स्मार्त्तेऽपि धर्म्मे स्थातव्यं, सदाचारानुमितस्मृत्या श्रुतेरनुमानात्। स्मार्त्तधर्म्मा अपि वेदमूला इति तेऽप्यङ्गीकर्त्तव्या इत्यर्थः। एतेन यस्मिन्ना-स्तीति, अनेन जानतेति, एकस्य विश्वपापेनेति, स्वश्च ब्रह्म चेत्यादेः सर्व्वस्याप्युत्तरं दत्तम्। धातुवादादि दिक्प्रामाणिकमेव। असि-द्धिस्तु साधनवैगुण्यादिति सर्व्वमपि समर्थितमिति ज्ञेयम्। त-त्कृतमिति पाठे हेतुगर्भविशेषणं। तस्मान्न मतानामप्रामाण्यं। श्रुतिस्मृत्योरैकमत्यमप्यविरुद्धमिति श्लोकद्वयतात्पर्य्यार्थः। अ-हिंसादयः स्मृत्युक्ताः सर्व्वसाधारणधर्म्मास्तेषु क्वापि श्रौतेऽपि धर्म्मे स्थातव्यं। पातित्यादित्युभयत्रापि हेतुः। सर्व्वेषामनुमते विहिते चेन्न स्थीयेत तर्हि विहितस्याननुष्ठानादिति स्मृतेः पातित्यमित्यर्थः। तथा च विहितानां केषाञ्चिद्भवद्भिरनुष्ठा-नान्निषिद्धानां केषाञ्चिद्भवद्भिरपि वर्जनात् सर्व्वेषां विमते

बभाण वरुणः क्रोधादरुणः करुणोज्झितम्।
किं न प्रचण्डात पाषण्डपाश पाशाद्बिभेषि नः॥ १०२॥
मानवाशक्यनिर्म्माणा कूर्म्माद्यङ्कविला शिला।
न श्रद्धापयते मुग्धास्तैर्थिकाध्वनि वः कथं॥ १०३॥

निषिद्धं चेत् स्वीयते। तथा निन्दितस्य सेवनादिस्ततो पातित्य-मित्यर्थः। तथा चैतद्दृष्टान्तेनान्येष्वपि विधिनिषेधांशेषु तत्कृतेः श्रौतत्वाविशेषादेव हेतोः स्यातव्यं। तेऽपि प्रामाणिकत्वे स्वी-कार्य्या इति वा व्याख्या इत्यादि ज्ञातव्यम्॥ १०१॥

बभाणेति। क्रोधादरुणो रक्तकायकान्तिः वरुणः करुणया उज्झितं वचो नितरां परुषं यथा बभाण। हे पाषण्डपाश नास्तिकाधम त्वं नोऽस्माकं प्रचण्डाद्दुःसहात्पाशान्न बिभेषि किं। कुत्सायां, याप्ये पाशबिति (पा० ५।३।४७) पाशप्प्रत्ययः॥ १०२॥

मानवेति। मानवैर्मनुष्यैरशक्यं निर्म्माणं यस्याः तथा कूर्म्मच-क्रकमलसिंहादयोऽङ्काश्चिह्नानि येषामेवंविधं विलम्बिवरं यस्याः सा च शिला गण्डकाख्या तीर्थविशेषसम्भवा शालग्रामशिला, सा मुग्धा मूर्खाः तीर्थिकाध्वनि सेश्वरमार्गे वैदिकाध्वनि वा वो युष्माकं कथं न श्रद्धापयते आस्तिक्यं न प्रापयति। चित्रमेत-द्भवतां मूर्खतरत्वमित्यर्थः। मनुष्यैरशक्यरचनं सावयवत्वेन कार्य्यं शिलादिस्वनिर्म्माणशक्तमिच्छामात्रेण कर्त्तारं मनुष्यादिविलक्षण-मीश्वरमाक्षिपति। विमतं सकर्त्तृकं कार्य्यत्वाद्घटवत्। अनुमाना-त्पक्षधर्म्मताबलादिविलक्षणे कर्त्तरीश्वरे सिद्धेऽपि कथमत्राविश्वास

शतक्रतूरुजाद्याख्याविख्यातिर्नास्तिकाः कथम्।
श्रुतिवृत्तान्तसंवादैर्न वश्चमदचीकरत्॥ १०४॥

इत्याशयः। एतेन देवश्चेदस्ति सर्व्वज्ञ इत्यादेरुत्तरं दत्तमिति ज्ञेयम्॥ १०३॥

शतेति। भो नास्तिकाः शतक्रतुश्च श्रीविष्णोरूरुभ्यां अजायत इत्यूरुजो वैश्यः स आदिराद्यो वा येषां ते ब्राह्मणादिवर्णास्त्र तेषामाख्या शतक्रतुमुखजबाहुज इत्यादीनि नामानि तेषां विशेषेण ख्यातिर्वार्त्ता श्रुतिवृत्तान्तसंवादैः वेदोक्तेतिहासैः करणैः वो युष्मान् कथं न चमदचीकरत् चमत्कारं नाकारयदपि तु आश्चर्य्यं भवतां तयोत्पादं। चमदित्यव्ययमाश्चर्य्ये। शताश्वमेधक्रतुकारीन्द्रो भवति। इन्द्रस्यैव शतक्रतुत्वं वेदेनोक्तम्। लोकेनापीन्द्र एव शतक्रतुत्वेन व्यवह्रियते न तु वज्ञादिरिति। तथा च ब्राह्मणोऽस्य मुखमासीदित्यादिना श्रुत्या ब्राह्मणक्षत्रियादीनां मुखजत्वबाहुजत्वाद्युक्तं। लोकेनापि ब्रह्मक्षत्रादय एव मुखजत्वबाहुजत्वादिभिर्व्यवह्रियते न तु विपर्य्ययेणेति वेदोक्तेन सह लोकस्यानुभूयमानत्वात्। संवादादपि वेदे यथोक्तं तथैव लोको व्यवहरत्याश्चर्य्यमेतत्। आश्चर्य्यं पूर्व्वं वेदप्रामाण्यं कथं न विश्वसिथेत्यपि तु विश्वसनीयं तत्रेत्याशयः। ऊरुजपदं वृत्तानुरोधात् प्रायोजि। तथापि सर्व्वेऽपि वर्णाः संगृहीताः। विख्यातिः प्रयोजिका संवादैः प्रयोज्यैर्वा युष्माकश्चमदाश्चर्य्यं कथं न कारयामासेति वा। शतक्रतुश्च ऊरुजोर्वशी च तदादि वह्निर्मेनके-

तत्तज्जनकृतावेशान् गयाश्राद्धादि याचिनः ।
भूताननुभवन्तोऽपि कथं श्रद्धत्थ न श्रुतीः ॥ १०५ ॥
नामभ्रमाद्यमं नीतानथ स्वतनुमागतान् ।
संवादवादिनो जीवान् वीक्ष्य मा त्यजत श्रुतीः ॥ १०६ ॥

त्यादि व्याख्या येषां यामाश्च वज्रादीनां मेनकादीनाञ्च तेषां लोके प्रसिद्धैर्वेदवृत्तान्तसंवादैर्हेतुभिर्युष्माकं कमाश्चर्यं नाची-करत्। लोकवेदप्रसिद्धानिन्द्रादीनुर्व्वश्याद्यप्सरसश्चैतान् सर्व्वान् प्रत्यक्षेणैव पश्यतेत्यर्थः। तथा च वेदस्तन्मूलं परलोकादि च प्रामाणिकमेवेदमिति भाव इति वा। प्रथमव्याख्याने व इति चक्रोरि (पा०१।४।५३) त्यणौ कर्त्तुर्णौ कर्म्मत्वं, चमदिति च कर्म्मान्तरं। संवादैरिति करणे तृतीया। पक्षान्तरे तु तेनैव सूत्रेणाणौ कर्त्तुः कर्म्मत्वाभावादनभिहिते कर्त्तरि संवादैरिति तृतीया। व इति षष्ठी ॥ १०४ ॥

तदिति। तेषु तेषु जनेषु कृतावेशान् कृतसञ्चारान्, तथा गयाश्राद्धादि याचिनो गयापिण्डदानादिपुण्यं याचतः, प्राप्त-प्रेतभावान् भूतान् प्राणिनोऽनुभवन्तोऽपि पश्यन्तोऽपि यूयं श्रुतीः कथं न श्रद्धत्थ सत्यत्वेन मन्यध्व इति पौनरुक्त्यं न शङ्कनीयं भिन्नवक्तृत्वादेवमुत्तरश्लोकेऽपि ज्ञेयम् ॥ १०५ ॥

नामेति। नामभ्रमाद्यमदूतैर्यमं नीतान् प्रापितान् अथ मुक्तत्वात् प्रत्यावृत्य स्वतनुमागतान् प्राप्तान् संवादं चन्द्रः चयो-त्यादि वेदसंवादं वदन्त्येवंशीलान् जीवान् वीक्ष्य श्रुतीः वेदान्

संरम्भैर्जम्भजेत्रादेः स्तभ्यमानादलादलन्।
मूर्ध्नि बद्धाञ्जलिर्देवानथैवं कश्चिदूचिवान्॥ १०७॥
नापराधी पराधीनो जनोऽयं नाकनायकाः।
कालस्याहं कलेर्वन्दी तच्चाटुचटुलाननः॥ १०८॥

मा त्यजत, अप्रामाणिकान् मा ब्रूत। एवं वेदप्रामाण्योपसंहारात् स्मृत्यादेरपि वेदमूलत्वात् उक्तसर्वधर्माणां प्रामाण्यं व्यवस्थापितम्॥ १०६॥

संरम्भैरिति। अथ वेदवचनानन्तरं जम्भजेत्रः शक्र आदिर्यस्य, इन्द्रानलादीनां संरम्भैर्भ्रूभङ्गाद्याकारविकारैर्भीतेन कलिना पुरस्खलितुं स्तभ्यमानान्निषिध्यमानात्। इन्द्रादिसंरम्भान् दृष्ट्वा भयात् तत्सम्मुखं पदमपि चलितुमशक्तादलात् कलिसैन्यात् वलन् पृथग्भवन् किञ्चिद्दूरमवलम्ब्य द्वित्राणि पदानि सम्मुखमागच्छन् दीनत्वद्योतनपुरःसरं शक्रादिनमस्कारार्थं बद्धाञ्जलिः कश्चिदज्ञातनामा पापरूपत्वेनाज्ञातनामा चार्वाकः देवान् एवं वक्ष्यमाणप्रकारेण ऊचे॥ १०७॥

नेति। हे नाकनायका इन्द्रादयः अयं मल्लक्षणो जनोऽपराधी न यतः पराधीनः। तदेवाह। कलेः कलिनाम्नः कालस्याहं वन्दी स्तुतिपाठकः। अत एव तस्य चाटुनि प्रियवचने विषये चटुलं प्रियवादि वावदूकं वा आननं यस्यैवम्भूतः, अथ च कालस्य कृतान्तरूपस्य वन्दिनो हि यमाश्रयन्ति तत्प्रियं वदन्ति न च दण्डार्हाः। तस्मादेतत्प्रियं वैदिकादिदूषणं मया

इति तस्मिन् वदत्येव देवाः स्यन्दनमन्दिरम् ।
कलिमाकलयाञ्चक्रुर्द्वापरञ्चापरं पुरः ॥ १०९ ॥
सन्ददर्शोन्नमद्ग्रीवः श्रीवक्रत्वकृताङ्कतान् ।
तत्तत्पापपरीतस्तान्नाकीयान्नारकीव सः ॥ ११० ॥

कृतं यदि न करोमि तर्ह्ययं दण्डयिष्यतीति परयुक्तत्वादपराधान्नाहं दण्ड्यः श्रीमद्भिरिति ॥ १०८ ॥

इतीति। देवास्तस्मिंश्चार्वाके इति पूर्वोक्तप्रकारेण वदति भाषमाणे सत्येव स्यन्दनमन्दिरं रथं कलिं अपरं द्वितीयं द्वापरञ्च पुरोऽग्रे आकलयाञ्चक्रुर्ददृशुः ॥ १०९ ॥

सन्ददर्शेति। तैस्तैः प्रसिद्धैः ब्रह्महत्यादिभिर्मूर्त्तैः पापैस्तत्कारिभिः पुरुषैर्वा परीतः समन्ताद्व्याप्तः, तथा उन्नमन्ती दर्शनार्थमुच्चग्रीवा यस्यैवम्भूतः स कलिः श्रीवक्रत्वेन कायकान्तिवाक्रत्वेन भूषणादिसम्पद्वाक्रत्येन वा कृताङ्कतान् कृताश्चर्य्यान् अनाकीयान् स्वर्गरहितान् स्वर्गभवान् वा तान् इन्द्रादीन् सन्ददर्श। क इव नारकीव। यथा ब्रह्महत्यादिकारी आकण्ठनरकमग्न ऊर्द्धग्रीवो नरकस्थः पुरुष इव। पापकारित्वादहमेवंरूपः पुण्यत्वाच्चैते दीप्तस्वरूपा इति ज्ञातवांश्च। नरकस्थोऽपि देवानां कायकान्तिदर्शनाज्ज्ञायमानसुखाऽनुष्ठितपापकृतपश्चात्तापः सुरानार्त्ततया पश्यतीत्युपमा। उन्नतग्रीव इत्यपि पाठः। नाकीयानिति हितार्थे तस्मै हितमिति (पा०५।१।५) वृद्धत्वाद्भवार्थे वृद्धाच्छ इति (पा०४।२।११४) वा छः। नारकी। नरकशब्दात् इनिः ॥ ११० ॥

गुरुरीढावलीढः प्रागभून्नमितमस्तकः ।
स त्रिशङ्कुरिवाक्रान्तस्तेजसैव विडौजसः ॥ १११ ॥
विमुखान् द्रष्टुमप्येनं जनङ्गम इव द्विजान् ।
एष मत्तः सहेलन्तानुपेत्य समभाषत ॥ ११२ ॥

गुर्व्विति। प्राग् दर्शनात् पूर्व्वमिन्द्रादयः केनापि एकद्विकरणं, इत्यादिरूपया गुर्व्या महत्या रीढयाऽवलीढा व्याप्तस्तेषु कृतावज्ञोऽपि दर्शनानन्तरं विडौजस इन्द्रस्य तेजसा आक्रान्तः पराभूतः तिरस्कृततेजस्कः सन् अवज्ञां त्यक्त्वा स कलिः अनमन्नपि बलात् स्वेनैव शक्रतेजसैव वा नमितो नम्रीकृतो मस्तको यस्यैवम्भूतोऽभूत्। इन्द्रादीन्नमश्चकारेत्यर्थः। क इव। त्रिशङ्कुर्नाम सूर्य्यवंश्यो नृप इव। स हि स्वयाजने प्रार्थितेन पुरोधसा वसिष्ठेन निरस्तो गुरोर्वसिष्ठस्य अवज्ञया व्याप्तस्तस्मिन् कृतावज्ञ सन्नभिमानाद्विश्वामित्रेण सर्व्वकामिकं क्रतुं याजितस्तत्प्रभावात् सशरीर एव स्वर्गं गच्छन्निन्द्रेऽपि कृतावज्ञः सन्तत्तेजसा पराभूतः स्वर्गाद्भ्रंशितः। यथा पूर्व्वमिन्द्रे कृतावज्ञः सन्तत्तेजसा पराभूतः स्वर्गाद् भ्रंशित इत्येवं नमितमस्तकोऽभूदितीतिहासः। रीढावमाननावज्ञेत्यमरः ॥ १११ ॥

विमुखानिति। मत्तः सगर्व्व एष कलिः सहेलं सविलासमनुपेत्य समीपमागत्य तान् देवान् समभाषत। किम्भूतान्। एनं कलिं द्रष्टुमपि न केवलं भाषितुं स्प्रष्टुं वा किन्तु वीक्षितुमपि विमुखानसहमानान् सावज्ञान्। कः कानिव। मत्तो निर्म्मलो मदि-

स्वस्ति वास्तोष्पते तुभ्यं शिखिन्नस्ति न खिन्नता ।
सखे कालं सुखेनासि पाशहस्त मुदस्तव ॥ ११३ ॥
स्वयम्वरमहे भैमीवरणाय त्वरामहे ।
तदस्माननुमन्यध्वमध्वने तत्र धाविने ॥ ११४ ॥

गामन्तो वा जनङ्गमश्चण्डालो द्विजानिव। किमुताग्न् एनं चण्डालं द्रष्टुमप्यनर्हान्। चण्डालप्लवमातङ्गदिवाकीर्तिजनङ्गमा इत्यमरः। गमश्चेति (पा० ३।२।४७) खच्। खित्वान्मुम् ॥ ११२ ॥

स्वस्तीति। हे वास्तोष्पते इन्द्र ते तुभ्यं स्वस्ति क्षेममस्ति कच्चित्। तथा हे शिखिन्नग्ने ते तव खिन्नता चित्तक्लेशो नास्ति कच्चित्। हे सखे काल यम सुखेनासि किं। हे पाशहस्त वरुण तव मुदः सन्ति कच्चित्। गृहमात्रस्याधिपत्यादसामर्थ्यं वृथैव ज्वालाजटिलत्वं कुत्सितरूपत्वमायुधधारणवैयर्थ्यञ्च सम्बुद्धिभिः सूचितं। उत्तमानां कुशलप्रश्नास्तैः सह स्वास्यन्तेभ्योऽधिकत्वं सूचयति। इन्द्राय स्वस्तिप्रयोगः स्वामिभावं ब्राह्मण्यं वा कलेर्द्योतयति। वर्त्तमानेन यमे सखिशब्दप्रयोगः। अयमेव गर्व्वोऽवज्ञा चेति ज्ञेयं। स्वस्त्याशीःक्षेमपुण्यादावित्यमरः। वास्तोष्पतिर्गृहमेधाच्चेति निपातनात् साधुः। तुभ्यमिति। नमः-स्वस्तीति (पा० २।३।१६) चतुर्थी। इतरत्र तव सम्बन्धनीयम् ॥ ११३ ॥

स्वयमिति। हे देवा वयं स्वयम्वररूपे महे उत्सवे भैमीवरणाय यस्मात् त्वरामहे सत्वराः स्मः तत्तस्मात्तत्र धाविने स्वय-

तेऽवज्ञाय तमस्योच्चैरहङ्कारमकारणम् ।
ऊचिरेऽति चिरेणैनं स्मित्वा हृष्टमुखा मिथः ॥ ११५ ॥
पुनर्वक्ष्यसि मामेवं कथमुद्वक्ष्यसे नु सः ।
सृष्टवान् परमेष्ठी यं नैष्ठिकब्रह्मचारिणम् ॥ ११६ ॥

स्वरस्थानं प्रति स्वनुगामिनेऽध्वनेऽस्माननुमन्यध्वमाज्ञापयत । त्वरावशादन्या गोष्ठी न क्रियते । आज्ञैव दीयतामित्यर्थः । अध्वने । तादर्थ्ये चतुर्थी ॥ ११४ ॥

त इति । ते देवाः पूर्व्वोक्तमकारणं निर्हेतुकं उच्चैरतिशयितं अस्य कलेरहङ्कारं दर्पमवज्ञाय मिथो ऽन्योन्यं हृष्टमुखाः सन्तः सर्व्वः स्वयम्वरवाचं किं करोतीति स्मित्वा हास्यं कृत्वाऽतिचिरेण पापीयसाऽनेन सह कथं वक्तव्यमिति बुद्ध्या भूयांसं कालं विलम्ब्यैनं कलिं प्रत्यूचिरे वक्ष्यमाणं बभाषिरे ॥ ११५ ॥

पुनरिति । हे कले त्वं स्वयम्वरार्थं गमिष्यामीति एकवारमज्ञानादुक्तं तदिदमतःपरं पुनर्मा मा एवं वक्ष्यसि मा मावोचः । यस्मात् परमेष्ठी यं त्वां आमरणं गुरुकुलनिवासिनं नैष्ठिकब्रह्मचर्य्यव्रतचारिणं सृष्टवान् (स तु पुनस्त्वं कथमुद्वक्ष्यसे परिणेष्यसि कृतयुगादयो निष्कलत्रा एव सृष्टाः) तस्मात्तव स्वयम्वरवार्त्ताऽनुचिताऽवकीर्णित्वापातात् । तस्मादेवं पुनर्मा स्म वोच इत्यर्थः । पापरूपं प्रत्युपहासवचनमेतत् । माशब्दस्य निरनुबन्धकत्वाद्वक्ष्यसीति वचेर्लृट् । मा मेति निषेधविषयार्थं वीप्सायां द्विरुक्तिः । परमे स्थाने तिष्ठति इति इनिः स च कित् ।

द्रौहिणं द्रुहिणो वेत्तु त्वामाकर्ण्यावकीर्णिनम्।
त्वज्जनैरपि वा धातुः सेतुर्लङ्घ्यस्त्वया न किम्॥११७॥
अतिवृत्तः सवृत्तान्तस्त्रिजगद्युवगर्व्वनुत्।
आगच्छतामपादानं स स्वयम्वर एव नः॥११८॥

अत्र आस्लोपः, अम्बाम्बेति (पा० ८।३।८७) सूत्रेण षत्वं। तत्रैव, परमे वर्हिरिति निपातनादेदन्तत्वं।

नैष्ठिको ब्रह्मचारी तु वसेदाचार्य्यसन्निधौ।
तदभावेऽस्य तनये पत्न्यां वैश्वानरेऽपि च॥ इति स्मृतिः॥११६॥

द्रौहिणमिति। द्रुहिणो ब्रह्मा त्वां पुत्रं अवकीर्णिनं क्षतव्रतं आकर्ण्य निजाज्ञाभङ्गाद् द्रौहिणं गुरुद्रोहकारिणं वेत्तु। एवं त्वया कृतं ब्रह्मोवं ज्ञास्यतीति यावत्। अथ वा तेन ज्ञातेऽपि तव किं भयमिति सोपहासमसाह। त्वज्जनैस्त्वदुपजीविभिः कामक्रोधादिभिरपि धातुः सेतुर्ब्रह्मकृता धर्म्ममर्यादा लङ्घ्यः त्वया पुनः किन्न लङ्घ्यः। त्वदाज्ञया सेवका अपि ब्रह्माज्ञां लङ्घयन्ति त्वं लङ्घयसीति किमाश्चर्य्यमित्यर्थः। यद्वा त्वज्जनैरपि सेतुर्न लङ्घ्यस्त्वया न लङ्घ्य इति किं वाच्यं। त्वदाज्ञाल्लङ्घनमनौचित्यान्न कार्य्यमित्यर्थ इति काकुः। धाताऽब्जयोनिर्द्रुहिण इत्यमरः। द्रुह्यत्यसुरेभ्यः, औणादिकः किन्॥११७॥

स्वयम्वरं प्रत्यागमने हेत्वन्तरमपि सूते। अतीति। एकं विना सर्व्वपरित्यागात्त्रिजगत्सु वर्त्तमानानां यूनां तरुणानां सौन्दर्य्यविषयं गर्व्वं नुदतीति नुत् नाशकः स वृत्तान्तो भैमीस्वय-

नागेषु सानुरागेषु पश्यत्सु दिविषत्सु च ।
भूमिपालं नलं भैमी वरं साववरद्वरम् ॥ ११९ ॥

स्वरां ऽतिवृत्तो ऽतिक्रान्तः मञ्जात इत्यर्थः । भवद्भिः कथं ज्ञातमित्यत आह्नः । स स्वयम्बर एव । आगच्छतां नो ऽस्माकमपादानमिसृतो ऽवधिभूतो ऽयं इत्यर्थः । वयमपि तत्र गतास्तत एव आगच्छाम इति सर्व्वो ऽपि वृत्तान्तो ऽस्माभिर्ज्ञायत इति । अतो ऽपि त्वया तत्र न गन्तव्यमिति भावः । विश्लेषे चञ्चलं स्थिरं वा यद्दासीनं तदपादानमिति वैयाकरणाः ॥ ११८ ॥

कथं यूनां गर्व्वनाशः को वा तया वृत इत्याशङ्कायामाह्नः । नागेष्विति । नागेषु वासुकिप्रभृतिषु सानुरागेषु दिविषत्सु अस्मदादिषु कौतुकवशादेव पश्यत्सु तान् सर्व्वाननादृत्य सा भैमी नागाद्यपेक्षया वरं सर्व्वगुणाश्रयत्वाच्छ्रेष्ठं भूपालं सार्व्वभौमं नलं सुवरं वरं परिणेतारमववरत् वरयामास । सर्वानादरेण नलवरणात् सर्व्वेषां सौन्दर्य्यगर्व्वो गत इत्यर्थः । पश्यत्सु दिविषत्सु इत्यनेनास्माभिः कौतुकार्थं वरदानार्थमेव च गतं न तु तद्वरणार्थमिति च व्याख्यान्तरेण सूचितमिति ज्ञेयम् । नागेष्वित्यादौ, षष्ठी चानादरे इति (पा० २।३।३८) सप्तमी । अववरत् । वर ईप्सायामिति चुरादावदन्तपाठात् स्वार्थणिजन्ताद्वरयतेश्चाल्लोपित्वात् सन्वद्भावादित्वदीर्घत्वाभावः ॥ ११९ ॥

भुजगेशानसद्देशान् वानरानितरान् नरान् ।
अमरान् पामरान् भैमी नलं वेद गुणोज्ज्वलम् ॥ १२० ॥
इति श्रुत्वा स रोषान्धः परमश्चरमं युगम् ।
जगन्नाशनिशारुद्रमुद्रस्तानुक्तवानदः ॥ १२१ ॥

किमिति ते परित्यक्ता इत्याशङ्कायां कारणमाह:। भुजगेशानिति। भैमी भुजगेशान् वासुकिप्रमुखान् फणागणजिह्वालालनादिवैरूप्यादसद्देशानमनोहरान् वेद जानाति। तथा इतरान् नलादन्यान् नरान् मनुजाधीशान् चापल्यनिर्गुणत्वाभ्यां वानरान् वेद। तथा अमरान् अचतुरत्वात् पामरान्नीचान् वेद। केवलं नलमेव गुणोज्ज्वलं शौर्यौदार्यसौन्दर्यादिभिः प्रकाशमानं वेद। सर्वगुणाकरत्वान्नल एव तया वृतोऽन्ये तु परित्यक्ता इत्यर्थः। विवर्णः पामरो नीच इत्यमरः। वेदेति इदानीमपि तथैव प्रतीतेः सत्त्वाद्वर्त्तमानता। विभक्तिप्रतिरूपको निपातो वा। तथाऽज्ञासीदित्यर्थः॥ १२० ॥

इतीति। चरममन्त्यं युगं स कलिः इतीत्यादिवचनं श्रुत्वा परमोऽत्युत्कटो रोषान्धः, रोषान्धितरां निर्विचारतया पुरःस्थमपि वस्त्वजानन्, अत एव जगन्नाशसम्बन्धिनी निशा, यस्यां निशि जगन्नाशो भवतीति यावत्, तत्सम्बन्धी प्रलयकाले सकलभूतग्रामसंहारसमर्थो रुद्रस्तद्वन्मुद्रा आकारो यस्य सः। क्रोधवशान्नितरामाविष्कृताकार इति यावत्। एवम्भूतः सन् तान् सुरानदो वक्ष्यमाणमुक्तवान्॥ १२१ ॥

कयापि क्रीडतु ब्रह्मा दिव्याः स्त्रीर्दीव्यत स्वयम्।
कलिस्तु चरतु ब्रह्म प्रैतु चातिप्रियाय वः ॥ १०२ ॥

पुनर्वक्ष्यसि मामेवमित्यादेरुत्तरमाह। कयेति। हे देवा ब्रह्मा कयाऽप्यतिसुन्दर्या गायत्र्यादिपदवाच्ययाऽज्ञातनामजातिगोत्रया वाऽथ चामरत्वाद् यस्या नामकथनेऽप्यस्माकं लज्जा भवति तया सुतया सह सुखेन क्रीडतु। तथा यूयं स्वयमात्मना दिव्याः स्वर्गभवा रम्भादीः स्त्रीः परस्यामुष्या वा रमणीर्दीव्यत स्वेच्छया ताभिः सह सुरतक्रीडां कुरुत। प्रजापतिः स्वां दुहितरमभ्यधावदिति श्रुत्या ब्रह्मणः स्वाच्छन्द्याद्भवतां सुतरां स्वाच्छन्द्यमिति स्वयमित्यनेनोक्तम्। कलिस्तु पुनर्ब्रह्मचर्याख्यं व्रतं यावज्जीवं चरतु वाऽथवा जीवन् कलिरस्मानुपहसिष्यतीति अनेन न जीवितव्यमिति वो युष्माकमतिप्रियाय नितरां तुष्टये प्रैतु म्रियताम्। स्वयं सर्व्वैः स्वेच्छाचारः क्रियते मया तु स्वेच्छाचारो न कर्त्तव्यो मर्त्तव्यमेवेति कीदृशीयं भवतां परप्रद्वेषरीतिरिति लोकरीत्युपहासः। अथ च यूयं ब्रह्मादयः सर्व्वेऽपि स्वेच्छाचारिणः स्वाच्छन्द्यं कुरुत नाम कलिस्तु न तादृशः ब्रह्मैव चरतु युष्माकमप्यतिप्रियाय प्रैमोल्लसणाय नस्तेन म्रियताम्। भवद्वत्स्वेच्छाचारं न करोमि किन्तु प्रैमोपहासे प्रवृत्तस्य मम मरणमस्तु स्यात्तदप्यस्त्विति भावः। अत्राप्युपहास एव तात्पर्य्यं क्रीडा चेति। दिवः कर्म्म चेति (पा० १।४।४३) करणस्यापि कर्म्मत्वात् स्त्रीभिरित्यर्थे स्त्रीरिति द्वितीया। १०२॥

चर्य्यैव कतमेयं वः परस्मै धर्म्मदेशिनाम्।
स्वयं तत कुर्व्वतां सर्व्वं श्रोतुं यद्बिभितः श्रुती ॥ १२३ ॥
तत्र स्वयम्वरेऽलम्भि भुवः श्रीर्नैषधेन सा।
जगतो ह्रीश्च युष्माभिर्लाभस्तुल्याभ एव वः ॥ १२४ ॥

उपहासमेव प्रकटयति । चर्य्येति । हे देवाः परस्मै अन्यस्मै जनाय स्वसुतादिगमनं न कार्य्यमिति धर्म्मदेशिनां धर्म्ममुपदिशतां स्वयं तद्ब्रह्महत्यास्वसुतादिगमनं सर्व्वं निषिद्धं कर्म्म कुर्व्वतां वो युष्माकमियं कतमैव कैव चर्य्या आचाररीतिरपि तु न कापीत्याक्षेपः । अचेतने अपि श्रुती कर्णौ यद्भवदीयमहल्यादिगमनं कर्म्म श्रोतुं बिभितः त्रस्यतः । स्वेच्छाचारिणां भवतां परपीडायामेव तात्पर्य्यमिति भावः । चर्य्या । गदमदेति (पा० ३।१।१००) भावे यत् ॥ १२३ ॥

तत्रेति । तत्र स्वयम्वरे नैषधेन भुवः श्रीः सौन्दर्य्याद्भुतलक्ष्मीः सा भैमी अलम्भि प्राप्ता । युष्माभिस्तु पुनर्जगतो ह्रीस्त्रैलोक्ये यावती वर्त्तते सा लज्जा जगतः सकाशाद्वा, भैम्याऽनादृतत्वात् या लज्जा सा लब्धेति वो नलस्य युष्माकञ्च लाभोऽपूर्व्ववस्तुप्राप्तिस्तुल्याभ एवाभासते । तुल्याभ एव । सकारहकारमात्रवैकल्यं, इतरत्तुल्यमेव। भवद्भिर्लब्धैव लज्जा न तु भैमीति रूपस्य दर्पो वृथैवेति भावः । अयञ्च यूयञ्च यूयं तेषां वः एकशेषः ॥ १२४ ॥

दूरान्नः प्रेक्ष्य यौष्माकी युक्तेयं वक्रवक्रता ।
लज्जयैवासमर्थानां मुखमस्माकमीक्षितुम् ॥ १२५ ॥
स्थितं भवद्भिः पश्यद्भिः कथं भोस्तदसाम्प्रतम् ।
निर्दग्धा दुर्विदग्धा किं सा दृशा न ज्वलत्क्रुधा ॥१२६॥

दूरादिति । आगच्छतो नोऽस्मान् दूराद् दूरत एव प्रेक्ष्य यौष्माकी इयं वक्रवक्रता मुखकौटिल्यकरणं युक्तैव । किम्भूतानां । गुणीभूतस्य विग्रहान्तर्गतस्य युष्मच्छब्दस्य विशेषणं । यतो भैम्यकृतत्वात् मञ्जातलज्जयैव हेतुना ऽस्माकं मुखमीक्षितुमसमर्थानां । लज्जाशीलो ह्यन्यं दूरादेव दृष्ट्वा लज्जया मुखं न दर्शयति सलज्जा भवन्त इति युक्तमेवैतदिति भावः । अयमप्युपहासः । लज्जयैवेति पाठ उत्प्रेक्षा । प्रेक्ष्येति वक्रतापेक्षया समानकर्तृत्वं दूरादेव दृष्ट्वा । यौष्माकीति, तस्येदमिति (पा० ४।३।१२०) अणि, तस्मिन्नणि चेति (पा० ४।३।२) युष्माकादेशः । युष्माकमिति पाठः साधुः । एवमस्माकमित्यत्रापि द्रष्टव्यं । वक्रेति नामधातोर्यच् ॥ १२५ ॥

स्थितमिति । भो देवास्तन्नलवरणं पश्यद्भिर्भवद्भिः कथं स्थितमासीत्स्थितमिति शेषः । असाम्प्रतमनुचितमेतदित्यर्थः । दुर्विदग्धा भवदवज्ञानादचतुरा सा भैमी ज्वलन्ती उद्दीप्यमाना क्रुत् क्रोधो यस्याः तया दृशा कृत्वा किमर्थं न निर्दग्धा सुतरां न भस्मसात्कृता, अपि तु तादृगसामर्थ्यसद्भावे तस्याश्च सापराधत्वे दग्धुमुचितं, तदपि न कृतमित्येतदप्यनुचितमेवेत्यर्थः ।

महावंशाननादृत्य महान्तमभिलाषुका।
स्वीचकार कथंकारमहो सा तरलं नलम् ॥ १२७ ॥
भवादृशैर्दिशामीशैर्मृग्यमाणां मृगेक्षणाम्।
स्वीकुर्व्वाणः कथं सोढः कृतरीढस्तृणं नलः ॥ १२८ ॥

युक्ते द्वे साम्प्रतं स्थाने इत्यमरः। भोरिति प्रत्येकं सम्बुद्धिः ॥ १२६ ॥

महेति। कुलशीलादिना महान्तमुत्कृष्टं नलं अभिलाषुका सा भैमी कश्यपसुतत्वान्महावंशान् दिव्यवस्त्रादिभूषणान् युष्मान् परित्यज्य तरलं चञ्चलस्वभावं अनिश्चितबुद्धिं नलं कथंकारं कथमिव स्वीचकार अहो आश्चर्य्यं। महान्तं कामयमानाया देवपरित्यागेन मनुष्यवरणान्महच्चित्रमित्यर्थः। अथ च या महापरिमाणं वाञ्छति सा विशालान् दृढान् वेणून् परित्यज्य नरङ्गस्पर्शमात्रेणापि चञ्चलं क्रस्वञ्च नलाख्यं तृणमङ्गीकरोतीति चित्रमेव। अत एव सा किं न भवद्भिर्दण्ड्येति भावः। अभिलाषुका। लषपत० (पा० ३।२।१५४) इत्युकञ्। महान्तं इति, नलोकेति (पा० २।३।६९)। षष्ठीनिषेधाद् द्वितीया। कथंकारं पूर्व्ववत् ॥ १२७ ॥

इदानीं नलः कथं सोढ इत्याह। भवादृशैरिति। भो देवा दिशामीशैर्महासमृद्धिभिर्भवादृशैर्मृग्यमाणां काम्यमानां मृगेक्षणां भैमीं स्वीकुर्व्वाणः समुद्वहन् अत एव भवत्सु कृतरीढः कृतावज्ञः तृणतुल्योऽतिनिःसारः, अथ च नलशब्दवाच्यत्वात्

दारुणः कूटमाश्रित्य शिखी साक्षी भवन्नपि।
नावहत् किं तदुद्वाहे कूटसाक्षिक्रियामयम्॥ १२९॥
अहो महःसहायानां सम्भूता भवतामपि।
तमैवास्मै कलङ्काय देवस्यैवास्तनद्युतेः॥ १३०॥

तृणभृतः स नलो भवद्भिः कथं केन प्रकारेण सोढः क्षान्तः। सा भवद्भिरभिलषिता तया तु भवन्तो नादृता इत्युपहासः। मृगतृणां। न लोकेति (पा० २।३।६९) षष्ठीनिषेधाद्द्वितीया। सोढः। तीषसहेति (पा० ७।२।४८) इड्विकल्पात्, यस्य विभाषेति (पा० ७।२।१५) निष्ठायां नेट्॥ १२८॥

दारुण इति। अयं शिखी वह्निर्दारुणः कूटं काष्ठराशिं आश्रित्याग्निसाक्षिके विवाहे साक्षी भवन्नपि साक्षाद्द्रष्टा भवन्नपि तत्र प्रकाशमानोऽपि तयोर्भैमीनलयोस्तस्य तस्या वा उद्वाहे विवाहे विषये कूटसाक्षिणोऽलीकसाक्षिणः क्रियां सत्यापलापलक्षणां किन्नावहत्, अपि त्वेतदप्यनुचितं कृतं। कूटसाक्षी हि परकीयं वस्त्वन्यस्मै दापयति। तदनेन प्रायशस्तत्र न स्थितमित्यग्निसाक्षिको विवाह एव न भवतीति भैमी नलेन नोढेति भैमी नलादन्यस्मै भवत्स्वेव मध्ये कस्मैचित् किमिति न दापितेत्यर्थः। अथ च दारुणः पापकारित्वादतिक्रूरः पुरुषः कपटमाश्रित्य व्यवहारे साक्षी भवन्नपि तस्य चित्ते धृतस्य कार्य्यस्योद्वाहे कूटसाक्षित्वं धत्ते अत्र तु नत्याश्चर्य्यं॥ १२९॥

अहो इति। हे देवा महःसहायानां तेजस्विनां दिव्यम्-

**सा वव्रे यं तमुत्सृज्य मत्सामीर्ष्याजुषः स्थ किम्।**
**कृतागःसद्म नस्तस्माच्छद्मनाद्याच्छिनद्मि ताम्॥ १३१॥**

र्त्तीनां भवतामपि क्षमैवास्मै कलङ्काय, इन्द्रादिषु मत्स्वपि भैमी नलं वृतवतीति अपयशसे, अथ च नलकृतानादररूपाय, अथ च लज्जावशादन्यवनवीक्षणाशक्तिमुखमालिन्यरूपाय कलङ्काय सम्भूता। अहो महदाश्चर्यं। गुणभूतापि क्षमा दोषाय जातेत्यर्थः। महःमहायस्य तेजस्विनो देवस्य दीप्यमानस्यामृतद्युतेश्चन्द्रस्येव। यथा चन्द्रस्य क्षमा भूमिः कलङ्काय जाता भवतामपीत्यपिशब्देन यत्र कलङ्कशङ्कापि नाप्नोति सूचितम्। भूश्चन्द्रे कलङ्क इति ज्योतिर्विदः। महःमहायानामपीति वा चन्द्रस्य यथा तथा भवतामपीति समुच्चयार्थो वा। क्षमां परित्यज्य भवद्भिरस्येतरस्य चेद् दण्डो नाकरिष्यत् तर्ह्ययशो नाभविष्यदिति भावः॥ १३०॥

सेति। हे देवाः सा भैमी यं वव्रे तं नलं उत्सृज्य यूयं स्थ मत्सां कलयं किमिति ईर्ष्याजुषः असहिष्णवः स्थ भवथ अपराधिनमस्यापकर्त्तुमशक्ताः सन्तोऽनपराधाय मह्यं किमिति ईर्ष्यायुक्ताः स्थेत्युपहासः। तस्माद्यूयं कृत कथयत। अहं तस्मात्तस्मात् सकाशाच्छद्मना कपटेन कथमपि वञ्चयित्वा अद्यैव तामाच्छिनद्मि आहरामि। यत आगसा भवदनादररूपापराधस्य सद्माश्रयभूतस्तस्मात्। अविलम्बेनैव तामाहरामि गच्छति मामनुमन्यध्वमित्यर्थः। अन्येनापराधे कृतेऽन्यस्मै क्रुध्यत इति युक्तमिति लोकरीत्युपहासः। कृत नो युष्माकमस्माकञ्चा-

यतध्वं सहकर्त्तुं मां पाञ्चाली पाण्डवैरिव।
सापि पञ्चभिरस्माभिः संविभज्यैव भुज्यताम्॥ १३२॥
अथापरिवृढा सोढुं मूर्खतां मुखरस्य ताम्।
चक्रे गिरा शराघातं भारती सारतीव्रया॥ १३३॥

गःमह्यं अनादरकरणात् अपराधिनीं तां बलादानयामीति वा। मह्यं। क्रुधद्रुहेति (पा०१।४।३७) चतुर्थी। आच्छिनद्मि। वर्त्तमानसामीप्ये लट्॥ १३१॥

यतध्वमिति। यूयं मां सहकर्त्तुं सहकारिणं कर्त्तुं यतध्वं यत्नं कुरुत। भैमीमानेतुमहं गच्छामि यूयं मम सहायार्थ-मागच्छतेत्यर्थः। तत्र साहाय्येऽस्माकं किं फलमित्यत आह। अस्माभिरिन्द्राग्नियमवरुणैर्मया सह पञ्चभिः सा भैम्यपि संवि-भज्य भोगकालं समानभागमेव कृत्वैवोपभुज्यतां। तथा च भव-तामपि फलमस्तीति भावः।कैः केव।पञ्चभिः पाण्डवैः पाञ्चाली द्रौपदीव। पाञ्चालीदृष्टान्तेनैकस्याः पतिव्रताया बहुभिरुप-भोगेन दृष्टचरा इत्यलौकिकत्वं परिहृतं। पाण्डवानामग्रभा-वित्वात् तदानीं दृष्टान्तत्वेन कलेर्योगित्वात् भविष्यदर्थज्ञान-सामर्थ्याद्वचनं युक्तम्। जगत्प्रवाहानादितया पाण्डवपाञ्चाली-वृत्तान्तानामतीतत्वात्तदुदाहरणीकृत्यैतदुक्तमिति। पाञ्चाली। जनपदवाचिनः क्षत्रियस्याभिधायिनः पञ्चालशब्दः, जनपदश-ब्दात्क्षत्रियादिति (पा०४।१।१६८) अपत्येऽञ्॥ १३२॥

अथेति। अथ पूर्वोक्तकलिवचनाकर्णनानन्तरं तामुक्तप्र-

कीर्त्तिं भैमीं वरांश्चास्मै दातुमेवागनन्नमी ।
न लीढे धीरवैदग्धीं धीरगम्भीरगाहिनी ॥ १३४ ॥

कार्यं मुखरस्यानुचितभाषणशीलस्य कलेर्मूर्खतां सोढुं चन्द्रमपरिवृढाऽसमर्था भारती सरस्वती अर्थगाम्भीर्य्यात् सारया श्रेष्ठया परुषत्वाच्च तीव्रया दुःसहया गिरा कलेः शराघातं वाणव्यथामिव चक्रे वाणवत् पीडाकरं परुषं वचनमूचे इत्यर्थः । भारतीत्रयेति पाठे अर्थगाम्भीर्य्येण दुःसहया ॥ १३३ ॥

कीर्त्तिमिति । हे कले अमी देवा अस्मै नलाय भैमीं दातुमेव, तथा भैमीं कामयमानोऽपि इन्द्राद्यर्थं भैम्या एव दूत्यं कृतवानेवंविधोऽतिधीरः कोऽपि नास्तीति कीर्त्तिं यशः, तथा भैमीश्च प्रत्यक्षलक्ष्यां, तथोक्तप्रकारान् वरांश्चास्मै नलाय दातुमेवागमन् स्वयम्वरञ्जतवन्तो न तु भैमीं वरीतुमिति त्वं ना वेत्सीत्यर्थः । देवा हि केनापि प्रकारेण परीक्ष्य परितुष्टाः सन्तो वरं ददते । कुतोऽहं न वेद्मीत्यत आह । यस्मादगम्भीरस्य तलस्पर्शस्य गाहिनी स्पर्शिनी गम्भीरार्थग्राहिणी न भवतीत्यर्थः, एवम्भूता मूढानां बुद्धिर्धीराणां महाशयानां वैदग्धीं चातुरीं न लीढे न वेत्तीत्यर्थः । त्वं तु मूर्खत्वादेतेषां अभिप्रायमज्ञात्वापहसितवानिति भावः । अधीरेत्यकारप्रश्लेषेण सम्बोध्य, अगम्भीरगाहिनी ते धीर्वैदग्धीमर्थादेतेषां न लीढ इति वा । हे अधीर्बुद्धिरहित मन्दबुद्धे कले अगम्भीरगाहिनी ते धीरवैदग्धीमचातुर्य्यं नास्वादयत्यपि तु प्राप्नोत्येवेति काक्का वा

वाग्मिनीं जडजिह्वस्तां प्रतिवक्तुमशक्तिमान् ।
लीलावहेलितां कृत्वा देवानेवावदत् कलिः ॥ १३५ ॥
प्रोक्ति वाञ्छितमस्माभिरपि तां प्रति सम्प्रति ।
तस्मिन्नले न लेशोऽपि कारुण्यस्यास्ति नः पुनः ॥ १३६ ॥
वृत्ते कर्म्मणि कुर्म्मः किं तदा नाभूम तत्र यत् ।
कालोचितमिदानीं नः शृणुतालोचितं सुराः ॥ १३७ ॥

व्याख्येयं । मीढं । लिहेः स्वरितत्वात्तङ् । क्वचिन्मीढेति पाठः ॥ १३४ ॥

वाग्मिनीमिति । कलिः वाग्मिनीं वाचा युक्तिपरम्पराचतुरां तां देवीं प्रतिवक्तुं प्रत्युत्तरं दातुं अशक्तिमान् असमर्थो यतः प्रत्युत्तरास्फुरणात् जडजिह्वः कुण्ठितवदनशक्तिः अत एव तां लीलया विलासव्याजेनावहेलितां कृत्वाऽप्रिये त्वां प्रति वक्तुमयुक्तमित्येवंप्रकारं परिहास्य देवानेवावदत् ॥ १३५ ॥

प्रोक्तीति । हे देवाः सम्प्रति अस्माभिरपि तां भैमीं प्रति वाञ्छितं अभिलाषः प्रोक्ति परिमार्जितं त्यक्तमित्यर्थः । नोऽस्माकं पुनः कारुण्यस्य लेशोऽपि तस्मिन्नले नास्ति नलमपकर्त्तुं प्रवृत्तामह इत्यर्थः । प्रोक्ति । उञ्छेर्वर्जनार्थात् कर्म्मणि क्तिण् ॥ १३६ ॥

वृत्त इति । हे देवाः स्वयम्वरलक्षणे कर्म्मणि वृत्ते जाते सति किं कार्य्यं कुर्म्मोऽपि तु किञ्चिदिदानीं कर्त्तुं न शक्यं । पश्चात्तापमात्रं भवति न तु तल्लाभः परदारत्वाद्गतशोको न

प्रतिज्ञेयं नले विज्ञाः कल्नेर्विज्ञायतां मम ।
तेन भैमीञ्च भूमिञ्च त्याजयामि जयामि तम् ॥ १३८ ॥
नैषधेन विरोधं मे चण्डतामण्डितौजसः ।
जगन्ति हन्त गायन्तु रवेः कैरववैरवत् ॥ १३९ ॥

कर्त्तव्य इति च। तस्मात्तां प्रति वाञ्छितं त्यक्तमित्यर्थः। यद् यस्मात्तदा स्वयम्वरसमये वयं तत्र नाभूम स्थिताः। तदानीं चेत्तत्र भविष्यामस्तर्हि तथैवाकरिष्यामस्तन्नाभूदित्यर्थः। हे देवा यूयं इदानीं पुनर्भैम्या नले वृते सत्यपि कालोचितं मम-योचितं नोऽस्माकमालोचितं विचारं शृणुत आकर्णयत। नले कृपालेशोऽपि नास्ति इति मयोक्तं तत्प्रकारमाकर्णयतेत्यर्थः। नः। अस्मदोर्द्वयोश्चेति (पा० १।२।५९) बहुत्वं। आलोचितं भावे क्तः ॥ १३७ ॥

तदेवाह। प्रतिज्ञेति। हे विज्ञाः कलेर्ममेयं प्रतिज्ञा नले विषये विज्ञायतां भवद्भिरिति शेषः। इयमिति किं। अहं तेन नलेन प्रयोज्येन भैमीञ्च भूमिञ्च त्याजयामि शीघ्रं मोचयामि अत एव तं जयामि इति प्रतिज्ञा मम चेतस्येवं वर्त्तत इति भवद्भिर्ज्ञायत एव तथापि स्पष्टं मया कथ्यते, तदाकर्ण्यतामि-त्यर्थः। कलेर्ममेत्यहङ्कारः सूचितः। तेन। अनुक्ते कर्त्तरि तृतीया। त्याजयामि जयामीति वर्त्तमानसामीप्ये भविष्यति लट् ॥ १३८ ॥

नैषधेनेति। चण्डतया भूमिभैमीपरित्याजनद्वाराऽतिपीडा-

द्वापरः साधुकारेण तद्विकारमदीदिपत् ।
प्रणीय श्रवणे पाणिमवोचन्नमुचे रिपुः ॥ १४० ॥

कारित्वान्निर्दयत्वेन मण्डितोऽजस्रोऽलङ्कृततेजसा मे तस्य नैषधेन सह विरोधं जगतीत्रयेऽपि लोका गायन्तु कीर्त्तयन्तु । कस्य किमिव । चण्डतामण्डितोऽजस्रं रवेः सूर्य्यस्य कैरवैः कुमुदैः सह वैरवत् विरोधमिव । हन्त खेदे । अयोग्येन हीनतेजसा नलेन सह विरोधारम्भात् त्रैलोक्ये यद्यप्ययशो भविष्यति तथापि किं कुर्म इति रे वद । अपयशःसमुदयेऽपि सूर्य्येण कैरववैरवत् मयापि नलवैरं करिष्यत एवेति भावः । एतेन दर्पः सूचितः ॥ १३८ ॥

द्वापर इति । द्वापरस्तृतीययुगरूपः सहचरः तस्य कलेर्विकारं नलेन सह विरोधरूपं साधुकारेण साध्विति शब्दोच्चारणेन अदीदिपत्, साधूचितमेव त्वया विचारितमित्युद्दीपयामास, तस्य प्रोत्साहनं चकारेत्यर्थः । अथ नमुचेर्दैत्यस्य रिपुरिन्द्रो युष्माभिः साहाय्यं कर्त्तव्यमिति कलिनोक्तस्य वचस उत्तरत्वेनैतद्व्यापारमध्येऽस्माभिर्न स्थीयत इति लौकिकाभिनयव्यञ्जनवशाच्छ्रवणे पाणिं प्रणीय यत् त्वया विचारितं तदस्माभिः श्रोतुमप्यनर्हमिति वा पाणिभ्यां कर्णौ पिधाय कलिमवोचत् । अदीदिपत् । दीपेर्ण्यन्ताल्लुङि, भ्राजभासभाषदीप (पा० ७।४।३) इत्यादिनोपधाह्रस्वविकल्पः ॥ १४० ॥

विस्मेयमतिरस्मासु साधु वैलक्ष्यमीक्षसे ।
यद्दत्तेऽल्पमनल्पाय तद्दत्ते ह्रियमात्मने ॥ १४१ ॥

विस्मेयेति । हे कले त्वं विस्मेयाश्चर्यहेतुर्मतिर्यस्यैवंविधोऽसि यस्मात्त्वमस्मासु वर्त्तमानं वैलक्ष्यं सलज्जत्वं साधु सम्यक्प्रकारेण ईक्षसे जानासि । पराशयवेदितया तव तीक्ष्णबुद्धित्वादयं विस्मिताः स्म इत्युपहासः । साधूचितं यद्वैलक्ष्यं तदस्मादीक्षस इति वा । कथं भवतां वैलक्ष्यमुचितमित्याशङ्क्य समर्थयते । पुरुषोऽनल्पाय महते पुरुषायाल्पं अतितुच्छं वस्तु दत्ते इति यत् स पुरुषस्तदल्पवस्तुदानं कर्म्म आत्मने स्वस्मै ह्रियमेव दत्ते । महते यत् अल्पं दीयते तदल्पदानमेव कर्तृ दातृ पुरुषाय लज्जामेव दत्ते । तेन तस्य लज्जैव भवतीत्यर्थ इति वा । तथा च महते नलाय अस्माभिरल्पमेव दत्तमिति विषादादस्माकं लज्जा युक्तैवेति भावः । अतितरां नलमाहात्म्यं सूचितम् । एतेन दूरान्नः प्रत्यर्पिते तस्योत्तरं । यद्यदि तत्तदीति वा योज्यं । यद्वा अनल्पाय न विद्यतेऽल्पो यस्मादिति हीनायेत्यर्थः । यदस्मादिरल्प कस्त्वाऽयं धर्म्ममर्माणि कलातीत्याद्युपालम्भवचनं दत्ते करोति तत् स्वस्मै ह्रियमेव दत्ते । अधमस्य महोपालम्भायोग्यस्य तवाल्प एवोपालम्भः कृत इति विषादादस्माकं वैलक्ष्यं युक्तमेवेति व्याख्येयम् । अधमायाल्पमपि उपालम्भादि यद्दत्ते तत् स्वस्मै ह्रियं दत्ते । अधमेन सह सम्भाषणनिषेधात् तस्योपालम्भोऽपि न कार्य्यः स त्वस्माभिः कृतः । तथा च पापरूपेण भवता

फलसीमां चतुर्वर्गं यच्छतांशोऽपि यच्छति।
नलस्यास्मदुपघ्ना सा भक्तिर्भूतावकेशिनी॥ १४२॥

सह समापणमस्माभिरनुचितं कृतमिति विषादादस्मासु वैलक्ष्यं युक्तमेवेति वा। इयमपि वक्रोक्तिः॥ १४१॥

दानात्मत्वनलमहत्त्वप्रकटनपूर्वं वैलक्षण्यस्यौचित्यं समर्थयते। फलेति। यस्या नलभक्तेः शतांशोऽपि शततमो भागः फलस्य सीमां मर्यादीभूतां निरतिशयफलरूपं चतुर्वर्गं धर्मार्थकाममोक्षरूपं यच्छति नलाय दातुं शक्नोति सास्मदुपघ्नाऽस्मदाश्रयास्मद्विषया नलस्य भक्तिरवकेशिनी फलभूता जाता। यस्या भक्तेः शततमेनांशेन वशीकृतैरस्माभिः सन्तुष्य फलरूपत्वेन चतुर्वर्गोऽपि नलाय दातुं शक्यते तस्या निरतिशयायाः परिपूर्णायाश्चतुर्वर्गादधिकतमस्य फलस्याभावादस्माकं दातुमसामर्थ्यात् सा निष्फलैव जातेत्यर्थः। निरतिशयभक्तियुक्तत्वान्महते नलाय चतुर्वर्गोऽप्यल्पतरफलत्वाद्दातुमयुक्तः। तादृशाय भैमीलक्षणाल्पतमफलदाने कृतेऽस्माकं लज्जा युक्तैवेति भावः। यच्छततमांशवशीकृतैरस्माभिर्दत्तसामर्थ्यो नलोऽप्यन्यस्मै जनाय फलावधि चतुर्वर्गं दातुं शक्नोतीति यावत् सा भक्तिरपूर्णा निष्फला जातेति वा व्याख्येयम्। सोऽपीति पाठे चतुर्वर्गं ददतामस्माकं स नलोऽपि क्रियमाणकर्मफलमर्यादां ब्रह्मार्पणं ददाति। तस्याः पुनः प्रत्यर्पणात् अस्माकञ्च साम्यमेव। किन्तु नलस्यास्मद्विषया निरतिशया कर्ममात्रस्यापि ब्रह्मणे वार्पणात्

भव्या न व्यवसायस्ते नले साधुमतौ कले।
लोकपालविशालोऽसौ निषधानां सुधाकरः ॥ १४३ ॥
न पश्यामः कलेस्तस्मिन्नवकाशं क्षमाभृति।
निश्चिताखिलधर्म्मे च द्वापरस्योदयं वयम् ॥ १४४ ॥

फलाभिसन्धानरहिता भक्तिर्बन्ध्या जाता। तादृशम् भक्ति-फलदानेऽस्माकमसामर्थ्यात् तथा च वैलक्षण्यं युक्तमेवेति व्याख्येयम्। यच्छ्रुतां। सम्बन्धे षष्ठी। शतस्याभावशस्येति विगृह्य लक्षणया शततमोऽंश इति। उपघा आश्रय इति माधः॥ १४२॥

नलो वैराही न भवतीत्याह। भव्य इति। हे कले रागद्वेषादिराहित्येन साध्वी निर्म्मला मतिर्यस्य तस्मिन्नले विषये ते व्यवसायो वैरकरणाद्यमो भव्यः शुभोदर्को न। किन्तु निषधदेशानामाह्लादकत्वात् सुधाकरश्चन्द्रोऽयं नलः, लोकपाला दिक्पालास्तद्वद्विशेषेण शालते शोभते स्वाभाविकेन शौर्य्यादिना तदंशत्वाद्वा लोकपालवन्महाशयः। अतस्तेन सह वैरं तव शुभोदर्कं न भवतीति न तत् कार्य्यमित्यर्थः। मते इति पाठे, असाध्वी मतिर्यस्येति अकारप्रश्लेषेण कलेर्विशेषणं। मतः कलेरिति पाठे असाधोर्द्वापरादेरनुमत इति व्यवसायविशेषणम्॥ १४३॥

एतदेव स्फुटयति। नेति। वयं तस्मिन् क्षमाभृति राज्ञि नले कलेस्तुर्य्ययुगस्य तवावकाशं प्रवेशावसरं न पश्यामः सम्भावयामः। तथा भवन्मित्रस्य द्वापरस्य च उदयं नलपराभवसामर्थ्यं न

**सा विनीततमा भैमी व्यर्थानर्थग्रहैरहो।**
**कथं भवद्भिर्बाध्या प्रमितिर्विभ्रमैरिव॥ १४५॥**

सम्भावयामः यतो नितरां चिता अर्जिता अखिला धर्मा येन श्रौतस्मार्त्तधर्मानुष्ठानरीतिरुभयत्र हेतुः। तस्य धर्ममयत्वाद्‌भयोः पापरूपत्वात्तत्रावकाशलेशोऽपि न सम्भाव्यत इत्यर्थः। यद्यपि देवा नलपराभवस्य भविष्यत्तां जानन्ति त[illegible]त्साह‌भङ्गद्वारा कलिनिषेध एव तात्पर्य्यात् अवक[illegible] न पश्याम इत्यूचुः। यद्वा पश्याम इति वर्त्तमानसामीप्ये भविष्यति लट्‌प्रयोगात् प्रस्तुतोऽवकाशो नास्ति विलम्बेन भविष्यतीति सूचितमिति ज्ञेयम्। अथ च यथासङ्ख्येन तितिक्षाशीले पुरुषे कलहावकाशो न निश्चितः सकलधर्मरहस्ये च सन्देहस्योदयः प्रभवतीति युक्तम्॥ १४४॥

भैम्यपि न बाध्येत्याह। सेति। पातिव्रत्यादिधर्मनिष्ठत्वाद्विनीततमा सा भैमी व्यर्था निर्हेतुका वैराचरणलक्षणोऽनर्थस्तत्र ग्रहोऽभिनिवेशो येषां तैर्भवद्भिः कथमिव बाध्या पीडयितव्याऽनुचितमेतत्। अहो कष्टम्। सम्बुद्धिर्वा आश्चर्य्ये वा। कैः केव। विशिष्टैर्भ्रमैर्विपर्य्ययज्ञानैर्विनीतं सुतरामपाकृतं तमोऽज्ञानं ययैवम्भूता भ्रान्तिज्ञानविरोधिनी प्रमितिः सम्यगनुभूतिस्तात्त्विकरजतादिधीरिव। कथं बाध्येत्यर्थः। किम्भूतैर्विभ्रमैः। अव्यर्था निष्फलोऽनर्थस्य शुक्तिरजतादेर्ग्रहो ज्ञानं येषां तैः। अविनीततम आ इति पदच्छेदः। आः कोपे, नितरामविनीत अधम कले इति वा॥ १४५॥

तन्नासत्ययुगं तौ वा त्रेता स्पर्द्धितुमर्हति ।
एकप्रकाशधर्म्माणं न कलिद्वापरौ युवाम् ॥ १४६ ॥

तन्नेति । उक्तिविशेषेण षड्भिः श्लोकैः पुनरपि तौ स्तौति । तमिति । स असत्यं नासत्यं किन्तु सत्यमेव युगं सत्ययुगं कृतयुगमिति यावत् । तत् तं नलं तौ भैमीं वा स्पर्द्धितुं तुलयितुं अर्हति तथा त्रेतायुगमपि स्पर्द्धितुमर्हति न तु जेतुमित्यर्थः । यथा सङ्ख्येन वा योज्यं । यस्मादेको मुख्यः स चासौ प्रकाशधर्म्मा च तं तौ च प्रकाशः प्रसिद्धो धर्म्मो यस्य यस्याश्च । पश्चादेकशब्देन कर्म्मधारयः, लोकत्रयस्त्रीपुंसमध्ये तावेव धर्म्मप्रधानौ यतः तस्मात् सत्ययुगस्यापि चतुश्चरणधर्म्मत्वादेकप्रकाशधर्म्मत्वात् सत्ययुगं स्पर्द्धितुमर्हति, त्रेतायास्तु त्रिचरणधर्म्मत्वेऽपि कलिद्वापरापेक्षया धर्म्मबाहुल्यात् कृतयुगसाधर्म्म्यात् एकप्रकाशधर्म्मत्वसम्भवात् सापि स्पर्द्धितुमर्हतीत्यर्थः । कलिद्वापरौ युवां युगे पुनः तौ स्पर्द्धितुं नार्हथ, इति विभक्तिविपरिणामः कार्य्यः । तयोर्द्धर्म्मैकप्रधानत्वात्, युवयोश्चाधर्म्मबाहुल्यात्, युवां तौलयितुमसमर्थौ किं पुनर्जेतुमित्यर्थः ।आ सामस्त्येन सत्यं यत्र तदासत्यं तत्र तद्युगं चतुश्चरणाधर्म्मयुक्तं कृतयुगं तत्र त्रेतायुगं तौ स्पर्द्धितुं नार्हतः अपि त्वर्हत एवेति काकुः । उक्तादेव हेतोः नासत्ययुगं कृतयुगं तौ स्पर्द्धितुमर्हति । तत्रैव तयोः सत्त्वाद् धर्म्मप्रधानाच्च । त्रेतायुगञ्च नार्हति । त्रयाणामप्यधर्म्मसंस्पर्शात् । तत्र तयोरसत्त्वाच्चेति वा । कलिद्वापरयोः

प्रकृष्टत्वात् नलेन सह त्रेतायाश्च स्त्रीत्वात् भैम्या सह स्पर्द्धासम्भावनायां पार्थक्येन निषेधो युक्त इति वा । कृतयुगं तं स्पर्द्धितुं नार्हति । युवामपि नार्हथः । सत्ययुगेऽधर्म्मलेशसम्भावनापि सम्भवेत्तु नले । तथा त्रेतायामपि न तु भैम्यां । तथा चाद्य-युगद्वयं ताभ्यां स्पर्द्धितुमपि न शक्यं, युवां पुनर्न शक्ताविति किं वाच्यमित्यर्थ इति वा । अथ च दक्षयार्युगं नलं स्पर्द्धितु-मर्हति । गार्हपत्याहवनीयदक्षिणाग्नित्रयरूपा त्रेता च भैमीं स्पर्द्धितुमर्हति । यत एकः केवलः प्रकाश उज्ज्वलः प्रसिद्धो वा, धर्म्मस्वभावः सौन्दर्य्यादिगुणो वा, ययोर्भैमीनलयोः प्रकाशशा-भालक्षणो धर्म्मो ययोरिति वा । अग्नित्रयपक्षेऽप्येकः केवलः प्रकाशस्तेज एव धर्म्मस्वभावो यस्या इति सौन्दर्य्याद्दीप्तत्वात् पवित्र्याच्च दक्षयुगमग्नित्रयश्च ताभ्यां तुल्यं भवितुमर्हतीत्यर्थः । कलिद्वापरौ युवां पुनर्न । असुन्दरत्वात् पापप्रधानत्वाच्चेत्यर्थः । अथ चैको विरुद्धधर्म्मरहितः प्रकाशो निश्चितश्च धर्म्मो यत्र तस्य तास्य कलहसन्देहौ स्पर्द्धितुं नार्हतः । विरुद्धधर्म्मत्वे हि कलहसम्भवो विशेषधर्म्मप्रकाशे च सन्देहसम्भवः । तत्र त्वेकध-र्म्मत्वात् प्रकाशमानधर्म्मत्वाच्च कलहसन्देहौ न सम्भवत इति युक्तमिति भावः । त्रेताग्नित्रितये युगे, प्रकाशस्तु प्रसिद्धे स्यात्, सन्देहद्वापरौ चार्थेत्यमरः । प्रकाशधर्म्मशब्दयोः पूर्व्वं बहुव्रीहौ, धर्म्मादनिच् केवलात् (पा० ५।४।१२४) इति समासान्तः, पश्चात् पूर्व्वेण समासः ॥ १४६ ॥

करिष्येऽवश्यमित्युक्त्वा करिष्यन्नपि दुष्यसि।
दृष्टादृष्टा हि नायत्ताः कार्य्येया हेतवस्तव ॥ १४७ ॥

करिष्य इति। हे कलेऽवश्यं निश्चितं करिष्येऽर्थान्नलपराभवं इत्युक्तिः प्रतिज्ञावचो यस्य एवम्भूतस्त्वं करिष्यन्नपि कर्त्तुकामोऽपि दुष्यसि दुष्टो भवसि। अपकारस्य भविष्यत्त्वादिदानीं साक्षात्कायव्यापाराभावेऽपि मनसापकारकरणामनसा कृतत्वात् वचनेन चानुवादादिविधबाधकसद्भावात् ब्रह्महत्याया अकरणेऽपि ब्रह्महत्यां करिष्यामीत्यादाविवेत्यर्थः। कुर्व्वाणो दुष्टो भविष्यसीति किं वाच्यमित्यपिशब्दार्थः। अथ वा कर्त्ता दुष्यस्येव प्रतिज्ञाभङ्गादिति किं वाच्यमिति। कार्य्यसाधिका दृष्टादृष्टसामग्री तावत्त्वया सम्पादयितुमशक्या किन्तु सा तस्य तस्य तत्तत्कर्म्मवशात् स्वयमेव सम्पद्यत इत्यर्थान्तरन्यासः। तथा चैवं त्वया चित्ते धृतेऽनुदिते चेद्विविधपातकमेव भवति न तु तं पराभवितुं शक्नोषीति। यद्यपि तं पराभवितुं शक्नोषि तथापि तन्नाय दृष्टादृष्टसामग्र्येव तत्र प्रयोजिका न तु त्वमिति। मयैवं करिष्ये मयैवं हतमित्यादिरूपां प्रतिज्ञां प्रति स्वमात्रस्य कारणत्वाभावात् दृष्टादृष्टकारणानुगुणेन प्रतिज्ञाभङ्गस्यापि शङ्कितत्वादिन्द्रोऽपि कर्त्तुमशक्तस्त्वं तु को नाम वराक इति च भावः। यद्वा दृष्टादृष्टरूपा हेतवः। दृष्टसामग्री यथा कथञ्चित् यद्यपि सम्पादयितुं शक्यते तथाप्यदृष्टसामग्री त्वया न शक्यते। तथा च नलेन यदि परमो धर्म्मः कृतस्तर्हि स त्वया

मन्नमैस्य । मैथ्यं अकस्मात्कोपं इति तत्त्वनामकारण [illegible] णा या लं न

[illegible]

[illegible]

णा ...

युगशेष तव द्वेषस्तस्मिन्नपि न साम्प्रतं ।
भविता न हितायैतद्वैरं ते वैरसेनिना ॥ १४९ ॥

पराभवितुमशक्यः । अथाधर्मः कृतस्तर्ह्यधर्मवशादेव तस्य तादृशी दशा भविष्यति त्वया किं क्रियते इत्यभयशापि दोषात्, सर्वत्र क्रियते, करिष्यते, कृतमित्यादिवन्नानां न कार्येति भावः । इत्युक्तेति पाठे अवश्यं वध्यं वा करिष्ये इत्युक्त्वाऽकारणद्रोहेण । करिष्यन्नपि दृश्यसि । वाङ्मात्रेणापि पापमिद्धः किं पुनः करिष्यन्निति । अन्यत् पूर्ववत् । कार्येयाः । तस्यैदमित्यर्थः । तस्मै हितमित्यर्थ इति वा ॥ १४७ ॥

द्रोहमिति । यः पुरुषो मोहेनाज्ञानेनापि तस्मिन् पुण्यश्लोकेऽनपकारिणि द्रोहमपकारमाचरेत् स पुरुषस्ततस्मात् अनयादन्यायाद्भूतात्तरेण तस्मात्तादृशापकरणजातात् पापात् सर्वतो यस्य तं पापं दुःखं आप्नुयात्, बुद्धिपूर्वकारी लभत इति किं वाच्यमित्यर्थः । नलद्रोहस्तस्मात् त्वया सर्वथा त्याज्य इति भावः । अनेन शापोऽपि दत्त इति ज्ञेयम् । मोहेनेत्यत्रार्थादपिशब्दो योज्यः । मोहस्तेन स्वामिन् अज्ञानाश्रय मूर्खतर इति वा सम्बोधनं ॥ १४८ ॥

युगेति । हे युगानां सत्यादीनां शेष कले तस्मिन्नले तवैष द्वेषो न साम्प्रतमयुक्तः । यस्माद्वैरसेनिना नलेन सह एतत

अपरेऽपि दिशामीशा वाचमेनां शचीपतेः।
अन्वमन्यन्त किन्त्वेनां नादत्त युगयोर्युगं ॥ १५२ ॥
कलिं प्रति कलिं देवा देवान् प्रत्येकशः कलिः।
... रित्थं व्यरचयन्मिथः ॥ १५३ ॥

प्रारब्धं वैरं ते तुभ्यं हिताय न भविता ... अक-
युगेषु शेष इति निर्द्धारणे सप्तमीसमासः। ...
हितयोगे तुभ्यमिति चतुर्थी ॥ १४८ ॥

तवेति। हे कले तव नलसमीपे पराभवार्थं यामि गच्छा-
मीति एवम्भूतं राजसं ज्ञानं रजोगुणसहितं विचारासहं अत
एवासदशोभनं सद्भक्तजानं इहास्मिन् काले देशे वास्यतां त्यज्य-
तां इति. मद्भद्रमिति वा. इति विचार्येति यावत्। इति किं। तत्र
राजसमद्धि तस्यां नलसभायां गतः सन् हास्यतां परिहासास्प-
दत्वं मा गाः। एवं विचार्य तत्र गतः सर्वेषामुपहास्य एव भविष्यसि।
न तु नलं पराभवितुं शक्ष्यसीत्येवंविधो विचारः परित्याज्य
एवेत्यर्थः। असत्त्वादिति विरोधाभासः। तत्र यामीति ज्ञानमसत्
अयुक्तं यतो राजसं। तर्हि किं कर्त्तव्यं तत्राह। इहास्मिन्नेव
देशे आस्यतां स्थीयतां इत एव परावर्त्तनार्थमित्यर्थः। इति
अस्मदीयं ज्ञानं मद्भद्रमितीतिशब्दमाहृत्य व्याख्येयम्। विपक्षे

नलभैम्योर्मध्ये अकस्माच्छीघ्रं द्रुतिलक्षणकारणमन्तरेण वा त्वं न प्रवेक्ष्यसि प्रवेशं कर्त्तुं न शक्ष्यसि । नलस्य पुण्यश्लोकत्वाद्भैम्याश्च पातिव्रत्यादिधर्म्मयुक्तत्वात् तौ पराभवितुं न शक्तोऽसीत्यर्थः । क इव । असंयुक्तं पूर्व्वं सन्धितया पृथक्कृतप्रकृतिप्रत्ययविभागः पश्चात् पच्यमानं संहितया प्रयोगार्हमुच्चार्य्यमाणमिति यावत्, एवम्भूतं षण्णाञ्चेति षण्णामिति शब्दरूपस्य वर्णद्वन्द्वमन्तरा मध्ये डकारवत् डकारो वर्णो यथाऽकस्माद्विधिमन्तरेण न प्रविशतीति साधर्म्योपमा । षट्शब्दात् षष्ठीबहुवचने, षट्चतुर्भ्यश्चेति (पा० ७।१।५५) नुटि तत्सहिते आमि, स्वादिष्वसर्व्वनामस्थाने इति (पा० १।४।१७) पूर्व्वपदस्य पदत्वात्, झलां जशोऽन्ते इति (पा० ८।२।३९) जश्त्वेन टकारस्य डकारे, न पदान्तादिति (पा० ८।४।४२) निषेधस्य, अनाम्नवतीति (पा० ८।४।४२ सू० १ वा०) निषेधात् ष्टुना ष्टुरिति (पा० ८।४।४१) ष्टुत्वेन नाम्नो नकारस्य णकारादेशे, यरोऽनुनासिके इति (पा० ८।४।४५) डकारस्यापि अनुनासिकस्य व्यवस्थितविकल्पत्वादनुनासिकस्याच नित्यत्वेन णकारे जाते सर्व्वथापि न स्वेन रूपेण षण्णामिति पदमध्ये डकारो यथा प्रवेशं लभते तथा तयोर्मध्ये त्वमपीत्याशयः। अन्यथा विकल्पत्वात् पक्षे षड्नामिति स्यात्, तन्माभूदित्यत्र व्यवस्थितविभाषाऽङ्गीकरणीया । षण्णाञ्चेत्यत्र चकारः पृथक्कृत्य भैमी चेति योज्यः । तथा च क्रमेण पर्य्यायेण संयुक्तं षण्णामिति कर्म्मभूतशब्दरूपं अन्तरा डकारो यथा न प्रविशति, असंयुक्तावस्थायां यद्यपि स्वेन रूपेणावस्थानं वर्त्तते तथापि संयुक्तावस्थायां

अपरेऽपि दिशामीशा वाचमेनां शचीपतेः ।
अन्वमन्यन्त किन्त्वेनां नादत्त युगयोर्युगं ॥१५२॥
कलिं प्रति कलिं देवा देवान् प्रत्येकशः कलिः ।
सोपहासं ससंवर्णैरित्थं व्यरचयन्मिथः ॥ १५३ ॥

नाम्नोऽत्यर्थ इति वा। षण्णामित्यत्र प्रकृतिप्रत्ययदशायां अक-स्मादागन्तुकादेशरूपतया टकारो यथा प्रविशति तथा त्वं प्रवे-क्ष्यसीति वैधर्म्योपमया व्याख्येयं। टकारवदिति पाठे वावसाने (पा० ८।४।५६) इत्यवसान एव चर्त्वविकल्पात् स्वरस्याभावात् षट्स्वित्यादिवत् षण्णामित्यत्र स्वरावसानयोरभावात् टकारो यथा न प्रविशतीति साधर्म्योपमैव। रूपकोऽयम्। नलं भैमी। अन्तरान्तरेणेति (पा० २।३।४) द्वितीया ॥ १५१ ॥

अपर इति। अपरे दिशामीशा वरुणादयः शचीपतेरेनां पूर्वोक्तां वाचं अन्वमन्यन्त, इन्द्रो युक्तमाज्ञापयतीत्येवमभ्यन-न्दन् किन्तु पुनर्मूर्ले युगयोः कलिद्वापरयोर्युगं एनामिन्द्रगिरं नादत्त नाङ्गीचक्रे। दिगीशानामपि सम्मतायां वाचि तयोरस-म्मतेः किन्तुशब्देन सूचितरत्वमार्याद्विकं चोक्तं। एनां। अन्वा-देशे एनादेशः। आदत्त। अनास्यविहरणत्वात्तङ् ॥ १५२ ॥

कलिमिति। देवाः कलिं युगं प्रति लक्षीकृत्य कलिर्देवान् प्रत्येकशः एकैकमुद्दिश्य मिथोऽन्योन्यं ससंवर्णैः सुन्दरवर्णैः श्लिष्टैः शब्दैः सोपहासं उपहासवाक्यसहितं कलिं कलहं वाग्युद्धं इत्थं वक्ष्यमाणप्रकारेण व्यरचयन् व्यरचयच्च कृतवन्तः कृतवांश्च-

तवाऽऽगमनमेवार्हं वैरसेनौ तया वृते।
उद्वेगेन विमानेन किमनेनापि धावता॥ १५४॥

त्यर्थः। व्यरचयन्। क्रोडादिकत्वादन्तत्वादम्लोपित्वान्न मन्नभावः। व्यरचयदित्यपि पाठः॥ १५३॥

इन्द्रः कलिम्प्रत्याह। तवेति। हे कले तया वैरसेनौ वृते सति तवागमनं गमनाभावः अर्हं युक्तं। उद्वेगेन उत्कृष्टजवेन अत एव धावता शीघ्रगामिना अनेन प्रत्यक्षदृश्येन विमानेनाकाशगामिना रथेन किं? अपि तु न किञ्चित्प्रयोजनमस्ति, अन्यस्य वृतत्वादित्यर्थः। वैरसेनावुत्तरेण वा सम्बन्धनीयं। अनया नले ऽवृते एव तव स्वपुराद्गमनं युक्तम् नलवरणानन्तरमिदानीं सर्व्वथा गमनं न कार्य्यमित्यर्थ इति वा। एतावत्पर्य्यन्तं किं कृतं इदानीं किमर्थमागमत इत्युपहासः। एतदेव वाक्यं कलिरिन्द्रं प्रत्याह॥ हे शक्र भैम्या नले वृते सति तव यथागतमागमनमेवाकृतकार्य्यत्वादिदानीं स्वर्गं प्रत्यगमनमेव युक्तं निर्लज्जत्वमङ्गीकृत्येन्द्राण्यादीनामग्रे कथं मुखं दर्शयिष्यसि अपि त्वनुचितमेतत्, सर्व्वथा स्वर्गं प्रति न गन्तव्यमेव युक्तं इत्यर्थ इति वा। विमानेनाहङ्काररहितेनापिधा तिरोधानं तद्युक्तेन नितराङ्गोपितेनानेन मुखदर्शनानुमितेनोद्वेगेन निर्वेदेन किं? अपि तु तद्गोपनं व्यर्थं धैर्य्यमवलम्ब्य निर्वेदो यद्यपि त्वया गोप्यते तथापि मया ज्ञात एव। अथ च भैमीनलाभ्यां वरदानार्थमेव मयागतमित्यादिव्याजेन निर्वेदगोपनं क्रियते, तथापि स निर्वेदो ज्ञात

पुरा यासि वरीतुं यामद्य एव तया वृते ।
अन्यस्मिन् भवतो हास्यं वृत्तमेतत्त्रपाकरं ॥ १५५ ॥

एव । अभिमानशून्यत्वान्न किञ्चिदनेन निर्वेदेन साधयितुं शक्यते । तत्तस्मात् सर्व्वथा दुःखं माकार्षीरित्युपहसितवानित्यर्थः । विमाने नान्यवरणादपमानेन हेतुना य उद्वेगस्तेन प्रकटेन किं ? अपि तु न गोपयेति वा । विलुप्तमानानामिन स्वामिन् नितरामभिमानशून्य इन्द्र गोपितेन वानेन निर्वेदेन किमिति वा । उद्वेगेन किं ? अनेन धावता विमानेनापि किमिति वा । अपिधा । आतश्चोपसर्गे (पा० ३।३।१०६) इत्यङ्प्रत्ययः ॥ १५४ ॥

वह्निः कलिमाह । पुरेति । हे कले त्वं यां वरीतुं इतोऽपि पुरा यासि गमिष्यसि तयाद्य एव त्वदागमनात् पूर्व्वमेव अन्यस्मिन् वृते एतदिदानीं गमनं त्रपाकरं भवतो हास्यं हास्यकारणं वृत्तं जातं । वर्त्तमानानामपि वृत्तप्रायत्वाद् वृत्तमित्युक्तं । सर्व्वो लोकस्त्वामुपहसिष्यतीत्यर्थः । एतत्तव वृत्तं गमनाचरणं हास्यहेतुभूतं त्रपाकारि च भविष्यतीति शेष इति वा । एतल्लोकैः क्रियमाणं हास्यं तव त्रपयाऽकं दुःखं राति ददाति एवंविधं वृत्तं जातं प्राप्तमेवेति वा । अत्राप्युपहासः ॥ इदानीं कलिरग्निमाह । हे वह्ने त्वं यां वरीतुं पुरा यासि अयासीस्तया तव समक्षमेव त्वामनादृत्यान्यस्मिन्नले वृते तवैव प्रत्यक्षदृश्यं वृत्तं वर्त्तुलमास्यं मुखं त्रपां आ सामस्त्येन करोति नितरां

पत्यौ तया वृतेऽन्यस्मिन् यदर्थं गतवानसि।
भवतः कोपरोधस्तादस्तमस्य वृथा रुषः॥ १५६॥

लज्जावहं जातमिति शेषः। हा कष्टं। त्रपयाऽकं दुःखं रा-त्यादत्ते। लज्जास्पदं वृत्तं जातमिति वा। हे वक्रे पुरा अस्म-द्गमनात् पूर्व्वं यां वरीतुमयामि त्वया प्रयत्नोऽकारि। स्वय-म्वरं प्रति गतं तत्नरूपं छतमिति यावत्। यद्वा स्वस्य गमनात् पूर्व्वं दूतीहस्तेनोपदाप्रदानादिद्वारा यां वरीतुं प्रयत्नोऽकारि तया तव समक्षमेव नले वृते, एतत् स्वर्गप्रत्यागमनलक्षणमा-चरणं तव त्रपां न करोतीति त्रपाऽकरं लज्जां नावहति। हा कष्टं। एवं वृत्तेऽपि निर्लज्जः सन् स्वगृहं गच्छन् स्वां वनितां मुखं कथं दर्शयिता इति भाव इति। तया विनैव त्वत्स्वर्गमना चरणं लज्जावहं सत् हास्यं हासयोग्यं। अपि तु सर्व्वथैवे-वेति काकुर्वा। मुखं लज्जाकरं वृत्तमाचरणमपि लज्जाकर-मिति वा। यामीति यावत्पुरेति (पा० ३।३।४) भविष्यति लट्। पक्षे, पुरि लुङ् चास्मे (पा० ३।२।१२२) इति भूते लट्। पक्षे यस्य प्रयत्ने भावे त्रिण्॥ १५५॥

यमः कलिमाह। पत्याविति। हे कले त्वं यदर्थं यस्या नि-मित्तेन गतवान् गमनयुक्तोऽसि यां वरीतुमेव गच्छसि तया पूर्व्वमेवान्यस्मिन् पत्यौ वृते स्वभर्तृत्वेनाङ्गीकृते सति भवतः कोपस्य रोधो निवारणं स्ताद्भवतु। यतो ऽसमर्थः असमर्थस्यात एव वृथा रुट् कोपो निष्फलस्तस्मात्कोपो निवार्य्य इत्यर्थ इति वा॥ कलि-

यासि स्मरं जयन् कान्त्या योजनौघं महार्वता ।
स मूढस्त्वं वृतेऽन्यस्मिन् किन्न क्रोशसेऽत्र पामर ॥१५७॥

एतदेव यममाह । हे यम यां वरीतुं गतवानसि तया नले पत्यौ वृते भवतः सकाशादन्योऽधस्तादधरो हीनो न कोऽपि, अपि तु त्वमेव । त्वत्सकाशादन्योऽधो हीनः कः स्यादपि तु त्वमेव हीन इति वा । अपरोऽर्थात्त्वदन्यो भवत उत्पत्तितस्त्वपचयं प्राप-यतीति भावः । निरर्थकजन्माऽतएवाधो हीनः कः स्यादपि तु त्वमेव हीन इति वा । सम्बुद्ध्यन्तं वा निरर्थकजन्मन्नित्यर्थः । अक्षमस्य भूस्पर्शरहितस्य देवस्य रुषा वृथा । अस्मादृशानामेव रोषाः सफला न तु भवादृशानामित्यर्थ इति वा । अक्षम असहन असमर्थ यत वृथा निष्कारणमस्मान् प्रति रुषः कोपान् स्य मा कुर्वित्यर्थ इति वा । यस्मै यदर्थं चतुर्थी तदर्थेति (पा० २।१।३६) समासः । गतवान् मतुप् । पक्षे भूते क्तवत् । भवतः । षष्ठी पञ्चमी च दिग्योगे । पक्षे प्रथमा । आतो धातोरिति (पा० ६।४।११०) प्रतिषेधात्, अत्वसन्तस्य चाधातोः (पा० ६।४।१४) इति असन्तत्वेऽपि न दीर्घः । अधस्तादिति दिक्शब्दत्वात् अध-रशब्दाद्, अस्ताति चेति (पा० ५।३।४०) अस्तातिः, पूर्वाधरा (पा० ५।३।३८) इत्यधरादेशश्च । रुषेति षोऽन्तकर्मणि ॥१५६॥

वरुणः कलिमाह । यासीति । हे कले कायकान्त्या स्मरं जयन् विरुद्धलक्षणयाऽतिकुरूपस्त्वं, महान्तोऽर्वन्तोऽश्वा यस्मिन् रथे, तेन कृत्वा योजनौघं चतुःक्रोशरूपयोजनसमूहमतिदूर-

मिदानीमपि यासि स त्वं मूढो मूर्खः। यस्माद्धे पामर नीच सेर्ष्यान्यस्मिन्नले वृते सति अत्रास्मिन्नर्थे वर्त्तमानस्य ते तव ह्रीः किं न अपि तु भविष्यत्येव। भाविनीं वर्त्तमानां वा लज्जामव-गणय्यापि गच्छसि तस्मान्मूर्ख एवेत्यर्थः। केनापुरःसरन्निगीर्ण कामं कज्जलतुल्यया स्वकायकान्त्या पराभावुकः। तथा जलदं स्वमेनामनृतमपि पराभावुकः। भ्रमरन्त्वा श्यामकायकान्त्या सर्वां सेनामग्रसरं स्वरमु श्यामीकुर्वन्निति कुरूप एवभूता रथेन समूढः सर्व्वग्रहता यस्त्वं, तयान्यस्मिन् वृते सत्यपि यासि, अर्थात् स्वयम्वरं तस्य तेऽत्रार्थे स्वयम्वरं वा ह्रीः किं न भवेदपि तु भवेदेवेति वा॥ एतदेव कविर्निर्णमाह। हे भ्रमर देव वरुण कान्त्या दिव्यदेहदीप्त्या याजनीयं दूरदेशं रञ्जयन् दीप्तं कुर्व्वन् अनीयं स्वयम्वरदेशस्य लोकं समूहं चारञ्जयन् इत्यापूर्व्वदिवाक-पदर्शनात्कल्पाकारधारणाद्वा आत्मनि सानुरागं कुर्व्वन्नतिजवन-हयपुतेन विमानेन महता श्यामवर्णादिनावृता रथेन वा समूढः समारूढो यस्त्वं यासि स्म स्वयम्वरमयासीः तस्य तत्रान्यस्मिंस्त्वया त्वत्समक्षं वृते ह्रीः किमिति न भवति? अपत्रप निर्लज्जेति धिक्कारः। अहं तु तदा नामं त्वं तु गतोऽपि न वृत इत्यप-मानात्त्रपा भवितुं युक्ता, परं सा न जायत इति चित्रं। अत एव चात्रपस्त्वमित्यर्थः। अत्रप न म्रियस इत्यसर इत्यर्थः। अन्योऽप्येवमनादरे कृते लज्जया म्रियते त्वं तु निर्लज्जो न म्रियस इति चित्रमित्यर्थ इति वा। अत्रपया लज्जाभावेना-मरत्येकं पदं वा। त्रपायां सत्यामप्यमरेति वा। अत्रपया

नर्म्मं प्रत्यनपेतार्त्तिं तार्त्तीयीकतुरीययोः ।
युगयोर्युगलं बुद्ध्वा दिवि देवा धियं दधुः ॥ १५८ ॥
द्वापरैकपरीवारः कलिर्मत्सरमूर्च्छितः ।
नलनिग्राहिणीं यात्रां जग्राह ग्रहिलः किल ॥ १५९ ॥

लज्जाभावेनासं रोगं पीडामस्मादृशां यामि ददामि अत्रपास्मर । तव निर्लज्जत्वेन वयमतिदुःखिनो भवाम इत्यर्थ इति वा । एते चत्वारोऽपि श्लोका यथाक्रममिन्द्रादिदेववचनत्वेन ज्ञेयाः । कलिकलहस्तु सर्व्वैरनुसृतः । तत्रापि पूर्व्वं देववचः पश्चात्कलिवचः । सहार्वता । अर्व्वणस्त्रसाविति (पा० ६।४।१२७) तृन्नादेशः । आन्महतः (पा० ६।३।४६) इत्याकारः । यामि स्मेति पक्षे, लट्स्मे (पा० ३।२।११८) इति भूते लट् ॥ १५७ ॥

नर्म्ममिति । देवा इन्द्रादयः तार्त्तीयीकतुरीययोस्तृतीयचतुर्थयोर्युगयोर्द्वापरस्य कलेश्च युगलं नर्म्म प्रत्युद्दिश्य अनपेतार्त्तिं अनपगतव्यथं सर्व्वथा नलः पीडनीय इति नलेऽनिवृत्तापकारवाक्यं बुद्ध्वा दिवि धियं दधुः । युगद्वयमस्मद्वचनं न शृणोति अतः परं यत्किञ्चिद्भवतु किमस्माकमिति विचार्य्य स्वर्गं गन्तुमीषुरित्यर्थः । तार्त्तीयीकः पूर्व्ववत् । तीयादीकक् (पा० ४।२।८।वा० ३) । तुरीयः । चतुरश्छयतावाद्यक्षरलोपश्चेति (पा० ५।२।५१।वा० १) यत् ॥ १५८ ॥

द्वापरेति । कामादिसैन्यं परित्यज्य द्वापर एवैकसहायो यस्य तथा मत्सरेण नलशुभद्वेषेण मूर्च्छितो विनष्ट इवातिमत्सरेण

नलेष्टापूर्त्तसम्पूर्त्तेर्दूरं दुर्गानमुं प्रति ।
निषेधन्निषधान् गन्तुं विघ्नः सञ्जघटे घनः ॥ १६० ॥
मण्डलं निषधेन्द्रस्य चन्द्रस्येवामलं कलिः ।
प्राप म्लापयितुं पापः स्वर्भानुरिव सग्रहः ॥ १६१ ॥

प्रवृद्धो वा। तथा ग्रहिलो निवारणस्यानाकर्णनादाग्रहवत् कलिः अवश्यं नलं निग्रहीष्यामीत्येवंरूपां नलनिग्राहिणीं याचां जग्राह निषधान् प्रतस्थे इत्यर्थः । किल यस्माद्ग्रहिलस्तस्मात् प्रतस्थे उपहासे वा। एकः परीवारो यस्येति विगृह्य द्वापरैकपरीवार इति समासः।परीवारः। उपसर्गस्य घञीति (पा० ६। ३।१२२) दीर्घत्वं। निग्राहिणीं। आवश्यके णिनिः॥ १५८ ॥

नलेति। नलस्य इष्टापूर्त्तानां यागतडागादिधर्म्माणां सम्पूर्त्तेः सम्पूर्णत्वाद्धेतोः नितरां धर्म्मबाहुल्यात् पापरूपं कल्पितममुं प्रति अनु दूरं नितरां दुर्गान् दुर्गमाननेन प्रवेष्टुमशक्यत्वात् निषधान् गन्तुं गमनाय निषेधन् वारयन् घनो महान् निरन्तरश्च विघ्नो वक्ष्यमाणप्रकारेण सञ्जघटे सञ्जज्ञे। धर्म्म बाहुल्यं दृष्ट्वा सहसा तान् प्रवेष्टुं शङ्कित इत्यर्थः । अथ च घनो मेघो जलपूर्त्तेः दुर्गमदेशं गन्तुं विघ्नरूपो भवन्निषेधति । इष्टश्च पूर्त्तश्चेति द्वन्द्वे, अन्येषामपि दृश्यत इति (पा० ६।३।१३७) दीर्घः ॥ १६० ॥

मण्डलमिति।पापः कलिः पापग्रहमध्ये गणितत्वात् पापः स्वर्भानुरिवामलं निष्पापं निषेधेन्द्रस्य मण्डलं राष्ट्रं अमलं परिपूर्ण-

कियतापि च कालेन कालः कलिरुपेयिवान्।
भैमीभर्त्तुरहंमानो राजधानीं महीभुजः॥ १६२॥
वेदानुद्गिरतां तत्र मुखादाकर्णयन् पदं।
न प्रसारयितुं कालः कलिः पदमपारयत्॥ १६३॥

प्रकाशं चन्द्रस्य मण्डलं बिम्बमिव सग्रहः सम्यगाग्रहात् हठाद्ग्रहणायोगवशाच्च म्लापयितुं विनाशयितुं ग्रसितुञ्च प्राप॥ १६१॥

कियतेति। कालो युगलक्षणः समयरूपोऽथ च पापरूपत्वाच्छ्यामवर्णोऽथच दारुणत्वात् कृतान्ततुल्यः तथाऽहंमानो नलपीडनेऽहङ्कारवान् कलिः कियतापि भूयसा कालेन भैमीभर्त्तुर्महीभुजो नलस्य राजधानीमुपेयिवान् प्राप्तवान्। पूर्व्वं देशं प्राविशदिदानीन्तु राजधानीमिति चार्थः। भूमिर्भैमीत्याजने कलेरभिनिवेशोऽभिप्रायो विशेषणद्वयेन सूच्यते। कियताऽल्पीयसेति वा। अहमिति मननमहंमानः सोऽस्यास्तीति सर्व्वकार्य्येष्वहमेवेति मन्यते तच्छील इति वा॥ १६२॥

इदानीं पुरप्रवेशविधानाह। वेदानिति। तत्र पुरे वेदान् ऋगादीनुद्गिरतां गुणनिकां कुर्व्वतां श्रोत्रियाणां मुखात् पदं पदकारकल्पितसंहिताविभागरूपं पदमङ्गं आकर्णयन् शृण्वन् कालः समयरूपोऽथ च पापरूपः कलिः पदमेकमपि चरणान्यासं प्रसारयितुं नापारयत् पापरूपत्वादित्यर्थः। एतेन नलपुरस्य धर्म्मपूर्णत्वमुक्तम्। वेदान्। शत्रयोगे, नलोकेति (पा०।२।३।६९) षष्ठीनिषेधः॥ १६३॥

२०३

श्रुतिपाठकवक्त्रेभ्यस्तत्राकर्णयतः क्रमं ।
क्रमः सङ्कुचितस्तस्य पुरे दूरमवर्त्तत ॥ १६४ ॥
तावद्गतिर्धृताटोपा पादयोस्तेन संहिता ।
न वेदपाठिकण्ठेभ्यो यावदश्रावि संहिता ॥ १६५ ॥

श्रुतीति । तत्र पुरे श्रुतिपाठका वेदाध्यापयितारस्तेषां वक्त्रेभ्यः सकाशात् क्रमं पूर्व्वपदपरित्यागेनोत्तरपदग्रहणादिकक्रमसंज्ञं ग्रन्थं आकर्णयतः शृण्वतोऽस्य कलेः क्रमश्चरणो गतिर्वा दूरं नितरां सङ्कुचितः क्रमाकर्णनाद्भयेन पापः पदमपि पुरस्खलितुमशक्तस्तता देशाद् दूरं निवृत्त इत्यर्थः ॥ १६४ ॥

तावदिति । तेन कलिना वेदपाठिनां कण्ठेभ्यो मुखेभ्यः यावत्संहिता पदक्रमरूपावस्थाद्वयविलक्षणा ऋगादिरूपा नाश्रावि नाकर्णिता तावत्कालं तावद्देशपर्य्यन्तञ्च प्रतिबन्धराहित्याद्धृताटोपा धृतसंरम्भा सत्वरा पादयोर्गतिः संहिता संयोजिता । यावत्कालं यावति च देशे संहिता नाकर्णिता तावत्कालं तावद्देशपर्य्यन्तञ्च प्रतिबन्धराहित्याच्छीघ्रगतिरभूत् । यदा यस्मिंश्च देशे सा श्रुता तदैव तस्य गतिभङ्गोऽभूदित्यर्थः । यावत् संहिता अश्रावि तावत्पदयोः सत्वरा गतिर्योजिता नापि तु तावदेव योजिता । संहिताश्रवणपर्य्यन्तमेव सत्वरगतिः सोऽभूत् नानन्तरमित्यर्थः ॥ १६५ ॥

तस्य होमाज्यगन्धेन नासा नाशमिवाऽगमत्।
तथा तत दृशौ नासौ क्रतुधूमकदर्थिते ॥ १६६ ॥
अतिथीनां पदाम्भोभिरिमं प्रत्यतिपिच्छिले।
अङ्गणे गृहिणां तत्र खलेनानेन चस्खले ॥ १६७ ॥
पुटपाकमिव प्राप क्रतुशुष्ममहोष्मभिः।
तत्प्रत्यङ्गमिवाकर्त्ति पूर्त्तामिष्यजनानिलैः ॥ १६८ ॥

तस्येति। तस्य नासा अग्निहोत्रादिहोमाज्यं होमसम्बन्धि घृतं तस्य गन्धेन परिमलेन हेतुना नाशमिव मरणवेदनामिवागमत् अन्वभूदित्युत्प्रेक्षा। इवशब्द एवकारार्थो वा। तथा तेनैव प्रकारेणासौ कलिः क्रतुधूमेन कदर्थिते पीडिते दृशौ नेत्रे ऽपि न अतत न प्रसारितवान्। किञ्चिन्न ददर्शेत्यर्थः। आज्यगन्धक्रतुधूमसम्बन्धमात्रेण विव्यथ इत्यर्थः। अतत इति तनोतेर्लुङि सिचि, तनादिभ्यस्तथासोरिति (पा० २।४।७९) पाक्षिके सिज्लोपे तकारस्य ङित्वादनुदात्तोपदेशेवनतितनोति (पा० ६।४।३७) इत्यनुनासिकलोपः ॥ १६६ ॥

अतिथीनामिति। तत्र पुरे अनेन खलेन कलिना गृहिणां अङ्गणे चस्खले। यस्मादतिथीनां पदाम्भोभिश्चरणक्षालनाम्भोभिरिमं पापरूपं कलिं प्रत्युद्दिश्य अतिपिच्छिले अतितरां कर्दमयुक्ते। एवंविधमतिपवित्रमङ्गणं प्रवेष्टुं नाशकदित्यर्थः अन्योऽपि पिच्छिले देशे पतति ॥ १६७ ॥

पुटेति। असौ कलिः क्रतुशुष्मा यागसम्बन्धी वह्निस्तस्य

पितृणां तर्पणे वर्णैः कीर्णादेश्मनि वेश्मनि।
कालादिव तिलात् कालाद् दूरमत्रसदत्र सः ॥१६९॥
स्नातृणां तिलकैर्मेने स्वमन्तर्दीर्णमेव सः।
कृपाणीभूय हृदयं प्रविष्टैरिव तस्य तैः॥ १७०॥

महोष्मभिः प्रकृष्टतापैः कृत्वा पुटाभ्यां पुटयोर्वा पाकं उभयपार्श्वयोर्या चादेशान्तरमग्निसंयोगमिव प्राप प्रतिगृहं य गवाक्षन्यात् वामदक्षिणपार्श्वयोर्वह्नितापैर्नितरां पीडामन्वभूदित्यर्थः। तथा पूर्त्तानां धार्म्मिकनिर्म्मितवापीकूपतडागादीनां ऊर्म्मयस्तद्रूपाणि व्यजनानि तेषामनिलैर्वायुभिः तस्य प्रत्यङ्गं सर्व्वाङ्गं अकर्त्तीव छिन्नमिवाभूत् इत्युत्प्रेक्षा। प्रत्यवयवकर्त्तनेन च पीडातिशयाद् वाप्यादितरङ्गवायुस्पर्शमात्रेण नितरां व्यथितोऽभूदित्यर्थः। वह्निः शुष्मा कृष्णवर्त्मेत्यमरः॥ १६८॥

पितृणामिति। अत्र पुरे वेश्मनि वेश्मनि प्रतिगृहं ब्राह्मणादिचतुर्वर्णैः पितृणां तर्पणे जलसमर्पणे विषये कीर्णात् क्षिप्तात् पितृप्रियात् कालात् कृष्णवर्णात् तिलात् सकाशात् स कलिः कालादिव कृतान्तादिव दूरं नितरां अत्रसत् भयमाप। तर्पणैरिति पाठे तर्पयन्तीति तर्पणैरिति वर्णविशेषणं। तिलात्। इति जातावेकवचनं॥ १६९॥

स्नातृणामिति। स कलिः स्नातृणां स्नानं कुर्व्वतां वैदिकानां तैस्तादृशैर्गोपीचन्दनादिरचितैर्ललाटस्थानादिस्थैर्दीर्घाभिस्तिलकैः कृपाणीभूय खड्गतामङ्गीकृत्य तस्य कलेः हृदयं

पुमांसं मुमुदे तत्र विदन् मिथ्यावदावदम् ।
स्त्रियं प्रति तथा वीक्ष्य तमथ म्लानवानयम् ॥ १७१ ॥
यज्ञयूपघनां जज्ञौ स पुरं शङ्कुसङ्कुलाम् ।
जनैर्धर्म्मधनैः कीर्णां व्यालक्रोडीकृताञ्च ताम् ॥ १७२ ॥

विदार्य्य तैः प्रविष्टैरिव स्वं स्वकीयं अन्तः शरीरमध्यं दीर्णमेव शकलीभूतमेव मेने। कृपाणैर्हि विदारणं भवतीति युक्तम्। खड्गाकारांस्तिलकान् दृष्ट्वा विव्यथ इत्यर्थः ॥ १७० ॥

पुमांसमिति। तत्र पुरे अयं पुमांसं मिथ्यावदावदं मृषाभाषिणं विदन् जानन् स्वमित्रलाभान्मुमुदे। अथ पश्चात्तदनन्तरं स्वस्त्रियं प्रत्युद्दिश्य तं तथाऽलीकभाषिणं वीक्ष्य ज्ञात्वा मित्रनाशादिव दुःखवशात् म्लानवान् म्लानतां गतः। पत्नीं प्रति क्रीडायामसदिति दोषाभावाद्धर्षितोऽभूदित्यर्थः। न नर्मयुक्तं वचनं हिनस्ति स्त्रीपुंसयोरिति भारतादौ। विदन्। विदेः शतुर्वसुः (पा० ७।१।३६) इत्यत्र विकल्पानुवृत्तेर्वस्वभावः। एवं चतुर्द्दशतयीविद्याविद्भिरित्यत्रापि ज्ञेयम्। वदावदम्। चरिचलीत्यादिना (पा० ६।१।१२ वा० ८) द्वित्वमभ्यासस्याक्त्वं च। म्लानवान् ष्लवतोऽन्तकारस्य संयोगादेरात इति (पा० ८।२।४३) नः ॥ १७१ ॥

यज्ञेति। सः यज्ञयूपैः खादिरोडुम्बरपशुबन्धस्तम्भैः घनां नितरां व्याप्तां तां पुरं शङ्कुभिस्तोरणाग्रकीलैः सङ्कुलां व्याप्तामिव जज्ञौ मेने। तथा धर्म्मधनैर्जनैः कीर्णां तां पुरं व्यालैः सर्पैः दुष्टश्वापदैर्वा दुष्टगजैर्वा क्रोडीकृतां सर्वत्र पूर्णां व्याप्ताः क्रोडे

स पार्श्वमशकद्गन्तुं न वराकः पराकिणां ।
मासोपवासिनां छाया लङ्घने घनमस्खलत् ॥ १७३ ॥
आवाहितां द्विजैस्तत्र गायत्रीमर्कमण्डलात् ।
स सन्निदधतीं पश्यन् दृष्टनष्टोऽभवद्भिया ॥ १७४ ॥

मत्वा यस्यामात्मानमेतादृशीं कृतामिव मेने । कीलसर्पादिभिर्व्याप्तं स्थानं यथा प्रवेष्टुमशक्यं तथा सा पुरी तस्य प्रवेष्टुमशक्या जातेत्यर्थः । व्यालो भुजङ्गमे क्रूरे श्वापदे दुष्टदन्तिनीति विश्वः । रेफान्तो पुःशब्दस्त्रीलिङ्गः । चः समुच्चयार्थ इवार्थो वा ॥१७२॥

स इति । वराकः क्वचिदपि स्थानालाभाद्दीनः स कलिः पराकिणां द्वादशरात्रोपवासरूपपराकाख्यकृच्छ्रविशेषव्रतचारिणां पार्श्वं गन्तुं नाशकत् । तथा मासोपवासिनां कायप्रतिच्छायाया अपि लङ्घनेऽतिक्रमणे तस्या अपि समीपे गन्तुं घनं निरन्तरं अस्खलत् भ्रमत्पदोऽभूत् । तच्छायामपि द्रष्टुं नाशकदित्यर्थः । वराकः । जल्पभिक्षेति (पा० ३।२।१५५) कन् ॥१७३॥

आवाहितामिति । तत्र पुरे स द्विजैस्त्रैवर्णिकैरागच्छ वरदेत्यादिमन्त्रैरावाहितामन्तरर्कमण्डलाद्भिया अतिशयसामर्थ्यात् सूर्यबिम्बान्निर्गत्य दिव्यरूपेण सन्निदधतीं तत्समीपमागच्छन्तीं प्रातःसन्ध्याधिदेवतां गायत्रीं पश्यन् गायत्र्याः सकाशाद्भयेन गायत्र्यैवादौ दृष्टः पश्चात्तदानीमेव नष्टोऽदृश्योऽभवत् सन्ध्यावन्दनं कुर्वतो द्विजान् दृष्ट्वा गायत्री मां विनाशयिष्यतीति ततः स्थानात् पलाय्य गत इत्यर्थः । गायत्री सूर्य-

स गृहे गृहिणां पूर्णे वने वैखानसैर्वृते।
अत्याधारेऽमरागारे क्वापि न स्थानमानशे ॥ १७५ ॥
क्वापि नापश्यदन्विष्यन् हिंसामात्मप्रियामसौ।
स्वमित्रं तत्र न प्रापदपि मूर्खमुखे कलिं ॥ १७६ ॥
हिंसागवीं मखे वीक्ष्य रिरंसुर्धावति स्म सः।
सा तु सौम्यवृषासक्ता खरं दूरान्निरास तं ॥ १७७ ॥

विस्वस्था इति ध्यानं। अर्कमण्डलादाहितामिति वा। दृष्टनष्टः। पूर्व्वकालैकेति (पा० २।१।४८) समासः ॥ १७४ ॥

स इति। स कलिर्गृहिणां गृहस्थैः पूर्णे गृहे तथा वैखानसैर्वानप्रस्थैर्वृते व्याप्ते वने तथा यतीनां परमहंसानां सन्न्यासिनामाधारे आश्रयभूते तैर्व्याप्ते अमरागारे देवालये स्थानं नानशे आश्रयं न प्राप। क्वापि कस्मिन्नपीति सर्व्वत्र योज्यं। गृहिभिर्गृहे पूर्णे सतीति सप्तमी वा सर्व्वत्र ॥ १७५ ॥

क्वापीति। असौ कलिः तत्र पुरे आत्मनः प्रियां इष्टां निषिद्धां हिंसां अथ च स्त्रियं अन्विष्यन् न क्वापि कस्मिन्नपि देशे नापश्यत्, तथा कलहप्रियत्वान्नामसाम्याच्च स्वस्य मित्रं कलिं कलहं मूर्खाणामपि मुखे सम्भावितस्थले न प्रापत्। मूर्खा अपि तत्र न कलहायन्ते। हिंसाकलहयोरभावात्तत्र स्थितिं न लेभ इत्यर्थः। अन्योऽपि यत्र मित्रस्वस्त्र्याद्यभावस्तत्र क्षणमपि न तिष्ठतीत्युक्तिः ॥ १७६ ॥

हिंसेति। मखे गोमेधाख्ये यज्ञे हिंसागवीं हिंसासम्बन्धिनीं

मौनेन व्रतनिष्ठानां स्वाक्रोशं मन्यते स्म सः।
वन्द्यवन्दारुभिर्जज्ञौ स्वशिरश्च पदाहतं॥ १७८॥

गवीं वीक्ष्य रिरंसुर्हृष्टचित्तः स कलिः निषिद्धगोहिंसा मत्प्रियेति धावति स्म। सा तु हन्यमाना गौः पुनः सौम्ये सोमदेवताकद्रव्यसाध्ये वृषे धर्म्मे आसक्ता तत्सम्बन्धिनी तत्साधिका सती अभिचारादिदुष्टकर्म्मराहित्यात् सौम्यो रमणीयः पारलौकिको धर्म्मस्तत्साधिका वा खरं पापरूपत्वाद्दुःसहं खलयोरभेदात् खलं वा पापरूपं दूरादेव निरास निराचकार। अधर्मसाधनं गोहिंसादि दृष्ट्वा प्रवृत्तः पश्चाद्धर्म्मसाधनमग्नीषोमीयवैदिकपशुहिंसादि दृष्ट्वा मत्प्रिया हिंसा न भवतीति दूरात् परावृत्त इत्यन्वयः। मुखे इति पाठे हिंसाप्रतिपादिकां गां वाणीं यज्वनां मुखे वीक्ष्य श्रुत्वेति यावत्, रिरंसुरधावत्। सा तु वाणी सौम्यप्रतिपादिका सती तं अखरं अग्नीषोमीयं पशुमित्या- क्याकर्णनमात्रेण दुःखवशान्निस्तेजस्कं दूरान्निरासेति वा अथ च कामातुरः सुरतेच्छुः खरो गर्द्दभः गां वीक्ष्य यद्य प धावति तथापि सा रमणीयवृषभानुरक्ता सती विजातीयत्वाद्गर्द्दभं दूरान्निराकरोति। मखे यज्ञप्रारम्भ इति वा। अथ च गौर्यथा सौम्यं वृषभमनुसरति क्रूरं वृषभं त्यजति। सुकृते वृषभं वृष इत्यमरः। हिंसागवीति गोरतद्धितेति (पा॰ ५।४।९२) टच्॥ १७७॥

मौनेनेति। स कलिः मौनव्रतनिष्ठानां वाग्यमव्रतिनां स-

ऋषीणां स बृसीः पाणौ पश्यन्नाचामतामपः ।
मेने घनैरमी हन्तुं शप्तुं मामद्भिरुद्यताः ॥ १७९ ॥
मौञ्जीधृतो धृताषाढानाशशङ्के स वर्णिनः ।
रज्ज्वामी बद्धुमायान्ति हन्तुं दण्डेन मां ततः ॥ १८० ॥

न्त्यादिजपमौनिनां वा मौनेन वाङ्नियमेन कृत्वा स्वस्यात्मन आक्रोशं गालीप्रदानमेव मन्यते स्म । तथा वन्द्येषु नमस्कारार्हेषु गुर्वादिषु वन्दारुभिः नमस्कुर्वद्भिर्नरैः स्वशिरश्च पदा हतं चरणताडितमिव जज्ञौ अज्ञासीत् । च इवार्थो वा । वन्दारुभिः । शृवन्द्योरारुरित्यारुः (पा० ३।२।१७३) । वन्द्यानिति पाठे, तद्योगे, न लोकेति (पा० २।३।६९) षष्ठीनिषेधाद्द्वितीया ॥ १७८ ॥

ऋषीणामिति । स कलिः ऋषीणां पाणौ हस्ते बृसीः कुशासनानि पश्यन् अमी ऋषयः घनैर्लोहमुद्गरैर्मां हन्तुमुद्यता इति मेने । तथा आचामतां तेषामेव हस्ते आचमनार्थं गृहीता अपः पश्यन् अमी मामद्भिस्त्वं भस्मसाद्भवेति शप्तुमिवेति प्रतीयमानोत्प्रेक्षा । सकुशानिति पाठे कुशानपश्च पश्यन्नित्यर्थः । अत्र दैर्घ्यात् कुशा एव घनतुल्याः । आचामतां । ष्ठिवुक्लमुचमामिति (पा० ७।३।७५) दीर्घः ॥ १७९ ॥

मौञ्जीति । स कलिः मौञ्जीधृतो मुञ्जतृणमेखलाधारिणः, तथा धृत आषाढः पालाशदण्डो यैस्तान् वर्णिनो ब्रह्मचारिणः एवम्भूतानाशशङ्के मेने, अमी पुरुषा रज्ज्वा मां बद्धुं ततो बन्धनानन्तरञ्च दण्डेन मां हन्तुमायान्तीति । मौञ्जीधृतो

दृष्ट्वा पुरः पुरोडाशमासीदुत्त्रासदुर्मनाः।
मन्वानः फणिनीस्तत्र स मुमोचाश्रु च स्रुचः ॥ १८१ ॥
मुमुदे मदिरादानं विन्दन्नेष द्विजन्मनः।
दृष्ट्वा सौत्रामणीमिष्टिं तं कुर्वन्तमदूयत ॥ १८२ ॥

धृताषाढा एते ब्रह्मचारिणो न भवन्ति किन्तु मां रज्ज्वा बद्धा दण्डेन हन्तुमायान्तीत्याशशङ्क इति वा। धृताषाढान्निति पाठे एवम्भूताद् ब्रह्मचारिण इति नाशशङ्के किन्त्वित्युत्तरार्द्धः। पालाशो दण्ड आषाढः। वर्णिनो ब्रह्मचारिण इत्यमरः। मौञ्जी। विकारेऽञ्। वर्णोऽस्त्येषां ब्रह्मचारिणामिति वर्णिनः ॥ १८० ॥

दृष्ट्वेति। स तत्र पुरोऽग्रेऽश्वशफमात्रं पुरोडाशं अष्टादशकपालादिसंस्कृतं पशुशरीरावयवं दृष्ट्वा उत्त्रासेनोत्कृष्टभयेन दुर्मना दुःखित आसीत्। तथा स्रुचः सर्पफणाकारपुरोभागा वैकङ्कतादिजुह्वः फणिनीः सर्पिणीर्मन्वानोऽश्रु मुमोच दंशनभिया रुरोदेत्यर्थः। पुरोडाशो ऽकारान्तः। पुरोडाशभुजामिष्टमिति माघः ॥ १८१ ॥

मुमुद इति। एष द्विजन्मनो ब्राह्मणस्य मदिरादानं मदिरास्वीकारं विन्दन् जानन् पश्यन् अयं महापातकीति बुद्ध्या मुमुदे। अनन्तरं च सौत्रामणीमिष्टिं इन्द्रदेवताकं यागं कुर्वन्तं द्विजं दृष्ट्वाऽदूयत। सौत्रामण्यां सोमग्रहान् सुराग्रहांश्च गृह्णातीति श्रुतेर्मदिरादानस्य वैधत्वात्स्वाश्रयविनाशादिव विव्यथ

अपश्यद्यावतो वेदविदां ब्रह्माञ्जलीनसौ ।
उदडीयन्त तावन्तस्तस्यास्माञ्जलयो हृदः ॥ १८३ ॥
स्नातकं घातकं जज्ञे जज्ञौ दान्तं कृतान्तवत् ।
वाचंयमस्य दृष्ट्वैव यमस्येव बिभाय सः ॥ १८४ ॥

इत्यर्थः । सौत्रामणीति देवतार्थे सम्बन्धमात्रे वाऽणि अन्निति (पा० ६।४।१६७) प्रकृतिभावः ॥ १८२ ॥

अपश्यदिति । असौ वेदविदां यावतो यावत्संख्याकान् बहून् ब्रह्माञ्जलीन् ब्रह्मयज्ञसमये क्रियमाणान् हस्तस्वरकल्पनार्थं संयोजितान् करपुटान् वा स्वाध्यायाध्यायिनां गायत्रीमन्त्रजपाञ्जलीन्,

ब्रतारम्भेऽवसाने च पादौ ग्राह्यौ गुरोः सदा ।
संहत्य हस्तावध्येयं स हि ब्रह्माञ्जलिः स्मृतः ॥

इति मनूक्तलक्षणान् करसंपुटानपश्यत् तावन्तस्तस्य कलेः हृदः सकाशादस्माञ्जलयोऽरूपा अञ्जलयः उदडीयन्त उत्पतिता निर्गताः । तद्दर्शनमात्रेण नितरां विदीर्णहृदयोऽभूदित्यर्थः । तदस्मेति वा पाठ उत्प्रेक्ष्यः ॥ १८३ ॥

स्नातकमिति । स विद्याव्रतस्नातकं उभयस्नातकञ्च स्वस्य घातकं विश्वासघातिनं जज्ञे मन्ये । तथा दान्तं तपःक्लेशसहं जितेन्द्रियं नरं कृतान्तवत् यममिव भयहेतुं जज्ञौ ज्ञातवान् । तथा वाचंयमस्य मौनिनो दृष्ट्वैव दर्शनमात्रेण मौनिकर्तृक-स्वकर्मकमौनिकर्मदर्शनेनैव वा बिभाय । कस्येव यमस्येव । यम-

स पाषण्डजनान्वेषी प्राप्नुवन् वेदपण्डितान्।
जलार्थीवानलं प्राप्य पापस्तापादपासरत् ॥ १८५ ॥
तत्र ब्रह्महणं पश्यन्नतिमन्तापमानशे।
निवेश्य सर्व्वमेधस्य यज्ञ्यानं ज्वरति स्म सः ॥ १८६ ॥

कर्तृकस्य कर्म्मकस्य कर्तृकयमकर्म्मकदर्शनेन वा। यस्मिन् दृष्टेन यया भयं तया भीतिन इत्यर्थः। स्नातकस्त्वाप्लुतो व्रती। तपःक्लेशसहो दान्त इत्यमरः।

गुरवे तु वरं दत्त्वा स्नायाच्च तदनुज्ञया।
वेदव्रतानि वा पारं नीत्वा ह्युभयमेव वा ॥

इति याज्ञवल्क्यः। स्नातीति स्नातकः, याजकादित्वात् साधुः, स्नत्वन्तः। घातकं। हन्तर्व्युक्ति हनन्तः। जज्ञा जज्ञे इति जानातेः कर्त्रभिप्राये क्रियाफलाविवक्षायां, शेषात् कर्त्तरीति (पा० १। ३। ७८) परस्मैपदं। तद्विवक्षया अनुपसर्गाज्ज्ञः इति (पा० १। ३। ७६) तङ्। दृष्ट्वेति भयहेतुत्वाविवक्षायाञ्चापादानत्वं ॥ १८४ ॥

स इति। स पाषण्डजनान्वेषी स्वपक्षीयान् वेददूषकान् विचारयन् वेदेषु पण्डितान् श्रौतस्मार्त्तकर्म्मठान् प्राप्नुवन् पश्यन् तापादतिदुःखाद्भीतः अपासरत् पलायितः। यतः पापरूपः। क इव अनलं प्राप्य जलार्थीव। तृषितो जलं विचिन्वन् अग्निं प्राप्य तत्तापाद् दूरं पलायते ॥ १८५ ॥

तत्रेति। स तत्र ब्रह्महणं नरं पश्यन् महापातकित्वादात्माश्रयत्वादतितरां सन्तोषमानशे प्राप। अनन्तरं सर्व्वमेधाख्यस्य

यतिहस्तस्थितैस्तस्य राम्भैरारम्भि तर्जना।
दुर्जनस्याजनि क्लिष्टिर्गृहिणां वेदयष्टिभिः॥ १८७॥
माण्डलत्यागमैच्छद्वीक्ष्य स्थण्डिलशायिनः।
पवित्रालोकनादेष पवित्रासमविन्दत॥ १८८॥

यज्ञस्य यज्वानं तं प्रोक्षणावदानादिसंस्कारादिकर्मणा निर्वर्त्य निर्वर्त्य ज्वरति स्म नितरां तप्तोऽभूत्। सर्वमेधे हि तत्तज्जातीयैकैकप्राणिहिंसाधिकाराद् ब्रह्मणे ब्राह्मणमालभेतेति श्रुत्या ब्रह्मवधस्य वैधत्वान्निराश्रयत्वात् सन्ताप इत्यर्थः। ब्रह्महणं। ब्रह्मभ्रूणेति (पा० ३।२।८७) क्विप्। ज्वरतिर्घटादिः॥ १८६॥

यतीति। यतीनां सन्न्यासिनां हस्तस्थितै राम्भैर्वैणवदण्डैस्तस्य कलेस्तर्जना भर्त्सना आरम्भि अकारि। तथा गृहिणां गृहस्थानां वेदैरेव यष्टिभिर्दण्डैर्वेदानां क्रमजटारूपाभिर्वा यष्टिभिस्तस्य दुर्जनस्य क्लिष्टिः क्लेशोऽजनि। राम्भयष्टीर्दृष्ट्वा भीत इत्यर्थः। रम्भस्तु वैणव इत्यमरः। रम्भा विकारस्येदमिति (पा० ४।३।१२०) अण्। क्लिष्टिः। तितुत्रेति (पा० ७।२।९) इडनिषेधः॥ १८७॥

माण्डलेति। एष स्थण्डिलशायिनो वेदिकाशायिनो व्रतचारिणो नरान् वीक्ष्य माण्डलस्य तद्राष्ट्रस्य त्यागमैच्छत्। तथा पवित्राणां यज्ञाद्युपकरणादीनां ग्रन्थिविशेषनिबद्धानां पाणिस्थकुशानां आज्याद्युत्पवनसाधनानामन्तर्गर्भरहितसाग्रानखच्छिन्नदर्भाणामालोकनात् पवित्रत्रासमविन्दत प्राप। ततो

अपश्यज्जिनमन्विष्यन्नजिनं ब्रह्मचारिणं।
चपणार्थी सदीचस्य स चाचपणमैचत ॥ १८९ ॥
जपतामचमालासु बीजाकर्षणदर्शनात्।
स जीवाकृष्टिकष्टानि विपरीतदृगन्वभूत् ॥ १९० ॥

सद्द्वयमापेत्यर्थः। अगर्भा माषा दर्भा पवित्रमिति कात्या-यनः। स्थण्डिले एव शेते व्रतवशात् स स्थण्डिलशायी. व्रत इति (पा० ३।२।८०) णिनिः ॥ १८८ ॥

अपश्यदिति। स जिनं बौद्धविशेषं स्वमित्रमन्विष्यन् ब्रह्म-चारिणं अजिनं कृष्णमृगचर्मोत्तरासङ्गमपश्यत्। चपणेन दिग-म्बरेण देवाद्यर्चनार्थीव प्रयोजनार्थी तमपि गवेषयत् यज्ञदीचया सहितस्य यज्वनोऽचपणं दीचाङ्गधर्मापरित्यागाभावमैचत। यद्वा अचाभ्यां पाशकाभ्यां पणं क्रीडां पाशकसम्बन्धिजयपराजयदेयं राशीकृतं धनं ददर्श। राजसूये यजमानोऽचैर्दीव्यतीतिश्रुते-र्विहितत्वात् तद्‌द्यूतं युक्तं। वैधं सर्वं दुःखदं स्वस्यामित्रमेव ज्ञातवान् न तु मित्रमित्यर्थः। पणः। नित्यं पण इत्यप् (पा० ३। ३।६६) ॥ १८९ ॥

जपतामिति। जपतां नराणां अचमालासु पद्माचरुद्रा-चादिमणिनिर्मितजपमालिकासु वर्त्तमानानां पद्माचादिबी-जानां जपगणनार्थमाकर्षणं तस्य दर्शनाद्धेतोर्जीवानां प्राणा-नामाकृष्टिराकर्षणं तया जातानि कष्टानि दुःखानि अन्व-भूत्। यस्माद्विपरीतदृक् विरुद्धदर्शी। सर्वहितधर्मसहितत्वेन

त्रिसन्ध्यं तत्र विप्राणां स पश्यन्नघमर्षणम् ।
परमैच्छद् दृशोरेव निजयोरपकर्षणम् ॥ १९१ ॥
अद्राक्षीत् तत्र कञ्चिन्न कलिः परिचितं क्वचित् ।
भैमीनलव्यलीकाणुप्रश्नकामः परिभ्रमन् ॥ १९२ ॥

ज्ञानात्तस्माद्दृग्धर्मदर्शनमात्रेण महद्दुःखमन्वभूदित्यर्थः । अथ च विपरीतदर्शनशीलत्वादीश्वरस्य व्यञ्जनमात्रव्यत्ययेन जवयाः मावर्णेन च जीवति भवतीति जीवात्मदृष्टिकष्टानुभवनं युक्तं ॥ १९० ॥

त्रिसन्ध्यमिति । स तत्र त्रिसन्ध्यं प्रातर्मध्याह्नसायाह्नरूपं सन्ध्यात्रयमभिव्याप्य विप्राणां ऋतञ्चेत्याद्यघमर्षणं ऋग्भिर्नासास्पर्शाभिमन्त्रितं चुलुकोदकं तत्प्रक्षेपणादिकं वा पश्यन् निजयोर्दृशोरपकर्षणं उन्मूलनमेव वरं श्रेष्ठमिति ऐच्छत् । मदीयनेत्रे यदि कोऽप्युदमूलयिष्यत् तर्हीदं दुःखमूलं नाद्रक्ष्यतां । तस्मान्नेत्रोन्मूलनमेव वरमिति मेने इत्यर्थः । तदपि दृष्ट्वा दुःखितोऽभूदिति भावः । अघमर्षणदर्शनजन्यः नेत्रापकर्षणव्यथातुल्या । त्रिसन्ध्यं । अत्यन्तसंयोगे द्वितीया ॥ १९१ ॥

अद्राक्षीदिति । भैमीनलयोर्व्यलीकस्याणुमणुं दोषलेशमपि प्रश्नकामः प्रष्टुं वाञ्छन् अत एव तत्र पुरे कथकस्वमित्रगवेषणार्थं परिभ्रमन् परितो विचरन् स कलिः क्वचिदपि स्थाने कञ्चिदपि स्वस्य परिचितं जिनक्षपणकादिमित्रं नाद्राक्षीत् । नलेन भैम्या वा तत्रत्येन जनेन वा तेषु क्वचिदपि संपुचि-

तपःस्वाध्याययज्ञानामकाण्डद्विष्टतापमः ।
स्वविद्विषां श्रियं तस्मिन् पश्यन्नुपतताप सः ॥ १९३ ॥
कस्मं तत्रोपनम्राया विश्वस्या वीच्य तुष्टवान् ।
स मस्लौ तं विभाव्याथ वामदेव्याभ्युपासकं ॥ १९४ ॥

दपि महापातकेषु मध्ये किञ्चिदपि परिचितं पातकं नाद्राचीत्। त्वया भैमी नलादन्यत्र सार्केर्वा स्पृष्टः किमिति कलिः पृच्छति । तदेकमपि पापं नास्त्येवेति भाव इति वा ॥ १९२ ॥

तप इति। पञ्चाग्निमाधनादि तपः, वेदपाठरूपः स्वाध्यायः, देवतोद्देशेन द्रव्यत्यागो यागो यज्ञः, एषां स्वस्य पापरूपत्वाद् विद्विषां वैरिणां तस्मिन् पुरे श्रियं समृद्धिं बाहुल्यं पश्यन् अकाण्डं निष्कारणमेव द्विष्टस्तापसो येन स कलिः उपतताप अतिदाहमापातिदुःखितोऽभूदित्यर्थः । अन्योऽपि स्ववैरिलक्ष्मीं पश्यन्नुपतप्यते। यज्ञापेक्षया स्वाध्यायस्य अभ्यर्हितत्वात् पूर्वनिपातः ॥ १९३ ॥

कस्मिति । स तत्र मुनेः उपनम्राया उपासकस्य समीपमागत्य स्थितायाः स्वजाताया विजातीयाया गम्याया अगम्याया वा विश्वस्याः स्त्रियः कस्मं कामुकं तं सम्भुञ्जानं कञ्चन नरं वीच्यायं महापातकी ममाश्रयो भविष्यतीति बुद्धा तुष्टवान्। अथ पश्चाद्विचारणायां क्रियमाणायां तं कस्मं वामदेवेन मुनिना दृष्टं ब्रह्मसाम कयानश्चित्रमित्यादि वामदेव्यं नाम साम तस्य ब्रह्मविद्याया अभ्युपासकं विभाव्य मत्वा मस्लौ दुःखितोऽभूत्।

वैरिणी शुचिता तस्मै न प्रवेशं ददौ भुवि ।
न वेदध्वनिरालम्बमम्बरे विततार च ॥ १९५ ॥
दर्शस्य दर्शनात् कष्टमग्निष्टोमस्य चानशे ।
जुघूर्ण पौर्णमासेच्छो सोमं सोऽमन्यतान्तकं ॥ १९६ ॥

वामदेवोपासने सर्व्वाः स्त्रिय उपसीदन्तीति श्रुतिः। दृष्टं सामे-त्यर्थे, वामदेवाड्ड्यड्ड्याविति (पा० ४।२।९) ड्यः ॥ १९४ ॥

वैरिणीति। शुचिता लोकानां बाह्याभ्यन्तरशुचिता मनः-शुद्धिः गोमयाद्यनुलेपनजनिता च शुचिता भुवि प्रवेशं तस्मै न ददौ। यस्मादशुचिस्तस्य वैरिणी। नगरमध्ये सर्व्वेषां जनानां भूमेश्च शुचित्वात् स्थातुं नाशकदित्यर्थः। तथा वेदध्वनिरम्बरे शब्दाश्रये नगरसम्बन्ध्युपरितनाकाशदेशे आलम्बमाश्रयं न विततार। अम्बरस्य वेदध्वन्याश्रयत्वात् तत्रापि स्थातुं नाशकदित्यर्थः। चः समुच्चये। अन्योऽपि वैरिणे स्थानं न ददाति ॥ १९५ ॥

दर्शस्येति। दर्शस्यामावास्यायागस्य अग्निष्टोमयागस्य च दर्शनात् कष्टं महद्दुःखमानशे प्राप। तथा पौर्णमासं यागमिच्छति एवंशीलः सन् जुघूर्ण बभ्राम। तद्दर्शनेन मुमूर्च्छेत्यर्थः। सोमयागं तु अन्तकमेवामन्यत। तद्दर्शनान्मरणमेवाभूदित्यर्थः। अन्यस्यापि ज्वरादिपीडा पश्चान्मूर्च्छा अनन्तरं मरणं भवति ॥ १९६ ॥

तेनादृश्यन्त वीरघ्ना न तु वीरहणो जिनाः।
नापश्यत् सोऽभिनिम्नुक्तान् जीवन्मुक्तानवैक्षत॥१९७॥
स तुतोषाश्नतो विप्रान् दृष्ट्वा स्पृष्टपरस्परान्।
होमशेषीभवत्सोमभुजस्तान् वीक्ष्य दूनवान्॥१९८॥

तेनेति। तेन कलिना वीरान् शूरान् घ्नन्तीति क्षत्रधर्म्मजी-विनो धार्म्मिका अदृश्यन्त। वीरान् श्रेष्ठानाचारवतो घ्नन्तीति वीरहणो जिना न दृष्टाः। शूरा एव वैर्हन्यन्ते न तु सदाचाराः तादृशा महावीरा एव तत्र तेन दृष्टा इत्यर्थः। यद्वा वीरयते शूरो भवति तेजस्वी वह्निस्तं घ्नन्त्युपेक्षया नाशयन्तीति वीरहणो नष्टाग्नयस्ते पुनर्न दृष्टाः। सर्व्वोऽपि गृहस्थः साग्निक एव तत्रे-त्यर्थः। तथा स अभिनिर्म्मुक्तान् येषु सुप्तेषु सूर्य्योऽस्तमेति तादृ-शान् सूर्य्यास्तसमयसमये निद्रितान् अनाचारांस्तत्र नापश्यत्। किन्तु जीवन्तश्च ते मुक्ताश्च तान् विषयपरित्यागिनो ब्रह्मज्ञा-निनोऽवैक्षत। वीरघ्ना वीरहननयोग्या दृष्टा न तु ये वीरान् हतवन्तस्ते दृष्टाः। वीरमारणमपि तत्र राष्ट्रे न क्रियते इत्यर्थ इति वा।

सुप्ते यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च।
अंशुमानभिनिर्मुक्ताभ्युदितौ तु यथाक्रमं॥

इत्यमरः। वीरघ्नाः। मूलविभुजादित्वात् कः॥१९७॥

स इति। स विप्रान् स्पृष्टं परस्परं यैस्तानन्योन्यस्पर्शिनोऽश्नतो भुञ्जानान् दृष्ट्वा तुतोष। उच्छिष्टानां मिथः स्पर्शनिषेधात्तद-तिक्रमकारिणः स्वाश्रयत्वेन सम्भाव्य हृष्ट इत्यर्थः। अनन्तरं होम-

श्रुत्वा जनं रजोदुष्टं तुष्टिं प्राप्नोत् झटित्यसौ।
तं पश्यन् पावनस्नानावस्थं दुःस्थस्ततोऽभवत्॥ १९९ ॥
अधावत् क्वापि गां वीक्ष्य हन्यमानामयं मुदा।
अतिथिभ्यस्तु तां बद्धा मन्दं मन्दो न्यवर्त्तत॥ २०० ॥

शेषीभवत्सोमभुजः होमावशिष्टसोमांशं भुञ्जते सोमलताचूर्णं भुञ्जानांस्तान् वीक्ष्य विचार्य दूनवान् व्यथितोऽभूत्। न सोमेनोच्छिष्टो भवतीति श्रुतेः। इक्षुदण्डे तिले सोमे नोच्छिष्टं मनुरब्रवीत् इति स्मृतेश्च। सोमभक्षणेऽनुच्छिष्टत्वादेतेषामन्यस्पर्शेऽपि पापाभावाद् दुःखितोऽभूदित्यर्थः॥ १९८॥

श्रुत्वेति। असौ कश्चन जनं रजोदुष्टं धूलिनं श्रुत्वा निषिद्धस्त्रीरजःस्पर्शबुद्ध्या खरादिनिषिद्धरजःस्पर्शबुद्ध्या दृष्ट्वा वा स्वाश्रयाशया झटिति शीघ्रं तुष्टिं प्राप्नोत् प्राप्तः। ततोऽनन्तरं विचारावसरे पवनसम्बन्धि पवित्रञ्च यद्गोरजःस्नानं तत्र तेन वाऽवस्था स्थितिर्यस्य तत्र वावतिष्ठते तं पश्यन् दुःस्थो दूनोऽभवत्।

वारुणन्तु जलस्नानमापोहिष्ठेति मन्त्रतः।
वायव्यं गोरजस्नानमाग्नेयं भस्मनोदितं॥
यत्तु सातपवर्षेण दिव्यं तदिति पञ्चधा।

इति मनुः॥ पावनस्नानस्य धर्मत्वात् दूनोऽभूदित्यर्थः। प्राप्नोत्। लङ्। प्राप्त इति वा पाठः॥ १९९॥

अधावदिति। अयं क्वापि यज्ञशालायां गृहे वा हन्यमानां गां वीक्ष्य स्वाश्रयाशया मुदा सन्तोषेणाधावत्। अनन्तरं तु

हृष्टवान् स द्विजं दृष्ट्वा नित्यनैमित्तिकत्यजं।
यजमानं निरूप्यैनं दूरं दीनमुखोऽद्रवत्॥ २०१॥
आननन्द निरीक्ष्यायं पुरे तत्रात्मघातिनं।
सर्व्वस्वारस्य यज्वानमेनं दृष्ट्वाऽथ विव्यथे॥ २०२॥

पुनस्तां गां अतिथिभ्योऽभ्यागमनार्थं हन्यमानां बुद्ध्वा मन्दो मूर्खोऽसौ दुःखवशान्मन्दं शनैर्न्यवर्त्तत परावृत्तः। क्षणमपि तत्र स्थातुमशक्तः सन् मन्दः शीघ्रं परावृत्त इति वा। महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेदिति स्मृतेः॥ २००॥

हृष्टवानिति। स द्विजं नित्यानि सन्ध्यास्नानादीनि, नैमित्तिकानि ग्रहणस्नानादीनि त्यजति तमकुर्व्वाणं दृष्ट्वा हृष्टवान् स्वाश्रयाशया जहर्ष। अनन्तरमेनं यजमानं यागे कृतदीक्षं निरूप्य निश्चित्य निराशत्वाद्दीनमुखः सन् अद्रवत् तस्मात् प्रदेशाद्दूरं पलायाञ्चक्रे। दीक्षितो न ददाति न जुहोतीत्यादिश्रुतेः। नित्यनैमित्तिककर्म्मत्यागस्य वैधत्वाद्दोषाभावात् ततोऽपि पलायित इत्यर्थः। नैमित्तिकः। आगतार्थे भवार्थे वा ठक्॥ २०१॥

आननन्देति। अयं तत्र पुरे आत्मघातिनं कञ्चन निरीक्ष्याननन्द। सर्व्वत एवात्मानं गोपायेदिति विध्यतिक्रमात् पापकार्य्ययं ममाश्रयः स्यादिति बुद्ध्वा जहर्षेत्यर्थः। अथ विचारणायां सत्यां एनमात्मघातिनं नाम्ना सर्व्वस्वारस्य यज्ञस्य यज्वानं यजमानं दृष्ट्वा ज्ञात्वा विव्यथे। आसन्नमरणो ह्यचिकित्स्यरोगार्त्तस्तत्राधिकारी। सोऽन्त्येष्टौ सर्व्वस्वाराख्ये यज्ञे आत्मानमेव पशु-

क्रतौ महाव्रते पश्यन् ब्रह्मचारीत्वरीरतं।
जज्ञे यज्ञक्रियामज्ञः स भण्डाकाण्डताण्डवं॥ २०३॥
यज्वभार्य्याश्वमेधाश्वलिङ्गालिङ्गिवराङ्गतां।
दृष्ट्वाचष्ट स कर्त्तारं श्रुतेर्भाण्डमपण्डितः॥ २०४॥

मन्त्रैः संस्कृतं घातयित्वा यज्ञभागमर्पयतीति श्रुतिः। वैधत्वादात्मघाते दोषाभावात् व्यथित इत्यर्थः। आत्मघातिनं। ताच्छील्ये णिनिः॥ २०२॥

क्रताविति। स महाव्रताख्ये क्रतौ ब्रह्मचारी इत्वरी च तयोर्रतं मैथुनं पश्यन् यज्ञक्रियां भण्डानामसभ्यभाषणादिव्यापारशीलानामकाण्डताण्डवमसमयोद्धतनृत्यमिव जज्ञे मेने। यतोऽज्ञो मूर्खः। भण्डा यथा बहुजनसमक्षं गुह्यादि प्रकाशयन्ति तथा द्विवेदा बहुजनसमक्षमश्लीलव्यापारकरणात् यागकर्म भण्डव्यापारतुल्यमिति। यज्वानः सर्व्वेऽप्यसभ्या इति मेने इत्यर्थः। महाव्रते ब्रह्मचारिपुंश्चल्योः सम्प्रवाद इत्युपनिषत्। एति तच्छीलत्वरी स्वैरिणी, इण्नशजीति (पा० ३।२।१६३) क्वरपि तुकि च, टिड्ढाणञिति (पा० ४।१।१५) ङीप्॥ २०३॥

यज्वेति। स यज्वनो यजमानस्य भार्य्याया अश्वमेधाख्यस्य यज्ञस्याश्वस्य लिङ्गालिङ्गि लिङ्गालिङ्गनशीलं वराङ्गं गुह्यं यस्यास्तस्या भावस्तत्ता तां दृष्ट्वा श्रुतेर्वेदस्य कर्त्तारं भण्डमाचष्ट अकथयत् द्वापरस्याग्र इत्यर्थः। उन्मत्तत्वाद्वात्मानं प्रत्येव वा। यतोऽपण्डितः शास्त्रानुसारिपण्डितबुद्धिरहितः।

अथ भीमजया जुष्टं व्यलोकत कलिर्नलं।
दुष्टदृग्भिर्दुरालोकं प्रभयेव प्रभाप्रभुं ॥ २०५ ॥
तयोः सौहार्द्दसान्द्रत्वं पश्यन् शल्यमिवाप सः ।
मर्म्मच्छेदमिवानर्च्छ स तन्नर्म्मोक्तिभिर्मिथः ॥ २०६ ॥

पुराणं मानवो धर्म्मः साङ्गो वेदश्चिकित्सितम्।
आज्ञासिद्धानि चत्वारि न हातव्यानि हेतुभिः ॥
इति गाजाज्ञानिर्दिष्टं वेदार्थोऽनुष्ठेयः। अश्वमेधप्रकरणे ऽश्वस्य शिश्नं महिष्या उपस्थे निधत्ते इत्यादि श्रुतेः कर्त्ता भण्ड इति श्रुतिकर्त्तुर्भण्डत्वाभिधानान्मूर्खः ॥ २०४ ॥

अथेति। अथैवं पुरपरिभ्रमवशादनन्तरं कलिर्भीमजया भैम्या जुष्टं प्रीत्या सेवितं नलं व्यलोकत। कमिव। प्रभया संज्ञादेव्या ऽयवामच्छतेजोजुष्टं प्रभाप्रभुं सूर्य्यमिव। किम्भूतमुभयं। दुष्टा मत्सरादिदोषोपहता दृग्बुद्धिर्येषां तैः पापलोकैर्दुरालोकं। पुण्यश्लोकत्वात् पतिव्रतया तया च युक्तत्वात् कलिप्रभृतिभिः सुखेन द्रष्टुमशक्यं, काचकामलादिदोषदृग्भिर्दुर्दर्शञ्च। प्रकृष्टाभा कायकान्तिर्यस्या इति भैमीविशेषणञ्च प्रकृष्टया कायकान्त्या याचिभिर्दुरालोकं खलु, तद्योगे च न लोकेति (पा० २।३।६९) षष्ठीनिषेधाद् दुष्टदृग्भिरिति तृतीया ॥ २०५ ॥

तयोरिति। स तयोर्भैमीनलयोः सौहार्द्दसान्द्रत्वं अन्योन्यानुरागोत्कर्षं पश्यन् शल्यमिव हृदि नाराचव्यथमिवाप्नोति प्राप। तत्तुल्यदुःखोऽभूदित्यर्थः। तथा मिथोऽन्योन्यं तथा नर्म्मोक्तिभिः

अमर्षादात्मनो दोषात्तयोस्तेजस्विनागुणात्।
स्प्रष्टुं दृशाप्यनीशस्तौ तस्मादप्यचलत् कलिः॥२०७॥
अगच्छदाश्रयान्वेषी नलद्वेषी स निश्वसन्।
अभिरामं गृहारामं तस्य रामसमश्रियः॥२०८॥

क्रीडाकौतुकैः प्रीत्यालिङ्गनचुम्बनादिभिरनुभावैः कृत्वा मर्मच्छेदमिव प्राणहरणशरीरावयवकर्तनमिव आतङ्कं प्राप। सौहार्दे सौहृदस्य कारणत्वादालिङ्गनादिमर्मणश्चैकार्थत्वान्न पौनरुक्त्याशङ्का। सौहार्दे। युवादित्वाद्भावे अणि, हृद्भग (पा० ७।३।१९) इत्युभयपदवृद्धिः॥२०६॥

अमर्षादिति। कलिः अमर्षात् भैमीनलप्रीतिनर्मासहनशीलत्वरूपाद्दोषात्, तथा आत्मनो महापातकादिरूपाद्दोषाद्धार्मिकाश्रयणाशक्तेः, तथा तयोर्भैमीनलयोस्तेजस्विता गुणात् सौन्दर्यातिशयात् त्वाचतेजसश्चाधर्षणीयत्वरूपात् गुणादित्येवं हेतुत्रयात् तौ भैमीनलौ न परं मनसा किं दृशापि न पुनरङ्गेनापि स्प्रष्टुमनीशोऽसमर्थः किं पुनर्हस्तादिना। एवम्भूतो यतोऽतस्तस्मान्नलावासात् प्रासादादपि सकाशात् कलिर्निर्गतः। एवंविधौ तौ दृष्ट्वा तत्रापि प्रवेष्टुमशक्नुवन्सोऽपि प्रचलित इत्यर्थः। अन्योऽपि मलिनस्तेजस्विनं दृशा वीक्षितुमशक्नुवन् पलायते॥२०७॥

अगच्छदिति। नलद्वेषी नलवैरपरः अत एव तत्पराभवार्थं आश्रयान्वेषी निवासं मृगयमाणः कुत्रचिदपि तदलाभाद्दुःखादमर्षेण च निश्वसन् स कलिः रामेण श्रीरामेण समा तुल्या श्रीः शोभा सम्पद् यस्य तस्य नलस्याभिरामं वृक्षादिस-

रक्षिलक्षवृतत्वेन बाधनं न तपोधनैः ।
मेने मानी मनाक् तत्र स्वानुकूलं कलिः किल ॥ २०९ ॥

समृद्धिमत्त्वाद्रमणीयं गृहारामं प्रासादसमीपवर्त्ति क्रीडावनं अगच्छत् गतवान् । समीपे स्थितौ क्रियमाणायां नलदोषविचारः सुकर इति गृहारामं प्राप्तवानित्यर्थः । श्रीरामसाम्ये नलस्य पावित्र्यं सौन्दर्य्यं सम्पदाधिक्यं भाविराज्यपरित्यागश्चेति सूचितं । तदानीं रामस्य भावित्वे कल्पितया भूतत्वात् प्रवाहस्थानादितया वा भूतत्वादुपमा युक्तैवेति ज्ञेयं ॥ २०८ ॥

रक्षीति । कलिः तत्र पुरे रक्षिणां लक्षं सङ्ख्या यत्र तत्त्वं परिवेष्टितत्वं तेन हेतुना प्रवेष्टुमशक्यत्वात्तपोधनैः कृत्वा न बाधयतीति न बाधनमेवम्भूतं मेने विशेषणवलाद्विशेष्यासिद्धान् तमारामं स्वहितं मेन इत्यर्थः । यतो मानी अभिमानवान् । नलपराभवार्थं तत्रैव निवासवाञ्छामदधादित्यर्थः । किल प्रसिद्धौ । रक्षिलक्षवृतत्वेनैव बाधकं न पुनस्तपोधनैर्बाधकमतस्तत्र पुरे तमाराममेव मनाक् स्वहितं मेने इत्यर्थः । रक्षकबाधे सत्यपि अदृश्यतयापि स्वस्य प्रवेष्टुं शक्यत्वान्न तु तपोधन इति मनागित्युक्तं । एवं सङ्कटे किमिति न्यवासीदित्यत आह । यतो मानी । अभिमानवान् साधनीयेऽर्थे सङ्कटमपि मानिनः सहन्त इत्यर्थ इति वा । रक्षकवृतत्वेन मुनिकर्तृकं बाधनं मनागपि तत्रारामे नास्तीति तं स्वानुकूलं तामसानां तत्र प्रवेशाभावात् तापसनिमित्तस्वबाधारहितं अत एव मनागीषत् स्वानुकूलं स्वस्मै हितमेवंविधं मेन इति वा ॥ २०९ ॥

दलपुष्पफलैर्देवद्विजपूजाभिलाषिणा ।
स नलेनार्जितान् प्राप तत्र नाक्रमितुं द्रुमान् ॥ २१० ॥
अथ सर्व्वाद्भिदासक्तिपूरणाय स रोपितं ।
बिभीतकं ददर्शैकं कुटं धर्म्मोप्यकर्म्मठं ॥ २११ ॥
स तं नैषधसौधस्य निकटं निष्कुटध्वजं ।
बहु मेने निजं तस्मिन् कलिरालम्बनं वने ॥ २१२ ॥

दलेति । स कलिः तत्रोद्याने वने दलैः पत्रैः पुष्पैः फलैश्च कृत्वा देवानां अतिथीनाञ्च पूजा तद्विषयेणाभिलाषिणाऽऽशयेन कृत्वा देवद्विजपूजैवाभिलाषिराशयो यस्यैवंविधेन वा, दलादिभिर्देवपूजां कर्त्तुकामेन नलेनार्जितानारोपितानाम्रादिद्रुमान् आक्रमितुं आरोढुमाश्रयितुञ्च न प्राप । तेषां धर्म्मोपयोगित्वात् स्वस्य च पापरूपत्वात् तानाश्रयितुं नाशकदित्यर्थः ॥ २१० ॥

अथेति । अथ स कलिः धर्म्मे धर्म्मकार्य्ये विषयेऽकर्म्मठमकर्म्मशूरमपि पित्रादीनां देवाद्यनुपयोगाद्धर्म्मकार्य्यानर्हमपि सर्व्वेषामुद्भिदां वृक्षाणामासक्तेः सान्निध्यस्य पूरणाय वृक्षलतागुल्मादिजातिमात्रास्तीति कीर्त्तिपूर्त्तिमात्राय तत्रोद्याने नलेन आरोपितमेकं सर्व्ववृक्षासक्तिपूरणस्यैकेनैव कृतत्वादेकमेवं बिभीतकं कुटं वृक्षं ददर्श । अनोकहः कुटः शाल इत्यमरः । कर्म्मठः । कर्म्मणि घटत इति कर्म्मणि घटोऽठच् । (पा० ५ । २ । ३५) । कर्म्मशूरस्तु कर्म्मठः । उद्भिदस्तरुगुल्माद्या इत्यमरः ॥ २११ ॥

स इति । तस्मिन् वने नैषधसौधस्य निकटं समीपवर्त्तिनं

निष्पदस्य कलेस्तत्र स्थानदानाद्विभीतकः।
कलिद्रुमः परं नासीदासीत् कल्पद्रुमोऽपि सः॥ २१३॥
ददौ पदेन धर्म्मस्य स्थातुमेकेन यत् कलिः।
एकः सोऽपि तदा तस्य पदं मन्येऽमिलत्ततः॥ २१४॥

निष्कुटस्य गृहारामस्य ध्वजं लाञ्छनभूतं अथ चोच्चोच्चतरत्वात् ध्वजमिव तदग्रस्थित्या नलदर्शनवशात्तदीयदोषविचारोपाय-भूतं तं विभीतकं निजं स्वीयमालम्बनमाधारं बहु मेने। गृहा-रामास्तु निष्कुटा इत्यमरः॥ २१२॥

निष्पदस्येति। तत्र पुरे वने च निष्पदस्याश्रयरहितस्य कलेः स्थानदानात् स्वेनैव तदाधारभूतत्वात् स विभीतकः केवलं निवासभूतत्वात् कलिद्रुमः कलिसम्बन्धी द्रुमः परं केवलमा-सीदिति न किन्तु कलिं प्रत्यभिलाषपूरणात् कल्पद्रुमोऽप्यभीत्। अन्योऽपि निराश्रयस्याश्रयदानात् कल्पद्रुमत्वेन व्यपदिश्यते। भूतावासः कलिद्रुम इत्यमरः॥ २१३॥

पापिना कलिना विभीतकं स्थानं प्राप्तमित्यत्र हेतुमुत्प्रेक्षते ददाविति। यद् यस्माद्धेतोः कलिः प्रवाहानादितयाऽतीते कलियुगसमये धर्मस्यैकेन पदेन चतुर्थांशेन पदं स्थानं ददौ तत्तस्मात् तदा नलराज्यसमये कृतयुगे स विभीतकोऽपि एक एव तस्य कलेः पदं चरणोऽथ च स्थानममिलत् सञ्जात इत्यहं मन्ये। कृतं कर्म्म युज्यते इति न्यायेन कालान्तरे यावत् दत्तं

उद्भिद्विरचितावासः कपोतादिव तत्र सः ।
राज्ञः साग्नेर्द्विजात्तस्मात् सन्त्रासं प्राप दीक्षितात् ॥ २१५ ॥

तावदेव तदानीं तेन लब्धमित्यहं मन्ये इत्युत्प्रेक्षा। धर्मस्य सम्बन्धमात्रविवक्षया षष्ठी ॥ २१४ ॥

उद्भिदिति। तत्रोद्याने उद्भिदि वृक्षे विभीतके विरचित आवासः स्थितिर्येन स कलिः साग्नेरग्निहोत्रवतो द्विजात् क्षत्रियात् तथा दीक्षितात् स्वीकृताग्निहोत्रादियागदीक्षादस्माद्राज्ञः अभिषेकादिगुणयुक्तात् नलात् सकाशात् सम्यक्त्रासं सकाशापनिग्रहं प्राप। राज्ञा द्विजादित्येताभ्यां स्वाभाविकं निग्रहसामर्थ्यं सूचितं। साग्नेर्दीक्षितादित्येताभ्याञ्च तपोजनितं शापसामर्थ्यं सूचितं। एवंविधोऽयं समीपस्थितं मां निश्चयेन ज्ञास्यति शापं दास्यतीत्यन्तर्मसंहृय प्रापेत्यर्थः। अग्निहोत्रिणा नलस्य सम्बन्धिनः कृतयज्ञदीक्षात् तस्मादतिप्रसिद्धाद् द्विजात् ब्राह्मणाद् गौतमाख्यात् पुरोधसः सकाशात् भयं प्राप। नलाग्निहोत्रादिपरिचर्यार्थं तत्र वर्त्तमानात् स्वयमग्निहोत्रादिदीक्षायुक्ताच्च गौतमात् पुरोधसः सकाशाद्भीत इत्यर्थ इति वा। कस्मादिव कपोतादिव। यथाऽग्निसहितादङ्गारभक्षिणः तथा दीक्षितात् कपोतनाम्नो द्विजात् पक्षिणः सकाशात् वृक्षे विरचितावासः काकादिः पक्षी पुरुषो वा वृक्षारूढो वृक्षाधःस्थायी वा भयं प्रापत् पूर्वं कदाचित्तथेत्युपमा। स यथा प्राप्नोति तथेत्यर्थः। अग्निः कपोतजठरमन्तःप्रविष्टोऽतएव तद्भक्षिता

विभीतकमधिष्ठाय तथाभूतेन तिष्ठता।
तेन भीमभुवोऽभीकः स राजर्षिरधर्षि न ॥ २१६ ॥

पाषाणकणिकापि जीर्यत इत्यैतिह्यं। साग्नेरङ्गारभक्षिणः। कपोतविशेषा ह्यङ्गारान् भक्षयति। उद्भिदा तृणकाष्ठादिना निर्म्मितगृहः पुरुषोऽभ्युद्गारित्वात् स्वोपवेशनमात्रेण गृहदाहाद्यनिष्टसूचकात् गृहोपरि विलोकनात् कपोतो ह्युलूकपक्षिणः सकाशाद्यथा भयं प्राप्नोति तथाऽसावपि प्राप्तकपोतो हि गृहं प्रविष्टोऽनिष्टसूचकः। एवमद्भुतकर्म्मणोऽपि स्फूर्त्तिसत्वादिगरिम्णो दृष्टात् कपोतात्तद्गृहवासी पक्षी नरो वा स्वस्यापि भक्षणशङ्कया शाखापतनशङ्कया वा यथा बिभेति तथेत्यर्थः। एवं यथामति व्याख्यातव्यं ॥ २१५ ॥

विभीतकमिति। विभीतकमधिष्ठायाश्रित्य तथाभूतेन तिष्ठता तस्य धर्म्मोपयोगाभावात् भयराहित्येन स्थितवता अथ च तादृशनलदर्शनात् पूर्व्वोक्तप्रकारेण बिभ्यता अत्यन्तास्थिरेण कलिना भीमभुवोऽभीकः भैम्याः कामुकः स राजा चासावृषिश्च राजत्वेऽपि धर्म्मप्रधानत्वान्मुनितुल्यो नलो नाधर्षि न पराभूतः। अपराभवे राजर्षित्वमेव हेतुः। अथ च विभीतकतुल्यां तरुमाश्रित्य तिष्ठता तथाऽतिमहता भूतेन भूतत्वं प्राप्तेन केनचित् प्रेतेन पिशाचेन भीमाया भयानकाया भूमेः रणभूमेर्रुद्रभूमेर्वा हेतोरभीको भयरहितो राजर्षिर्धार्म्मिको न पराभूयत इत्युचितं। भीमां भूमिमनादृत्य निर्भय इत्यर्थः। अनादरे षष्ठी ॥ २१६ ॥

तमालम्बनमासाद्य वैदर्भीनिषधेशयोः ।
कलुषं कलिरन्विष्यन्नवात्सीद्वत्सरान् बहून् ॥ २१७ ॥
यथासीत् कानने तत्र विनिद्रकलिका लता ।
तथा नलकलासक्तिविनिद्रकलिकाननः ॥ २१८ ॥
दोषं नलस्य जिज्ञासुर्बभ्राम द्वापरः क्षितौ ।
न दोषः कोऽपि लोकस्य मुखेऽस्तीति दुराशया ॥ २१९ ॥

तमिति । कलिः तं बिभीतकं आलम्बनमाश्रयमासाद्य प्राप्य वैदर्भीनिषधेशयोः कलुषं पापाचरणमन्विष्यन् गवेषयितुमित्यर्थः, बहून् वत्सरानवात्सीत् दोषसंस्पर्शनेन विना तयोः पराभवेऽशक्तत्वाद्दोषपरीक्षार्थं बहुकालं तत्रैव स्थितवानित्यर्थः । अन्विष्यन् । इषेः शता । अवात्सीत् । वसेर्लुङि, सिचि, वद व्रजेति (पा० ७।२।३) वृद्धौ, सस्यार्द्धधातुक इति (कौ० व्या० पर्व० ३०। पंक्तिः ८।३।०) तत्वम् । वत्सरान् । अत्यन्तसंयोगे द्वितीया ॥ २१७ ॥

यथेति । तत्र कानने तस्मिन्नुद्याने यथा येन प्रकारेण विनिद्रकलिका विकसितकोरका लता वल्ली आसीत् तथा तेन प्रकारेण नलस्य कलौ आसक्तिरभिनिवेशस्तद्वशाद्विगतनिद्रो जागरूकः सावधानः कलिलक्षणः कालः समयो यत्र तद्भावस्तत्ता सापि तत्र वने आसीत्। सदा विकसितकोरकत्वसम्बन्धस्तस्योद्यानस्य यथाभूत् तथा सदा कलिसम्बन्धोऽप्यभूदित्येतावन्मात्रेण रूपमात्रेण चोपमा। नलकलनार्थं नलदोषान्वेषणार्थञ्च जागरूकः स कलिस्तत्रावात्सीदित्यर्थः ॥ २१८ ॥

एवं कलेरवस्थानं निरूप्य द्वापरस्यावस्थानमाह। दोषमिति।

अमुष्मिन्नारामे सततनिपतद्दोहदतया
प्रसूनैरुन्निद्रैरनिशममृतांशुप्रतिभटे।
असौ बद्धालम्बः कलिरजनि कादम्बविहग-
च्छदच्छायाभ्यङ्गोचितरुचितया लाञ्छनमृगः ॥ २२० ॥

लोकापवादरूपं अभिशस्तिरूपं वा नलस्य दोषं जिज्ञासुर्दोषपरः इत्यघटमानया दुराशया चिन्ता बभ्राम। इति किं। लोकस्य मुखे जनवार्त्तायामदोषो दोषरहितः कोऽपि नरो नास्ति मर्त्यो जनो यं निर्दोषमाह तादृशः पुरुष एव नास्तीति नलस्यापि किञ्चिद्दोषं कोऽपि वदिष्यतीति। न दोष इति पाठे लोकोक्का-वल्पोऽपि दोषो नास्ति अपि तु प्रायेण भविष्यतीति दुराशा-येति काका सम्भावनापरत्वेन व्याख्येयम्। दोषं। न लोकेति (पा० २।३।६९) षष्ठीनिषेधः ॥ २१९ ॥

अमुष्मिन्निति। असौ कलिः श्यामपक्षहंसजातीयाः काद-म्बविहगाः कलहंसाख्यपक्षिविशेषाः तेषां छदाः पक्षाः तेषां छायायाः कान्तेरभ्यङ्गे उचिता योग्या तैलाभ्यङ्गेनेव स्वसंस्पर्श-मात्रेण स्नैग्ध्यातिशयकारिणी श्यामतरा रुचिः कान्तिर्यस्य तस्य भावस्तत्ता तया कृष्णवर्णतया वनचन्द्रे लाञ्छनमृगोऽजनि क-लङ्कमृगोऽभूत्। किम्भूतः। सततं सदा निपतन् निक्षिप्यमाणो धूमादिर्दोहदो यत्र तस्य भावस्तत्ता तया अनिशं सदा उन्नि-द्रैर्विकसितैः प्रसूनैर्मालत्यादिसितपुष्पैः कृत्वा उज्ज्वलत्वादानन्द-दायित्वाच्चामृतांशोश्चन्द्रस्य प्रतिभटे प्रतिस्पर्द्धिनि चन्द्रतुल्येऽमु-

स्फारे तादृशि वीरसेनिनगरे पुण्यैः प्रजानां घनं
विघ्नं लब्धवतश्चिराद् उपनतिस्तस्मिन् किलासीत् कलेः।

स्मिन् पूर्व्वोक्ते आरामे नलोद्याने बहुः कृत आलम्बो वासो येन सः। चन्द्रे हि कलङ्केन भवितव्यं तत्स्थाने कलिरेवाभूदिति। एतेन निर्दोषे नलोद्याने कलिरेव दूषकोऽभूदित्युक्तम्। तत्र न्यवात्सीदित्यर्थः। पुष्पफलानामाकालिकसमृद्धये वृक्षेषु वृक्षायुर्वेदोक्तो धूपादिदोहदः क्रियते, तथा चम्पके पिण्याकादिजललेपः, वकुले सुन्दरीगण्डूषजलमदिरासेकः, रक्ताशोके च तरुणीचरणप्रताडनमित्यादिः॥ २२०॥

स्फार इति। स्फारे विशालतरे तादृशि उक्तप्रकारेण धर्म्मबहुले स्फारत्वेऽपि सर्व्वत्र धर्म्मपूर्णे वीरसेनिर्नलस्तस्य नगरे प्रजानां पुण्यैर्हेतुभिर्घनं भूयांसं विघ्नं लब्धवतः प्राप्तवतो निराश्रयस्य कलेस्तस्मिन् नलोद्याने चिराद् बहुकालं नलदोषगवेषणार्थं उपनतिरवस्थितिः किलाभूत्। किलेति पुराणादौ श्रूयत इत्यर्थः। प्रजानां पुण्यैः स्फारे व्याप्त इत्यर्थ इति वा हेतुगर्भविशेषणम्। एतस्मिन्नन्तरेऽवसरे पुनरन्यान्ययोग्यमेलनादन्नर्मनर्मि अमितानन्दः प्राप्तनिःसीमहर्षः स प्रसिद्धप्रभावः स्मरो भैमीनलौ आराद्धुं सेवितुं सुतरां पोषयितुं वा धनुः श्रुतिशिखा कर्णोर्द्धदेशस्तां वन्दारुः स्पर्शिनी चूडा अग्रभागो यस्य एवंविधमाकर्णपूर्णं व्यधित चकार। भैमीनलौ नगरं प्राप्तौ सुरेषु स्वर्गतेषु कलौ च वनालम्बिनि सति इतरेतरानुरागा-

एतस्मिन् पुनरन्तरेऽन्तरमितानन्दः स भैमीनला-
वाराद्धुं व्यधित स्मरः श्रुतिशिखावन्दारुचूडं धनुः ॥ २२१ ॥
श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।
यातः सप्तदशः स्वसुः सुसदृशि छन्दप्रशस्तेर्महा-
काव्ये तद्भुवि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः ॥ २२२ ॥

समाप्तः सप्तदशः सर्गः ।

तिशयेन चिरविरहातिसस्पृहौ स्मराराधनं चक्रतुरिति भावः । अनेनोत्तरसर्गे सम्भोगारम्भवर्णनात् सङ्गतिः सूचिता । कलि-कर्तृकपराभवस्य भविष्यत्त्वान्नायकापकर्षस्यावर्णनीयत्वाच्च स मोक्षः ॥ २२१ ॥

श्रीहर्षमिति । पूर्वार्द्धः पूर्ववत् । एककर्तृकत्वात् स्वसुर्भगिन्याः छन्दस्य राजविशेषस्य प्रशस्तेर्वर्णनात् ग्रन्थस्य सुसदृशि तुल्ये तद्भुवि श्रीहर्षरचिते सप्तदशानां पूरणो निसर्गोज्ज्वलः स्वभाव-सुन्दरः सर्गः समाप्तः । छन्दप्रशस्तिरपि ग्रन्थो मया कृत इति सूचितं । सोदर्य्याश्च तुल्या भवन्ति । छन्दः प्रशस्तेरिति पाठे छन्दो बन्धक्रमस्वरूपनिरूपणापरस्य ग्रन्थस्येत्यर्थः । सप्तदश इति तस्य पूरण इति (पा० ५।२।४८) डट् । तद्भुवि । भावितपुस्कम् ॥ २२२ ॥

इति वेदरकरोपनामकनरसिंहपण्डितात्मजनारायणविरचिते नैषधीयप्रकाशे सप्तदशः सर्गः ॥ १७ ॥

---

उत्तरनैषधचरिते।

अष्टादशः सर्गः।

---

श्रीलक्ष्मीनृसिंहौ जयतः।

सोऽयमित्थमथ भीमनन्दिनीं
दारसारमधिगम्य नैषधः।
तां तृतीयपुरुषार्थवारिधेः
पारलम्भनतरीमरीरमत्॥ १॥

सोऽयमिति। सर्गसङ्गतिरुक्तैव। सोऽयमुक्तसौन्दर्यादिगुणप्रभावो नलः, इत्थमुक्तप्रकारेण त्रैलोक्यनायकसमस्तं दारसारं स्त्रीरत्नभूतां तामिन्द्रादिभिरप्यभिलष्यमाणां भीमनन्दिनीमधिगम्य तृतीयपुरुषार्थवारिधेः कामरूपदुरवगाहजलधेः सम्बन्धिनीं पारलम्भनतरीं परतीरप्रापणनौकारूपां तां भैमीं अरीरमत् रमयामास। तादृश्या विना कामपुरुषार्थपारं कामशास्त्रोक्तनानारतपारं न प्राप्यत इत्यनेन सौन्दर्यानुरागातिशयः सूचितः। अन्यापि तरी वारिधेः पारं प्रापयति। तारणतरीमित्यपि पाठः। अरीरमत्। रमेर्ण्यन्ताल्लुङि चङि सन्वद्भावादित्वादिः॥ १॥

आत्मवित् सह तया दिवानिशं
भोगभागपि न पापमाप सः।
आहृता हि विषयैकतानता
ज्ञानधौतमनसं न लिम्पति ॥ २ ॥
न्यस्य मन्त्रिषु स राज्यमादरा-
दारराध मदनं प्रियासखः।

अनुरागातिशयादहोरात्रं तत्सम्भोगे दोषमाशङ्क्य परिहरति। आत्मविदिति ॥ स नलस्तया सह दिवानिशं भोगभाक् सन्नपि दिवामैथुननिषेधातिक्रमजनितं पापं नाप। यत आत्मवित् जीवब्रह्माभेदबुद्धिमान्। उक्तमर्थं युक्त्यन्तरेण द्रढयति। हि यस्मात् आहृता कृत्रिमा विषयैकतानता स्रक्चन्दनादिविषयपरता ज्ञानेन परमात्मज्ञानेन धौतं क्षालितं कामक्रोधादिमलितं मनो यस्य तं पुरुषं न लिम्पति पापसंस्पर्शिनं न करोति। स्वाभाविकी हि विषयपरता पापसञ्चयकारिणी, परमात्मज्ञानवतस्तु सा न भवति, किन्तु भोगात् पूर्वं कर्मक्षयार्थमेव सा विषयपरताङ्गीकार्या। अहार्य्या विषयपरता ब्रह्मज्ञानिनं पापिनं न करोतीति आत्मवित् स पापं नाप्नोतीति युक्तमेवोक्तमित्यर्थः। विषयपरताया अहार्य्यत्वे दोषाभावाद्दिवारात्रं तया सह चिक्रीडेत्यर्थः। दिवानिशं। अत्यन्तसंयोगे द्वितीया ॥ २ ॥

दिवानिशं सम्भोगे राज्यरक्षणं कथमित्यत आह। न्यस्येति ॥

नैकवर्णमणिकोटिकुट्टिमे
हेमभूमिभृति सौधभूधरे ॥ ३ ॥
वीरसेनसुतकण्ठभूषणी-
भूतदिव्यमणिपंक्तिशक्तिभिः।
कामनोपनमदर्थतागुणाद्
यस्तृणीकृतसुपर्व्वपर्व्वतः ॥ ४ ॥

स नलो मन्त्रिषु राज्यं न्यस्य नैकवर्णमणिकोटिकुट्टिमे नानावर्णरत्नसमूहबद्धभूमिके तथा हेमभूमिभृति सुवर्णभूमिधारिणि सौधभूधरे प्रासादरूपे उत्तुङ्गे पर्व्वते प्रियासखः सन् मदनमादराद्रागासक्त्या आरराध सिषेवे। प्रियासख इत्यालम्बनविभावः। कामस्य धर्म्मविषयत्वञ्च सूचितं। अत एव तद्वर्णनं प्रस्तौति। नैकवर्णेत्यादिविशेषणसामर्थ्याद् भूधरो हेमाद्रिः सौधभुवं धरति नलप्रासादाकारेण परिणतेऽनैकवर्णमणिकुट्टिमे हेम्नः सुवर्णस्य भूमिभृति पर्व्वते हेमाद्रौ प्रासादसौन्दर्य्यमुत्कर्षञ्च सूचितं। इत आरभ्य तत्र सौधेति यावत्कालापकुलकं ॥ ३ ॥

वीरसेनेति। यः सौधभूधरो वीरसेनसुतस्य कण्ठभूषणीभूता दिव्या मणयस्तेषां पङ्क्तिर्यानकरत्नभास्मच्चिन्तामणिमाला तस्याः शक्तिभिरलौकिकसामर्थ्यैः कृत्वा कामनयाभिलाषमात्रेणोपनमन्तः सन्निहितीभवन्तो नलेनान्येन वा लभ्यमाना दृष्टा अर्थाः पदार्था यत्र तद्भावस्तत्ता सैव गुणस्तस्माद्धेतोस्तृणीकृतः सुपर्व्वणां देवानां पर्व्वतो मेरुर्येन सः। सर्व्वार्थदायिचिन्तामणि-

धूपितं यदुदराम्बरं चिरं
मेचकैरगुरुसारदारुभिः।
जालजालभृतचन्द्रचन्दन-
क्षोदमेदुरसमीरशीतलं ॥ ५ ॥
कापि कामशरवृत्तवर्त्तये
यं महासुरभितैलदीपिकाः।
तेनिरे वितिमिरं स्मरस्फुर-
द्दोःप्रतापनिकराङ्कुरश्रियः ॥ ६ ॥

रत्नस्य मेरावत्र च विद्यमानत्वाद्यो मेरुतुल्य इत्युपमा। अत्र बहूनां चिन्तामणीनां सद्भावात्ततोऽप्याधिक्यं वा ॥ ४ ॥

धूपितमिति। मेचकैः श्यामलैरगुरुसञ्ज्ञकैः सारैः श्रेष्ठैर्दारुभिः काष्ठैश्चिरं यदुदराम्बरं यदीयो गर्भभागो धूपितं वासितं यदुदराम्बरं धूपार्थं दह्यमानैस्तैरर्पितपरिमलमित्यर्थः। तथा धूपजसन्तापत्याजनाय जालप्रकारेषु जालजालेषु सर्व्वेषु गवाक्षेषु जालानां वा जालेषु गवाक्षसङ्घेषु भृतः स्थापितः चन्द्रचन्दनक्षोदः कर्पूरचन्दनचूर्णकल्पितेन मेदुरः पुष्टस्तत्स्पर्शवशाच्छिशिरतरः परिमलबहुलश्च यः समीरो वायुस्तेन शीतलं शीततरं। सर्व्वेऽप्येते उद्दीपनविभावाः। जालजाले। प्रकारे द्विरुक्तिः, षष्ठीसमासो वा ॥ ५ ॥

कापीति। महासुरभिचम्पकादिद्रव्यसुगन्धि तैलं यासु एवंविधा दीपिका यं सौधभूधरं कापि भैमीनलालङ्कृतदेशे विति-

कुङ्कुमैणमदपङ्कलेपिताः
क्षालिताश्च हिमवालुकाम्बुभिः।
रेजुरध्वनतशैलजस्रजो
यस्य मुग्धमणिकुट्टिमा भुवः॥ ७॥

मिरं विगतान्धकारं तेनिरे प्रकाशमानगर्भस्रुः। किम्भूताः। कामशरवृत्ताः कामबाणवर्त्तुलाः कामशरेण कर्पूरेण धूपविशेषेण वा वृत्ता निष्पन्ना धूपकर्पूरगर्भा वर्त्तयस्तन्तुसहरचिता दीपाधारभूता देशा यासान्ताः। तथा स्मरस्य भैमीनसव्ययार्थे स्फुरन् दोःप्रतापनिकरस्तस्याङ्कुराणां प्रथमोद्भेदानामिव श्रीः शोभा यासान्ताः। एतादृशनायिकादर्शनमात्रेण कामोत्पत्तेस्तुल्यरूपत्वाच्च दीपिकाः कामप्रतापाङ्कुरा इतीत्युपमोत्प्रेक्षा। राजनिकटस्था दीपाः कर्पूरादिवृत्तवर्त्तयः क्रियन्ते।

पूरसर्ज्यभयालाचा नखाब्जादिजटागदैः।
समैः समधुभिर्धूपो मतः कामशराभिधः॥

इति कामशरो धूपः॥ ६॥

कुङ्कुमेति। यस्य मुग्धानि रमणीयानि मणिकुट्टिमानि यासु ता भुवो रेजुः। किम्भूताः। कुङ्कुमस्य एणमदः कस्तूरी च तयोः पङ्केन कर्द्दमेन लेपिताः। तथा जलमध्ये निःक्षेपाद्द्रवीभूतहिमवालुकाम्बुभिः कर्पूरवासितोदकैः क्षालिताश्च। तथाऽध्वनि नलागमनमार्गे तता विस्तारिता मृदुसुगन्धयः शैलजा हिमवत्समुद्भूतमालत्यादिस्रजो माला यासु ताः। अतिशैत्यसौगन्ध्यार्थं

नैषधाङ्गपरिमर्द्दमेदुरा-
मोदमार्द्दवमनोज्ञवर्णया ।
यद्भुवः क्वचन सूनशय्यया
ऽभाजि भालतिलकप्रगल्भता ॥ ८ ॥

पूर्व्वं कुङ्कुमकस्तूरीलेपः कृतोऽनन्तरञ्च तत्पङ्कस्पर्शभिया कर्पूर-जम्भैः क्षालनं कृतं तेनाधिकसौगन्ध्यं जातं । अनन्तरञ्च भैमी-नलचरणयोर्मृदुत्वान्मार्गे मणिबद्धभूकाठिन्यपरिहारार्थं मृदु-तरशैलजप्रक्षेप इति । पाठक्रमादर्थक्रमो बलीयानिति पूर्व्वं कर्पूरोदकैः क्षालिताः, पश्चाद्धामयस्थानीयकुङ्कुमकस्तूरीपङ्केन कृताङ्गादर्त्तनाः, अनन्तरञ्च धृतशैलेयमाला धृतसुन्दरमणि-खचितभूषणाः सत्यः शुशुभिर इति वा । यद्वेत्यपि पाठः । वालुकांशुभिरिति पाठे शुभ्रकर्पूरचूर्णैः क्षालिताश्छुरिताः कृतरङ्गमालिका इत्यर्थः । अत्र शाब्दोऽपि क्रमो घटते । लेपि-ताः । एवन्ताम्निष्ठा ॥ ७ ॥

नैषधेति । क्वचन नलनिद्रास्थानदेशे सूनशय्यया पुष्परचि-तास्तरणेन यस्य सौधस्य सम्बन्धिन्या भुवो भूमेर्भालस्य लला-टस्य तिलकस्तस्य प्रगल्भता रमणीयता ऽभाजि धृता । पुष्प-शय्या भूमेर्ललाटतिलक इव रेजे इत्यर्थः ।कीदृश्या । नैषधाङ्गस्य नलाङ्गस्य परिमर्द्देन संस्पर्शेन वरुणस्य वरदानसामर्थ्यान्मेदुरो नितरामधिकीभूत आमोदः सौरभ्यं मार्द्दवं मनोज्ञः सदैवा-म्लानत्वात् सुन्दरो वर्णश्च यस्यास्तया । तिलकोऽपि कस्तूर्यादि-

क्वापि यन्निकटनिष्कुटस्फुट-
त्कोरकप्रकरसौरभोर्मिभिः।
सान्द्रमाद्रियत भीमनन्दिनी-
नासिकापुटकुटीकुटुम्बिता ॥ ९ ॥

निर्म्मितत्वात् सुगन्धिः सुवर्णश्च भवति। अथ च यद्भूसम्बन्धिनि क्वचन देशे मत्स्याङ्गसम्बन्धिनामोदादियुक्ततया पुष्पगन्ध्यातुल्यया ऽतिस्पृष्टा भैम्या भालतिलकेन या प्रगल्भता प्रकाशमानतास्य अभाजि भज्ञिता। सम्भोगवशात्तिलकस्य स्पृष्टत्वादित्यर्थ इति वा। अभाजि। पक्षे, भञ्जेश्च चिणि (पा० ६।४।३३) इति न-लोपः ॥ ८ ॥

क्वापीति। क्वापि कस्मिंश्चित् प्रदेशे यस्य सौधस्य निकटे निष्कुटे गृहारामे स्फुटन्तो विकसन्तः कोरकप्रकरा मल्लिकादिकलिकासमूहास्तेषां सौरभोर्मिभिः सौगन्ध्यपरम्पराभिः, भीमनन्दिन्या नासिकापुटकुटी नासिकापुटरन्ध्ररूपं अल्पगृहं तत्र कुटुम्बिता पुत्रकलत्रादिसद्भावस्थायिता सान्द्रं नितरामाद्रियताङ्गीकृता। अल्पगृहे बहुकुटुम्बो यथा सम्मर्द्देन वसति तथा भैमीनासिकायां तैर्वसितमित्यर्थः। वनोपान्तेषु दन्तवृष्टिर्भैमी सकलपुष्पपरिमलं यत्र प्रत्यक्षमन्वभूदिति भावः। अथ च भैमीनासापुटकुट्या कुटुम्बितासादृश्यं धृतं। कुटुम्बिनो हि सजातीया भवन्ति। भैमीनासासाम्यात्सौरभतुल्यता यन्निकटवर्त्तिवनपुष्पसौरभैर्वृतेत्यर्थः ॥ ९ ॥

ऋद्धसर्व्वऋतुवृक्षवाटिका-
कीरकृत्तसहकारशीकरैः।
यञ्जुषः स्वकुलमुख्यमाशुगो
प्राणवातमुपदाभिरञ्चति ॥ १० ॥

ऋद्धेति। आशुगो वायुः, ऋद्धाः पुष्पफलपल्लवादिसमृद्धिमन्तः सर्व्वऋतुवृक्षा वसन्तादिसकलर्त्तुसम्बन्धिन आम्रादयो वृक्षा यस्यां सा, ऋद्धाः सर्व्वे ऋतवः सर्व्वे वृक्षाश्च यस्यां वा, तस्यां वाटिकायां कीरैः शुकैश्चञ्चुपुटैः कृत्वा कृत्तानि खण्डितानि यानि सहकारपुष्पाणि फलानि वा तेषां शीकरैर्मकरन्दविन्दुभिर्निर्यासविन्दुभिर्वा उपदाभिस्तद्रूपैरुपहारैः कृत्वा यञ्जुषो यत्तोधसेविनो नलस्य भैम्या वा यस्य कस्यापि वा प्राणवातं नासाश्वासरूपं प्राणाख्यं वायुं यञ्जुषो यत्सम्बन्धी वा वायुरर्थाद्भैमीनलयोरन्यस्य वा अञ्चति स्म अपूपुजत्। उपहारैरुपतिष्ठते स्मेति वा। यस्मात् कुलमुख्यं पञ्चवायुमध्ये प्राणस्यादिभूतत्वात् कुलवृद्धत्वं। कुलवृद्धस्य तदीयैः पूज्यते। आम्रशीकरानानयन् वायुर्यत्सेविनं जनं सुखयति स्मेत्यर्थः। सहकारशीकरैरित्यनेन वायोः शैत्यसौगन्ध्ये, अञ्चतीत्यनेन च मान्द्यं सूचितं। सर्वऋत्वित्यत्र, ऋत्यकः (पा० ६।१।१२८) इति प्रकृतिभावः। सहकारेत्यत्र पुष्पे फले वा वाच्ये प्रत्ययस्य, पुष्पमूलेष्विति (पा० ४।१।१६६।वा० २) लुप्। फले लुगिति वा (पा० ४।३।१६३) तस्य लुक्। यञ्जुष इति क्विबन्तात् षष्ठी। पक्षे इगुपधात् कः ॥ १० ॥

कुत्रचित् कनकनिर्म्मिताखिलः
क्वापि यो विमलरत्नजः किल ।
कुत्रचित् रचितचित्रशालिकः
क्वापि चास्थिरविधैन्द्रजालिकः ॥ ११ ॥*
चित्रतत्तदनुकार्य्यविभ्रमा-
धायिनैकविधरूपरूपकं ।

कुत्रेति । यः सौधः कुत्रचित् क्वचित् प्रदेशे कनकेन निर्म्मित-मखिलमूर्द्धाधोभागादि यस्यैवंविधः क्वापि विमलै रत्नैर्जातो रचितः । तथा कुत्रचिद्रचिताश्चित्रशाला उपरितनोच्चमण्डप-विशेषाः पुत्रिका वा यत्र । रचितेन चित्रेण शालते तच्छीलो वा । क्वापि चास्थिराभिर्विधाभिः प्रकाशान्धकारादिरूपैः प्रकारैः कृत्वा ऐन्द्रजालिक इव अनेकचमत्कारकारी । शालिकेति शाला-शब्दात् स्वार्थे सञ्ज्ञायां वा कनि, प्रत्ययस्थादिति (पा० ७।३।४४) इत्वं । पक्षे ताच्छील्ये णिजन्तात् स्वार्थे कन् । ऐन्द्रजालिकः । शिल्प-मिति (पा० ४।४।५५) ठक् । विधा विधिः प्रकारे चेत्यमरः ॥ ११ ॥

चित्रेति । यं सौधं वीक्ष्य आश्चर्य्यातिशयाद् बहुवारं शिरो धुवन् कम्पयन् शिल्पिराट् अतिचमत्कारिनानावस्तुनिर्म्माण-निपुणानां राट् राजा अस्तु विधिर्ब्रह्मा विश्वकर्म्मा वा जरया वृद्धत्वेन वातकी वातरोगी अकम्पि तर्कितो देवादिभिरिति शेषः । किम्भूतं । चित्रैर्नानाविधैश्चित्राण्याश्चर्य्यरूपाणि वा तेषां तेषां अनुकार्य्याणां अभिनयानां देवर्षिमनुष्यादीनां विभ्रमं

* क्वापि चाश्रित इवेन्द्रजालिक इति मूलपुस्तकपाठः ।

वीक्ष्य यं बक्र धुवन् शिरो जरा-
वातकी विधिरकल्पि शिल्पिराट् ॥ १२ ॥
भित्तिगर्भगृहगोपितैर्जनै-
र्यः कृताद्भुतकथादिकौतुकः।
स्वत्रयन्त्रजविशिष्टचेष्टया
ऽऽश्चर्य्यसञ्जिवक्रशालभञ्जिकः ॥ १३ ॥

विलासं विशिष्टान्तद्भुतभ्रान्तिं वा, आधायीनि उत्पादयन्ति एवम्भूतानि शुक्लनीलपीतादिवर्णवशात् काष्ठपाषाणरूप्यस्वर्णादिघटितत्वाद्वाऽनेकविधरूपाणि नानाप्रकारस्वरूपाणि रूपकाणि प्रतिमा यत्र। चित्रमाश्चर्यं तन्वन्ति विस्तारयन्तीति चित्रतन्ति तादृशानीति वा पूर्व्ववत्। अचेतनास्वलीकास्वपि प्रतिमासु चेतनत्वादिभ्रमोत्पादिनिर्म्माणनैपुण्याद्भुतनरकम्पितशिराः शिल्पिराडपि ब्रह्मा विश्वकर्म्मा किमयं जरया निमित्तोद्भूतवाताधिक्यप्रचलितग्रीव इत्युत्प्रेक्षित इत्यर्थः। रमणीयतमोऽयमिति भावः। वातकी वातरोगी स्यादित्यमरः [illegible]तकी। मत्वर्थे वातातीसाराभ्यां कुक् च (पा० ५।२।१२८ [illegible] इति इनिः कुक् ॥ १२ ॥

भित्तीति। यः सौधः भित्तिगर्भे ये गृहा भित्तिभिराच्छादितानि अदृश्यमानविवराणि गर्भागाराणि तेषु तैर्वा गोपितैरदृश्यत्वेन स्थापितैर्जनैः कृत्वा कृतं अद्भुतकथादिकौतुकं आश्चर्य्यजनकरमणीयगोष्ठीगीतनृत्तवाद्यादिसम्बन्धि कौतूहलं येन सः। गर्भगृहस्थानामदृश्यमानत्वाद्भित्तय एव गोष्ठ्या-

तामसीष्वपि तमीषु भित्तिगै-
र्रत्नरश्मिभिरमन्दचन्द्रिकः ।
यस्तपेऽपि जलयन्त्रयातुका-
सारदूरधुततापतन्द्रिकः ॥१४॥

दि कुर्व्वन्ति चित्रमेतदिति। वहिर्वर्त्तमानानां कौतूहलं यः करोतीत्यर्थः। तथा सूत्राणां तन्तप्रतिमादिसञ्चारितन्तूनां यन्त्रान्नियमनादनुलक्षितस्यानरचनाविशेषात् सूत्रकृपादा यन्त्राज्जातया विशिष्टया अद्भुतया चेष्टया अन्योन्यचुम्बनालिङ्गनतालवृन्ततालव्यजनादिचालनक्रियया कृत्वा आश्चर्यसञ्जिन्तोऽतिचमत्कारकारिण्यो बह्व्यः शालभञ्जिकाः सुवर्णगजदन्तादिनिर्म्मिताः पुत्रिका यत्र सः। गोपितं। सन्तानिष्ठा ॥ १३ ॥

तामसीष्विति। यः सौधस्तामसीष्वपि तमीषु तमोबहुलकृष्णपक्षरात्रिषु भित्तिगैर्रत्नरश्मिभिः कुड्यखचितरत्नकिरणैः सुवर्णादिषु प्रतिफलितैर्मणिबद्धभूमिकिरणैर्वा अमन्दा भूयसी चन्द्रिका ज्योत्स्ना यत्र तमोलेशस्याप्यभावात्। तथा तपेऽपि उष्णबहुले ग्रीष्मर्त्तावपि जलधारासञ्चारिमण्डपस्तम्भादिरचितजलयन्त्रेभ्यो यातुकैर्निर्गमनशीलैरासारैर्धारासम्पातैर्दूरं नितरां धुता निराकृता तापजनिता तन्द्रिका मूर्च्छा निःसहता येन सः। शीतलत्वात् सुखकर इत्यर्थः। तामसी। मत्वर्थीयप्रकरणे, ज्योत्स्नादिभ्य उपसङ्ख्यानम् (पा०५।२।१०३।वा०१) इत्यण् ॥ तन्द्रिका। तन्द्रीशब्दात् स्वार्थे कनि, केण (पा०७।४।१३) इति ह्रस्वः ॥ १४ ॥

यत्र पुष्पशरशास्त्रकारिका
सारिकाध्युषितनागदन्तिका ।
भीमजानिषधसार्व्वभौमयोः
प्रत्यवैच्चत रते क्वताक्वते ॥ १५ ॥
यत्र मत्तकलविङ्कशीलिता-
श्लीलकेलिपुनरुक्तिवत्तयोः ।

यत्रेति । यत्र सौधे, अध्युषितो अधिष्ठितो नागदन्तः शयनस्थाने गृहावयवभूतगजदन्तनिर्म्मितः पञ्जरो वा यया सा, तथा पुष्पशरस्य कामस्य वात्स्यायनादिप्रणीतं शास्त्रं तस्य कारिका ऽभ्यासवाहुल्यात् कामशास्त्रनिर्म्माणसमर्थशब्दं करोति एवम्भूता सारिका पक्षिणी, भीमजानिषधसार्व्वभौमयोर्भैमीनलयोर्रते विषये चुम्बनालिङ्गनादीनां प्रत्येकं क्वताक्वते विहिताविहिते कर्म्मभूते प्रत्यवैच्चतानुकारेणानुसन्दधे, अनुवदति स्म, अनुचकारेत्यर्थः । आलिङ्गनादीनां बहवो भेदाः कामशास्त्रे निरूपिताः । तत्र किञ्चिदालिङ्गनं क्वतं किञ्चिन्न क्वतमित्याद्यपश्यदित्यर्थः।शास्त्रे श्लोकरूपा कारिका भवति। यश्चादौ ब्रह्मादिः क्वताक्वतावेच्चको भवति। नागदन्तिका। शेषाद्विभाषेति (पा० ५। ४।१५४) कपि, प्रत्ययस्थाद् (पा० ७।३।४४) इतीत्वं ॥ १५ ॥

यत्रेति । यत्र सौधे, मत्तैः कलविङ्कैर्गृहचटकैः शीलितानां मुहुर्मुहुः क्रियमाणानां चुम्बनादिराहित्याज्जनसमचं करणाच्च अश्लीलितानां ग्राम्याणां केलीनां सुरतक्रीडानां पुन-

क्वापि दृष्टिभिरवापि वापिको-
त्तंसहंसमिथुनस्मरोत्सवः ॥ १६ ॥
यत्र वैणरववैणवस्वनैः
कूजितैरुपवनोपिकालिनाम् ।
कङ्कणालिकलनैश्च नृत्यतां
कूजितं सुरतकूजितं तयोः ॥ १७ ॥

दृष्टं वर्त्तते यत्र तैर्वा कृत्वा पुनरुक्तियुक्तं यथा तथा क्वापि कस्मिन् प्रदेशे वापिकाया उत्तंसभूतानि भूषणीभूतानि तत्र वर्त्तमानानि हंसमिथुनानि तेषां स्मरोत्सवः सुरतक्रीडा तथा तयोर्भैमीनलयोर्दृष्टिभिस्तद्व्यापारैर्वा अवापि प्राप्तः अदर्शीत्यर्थः । आदौ कलविङ्ककेलिं दृष्ट्वा पुनरत्र हंसकेलिरिति पुनः सुरतदर्शनात् पुनरुक्तिः । एतास्तु स्वीभूतगात्राणां कामिनां तिर्य्यगादिसम्भोगदर्शनं पुनः कामोद्दीपकं भवतीति कामशास्त्रात् तिर्य्यक्सम्भोगं पश्यति स्मेति भावः ॥ १६ ॥

यत्रेति । यत्र सौधे, सम्भोगं कुर्व्वतोस्तयोर्भैमीनलयोः सुरतकूजितं कण्ठमात्रस्थाव्यक्तमधुरस्वररूपं वैणरवैर्वीणाशब्दैः, तथा वैणवस्वनैर्वेणुसम्बन्धिभिर्गीतैः, तथा उपवनोपिकालिनामारामवर्त्तिनां कोकिलषट्पदानां झङ्कृतैः कूजितैः सम्भाव्यमानाभ्यां ताभ्यां नृत्यन्तो यत्र दृश्यन्ते तैश्च तौ न दृश्येते तादृशोद्देशे नृत्यतां स्त्रीपुरुषाणां कङ्कणादीनां केयूरनूपुरादिभूषणगणानां कलहैरन्योन्योपमर्द्दादितर्मिश्रितैश्च कूजितं मन्दीकृतमाच्छा-

सीत्कृतान्यशृणुतां विशङ्कयो-
र्यत्प्रतिष्ठितरतिस्मरार्चयोः ।
जालकैरपवरान्तरेऽपि तौ
त्याजितैः कपटकुड्यतां निशि ॥ १८ ॥

दितमित्यर्थः । नृत्यत्यश्च नृत्यन्तश्च, पुमान् स्त्रिया (पा० १।२।६७) इत्येकशेषः । कुड्यितं । तत्करोतीति (पा० ३।१।२६। वा० १) ण्यन्तान्निष्ठा ॥ १७ ॥

सीत्कृतानीति । अपवरान्तरे गर्भगृहे रतिस्मरप्रतिमागृहापेक्षया अन्यस्मिन् वा गृहे स्थितावपि तौ भैमीनलौ दिवा गवाक्षेष्वपि भित्तिभ्रमादच्छिद्रगृहनिवासवशादन्यानाकर्णनबुद्ध्या विशङ्कयोः शङ्कारहितयोः ससम्भ्रमं कूजनादि कुर्वतो यद्यस्मिन् सौधे प्रतिष्ठितयोः पुरोधसोर्मन्त्रसामर्थ्याच्चैतन्यमवलम्ब्य प्रतिमायां कृताधिष्ठानयोर्रतिस्मरयोर्ये अर्चे सुवर्णादिरचितप्रतिमे तयोः सीत्कृतानि नखदन्तक्षतजपीडानुभावसूचकानि सीच्छब्दाभिधेयानि शब्दितानि निशि रात्रौ कपटकुड्यतां अलीकभित्तिभ्रमं त्याजितैर्जालकैर्गवाक्षैः कृत्वा अशृणुतां । दिने रजतादिभित्तीनां मणीनां वा भासा छादितानि जालानि भित्तितुल्यानि भवन्ति, रात्रौ रजतादिभित्तीनां तादृक्प्रकाशाभावात्ताभिरेव कपटकुड्यत्वं त्याजितानि तानि जालरूपेणैव प्रतीयन्ते। ततश्च प्रतिष्ठासामर्थ्यात् सचेतनौ सुरतलोलुपौ रतिस्मरावपि गवाक्षेषु दिवा जातभित्तिभ्रमौ उभा-

कृष्णसारमृगशृङ्गभङ्गुरा
स्वादुरुज्ज्वलरसैकसारणिः ।
नानिशं त्रुटति यत्पुरः पुरा
किन्नरीविकटगीतिझङ्कृतिः ॥ १९ ॥

वपि कुड्यभ्रमेणाविचार्य्यैव विशङ्कौ यत्र सुरतं चक्रतुः जालमार्गेण शब्दसञ्चारात् तत्कूजितानि तौ शुश्रुवतुरिति भावः । पुरोधसो मन्त्रप्रभावस्य सूचितः । तण्डुलचूर्णादिमण्डलिप्तं चित्रमयं वस्त्रं कपटकुड्यं । दिवाध्वप्रवेशभिया गवाक्षेषु चित्रपटा ध्रियन्ते रात्रौ च पवनागमनार्थमपनीयन्ते । तथा च दिनवद्रात्रावपि कुड्यबुद्ध्या विशङ्कं भणितानि चक्रतुरिति वा । अपवृणोत्याच्छादयतीत्यपवरो गृहगर्भः । पचाद्यच् । प्रतिसतिरश्चौ पुंसीत्याद्यमरः ॥ १८ ॥

कृष्णेति । कृष्णो वर्णः सारः श्रेष्ठो यस्य तस्य मृगस्य शृङ्गवद्भङ्गुरातिवक्रा बहुभङ्गीयुक्ता, तथा स्वादुः श्रुतिमधुरा अत एवोज्ज्वलाः प्रकाशमानाः शृङ्गारादयो रसाः तेषां उज्ज्वलस्यैव वा रसस्यैकाऽद्वितीया मुख्या वा सारणिः कृत्रिमनदी शृङ्गाररसपरिपूर्णेत्यर्थः । एवम्भूता गाननिपुणानां किन्नरीणां विकटा षड्जादिसप्तस्वराणामारोहावरोहाभ्यां विषमा गीतिर्गानं तस्य झङ्कृतिर्ध्वनिविशेषो यस्य सौधस्य पुरोदेशे सुखेऽनिशं सर्व्वदा न त्रुटति पुरा कदाचिदपि विच्छिन्ना नाभूत् । भैम्याः सकाशाद् गानकलाशिक्षाहेतोरुच्चतरस्य तस्य सुन्दरं द्वारि

भित्तिचित्रलिखिताखिलक्रमा
यत्र तस्थुरितिहाससङ्कथाः ।
पद्मसम्भवसुतारिरंसुता-
मन्दसाहसहसन्मनोभुवः ॥ २० ॥

आगत्य गन्धर्व्वकन्या अपि यत्र सर्व्वदा जगुरिति भावः । वक्र च ज्ञानसङ्गावाद्यैः सदा गायतीवेत्युत्प्रेचा सूच्यते। अथ च मृगशृङ्गवद्वक्रगामिनी तथा स्वादूदका तथा किन्नर्य इव किन्नर्यो भ्रमर्यः कमलबाहुल्यात्तासां श्रेष्ठा गुञ्जनझङ्कृतिर्यस्या एवंविधा विकसत्कमलभ्रमरीमञ्जुगुञ्जनयुता निर्मलजला एका कुल्या यस्य सौधस्य पुरोभागे कदाचिद्ग्रीष्मर्त्तावपि नात्रुटत, बहुजलैव स्थितेत्यर्थः । एकविंशे सर्गे तुङ्गप्रासादवासादित्यनेन कुल्याया अपि वर्णयिष्यमाणत्वात् प्रकृते सौधवर्णनोपयोगित्वा-दयमर्थः कविना विवक्षित इति प्रतीयते । विकटः सुन्दरे प्रोक्तो विशालविकरालयोरिति विश्वः । त्रुटति । भूते, पुरि लुङ्चास्मे (पा० ३।२।१२२) इति लट् ॥ १९ ॥

भित्तीति । यत्र सौधे पद्मसम्भवस्य ब्रह्मणः सुतायां सरस्वत्यां रिरंसुता सम्भोगाभिलाषस्तद्रूपममन्दं महत् साहसं अविचार्य्यकारित्वं तेन हसन् स्वसामर्थ्यदर्पेण सोल्लासो मनोभूर्यासु ताः । ब्रह्मणः सुतारिरंसुतायां भोगोत्पादने विषये तद्रूपं वा महत् साहसं कामस्यैव, तेन पौरुषदर्पेण सोल्लासस्य कामस्य सम्बन्धिन्यो वा इतिहाससंकथाः पुरावृत्ताख्यायिका भित्तिषु

पुष्पकाण्डजयडिण्डिमायितं
यत्र गौतमकलत्रकामिनः ।
पारदारिकविलासवैभवं
देवभर्त्तुरुदटङ्कि भित्तिषु ॥ २१ ॥

चित्ररूपेण चित्रकारैर्लिखिताऽखिलः क्रमः परिपाटी यासां एवम्भूताः सत्यस्तस्थुः । ब्रह्मपराभवादिकामप्रभावाश्चित्ररूपेण यद्भित्तिषु लिखिता वर्त्तन्ते इत्यर्थः । ब्रह्मणः सुतारिरंसुतादिकं मत्स्यपुराणादाववगन्तव्यं ॥ २० ॥

पुष्पेति । यत्र सौधे गौतमकलत्रमहल्यां कामयते कामी तस्य सम्भुञ्जानस्य देवभर्त्तुरिन्द्रस्य पुष्पकाण्डस्य कामस्य लोकत्रयजयो डिण्डिमायितं वाद्यविशेषवदाचरितं पारदारिकस्य परस्त्रीगामिनो विलासवैभवं सुवर्णादिरचितासु भित्तिषु उदटङ्कि टङ्कैरुत्कीर्य लिखितं । येनेन्द्रोऽपि पराभूतस्तादृशस्य महाप्रभावस्य स्मरस्य सेवा पुंसामपि नियतं कार्य्येति सुवर्णादिकरचितभित्तिषु कामोद्दीपनार्थं इन्द्रपारदारिकविलासा यत्र टङ्कैर्लिखिता इत्यर्थः । डिण्डिमायितं । उपमानात् कर्त्तुः क्यङन्तान्निष्ठा । परदारान् गच्छतीति पारदारिकः । गच्छतौ परदारादिभ्यष्ठक् वक्तव्य (पा० ४।४।१।वा० ४) इति ठक् । उदटङ्कि । टकि बन्धे इत्यस्मात् कर्म्मणि चिण् ॥ २१ ॥

उच्चलत्कलरवालिकैतवा-
द्वैजयन्तविजयार्जिता जगत्।
यस्य कीर्त्तिरवदायति स्म सा
कार्त्तिकीतिथिनिशीथिनीस्वसा॥ २२॥

उच्चलदिति। उच्चलसौन्दर्य्यादिना वैजयन्ताख्यस्येन्द्रप्रासादस्य विजयेन या अर्जिता लब्धा सा कार्त्तिकी कृत्तिकानक्षत्रयुक्ता तिथिः पूर्णिमा तस्या निशीथिनी रात्रिस्तस्याः स्वसा तद्वदत्युज्ज्वला यस्य प्रासादस्य कीर्त्तिः कान्तिः, उच्चलतां उड्डीयमानानां कलरवाणां पारावतानामालिःपङ्क्तिस्तस्याः कैतवाद्व्याजाज्जगदवदायति स्म शोधयति स्मोज्ज्वलञ्चकारेत्यर्थः। एते कलरवा न भवन्ति किन्तु शरच्चन्द्रचन्द्रिकातुल्या कीर्त्तिरेवैतस्येत्यर्थः। पारावतः कलरवः; स्यात्प्रासादो वैजयन्त इत्यमरः। दायति। दैप् शोधन इति स्वादिरवपूर्व्वः सकर्म्मकः। लट् स्मे (पा॰ ३।२।११८) इति लट्। कार्त्तिकी। नक्षत्रेण युक्तः कालः (पा॰ ४।२।३) इत्यणि ङीप्। अत्र कृत्तिकायुक्तो दिवसः कार्त्तिक इति भाषितपुंस्कत्वसम्भवेऽपि तिथ्ययोर्द्वयोरित्यभिधानात् पुंलिङ्गेन तिथिशब्देन समासे स्त्रीलिङ्गस्य समानाधिकरणस्योत्तरपदस्याभावात्, पुंवत्कर्म्मधारय (पा॰ ६।३।४२) इति सूत्रेण न पुंवत्। ततश्च कार्त्तिकी चासौ तिथिश्चेति समासः॥ २२॥

गौरभानुगुरुगेहिनोस्मरो-
द्वृत्तभावमिति वृत्तमाश्रिताः ।
रेजिरे यदजिरेऽभिनीतिभि-
र्नाटिका भरतभारतीसुधाः ॥ २३ ॥
शम्भुदारुवनसम्भुजिक्रिया-
माधवव्रजवधूविलासयोः ।

गौरेति। गौरभानोश्चन्द्रस्य गुरुगेहिन्यां बृहस्पतिभार्य्यायां तारायां विषये स्मरजनितो य उद्वृत्तभावः, गुरुतल्पगामित्वादाचारत्यागित्वं चन्द्रतारयोर्विषये स्मरस्योद्वृत्तभावः कामजनितमामर्य्यादित्वं, तल्लक्षणं वा इतिवृत्तं पुरावृत्तमाश्रिताः प्रतिपादयन्त्यः, तथा भरतेन मुनिना प्रणीता भारती भरताख्यो नाट्यवेदस्तस्मिन् सुधा अमृतरूपा भरतोक्तनाट्यरीत्याभिनीयमानाः सत्यः सुधाप्राया इति यावत्। एवम्भूता नाटिका दशरूपकान्तर्गतचतुरङ्कबन्धविशेषा यस्य सौधस्याजिरेऽङ्गणे अभिनीतिभिः सात्त्विकाङ्गिकवाचिकाहार्य्यभेदभिन्नैश्चतुर्विधैर्नटाभिनीयमानैरभिनयैः कृत्वा रेजिरे। तया: स्मरोद्वृत्तभावस्य मितिः सम्यक् परिच्छित्तिः सैव वृत्तं व्यापारोऽतीतं वा प्रमेयं यत्रैवंविधनाटकादिप्रबन्धमाश्रिता इति वा ॥ २३ ॥

शम्भ्विति। यस्य सौधस्य हाटकविटङ्कं सुवर्णघटितकपोतपालिका शम्भोर्दारुवने मन्दरकन्दरायां देवदारुवने सम्भुजिक्रिया गौर्य्या सह दिव्यसहस्रवर्षपर्य्यन्तं या सुरतक्रीडा, माधवस्य

गुम्फितैरुशनसा सुभाषितै-
र्यस्य हाटकविटङ्कमङ्कितं ॥ २४ ॥
अह्नि भानुभुवि दासदारिकां
यच्चरः परिचरन्तमुज्जगौ।

श्रीकृष्णस्य व्रजवधूभिर्गोपिकाभिः सह विलासो रासक्रीडादि-स्तयोर्विषये उशनसा शुक्राचार्य्येण गुम्फितैः श्लोकरूपेण ग्रथितैः सुभाषितैरतिचमत्कारकारिनवीनार्थशब्दविशेषैः कर्तृभिर्वा ऽङ्कितं चिह्नितं। हरकृष्णकामविलासवर्णककाव्यरचितकाव्य-श्लोकाः कामोद्दीपनार्थं यदीयहाटकविटङ्के टङ्कैरुदङ्किता इत्यर्थः कपोतपालिकायां तु विटङ्कं पुंनपुंसकमित्यमरः। वि-शेषेण टङ्क्यते वद्ध्यते इति विटङ्कं पक्षिविश्रामार्थं कुड्यादहि-र्निर्गतं दारु॥ २४॥

अह्नीति। यस्मिन् सौधे चरतीति यच्चरः शुकःपक्षी शुक-पितामहं पराशरमुज्जगौ तारस्वरं गायति स्म। किम्भूतं। अह्नि दिने भानुभुवि सूर्य्यपुत्र्यां यमुनायां विषये दासदारिकां कैवर्त्तकुमारीं योजनगन्धां परिचरन्तं सम्भुञ्जानं, अत एव यथाक्रमं कालस्य रात्र्यादेरनिषिद्धस्य समयस्य देशस्य तीर्थदेव-स्थानादिव्यतिरिक्तस्यानिषिद्धस्य निजशयनादेर्विषयस्य परदा-रादिव्यतिरिक्तस्य स्वभार्य्यालक्षणस्यासहात् कालादीनसहमा-नात् अधैर्य्यजनकात् स्मरात् हेतोरुत्सुकं कामातिरेकं सोढुम-समर्थमित्यर्थः।पौराणिककथ्यमानभारतादिश्रवणमात्रेण प्राज्ञः

कालदेशविपर्ययात्स्मरा
दुःसुकं शुकपितामहं शुकः ॥ २५ ॥
नीतमेव करलभ्यपारता-
मप्रतीर्य्य मुनयस्तपोर्णवं ।
अप्सरःकुचघटावलम्बनात्
स्थायिनः क्वचन यत्र चित्रगाः ॥ २६ ॥

शिक्षातिशयादतिमुखरो यद्विहारी कीरः, तादृशीं भारता-द्युक्तां कथामुच्चैरनूदितवानिति भावः । स्मरेत्यादिना कामा-तुरस्य कालाद्यसहनत्वं समर्थितं । अन्योऽपि साधुरेवम्भूतं स्वपि-तामहमपि निन्दति । कैवर्त्ते दासधीवरावित्यमरः । यत्रेत्यत्र । अधिकरणे चरेष्टः (पा० ३।२।१६) इति टः ॥ २५ ॥

नीतमिति । यत्र सौधे मुनयः परमात्मज्ञानचतुरा ऋषयो क्वचन कस्मिन्नपि भित्तिभागे चित्रगाश्चित्रे लिखिता वर्त्तन्ते । किम्भूताः । करलभ्यं पारं परतीरं यस्य तद्भावस्तत्ता तां नीतमेव लक्षणया सन्निहितभाविफलत्वात् समाप्तिं प्रापित-प्रायमेव, अथ च सन्निहितपरतीरमपि तपोरूपदुस्तरमर्णवं समुद्रमप्रतीर्य्यापरिसमाप्यानुत्तीर्य्य वा तपोविघ्नार्थं इन्द्रेण प्रेषितानामप्सरसां रम्भादीनामत्युच्चकठिनकुचलक्षणानां घ-टानामवलम्बनाद्धारणादाधाराद्धेतोः स्थायिनः स्थातुं शक्ताः । कुचमर्दनादिसम्भोगकारिण इत्यर्थः । योऽपि प्रतीर्य्यमाणं समुद्रं नद्यादि वा तीरसन्निहितेऽपि आलस्यवशादुत्तरितुमशक्तः स

स्वामिना च वहता च तं मया
स स्मरः सुरतवर्जनोर्ज्जितः ।
योऽयमीदृगिति नृत्यते स्म यत्-
केकिना मुरजनिःस्वनैर्घनैः ॥ २७ ॥
यत्र वीक्ष्य नलभीमसम्भवे
मुह्यतोर्रतिरतीशयोरपि ।

जलमध्य एव घटादिकमवलम्बनमासाद्य चित्रलिखित इव निश्चलस्तिष्ठति । कुट इति पाठे कुटः कोटे घटे गेहे इति विश्वः ॥ २६ ॥

स्वामिनेति । यस्य सौधस्य सम्बन्धिना केकिना क्रीडामयूरेण इति हेतोर्घनैर्निबिडैर्मुरजनिःस्वनैर्मृदङ्गध्वनिभिरथ च तैरेव मेघैर्नृत्यते स्म । इति किं । योऽयमीदृग्ब्रह्मादिवशीकारकारो स महाप्रभावः स्मरः स्वामिना कार्त्तिकेयेन प्रभुणा च तदीयपत्रत्वेन तं वहता पृष्ठेन धारयता मया मयूरेण च सुरतवर्जनोर्ज्जित इति । चान्योन्यसमुच्चये । कुमारस्य नैष्ठिकब्रह्मचारित्वान्मयूराणाञ्च वर्षर्त्तुमत्तानां नेत्रापान्तरन्ध्रमार्गेण निर्गच्छतामश्रुमयशुक्रविन्दूनां मयूरीमुखग्रहणमात्रेण गर्भसम्भूतेर्लिङ्गभगसङ्घर्षणरूपरतिपरित्यागो जयहेतुः । मयूराश्च मेघशब्दभ्रान्त्या मृदङ्गशब्दैर्नृत्यन्ति ॥ २७ ॥

यत्रेति । यत्र सौधे सम्भोगपरे नलभीमसम्भवे नलभैम्यौ वीक्ष्य मुह्यतोः सुरताभिलाषिणोरथ च भ्रान्तिं प्राप्नुवतोस्तथा

स्पर्द्धयेव जयतोर्ज्जयाय ते
कामकामरमणौ बभूवतुः ॥ २८ ॥

जयतोः सर्व्वोत्कर्षेण वर्त्तमानयोरथ च नलभैम्यौ स्ववशे कुर्व्वतोः रतिरतीशयोर्रतिकामयोः स्पर्द्धयेव ईर्ष्ययेव जयाय तौ पराभवितुं ते नलभैम्यौ कामकामरमणौ बभूवतुः स्मररती अभूताम्। सम्भोगयुक्तौ स्त्रीपुंसौ दृष्ट्वाऽन्यावपि स्त्रीपुंसौ उद्दीप्तस्मरौ भवत इति तादृशौ भैमीनलौ दृष्ट्वा प्रतिष्ठावशात्तत्र कृतावासौ चेतनौ रतिकामौ सञ्जातसुरतेच्छौ जातौ। तथा सौन्दर्य्यातिशयाद्रतेर्नले काम इति कामस्य च भैम्यां रतिरिति सञ्जातभ्रमौ च जातौ। एवम्भूतावतिशयितान्योन्यरागजननाद्वशीकृतभैमीनलौ यत्र मूर्त्तौ रतिकामाविवाभूतामिति कामयोर्द्वन्द्वद्वयं जातमित्यर्थः। अयमेव तयोर्जयः। अथ च स्वसम्भोगदर्शनात्तयोरपि सम्भोगवाञ्छोत्पादनाज्जयः। तज्जयार्थं बुद्धिपूर्व्वव्यापाराभावात् स्पर्द्धयेवत्युत्प्रेक्षा। स्पर्द्धाकारणमुक्तं। अथ च रतिकामसन्निधाने यथा स्त्रीपुंसयोः सम्भोगवाञ्छासमुदयस्तथा तयोरपि रतिकामसन्निधानमेव प्रेमरसातिशयादन्योन्यसन्निधानमात्रेणैव कामसम्मोहः प्रादुरासीदिति भावः। नलभैम्यौ दृष्ट्वा मोहं भजतोरत एव नलभैमीभ्यामावां जितावित्यपि ते जेतव्ये इति स्पर्द्धयेव जयतोरिति यथाश्रुत एव वा सम्बन्धः। अत्र सर्व्वत्राल्पाच्तरत्वात् प्रायः प्राप्तोऽपि पूर्व्वनिपातो रतेर्नले कामभ्रमोदयान्नलरतिकामपदानां प्राक्प्रयोगस्य, रतीशस्य च

तत्र सौधसुरभूधरे तयो-
राविरासुरथ कामकेलयः ।
ये महाकविभिरप्यवीक्षिताः
पांसुलाभिरपि ये न शिक्षिताः ॥ २९ ॥
पौरुषं दधति योषिता नले
स्वामिनि श्रितनदीयभावया ।

भैम्यां रतिभ्रमादयाङ्गीममन्मथा रतीशकामरमणीपदानां प-श्चात् प्रयोगसौचितीं सूचयतीति ज्ञेयं । रतिरतीशयोर्विषये स्पर्द्धयति केचित् । ते । प्रथमाद्विवचनान्तं । कामकामरमणो बभूवतुरिति स्थितिः ॥ २८ ॥ कुलकं ॥

तत्रेति । अथ तत्रोक्तगुणे सौधरूपे सुरभूधरे मेरौ तयोस्ते कामकेलय आविरासुः स्पष्टं दिदीपिरे । ते के । ये कामके-लयो महाकविभिर्व्यासकालिदासादिभिर्निगूढभावदर्शिभिरपि अवीक्षिता न बुद्धिगोचरीकृताः । तेषामपि न स्फुरिता इति यावत् । तथाऽनेकनरसम्भोगचतुराभिः पांसुलाभिः स्वैरि-णीभिरपि ये न शिक्षिता अभ्यस्ताः नानाजातिशिक्षोपदेशा-दपि न ज्ञाताः । एतेनालौकिकाः कामविलासा वर्णयिष्यन्त इति सूचितं । द्रवकेलिपरीहासा इति केलिशब्दः पुंलिङ्गो ऽपि ॥ २९ ॥

पौरुषमिति । एवम्भूतया भीमसुतया एवम्भूते नले विषये कियत् किंपरिमाणं साध्वसं भयं न प्रापि अपि तु बहु भयं

यूनि शैशवमतीर्ण्णया कियत्
प्रापि भीमसुतया न साध्वसं॥ ३०॥

न प्राप्तं। अत्यन्तं प्रापेत्यर्थः। किम्भूते नले। पौरुषं दधति बलिनि। किम्भूतया। स्वयं तु योषिताऽबलया। तथा स्वामिनि आत्मनः प्रभौ राजनि च। स्वयं तु श्रिताऽङ्गीकृतस्तदीयस्वभावस्तदीयत्वं वा नलदासीभूतया। तथा यूनि तरुणे। स्वयं तु शैशवं बाल्यमतीर्ण्णयाऽनतिक्रान्तया वयःसन्धौ वर्त्तमानया। बलिनः स्वामिनो राज्ञस्तरुणाच्चाबलया दासीभूतया बालया भयं प्राप्यत इति युक्तमिति। अत्र प्रथमसम्भोगे किंवा भावीति ईदृशे नले ईदृश्या तया महद्भयं प्राप्नोति भावः। सर्व्वाण्यपि विशेषणानि हेतुगर्भाणि। अथ च श्रिता नलविषयो भावो रमणाभिलाषो ययैतादृश्यापि स्वामिनि भर्त्तरि नले महद्भयं प्रापि। यतः पूर्व्वोक्तगुणविशिष्टे पूर्व्वोक्तगुणविशिष्टया चेति। एवम्भूतेऽपि नले एवम्भूतयापि तया साध्वसं कियदल्पमेव प्राप्तं बहु साध्वसं वर्त्तत एव तथापि किञ्चित् साध्वसं परित्यक्तं। यस्माच्छ्रितो नलविषयो रमणाभिलाषो ययेति वा। अथ च श्रितः परिशीलितो ज्ञातो नलविषयो यया बालया मम कण्ठोपभोगं न करिष्यतीति विनिश्चितनलाभिप्राया भयं न प्रापेति भावः। श्रितोऽनुष्ठितो नलाशयो यया नलभावानुकूलवर्त्तिन्या प्रथमसम्भोगे पौरुषमवलम्ब्य क्रीडाकौतुककारी भवति, कान्ता त्वनुत्तीर्णशैशवा किमत्र भावीति सभया किञ्ची-

दूत्यसङ्गतिगतं यदात्मना
प्रागशिश्रवदियं प्रियं गिरः ।
तं विचिन्त्य विनयव्ययं ह्रिया
न स्म वेद करवाणि कीदृशं ॥ ३१ ॥

दर्शनानानाऽन्यं भयं विहाय प्रियभावानुकूल्यमाश्रयतीति । एतदनुभवसाक्षिकमिति भावः ॥ ३० ॥

इदानीं लज्जानुभावपूर्व्वं कामशास्त्रानुरोधेन प्रथमसम्भोगक्रममाह । दूत्येति ॥ इयं भैमी प्राक् विवाहात् पूर्व्वं दूत्येन देवदूतव्यापारेण सङ्गतिं गतं सम्बन्धं प्राप्तं साक्षाद्दृष्टं प्रियं नलं आत्मना विरहप्रकाशिनीर्नवमसर्गोक्ता गिरो वाणीः अशिश्रवत् श्रावयामासेति यत् तं प्रियस्य स्ववचनश्रावणलक्षणं विनयस्य व्ययं नाशं धार्ष्ट्यं विचिन्त्य विशेषेण स्मृत्वा ह्रिया लज्जया कीदृशं किङ्करवाणीति न वेद स्म नाज्ञासीत् । तदानीं तन्मया सहृदनुचितं कृतं तत्प्रतिक्रिया कीदृशी प्रकृते चार्थे किं कार्य्यमिति विनयव्ययस्मरणाज्जातया ह्रिया किंकर्त्तव्यतामूढाभूदित्यर्थः । उत्तमत्वं सूचितं । उत्तमा हि पूर्व्वानुचितस्मरणाल्लज्जन्ते । अतीतस्मरणेनापि सलज्जाभूत् प्रारब्धसम्भोगानुभवदशायान्तु सलज्जत्वं किं वाच्यमिति भावः । अशिश्रवत् । शृणोतेर्णौ चङि द्विर्वचने उपधाह्रस्वत्वे सन्वल्लघुनीति (पा० ७।४।९३) सन्वद्भावे स्रवति शृणोति (पा० ७।४।८१) इत्यभ्यासस्य वेत्वं । प्रियं । शृणोतेः शब्दकर्म्मत्वाद्णौ कर्म्मत्वं ॥ ३१ ॥

यत्तया सदसि नैषधः स्वयं
प्राग्वृतः सपदि वीतलज्जया।
तन्निजं मनसि कृत्य चापलं
सा शशाक न विलोकितुं नलं ॥ ३२ ॥
आसने मणिमरीचिमांसले
यां दिशं स परिरभ्य तस्थिवान्।
तामसूयितवतीव मानिनी
न व्यलोकयदियं मनागपि ॥ ३३ ॥

यदिति। तया सदसि मिलितलोकत्रयजनसमक्षं वीतलज्जया निर्लज्जया सत्या सपदि स्वयं परवर्त्तनाद्यभावेऽप्यात्मनैव वरणमालया कृत्वा यत् प्राक् नैषधो वृत इति तत् नलवरणलक्षणं निजं चापलं धार्ष्ट्यं मनसि कृत्य विचार्य्य, तदानीं लज्जां त्यक्त्वा मया महद्धार्ष्ट्यमवलम्बितमेतदनुचितमिति स्मृत्वा सा लज्जातिशयवशात्तदानीं नलं विलोकितुमपि न शशाक अत्राप्युक्तमत्वं सूचितं। तच्चापलं मनसि कृत्य विशेषणेता प्राप्ता चासौ लज्जा च तया कृत्वा नलं वीक्षितुं नाशकदिति वा। मनसि कृत्य पूर्व्ववत्॥ ३२ ॥

आसने इति। अनुरागातिशयादेकासने वर्त्तमानयोस्तयोर्मध्ये स नलः मणिमरीचिभिः खचितोत्तमरत्नप्रसारिकिरणैः मांसले व्याप्ते आसने सिंहासने स नलः यां दिशं परिरभ्य यं सिंहासनप्रदेशमाश्रित्य तस्थिवान्। इयं भैमी तां दिशं स-

ह्रीसरिन्निजनिमज्जनोचितं
मौलिदूरनमनं दधानया।
द्वारि चित्रयुवतिश्रिया तया
भर्तृहूतिशतमश्रुतीकृतं॥ ३४॥
वेश्म पत्युरविशन्न साध्वसाद्
वेशितापि शयनं न साभजत्।

नागपि न व्यलोकयत्। उतोनते। असूयितवतीव ईर्ष्यावतीव। दिशः स्त्रीलादियं मद्भर्त्रालिङ्गितेति सपत्नीबुद्ध्या असूयां कृतवतीव तां नापश्यदित्यर्थः। यतो मानिनी। लज्जाभयाभ्यां नापश्यत् तत्रयमुत्प्रेक्षा। असूयितवती। कण्ड्वादियगन्तात्क्तवतु उगित्वात् ङीप्॥ ३३॥

ह्रीति। निरन्तरप्रवाहरूपत्वात् ह्रीरूपायां सरिति निजस्यात्मनो निमज्जनमुचितं योग्यं यस्यैवम्भूतं मौलेः शिरसो दूरं नितरां नमनमानाभिर्नम्रीभावं दधानया तथा द्वारि गृहद्वारदेशे चित्रलिखितयुवतिवत् श्रीः शोभा यस्यास्तया लज्जाभयाभ्यामन्तः प्रवेष्टुमशक्तया अतिनिश्चलया तत्रैव स्थितया भैम्या, भैम्यागच्छेति भर्तुर्नलस्य कृतीनामाह्वानानां शतं अश्रुतीकृतं अश्रुतमप्यश्रुतीकृतं। श्रुतमपि लज्जाभयाभ्यामनुत्तरादगमनाद्वाऽश्रुतमिव कृतमित्यर्थः। नवोढाजातिरियं॥ ३४॥

वेश्मेति। सा किमद्य भविष्यतीति साध्वसाद्भयात् पत्युर्वेश्म न स्वयमविशत्। अनन्तरं सख्या नलेन वा वेशितापि गृहमध्यं

भाजितापि सविधं न सास्वपत्
स्वापितापि न च सम्मुखाभवत् ॥ ३५ ॥
आत्मनापि हरदारसुन्दरी
यत् किमप्यभिललाष चेष्टितं ।
स्वामिना यदि तदर्थमर्थिता
मुद्रितस्तदनया तदुद्यमः ॥ ३६ ॥

प्रापितापि शयनं नाभजत्। ततोऽपि सख्या नलेन वा शयनं भाजितापि सा सविधं नलसमीपं यथातथा नास्वपत्, किन्तु दूरत एव निद्राति स्म। ततोऽपि सख्या नलेनैव वाङ्कपाल्यादिना सविधं समीपं स्वापितापि न च सम्मुखाऽभवत् किन्तु शय्यापार्श्वपट्टिकावलम्बिनी पराङ्मुखैवाभूदित्यर्थः। प्रथमसमागमे मुग्धाया जातिरियं। माङ्योगादिति सर्वत्र। अस्वपत्। अड्गार्ग्येति (पा० ७।३।९८) अट्॥ सम्मुखाः स्वाङ्गाच्चोपसर्जनाद् (पा० ४।१।५४) इति विकल्पान्न ङीप्॥ ३५ ॥

आत्मनेति। हरदारवत् गौरीवत् सुन्दरी। सा भैमी आत्मनापि स्वयमेव यत्किमपि यत् किञ्चिच्चेष्टितं तदवसरोचितं कटाक्षवीक्षणताम्बूलदानतालवृन्तचालनादि अभिललाष कर्त्तुमैच्छत् तदर्थं तस्मै प्रयोजनाय तद्वस्तुदानायेङ्गितज्ञेन स्वामिना नलेन ताम्बूलं देहीति यद्यर्थिता याचिता तर्हि अनया भैम्या तस्य नलस्य उद्यमो याचनप्रयत्नो मुद्रितः ताम्बूलादीनामदानाद्व्यर्थीकृतः। तेन याचिता सती न ददाविति भावः।

केवलं न खलु भीमनन्दिनी
दूरमत्रपत नैषधं प्रति ।
भीमजाहृदि जितः स्त्रिया ह्रिया
मन्मथोऽपि नियतं स लज्जितः ॥ ३७ ॥
ह्रीभरादिमुखया तया भियं
संज्ञितामननुरागशंसिनि ।

अपरिहार्य्ये । स्वामिनेत्यनेनावश्यं कर्त्तव्यतायां मत्यामपीति सूचितं । गार्य्यपि प्रथमसम्भोगे स्मरणार्थिता मत्येवमेवाकरोदिति ध्वनिः ॥ ३६ ॥

केवलमिति । भीमनन्दिनी केवलं नैषधं प्रति उद्दिश्य दूरं नितरां अत्रपत लज्जां प्रापेति न किन्तु भीमजाहृदि वर्त्तमानत्वाद्ध्रिया लज्जारूपया स्त्रिया जितः खलु जित इव मोऽतिप्रसिद्धपराक्रमः हृद्येव वर्त्तमानो मन्मथोऽपि नियतं बहुकालं लज्जितः । अथ च मनो मथ्नाति पीडयतीति मन्मथः पृषोदरादिः । एवंविधोऽपि जितो लज्जितः सङ्कुचितस्तूति चित्रं । ह्रीवशात्नलविषयोऽतिपीडाकरोऽपि कामो बहुकालं तामभिभवति स्मेति भावः । अन्योऽपि स्त्रिया जितो लज्जते ॥ ३७ ॥

ह्रीभरादिति । दूत्यकाले कलितं बुद्धं परीचितं तदाशयं भैम्यभिप्रायं सम्यक् दृढसंस्कारतया स्मरणपथारूढं स्मरन् विचारयन् स नलः ह्रीभरादिमुखया तया विमुखत्वाद्देवाननुरागशंसिनि किमस्या मयि अनुरागो नास्तीति शङ्काशील

स स्वचेतसि लुलोप संस्मरन्
दूत्यकालकलितं तदाशयं ॥ ३८ ॥
पार्श्वमागमि निजं सखालिभि-
स्तेन पूर्वमथ सा तयैकया ।
क्वापि तामपि नियुज्य मायिना
स्वात्ममात्रसचिवावशेषिता ॥ ३९ ॥

स्वचेतसि मञ्चिर्ता जनितां अननुरागाभावसम्भावनीं भीतिं लुलोप निरस्यति स्म । दूत्यवसरमपननुरागातिशयादिन्द्रादीनपि परित्यज्य मल्लाभे कृतमरणनिश्चयेयमिदानीमनुरागं न त्यक्ष्यतीति निश्चित्य जातां शङ्कां तत्याज । मुग्धा लज्जाभरादेव विमुखीयं न त्वननुरागादिति निश्चिकायेत्यर्थः । तदाशयं । शेषत्वाविवक्षया षष्ठ्यभावः ॥ ३८ ॥

पार्श्वमिति । तेन नलेन भयवशादेकाकिनी नलस्य सविधमनागच्छन्ती सा आलिभिः सखीभिर्भूयसीभिः सह निजं पार्श्वं आगमि प्रापिता । भवतीभिरपि कञ्चित्कालमनया सार्द्धमागन्तव्यमित्यादिशाभिस्ताभिस्तां स्वसन्निधिं प्रापितवानित्यर्थः । अथानन्तरं कियतापि कालेन किञ्चिद्विश्वासप्राप्त्यनन्तरं एकया एकाकिन्यैव तया सख्या सह सख्यन्तरपरिहारेण सन्निधिं प्रापिता । अथानन्तरं कियतापि कालेन तामपि सखीं क्वापि गन्धमाल्यताम्बूलाद्याहरणविषये लोके नियुज्य गन्धाद्यानयेति छलात् प्रेष्य, यतः मायिना कामशास्त्रोक्तकन्याविस्र-

सन्निधावपि निजे निवेशिता
मालिभिः कुसुमशस्त्रशास्त्रवित्।
आनयद्व्यवधिमानिव प्रिया-
मङ्कपालिवलयेन सन्निधिं ॥ ४० ॥

क्षणकपटपटुना चतुरेण तेन स्वात्ममात्रो नल एव सचिवः सखा यस्याः स्वसहायैकाकिनीऽवशेषिता स्वसमीपे स्थापिता विजनोचितं स्वीयमिङ्गितमदर्शयत् तदीयं वाऽपश्यदिति भावः। कन्याविस्रम्भणप्रकारोऽयं। आगमि शुल्लात् कर्म्मणि चिण्। चिणमुलोः (पा०६।४।९३) इति दीर्घविकल्पात् पचे ह्रस्वः ॥ ३९ ॥

सन्निधावपीति। स नल आलिभिः स्वयमेव निजे सन्निधौ निवेशितामपि तेनैव प्रयोजकेन स्वसमीपे प्रयोज्याभिः सखीभिः स्थापितामपि प्रियामङ्कपालिर्भैमीपृष्ठभागस्य स्पर्शिनः स्वीयैक-भुजालिङ्गनविशेषस्य वलयाकारेण वेष्टनेन कृत्वा सन्निधिमानयत्। यतः कुसुमशस्त्रः कामस्तस्य वात्स्यायनादिप्रणीतं शास्त्रं वेत्तीति वित्। उत्प्रेचते, व्यवधिमानिव, दूरस्था यथा प्रियां सन्निधिमानयति। कामशास्त्रे।

आदौ रतं वाह्यमिदं प्रयोज्यं
तत्रापि चालिङ्गनमेव पूर्व्वमिति।
तथा सामीप्यगाम्भीर्ये नवोढां सन्निधापयेत्।
विश्रामकद्मना गाढालिङ्गनात्त्याजयेद्भयं ॥

प्रागचुम्बदलिके ह्रियाननां
तां क्रमाद्दरनतां कपोलयोः।
तेन विश्वसितमानसां झटि-
त्यानने स परिचुम्ब्य सिस्मिये॥ ४१॥
लज्जया प्रथममेत्य कुञ्चितः
साध्वसेन चलिनाथ तर्ज्जितः।

इत्यादि सन्निधिस्थापनव्याजेन गाढमालिङ्ग्य भयं त्याजितवानिति भावः॥ ४०॥

प्रागिति। स ह्रिया आननतामतिनम्राननां प्राक् अलिके ललाटपट्टेऽचुम्बत्। अतिनतत्वात्तदानीं कपोलादिचुम्बनस्याशक्यत्वादित्यर्थः। ततः किञ्चिद्गतचुम्बनभयत्वात् पूर्व्वापेक्षया दरनतामीषन्नम्रां किञ्चिदुन्नतमुखीं क्रमात् परिपाट्या तदानीमेवान्यदा वा कियतापि कालेन द्वयोरपि कपोलयोश्चुम्बनेन ललाटफलकचुम्बनेन ततोऽपि विश्वसितं मानसं यस्यास्तां ततोऽप्युन्नतमुखीमानने झटिति मुखवक्रणादिभयाच्छीघ्रं परिचुम्ब्य दुर्लभाधरचुम्बनलाभजनितानन्दवशात् सिस्मिये ईषद्वक्रमहसत्। स्फुटहासे पुनर्लज्जा स्यादिति भयादीषद्धासमित्यर्थः। अथ च यदेतावत्पर्य्यन्तं त्वया वञ्चितं तदपीदानीं मया लब्ध-

किञ्चिदुच्छ्वसित एव तद्धृदि
न्यग्बभूव पुनरर्भकः स्मरः ॥ ४० ॥
वल्लभस्य भुजयोः स्मरोत्सवे
दित्सतोः प्रसभमङ्कपालिकाम् ।

सितकामोदययायास्तस्या हृदि मानसे किञ्चिदुच्छ्वसित एव विकसित एवार्भको मुग्धत्वादप्रौढः स्मरः प्रथमं चुम्बनजनितया लज्जया एत्यागत्य हुङ्कृतः हुङ्कारेण निषिद्धः । अथ पश्चाद्बलिना प्रबलेन चुम्बनजन्मेन साध्वसेन मालिकभयेन तर्जिता भर्त्सितोऽस्मदीयमैमीहृदयलक्षणं स्थानं त्वया प्रविष्टं तिष्ठ तिष्ठेत्याक्षेपपूर्वं लज्जाभयाभ्यां भर्त्सित इत्यर्थः । एवम्भूतः सन् पुनस्तत्क्षणमेवात्मर्षितोऽभूत् । चुम्बनवशात् पुनः अबलाभ्यां लज्जाभयाभ्यामुदितमात्र एव स्मरो दुर्बलः कृत इत्यर्थः । एवकारो विलम्बद्योतनार्थः । अर्भकोऽपि किञ्चिच्चेष्टितुमुद्युक्तो माता पूर्वमागत्य हुङ्कृतः पश्चात् प्रभुणापि वाचा तर्जितः सन् सङ्कुचितो भवति । हुङ्कृत इव तर्जित इवेति च प्रतीयमानोत्प्रेक्षा ॥ ४१ ॥

वल्लभस्येति । स्मरोत्सवे सुरतोत्सवारम्भेऽङ्कपालिकां कृतपृष्ठवेष्टनवाहुवलयालिङ्गनं प्रसभं हठात् दित्सतोः कर्त्तुमिच्छतोर्वल्लभस्य नलस्य भुजयोर्मध्ये एकको भुजः बालया सुरताप्रौढया तया चिरमरोधि प्रतिबद्धः । कीदृश्या । तल्पस्य शय्याया यत्क्षणेन स्वपृष्ठदृढपीडनेन निरन्तरालया निरवकाशया ।

एककश्चिरमरोधि बालया
तल्पयन्त्रणनिरन्तरालया ॥ ४३ ॥
हारचारिमविलोकने मृषा-
कौतुकं किमपि नाटयन्नयं।

आलिङ्गनार्थं पृष्ठदेशे नलभुजप्रवेशो यथा न भवति तथा दृढं शय्यामंलीनयेत्यर्थः। शय्यायन्त्रणेन निरवकाशत्वाद्भुजरोधना-च्चालिङ्गनविघ्नं समाचरदित्यर्थः। अबलत्वादेकदैव द्वयोर्भुजयोः प्रतिरोद्धुमशक्यत्वाद्द्वाभ्यामपि निजभुजाभ्यामेकैकस्य नलभुजस्य पर्य्यायेण रोधनादेक इत्युक्तेऽपि द्वावपि भुजौ निरुद्धाविति ज्ञेयं। एकक इति पर्य्यायाशयेनोक्तं। द्वाभ्यामेकस्यैव निरोधे ऽपि द्वितीयेन स्पर्शमात्रं कर्त्तुं शक्यते न तु द्विभुजसाध्यमङ्क-पाल्यालिङ्गनमित्येक इत्युक्तमिति वा। अन्योन्याभिमुख्येन सुप्त-योस्तयोरधस्तनबाहू शय्यासंलग्नत्वाच्छय्ययैव नियन्त्रितौ। आ-लिङ्गनोद्युक्तः शय्यासंलग्नो नलबाहुस्तल्पयन्त्रणनिरवकाशत्वात् पृष्ठदेशे प्रवेष्टुमशक्यत्वादवरुद्धः, उपरितनस्तु उपरितनेन भैमी-बाहुना चिरप्रतिरुद्ध इत्याशयः ॥ ४३ ॥

हारेति। हारस्य एकावल्यादिमुक्ताहारस्य चारिमा सौ-न्दर्य्यं तस्य विलोकने विषये ऽतिवृत्तस्थूलमुक्तायुक्तोऽत्यद्भुतोऽयं त्वदीयो हारो दर्शय दर्शयेममित्यादि किमपि लोकोत्तरं मृषाकौतुकं नाटयन्नभिनयन्नयं धवो भर्त्ता नलः स्पर्शलोभ-वशादुपकुचं स्तनसमीपं धावत्येवंशीलेन पाणिना अदसीयं भैम्याः सम्बन्धि कण्ठमूलं कण्ठाधोभागमस्पृशत्। सार्व्वभौमस्य

कण्ठमूलदसीयमस्पृशन्
पाणिनापकुचधाविना धवः ॥ ४४ ॥
यत्त्वयास्मि सदसि स्रजार्चित-
स्तन्मयाऽपि भवदर्हणार्हति ।
इत्युदीर्य्य निजहारमर्पयन्न-
स्पृशत स तदुरोजकोरकौ ॥ ४५ ॥
नीविसीम्नि निहितं स निद्रया
सुभ्रुवो निशि निषिद्धसंविदः ।

तस्यापूर्व्वस्य वस्तुजातस्य दृष्टत्वात् कुचस्पर्श एव तात्पर्य्याच्च ता-त्त्विककौतुकाभावेऽपि साक्षात्करस्पर्शमसहमानायास्तस्या हार-सौन्दर्य्यदर्शने मृषाकौतुकनाटनेन कण्ठमूलस्पर्शव्याजेन कुचा-वेव पस्पर्शेति । मुग्धाविस्रम्भणजातिः ॥ ४४ ॥

पुनस्तनस्पर्श उपायान्तरमाह । यदिति । स इत्युदीर्य्योक्त्वा भैमीकण्ठे निजमुक्ताहारमर्पयन् सन् हारार्पणमिषेण तस्या उरोजावेव काठिन्यादिगुणत्वेन कोरकौ पस्पर्श । इति किं । हे भैमि सदसि सभामध्ये त्वया स्रजा मधूकमालया कृत्वा यद्य-स्मादर्चितः सर्व्वेषां समक्षं पूजितोऽस्मि, तत्तस्मान्मयाऽपि मत्क-र्त्तृका भवत्या अर्हणा पूजा अर्हति, उपकारस्य प्रत्युपकर्त्तव्यमिति न्यायायुक्तेति । अर्हणा कृतेत्यपि पाठः ॥ ४५ ॥

नीवीति । जाग्रदवस्थायां करं निराकरिष्यतीति बुद्धा निशि निद्रया निषिद्धा वारिता संवित् ज्ञानं यस्यास्तस्याः

कम्पितं शयमपासयन्निजं
दोलनैर्जनितबोधयाऽनया ॥ ४६ ॥
स प्रियोरुयुगकञ्चुकांशुके
न्यस्य दृष्टिमथ सिस्मिये नृपः ।

सम्भुवो भैम्या नीविमोक्षि रसनाकलापमोचनार्थं वसनपट्टिका-परिसरे निहितं स्थापितमत एव नीवीस्पर्शमात्रेण कम्पितं सात्त्विककम्पयुक्तं शयं हस्तं स नलः दोलनैः समुद्भूतस्वगतसात्त्विककम्पनिमित्तहस्तचालनैर्जनितबोधया त्याजितनिद्रयाऽनया भैम्या करणभूतयाऽपास निराकृतवान् । कीदृशः । अयं शुभावहविधिः सम्भोगानन्दमिति यावत् तं यन् प्राप्नुवन् । अपासयन्निजमिति पाठे भैम्या प्रयोज्यया सः प्रयोजको नलो निजं करमपासयदमोचयदित्यर्थः । कम्पमानकरसंस्पर्शमात्रेण जातबोधया तया तदीयः करो निराकृत इत्यर्थः । अनयेति करणे तृतीया । पाठान्तरे तु प्रयोज्यकर्त्तरि ॥ ४६ ॥

स इति । स नृपः प्रियाया ऊरुयुगस्य कञ्चुकांशुके आवरणभूते वस्त्रे दृष्टिं न्यस्याथानन्तरमेव सिस्मिये ईषदहसत् । सूक्ष्मवस्त्रावृतत्वात् सर्वं मया द्रष्टुं शक्यत एवेत्याशयेनेत्यर्थः । त्रपापूर्वकालेऽभिहिते स्मितस्यानन्तर्य्ये लब्धेऽप्यव्यवहितत्वद्योतनार्थमथशब्दः । नीवीस्थापितकरापासनानन्तरमिति वा । अथ नलस्मितानन्तरं निरावृतिरिव वस्त्ररहितेव त्रपावृता सती सा तदूरुयुगस्तं वल्लभस्य तस्यैवाम्बुलैरावरणाच्छादयामास ।

आववार तदथापराञ्चलैः
सा निरावृतिरिव त्रपावृता ॥ ४७ ॥
बुद्धिमान् व्यधित तां क्रमादयं
किञ्चिदित्यमपनीतसाध्वसाम् ।
किञ्च तन्मनसि चित्तजन्मना
ह्रीरनामि धनुषा समं मनाक् ॥ ४८ ॥

तस्यास्तिस्त्रस्तां पूर्णमस्यास्तितनिजगोप्याङ्गदर्शनः सती घनावयवत्वसम्पादनार्थं तद्वस्त्रं तदञ्चलैरेव प्रावृणोदिति भावः । कामिनीनामियं जातिः । अञ्चलैरिति बहुत्वं पुनः पुनरावरणक्रियाभेदात् ॥ ४७ ॥

बुद्धिमानिति । बुद्धिमान् कामशास्त्रोक्तकन्याविस्रम्भणप्रकारचतुरोऽयं इत्थं पूर्वोक्तरीत्या क्रमात् परिपाट्या तामपनीतसाध्वसां त्याजितनवसम्भोगभयां व्यधिताकृत । किञ्चेत्यधिकोक्तौ । नयमेतावदेव किन्त्वेतस्या मनसि वर्त्तमाना ह्रीस्तत्रैव स्थितेन चित्तजन्मना कामेन स्वधनुषा समं सह मनागनामि शिथिलिता । कामेन धनुषि किञ्चिदारोप्यमाणे लज्जाऽप्यस्या जातेत्यर्थः । पूर्वं कामो भयलज्जाभ्यां त्याजितः, इदानीं तु भैमीभयं नलेन निराकृतं एका स्त्री ह्रीरवशिष्टा सा कामेन सुखेनाक्रम्यतेति भयलज्जयोः किञ्चिदपासनेन पूर्वं मन्दीभूतोऽपि कामस्ताकं पुनरुल्लसितेति भावः । अनामि । ज्वलह्वल (सि० १२५।५।५) इति वार्त्तिकान्मित्वस्य पाक्षिकत्वान्मित्वाभावे

सिस्मिये हसति तेन न स्म सा
प्रीणितापि परिहासभाषितैः।
स्वे हि दर्शयति ते परेण का
ऽनर्घ्यदन्तकुरुविन्दमालिके॥ ४९॥

हृस्वाभावः सिलेऽपि चिलमूलोरिति (पा० ६।४।८७) पाचिको दीर्घः॥ ४८॥

सिस्मिये इति। तेन परिहासभाषितैः परिहासप्रधानैः सप्रेमवचनैः प्रीणिता जनितप्रीतिरपि सा तस्मिन् हसत्यपि विकसत्कपोलनयनं अलक्षितदन्तं सिस्मिये स्मितञ्चकार। दर्शितदन्तं प्रसरद्धासं तु न चकार। अन्या तु परिहासप्रीणिता हसति इयं तु नेति चित्रमित्यपिशब्दार्थः। हि यस्मात्ते प्रसिद्धेऽनर्घ्या निर्मूल्याः सुलक्षणा दन्तास्त एव ताम्बूलरागत्वात् कुरुविन्दानि माणिक्या तेषां मालिकेऽल्पे हृस्वे वा माले स्वे आत्मीये सर्व्वस्वरूपे का कुलीना स्त्री परेणान्येन हासेन येन केनचित् पुरुषेण च दर्शयति दर्शनवत्यौ करोति, अपि तु हास्यं स्त्रीणां दोषायेत्युक्तमस्त्रीत्वात् प्रकटितदशनं हास्यं न चकारेति युक्तं। न ह्यनर्घ्यं वस्तु अन्यस्मै प्रदर्श्यते। तेन सह न हसति स्मेति वा। स्मितहसितविहसितोपहासापहासातिहासप्रकारैर्हास्यरसो भरतेन षड्विधो निरूपित इति स्मितहसितयोर्भेदः। अणौ यः कर्त्तेति कर्तृसञ्ज्ञानुवादेन कर्म्मत्वविधानात् सञ्ज्ञापूर्व्वकविधेरनित्यत्वात् परेणेत्यत्र दृशेर्बुद्ध्यर्थत्वाद्गतिबुद्धीति (पा० १।४।५२) प्राप्तकर्म्मत्वाभावः॥ ४९॥

वीक्ष्य भीमतनयास्तनद्वयं
मग्नहारमणिमुद्रयाङ्कितं।
सोढकान्तपरिरम्भगाढता
सा त्वमानि सुमुखी सखीजनैः॥ ५०॥
याचते स्म परिधापिकाः सखीः
सा स्वनीविनिविडक्रियां यदा।
अन्वमिन्वत तदा विहस्य ता
वृत्तमत्र पतिपाणिचापलं॥ ५१॥

वीक्ष्येति। सखीजनैस्तु सा सुमुखी सोढा कान्तस्य परिरम्भणानामालिङ्गनानां गाढता दृढपीडनं यया एवम्भूतामानि अनुमिता। किं कृत्वा। भीमतनयायास्तनद्वयं, स्तनद्वये मग्नानां हारमणीनां मुद्रया किञ्चिद्गम्भीररक्तीभूतस्थानश्रियाङ्कितं चिह्नितं वीक्ष्य। स्तनयोर्मग्नहारमणिस्थानदर्शनादन्यथानुपपत्त्या गाढालिङ्गनमनया सोढमिति सखीभिर्ज्ञातमित्यर्थः। सुमुखीत्यनेनालिङ्गनसञ्जातहर्षोऽपि सूचितः॥ ५०॥

याचत इति। सा यदा यस्मिन् समये परिधापयन्तीति परिधापिकाः सखीः स्वनीव्याः आत्मीयवस्त्रमेखलाबन्धस्य निविडक्रियां गाढबन्धनं याचते स्म प्रार्थितवती तदा ताः सख्योऽन्योन्यमुखविलोकनपूर्व्वं विहस्य च नीवीबन्धश्लथीकरणार्थं वृत्तं जातं पत्युः पाणिचापलं बलादुन्मोचनव्यापारमन्वमिन्वतानुमितिविषयञ्चक्रुः। अन्यथैवं प्रार्थना न युज्यते इति पूर्व्ववृत्तं

कुर्व्वती निचुलितं ह्रिया कियत्
सौहृदादिवृतसौरभं कियत् ।
कुड्मलोन्मिषितसूनसेविनीं
पद्मिनीं जयति सा स्म पद्मिनी ॥ ५२ ॥
नाविलोक्य नलमासितुं स्मरो
ह्रीर्न वीक्षितुमदान्मृगीदृशः ।

निश्चितवत्य इत्यर्थः । धापिर्द्विकर्मा । अन्वमिन्वत । मिनोतिरनुपूर्व्वो ज्ञानार्थः ॥ ५१ ॥

कुर्व्वतीति । कामशास्त्रोक्तलक्षणा पद्मिनी सा भैमी पद्मिनीं कमलिनीं जयति स्म । किम्भूता । कियत् किञ्चिच्चुम्बनादि सम्भोगकर्म्म ह्रिया निचुलितं स्थगितमप्रकटं कुर्व्वती । कियदालिङ्गनादिकं सौहृदाच्चित्तसौख्याद् विवृतं प्रकटितं सौरभं कामशास्त्रोक्तकौशलं यत्र एवम्भूतं कुर्व्वाणा । किम्भूतां पद्मिनीं । कुड्मलोन्मिषितानि मुकुलान्येव प्रफुल्लानि सूनानि पुष्पाणि सेवते भजत्येवंशीलां । अर्द्धविकसितपुष्पवतीं निचुलितकलिकास्थानीयां विवृतसौरभां विकसितपुष्पस्थानीयां । कियत्कलिकारूपकियद्विकसितकमला कमलिनीव साभूदित्यर्थः । विवृतं सौरभं मनोज्ञत्वं सौगन्ध्यं वा यस्येति वा ॥ ५२ ॥

नेति । स्मरो मृगीदृशः सुभ्रुवो भैम्या नलमविलोक्यासितुं स्थातुं ह्रीश्च तमीक्षितुं नादात् यस्मात्तस्मात्तस्या दृशः कटाक्षविक्षेपरूपा नेत्रव्यापाराः क्रमेण प्रतिदिशा नलाधिष्ठितदेश-

तद्दृशः पतिदिशाचलन्नथ
ह्रीडिताः समकुचन्मुहुः पथः ॥ ५३ ॥
नानया पतिरनायि नेत्रयो-
र्लक्ष्यतामपि परोक्षतामपि।

मुहुरित्यं वलितग्रीवं वारंवारमचलन्। अथ पश्चात् अभिमुखं नलगतत्वसम्मिलनं सत्यनन्तरं ह्रीडिताः सत्यः नलमप्राप्य पथो मार्गादेव मुहुः पुनः पुनः समकुचन् पराहृत्ताः कामप्रेरित-त्वादीक्षितुमारेभे, लज्जया निषिद्धत्वाच्च तदीक्षणान्निवृत्तेति भावः। लज्जाकामयोः समबलत्वाद्भावसन्धिः। दृशां व्यापा-रापेक्षया बहुत्वं॥ ५३ ॥

नेति। अनया पतिः प्रियो नेत्रयोर्लक्ष्यतां गोचरत्वमपि नानायि परोक्षतामगोचरत्वमपि न प्रापि। नन्वेकस्य वस्तुनः परोक्षता वा भवेदपरोक्षता वा भवेन्न तूभयता विरोधादि-त्याशङ्क्योपपादयति। खलु यस्माद्धेतोः यस्य हारमुकुररत्न-स्तम्भादेर्वस्तुनो विलोकने सति स नलो वोच्यते तत्र तत्र हा-रादिवस्तुनि विषये नयने ददानया प्रेरयन्त्या मुकुरादेर्विलो-कने तत्र तत्र प्रतिविम्बितो नलोऽनुपलक्षितदर्शनेन दृष्टो मा-मियं पश्यतीति तेनाज्ञातत्वात् उद्देश्यतया विम्बरूपस्तु न दृष्ट इति विषयान्तरविलोकनव्याजेन प्रसङ्गात् सञ्जातदर्शनस्य नलस्योभयरूपताकारेण वैचित्र्यादेकस्यापि विरुद्धोभयरूप-स्वरूपसमाप्ते संस्कारेद्रियाभ्यां सहोत्पादनात्कास्ते प्रत्यभिज्ञा-

वीक्ष्यते स खलु यद्विलोकने
तत्र तत्र नयने ददानया ॥ ५४ ॥
वासरे विरहनिःसहा निशां
कान्तसङ्गसमयं समैहत ।
सा ह्रिया निशि पुनर्दिनागमं
वाञ्छति स्म पतिकेलिलज्जिता ॥ ५५ ॥

वल्मीके च खरतुरगोभयोद्भूतत्वादेवरवच्च युक्तेत्यर्थः । लज्जावशात् साक्षाद्यद्यपि नापश्यत्तथापि कामप्रेरितत्वाद्दर्पणादिद्वाराऽपश्यदिति भावः । वीक्ष्यते स्मेति पाठः सुयोजः । यद्यस्माद्विलोकने नलविलोकननिमित्तं तत्र तत्र वस्तुनि नेत्रे ददत्या स वीक्ष्यते स्मैव तस्मात्सक्ष्यतां परोक्षतांश्च नागाधीति वा ॥ ५४ ॥

वासर इति । सा यस्माद्वासरे दिने विरहनिःसहा सम्भोगविच्छेदं सोढुमशक्ता तस्मात् कान्तस्य सम्भोगसमयं सम्भोगसमयरूपां निशां समैहत, रात्रिः कदा वा समेष्यतीति । निशि प्राप्तायां पत्युः केलिभिः नवनवकामक्रीडाभिर्लज्जितात एव ह्रिया हेतुना पुनर्दिनोदयं वाञ्छति स्म । प्रभातं कदा वा समेष्यतीति । हेतुहेतुमद्भावान्न पौनरुक्त्यं । सहजया ह्रिया युक्ता ततोऽपि पतिकेलिभिर्विशेषेण लज्जितेति वा न पौनरुक्त्यं ॥ ५५ ॥

तन्न करोमि परमभ्युपैषि यन्-
मा ह्रियं व्रज भियं परित्यज।
आलिवर्ग इव तेऽहमित्यमूं
शश्वदाश्वसनमूचिवान्नलः ॥ ५६ ॥
येन तन्मदनवह्निना स्थितं
ह्रीमहौषधिनिरुद्धशक्तिना।
सिद्धिमद्भिरुदतेजि तैः पुनः
स प्रियप्रियवचोभिमन्त्रणैः ॥ ५७ ॥

तदिति। नलः अमूं भैमीं शश्वन्निरन्तरं इति आश्वसनं विश्वासहेतु वचः ऊचिवान्। इति किं? हे भैमि बहुविधेष्वालिङ्गनचुम्बनादिषु मध्ये यत् त्वं अभ्युपैषि अनुमन्यसे तत्परं केवलं अत्यर्थं वा करोमि नान्यत्, तस्माद्ध्रियं मा व्रज, पुनश्चुम्बनेन किं वा भावीति चित्ते धृतां भियं परित्यज, यतोऽहन्ते आलिवर्ग इव सखीसमूहतुल्यः, तस्मात्तस्मिन् यथा विश्वसिषि तथा मय्यपि विश्वसिहि भयं मा यासीरिति। इह त इति पाठे इह चुम्बनादौ विषयेऽहन्तवालिवर्ग एव, सखीकर्तृके चुम्बनवादौ यथा कापि न भीतिस्तथाचापीत्यर्थः ॥ ५६ ॥

येनेति। येन तस्या मदनरूपेण वह्निना, ह्रीरेव महौषधि-र्दिव्यौषधिस्तया निरुद्धा शक्तिः सामर्थ्यं यस्य तेन, लज्जया विलीनेन स्थितं, स कामाग्निः पुनः सिद्धिमद्भिः प्रकृतार्थसाधनसमर्थैस्तैरुक्तरूपैः प्रियस्य प्रियवचांसि तद्रूपाण्यभिमन्त्रणानि

यद्विधूय दयितार्पितं करं
दोर्द्वयेन पिदधे कुचौ दृढं
पार्श्वगं प्रियमपास्य सा ह्रिया
तं हृदि स्थितमिवालिलिङ्ग तत् ॥ ५८ ॥
अन्यदस्मि भवतीं न याचिता
वारमेकमधरं धयामि ते।

रहस्यमन्त्ररूपास्त्रैरुद्दतेजि अदीपि प्रकटीकृतसामर्थ्योऽकारी-त्यर्थः। पूर्व्वोक्ताख्यानवचनैः पुनरुद्दीप्तकामा जातेति भावः। अन्योऽपि वह्निरौषधप्रतिबद्धशक्तिः सुसिद्धैरग्निप्रकाशकैर्मन्त्रैः पुनरुद्दीप्यते। उदतेजि। तिज निशाने। निशानमुद्दीप्तकरणं। अत्र समार्थाभावान्न मन् ॥ ५७ ॥

यदिति। सा दयितेन मर्द्दनार्थं कुचयोरुपर्यर्पितं करं कराभ्यां विधूय निराकृत्य स्वस्तिस्वरूपेण करद्वयेन दृढं कुचौ यत् पिदधे तत्तेन कुचपिधानप्रकारेण पार्श्वगं समीपे स्थितं प्रियं ह्रियापास्य हृदि स्थितं तमेवालिलिङ्गेवेत्युत्प्रेचा। स्त्रीणां नायकस्पर्शे यन्निवारणं तदेव कामस्य परमायुधं। आलिङ्गनेन यथा कामः प्रदीप्तो भवति तथा कुचमर्द्दननिषेधपरेण कुच-पिधानेनापि नवः प्रदीप्तकामो जात इति भावः। मुग्धाना-

इत्यसिस्वदददुपांशुकाकुवा-
गुपमर्द्द हठवृत्तिरेव तं॥ ५९ ॥
पीननाबकमुखामयोऽधुना
स्मृत्य एष निजकृत्यमर्च्चति।

प्रार्थनवशात् किञ्चिदनुमतौ सत्यामुपमर्द्दं दन्तदशनोष्ठपीड़नगाढालिङ्गनादौ यो हठः तेन सहिता वृत्तिरधरपानादिव्यापारो यस्य सोऽयमन्यदा करधूननादिसविघ्नाधरपानहठवृत्तिर्यस्य वा एवम्भूत एव सन् तमधरमसिस्वदत् अपात्। एवमालिङ्गनाद्यपि। इति किं? हे भैमि अहं भवतीं त्वामन्यदपरं किमपि कुचमर्द्दनादि न याचितास्मि पार्थयिष्ये, किन्तर्हि अहं एकवारं तेऽधरं धयामि पिबामीति। अपाने दीनवचनं। पाने तु बलात्कारः। एकवाराधरपानानुमतेरुपमर्द्देन साङ्गेन ताडिता हठवृत्तिरननुमतद्वितीयवाराधरपानव्यापारो यस्येति वा। एकवाराधरपानमात्रानुमतौ लब्धायामालिङ्गनाद्यपि द्वितीयाद्यधरपानमप्यकरोदपराधमार्जनं त्वनन्तरं करिष्यामीति बुद्धेतिभावः। पूर्व्वमोष्ठपानमात्रमकरोदनन्तरं नखक्षताद्यपीति केचित्। अन्यदेति पाठे क्षणान्तरे पुनरधरपानमपि न याचिष्य इत्यर्थः। सोऽयमर्द्देति पाठे सोऽयमर्द्दः किञ्चिन्मात्रो हठो यत्रैवंविधो व्यापारो यस्य। पूर्व्वपाठे स इति ज्ञेयं। याचिता तृच्। वारं। काले द्वितीया॥ ५९॥

पीतेति। असौ नल इत्युक्तिव्याजेन तयोरौ पाणिपल्लवं मृदु-

तत्करोमि भवदूरुमित्यसौ
तत्र संन्यधित पाणिपल्लवं ॥ ६० ॥
चुम्बनादिषु बभूव नाम किं
तद्वृथा भयमिहापि मा कृथाः ।
आलपन्निति तदीयमादिमं
स व्यधत्त रसनावलिव्ययं ॥ ६१ ॥

सुखस्पर्शतया पल्लवतुल्यं पाणिं सन्न्यधित स्प्रष्टुं सन्निवेशितवान् । इति किं ? हे भैमि एष भृत्यः मम्मचणो दासः पीतस्तावकमुख-मेवासवो मद्यं येनाथ च पीतस्तदीयमुखस्य सुरागगण्डूषो येन-वम्भूतः सन्नधुना निजकृत्यं चरणसंवाहनादिरूपं भृत्यसम्बन्धि कार्य्यं कर्त्तुमर्हति उचितो भवति । तत्तस्मादूरुदाराममपुष्पाव-चयादिना खिन्नं भवदूरुं त्वदीयमूरुं करोमि संवाहयामि । अथ सामर्थ्यादूर्ध्वं करोमीति । अनेकार्थत्वात् करोतिः संवाह-नार्थः । अन्योऽपि भृत्यो भुक्तमुखोच्छिष्टश्चरणसंवाहनं करोति ॥ ६० ॥

चुम्बनेति । इत्युदीर्य्य, सोऽयं नलः, मृगीदृशस्तदानीमति-तमचञ्चलदृशो भैम्या आदिमं कदाचिदप्यकृतपूर्व्वत्वात् प्रथमं रसनावलिव्ययं मेखलाकलापमोचनं निर्म्ममे चक्रे । ऊरुस्पर्शादौ वास्तं भयञ्च भजन्त्या भैम्या एवंविसम्भणपूर्व्वकं वसनमाचकर्षेति भावः । इति किं ? नामेत्यनुभूतविषयप्रश्नाभिनये, हे भैमि: चुम्बनालिङ्गनादिषु किं नाम विरुद्धं बभूवापि तु न किञ्चित्,

अस्तिवाम्यभरमस्तिकौतुकं
मास्तिघर्म्मजलमस्तिवेपथु।
अस्तिभीति रतमस्तिवाञ्छितं
प्रापदस्तिसुखमस्तिपीडनं॥ ६२॥
ह्रीस्तवेयमुचितैव यन्नव-
स्तावके मनसि मत्समागमः।

तत्तस्मादिदानीमस्मिन् क्रियमाणे सुरतारम्भेऽपि भुजपीडने वा मेखलामोचने वा वृथा अकारणं भयं मा कृथाः॥ ६१॥

अस्तीति। सा एवम्भूतं रतं प्रापत्। किम्भूतं। आरम्भसमये अस्ति वर्त्तमानो वाम्यभरो रतिप्रातिकूल्याचरणबाहुल्यं यत्र, आरम्भानन्तरञ्च अस्तिकौतुकं अननुभूतचरत्वादत्याश्चर्य्यं यत्र, ततोऽपि सात्विकोत्पत्तेः श्रान्तेश्चास्ति घर्म्मजलं यत्र, तथा अस्ति वेपथुर्यत्र, ततः सम्भोगे प्रारब्धे भये निवृत्तेऽपि किमन्ते भावीत्यस्ति भीतिर्यत्र, तथा सुरतहेतुत्वादस्ति वाञ्छितमभिलाषो यत्र, तथा लिङ्गक्रमसम्मर्द्दादस्ति सुखं यत्र, समरसतावमानसञ्जातसुखमिति यावत्, ततोऽप्यस्ति पीडनं सम्भोगावसाने सर्व्वाङ्गगाढालिङ्गनं यत्र, एवम्भूतं प्रथमसम्भोगमन्वभूदिति भावः। अस्तीति (सि॰कौ॰२८।१।७प॰) विभक्तिप्रतिरूपमव्ययं। अस्ति क्षीरादयश्चेति समासः॥ ६२॥

ह्रीति, इति चेति युग्मं। चतुरः कामकलाकुशलः स नलः सम्भुजिक्रियायाः सुरतस्यारम्भे विघ्नभूतैर्घनैर्निविडैर्लज्जितैर्ल-

नन्नु निस्त्रपमजस्रसङ्गमाद्
व्रीडमावहति मामकं मनः ॥ ६३ ॥
इत्युपालभत सम्भुजिक्रिया-
रम्भविघ्नघनलज्जितैर्जिता ।
तां तथा स चतुरोऽथ सा यथा
त्रप्तुमेव तमनु त्रपामयात् ॥ ६४ ॥ युग्मम् ॥

रत्नारिम्भितैरङ्गसङ्कोचनादिभिर्ज्जितां अतिलज्जितां तां इति पूर्व्वोक्तप्रकारेणोपालभत सोल्लुण्ठनमूचे । सा भैमी यथा येन प्रकारेणाथोपालम्भनानन्तरं तमनु लचीकृत्य त्रप्तुमेव लज्जितुमपि त्रपामयात् लज्जां प्राप । लज्जागुप्तिविषयेऽपि लज्जा यथा जायते तथेयमुपालब्धेत्यर्थः । मम लज्जावशादन्यथास्य चेतसि स्फुरितमिति भिया लज्जां विहाय निःसङ्कोचेन तेन सह चिक्रीडेति भावः ॥

इति किं । हे भैमि तवेयं वर्त्तमाना ह्रीर्लज्जा युक्ता उचितैव, यद्यस्मात् मत्समागमः तावके मनसि नवो नूतनो जातः, नवसम्भोगवशान्निस्त्रपं निर्लज्जमपि मामकं मनस्तु पुनः व्रीडं लज्जामावहति धारयति यत्तद्यमनौचिती सामर्थ्यादन्यथेत्यर्थः, निर्लज्जस्य लज्जा विरोधादयुक्ता वा । सञ्जातसङ्गमस्याप्यतिपरिचयाल्लज्जा न युक्तेत्यर्थः । यद्वा लज्जाया औचित्ये कारणान्तरमाह । तुरप्यर्थः । अजस्रसङ्गमाद्धिस्रब्धं मामकमपि मनो लज्जितां तां दृष्ट्वा यस्माल्लज्जते किमु

बाहुवक्त्रजघनस्तनांघ्रिनद्-
बन्धगन्धरतसङ्गता नतीः ।
इच्छुरुत्सुकजने दिने स्मिते
वीक्षितेति समकेति तेन सा ॥ ६५ ॥

वक्तव्यं, प्रथमसम्भोगे ते मनो लज्जत इति ॥ ६३ ॥ ६४ ॥

बाह्विति। तेन वीक्षिता सा भैमी इति पूर्व्वोक्तप्रकारेण समकेति सङ्केतिता। इति किं। हे भैमि उत्सुकाः स्वस्वकार्य्य-साधनोत्सुकाश्चञ्चलो जना यत्र रात्रिवृत्ताकर्णनाद्यर्थमुत्सुकः सखीजनो यत्रैवंविधे वा दिने, स्मित इति भैमीसम्बोधनं वा, दिवसेऽपि ते सम्बन्धिनीः, बाहू च वक्त्रं च जघनं च स्तनौ च अङ्घ्री च तस्य बाह्वादेः कामशास्त्रप्रसिद्धा ये बन्धा नागपा-शादीनि करणानि तेषां गन्धो लेशो विद्यते यत्र तादृशं रतं तेन सङ्गता मिलिताश्च ता नतयश्च नितरां नम्रत्वातिकौशल्या-तिशयनिर्म्मितानवयवनम्रीभावान् सङ्गता इति पृथग् वा इच्छुरभिलाषुकोऽस्मीति रात्रिकृतबन्धरतप्रत्यभिज्ञान या भवति तथा वीक्षणमात्रेणेङ्गितं कृत्वानुरागातिशयाद्दिनेऽपि स्वीयं तादृशताभिलाषं तां प्रति ज्ञापितवानिति भावः। यद्वा बाह्वादेस्ताः प्रसिद्धाः क्रमेण बन्धस्य गन्धस्य रतस्य सङ्गतस्य आनतिश्च ताः बाह्वोर्नागपाशादिबन्धो वक्त्रस्य गन्धः पद्मिनी-त्वात् सौरभं जघनस्य रतं स्तनयोः संगतश्चरणयोः पतन-मानतिश्चेत्यर्थः। त्वत्सम्बन्धिनीस्ताः स्वस्वव्यापारकरणमात्रनि-

प्रातरात्मशयनाद्विनिर्यतीं
सन्निरुध्य यदसाध्यमन्यदा ।

रता दुश्चित्ता जना यत्नैवम्भूते दिनेऽपि इच्छुरस्मीति विवक्षिता मानेन स्वाशयं ज्ञापिता । यदा त्वां पश्यामि तदैव ममैवं वाञ्छोदेति त्वद्दर्शनमेव मम सम्भोगसमय इति च ज्ञापितेति भावः । उत्सुकसखीजनेस्मिते इति पाठे रात्रिवृत्तप्रश्नवाञ्छागोपनार्थं तस्मात्तज्जा माभूदिति अस्मिते स्मितरहिते व्रीडिते एवंविधे ज्ञातुमेवोत्सुके सखीजने सखीजनसन्निधौ पूर्वोक्तप्रकारेण सा तेन सङ्केतिता शब्दिता । यद्रात्रावाचरितं बाहुबन्धादि तदिदानीमिच्छुरस्मीति रात्रिवृत्तान्तज्ञापनार्थं सखीसन्निधावेवमुवाचेत्यर्थः, अत एव सा व्रीडिता । उत्सुके सखीजने स्मिते प्रारब्धहास्ये सति व्रीडितेति वा । हे भैमि ते बाह्वादिबन्धादीन् दिने वीक्षिता द्रष्टा एवम्भूतोऽभिलापुकोऽस्मि, रात्रौ यद्यपि कृतास्तथापि न दृष्टाः, तस्माद् दिने तद्दर्शने दिदृक्षुरस्मीत्येव सा तेन शब्दिता न परमहमेव किन्तु त्वत्सखीजनोऽपीत्युत्सुकपदेन सूचितमिति वा । व्याख्यानान्तरं ग्रन्थगौरवभयान्नोक्तं । नतौरित्यत्र चतुर्थीचितेत्येताभ्यां योगे, न लोकेति (पा० २।३।६८) निषष्ठीनिषेधः ॥ ६५ ॥

प्रातरिति । भुवो जम्भजिद्भूमीन्द्रो नलः प्रातरात्मशयनादुत्थाय विनिर्यतीं शीघ्रं बहिर्निर्गन्तुकामां सन्निरुध्य चेलाञ्चलादौ सम्यक् धृत्वा क्षितिशचीं भूमीन्द्राणीं सुन्दरीं सौभाग्यवतीं च

तन्मुखार्पणमुखं सुखं भुवो-
जन्मजिन्नितिशचीमचीकरत् ॥ ६६ ॥
नायकस्य शयनादहर्मुखे
निर्गता मुदमुदीक्ष्य सुभ्रुवां ।
आत्मना निजनवस्मरोत्सव-
स्मारिणीयमहृणीयत स्वयं ॥ ६७ ॥

अन्यदा अन्यस्मिन् काले रात्रौ प्रागेव ह्रीभयवशाद्यदसाध्यम-प्रायं तत्तस्या मुखार्पणं मुखमादिर्यस्य तत् सुखं सुरतं अचीक-रत। रात्रिप्रान्तसमये त्वं मदुक्तं चेत् करिष्यसि तर्हि दुष्करम-प्राणं तुभ्यं दास्यामि नान्यथेति तां सन्निरुद्ध्यालिङ्गनादि कृत-वान्। सा गन्तुकामापि चेदेतदुक्तं न करिष्यामि तर्ह्ययं गन्तुं न दास्यति सखीनां चायमत्रागमनसमय इति विचार्य चुम्ब-नादि दत्वा शीघ्रं निर्गतेति भावः। सुखमनायासेनाचीकरदिति क्रियाविशेषणं वा। प्रभातसमये पद्मिनी रन्तव्येति कामशास्त्रं। चितिशचीमिति। हृक्रोरिति (पा० १।४।५३) कर्म्मत्वं ॥ ६६ ॥

नायकस्येति॥ अहर्मुखे प्रातर्नायकस्य शयनान्निर्गता इयं भैमी सुभ्रुवां प्रौढानां सुन्दरीणां सख्यादीनां स्वस्वप्राणेश-सुरतजनितां मुदमानन्दमुदीक्ष्य आत्मनैव निजः स्वीयो नवः स्मरोत्सवः सम्भोगस्तस्य स्मारिणी स्मारणशीला सती स्वयमेवा-हृणीयत लज्जिता। अनतिप्रौढोत्तमस्त्रीजातिः। शयनान्नि-र्गता सखीनां श्लाघनिकपोलपत्रवल्लीमार्जनादि दृष्ट्वा स्वम-

तां मिथोऽभिदधतीं सखीं प्रिय-
स्यात्मनश्च स निशाविचेष्टितं।
पार्श्वगः सुरवरात् पिधां दधद्
दृश्यतां श्रुतकथो हसन् गतः॥ ६८॥
चक्रदारविरहेक्षणक्षणे
बिभ्यती धवहसाय साभवत्।

सम्भोगचिह्नेन स्वस्वरूपेण ज्ञात्वा निजनवस्मरोत्सवं सखीः स्मरयन्त्येवंशीला वा सती स्वयं ललज्जे। निजधवेत्यपि पाठः। हृणीञ् कंड्वादिः॥ ६७॥

तामिति। स नलः तां भैमीं हसन् दृश्यतां गतः, स्वेच्छयैव पुनर्नयनगोचरत्वं प्राप्तः। किम्भूतां। प्रियस्य नलस्य आत्मनः स्वस्य च स्वसखीं प्रति मिथो रहसि निशाविचेष्टितं सम्भोगादि रात्रिवृत्तान्तमभिदधतीं कथयन्तीं। किम्भूतः। सुराणां वरात् पिधामदृश्यत्वं दधत्, अत एव पार्श्वगो निकटस्थः, अत एव श्रुता भैम्यभिधीयमाना रात्रिवृत्तान्तकथा येन। अदृश्येन मया अत्रैव स्थित्वा सर्वं श्रुतमिति प्रत्यक्षो भूत्वा हसन्न चाकथयदित्यर्थः। हसद्गत इति पाठे श्रुतकथो दृश्यतां गतस्तामहसदित्यर्थः। पिधेति, आतश्चोपसर्गे (पा० ३।३।१०६) इत्यङ्॥ ६८॥

चक्रेति। सा भैमी चक्राणां चक्रवाकानां दारैः चक्रवाकीभिः सह विरहस्तस्येक्षणक्षणे दर्शनकाले सन्ध्यायां, ममापि प्रियेण सहैतद्वियोगो माभूदिति क्षणमात्रमपि वियोगाद्बिभ्यती धवस्य

क्वापि वस्तुनि वदत्यनागतं
चित्तमुद्यदनिमित्तवैकृतं ॥ ६९ ॥
चुम्बितुं न मुखमाचकर्ष यत्
पत्युरन्तरमृतं ववर्ष तत् ।
सा नुनोद न भुजं यदर्पितं
तेन तस्य किमभून्न तर्पितं ॥ ७० ॥

तत्तस्य हमाय ह्यामार्थमभवत्। सन्ध्यावन्दनमात्रजन्येनैव वियोगेन चक्रवियोगदर्शनमात्रेण च किमिति विभ्यतीत्येव सा प्रियेण हसितेत्यर्थः। तावतैव वियोगेन तद्वियोगदर्शनमात्रेण च किमिति भीतेत्याशङ्क्याह क्वापि कस्मिंश्चिद्वस्तुनि विषये उद्यदुत्पद्यमानमनिमित्तमकारणं वैकृतं हर्षशोकभयादि यस्मिन्नेवम्भूतं चित्तं कर्त्तृ अनागतभाविनमर्थं शुभमशुभं वा वदति, तस्मात् भाविवियोगसूचिका साधारणी तस्या भीतिर्युक्तेत्यर्थः। भावी विरहः सूचितः। इयं ज्ञातास्वादा नितरां मय्यनुरक्ता वेति सन्तोषवशात् स तेन हसितेति भावः। बिभ्यतीं स परिरभ्य मुञ्चतीति पाठे भयमोचनार्थं गाढमालिङ्ग्यैव तस्याविति त्यर्थः। विकृतिरेव वैकृतं, प्रज्ञादित्वादण् ॥ ६९ ॥

चुम्बितुमिति। सा क्रमेण गतभीर्जितलज्जा च सती चुम्बितुं प्रियेण चुम्बितुमारब्धं मुखं यन्नाचकर्ष वक्रीचक्रे तच्चुम्ब्यमानमुखानाकर्षणं कर्तृ पत्युरन्तश्चेतसि अमृतं ववर्ष। तदीयं मनः सुधावृष्ट्येव परितुष्टं चक्रे इत्यर्थः। तथा तेन स्तनादावर्पितं

नीतयोः स्तनपिधानतां तया
दातुमाप भुजयोः करं परं।
वीतबाहुनि ततो हृदंशुके
केवलेऽप्यथ स तत्कुचद्वये ॥ ७१ ॥

याचितां न ददतीं नखार्पणं
तां विधाय कथयान्यचेतसं।
वक्षसि न्यसितुमात्ततत्करः
स्वं विभिद्य मुमुदे स तन्नखैः ॥ ७२ ॥

भुजं यत्र नुनोद निराचकार तेन भुजस्वीकारेण प्रयोजकेन तस्य किमङ्गं तर्पितं नाभूत् अपि तु सर्वाङ्गं तेन प्रीणितमभूत् ॥ ७० ॥

नीतयोरिति। स नलः तया पाणिपीडनभिया स्तनपिधानतां कुचाच्छादनतां नीतयोः प्रापितयोस्तदीयभुजयोः परं केवलं करं दातुं पूर्वं आप शक्तोऽभूदित्यर्थः। ततोऽनन्तरं वीतबाहुनि अपनीतभुजभीके हृदंशुके हृदयावरणवस्त्रे करं दातुमाप। अथ ततोऽपि पश्चात् केवले निरंशुके तत्कुचद्वये करं दातुमाप। मुग्धाजातिः। लज्जापचयकामापचयौ करणाकौ ॥ ७१ ॥

याचितामिति। त्वमपि नखोल्लेखं कुर्विति प्रेमभरेण याचनादपि नखक्षतं न ददतीं कयापि कथयान्यस्मिन् गोष्ठीरस एव चेतो यस्यास्तां विचिन्तां विधाय गोष्ठीसंवादसुखाभिन-

स प्रसह्य हृदयापवारणं
हर्त्तुमक्षमत सुभ्रुवो वहिः ।
ह्रीमयं न तु तदीयमान्तरं
तद्विनेतुमभवत् प्रभुः प्रभुः ॥ ७३ ॥

सा स्मरेण बलिनाप्यहापिता
ह्रीचमे भृशमशोभताबला ।
भाति चापि वसनं विना न तु
व्रीडधैर्य्यपरिवर्जने जनः ॥ ७४ ॥

यद्व्याजेन स्ववक्षसि न्यसितुं स्थापयितुं प्राप्तः स्वहस्तेन गृहीतस्तस्याः करो येनैवम्भूतः सन् तस्याः स्वहस्तच्छन्नहस्तनखैः स स्वशरीरं विभिद्योल्लिख्य मुमुदे ॥ ७२ ॥

स इति । स प्रभुः स्वामी सुभ्रुवो भैम्या वहिर्हृदयापवारणं स्तनाच्छादि वसनं प्रसह्य हठाद्धर्त्तुमक्षमत, तु पुनः ह्रीमयं आन्तरं अन्तःस्थं भैमीसम्बन्धि तत्कामक्रीडानिवारकं कुलस्त्रीहृदयभूषणीभूतमपवारकमपनेतुं प्रभुः समर्थो नाभवत् । एवं विस्रम्भणक्रमेण यद्यपि लज्जा त्याजिता तथापि हृदयाच्छादिवस्त्रापाकरणपूर्व्वं कुचस्पर्शादिना पुनरपि लज्जितैवेति भावः ॥ ७३ ॥

सेति । सा बलिना प्रभाववता अथ च प्रदीप्तेनापि स्मरेण ह्रीचमे लज्जाधैर्य्ये अहापिताऽत्याजिता सा अबला स्त्री अथ च स्त्रीत्वाद् दुर्बला भृशमशोभत, युक्तोऽयमर्थः । यतो जनो वसनं

आत्थ नेति रतयाचितेन चे-
न्मामनोऽनुमतवत्यसि स्फुटं ।
इत्यमुं तदभिलापनोत्सुकं
धूनितेन शिरसा निरास सा ॥ ७५ ॥
या शिरोविधुतिराह नेति ते
सा मया न किमियं समाकलि ।

विनापि भाति च शोभत एव तु पुनः प्रौढधैर्य्ययोः परिवर्जने परित्यागे नैव शोभते। तस्मादुक्तमर्थान्तरन्यासः। उद्दीप्तेऽपि कामे लज्जाधैर्य्यापरित्यागान्नितरां नलस्य स्पृहणीयत्वात् शुशुभ इति भावः ॥ ७४ ॥

आत्थेति। सा इत्येवम्भङ्ग्या स्वनिषेधार्थमपि तस्या अभिलापने मञ्जुलवाणीश्रवणे उत्सुकं कौतुकिनममुं धूनितेन कम्पितेन शिरसा कृत्वा निरास निषिषेध। इति किं। हे भैमि त्वं मह्यं सुरतं देहि प्रसीदेति सुरतयाचितं मां यद्यस्मान्नेति न आत्थ अतो हेतोरप्रसिद्धमनुमतं भवतीति न्यायेन स्फुटं सुरतं कुर्विति मामनुमितवत्यसि अनुज्ञातवती त्वमसीति, इयं सुरतं नानुमन्यते परं मया सह न वदत्यपीत्येवं परिहासभाषणे क्रियमाणे निषेधार्थमपि किञ्चिद्वदिष्यतीत्याशया नलेन तद्वाचनार्थमेवं यत्ने कृतेऽपि कुशला लज्जाधैर्य्यवशाच्छिरोधूननमेव तं न्यषेधन्न तु साक्षाद्वचरमण्वाचेति भावः ॥ ७५ ॥

येति। हे भैमि ते या शिरोविधूतिः शिरःकम्पः नेत्याह

तन्निषेधसमसङ्ख्यताविधि-
र्व्यक्तमेव तव वक्ति वाञ्छितं॥ ७६॥
नात्थ नात्थ शृणवानि तेन किं
तेन वाचमिति तां निगद्य सः।
साम्म दूत्यगतमाह तं यथा
तज्जगाद मृदुभिस्तदुक्तिभिः॥ ७७॥

निषेधार्थं ब्रूते मया सेयं किं न समाकलि सम्यक् न ज्ञातापि तु सम्यग्ज्ञातैव। कथमित्याह। तयोः शिरोधूतिरूपयोर्निषेधयोर्या समसङ्ख्यता तुल्यसङ्ख्यता सा तववाञ्छितं सुरतरूपं विधिं व्यक्तमेव वक्ति वदति सुरतं तवेष्टमित्याहेत्यर्थः। द्वयोरेव निषेधयोः सुन्दोपसुन्दन्यायेनान्योन्यघाताद्द्वौ नञौ प्रकृतार्थं गमयत इति न्यायेन च सुरतं त्वया विधेयमेवेति मां प्रति विधावेव तात्पर्य्यमिति मया त्वदाशयो ज्ञात इति भावः। इति पुनरपि भैमीवादनार्थं वक्रोक्तिः। विधिरिति पाठे तस्य मत्प्रार्थितस्य शिरोधूनतिद्वयरूपौ निषेधौ तयोः समसङ्ख्येनैव विधिः। स तवाभिलाषं स्पष्टमेव वक्तीति व्याख्येयं॥ ७६॥

नेति। स नलस्तां इति पूर्व्वोक्तं निगद्योक्त्वा, सा दूत्यं गतं प्राप्तं दूत्येन हेतुना वा भैमीसविधं गतं तं नलं तदद्य विश्रंस्य इत्यादि यथा आह स्म ब्रूते स्म, तदैव मृदुभिरतिमञ्जुलाभिस्तस्या भैम्या उक्तिभिस्तद्भाषणानुकारिणीभिर्जगाद तादृगेवानूदितवानित्यर्थः। इति किं। हे भैमि, अहं ते वाचं न शृण-

नीविसीम्नि निविडं पुरारुणत्
पाणिनाथ शिथिलेन तत्करं ।
सा क्रमेण न न नेति वादिनी
विभ्रमाचरदमुष्य केवलम् ॥ ७८ ॥
रूपवेषवसनाङ्गवासना-
भूषणादिषु पृथग्विदग्धता ।

वाणि तेन मदश्रवणेन हेतुना मया नाकर्णनीयमिति बुद्ध्या त्वं नात्थ न ब्रूषे न किं त्वद्वाक्यानि मया पूर्व्वमेवाकर्णितानि इदानीं तव भाषणं मया न श्रोतव्यमिति वृथैवयं मुखमुद्रणेति त्वया वक्तव्यमित्यवददिति भावः । त्वं नात्थेति स्वरभङ्ग्या मामवादीरित्यर्थः । किमित्याक्षेपे वा ॥ ७७ ॥ युग्मम् ॥

नीवीति । सा पुरा प्रथमं सम्भोगारम्भे नीविसीम्नि वर्त्तमानं तस्य करं स्वपाणिना निविडमतिगाढं यथा तथा अरुणत् । अथानन्तरं क्रमेण भयभङ्गानन्तरं दिनान्तरे नितम्बजघनस्पर्शकारिणं नलकरं शिथिलेन पाणिना रुरोध । ततोऽपि लज्जाविजयानन्तरं निषेधमाचार्थं न न नेति वादिनी सती अमुष्य नलकरस्य नलस्यैव वा केवलं विभ्रमाचरत् । न न नेत्युक्ते यदि न निवर्त्तेत मा निवर्त्ततु वदामि तावदेवमिति वचोमात्रेण विभ्रमाचरन्न तु कर्म्मणेति भावः । मुग्धाजातिः । भयलज्जात्यागः सूचितः ॥ ७८ ॥

रूपेति । सा रूपेषु देववरदानात् कायधारणनिर्म्मितेषु

सान्यदिव्ययुवतिभ्रमक्षमा
नित्यमेत्य न मगान्नवा नवा ॥ ७९ ॥
इङ्गितेन निजरागनीरधिं
संविभाव्य चटुभिर्गुणश्रुतौ ।

सौन्दर्य्यविषयेषु, वेषेषु महाराष्ट्रलाटगुर्जरादिस्त्रीधृतवस्त्रालङ्कारादिशृङ्गारभङ्गीषु, वसनेषु नीलपीतदुकूलादिषु वस्त्रेषु, अङ्गवासनासु चन्दनकस्तूरीकर्पूराद्यङ्गरागैरगरुचन्दनादिधूपैश्च कृतेषु देहामोदेषु, भूषणेषु सौवर्णेषु मुक्तामाणिक्यहीरकादिखचितेषु अलङ्कारादिषु विषये पृथक् प्रत्येकं प्रतिदिनं विदग्धतां चातुरीमेत्य प्राप्यातएव नवा नवा नूतना सती नित्यं न मगात् सम्भुजे इत्यर्थः । किम्भूता । अन्यस्या दिव्ययुवतेर्रम्भादिस्वर्गस्त्रिया भ्रमे इयमेव सेति भ्रान्तौ क्षमा योग्या समर्थेत्यर्थः । अन्वहमन्येवयमिति तस्य चेतसि स्फुरितेत्यर्थः । वा इवार्थः । नित्यं नवेव सागादपि तु नवोनेव जगामेति काकुर्व्वा । अन्वहं नूतनत्वादनुरागातिशयादन्यावरोधाङ्गनासम्भोगविमुखो नलो जात इति भावः । क्षमेति पाठे भैमीविशेषणं ॥ ७९ ॥

इङ्गितेति । साऽधिका सर्व्वगुणैरुत्कृष्टा चतुरा च तं अधिकमतितरां वशं आत्मन्यनुरागिणं व्यधत्त चकार । किञ्चित्प्रौढाऽभूदित्यर्थः । किं कृत्वा ? इङ्गितेन सख्यादिषु भर्तृगुणवर्णनपूर्व्वं भाषणं तद्दोषापलापः पश्चादाभिमुख्येन शयनं पूर्व्वमुत्थानमा-

भक्ततां च परिचर्य्ययानिशं
साधिकाधिकवशं व्यधत्त तं ॥ ८० ॥

यत्क्रियां प्रति यदस्रजस्तया
स्वस्वरस्य लघुतां दधानया ।
पत्युरन्वहमक्रीयत स्फुटं
तन्न किन्नाक्रियत तस्य मानसं ॥ ८१ ॥*

स्वाङ्गमर्पयितुमेत्य वामतां
रोपितं प्रियमथानुनीय सा ।
आतदीयहठसम्भुक्ततां
नान्वमन्यत पनस्तमर्थिनं ॥ ८२ ॥

गमने तुष्टिः प्रवासे वैमनस्यं सदाममसुखदुःखतेत्याद्यनुराग-द्योतकेन चेष्टितेन निजं अगाधत्वादनुरागमेव नीरधिं सत्यं संविभाव्य सम्यग् ज्ञापयित्वा, तथा चटुभिः भवादृशोऽतिसुन्दरो ऽतितेजस्वी वदान्यः सर्व्वकलाकुशलः कः? अपि तु न कोऽपीत्यादिप्रियभाषणैर्गुणज्ञतां स्वीयगुणग्राहित्वं वैदग्ध्यं ज्ञापयित्वा, तथा अनिशं सर्व्वदा परिचर्य्यया चरणसंवाहनतालवृन्तचालनादिरूपया सेवया निजां भक्ततां भक्तियुक्तताञ्च ज्ञापयित्वा। आनिशं, निशामभिव्याप्य मर्य्यादीकृत्याहोरात्रमित्यर्थ इति वा ॥ ८० ॥

स्वाङ्गमिति। सा सम्भोगार्थिने नलाय स्वाङ्गं स्तनादिकं

* एकाशीतितमश्लोकस्य टीकादर्शपुस्तकद्वये नास्तीति न लिखिता ॥ ८१ ॥

आद्यसङ्गमसमादराण्यधाद्-
वल्लभाय ददती कथञ्चन ।

निजमङ्गं समर्पयितुं दातुं किञ्चिद्वामतां प्रातिकूल्यमेत्य किञ्चि-दङ्गमदत्त्वा अथानन्तरं तेनैव व्यापारेण रोषितं उत्पादितरोषं औदासीन्यं प्राप्तं प्रियं नलं चुम्बनालिङ्गनचरणपतनादिना अनु-नीय प्रसाद्य, अनन्तरं इयं मां प्रसादयति चेत्तर्हि मदीप्सितं करिष्यतीति बुद्ध्या पुनरर्थिनं तदङ्गं याचमानं तं, तदीयां नलो-र्यां हठात् बलात्कारेण सम्भुभुक्षुतां सम्भोगेच्छुतां आ मर्य्या-दीकृत्य नान्वमन्यत तावन्नानुमेने । पूर्वं याञ्चापूर्वं सम्भोगे प्रवृत्तोऽनन्तरं तदीयवामत्वाद्रोषवशादौदासीन्यं गतः स्त्र्यन्तरं प्रति गमिष्यतीति बुद्ध्या तयानन्तरमनुनीतः सन् पुनरर्थयमा-नोऽपि यावद्बलात् सम्भोगं करोति तावन्नानुमतोऽनन्तरं त्वनु-मत इत्यर्थः । याञ्चानन्तरमेवानुमनने तादृशोऽनुरागो न वर्द्धते, तदीयमनुरागमात्मनि परां कोटिं प्रापयितुं हेतुरूपं सम्भोगमैवेच्छदिति भावः । अनुनयानन्तरं सम्भोगे कृतेऽपि अ-नुरागातिशयात् पुनः सुरताभिलाषिणं नानुमेन इति पुनः-शब्दार्थो वा । रोषितं । ण्यन्तान्निष्ठा । आतदीयेति । मर्य्यादा-यामव्ययीभावो नपुंसकत्वाद्ध्रस्वत्वं ॥ ८२ ॥

आद्येति । सा अङ्गकानि ह्रस्वानि सौकुमार्य्यातिशयादनु-कम्प्यानि निजान्यङ्गानि आद्यसङ्गमेन प्रथमसम्भोगेन समस्तुल्य आदरः प्राप्त्युपायासक्तिर्येषु, प्रथमसम्भोगे भयलज्जात्यागपूर्वं विश्वासार्थं यावान् प्रतारणाद्युपायः कृतस्तावानेव पाश्चात्येष्वपि

अङ्गकानि घनमानवामता-
व्रीडलम्भितदुरापतानि सा ॥ ८३ ॥
पत्युरागिरिशमानखं क्रमात्
स्वस्य चागिरिजमालतं वपुः ।
तस्य चार्हमखिलं पतिव्रता
क्रीडति स्म तपसा विधाय सा ॥ ८४ ॥

सम्भोगेषु यत्प्राप्तये नलेनोपायः कृतस्तादृशीं नीतिं यावत् अधात् दधार । यतो वल्लभायातिप्रेयसे नलाय कथञ्चन भूयसा प्रयासेन तान्येव ददती, इत्यत्रापि हेतुः । यतो घनै-र्दृढैः मानवामताव्रीडैः मानः प्रीतिकलहोदासीनता वामता स्वाङ्गसमर्पणप्रातिकूल्यं व्रीडा लज्जा तैः घनेन मानेन या वामता तया लज्जया च लम्भिता प्रापिता दुरापता दुर्लभ-ता येषां तानि । आदौ विवाहात् पूर्वं यः समागमस्तत्का-लीनेनादरेण तुल्यादराणीति वा । मानादिना तदङ्गानां दुष्प्रापत्वादिच्छाविवृद्धेर्नलोयोऽनुरागः प्रत्यहं परां कोटिम-ध्यारोहदिति भावः । अङ्गकानि । कुत्सितानुपायामिति वा कन् । वामतायुक्ता व्रीडेति समासः ॥ ८३ ॥

पत्युरिति । सा पतिव्रता धर्मेण तपसा तपःफलेनेन्द्रादि-वरदानेन वा पत्युर्नलस्य वपुः आगिरीशं हरमारभ्यानख तत्पर्यन्तं तथा स्वस्य चागिरिजं पार्व्वतीमारभ्यालतं लता-पर्य्यन्तं लतामारभ्य पार्व्वतीपर्य्यन्तं वा आरोहणक्रमेण प्रथमं

न स्थली न जलधिर्न काननं
नाद्रिभूर्न विषयो न विष्टपं।
क्रीडिता न सह यत्र तेन सा
सा विधैव न यया यया न वा ॥ ८५ ॥

प्रियस्य पश्चादात्मन इत्येवं रूपेण वा, गिरिशरूपे गिरिजारूपं तदमारभ्य गिरिशापर्य्यन्तं वा, तथा स्वस्य चात्मनः शरीरं गिरिशरूपं लतारूपमित्येवंरूपं क्रमेण विधाय तत्तद्रूपं विरचय्य तस्यावलम्बितशरीरान्तरस्य सम्बन्धि अखिलं यद्भावावेषादिक्रीडादि चार्हं योग्यं तदपि विधाय क्रीडति स्म। यतः पतिव्रता। न हि पतिव्रतानां किञ्चिदसाध्यमस्ति। चोऽवधारणे। अखिलं भावावेषादि तस्यैवार्हं यथा तथा रेम इति वा ॥ ८४ ॥

नेति। सा तेन सह यत्र न क्रीडिता सम्भोगं नाकृत सा स्थली अकृत्तिमा भूरेव नास्ति। तथा न जलधिः कूपमारभ्य समुद्रपर्यन्तं स जलाशयो नास्ति। तथा काननं तत् दुर्गमं वनं नास्ति। साद्रिभूर्नास्ति। स विषयः कपटादिरूपो देशविशेष एव सुखहेतुः स्रक्चन्दनादिर्वा नास्ति। तद्विष्टपं भूर्भुवःस्वराद्येव नास्ति। यस्यां यस्मिन् वा तेन सह सा न विक्रीडति प्रत्येकं योज्यं। वा समुच्चये। तथा सा विधैव पुरुषायितादिरूपः कामशास्त्रोक्तः प्रकार एव नास्ति यया यया येन येन प्रकारेण सा न क्रीडिता। जलान्तःसम्भोगनिषेधे पूर्व्वश्लोके नानारूपधार-

नम्रयांशुकविकर्षणि प्रिये
वक्त्रवातहृतदीप्रदीपया।
भर्तृमौलिमणिदीपितास्तया
विस्मयेन ककुभो निभालिताः ॥ ८६ ॥

कान्तमूर्द्ध्नि दधती पिधित्सया
तन्मणेः श्रवणपूरमुत्पलम्।
रन्तुमर्चनमिवाचरत् पुरः
सा स्ववल्लभतनोर्मनोभुवः ॥ ८७ ॥

णोक्तेर्मत्यादिरूपिलान्निषेधो न, मनुष्याधिकारत्वाच्छाक्तस्येति ज्ञेयम्। क्रीडिता। गत्यर्थाकर्मक (पा० ३।४।७२) इति कर्त्तरि निष्ठा ॥ ८५ ॥

नम्रयेति। प्रियेऽंशुकविकर्षिणि सति लज्जावशाद्गुप्ताङ्ग-दानवलोकनार्थं नम्रया अतएव वक्त्रवातेन हृता निर्वापिता दीप्रः प्रकाशमानो दीपो यया तया भर्तृमौलौ मणयो मुकुटरत्नानि तैः दीपिताः प्रकाशिताः ककुभो दिशो विस्मयेन निर्वापितेऽपि दीपे कथमयं प्रकाश इति आश्चर्येण निभालिता विलोकिताः। रत्नप्रकाशाज्ञानाद्विस्मयो रत्नप्रेक्षातिशयाद्वा ॥ ८६ ॥

कान्तेति ॥ तस्य पूर्वोक्तस्य दिक्षु दीप्रस्य मुकुटमणेः पिधित्सया आच्छादितुमिच्छया श्रवणपूरं कर्णभूषणीकृतं नीलोत्पलं कान्तमूर्द्ध्नि दधती स्थापयन्ती सा रन्तुं स्ववल्लभ एव तनुः शरीरं

तं पिधाय मुदिताथ पार्श्वयो-
र्वीक्ष्य दीपमुभयत्र सा स्वयोः
चित्तमाप कुतुकाद्भुतत्रपा-
तङ्कसङ्कटनिवेशिनःस्मरम् ॥ ८८ ॥
एककस्य शमने परं पुन-
र्जाग्रतं शमितमप्यवेक्ष्य तं।

यस्य नलदेहव्याजं धारयतो मनोभवः पुर आदौ मरतारम्भे अर्चनमिवाचरत् चकार पुष्पपूजा शिरसि कर्त्तुमुचिता। रता-रम्भे च स्मरः समुचिता देवतेति तत्पूजा युक्ता। प्रकाशाभावार्थं कर्णोत्पलेन मुकुटमणिं पिदधाविति भावः ॥ ८७ ॥

तमिति ॥ सा तं नलीयं मुकुटमणिं पिधाय कर्णोत्पलेना-च्छाद्य प्रकाशाभावान्मुदिता सती, अथ पश्चात् स्वयोर्निजयोरु-भयत्र द्वयोर्वामदक्षिणयोः पार्श्वयोर्दीपं वीक्ष्यार्थाद्वौ दीपौ दृष्ट्वा स्वचित्तमघटमानघटनात् कुतुकं तद्दर्शनजातमाः किमेतदिति चमत्करणमद्भुतं आश्चर्यं लज्जा त्रपा आकस्मिकदीपदर्शनादा-तङ्को भयं गोप्यान्यपि मदीयाङ्गानि प्रियेण दृष्टानीति शङ्का-तिशयेवातङ्कस्तेषां सङ्कटे सम्मर्द्दे मध्ये निवेशितः स्मरो यत्र तत्। एवम्भूतं मायाविशेषणविधौ तात्पर्यं। दीपौ दृष्ट्वा कौतुकादि-सहिताभूदिति भावः ॥ ८८ ॥

एककस्येति ॥ द्वयोर्दीपयोर्मध्ये एककस्य दीपस्य मुखचेला-ञ्चलादिना शमने निर्वाणे क्रियमाणे सति पूर्वशमितमपि

जानवह्निवरसंस्मृतिः शिरः
सा विधूय निमिमील केवलं ॥ ८९ ॥
पश्य भीरु न मयापि दृश्यसे
यन्निमीलितवती दृशावसि।
इत्यनेन परिहस्य सा तमः
संविधाय समभोजि लज्जिता ॥ ९० ॥

द्वितीयं दीपं नलेच्छामात्रेण पुनरपि जाग्रतं प्रदीप्तमवेक्ष्य जाता वह्निवरसंस्मृतिर्यस्याः सा स्मारणाभिनयवशाद्वा शिरो विधूय केवलं निमिमील निमीलितवती। लज्जाभिनयः कौतुकवशात् तदीयगोप्यावयवविलोकनार्थं तस्या निरुपायत्वार्थं पुनः पुनः शमितानपि दीपान् इच्छामात्रेणाजिज्वलदिति भावः। एकस्य शमने कृतेऽपरं दीपं जाग्रतं दृष्ट्वा शमितमपि पुनर्जाग्रतं दृष्ट्वेति वा व्याख्येयं। एककः पूर्ववत् ॥ ८९ ॥

पश्येति॥ अनेन इति परिहस्य सोपहासमुक्त्वा तदीयलज्जापाकरणार्थं दीपाभावेच्छामात्रेण तमः संविधायान्धकारं निर्माय सा समभोजि सम्भुक्ता ततो लज्जिता। इति किं। हे भीरु लज्जाभयकातरे यद्यस्मात्त्वं दृशौ निमीलितवत्यसि तस्मात्त्वं मयापि न दृश्यसे पश्य। नेत्रनिमीलनात्त्वया यथा स्वीयमङ्गं न निरीक्ष्यते तथा मयापि त्वदङ्गमित्यर्थः। अथ च त्वया नेत्रे निमीलिते मया तु त्वं न दृश्यसे चित्रमेतत्। यस्मान्मया न द्रष्टव्यमिति हेतोस्त्वया नेत्रे निमीलिते, तावतैव

चुम्ब्यमेऽयमयमङ्क्यमे नखैः
श्लिष्यमेऽयमयमर्प्यमे हृदि।
नो पुनर्न करवाणि ते गिरं
हुं त्यज त्यज तवास्मि किङ्करा॥ ९१॥

मया न दृश्यमे ऽपि तु दृश्यम एव। अन्यो हि गोप्यमङ्गं वस्त्रादिनाच्छादयति त्वया तु नेत्रे एव निमीलिते। तथा च मया त्वदीयं गोप्यमपि अङ्गं कामं दृष्टमेवेति किं नेत्रनिमीलनेन पश्येति। अमुना नर्म्मेण लज्जिता मा तमः सम्यग्विधायान्तरश्चैवं परिहासपूर्व्वमुक्ता। भीरु। उङन्तत्वान्नदीत्वाद्ध्रस्वः, तत्सामर्थ्यान्न गुणः॥ ९०॥

चुम्ब्यम इति। इतीति युग्मं। हे प्रिये, मयायं त्वं चुम्ब्यमेऽयं त्वं नखैरङ्क्यमे चिह्न्यमेऽयं त्वं श्लिष्यमे आलिङ्ग्यमेऽयञ्च हृदि अर्प्यमे हृदयोपरि धार्य्यमे ते तव पुनरहं गिरं नो करवाणीति न अपि तु करोम्येव यत इत्यर्थः। हुमिति सुरतसम्मर्द्दासहत्वेन पूर्य्यतामित्यर्थः। त्यज त्यज इति पीडानटने, मुञ्च मुञ्च मामित्यर्थः। अहं तव किङ्करास्मीति दैन्यनटने॥

इत्येवंप्रकारेणालीकरते मिथ्यासुरते कातरा भीरुः सुरते विषये बलात्कारभीता सती आत्मानं यथाकथञ्चिन्मोचयितुमेवेथं वदति न तु हेलयेति। तथा यद्यपीयमप्रौढेति प्रियं विप्रलभ्य प्रतार्य्यैतादृशीं वृथाबुद्धिं तस्योत्पाद्य तथा ह्रियमपि प्रतार्य्य मामियमद्यापि न मुञ्चति, बलात्कारभयात् चुम्बनादि

इत्यलीकरतकातरा प्रियं
विप्रलभ्य सुरते ह्रियं च सा।
चुम्बनादि विततार मायिनी
किं विदग्धमनसामगोचरः ॥ ९२ ॥ युग्मम् ॥
स्वेप्सितोद्गमितमात्रलुप्तया
दीपिकाचपलया तमोघने।

करोति न तु स्वेच्छयेति लज्जात्यागमप्यप्रकटीकृत्य चुम्बनादि पूर्वोक्तं सकलमपि सुरतसम्भारं प्रौढतयैव विततार प्रियाय ददौ। यतो मायिनी मायावती। उक्तप्रकारेण कपटेना-च्छादितनिजकामोन्मादप्रौढिरिति यावत्। यस्माद्विदग्धं व्यव-हारचतुरं मनो येषां मानवानां किं वस्तु अगोचरः विषयो न भवति अपि तु सर्व्वमपि साध्यमेव। चतुरा हि असाध्यमपि साधयन्ति। अलीकतरकातरेति पाठे अलिकतरं कातरेति समासः। त्यज२। वीप्सया द्विरुक्तिः। किंकरेति। दिवाविभा (पा० ३।२।२१) इति टप्राप्तावपि, किं यत्तदत्रुषु कञोऽञ्वि-धानम् (पा० ३।२।२१।वा० १।) इत्यच्. ततष्टाप् ॥ ९१ ॥ ९२ ॥

स्वेति। स तमसा घने तस्मिन् मोघेऽथच तमस्तुल्ये घने मेघे तमोरूपे मेघे स्वेप्सितेन स्वेच्छामात्रेणोद्गमितमात्रा प्रकाशिता चासौ तदानीमेव लुप्ता शमिता च तथा दीपिकयैव चपलया विद्युता दृष्टनष्टया निर्विघ्नं रतं तस्माज्जन्म येषां तानि च तानि तस्या मुखाकूतानि वदनेङ्गितानि तेषां दर्शनानि तज्ज-

निर्विशङ्करतजन्मतन्मुखा-
कृतदर्शनसुखान्यभुङ्क्त सः ॥ ९३ ॥
यद्भ्रुवा कुटिलिते तया रते
मन्मथेन तदनामि कार्म्मुकं।
यत्तु ऊं ऊमिति सा तदा व्यधा-
त्तत स्मरस्य शरमुक्तिऊङ्कृतं ॥ ९४ ॥
इत्थितोपदिशतीव नर्त्तितुं
तत्क्षणोदितमुदं मनोभुवं।

न्यानि सुखानि अभुङ्क्तान्वभूत्। अन्धकारवशात्तैमोस्खेच्छाविर-चितमुखाकृतदर्शनसुखानुभवार्थं वह्निवरदानवशात्तदानीमेव दीपिकां प्रकाशितवान्। तदानीमेव च लज्जावती स्यादिति भिया पुनस्तां शमितवानिति भावः। विद्युद्प्येवम्भूता भवति। लुप्तत्यन्तर्भाविण्यर्थो ज्ञेयः ॥ ९३ ॥

यदिति। तया रते भ्रुवा कुटिलिते वक्रिते इति यत् तन्म-न्मथेन कार्मुकमेवानामि। यत्तु पुनः सा तदा सुरतसमये सुरतसम्मर्द्दनिःसहतावारणव्याजेन ऊं ऊमिति रतिभृतजात-शब्दं व्यधात् तत् स्मरस्य शरमुक्तिऊङ्कृतं वाणमोचनकालीनं ऊङ्कारमेवाकृत ऊङ्कार एवाभूत्। तस्या ऊङ्करणं कामस्य चापनमनमित्यर्थः। कामस्य वामत्वात् भ्रूवक्रादिना कामः पुनरुज्जृम्भित एवाभूदिति भावः ॥ ९४ ॥

इत्थितेति। चुम्बनरभसात् कान्तदन्तैः परिपीडिताधरा दष्टा-

कान्तदन्तपरिपीडिताधरा
पाणिधूननमियं वितन्वती ॥ ९५ ॥
सा शशाक परिरम्भदायिनी
गाहितुं बृहदुरः प्रियस्य न ।
चक्षमे स च न भङ्गुरभ्रुव-
स्तुङ्गपीनकुचदूरतां गतं ॥ ९६ ॥
बाहुवल्लिपरिरम्भमण्डली
या परस्परमपीडयत्तयोः ।

धरा अतएव पाणिधूननं वितन्वती इयं तत्क्षणे सुरतसमये उदितमुदं सञ्जातहर्षं मनोभुवं नर्त्तितुं उपदिशतीव तं शिक्षयन्तीव प्रियेणेक्षिता, यापि नृत्यं शिक्षयति सापि हस्तकाभिनयवशात् करकम्पनं करोति । उपदिशती । आच्छीनद्योः (पा० ७।१।८०) इति पाक्षिकत्वान्नुमभावः ॥ ९५ ॥

सेति । परिरम्भदायिनी सा प्रियस्य बृहदुरो गाहितुं सामस्त्येन स्प्रष्टुं न शशाक, यतो बृहत् अतिविशालं, सा च कृशाङ्गीत्यर्थः । स च सर्वोऽपि भङ्गुरे भ्रुवौ यस्यास्तस्या वक्षः सर्वमपि स्प्रष्टुं न चक्षमे, यतस्तुङ्गाभ्यां पीनाभ्यां कुचाभ्यां दूरतां व्यवहिततां गतं प्राप्तं । कुचमात्रमेवालिङ्गितं नतु सर्व्वं वक्ष इत्यर्थः । उभावपि सम्पूर्णालिङ्गनाप्राप्तेर्नितरां सस्पृहत्वादुज्जृम्भितकामौ जाताविति भावः ॥ ९६ ॥

बाह्विति । तयोर्बाहव एव दैर्घ्यकार्श्याभ्यां वल्लयः लतातुल्या

आस्त हेमनलिनीमृणालजः
पाश एव हृदयेशयस्य सः ॥ ९७ ॥
वल्लभेन परिरम्भपीडितौ
प्रेयसीहृदि कुचाववापतुः ।
केलतीमदनयोरुपाश्रये
तत्र वृत्तमिलितोपधानताम ॥ ९८ ॥

तासां परिरम्भे आलिङ्गनविषये या मण्डली वृत्ताकाराङ्कपाली परस्परं अपीडयत् गाढमालिङ्गत् स हृदयेशयस्य कामस्य हेमनलिनीमृणालाज्जातस्तेन निर्मितः पाश एवास्त बभूव । अतिगौरत्वान्मार्दवत्वाच्च बाहूनां सौवर्णमृणालतुल्यत्वं । पाशबद्धौ यथा वशौ भवति तथाङ्कपालीपाशेन दृढं बद्धौ तौ कामवशौ जाताविति भावः ॥ ९७ ॥

वल्लभेनेति । प्रेयसीहृदि वल्लभेन परिरम्भपीडितौ गाढालिङ्गनेन वामनीकृतौ कुचौ केलतीमदनयोर्रतिकामयोरुपाश्रये विश्रान्तिस्थानभूते तत्र वक्षसि वृत्तमिलितोपधानतां वर्त्तुलसङ्गतोच्छीर्षकं भावं अवापतुः । प्रभोर्हि विश्रान्तिस्थाने शय्यादौ गण्डोपधानं वृत्तमुच्छीर्षकं भवति । रतिकामौ च प्रभू तत्र वर्त्तेते, अतस्तत्रैव वर्त्तमानौ वृत्तौ वामनीभूतौ कुचौ तयोरुच्छीर्षके इव बभूवतुरित्युत्प्रेक्षा । केलती रतिपर्य्यायः ॥ ९८ ॥

भीमजोरुयुगलं नखार्पितैः
पाणिजस्य मृदुभिः पदैर्बभौ ।
उत्प्रशस्ति रतिकामयोर्जय-
स्तम्भयुग्ममिव शातकुम्भजं ॥ ९९ ॥
वङ्कमानि विधिनापि तावकं
नाभिमूरुयुगमन्तराङ्ककं ।
स व्यधादधिकवर्णकैरिदं
काञ्चनैर्यदिति तां पुराह सः ॥ १०० ॥

भीमजेति । भीमजोरुयुगलं नखार्पितैर्मृदुभिः पाणिजस्य नखस्य पदैः स्तोकत्वक्छ्रावोल्लेखिभिर्नखक्षतैः कृत्वा रतिकामयोः शातकुम्भजं सौवर्णं तयोर्यशःप्रशस्तिर्लिपिरूपा यत्र सैव नखपदरूपैव यशःप्रशस्तिर्यत्रैवम्भूतं वा निजजयप्रकाशकं स्तम्भयुग्ममिव बभौ रतिकामयोरियमेव विजयप्रशस्तिर्नखक्षतादिकरणं नाम । सुवर्णवर्णत्वादूर्वोः सुवर्णस्तम्भत्वं । अन्यस्यापि प्रभोर्यशःप्रशस्तिर्जयस्तम्भे लिख्यते ॥ ९९ ॥

वङ्कमानीति । स तां पुरा इति आह्वावोचत् । इति किं । हे भैमि नाभिमूरुद्वयमन्तरा नाभ्यूरुद्वयमध्ये अङ्ककं कामसत्तातिशयात्मार्दनासहतयाऽल्पं कुत्सं वा मदनमदनाख्यं तावकमङ्कं न केवलं मया किन्तु वीतरागेण विधिना ब्रह्मणापि वङ्कु नितराममानि आदृतं । यद्यस्मात् कारणात् स वङ्कधिको वर्णो येषां तैरतिगौरैरत्युत्तमैः काञ्चनैरिदं कामगृहं व्यधा-

पीडनाय मृदुनी विगाह्य तौ
कान्तपाणिनलिने स्पृहावती।
तत्कुचौ कलशपीननिष्ठुरौ
हारहासविहते वितेनतुः ॥ १०१ ॥

दत्तत। निरन्तरावृतत्वादुष्णशीतवातादिसम्बन्धाभावादलोमत्वाद्यङ्गान्तरापेक्षयाधिकवर्णं वराङ्गं दृष्ट्वा प्रदीप्तकामः सन्नेवमुवाचेत्यर्थः। अश्लीलमपष्टु तन्मैथुनादन्यत्र निषेधात् वराङ्गदर्शनं युक्तमिति ज्ञेयं। नाभिमित्यादौ, अन्तरान्तरेण (पा० २।३।४) इति द्वितीया। अङ्गकं। अल्पे (पा०५।३।८५) ह्रस्वे (पा०५।३।८६) इति वा कन्। पुरावेति, भूते, पुरि लुङ् चास्मे (पा०३।२।१२२) इति लट्॥ १००॥

पीडनायेति। कलशवत् पीवरौ निष्ठुरौ कठिनौ च तौ अतिप्रसिद्धगुणौ तस्याः कुचौ कर्तृभूतौ कान्तस्य पाणिनलिने करकमले कर्मभूते हारस्य हासः प्रकाशस्तेन विहते आच्छादि[illegible] वितेनतुश्चक्रतुः। स्पृशन्तावपि नलकरौ हारदीप्त्या पि[illegible]।ावित्यर्थः। अथवा हार एव हासः तेन पराभूते कृतापहासे चक्रतुः। यतो विगाह्यमानावेवाभितः स्पृष्ट्वा पीडनाय मर्दनाय स्पृहावती साभिलाषे इतेच्छे यतः मृदुनी मर्दयितुमसमर्थे। स्वयं मृदुर्हि महतः कठिनस्य च पीडनाय न प्रभवतीति मृदुभ्यां युवाभ्यां विशालौ कठिनौ चावां मर्दयितुमशक्याविती‍यं वाञ्छा वृथा धार्य्यते, स्वपरतारतम्यं न ज्ञायते भवद्भ्यामिति,

या कुरङ्गमदकुङ्कुमाञ्चितौ
नीललोहितरुचौ वधूकुचौ।
स प्रियोरसि तयोः स्वयम्भुवो-
राचचार नखकिंशुकार्चनं॥ १०२॥

तत्कुचाभ्यां नखकरौ हारहास्येन विडम्बिताविवेत्यर्थः। सर्व्वतः स्पृष्टाविव न तु पीडिताविति भावः। अकर्म्मकठिनौ हस्तौ इति लक्षणात् काठिन्यमेव राजकरस्य गुणस्तथापि नलिनत्वनिरूपणात् कठिनत्वेऽपि कुचापेक्षया मार्द्दवान्मृदुनोत्युक्तं। पीडनाय स्पृष्टावतौ ते मृदुनौ विशेषेण ज्ञात्वा हासमिवहत चक्रतुरिति वा। अन्योऽपि निष्ठुरो मृदुमुपहसति॥ १०१॥

याविति। यौ वधूकुचौ कुरङ्गमदेन कस्तूर्य्या कुङ्कुमेन चाञ्चितौ पूजितौ कृतविलेपनौ अत एव क्रमेण नीला लोहिता च रुक् कान्तिर्ययोः, अथ च नीललोहितौ हरस्तत्कान्ती, एवम्भूतौ, स नलः तयोर्यौवनारम्भे प्रियोरसि मेमीवक्षसि स्वयमेव भवतोः प्रादुर्भवतोः रक्तवक्रतीक्ष्णाग्रत्वात्सखैरेव किंशुकैः पलाशपुष्पैरर्चनं पूजां आचचार। कृताङ्गरागयोः कुचयोर्नखपदानि रचितवानित्यर्थः। अन्यनखाक्षेपस्य व्ययागाहित्येन शोभामात्रहेतुत्वादर्चनमिवेत्युत्प्रेक्षा। कस्तूर्य्या अभ्यर्हितत्वात् पूर्व्वनिपातः॥ १०२॥

अम्बुधेः कियदनुत्थितं विधुं
स्वानुबिम्बमिलितं व्यडम्बयत् ।
चुम्बदम्बुजमुखीमुखं तदा
नैषधस्य वदनेन्दुमण्डलं ॥ १०३ ॥

पूगभागबहुताकषायितै-
र्वासितैरुदयभास्करेण तौ ।
चक्रतुर्निधुवनेऽधरामृतै-
स्तत्र साधु मधुपानविभ्रमं ॥ १०४ ॥

अम्बुधेरिति । सुरतावसरेऽम्बुजमुख्या भैम्या मुखं चुम्बत् मिलन्नैषधस्य वदनेन्दुमण्डलं कर्तृ प्रतिदिनमुदयसमये अम्बुधेः समुद्रात् कियत् स्तोकमनुत्थितं तथा समुद्रजले जातेन स्वानुबिम्बेनात्मीयप्रतिबिम्बेन मिलितं निरन्तरं सम्बद्धं विधुं चन्द्रं व्यडम्बयत् अनुचकार । भैमीमुखं कर्तृ नलमुखं कर्मीभूतं चुम्बदिति वा । अनेन विपरीतरतं सूचितं बिम्बप्रतिबिम्बभावनिरूपणनात्यन्तं तन्मुखयोः सादृश्यं सूचितं । कामसुहृच्चन्द्रोदयनिरूपणाच्च कामोज्जृम्भणं व्यज्यते ॥ १०३ ॥

पूगेति । पूगफलफालिकानां भागोऽंशस्तस्य बहुतया कषायितैस्तुवररसप्रापितैः, कषायः सुरभावित्यभिधानात् सुरभितैर्वा । तथा पक्वेनोदयभास्कराख्येन ताम्बूलमध्ये गृहीतेन कर्पूरेण वासितैः सुरभितैरन्योन्याधरामृतैरधररसैरेवासवैः कृत्वा तौ तत्र निधुवने सुरते मधुपानस्य विभ्रमं मद्यपानरूपं

आह नाथवदनस्य चुम्बनः
साम्म शीतकरतामनन्तरम् ।
सीत्कृतानि सुदती वितन्वती
सत्त्वदत्तपृथुवेपथुस्तदा ॥ १०५ ॥

विलासं साधु सम्यग्यथा तथा, अथ च मद्यपानजन्यविलासं चक्रतुः। मद्यपानस्थानेऽन्योन्याधरपानमेव चक्रतुस्तेनैव च नितरां सोन्मादौ जाताविति भावः। अन्यो ऽपि कषायरसं कर्पूरवासितं शीतलं मधु पिबति। साधु अनिषिद्धं सम्भवति वा। सुरते मधुपानविभ्रममधरामृतैः साधु यथा तथा चक्रतुः। उपदंशस्थानेऽधरामृतानि जातानीत्यर्थः। भाग इति पाठे अनुभवः। राग इति पाठे बहुताम्बूलचर्वणक्रमविवर्द्धमानरक्तिमवाङ्कन्येनेत्यर्थः। कषायितैः। तत्करोति (पा० ३।१।२६।१ वा०) इति ण्यन्तान्निष्ठा ॥ १०४ ॥

आहेति। तदा सुरतचुम्बनावसरे सीत्कृतानि वितन्वती कुर्वती सा सुदती, तथा कामावस्थाविकारशेषेण सत्त्वेन दत्तः पृथुवेपथुः कम्पो यस्यास्तादृशी सती, चुम्बतो नाथवदनस्यानन्तरं वर्णैर्विना तत्कार्य्यकारित्वेन शीतकरतां चन्द्रतामाह स्म। चन्द्रस्पर्शाद्यथा सुखं भवति तथा नलमुखस्पर्शात्तस्या अभूदिति भावः। शीतेऽपि सीत्कारः कम्पश्च भवति मुखादन्तरश्च न निर्गच्छति। शीतं कर्त्तुं शीलमस्य शीतकरः। कृञो हेतुताच्छील्य (पा० ३।२।२०) इति टः ॥ १०५ ॥

प्राप भर्त्तुरमृतैः सुधांशुना
मुक्तहाटकघटेन मित्रताम् ॥ १०६ ॥
वीक्ष्य वीक्ष्य पुनरैक्षि सामुना
पर्यरम्भि परिरभ्य चासकृत् ।

चुम्बनायेति । चुम्बनाय कलितः स्पृष्टः प्रियाकुचो येन तादृश-भीमसेनसुतस्य वक्त्रमण्डलं, सुधांशुना चन्द्रेण मित्रतां साम्यं प्राप । किम्भूतेन चन्द्रेण । स्वैरेवामृतैः आत्मानं भर्त्तुं पूरयितुं मुक्तः सङ्गतः हाटकघटः सुवर्णकलशो येन । मुखं चन्द्रसमं, अमृतभरणार्थं चन्द्रसम्बद्धसुवर्णघटसमो भैमीकुचः, मुखेन्दुना स्वीयममृतं कुचकलशे निक्षिप्तं न तु तत्रत्यं गृहीतं इति अनौचित्यं नाशङ्कनीयम् मुखचुम्बनादमृतांशुयोगादिव भैमीकुचः शान्ततापो जातः, सुखश्चाभूदिति भावः । मुखनेत्रस्तनबाहुमूलकपोलोष्ठहृदयवराङ्गानामेव चुम्बनस्थानानि रागतः सर्व्वाण्यपि चेति वात्स्यायनः । नयनगलकपोलदन्तवासोमुखान्तस्तनयुगललल-लाटं वा चुम्बनस्थानं । स्तने चूचुकं परिहृत्येति विशेषः । मित्रशब्दस्य तुल्यार्थत्वात् सुधांशुनेति तुल्यार्थैः (पा० २।३।७२) इति तृतीया ॥ १०६ ॥

वीक्ष्येति । अमुना सा वीक्ष्य वीक्ष्य पुनरैक्षि, तथाऽसकृत् वारंवारं परिरभ्य च पुनः पर्यरम्भि पुनरालिलिङ्गि, तथा आद-

चुम्बिता पुनरचुम्बि चादरा-
त्तृप्तिरापि न कथञ्चन नापि च ॥ १०७ ॥

छिन्नमप्यतनु हारमण्डलं
मुग्धया सुरतनृत्यकेलिभिः।
न व्यतर्कि सुदृशा चिरादपि
स्वेदबिन्दुकितवक्षसा हृदि ॥ १०८ ॥

यत्तदीयहृदि हारमौक्तिकै-
रासि तत्र गुण एव कारणं।

आदाराद्वारं चुम्बितापि पुनरचुम्बि च। तथापि कथञ्चनापि केनापि प्रकारेणानेन तृप्तिकारणसद्भावेऽपि तृप्तिर्नापि न प्राप्ता ॥ १०७ ॥

छिन्नमिति। सुदृशा निरीक्षणे नितरां चतुरयापि मुग्धया मदर्पया च बाल्यया भैम्या सुरतनृत्यकेलिभिः सुरतसम्बन्धिभिर्नृत्यविलासैः करधूननाद्यङ्गविक्षेपविलासविशेषैः कृत्वा क्वचिच्छिन्नं त्रुटितगुणमपि अतनु आनाभिविलम्बित्वादिशालं हारमण्डलं मुक्ताहारदाम चिरादपि भूयसापि कालेन न व्यतर्कि। यतः स्वेदबिन्दुकितं सञ्जातस्वेदबिन्दुवक्षो यस्यास्तया। सुरतया सञ्जातस्वेदबिन्दुमण्डलस्य हारमण्डलस्य हारसादृश्यात्सम्बन्धाच्च त्रुटितोऽपि हारो नाबोधीत्यर्थः। स्वार्थकप्रत्ययान्तात् स्वेदबिन्दुकशब्दात्तारकादित्वादितच् ॥ १०८ ॥

यदिति। हारमौक्तिकैस्तदीये हृदि वक्षस्यथ च चित्ते

अन्यथा कथममुत्र वर्त्तितुं
तैरशाकि न तदा गुणच्युतैः ॥ १०९ ॥
एकवृत्तिरपि मौक्तिकावलि-
श्छिन्नहारविततौ तदा तयोः ।
क्वाययान्यहृदयेऽपि भूषणं
श्रान्तिवारिभरभाविते भवत ॥ ११० ॥

यदाभि स्थितं लग्नं तत्र गुणा दोरकस्तारत्वादिरेवकारणं हेतुः। अन्यथा न चेदेवं तर्हि तदा सुरतसमये गुणच्युतैस्तत्र भ्रष्टैस्तै-र्मौक्तिकैरमुत्र तदीये हृदि वर्त्तितुं स्थातुं कथं कस्मान्नाशाकि समर्थैर्न जातं। अथ च तारत्वादिगुणहीनैर्मौक्तिकैस्तदीये हृदय न स्थीयते किन्तूत्तमैरेव। तस्मादुभयरूपेऽपि भैमीहृदये स्थातुं मौक्तिकानामन्वयव्यतिरेकाभ्यां द्विविधोऽपि गुणहेतुरित्यनु-मानं। सुरतसम्मर्दान्मुक्ताहारस्त्रुटित इति भङ्ग्यन्तरेणोक्तं। अन्यस्यापि विदग्धस्य हृदयगामित्वे गुण एव हेतुः, गुणहीनेन तु चित्ते स्थातुं न शक्यत इति भङ्ग्या सूचितं। गुणच्युतैः पञ्चमी (पा० २।१।३७) इति योगविभागात् समासः ॥ १०९ ॥

एकेति। तदा सम्भोगसमये तयोर्द्वयोर्मध्ये एकस्मिन्नल एव वृत्तिर्यस्या एवम्भूता मौक्तिकावलिरन्यस्या भैम्या हृदये क्वाय-याभूषणमभूत्। किम्भूतेऽन्यहृदये। छिन्नहारस्य विततिर्विस्तारो यस्याः। यतः श्रान्तिवारीणि स्वेदविन्दवस्तेषां भरः पूरस्तेन भाविते व्याप्ते। द्वयोः समीपे सम्मुखस्थितयोर्मध्ये भैम्या हारे

वामपादतललुप्तमन्मथ-
श्रीमदेन मुखवीक्षिणाऽनिशं ।
भुज्यमाननवयौवनामुना
पारसीमनि चचार सा मुदां ॥ १११ ॥

आन्तरानपि तदङ्गसङ्गम-
स्तर्पितानवयवानमन्यत ।
नेत्रयोरमृतसारपारणां
तद्विलोकनमचिन्तयन्नलः ॥ ११२ ॥

त्रुटितेऽपि स्वेदजलपूरिते हृदये प्रतिबिम्बितो नलस्य हार एवाभरणं बभूवेत्यर्थः । अन्यहृदये प्रतिबिम्बितो नलस्य हार एवाभरणं बभूवेत्यर्थः । अन्यहृदय इति सर्व्वनामत्वात् पुंवद्भावः ॥ ११० ॥

वामेति । वामपादतलेन लुप्तः मन्मथश्रीमदः कामसौन्दर्य्यगर्व्वो येनातिसुन्दरेणापि अनिशं भैमीमुखवीक्षणात् केवलं भैम्यधीनेन अमुना नलेन भुज्यमानं नवं यौवनं यस्याः सा भैमी मुदां सन्तोषाणां पारसीमनि परतीरमर्य्यादायां परमोत्कर्षे चचारावर्त्तत । भावावमानसमयं प्रापेत्यर्थः । वामपादतलमुखवीक्षीतिपदद्वयं लौकिकोक्तिः । एवम्भूतेन च भुज्यमानत्वान्मुदां परमोत्कर्षं प्रापेति युक्तं । मुखवीक्षणं दिने रात्रावपि वरदानप्रकाशितदीपवशात् ज्ञेयं ॥ १११ ॥

आन्तरानिति । नलः स्वीयानान्तराञ्छरीरमध्यवर्त्तिनो

भूषणैरतुपदाश्रितैः प्रियां
प्रागथ व्यपददेष भावयन् ।
तैरभावि कियदङ्गदर्शने
यत्पिधानमयविघ्नकारिभिः ॥ ११३ ॥

ऽस्पृश्यमानानपि अवयवान् तदङ्गसङ्गैः सुकुमारतरभैम्यवय-
वस्पर्शैरतिवेधकतया तर्पितान् सुखितानमन्यत । तथा तद्वि-
लोकनञ्च स्वीयनेत्रयोः अमृतस्य सारेण श्रेष्ठभागे पारणां
तद्रूपं तृप्तीकरणं अचिन्तयद्बुबुधे । पुनः पुनः भैम्या आलि-
ङ्गनदर्शनाद्यैरन्तर्बहिश्च प्रीणितोऽभूदित्यर्थः । अन्तः दात्
अन्तःशब्दाद्वा भावार्थेऽण् । तर्पितान् । ण्यन्तात् कर्मणि क्तः
॥ ११२ ॥

भूषणैरिति । एष नलः प्रियामाश्रितैः स्वशरीरं मण्डद्भिः
ताटङ्कादिभिर्भूषणैःप्रागनुपदथ तैरस्याः कियतोऽल्पस्य
ल्पस्याङ्गस्य दर्शने पिधानमयानां आच्छादनरूपाणां ...नां
दर्शनान्तरायाणां कारिभिस्तद्धेतुभूतैस्तैरभावि जातं । अनल-
ङ्कृतं वै तर्हि सर्वं दृश्यगोचरो भविष्यत् इति भावयन्नेवं
तस्माद्व्यपददित्यर्थः । भैमीसौन्दर्यं तस्यां नलानुरागातिशयश्च
सूचितः । रतिसमये भूषणमोचनस्यैव युक्तत्वाद्भूषणसद्भाववर्णनं
यद्यप्यनुचितं तथापि यावद्भूषणानि मोचयति तावदपि विल-
म्बासहिष्णुतया हटसुरतसूचनाद्भूषणवर्णनेऽनुचितो न दोषायेति
तदापात्यन्तापरिहार्यभूषणाभिप्रायेण वेति ज्ञेयं । भूषणानि

योजनानि परिरम्भणेऽन्तरं
रोमहर्षजमपि स्म बोधतः।
तौ निमेषमपि वीक्षणे मिथो
वत्सरव्यवधिमभ्यगच्छताम्॥ ११४॥
वीक्ष्य भावमधिगन्तुमुत्सुकां
पूर्व्वमङ्कमणिकुट्टिमे मृदुं।

स विदर्भसुभुव इति वा पाठः सुगमः। अतुषत्। पुषादित्वा-दङ्॥ ११३॥

योजनानीति। तौ रोमहर्षात् सात्त्विकोत्थरोमाञ्चाज्जा-तमत्यल्पमप्यन्तरं परिरम्भणे आलिङ्गने विषये बहूनि योज-नानि बोधतः स्म। अजानतां। तथा मिथो वीक्षणे प्रारब्धा-न्योन्यविलोकनेऽत्यल्पं निमेषमक्षिपक्ष्मसङ्कोचसमयमपि वत्सरेण वर्षेण व्यवधिं व्यवधानं बहुवर्षदर्शनविच्छेदकालं अभ्यगच्छताम् अज्ञासिष्टां। अल्पीयसापि देशकालव्यवधानेन प्रेमभरादन्या-न्यविच्छेदस्ताभ्याममानीत्यर्थः। बोधतः। बुध अवगमने भौवा-दिकः स्मयोगे लट्॥ ११४॥

वीक्ष्येति। एषः नलो मृदुं बालत्वात् सुरतभरासहां लघु-द्रवां पद्मिनीमत एव स्वस्मात् पूर्व्वमेव विन्दुपतनरूपं भाव-मधिगन्तुं प्राप्तुं नेत्रनिमीलनगाढालिङ्गनादिचिह्नेनोत्सुकां मत्वरां वीक्ष्य ज्ञात्वा तद्विन्दुस्तम्भनार्थं कोऽयमत्रापूर्व्वः पुरुष इति प्रश्नेन पूर्व्वमसञ्जातभयामपि नलरूपधारिणा अन्येनाहं

कोऽयमित्युदितसम्भ्रमीकृतां
स्वानुबिम्बमददर्शदेष तां ॥ ११५ ॥
तत्क्षणावच्छिन्नभावभावित
द्रावदर्शात्मितदीधितिस्थितिः ।
स्वां प्रियानभिमतक्षणोदयां
भावनाभिनयतां नुनोद सः ॥ ११६ ॥

भुक्तेति बुद्ध्या सुरतसमयसमागतजनान्तरदर्शनाद्वा उदितसम्भ्रमीकृतां समुत्पादितभयां विमनस्कतया प्रतिबद्धभावोदयां अनन्तरं कः कुत्र तिष्ठतीति कृतप्रश्नान्तां भैमीं अकर्माणिकुट्टिमे निर्मले मणिबद्धभित्तिभागे स्वानुबिम्बप्रतिबिम्बमददर्शत् दर्शयामास। नायमपूर्व्वः कश्चित् किन्तु मदीयमेतदं प्रतिबिम्बं तत्र समान्त इति भ्रान्तिर्जातेति स्वप्रतिबिम्बं तामदर्शयदित्यर्थः। अन्यातरस्य पूर्व्वं बिन्दुपतने विषमरतत्वादैरस्यं स्यादिति बिन्दुस्तम्भार्थं अन्यचित्ततया सम्भ्रमजननेन च भाववत्सं कुर्यादिति कामशास्त्रात्तस्या बिन्दुपातप्रतिबन्धमकरोदिति भावः। अददर्शत। णिचश्च (पा० १।३।७४) इति तङ्। ऋदृशोऽङि गुणः। (पा० ७।४।१६) तां बुद्ध्यर्थत्वात् कर्मत्वं॥ ११५ ॥

एवं भैम्या भावलाभवेगभङ्गोपायमुक्त्वा नलस्य भावलाभवेगभङ्गमाह। तत्क्षणेति। स प्रियाया अनभिमते समये भैमी-भावलाभौत्सुक्यात् पूर्व्वमेवोदय उत्पत्तिसमयो यस्यास्तां, भावलाभे स्वां निजां बिन्दुच्युतौ लघुतां शीघ्रतां नुनोद अन्यचित्तो-

स्वेन भावजनने स तु प्रिया
बाहुमूलकुचनाभिचुम्बनैः।

करणेन व्यलम्बयदित्यर्थः। तदेवाह। किम्भूतः। तस्मिन्नेव क्षणे निजभावोत्सुक्यसमयेऽविहितभावेन एतस्या इव ममापि भावलाभश्चेत् स्यात्तर्हि विषमरतत्वादेरस्यमेव स्यादतस्तुल्यकालमेवाभयोर्भावलाभं करवाणीति सावधानतयाक्रप्रकारेणेव सावधानं वा भावे चित्ते भाविता ध्यानवामनाभिश्चिन्तिता द्वादशात्मनः सूर्यस्य सितदीधितेश्चन्द्रस्य च स्थितिर्मर्यादा गगनगमनादिप्रकारा येन सः। तद्व्याजेन निजवीजस्तम्भनार्थं स्वस्यैव सम्पादितवैचित्र्यः सन्निति यावत्। अथ च सावधानतया कृता सूर्यचन्द्रापरपर्यायेडापिंगलाख्यदक्षिणवामनाड्योस्ययोर्मरुता: स्थितिः स्थैर्यं येन कुम्भितपवन इत्यर्थः। अन्यचित्ततासम्पादनेनासावायुस्तम्भनेन चोपायेनैकसमयोभयभावप्राप्तिपर्यन्तं स्वीयं भावं स्थिरीचकारेति भावः। एतेन भङ्ग्या नलस्य योगाभ्यासोऽपि सूचितः। अन्येन तथा कर्त्तुमशक्यत्वात्। दक्षिणनासामुद्रेण पुरुषस्य, वामनासिकामुद्रेण योषिता विन्दुस्तम्भो भवतीति, कामशास्त्रात्। स्वीयं तदीयं च भावं स्थिरीचकारेति वा विस्तरणाल्लं॥ ११६॥

इदानीं समरतमाह। स्वेनेति। स तु नलः पुनः स्वेन स्वयमेव भावजनने उभयोर्भावप्राप्तिसमये स्वेन सह वा स्वेनात्मनैव कर्त्रा यद्भावजननं तस्मिन् सति वा स्वस्य भावजनन-

निर्म्ममे रतरहःसमापना-
शर्म्मसारसममंविभागिनीं ॥ ११७ ॥
विश्लथैरवयवैर्निमीलया
लोमभिद्रुतमितैर्विनिद्रता ।
सूचितं श्वसितसीत्कृतैश्च तौ
भावमक्रमकमध्यगच्छतां ॥ ११८ ॥

समय इति यावत्, तत्र बाहुमूलं कक्षौ कुचौ नाभिश्च एतेषां चुम्बनैः कृत्वा रतस्य रहसि समापनात्तज्जनितं परमकाष्ठापन्नं शर्म सुखं समापनारूपो वा शर्म सारस्तस्य समस्तुल्यो यः संविभागोऽंशस्तद्वतीं समरतप्रापणेन सुखिनीं निर्म्ममे चकार। स्वनेत्यस्य प्रथमद्वितीयव्याख्ययोः कक्षादिचुम्बनजातिः। तृतीयायान्तु कक्षादेर्निरन्तरं कामाधिष्ठानत्वात्तच्चुम्बनैरुपायैः स्वस्य भावप्राप्तिसमये तामपि भावमलम्भयदिति भावः। भावभजनेनत्विति पाठे स्वीयेन भावभजनेन निमित्तेन बाह्वादिचुम्बनैरिति व्याख्या॥ ११७॥

पुनरपि भङ्ग्यन्तरेण तदेवाह। विश्लथैरिति। तौ भावलाभश्रमवशात् स्वोद्वहनेऽपि विश्लथैः शिथिलीभूतैरवयवैरङ्गैस्तथा निद्राभावेऽपि निमीलया श्रमजनितनयनसङ्कोचतया तथा तस्मिन् क्षणे द्रुतं शीघ्रं विनिद्रतामुल्लासं इतैर्गतैर्लोमभीरोमाञ्चैस्तथा श्वसितैः श्रमसुखनासिकाश्वासैः सीत्कृतैश्च तैः सर्व्वैः सूचितं अक्रमकं युगपत् सञ्जातबिन्दुच्युतिजन्यसुखरूपं भावम-

आस्त भावमधिगच्छतोस्तयोः
सम्मदेषु करजक्षतार्पणा ।
फाणितेषु मरिचावचूर्णना
सा स्फुटं कटुरपि स्पृहावहा ॥ ११९ ॥

धिगच्छतां समरतं प्रापावित्यर्थः । भोगिनोः सम्भोगान्ते यथा वयवत्यादिजातिः ॥ ११८ ॥

आस्तेति । एवं भावमधिगच्छतोः सुरतान्तसुखमनुभवतो-स्तयोः करजक्षतानां नखक्षतानामर्पणा दानं सम्मदेषु परमा-नन्देषु मध्ये आस्ताभूत् आनन्ददायिकैवाभूदित्यर्थः । नखक्ष-तस्य सुखदायित्वं कथमित्यत आह । स्फुटं यस्मात् फाणितेषु दुग्धविकाररूपेषु खण्डविकारेषु वा पानकेषु मध्ये सा सूपशास्त्र-प्रसिद्धा मरिचावचूर्णना कटुरसापि स्पृहावहा मधुररसजन्या-रुचिः परिहारेण हृद्याभिलाषावर्धनी । तथा कटुः पीडाज-निकापि नखक्षतार्पणा सुखकारिण्येवाभूदित्यर्थः । सम्मदेषु ना-नाप्रकारेषु सुरतेषु भावं प्राप्नुवतोस्तयोः[illegible] सम्मदे काम-शास्त्रप्रसिद्धा कटुः पीडाजनिकापि नखक्षतार्पणा स्पृहावहाभूत् स्फुटशब्द इवार्थः । केषु केव । फाणितेषु कटुरसा मरिचावचूर्ण-नेव सुरतान्ते कृतापि पुनः सुरतेच्छासंवाददादिपदर्दिति भाव इति वा । भावमधिगच्छतोस्तयोः कटुरपि सुरतेषु स्पृहावहा या नखक्षतार्पणा सा स्फुटं निश्चितेषु फाणितेषु मरिचावचूर्ण-नाभूत्तद्रूपेवाविर्भूदित्यर्थ इति वा । मत्स्यण्डी फाणितं खण्ड-

अर्द्धमीलितविलोलतारके
सा दृशौ निधुवनक्लमालसा।
यन्मुहूर्त्तमवहन्न तत् पुन-
स्तृप्तिरास्त दयितस्य पश्यतः ॥ १२० ॥

तत्क्लमस्तमदिदीक्षत क्षणं
तालवृन्तचलनाय नायकं।
तद्विधा हि भवदैवतं प्रिया
वेधसोऽपि विदधाति चापलम् ॥ १२

विकारः शर्करा सितेत्यमरः। चूर्णना सत्यापपाश ०३।१।
२५) इति णिजन्ताद्युच् ॥ ११९ ॥

अर्द्धेति। निधुवनक्लमेन सुरतश्रमेणालसा सुर मनिः-
सहेत्यर्थः। सा दृशौ मुहूर्त्तं क्षणमात्रं अर्द्धं मीलिते त् सङ्कु-
चिते विलोले तारके ययोस्तादृशे यदवहद्धार त् तादृक्
भैमीनेत्रावस्थानं पश्यतो दयितस्य पुनस्तृप्तिर्नास्त नाभूत् पुनः
पश्यत इति वा। पुनःपुन्यदर्शनाभिलाषस्यानि त्तत्वात् पश्य-
न्नेवास्थित इत्यर्थः। तादृशी सा तस्य सुरतसुखायाभूदिति
भावः ॥ १२० ॥

तदिति ॥ तदानीन्तनस्तस्याः क्लमः सुरतजः श्रमः नायकं
मन्यस्वामिनं यजमानमपि तं क्षणमात्रं तालवृन्तचलनाय अदि-
दीक्षतोपदिदेश। सुरतश्रान्तां तां दृष्ट्वा व्यजनवीजनेन श्रमा-
पनयनं चकारेत्यर्थः। हि यतो भवस्य संसारस्य कामसुखमर्व्व-

स्वेदबिन्दुकितनासिकाशिखं
तन्मुखं सुखयति स्म नैषध ।
प्रोषिताधरशयालुयावकं
मांसिलुप्तपुलकं कपोलयोः ॥ १२२ ॥

क्षीणमेव पृथु सत्वरं कियत्
क्लान्तमेव बहु निर्वृतं मनाक् ।

स्वस्य दैवतमिष्टदेवता तद्विधा भैमीसदृशी अतिसुन्दरी सौभाग्यवती प्रिया वेधसोऽपि ब्रह्मणोऽपि स्वविषये चापलमनुरागतरलतां विदधाति करोति किं पुनर्मनुष्यस्येत्यर्थः । पुनरपि सानुरागो जात इति भावः । व्यजनं तालवृन्तकमित्यमरः । अदिदीक्षत । नियमार्थात् दीक्षतेर्हेतुमण्णिच् चङ् ॥ १२१ ॥

स्वेदेति । तस्या मुखं नैषधं सुखयति स्म । किम्भूतं । स्वेदबिन्दुकाः सञ्जाता यस्यास्तादृशी नासिकाशिखा नासाग्रं यस्य, तथा प्रोषितो गतः अधरशयालुरोष्ठस्थितो यावकोऽलक्तको यस्य, तथा परिचुम्बनवशात् कपोलयोः मांसि अर्द्धं लुप्ताः पुलका रोमाञ्चा यस्य, एवम्भूतं मुखं दृष्ट्वा स सुखी जातः सञ्जातकामश्च जात इत्यर्थः । अत्र पूर्वोत्तरार्द्धे व्यत्यस्ते पठनीये । अन्यथा प्राप्तपुनरुक्तदोषापातः । सुखयति । सुखवत्करोति, तत् करोति (पा० ३।१।२६ वा० १) इति णिचाविष्ठवद्भावात् मतुब्लोपः ॥ १२२ ॥

क्षीणमिति । तदतिसुन्दरं तदीयमाननं तदा सुरतान्त-

कान्तचेतसि तदीयमाननं
तत्तदालभत लक्षमादरात्॥ १२३॥
स्वेदवारिपरिपूरितं प्रिया-
रोमकूपनिवहं यथा यथा।
नैषधस्य दृगपात् तथा तथा
चित्रमापदपतृष्णतां न सा॥ १२४॥

समये कान्तचेतसि विषये आदरातिशयात्तत् लक्षसङ्ख्यं द्रव्यं अलभत। मूल्यरहितेऽत्युत्कृष्टे वस्तुनि एतत्तत् लभ्यते इति लोकोक्त्या परमोत्कर्षस्याभिव्यञ्जनात् परममुत्कर्षं प्रापेत्यर्थः। किम्भूतं। सुरतसुखानुभववेगसञ्जातस्वीयस्मरचापलस्मरणाद्दा पृथु बहुतरं ह्रीणं लज्जितमेव। तथा पुनः सुरताभिलाषधारणात् कियदीषत् सस्मरं उद्दीप्तकामं। तथा सौकुमार्यातिशयायासबाहुल्याद्दङ्ग सुतरां क्लान्तं म्लानमेव। तथा प्रलयाख्यया कामावस्थया साधनभेदावगमराहित्यादेकीभावात् परब्रह्मानन्दानुभवादिव महासुखानुभवविषयसुखानुभव विषयसुखापलापात् मनाक् निर्वृतं अल्पं सुखितं विस्मृतानुभूतसुखमिति यावत्। रतान्तसमये योषिन्मुखमत्यादरकारि भवतीति कामशास्त्रं। तदा तादृक् तदाननं दृष्ट्वा पुनः समदनोऽभूदिति भावः। अथ च लक्षं विषयतामलभतेत्यर्थः॥ १२३॥

स्वेदेति। नैषधस्य दृक् स्वेदवारिणा सुरतश्रमजलेन परिपूर्णं प्रियारोमकूपनिवहं यथा यथा यावत् अपात् सादरमव-

वान्तमाल्यकचहस्तसंयम-
व्यस्तहस्तयुगया स्फुटीकृतं ।
बाहुमूलमनया तदुज्ज्वलं
वीक्ष्य सौख्यजलधौ ममज्ज सः ॥ १२५ ॥

वीक्ष्य पत्युरधरं कृशोदरी
बन्धुजीवमिव भृङ्गसङ्गतं ।

लोकयेत् सा नलदृक् तथा तथा तावत् तावत् अपहृष्यतां तृप्तिं नापदिति चित्रं पुनः पुनरवलोकने हि तृप्तिर्भवत्यत्र तु न जातेत्याश्चर्य्यमित्यर्थः । अथ च पिपासारञ्जलिजलेनापि पिपासा शाम्यत्यस्यास्त्वाकण्ठवारिपूरितकूपमङ्गस्य पुनःपुनः पानेऽपि पिपासा न शाम्यतीति चित्रमित्यर्थः । एवम्भूतसंसोगामकूपदर्शनमात्रेण पुनः सकामोऽभूदिति भावः ॥ १२४ ॥

वान्तेति । स सुरतसंमर्दाद्वान्तमाल्याश्च्युतकुसुमाः कचहस्तास्तेषां संयमाय ग्रन्थिबन्धनाय व्यस्तमूर्ध्वव्यापारितं हस्तयुगं यया ऽनया भैम्या स्फुटीकृतं तदतिरमणीयं कामवसतिस्थानमुज्ज्वलमतिगौरं बाहुमूलं वीक्ष्य सौख्यजलधौ ममज्ज निरवधिसुखमन्वभूदित्यर्थः । वीतेति च पाठः । कचहस्त इति हस्तशब्दः प्रशंसावाची । सुखमेव सौख्यं चातुर्वर्ण्यादित्वात्ष्यञ् ॥ १२५ ॥

वीक्ष्येति । सा कृशोदरी नेत्रचुम्बनवशात् संलग्नैर्निजैर्नयनकज्जलैर्भिन्नवर्णतया मञ्जुलं शोभमानं पत्युरधरं भृङ्गेण भ्रमरेण सङ्गतं मिलितं पीयमानमकरन्दं बन्धुजीवपुष्पमिव

मञ्जुलं नयनकज्जलं निजैः
संवरीतुमशकन्न स्मितं न सा ॥ १२६ ॥
तां विलोक्य विमुखस्थितस्मितां
पृच्छतो हसितहेतुमीशितुः ।
ह्रीमती व्यतरदुत्तरं वधूः
पाणिपङ्करुहदर्प्पणार्प्पणा ॥ १२७ ॥

वीक्ष्य समुत्पद्यमानं स्मितं ईषद्धास्यं संवरीतुं गोपायितुं उत्पद्यमानमेव निरोद्धुं नाशकत् समर्था नाभूत्। उत्तमसत्त्वात् सलज्जत्वात् प्राणेशस्य सविधे स्मितं कर्त्तुमयुक्तं यद्यपि तथापि स्वीयसखीगणभाषितश्रवणवशादुत्पन्नस्य स्मितस्य संवरीतुमशक्यत्वात् सपत्नीदर्शने च सलज्जत्वेऽपि प्रागल्भ्यागमनशङ्कया सिस्मिय इति भावः ॥ १२६ ॥

तामिति। वधूर्भैमी विमुखं तिर्य्यङ्मुखं यथा तथा पराङ्मुखीभूय स्थितस्मितां कृतपद्धास्यां, विमुखी चासौ स्थितस्मिता च तादृशी वा तां विलोक्य हसितहेतुं पृच्छत ईशितुर्नलस्य पाणिरेव पङ्करुट् कमलं तस्मिन् करकमले दर्पणस्यार्पणमेवोत्तरं व्यतरद्ददौ, स्मितहेतुमाचष्ट, यतो ह्रीमती। स्वनेत्रचुम्बनवशात्त्वोष्ठे नेत्रकज्जलं लग्नमिति लज्जावशात् साक्षादुत्तरं दातुमशक्ता कज्जलाङ्कितं स्वाधरं पश्यति भावेन दर्पणमेवोत्तरं ददावित्यर्थः ॥ १२७ ॥

लाक्षयाऽऽत्मचरणस्य चुम्बना-
च्चारु भालमवलोक्य तन्मुखं ।
सा ह्रिया नतनतानना ऽस्मर-
च्छेषरागमुदितं पतिं निशः ॥ १२८ ॥
स्वेदभाजि हृदयेऽनुबिम्बितं
वीक्ष्य मूर्त्तमिव हृद्गतं प्रियं ।
निर्ममे पुनरतिश्रमं निजै-
र्व्रीडिताऽति मृदु नासिकाऽनिलैः ॥ १२९ ॥

लाक्षयेति । कुपितभैमीप्रसादार्थं चरणे पतनात् भैम्याः पद्मिनीत्वात् पङ्कजासनबन्धेन सुरतारम्भवशाद्वा आत्मचरणस्य लाक्षया चुम्बनात् सम्बन्धाद्धेतोः चारु भालं ललाटं यस्य एवम्भूतं तस्य नलस्य मुखमवलोक्य निजसुरतधार्ष्ट्यस्मरणाज्जातया लज्जया हेतुना नत नतं नत प्रकारमाननं यस्याः सा एवम्भूता सती उदितं प्राप्तोदयं उदयानन्तरं वा उदयमनन्तरं च कालक्रमाय वीयमानः शेषः कियदवशिष्टः रागो लौहित्यं यस्य तं निशो रात्र्याः पतिं चन्द्रं अस्मरत् । तन्मुखं तादृगभूदित्यर्थः । ईषदवशिष्टरक्तिमचन्द्रदर्शने यथा प्रीतिर्भवति तथा तादृक् मुखदर्शनेऽपि तस्याः प्रीतिर्जातेति भावः । नत नतेति प्रकारे द्विरुक्तिः । पतिं कर्मत्वविवक्षया षष्ठ्यभावः ॥ १२८ ॥

स्वेदेति ॥ ललाटलाक्षादर्शनसञ्जातनिजसुरतधार्ष्ट्यस्मरणवशात् ह्रिया नता सा स्वेदभाजि श्रमजलयुते स्वहृदये अनुवि-

स्मरनायक निदेश विभ्रमै-
रप्रतीत चर वेदनोदयं।
दन्तदंशमधरेऽधिगामुका
सा स्पृशन्मृदु चमच्चकार च॥ १३०॥

म्बितं प्रियं नलं मूर्त्तं साकारं स्फुतं चित्तस्थमिव वीक्ष्य निर्ज-
रतिस्फुद्भिः विश्रान्तिकममन्दीभूतैर्नासिकानिलैः कला धृता
ऽपनीतः रतश्रमो यस्तैतादृशं निर्ममे चकार [illegible]-
स्वामाश्यामानां हृदयप्रतिविम्बित प्रियमस्वन्धात [illegible]
युक्तं। निर्मम इवोत्प्रेक्षा वा। तादृशीं तां दृष्ट्वा स रतश्रमः
सहर्षः सञ्जातः, सापि तं तादृशं दृष्ट्वा हर्षवशा[illegible]त्रा-
माश्वामानुमोचेति भावः॥ १२९॥

स्मरेति॥ स्मरनायकस्य कामस्य निदेश आज्ञा। तस्य
विभ्रमैर्विलासैर्हेतुभिः अप्रतीतचरः पूर्वमसम्भोग[illegible]ाम-
ज्ञातः वेदनोद्भवो यो दुःखोदयः यस्मात् तं दन्तदंशं अध-
रेऽधिगामुका अधुना पीडाकारिणं ज्ञातवती। सामृदु अनि-
ष्ठुराङ्गुलीस्पर्शं यथा तथा दन्तदष्टाधरमेवास्पृशत्। अनन्तरं
च स्पर्शज पीडानुभवात् चमच्चकार समीत्कारमङ्गकम्पमपि
चकार। आकस्मिकतयैव किमेतत्कदा जातमिति साश्चर्या-
चाभूत्। दन्त दंशं नलोकेति (पा॰२।३।६९) षष्ठी निषधः
॥ १३०॥

वीक्ष्य वीक्ष्य करजस्य विभ्रमं
प्रथमार्जितमुरोजयोरियं ।
कान्तमैक्षत हसस्पृशं कियत
कोपसङ्कुचितलोचनाञ्चला ॥ १३१ ॥
रोषभूषितमुखीमिव प्रियां
वीक्ष्य भीतिदरकम्पिताक्षरं ।
तां जगाद स न वेद्मि तन्वि तं
ब्रूहि शाम्यति नव कोपरोपिणम ॥ १३२ ॥

वीक्ष्येति ॥ इयं प्रथमा नलेन उरोजयोरुपरि बुद्धिपूर्व्वमर्जितं कृतं करजस्य नखस्य विभ्रमं कोपसम्भ्रमवशादीक्ष्य वारं वारं विलोक्यानन्तरमेव कियत् किञ्चित् कोपेन कुञ्चितौ उन्मील्य मुकुलितौ पर्यायेण गुणाधिक्यवशात् विलोचनाञ्चलौ नेत्रपक्ष्मौ यया एवम्भूता सती स्वयं कृतत्वात् सम्भोगसमये तया ज्ञातत्वाच्च हसस्पृशं स्मितस्मितं कान्तमैक्षत कोपेन वक्रमपश्यदित्यर्थः । कोपस्याल्पत्वेन धीरत्वं भैम्या व्यज्यते वीक्ष्य वीक्ष्य सम्भ्रमे द्विरुक्तिः । हसस्पृशं स्पृशोऽनुदक (पा० ३।२।५८) इति क्विन् ॥ १३१ ॥

रोषेति ॥ सरोषवद्भूषितं कोपयुक्तं मुखं यस्यास्तामिव दन्तदशनादेः सुखकारित्वेन तत्त्वतः कोपरहितत्वेऽपि कृत्रिमकोपेन भ्रुकुटितमुखीं प्रियां वीक्ष्य भीत्या दरमीषत् कम्पितानि सगद्गदान्यक्षराणि यस्यां क्रियायां तद्यथा तथा तां इति

कोपकुङ्कुमविलेपनात्मना-
ऽन्ववाचि कृशतन्ववाचि ते ।
भूदयुक्तसमयैव रञ्जना
मानने विधुविधेयमानने ॥ १३३ ॥

जगाद । इति किं । हे तन्वि अहं तं न वेद्मि कस्तव कोपरोपरोपणं चकार ब्रूहि. शास्मि तव कोपरोपणमिति च पाठः । कोपस्य रोपणमध्यारोपकं न वेद्मीत्यात्मनः कोपरोपित्वं गोपयति ॥ १३२ ॥

कोपमिति ॥ पुनरपि इति किं । ननु कृशतनु अवाचि कोपवशात् अवाच्यभाषणे तथा अवाचि नम्रीभूते तथा विधुनापि विधेया गुणाधिक्यवशाद्विधेया कार्या मानना पूजा यस्यैवम्भूते चन्द्राधिके तवानने रोषरूपेण कुङ्कुमेन विलेपनाद्धेतोर्मनागल्पीयसीयं रञ्जना रक्तिमसम्पादना मा भूत् न कार्या । यस्मादयुक्तसमयैवाप्रस्तावसमुद्भूतैव किमपि मया नापराद्धुमिति निर्हेतुकेयमनुचिता कोपरञ्जना त्यज्यतामित्यर्थः । अथ वाऽयं सम्भोगसमयो रात्रिरियं न तु कोपरञ्जनसमयः, तस्मादन्यदा कोपः कार्योऽधुना तु त्यज्यतामित्यर्थः । अथ च चन्द्रतुल्ये मुखे रञ्जना अयुक्तसमया माऽभूत् किन्तु युक्तसमयैव कार्येत्ययुक्तसमयत्वमेव निषिध्यते । अथ च चन्द्राधिकं तव मुखं इदानीं रोषरूषितं सन्न्यूनं भवतीति अयुक्तसमया रञ्जना न कार्या कोपस्त्यज्यतामित्यर्थः । अथ च कोपकुङ्कुमविलेपनरञ्जना अयु-

क्षिप्रमस्यतु रुजा नखादिजाः
तावकीरमृतशीकरं किरन् ।
एतदर्थमिदमर्थितं मया
कण्ठचुम्बि मणिदाम कामदम् ॥ १३४ ॥
स्वापराधमलुपत् पयोधरे
मत्करः सुरधनुःकरस्तव ।

ऋममया यतस्तस्मान्नैव कार्या । शीतकालेऽस्मुष्णवीर्यतया वदनप्रसाधनं कुङ्कुमविलेपनं युक्तं, इदानीं वसन्तेन ऊष्मत्वेनोष्णा श्रीखण्डपाण्डिमैवाननप्रसाधनायालं न कुङ्कुमरञ्जनेत्यर्थः ॥ १३३ ॥

क्षिप्रमिति ॥ हे भैमि कण्ठचुम्बि मम कण्ठे स्थितं मया कामदमिच्छादायि अतएवैतदर्थं त्वदीयकरजरदनक्षतजपीडापाकरणार्थं भैमीकरजादिक्षतपीडापनोदनं कुर्विति मयाऽर्थितं प्रार्थितं यदिदं चिन्तामणिरत्नदाम माला अमृतशीकरं सुधाबिन्दुं किरत् स्रवत्सत्तावकीस्त्वदीया नखादिजा नखक्षतादिजा रुजाः पीडाः क्षिप्रं अस्यतु शमयत्वित्यर्थः । तस्मात् कोपं मा कार्षीरिति भावः । अर्पितमिति पाठे पीडाशान्त्यर्थं मया त्वदीयकण्ठे क्षिप्तं मत्त्वदीयकण्ठचुम्बीति व्याख्येयं । रुजा भिदादित्वात् (पा० ३।३।१०४) अङ् प्रत्ययः ॥ १३४ ॥

स्वापराधमिति ॥ हे भैमि मत्करस्तव पयोधरे स्तने सुरधनुःकर इन्द्रचापास्यनखक्षतविशेषकारी मन्नखक्षतपीडाकरणजं

सेवया व्यजनचालनाभुवा
भूय एव चरणौ करोतु वा ॥ १३५ ॥
आननस्य मम चेदनौचिती
निर्दयं दशनदंशदायिनः ।
शोध्यते सुदति वैरमस्य तत्
किं त्वया वद विदश्य नाधरम् ॥ १३६ ॥

स्वापराधं व्यजनस्य चालना तस्याः सकाशाद्भवतीति भूस्तया व्यजनवीजनसमुद्भूतया सेवया अलुपत् । वा अथवा एतावत्यापि सेवया यदि न मंस्यसि तर्हि भूय एव पुनरपि अयं करस्तव चरणौ करोतु संवाहयतु । चरणसंवाहनं स्वापराधमार्जनं भवति । तस्मात्तदयं करोत्वित्यर्थः । अथ च चरणौ सम्भोगार्थं ऊर्ध्वीकरोत्वित्यर्थोऽवसेयः । अथ च नानावर्णरत्नमुद्रिकायुक्तत्वात्त्वत्कुचे सुरधनुःकरः, तथा चापराधो नास्त्येव । अथ च मेघे सुरधनुर्युक्तमेवेति पयोधरे तत्कारिणां न कोऽप्यपराधः, यद्यपि भवेत् तथापि व्यजनवीजनसेवयावलोपितश्चरणसंवाहनमपि करोत्वित्यर्थः । भूय एष इति पाठे एष सत्करः । अलुपत् लृदित्वादङ् । धनुःकरः दिवाविभेति (पा० ३।२।२१) टः । इसुसोःसामर्थ्ये इति (पा० ८।३।४४) पक्षे विसर्जनीयस्य सः । करोतीति करः पचाद्यच् । सुरधनुषः कर इति षष्ठी समासः । चालना ण्यन्ताद्युच् । मित्वस्य पाक्षिकत्वाद्वृद्धिः ॥ १३५ ॥

आननस्येति । हे सुदति ममाननस्य चेद्यदि अनौचितो यतो

दीपलोपमफलं व्यधत्त य-
स्त्वत्पटाहृतिषु मच्छिखामणिः ।
नो तदागसि परं समर्थना
सोऽयमस्तु पदपातुकस्तव ॥ १३७ ॥
इत्थमुक्तिमुपहृत्य कोमलां
तल्पचुम्बिचिकुरश्चकार सः ।

निर्दयं यथातथा दशनदंशदायिनो दन्तक्षतदानशीलस्य तस्मात्तस्य यद्यपराधिता तर्हि अपराधकारिणोऽस्य मन्मुखस्याधरं विदश्य अतितरां खण्डयित्वा त्वया किमिति तद्दन्तदंशनरूपं वैरं न शोध्यते त्वं वद कथय, अपि तु अपराधिनोऽस्यावयवमोष्ठं दन्तैः खण्डयित्वा वैरनिर्यातनं कुरु । तथा च समः समाधिरित्यर्थः ॥ १३६ ॥

दीपेति । हे भैमि यो मच्छिखामणिस्त्वत्पटाहृतिषु त्वदीयवसनकर्षणेषु सतीषु लज्जावशान्मुखवाय्वादिना त्वया कृतं दीपलोपं स्वकिरणैरेव तिमिरनिराकरणादफलं व्यर्थं व्यधत्त । तस्य मणेरागसि अपराधे परं केवलं करावलम्बनादिवत्समर्थना परिहारो नो अस्ति तस्मादुपायान्तराभावात्सोऽयं मौलिमणिस्तव पदयोः पातुको वन्दारुरस्तु । उपायान्तराभावे हि नमस्कारेणापि अपराधमार्जनं क्रियते तस्मादयमपि नमस्कारं करोत्वित्यर्थः ॥ १३७ ॥

इत्थमिति । स इत्थमुक्तप्रकारेण कोमलां सामयकां उक्तिं

आत्ममौलिमणिकान्तिभङ्गिनीं
तत्पदारुणसरोजसङ्गिनीम् ॥ १३८ ॥

तत्पदाखिलनखानुबिम्बनैः
स्वैः समेत्य समतामियाय सः ।
रुद्रभूमविजिगीषया रति-
स्वामिनोपदशमूर्त्तितात्मना ॥ १३९ ॥

तां उपगत्य उपहारीकृत्य प्रणामकरणवशात्तत्पदचुम्बिनः शय्यास्पर्शिनश्चिकुराः केशा यस्य स आत्ममौलिमणिकान्तिर्मि- शिखामणिद्युतिस्तद्रूपा भङ्गिमी नदी तां तत्पदे भैमीचरणौ तद्रूपे अरुणसरोजे तत्सङ्गिनीं सम्बद्धां चकार । प्रणामेत्यर्थः । नद्यास्तु रक्तोत्पलसम्बन्धो युक्त एव । तत्पदचुम्बी न शय्या- यामेव प्रणामः सूचितः । भङ्गास्तरङ्गाः सन्त्यस्य इति वि- ग्रहः ॥ १३८ ॥

तदिति । कृतप्रणामः स नलः स्वैर्निजैस्तस्याः पादयोर- खिलेषु दशस्वपि नखेषु जातैरनुबिम्बनैः प्रतिबिम्बैः समेत्य मि- लित्वा रुद्रस्य भूमा बहुत्वमेकादशत्वं तस्यापि पर्ज्ञावशाद्विजि- गीषया जेतुमिच्छया उपदशमूर्त्तितामेकादशमूर्त्तितां धार- यता रतिस्वामिना कामेन समतां साम्यमियाय मदीयः शत्रु- र्यद्येकादशत्वं धारयति तर्हि मयापि तावत्सङ्ख्याकेन भवितुं युक्तमिति । एकादशत्वं यदि कामो धारयेत्तर्हि भैमीदशनख- मध्यजातस्वप्रतिबिम्बसम्बन्धको दशमूर्त्तिधारी नलस्तेनोपमीये-

आख्यतैष कुरु कोपलोपनं
पश्य नश्यति कृशा मधोर्निशा।
एवमेव तु निशान्तरे वरं
रोषशेषमनुरोत्स्यसि क्षणम्॥ १४०॥

तेत्यभूतोपमा। रुद्रभीतीति पाठे एकादशभ्यो रुद्रेभ्यो भीतिः विजिगीषया तदपाकरणाद्धेतोर्यद्येकादशमूर्त्तितां मदनो धारयेत्तर्हि स्वप्रतिबिम्बयोगादेकादशमूर्त्तिर्नलस्तेनोपमीयेतेत्यर्थः। प्रणामवशात्तन्नखेषु प्रतिबिम्बित इति भावः। दशानां समीपे उपदशाः। सङ्ख्यया व्ययेति (पा०२।२।२५) समासः। बहुव्रीहौ सङ्ख्येय (पा०५।४।७३) इति डच्। उपदशा मूर्त्तयो यस्येति समासः॥ १३९॥

आख्यतेति। एष तां इति आख्यत अवोचत्। इति किं। हे भैमि त्वं कोपलोपनं कुरु। मधोर्वसन्तस्य कृशा दिनापेक्षया स्वभावत एवाल्पपरिमाणा अथ च प्रतिक्षणमपचीयमाना निशा नश्यतीति, पश्य कोपापरित्यागे एवम्प्रकारेणावशिष्टा रात्रिर्गमिष्यति, तस्मात् कोपं मुञ्च। तु पुनस्त्वं एतमेव रोषशेषं निशान्तरे आगामि रात्र्यन्तरे दिनापेक्षया अधिकपरिमाणायां शिशिरर्तुरात्रौ क्षणमात्रं अनुरोत्स्यसि कामयिष्यसे चरमे तस्मिन्नागिष्टं शिष्टं कोपं तदा कुरु इदानीं सम्भोगार्थं प्रसन्ना भव। सर्वं कोपमिदानीमेव चेत् करिष्यसि तर्हि तदा किं करिष्यसि तस्मादल्पं कोपं निशान्तरार्थं स्थापयेति लौकिकरीत्या-

साऽथ नाथमनयत्कृतार्थतां
पाणिगोपितनिजाङ्घ्रिपङ्कजा ।
तत्प्रणामधुतमानमाननं
स्मेरमेव सुदती वितन्वती ॥ १४१ ॥
तौ मिथो रतिरसायनात् पुनः
सम्बुभुत्सुमनसौ बभूवतुः ।

धुना तावत् कोपं त्यजति तां भैमीं प्रार्थयति स्मेत्यर्थः । आख्यत् । च क्षिङः ख्याञ् (पा० २।४।५४) कः । अस्य तिवक्रीति (पा० ३। १।५२) अङ् । ङित्वात्तङ् ॥ १४० ॥

सेति । अथ प्रणामभाषणानन्तरं प्रणामं मा कार्षीरित्या-दिवचनपूर्व्वं पाणिभ्यां गोपिते निजाङ्घ्रिपद्मे यया तया तस्य प्रणामेन धुतो निरस्तो मानः कोपजमौनं यस्मिंस्तादृशमाननं प्रसादात् स्मेरं सस्मितमेव वितन्वती कुर्व्वाणा सती सा सुदती नाथं कृतार्थतां कृतकृत्यतां अनयत् प्रापयामास तावता ण प्रसन्नाभूदिति भावः ॥ १४१ ॥

ताविति । तौ मिथो ऽन्योन्यरतिरसस्यानुरागरसस्यायनात् प्राप्तेः परस्परानुरागवित्तिहेतोरथ च प्रीतिरेव रसायनं प्र-शान्तसुरतेच्छायाः पुनरुज्जीवनौषधं तस्माद्धेतोः पुनः सम्बुभु-त्सुमनसौ सुरताभिलाषिचित्तौ बभूवतुः । द्वितीयसुरतेच्छु जाता-वित्यर्थः । तु पुनः रजनिस्तयोर्मनोरथं द्वितीयसुरतवाञ्छां न ससहे विषेहे । यतः दुष्टा जनिर्जन्म यस्यास्तथा । अल्पं जीवितं

चकमे न तु तयोर्मनोरथं
दुर्जनी रजनिरल्पजीवना ॥ १४२ ॥
स्वप्नभाक्शयनीययोस्तयोः
स्वैरमाख्यत वचः प्रियां प्रियः ।
उत्सवैरधरबिम्बपानजैः*
सान्तरायपदमन्तरान्तरा ॥ १४३ ॥

अल्पं यस्यास्तादृशी सञ्जातप्रभातसमया । अथ वाल्पायुषो जन्म दुष्टमेवेति । यद्वा प्रभातस्य आसन्नत्वाद्विरहसम्भावनावशाद्दा दृष्टा व्याकुला जनी नवोढा यस्यां सा दुर्जनी । सम्भोगेच्छा तु तयोर्न निवृत्ता परं प्रभातसमयस्य सञ्जातत्वात्सम्भोगं न चक्रतुरिति भावः । अन्योऽपि सुरतविषये यद्रसायनं वीर्य्यवृद्ध्यर्थमौषधं सेवमानः पुनः पुनः सुरतेच्छुर्भवति । अल्पायत्ताऽन्यापि दुष्टा वधूः सपत्न्यादिः स्त्रीपुंसयोः सम्भोगं न सहते । जननं जनिः । जनिघसिभ्यामिण् (सि॰ कौ॰ । उ॰ ४पा॰ २०२ पत्रे)। जनिवध्योश्चेति (पा॰ ७।३।३५) न वृद्धिः । ङ्याप इति (पा॰ ६।३।१११) दीर्घः पक्षे समासान्तविधेरनित्यत्वात्कबभावः ॥ १४२ ॥

स्वप्नमिति । स्वप्नमात्तं शयनीयं शय्या याभ्यां तयोर्मध्ये प्रियः प्रियां प्रति स्वैरं रहसि स्थितत्वात्स्वच्छन्दं यथा तथा आख्यत

* अधरदानपानजैरिति पुस्तकान्तरे पाठः ।

देवदूत्यमुपगत्य निर्द्दयं
धर्म्मभीतिकृततादृशागसः।
अस्तु सेयमपराधमार्ज्जना-
जीवितावधि नलस्य वश्यता॥ १४४॥
स क्षणः सुमुखि यत्त्वदीक्षणं
तच्च राज्यमुरु येन रज्यसे।

अवोचत्। किम्भूतं वचः परस्परमधरबिम्बस्य पानं तज्जैरुत्सवैः परमानन्दकारणैर्निर्मितैरन्तरान्तरा मध्ये मध्ये मान्तरायाणि विघ्नानि कियन्तं कालं अनुच्चारितानि सुप्तिङन्तानि पदानि यत्र॥ १४३॥

किमुवाचेत्याह। देवेति। देवदूत्यमुपगत्य अङ्गीकृत्य निर्द्दयं यथा तथा धर्म्माद्भीत्या चित्तशुद्ध्या दूत्याकरणे प्रतिश्रुतापरिपालनाद्धर्म्मो लुप्येतेति लुप्यमानाद्धर्म्माद्भीत्या धर्म्मस्यैव वा भीतिर्नलोपलक्षणा तया हेतुभूतया कृतं तादृशमनिर्व्वाच्यं भवत्पीडनरूपमुक्तप्रकारमागोऽपराधो येन तस्यापराधिनो नलस्य मम जीवितावधि यावज्जीवं या वश्यता भवदधीनता सेयमपराधस्य मार्ज्जना शोधयित्री अस्तु। अद्यप्रभृति यावदहं जीवामि तावत्तव वश्यः किंकर एवेति प्रतिज्ञां तथ्यां मत्वा तमपराधं क्षमस्वेत्यवोचदिति भावः। मार्ज्जना ण्यन्ताद्भावे युच्॥ १४४॥

स इति। हे सुमुखि यत्त्वदीक्षणं स एव नलस्य मम क्षणो

तन्नलस्य सुधयाऽभिषेचनं
यस्त्वदङ्गपरिरम्भविभ्रमः ॥ १४५ ॥
शर्म्म किं हृदि हरेः प्रियार्पणं
किं शिवार्द्धघटनं शिवस्य वा ।

महानुत्सवः शोभनवदनत्वादेवेत्यर्थः । अथ च यत्र महत्यपि काले भवदीक्षणं स महानपि कालः सुखरूपत्वात् क्षणतुल्यः सुखेनातिवाहितुं शक्य इत्यर्थः । तथा येन त्वद्विषये मदीयेन मद्विषये त्वदीयेन व्यापारेण त्वं रज्यसे प्रीता भवसि, तच्च तदेव मम उरु राज्यं त्वदनुरागहेतुर्व्यापार एव साम्राज्यं न तु सकलभूमण्डलाधिपत्यमित्यर्थः । तथा यस्त्वदङ्गस्य परिरम्भ-विभ्रमः आलिङ्गनविलासः त्वच्छरीरेण मदङ्गे कृतो वा परि-रम्भविभ्रमः तदेव नलस्य मम सुधयाऽमृतेनाभिषेचनं अभितः स्नानं । सुधाभिषेकादपि भवदङ्गसङ्गः सुखकर इत्यर्थः । सर्व्वथा त्वमेव मम सकलपुरुषार्थसर्व्वस्वभूतासीत्यर्थः ॥ १४५ ॥

शर्म्मेति । हरेः श्रीविष्णोः हृदि प्रियार्पणं लक्ष्म्याः स्थापनं किं नाम शर्म्म सुखं । तथा वा अथवा शिवस्य शिवायाः पा-र्व्वत्या अर्द्धेन घटनं किं शर्म्म तदप्यल्पीयः । तर्हि किं नाम परमं सुखमित्याशङ्क्याह । ननु तस्मिन् भेसि सहेषु सुरतोत्सवेषु नव तं अतिप्रसिद्धं सरिदुदन्वतोर्नदीसमुद्रयोरिवाच्चयं सम्ब-न्धमभिन्नजलोपलम्भेन तादात्म्यलक्षणं अयमहं अयं शुभावह-विधिरूपं वा सम्बन्धं कामये वाञ्छामि इष्टदेवताभ्य इति

कामये तव महेषु तन्वि तं
तन्वयं सरिदुदन्वदन्वयम् ॥ १४६ ॥
धीयतां मयि इदा ममेति धी-
र्वक्तुमेवमवकाश एव कः ।
यद्विधूय तृणवद्दिवस्पतिं
क्रीतवत्यसि दयापणेन मां ॥ १४७ ॥

शेषः । मद्देहपृक्तेषु मध्ये तव सरिदन्वस्त्वमेव कामये नत्वन्यदिति वा । हरगौरीदि प्रियार्पणे शिवस्य च शिवार्द्धघटने आलिङ्गनादीनां पृथक्स्थितभिन्नदेहसाध्यत्वादालिङ्गनादिजन्यं सुखं ता-

शठपथता निभृतमालिभिर्भव-
द्वाग्विलासमसकृन्मया किल ।
मोघराघवविवर्ज्यजानकी
श्राविणी भयचलासि वीक्षिता ॥ १४८ ॥

बुद्धिः कार्येत्यारोपः प्रार्थ्यते। विक्रीय मूल्येन गृहीते वस्तुनि तु स्वत्वं न्याय्यमस्त्येवेति तदारोपो न प्रार्थ्यत इत्यर्थः। यदि मयि स्वत्वं नाभविष्यत् तर्हि इन्द्रं परित्यज्य मां नावरिष्यः वृतवत्यसि तावत् तस्मादेवमपि मया याचितुमयुक्तमेवेति। तव किंकरोऽस्मीति भावः। दिवस्पतिं दयापर्णेनेत्येताभ्यां इन्द्रापेक्षया मदपेक्षया वाऽयमतितरां गुणवानिति वृत इति न किन्तु मद्वरणे तव कृपैव हेतुः। मा यावज्जीवं कार्येत्यर्थः॥ १४७॥

शठपथतेति॥ किल कदाचित् समये आलिभिः सखीभिः सह असकृत् भवत्या वाग्विलासं कथासंवादं निभृतं पश्चादाअज्ञातं यथा तथा वरदानाददृश्यत्वेनावगुण्ठ्य यथा तथा शठपथता निभृतं रहसि स्थितत्वात् मच्छ्रवणशङ्काभावात् स्पष्टं स्वच्छन्दं सखीभिः सह भवत्संवादं किल शनैः पश्चादागमनाद दृष्टीकरणादिना कपटेन शठपथतामता वा मया त्वं वीक्षिता एवम्भूता दृष्टासि। किम्भूता मोघं वृथा परीक्षार्थं अकारणं श्रीराघवेण विवर्ज्या त्यक्ता स्वस्मिन्ननुरक्तापि जानकी शृणोतीति तच्छीला भीतेव भयेन स्वत्यागशङ्कया भीत्या च व्याकुला। तस्मात् किंकरभूते मय्यन्याधीनं कार्येति भावः। यदा

तुप्तपत्त्रविनिमीलितक्षुपात्
कञ्चुपस्य धृतचापलात् पलात्।
त्वत्सखीषु सरटाङ्घ्रिरोधुतः
स्वं भियोऽभिदधतीषु वैभवं ॥ १४९ ॥
त्वं मदीयविरहान्मया निजां
भीतिमीरितवती रहःश्रुता।
नोज्झितास्मि भवनीं तदित्ययं
व्याहरद्वरममर्त्यकातरः ॥ १५० ॥

यस्माद्भीता बिभेमि तस्मादवश्यं मयि तवानुरागोऽस्तीति निश्चित्य धीयतां मयि विवेकमयुक्तमिति भावः। राघवः गोत्रापत्ये विदादेराकृतिगणत्वादञ्। बहुत्वे तु यञञोश्चेति (पा० २।४।६४) अञोलुक्। तेन रघूणामन्वयं वक्ष्ये इति साधुः ॥ १४८ ॥

तुप्तेति त्वमिति युग्मं। अयं नलः तां प्रति इति वरमभीतं व्याहरत् उवाच। अभयदानं प्रादात्। इति किं। हे भमि कदाचित् सखीसमूहेन सह गोष्ठ्यां प्रसङ्गात् काकस्माद्बिभेतीति तथ्यं कथ्यतामित्यन्योन्यं भयहेतुप्रश्ने कृते तुप्तानि स्पृष्टानि पत्त्राणि यस्यैवम्भूतोऽङ्गुल्यादिना स्पृष्टमात्रः सन् विशेषेण निमीलितः सङ्कुचितस्तस्मात् क्षुपात् लज्जालुसंज्ञकादोषधिविशेषात् सकाशादहं सुतरां बिभेमीति कयाचिदुक्तं। धृतं चापलं येन स्वभावत एव चलतः कञ्चुपस्य पलान्मांसात् अह-

सङ्गमय्य विरहेऽस्मि जीविका
यैव वामथ रताय तन्नृणां।

मिति अन्यया कथितं। अनिशं शिरोधुतो मूर्द्धानं कम्पयतः प्रतिक्षणमन्यवर्णात् सरटात् कृकलासात् सकाशादहमिति अपरयेत्येवं त्वत्सखीषु स्वं निजं भियो भयस्य वैभवं हेतुं अभिदधतीषु भाषमाणासु सतीषु कयाचिदस्माभिर्निजभयहेतुः कस्त्वयापि कथ्यतामिति त्वं प्रत्युक्ते सति नलवियोगाद्धेतोरहं बिभेमि क्षणमात्रमपि तेन न भाव्यमिति तस्मादेव बिभेमि न त्वन्यस्मादिति मदीयविरहान्निजां भीतिं रहसि ईरितवती त्वं मया श्रुतासि यस्मात् तस्मात् माऽभैषीः। अहं भवतीं कदाचिदपि नोज्झितास्मीति, यतः असत्यं नामाप्रसाभनविषये कातरो भीरुः भाविनस्त्यागस्य दैवाधीनत्वादसत्यवादित्वमिति भावः। यद्वा असतीष्वकातरः सतीषु विषये भीरुरेव अतस्तद्भयनिराकरणार्थमेवमवददित्यर्थः। छुप्तेति छुप स्पर्शे इति तौदादिकात् अनिटो निष्ठा। शिरोधुत इति क्विबन्तं ॥ १४९ ॥ १५० ॥

सङ्गेति। हे भैमि इत्यतो हेतोः रुष्टया कुपितयेव निद्रया अस्यां रात्रौ आवयोर्नोपसद्यते आसन्नतयानभूयते। किमिति वितर्के। इति किं। हे भैमीनलौ यैवाहं निद्रा विरहे विवाहात् पूर्वं वियोगसमये वां युवां स्वप्नदर्शनादिवशात् सङ्गमय्य संयोगं प्रापय्य युवयोः जीविकास्मि प्राणधारणहेतुरभूवमि-

हन्त दत्थ इति रुष्टयावयो-
र्निद्रयाद्य किमु नोपसद्यते ॥ १५१ ॥
ईदृशं निगदति प्रिये दृशौ
सम्मदात् कियदियं न्यमीलयत् ।

त्यर्थः । तत्क्षणं तस्या मम सम्बन्धिनं क्षणं अवसरं वा अथ विवाहानन्तरं स्वकार्यार्थं रताय युवां दत्थः । रात्रिलक्षणे मदीयसमय एव सुरतस्य क्रियमाणत्वात् हन्त कष्टमनुचितं कृतं उपकारं न स्मरथ इत्यर्थः । आपदि कृतोपकारा हि तदीयेऽवसरे अन्यस्मै दत्ते सति कोपात् स्वामिसमीपं नागच्छतीति, आपदि कृतोपकाराया मम रात्रिरूपोऽवसरः सुरताय दत्तो युवाभ्यां, मह्यं तु मदीयावसरस्य लेशोऽपि न दत्तः प्रभातपर्य्यन्तं सुरतस्यैव करणादिति कोपवशादिति वाऽऽवयोर्निद्रा नायातीति नलस्तामबोधयदित्यर्थः । आप्रभातं ताभ्यां कामकेलयः कृता इति भावः । न क्षणमिति पाठे येव जीविका तस्या मम रताय प्रीताय क्षणमल्पमपि समयं न दत्थ इति रुष्टयेति व्याख्येयं । सङ्गमय्य स्यपि लघुपूर्व्वादिति (पा० ६।४।५६) णेरयादेशः । जीविका कर्त्तरिण्वुल् वां षष्ठी द्वितीया द्विवचने वामादेशः ॥ १५१ ॥

ईदृशमिति । इयं प्रिये ईदृशमेवम्प्रकारमन्यदपि निगदति सत्येव सम्मदाद्धर्षात् सुरतानन्दजश्रमादिति यावत् । तस्मादुभेतोः दृशौ नेत्रे कियत् न्यमीलयत् किञ्चित् निमीलितवती

प्रातरात्तपति कोकिले कलं
जागरादिव निशः कुमुद्वती ॥ १५२ ॥
मिश्रितोरु मिलिताधरं मिथः
स्वप्नवीक्षितपरस्परक्रियं ।
तौ ततोऽनु परिरम्भसम्पुटे
पीडनां विदधतौ निदद्रतुः ॥ १५३ ॥

असमञ्जसतया निद्रया प्रयोजिकयेति शेषः । निदद्राविव्यर्थः । श्रान्तो हि निद्राति समदादेवं गदति सतीति वा दृशौ न्यमी-लयत । समदादिव प्रियप्रियोक्तिश्रवणम जातहर्षवशादित्यर्थः । आनन्दातिशयसुखमनुभवन् हि निमीलितदृग्भवतीति प्रती-यमानोत्प्रेक्षा वा । कियदित्यनेन दृशोर्द्धनिमीलनस्य सूचित-त्वादुन्यत्वं तस्याः सूचितं । केव । प्रातः कोकिले कलं मधुरास्फुट-ध्वनिं श्रोत्रसुखं आलपति सति कुमुद्वती इव यथा निमीलि-तोत्पला भवति तथेयमपि । कस्मादिव निशो रात्रिसम्बन्धिनो जागरादिव । रात्रावनिद्रो हि प्रातर्दृशौ घूर्णनेन निमीलयति कुमुद्वत्यपि रात्रावनिद्रावशादिव प्रातर्निमीलयति, तस्मादि-यमपि प्रतीयमानोत्प्रेक्षा । न्यमीमिलत् इति पाठे णौ चङि भ्राजभासेति (पा० ७।४।३) पाक्षिक उपधा ह्रस्वः । जागरात् भावे घञि जाग्रो विचिण्णल्ङित्स्विति (पा० ७।३।८५) वृद्ध्यप-वादो गुणः ॥ १५२ ॥

मिश्रितेति । ततोऽनु तादृक्प्रियभाषणमध्य एव भैमीनिद्रा-नन्तरं परिरम्भरूपे सम्पुटे संश्लेषपटिकायामिति यावत् । तदच

तद्यातायातरंहस्कलनकलितरतिश्रान्तिनिश्वासधारा-
जस्रव्यामिश्रभावस्फुटकथितमिथःप्राणभेदव्युदासं ।
बालावक्षोजपत्राङ्कुरकरिमकरीमुद्रितोर्वीन्द्रवक्ष-
श्शिक्षाख्यातैकभावोभयहृदयमयाद्द्वन्द्वमानन्दनिद्रां ॥१५४॥

पुनरपि पीडनां गाढालिङ्गनं विदधतौ कुर्व्वाणौ तौ, मिश्रितौ परस्परानन्तरालघटितौ ऊरू यस्यां क्रियायां तद्यथा भवति तथा, मिथः पानवशादन्योन्यमिलिताधरौ यस्यां क्रियायां तद्यथा भवति तथा,स्वप्ने वीचिताः परस्परक्रियाः अन्योन्यचुम्बनादिव्यापारा यस्यां तद्यथा तथा निदद्रतुः । क्षीरनीरालिङ्गनं कृत्वा निद्रितावित्यर्थः । पीडनां ।ण्यन्तत्वाद्युच् ॥ १५३ ॥

तदिति । तत् द्वन्द्वं स्त्रीपुंसमिथुनं आनन्देन सम्भोगसुखभरेण निद्रां अयात् प्राप । किम्भूतां निद्रामस्वश्विसानां यातायातयोर्निर्गमप्रवेशयोः सम्बन्धिनो रंहसो वेगस्य कलेन व्याजेन कलिता अङ्गीकृता या रतिश्रान्तिनिश्वासधाराः सुरतश्रमसञ्जातनिश्वासपरम्परास्तासामन्योन्यमजस्रमनवरतं सुतरां यो व्यामिश्रभावः निद्रावशमेमीनामानिर्गतश्वासपरम्परासु निद्रावशमलनासान्तर्गतनिश्वासपरम्पराः प्रविष्टा एवं वैपरित्ये । इति मिश्रीभावार्थमिव यातायाते,तथा च जले जलप्रवेशवदन्योन्यनिश्वासपरम्पराणां यो नितरामभेदोपलम्भ इति यावत् । तेन कर्तृभूतेन स्फुटं स्पष्टं कथितो मिथोऽन्योन्यस्य प्राणानां भेदव्युदासो भेदनाशः प्राणैक्यं यस्य तत् । तथा बालाया वक्षोजौ स्तनौ तत्र पत्राङ्कुराः पत्रवल्लीभूताः तत्पत्रवल्लीषु वर्त्तमानाः करिम-

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।
यातोऽस्मिन् शिवशक्तिसिद्धिभगिनी सौभ्रात्रभव्ये महा-
काव्ये तस्य कृतौ नलीयचरिते सर्गोऽयमष्टादशः ॥१५५॥

कर्य्यः कस्तूर्य्यादिरचिता हस्तिमकर्य्यस्ताभिर्मुद्रितं चिह्नितं नि-
द्रासमयकृतगाढालिङ्गनवशात्संलग्नप्रतिरूपकं कृतं उर्वीन्द्रवक्ष-
स्तद्रूपं चिह्नं तेनाख्यातो नितरां स्पष्टं कथित एकभाव एकत्वम-
भेदो यस्यैवम्भूतमुभयोर्भैमीनलयोर्हृदयं वक्षःस्थलमथ च चित्त-
पत्रं । यातेत्यादिबालेत्यादि च द्वयं क्रियाविशेषणत्वेन वा
योज्यं। आत्मैक्यं शरीरैक्यञ्च क्रमेण वर्णितमिति ज्ञेयं। उभ-
योरपि मिश्रितश्यामत्वादेकप्राणशब्दश्लेषादत्रोचितं ॥ १५४ ॥

श्रीहर्षमिति । पूर्व्वार्द्धं पूर्व्ववत्। शिवस्य शक्तेश्च सिद्धिर्यत्र
शिवशक्तिसाधनं यत्र कृतं शिवशक्तिसाधननामा ग्रन्थः । शिवभ-
क्तीति पाठे शिवस्य भक्तिः सिद्धिर्यत्र शिवभक्तिप्रतिपादको ग्रन्थ-
विशेषः तस्य भगिनी एककर्तृकत्वात्तस्य विषये सौभ्रात्रेण शोभ-
नभ्रातृभावेन भव्ये प्रशस्ते तत्तुल्यसरसशब्दार्थन्यासे नलीयच-
रिते अष्टादशानां पूरणः सर्गः समाप्तः । शिवभक्तिसिद्धिरपि
मया कृतेति सूचितं । सौभ्रात्रमित्यत्र भावे युवादित्वादण्।
अष्टादशः। तस्य पूरणेडट् (पा० ५।२।४८) ॥ १५५ ॥

इति श्रीवेदरकरोपनामश्रीनारायणपण्डितकृते नैषधीय-
प्रकाशे अष्टादशः सर्गः समाप्तः ॥

# उत्तरनैषधचरिते।

## ऊनविंशः सर्गः।

---

श्रीलक्ष्मीनृसिंहौ जयतः।

निशि दशमितामालिङ्गन्त्यां विबोधविधित्सुभि-
र्निषधवसुधामीनाङ्कस्य प्रियाङ्कमुपेयुषः।
श्रुतिमधुपदस्रग्वैदग्धीविभावितभाविक-
स्फुटरसभृशाभ्यक्ता वैतालिकैर्जगिरे गिरः॥ १॥

निशेति॥ सर्गसङ्गतिः स्पष्टा। वैतालिकैर्वन्दिभिर्गिरो ज-गिरे, ऊचिरे। किम्भूतैः। निशि रात्रौ। बाल्यं वृद्धिर्वपुःपुष्टिः प्रज्ञोत्साहो बलं मदः दशकेन निवर्त्तन्ते मनः पञ्चेन्द्रियाणि चेति वचनाद्दशदशकस्य शतायुषः पुरुषस्यावसानोपलक्षकाऽवस्था विशेषो दशमः स विद्यते येषां ते दशमिनो वृद्धास्तेषां भावो दशमिता तामालिङ्गन्त्यां अवसानं प्राप्तायां सञ्जातप्रायप्रभा-तायां यामिन्यां प्रियाङ्कं भैमीसमीपमुपेयुषः प्राप्तवतस्तया सह निद्रितस्य निषधदेशवसुधाया मीनाङ्कस्य कामस्य नलस्य विबो-धार्थं गिरं विधित्सुभिः कर्त्तुमिच्छुभिः। कीदृश्यो गिरः श्रोतॄणां श्रुत्योः श्रवणयोर्मधु अमृतरूपा अतिमधुरा पदस्रक् सुप्तिङन्त पदमाला तस्या वैदग्ध्या वक्रोक्त्यादिरचनाचातुर्येण विभाविता

जय जय महाराज प्राभातिकीं सुषमामिमां
सफलयतमां दानाद्दृशो र्दरालसपक्ष्मणोः ।

ध्वनिवृत्त्या व्यञ्जनाव्यापारेण प्रकाशिता भाविका रत्यादिस्थायिव्यभिचारिसहकारिरूपैर्भावैर्युक्ता, ज्ञापिता इति यावत्। तादृशाः स्फुटाः प्रसन्नतरत्वेन बालिशैरपि प्रतीता ये रसाः शृङ्गारादयस्तैर्भृशं नितरामभ्यक्ताः सर्वतः सिक्ताः एकपदमपि नीरसं यासु नास्ति अतिरसिका नलप्रबोधार्थं मागधैर्मधुरं प्रातर्वर्णनमारब्धमित्यर्थः । रत्यादयः स्थायिभावाः निर्वेदादयस्त्रयस्त्रिंशद्व्यभिचारिणः। वैतालिका बोधकरा इत्यमरः। दशमोऽवस्थाविशेषो विद्यते यस्यासौ दशमी, अति वृद्ध इति योगरूढोऽयं शब्दः।दशमिन्या वृद्धाया भावो दशमितेति वा। विशिष्टस्तालो वितालः स शिल्पं येषां ते वैतालिकाः शिल्पमिति (पा० ४।४।५५) ठक्। सौखशायिका इत्यर्थः । तदुक्तं । वैतालिकास्तु कथ्यन्ते कविभिः सौखशायिकाः। राज्ञः प्रबोधसमये घण्टाशिल्पास्तु घाण्टिकाः। जगिरे गैशब्दे कर्म्मणि तङ्। अस्मिन् सर्गे भ्रम इति यावद्धरिणी छन्दः ॥ १ ॥

जयेति॥ भो महाराज त्वं जय जय सर्व्वोत्कर्षेण वर्त्तस्व। त्वं इमां प्रत्यक्षदृशां प्राभातिकीं प्रातःकालसम्भवां सन्ध्यादिजनितां सुषमां परमां शोभां दरमीषत् अलसे तत्कालमेव निद्रात्यागादीषद्घूर्णनयुतेऽर्द्धोन्मीलितपक्ष्मणी ययोस्तयोर्नेत्रयोस्तयोर्दानात् विषयीकरणाद्धेतोः सफलयतमां, अतितमां

प्रथमशकुनं शय्योत्थायं तवास्तु विदर्भजा
प्रियजनमुखाम्भोजात्तुङ्गं यदङ्ग न मङ्गलं॥ २॥
वरुणगृहिणीमाशामासादयन्तममुं रुचो-
निचयसिचयांशांशभ्रंशक्रमेण निरंशुकं।

सफलां कुरु। त्वत्कृतदर्शनेनेयं धन्या भविष्यति तस्माच्छीघ्रमुत्तिष्ठस्वेति भावः। विदर्भजा शय्योत्थायं शय्यायाः सकाशाच्छीघ्रमुत्थाय तव प्रथमं पूर्व्वं प्रातःकालभवं च शकुनं शुभसूचकं प्रशस्तमस्तु तत्स्थाने भैम्येव भूयात्। उत्थितः सन् प्रथमोत्थितभैमीमुखमेव प्रथमं पश्येत्यर्थः। यद्यस्मात् हे अङ्ग स्वामिन् प्रियजनस्य मुखाम्भोजादन्यत् तुङ्गमुत्कृष्टं मङ्गलं शुभावहं वस्तु नास्ति। प्रातरुत्थाय प्रथमं प्रियजनमुखदर्शनं कर्त्तव्यमिति लौकिकी स्थितिः। त्वत्तः पूर्व्वं भैम्युत्तिष्ठत्विति भावः। हराललपस्मलं तत्कालमुद्दहस्य जातिः। पश्चाच्छयनं पूर्व्वमुत्थानमित्युत्तमकुलस्त्रीजातिश्च। जय जयेति वीप्सायां द्विरुक्तिः। प्राभातिकीं प्रभाते भवेति, कालाट्ठञ्। सफलयतमां सफलशब्दात् तत् करोतीति (पा० ३।१।२६।वा०१) णिजन्ता लोटि तमपि किमेत्तिङव्ययाम् (पा० ५।४।११)। शय्योत्थायं अपादाने परीप्सायामिति (पा० ३।४।५२) णमुल्॥ २॥

वरुणेति॥ हे राजन् हरेरिन्द्रस्य महिषी राज्ञी असौ प्राची हरित् दिक् इतः प्रागभागे अह्नःप्रारम्भभागा एव निजमुखं तत् तिमिरत्यागे प्रसादमिषान्निर्मलव्याजात् स्मेरं सहासं धत्ते

तुहिनमसहं पश्यन्तीव प्रसादमिषादसौ
निजमुखमितः स्मेरं धत्ते हरेर्महिषी हरित् ॥ ३ ॥
अमहतितरास्तादृक् तारा न लोचनगोचरा-
स्तरणिकिरणा द्यामश्नन्ति क्रमादपरस्पराः ।

बिभर्त्ति, उत्प्रेक्ष्यते । कथंभूतेव । वरुणस्य गृहिणीं भार्यां प्रतीचीमाशामासादयन्तं अभिगच्छन्तमतएव रुचीनिचयस्य कान्तिसमूहरूपस्य सिचयस्य वस्त्रस्यांशा भागास्तेषामपि अंशेन लेशेन भ्रंशस्तस्य क्रमेणैकैकभागापागमक्रमेण निर्गता अंशवो यस्य निरंशुकं, अथ च विवस्त्रं अमुं तुहिनमहसं पश्यन्तीव । मय्यनुरक्तस्त्वभ्युदयभागऽभूदिदानीमेतस्यामनुरक्त इमां दशामापन्नोऽयमितीव हसतीत्यर्थः । अन्यापि नारी अनुरागातिविक्लवं गलद्वस्त्रं परस्त्रीमिवमानं विटं दृष्ट्वा मुखं स्मेरं करोति । प्राच्यामरुणोदयोऽभूत् । प्रतीच्यां त्वरुणकिरणप्रसरणवशाच्चन्द्रो निःप्रभोऽस्तं जिगमिषुरस्ति । तस्मात्प्राची हृष्यतीति । अंशेन भ्रंशः तृतीयेति (पा० २।१।३०) योगविभागात् समासः । ततः षष्ठीसमासः । इतः सप्तम्यर्थेतसिः । एवम्भूतं चन्द्रं पश्यन्ती इतोऽस्माद्धेतोरिवेति इतो दृश्यमानादस्मात् प्रसादमिषादिति वा । सम्बन्धे पश्यन्तीव ॥ ३ ॥

अमहतीति ॥ भो राजन् अमहतितराः स्वरूपेणैव सूक्ष्मतरा ध्रुवारुन्धत्यादयस्तारा: इदानीं तादृक् पूर्ववल्लोचनगोचरा न भवन्ति स्वरूपेण सूक्ष्मत्वात् । पूर्वमपि चक्षुष्मतापि

कथयति परिश्रान्तिं रात्रीतमः सहयुद्धना-
मयमपि दरिद्राणप्राणस्तमोदयितस्त्विषां ॥ ४ ॥

महता यत्नेन या दृश्यन्ते ता इदानीं सर्व्वथा न दृश्यन्त एव इत्यर्थः । तादृश्यो बहुसङ्ख्याः पूर्वं स्थूलाः प्रकाशमानाश्च यास्ता-रकाः स्वात्याद्रीदयस्ताः सम्प्रति सुतरामल्पाः सूक्ष्माश्च सत्यो नेत्रगोचरा न भवन्तीति वा । यस्मात् तरणेः सूर्यस्य किरणाः अपरस्पराः अहमहमिकया सततमविच्छेदेन प्रवृत्ताः सन्तः क्रमात् द्यां गगनं अश्नुन्ति गाहन्ते । सूर्यकरस्पर्शवशान्निःप्रभ-त्वात् तारा न दृश्यन्ते इत्यर्थः । तथा दरिद्राणाः क्षीणाः प्राणाः असवो यस्यैवं भूतोऽस्तं जिगमिषुः । अयं तमोदयिता निशानाथश्चन्द्रोऽपि रात्रितमसा सह युद्धनां सङ्ग्रामं कुर्व-तीनां निजत्विषां परिश्रान्तिं सामस्त्येन ग्लानिं रणपातं च कथयति । न केवलं त्विष एव दरिद्राणप्राणाः किन्तु चन्द्रोऽपि इत्यपि शब्दार्थः । अतिशयेन महत्यामहतितराः । घरूपेति (पा० ६।३।४३) ह्रस्वः । ततो न समासः । गोचरः पुमान् । अपरे च परे च अपरस्पराः अपरस्य क्रियासातत्य इति (पा० ६। १।१४४) सुट् । द्यां सततमविच्छेदेनाश्नुन्तीत्यर्थः । सह युद्धनां सहेचेति (पा० ३।२।८६) युधेः क्वनिपि वनोरचेति (पा० ४।१।७) ङीप् रेफान्तादेशश्च प्राप्तो वनोनहश (पा० ४।१।७।वा० १) इति निषेधान्नभवतः । दरिद्राण इति दरिद्रातेरार्धधातुक इत्यादिना (पा० ६।४।११४।वा० १) प्राप्तोप्यालोपो, न दरि-

स्फुरति तिमिरस्तोमः पङ्कप्रपञ्च इवोच्चकैः
पुरुसितगरुच्चञ्चच्चञ्चूपुटस्फुटचुम्बितः ।
अपि मधुकरी कालिंमन्या विराजति धूमल-
च्छविरिव रवेर्लाक्षालक्ष्मीं करैरनिपातुकैः ॥ ५ ॥

द्राघके लोपो दरिद्राणे च नेष्यत इत्यादि (पा० ६।४।११४। कारिका) निषेधान्न भवति ॥ ४ ॥

स्फुरतीति॥ भो राजन् तिमिरस्य स्तोमः समूहः लाक्षालक्ष्मीं अनिपातुकैः अतिक्रामद्भिः ततोऽप्यधिकं रक्ततरैः रवेः करैः कृत्वा पुरूणां बहूनां सितगरुतां श्वेतपक्षाणां हंसानां चञ्चद्भिश्चपलैः अरुणिम्ना विलसद्भिर्वा चञ्चूपुटैः स्फुटं यथा तथा चुम्बितः स्पृष्टः पङ्कस्य प्रपञ्चः समूह इव उच्चकैः अतितरां स्फुरति शोभते। तिमिरस्तोमः प्रविष्टसूर्यकिरणस्पर्शात् विमखमनाशं पङ्कमध्यप्रविष्टहंसारुणचञ्चुपुटशबलपङ्कवच्छोभतेतरामित्यर्थः। तथा आत्मानं कालीं मन्यते कालिंमन्या अतिकृष्णा च भ्रमर्यपि अरुणतरैः सूर्यकिरणैः धूमलच्छविरिव कृष्णारुणकान्तिरिव शोभततरां। सूर्यकराः प्रसृताः तिमिरं चाऽल्पीभूतमिति भावः। धूमलो कृष्णलोहितावित्यमरः। उच्चकैरव्ययत्वादकच्। मधुकरी जातिवाचित्वाङ्ङीष्। कालिंमन्या आत्ममाने खश्चेति (पा० ३।२।८३) खश्। दिवादित्वात् श्यन्। खित्यनव्ययस्येति (पा० ६।३।६६) ह्रस्वः। अरुर्द्विषदिति (पा० ६।३।६७) मुम्। लाक्षालक्ष्मीं न लोकेति (पा० २।३।६९) षष्ठीनिषेधः ॥ ५ ॥

रजनिवमथुप्रालेयाम्भःकणक्रमसंभृतैः
कुशकिशलयस्याग्रेशयैरुदविन्दुभिः।
सुषिरकुशलेनायःसूचीशिखाङ्कुरसङ्करं
किमपि गमितान्यन्तर्मुक्ताफलान्यवमेनिरे ॥ ६ ॥
रविरुचिरुचामोङ्कारेषु स्फुटामलविन्दुतां
गमयितुममूरुच्चीयन्ते विहायसि तारकाः।

रजनीति॥ रजन्या वमथुवत् करिणीमुखान्निर्गतजलवत् प्रालेयाम्भसो हिमजलस्य कणा लेशास्तेषां गलनक्रमेण संभृतैः सञ्चितैः कुशकिसलयस्याग्रेशयैरग्रस्थितैः सूचीतीक्ष्णाग्रभागस्थितैरच्छैर्निर्मलतरैरुदविन्दुभिर्हिमजलकणैः कर्तृभिः मुक्ताफलान्यवमेनिरे अवगणितानि, मौक्तिकतुल्यैर्जातानीत्यर्थः। किम्भूतानि मुक्ताफलानि, सुषिरे विवरकरणे कुशलेन मणिकारेण मध्ये किमपि लोकोत्तरं स्तोकं वा अयःसूच्या लोहसूच्या वेधनशलाकायाः शिखेव सूक्ष्मत्वादङ्कुरस्तेन सङ्करं संयोगं गमितानि प्रापितान्यर्द्धविद्धानीत्यर्थः। वमथुः करिशीकर इत्यमरः। द्वितोऽथुच् (पा० ३।३।८८)। अग्रेशयैः अधिकरणे शेतेः (पा० ३।२।१५) इत्यजन्ते शयशब्दे शयवासेति (पा० ६।३।१८) सप्तम्या अलुक्। सूची कृदिकारान्ङीन्। सङ्करं ऋदोरप् (पा० ३।३।५७) ॥ ६ ॥

रवीति॥ रवेः पौर्वाह्णिक्यो रुचय एव ऋचः तासां प्रातःकाले रविकिरणानामृग्रूपत्वात् "ऋग्भिः पूर्वाह्णे दिवि देव ईयते

स्वरविरचना यासामुच्चैरुदात्ततयाहृताः
शिशिरमहसो बिम्बादस्मादसंशयमंशवः ॥ ७ ॥

यजुर्वेदे तिष्ठति मध्ये अक्षः" इत्यादि श्रुतेः। ऋग्वेदवाक्यानामोङ्कारेषु प्रारम्भप्रवणेषु अथ च लक्षणया प्रारम्भेषु उदयसमयेषु स्फुटां प्रकटां अमलां स्वरोच्चारणादिदोषरहितां अनुस्वाररूपां बिन्दुतां गमयितुं प्रापयितुं अमूर्विहायसि स्थितास्तारकाः केनाप्युच्चीयन्तेऽवचयेन समुह्यन्त इव। ऋचामसत्वाद्याग्यत्वात् ऋक्प्रणवा बिन्दुनिर्माणार्थं एता गृह्यन्त इव ततो न दृश्यन्त इत्यर्थः। प्रत्यृचमोङ्कारसद्भावात्तदानन्त्यात्ताराबिन्दूनामिति बहुत्वं। अथच ऊर्द्धं चीयन्ते नीयन्त इति यावत्। सूर्यप्रभोदय एव तारका नश्यन्तीति भावः। तथासामसंशयम्स्वादस्माच्छिशिरमहसश्चन्द्रस्य बिम्बात् सकाशादंशवोऽयासामृचामुच्चैर्नितरां उदूर्ध्वं आपतन्त्या गृहीततयाऽथच लक्षणवशाद्विशालतया उपरिस्थिततया च अथवा उच्चैरुदात्त इति उदात्तलक्षणयोगादुच्चैरुदात्तत्वेन योग्यत्वादुक्तसस्वरस्य विरचनाय निर्माणायाऽसंशयं निश्चितं केनापि हृता नीता इव। उदात्तस्य शिरसि उपलभ्यमानत्वच्छिखोर्द्धरेखा लिख्यते। यजुर्वेदवरकशाखायामुपनिषदि उच्चैरुदात्तः समाहारः स्वरित इति लक्षणं द्रष्टव्यं। चन्द्रकिरणानामप्यस्तसमये उपरिगामित्वात् सूक्ष्मापरितनरेखातुल्यत्वादेवमुत्प्रेक्षितं। सूर्यप्रभोद्गमक्रमेण चन्द्रकिरणा अपि क्षीणीभूता इति भावः। हृता इति पाठे स्वीक-

व्रजति कुमुदे दृष्ट्वा मोहं दृशोरपिधायके
भवति च नले दूरं तारापतौ च हतौजसि ।
लघु रघुपतेर्जायां मायामयीमिव रावणि-
स्तिमिरचिकुरग्राहं रात्रिं छिनत्ति गभस्तिराट् ॥ ८ ॥

ता: । अमंशयं उभयत्रापि योज्यं । रुचि रुचां । प्लुत्यक इति (पा० ६।२।१२८) प्रकृति भावः ॥ ७ ॥

व्रजतीति ॥ गभस्तिराट् सूर्यः तिमिरमेव चिकुरास्तिमि-रतुल्याः केशास्तेषु गृहीतितग्राहं रात्रिं छिनत्ति लघु शीघ्रं विनाशयति । कः कामिव । रावणिरिन्द्रजित् मायामयीं माया-निर्मितां रघुपतेर्जायां सीतामिव । कस्मिन् सति । वाक्यार्थस्य कर्मत्वात्तदीयं छिंमनरूपं कर्म दृष्ट्वा कुमुदे कैरवे मोहं संकोचं व्रजति सति । अथ च सीताछिंमनरूपं कर्म दृष्ट्वा कुमुदाख्ये वानरे मूर्च्छां गच्छति सति । तथा नले भवति त्वयि दृष्ट्वा सूर्यो-दयसमयं ज्ञात्वा दृशोरपिधापके उन्मीलिननेत्रे सति । यद्वा नले त्वयि नेत्रयोराच्छादके भवति सति । अथ च नले वानर-सेनापतौ दारुणं तदीयं कर्म दृष्ट्वा किमपि कर्त्तुमशक्यत्वाद्दुः-खवशाद्वा तारापतौ सुग्रीवे च दृशोरपिधापके हतौजसि च निस्तेजस्के म्लानवदने सति रात्रिर्गता रविरुदितः कुमुदं च निमीलितं कमलं चोन्मीलितं चन्द्रश्च निःप्रभो जात इति भावः । मायामय्याः सीताया बध इन्द्रजिता कृत इति रा-मायणे । मायामयीं प्राचुर्ये मयट्टिङीप् । रावणिः अपत्यार्थे-

त्रिदशमिथुनक्रीडातल्पे विहायसि गाहते
निधुवनधुतस्रग्भागश्रीभरं ग्रहसङ्ग्रहः।
मृदुतरकराकारैस्तूलोत्करैरुदरंभरिः
परिहरति नाखण्डो गण्डोपधानविधां विधुः ॥ ९ ॥

वाक्यादित्वादिञ्। त्रिककुग्रहं सप्तम्यन्ते उपपदे समासस्तौ (पा० ३।४।५०) इति ग्रहेर्णमुल्। गभस्तिभी राजते गभस्तिराट्। सत्सूद्विषेति (पा० ३।२।६१) क्विप् ॥ ८ ॥

त्रिदशेति ॥ ग्रहसङ्ग्रहः शुक्रादिस्थूलताराप्रसङ्गः त्रिदशा देवास्तेषां मिथुनं तस्य क्रीडासम्बन्धिनि तल्पे मञ्चरूपे विहायसि गगने निधुवनं सुरतसंमर्दः तेन धुता विकीर्णाः स्रजः पुष्पमालाः तासां भाग एकदेशस्तस्य श्रीभरं शोभातिशयं गाहते आलम्बते. तथा विधुः अखण्डः पूर्णः वृत्तश्चन्द्रः गण्डोपधानविधां कपोलतल्पाधःस्थाप्यमानवृत्तशुभ्रतराकोपकप्रकारं न परिहरति त्यजति अङ्गीकरोत्येव. तदृक्शोभत इत्यर्थः। किम्भूतो विधुः मृदुतरकराकारैः अतिमृदुरश्मिरूपैस्तूलोत्करैः कार्पासमसमूहैरुदरंभरिः परिपूरितमध्यः। गण्डोपधानं मृदुतरकार्पासपूरितमध्यं वृत्तं शुभ्रं च भवति। स्थूलतरास्ताराश्च विकीर्यमाणकुसुमतुल्या इतस्ततो दृश्यन्ते। चन्द्रोऽपि सौरप्रकाशस्यासत्त्वेन मन्दुचिताभिः स्वकान्तिभिः मध्यमेव पूरयन्मर्दितगण्डोपधानवन्निःशोभोऽस्तमयाभिमुखो जात इति भावः। सङ्ग्रहः ग्रहवृदृनिश्चिगमश्च (पा० ३।३।५८) त्यप्। उत्करः

दशशतचतुर्वेदीशाखाविवर्त्तनमूर्त्तयः
सविधमधुनाऽलङ्कुर्वन्ति ध्रुवं रविरश्मयः ।
वदनकुहरेष्वध्येतॄणामयं तदुदञ्चति
श्रुतिपदमयस्तेषामेव प्रतिध्वनिरध्वनि ॥ १० ॥

उदरात् (पा० ३।३।५७)। उदरंभरिः, फलेग्रहिरात्मंभरिश्चेति (पा० ३।२।२६) चकारस्यानुक्तसमुच्चयार्थत्वादिन् मुमागमश्च ॥ ९ ॥

दशेति ॥ दशशतानि शाखा यासान्ता एकसहस्रसंख्याः चतुर्णामृग्वेदादिवेदानां समाहारश्चतुर्वेदी तस्याः शाखानामाश्वलायनतैत्तिरीयकादिसंज्ञानां तत्तद्वेदभागानां विवर्त्तनरूपा अतात्विकान्यथाभावरूपाः शाखारूपतां प्राप्ताः मूर्त्तयः स्वरूपाणि येषां तादृशा रविरश्मयः ध्रुवं यस्मादधुना प्रातःसमये सविधमस्मदादिसमीपप्रदेशं भूषयन्ति सर्व्वेऽपि समीपप्रदेशमागच्छन्ति तत् तस्मादयं अध्येतॄणां पठतां वदनलक्षणेषु कुहरेषु दरीषु विषये आकर्ण्यमानवर्णानुरूपस्तेषां वेदशाखीभवन्मूर्त्तीनां सूर्यकराणामेव श्रुतिपदमयो वेदपदरूपः प्रतिध्वनिः प्रतिशब्दोऽध्वनि गगने उदञ्चति ऊर्द्ध्वं प्रसरति। दरीषु प्रतिशब्दा युक्ताः। अध्वनि मध्यतारध्वनिरहितं यथा तथेति वा। अध्येतारो हि प्रातर्मन्द्रध्वनिना वेदानधीयन्ते। ध्रुवमुत्प्रेक्षायां वा। सूर्योदयो जातः अध्येतारश्च वेदानधीयन्त इत्यर्थः। दशशतेति मूर्त्तिविशेषणं। चतुर्वेदी समाहारे द्विगोर्ङीप्। पदमयः तादूप्ये मयट् ॥ १० ॥

नयति भगवानम्भोजस्यानिबन्धनबान्धवः
किमपि मघवत्प्रासादस्य प्रघाणमुपघ्नताम् ।
अपसरदरिध्वान्तप्रत्यग्वियत्पथमण्डली-
लगनफलदश्रान्तस्वर्णाचलभ्रमविभ्रमः ॥ ११ ॥

नयतीति ॥ अम्भोजस्य कमलकुलस्य अनिबन्धनबान्धवः अकारणमित्रं तदानन्दकारी भगवान् षड्गुणैश्वर्यसम्पन्नः सूर्यो मघवत इन्द्रस्य वैजयन्ताख्यस्य प्रासादस्य प्रघाणं अलिन्दं किमपि स्तोकं यथा तथा उपघ्नतां आश्रयतां नयति प्रापयति आश्रयति, तावत्पर्यन्तमूर्ध्वमागत इत्यर्थः । अथ च तं श्रियति । पराङ्मुखशत्रोः पुरुरस्य परस्पराश्लेषो युक्तः । किम्भूतः, अपसरत् पुरःपलायमानमरिरूपं ध्वान्तं तस्य प्रतीचः पश्चिमाशायाः सम्बन्धिनि वियत्पथे गगनमार्गे मण्डल्या संधीभावेन यल्लगनं संश्लेषः प्रत्यग्दिगन्तगामित्वं, लयनमिति पाठे संधीभावेन यत् तिरोधानं सामस्त्येनादर्शनं तेन फलन् सफलो भवन् अश्रान्तो निरन्तरः स्वर्णाचलस्य मेरोः प्रदक्षिणलक्षणो भ्रमः स एव विभ्रमो विलासो यस्य । सदस्तु परिपालनाय रात्रौ भ्रमतो यामिकस्य चोरपलायनेन यथा साफल्यं भवति तथा स्वर्णाचलरक्षणाय सूर्यस्य भ्रमणविलाससाफल्यं युक्तमित्यर्थः । अत एव स्वर्णाचलपदं प्रायोजि । अत्रापि पूर्वोत्तरार्द्धविपर्यासो ज्ञातव्यः । प्रघाणप्रघणालिन्दा इत्यमरः । बान्धवः प्रज्ञादित्वात् स्वार्थेऽण् । मघवत्प्रासादस्य प्रातिपदिकान्तत्वात्-

नभसि महसां ध्वान्तध्वाङ्क्षप्रमापणपक्षिणा-
मिह विहरणैः श्येनम्पातां रवेरवधारयन् ।
शशविशसनत्रासादाशामयाच्चरमां शशी
तदधिगमनात्तारापारावतैरुदडीयत ॥ १२ ॥

लोपः । अगारैकदेशे प्रघणः प्रघाणश्च । उपघ्न आश्रये (पा० ३।३।७८—८५) इति च प्रघाणोपघ्नशब्दौ साधू । प्रत्यक् दिक्शब्देभ्य (पा० ५।३।२७) इत्यस्तातेः अञ्चेर्लुगिति (पा० ५।३।३०) लुक् । तसिलादयस्तद्धिता (पा० १।१।३७अ०) इत्यव्ययत्वं ॥ ११ ॥

नभसीति ॥ शशी निजाङ्कवर्त्तिशशाख्यपशुविशेषस्य विशसनं मारणं तस्मात्त्रासो भयं तस्माच्चरमामाशां पश्चिमां दिशमयात्, ययौ । तथा तारा नक्षत्राणि तद्रूपैः पारावतैः तस्य चन्द्रपलायनवृत्तान्तस्य सूर्यमृगयारम्भवृत्तान्तस्य वा अधिगमनात् परिज्ञानात् उदडीयत पलायितं । किं विधः शशी । नभसि गगने ध्वान्तमन्धकारस्तद्रूपध्वाङ्क्षाणां काकानां प्रमापणे मारणे विषये पक्षिणां श्येनाख्यपक्षिरूपाणां महसां सूर्यतेजसां इह प्राग्भागे विहरणैः क्रीडनैः रवेः सूर्यस्य श्येनम्पातां मृगयामवधारयन् निर्धारयन् । अन्यस्मिन्नपि राज्ञि मृगयायां श्येनपातेन काकादीन् हिंसति सति शशयुक्तः पुरुषः मदीयं शशमपि मांसार्थमेतदीयाः श्येना हनिष्यन्तीति भिया पलाय्य गच्छति । पारावता अप्युड्डीय यान्ति । सूर्यकिरणा-

भृशमविभक्तास्तारा हाराच्च्युता इव मौक्तिकाः
सुरसुरतजक्रीडान्मूनाद्द्युमद्वियदङ्गणं ।
बहुकरकृतात्प्रातःसम्मार्जनादधुना पुन-
र्निरुपधिनिजावस्थालक्ष्मी विलक्षणमीक्ष्यते ॥ १३ ॥

गगने खेलन्ति चन्द्रः प्रतीचीं गतः । तारास्तु न दृश्यन्त इति भावः । इह नभसीति वा । शशिन नित्यं युक्तः शशी । श्यामा-दिव तदधिगमादिर्वेति च प्रतीयमानार्थता । अथ शशादनः । पक्षी श्येनः इत्यमरः । श्येनम्पाता च मृगया । पारावतः कल-रव इत्यमरः । पतनं पातः भावघञ् श्येनानां पातः श्येनपातः साऽस्यां क्रियायां वर्त्तते श्येनम्पाता मृगयेति । घञः साऽस्यां क्रियेतिञ (पा० ४।२।५८) इति ञः । श्येनतिलस्य पाते ञे इति मुम् ॥ १२ ॥

भृशमिति ॥ सुरसुरतं देवमिथुनरतं तस्माज्जाता क्रीडा विलासससम्मर्दः अथ च सुरतुल्यराजादिरतक्रीडासम्मर्दस्तेन लूनात्त्रुटितात् हारात् च्युता मुक्ता इव वृत्ततरास्तारा: द्युम-द्वियदङ्गणं सुराणामजिरभूतं यद्गगनं निशि नितरां अपू-पुरन्, तद्गगनं अधुना पुनः बहवः सहस्रं करा यस्य स सूर्य्यस्तेन अथच रजःशोधकेन खलप्वा कृतात् प्रातःसम्मार्जनात् प्राभा-तिकात् सम्यङ्मार्जनात्तिमिरनिराकरणद्वारा शोधनादथच शोधन्या रजोऽपनयनेन शोधनान्निरुपधिरुपाधिरहिता स्वाभा-विकी निजावस्था सहजदशा तस्याः श्रिया कृता तमीसम्बन्धि-

प्रथममुपहृत्यार्घं तारैरखण्डिततण्डुलै-
स्तिमिरपरिषद्दूर्वापर्वावलीशवलीकृतैः।
अथ रविरुचां ग्रासातिथ्यं नभः स्वविहारिभिः
सृजति शिशिरक्षोदश्रेणीमयैरुदसक्तुभिः॥ १४॥

शोभात्यागादथच रजःपुष्पमालामुक्ताद्युपाधित्याजनात् महज्जश्रिया विलक्षणमन्यादृशमीक्ष्यते विलोक्यते। सूर्य्योद्गमेन भूषितं ताराश्च सर्व्वथा न दृश्यन्त इत्यर्थः। इयदिति पाठे इस्ताभिनयादतिमहदित्यर्थः। खलपूः स्याद्बहुकर इत्यमरः। अविभक्तः। सिजभ्यस्तेति (पा० ३।४।१०९) झेर्जुस्। दिवि सीदन्तीति द्युसदः सत्सूद्विषेति (पा० ३।२।६१) क्विप्। हृद्युभ्यांङेरुपसङ्ख्यानं (पा० ६।३।९।वा० १) इत्यलुक् प्राप्तावपि तत्पुरुषे-कृतिबहुलमिति (पा० ६।३।१४) बाहुलकाङ्के लुक्। दिव उत (पा० ६।१।१३०) सात्पदाद्योरिति (पा० ८।३।१११) षत्वनिषेधः। बहुकरः खलपूपक्षे दिवा विभेति (पा० ३।२।२१) टः। उपधिः उपसर्गे घोः किः (पा० ३।३।९२)॥ १३॥

प्रथममिति। नभः कर्तृ रविरुचां तिमिरपरिषत् तमःसमूहस्तद्रूपा दूर्व्वापर्व्वावल्यो दूर्व्वाग्रन्थिपरम्परास्ताभिः शवलीकृतैः कर्बुरीकृतैर्मिश्रितैस्तारैर्नक्षत्ररूपैरुज्ज्वलैश्चाखण्डिततण्डुलैः अभग्नैस्तुषशालिबीजैः कृत्वा अर्घं पूजां प्रथमं उपहृत्य दत्वा अथानन्तरमेव स्वविहारिभिः स्वस्मिन् वर्त्तमानैः स्वमत्ताकैश्च शिशिरस्य हिमस्य क्षोदाश्चूर्णविन्दवस्तेषां श्रेणीमयैः परम्परा-

असुरहितमप्यादित्योत्थां विपत्तिमुपागतं
दितिसुतगुरुः प्राणैर्याक्तुं न किं कचवत्तमः।
पठति लुठतीं कण्ठे विद्यामयं मृतजीवनीं
यदि न वहते सन्ध्यामौनव्रतव्ययभीरुतां ॥ १५ ॥

रूपैः उदमन्थुभिः जलमिश्रयवचूर्णैः ग्रामातिथ्यं भोज्यान्नदानल-
क्षणमतिथिपूजनं सृजति करोति। अन्योऽपि तण्डुलदूर्वादल-
युतेन जलेन पूर्वमर्घं दत्वा सक्त्वादिना स्वगृहप्राप्तायातिथये
भोज्यं ददाति। सूर्य्यदीप्तयः पूर्वं तारास्तिमिरस्य हिमजल-
कणानप्यपनयन्ति स्मेति भावः। मन्थे पुंसाविधावर्घः। मुक्ता-
शुद्धौ च तारः स्यादित्यमरः। अत्र तारशब्दः पुंलिङ्गः। तार-
यति मांयात्रिकानिति ण्यन्तात्तरतः पचाद्यच्। रविरुचां
सम्बन्धसामान्यविवक्षया षष्ठी। उदकयुक्ताः सक्तवः मध्यमपद-
लोपी। उदकानि च सक्तवश्चेति वा समासः मन्थौदनेति (पा०
६।३।६०) उदादेशः ॥ १४ ॥

असुरेति। दितिसुता दैत्यास्तेषां गुरुः शुक्रः आदित्येभ्यो
देवेभ्यो हेतुभ्यः उत्थां जातां अथ च सूर्य्यात् सञ्जातां विपत्तिं
मरणं नाशञ्च कचवद्बृहस्पतिपुत्रवत् उपागतं प्राप्तं। असुरेभ्यो
हितमपि तेषां रात्रिञ्चरत्वादनुकूलमपि तमः प्राणैर्योक्तुं संयो-
जयितुं कण्ठे लुठतीं आयद्रूपां मृतानां जीवनीमित्यनुगतार्थां
विद्यां किं न पठति। अपि तु स्पष्टं पठेदेव। परं चेदयं
शुक्राचार्य्यः प्रातःकालीनसन्ध्यायां कानव्रतं मौनलक्षणं नियं-

उदयशिखरिप्रस्थान्यह्ना रणेऽत्र निशः क्षणे
दधति विहरत्पूषाण्युष्णद्रुताश्मजतुस्रवान्।

मस्तस्य व्ययोभङ्गस्तस्माद्भीरुतां भयशीलत्वं यदि न वहते न धारयेत्तर्हीति सम्बन्धः। मौनवशान्मृतजीवनीजपाभावात् कचमिव तमो न जीवयतीत्यर्थः। कचस्य जीवनादि भारतादिभ्योऽवगन्तव्यं। तमः सूर्येणा[illegible] नाशितमिति भावः। असुरहितं चतुर्थी तदर्थेति (पा० २।१।३६) समासः। कचवत् तेन तुल्यमिति (पा० ५।१।११५) वतिः। पठति वहते कालसामान्ये लट्। लुठतीं वैकल्पिकत्वान्नुमभावः॥ १५॥

उदयेति। अह्ना दिनेन सह निशः रात्रेः रणे सङ्ग्रामरूपेऽत्रास्मिन् क्षणे प्रातःकाल इत्यर्थः। तत्र उदयशिखरी उदयाचलस्तस्य प्रस्थानि शिखराणि कर्तॄणि उष्णभिः प्रातःकालीनातपसन्तापैः द्रुतानां विलीनानां अश्मजतूनां शिलाजतूनां स्रवान् प्रवाहान् दधति। यद्वा क्षणं उत्सवतुल्यं रात्रिविनाशकारित्वात् सङ्ग्राम इव, सङ्ग्रामे विहरंस्तयोर्युद्धकौतुकदर्शनेन परिक्रीडमानः पूषा सूर्य्यः ग्रहराजो यत्रैवम्भूतान्युदयाचलसानूनि बालातपसन्तापविलीनशिलाजतुस्रवत्प्रवाहानेव कियत्कालविलम्बधूमलीभूतरुधिरप्रवाहान् धारयन्ति। रणभूमिषु हि कालविलम्बेन धूमला रुधिरप्रवाहा भवन्ति। अत एवोदयन् उदयं प्राप्नुवन् अरुणो अग्रजस्तत्सम्बन्धिनि प्रह्वीभावे नमस्कारे विषये य आदरो भक्त्यतिशयस्तस्माद्धेतोः अरु-

उदयदरुणप्रक्षोभावादरादरुणानुजे
मिलति किमु ततसङ्गाच्छङ्का नवेष्टकवेष्टना ॥ १६ ॥
रविरथहयानश्वस्यन्ति ध्रुवं वडवा बल-
प्रतिबलबलावस्थायिन्यः समीक्ष्य समीपगान्।

णानुजे गरुडे मिलति सङ्गमं प्राप्नुवति सति तयोररुणगरुडयोः सङ्गात्सम्मेलनाद्धेतोः रक्तप्रदीप्त्या नवा मास्कान्तगायाकादाकष्टा इष्टका यत्र तादृशी नूतनेष्टकानिर्मिता वेष्टना। नवा इष्टका यत्र शिल्पे तन्नवेष्टकं तेन वेष्टना प्राकार इति वा। किमु न शङ्का न तर्क्या अपि तु सैव तर्क्येत्यर्थः। परिचारभूते दिनप्रकाशे युद्ध्यमाने तद्दर्शिना लीलाविहारिणा गरुडराजस्य स्वामिना महाराजोचितगैरिकसुवर्णभूषितप्राकारोर्ध्वस्थितिः उचिता सम्भाव्यते। अथच दिनराज्ञोः सेनानीभूतयोः सङ्ग्रामे उदयाचलमानूनि तद्भटतुल्यानि रुधिरं धारयन्ति। भटाः प्रहारवशात् रक्तसिक्ता भवन्ति। तत्र च दिनपक्षीयप्रस्थानां जयित्वात् सुवर्णमयगरुडसम्पर्काद्धा इष्टकस्य वेष्टना सुवर्णपट्टि-काया धारणा न तर्क्या किं, अपि तु जयिनां तया भवितव्य-मेवेति, गरुडस्तेषां सुवर्णमयविरुदपट्टिकास्थाने जात इत्युचित-मित्यर्थः। नवेष्टकवेष्टनेति स्त्रियाः पुंवदिति (पा० ६।३।३४) पुंवत्। वेष्टकः। कर्त्तरि ण्वुल् ॥ १६ ॥

रवीति। भो राजन् सम्प्रति प्रातःकाले बलस्य प्रतिबलः शत्रुः प्राचीवर्त्तीन्द्रस्तस्य बलं सैन्यं तत्रावस्थायिन्यो मध्यवर्त्तिन्यो

निजपरिवृढं गाढप्रेमा रथाङ्गविहङ्गमी
स्मरशरपराधीनस्वान्ता वृषस्यति सम्प्रति ॥ १७ ॥

वडवास्तुरग्यो गाढप्रेमाः सूर्याश्वेषु दृढानुरागाः सत्यः रविरथस्थान् समीपगान् समीक्ष्य मैथुनार्थं आत्मनोऽश्वानिच्छन्ति भूत्रमुत्प्रेक्षायां निश्चितं वा इच्छन्तीवेत्यर्थः। यतः स्मरशरपराधीनं स्वान्तं चित्तं यासां ताः। तथा रथाङ्गविहङ्गमी चक्रवाक्यपि निजं स्वीयं परिवृढं चक्रवाकं इदानीं प्रातः समीपमागमनं दृष्ट्वा कामवाणवशचित्ता अतएव रात्रिवियोगेन दृढानुरागा सती मैथुनवाञ्छया वृषस्यति आत्मनो वृषमिच्छति। वृषवद्बलवन्तं तं मैथुनार्थं कामयतीत्यर्थः। सूर्य्याश्वाः पूर्व्वस्यां आगताश्चक्रवाकयोश्च सङ्गमो जात इति भावः। अश्वस्यन्ति वृषस्यति आत्मनोऽश्वानिच्छन्ति वृषमिच्छतीति च सुप आत्मन (पा० ३।१।८) इति क्यचि अश्ववृषयोर्मैथुनेच्छायामिति (पा० ७।१।५१।वा० १) मैथुनेच्छायामसुगागमः। व्युत्पत्तिमात्रञ्चैतत्। रूढ्या तु मैथुनार्थमिच्छन्तीत्येवार्थः। वृषस्यती तु कामुकीत्यमरः। तथा कति रामो वृषस्यतीमिति च कालिदासः। प्रभौ परिवृढ (पा० ७।२।२१) इति निपातः। गाढप्रेमेति डाबुभ्यामिति (पा० ४।१।१३) पक्षद्वयेऽपि डाप्। यो वैकल्पिकत्वादेव वनन्तः। विहङ्गमी जातित्वात् ङीप्। रथाङ्गं चासौ विहङ्गमी चेति समासः ॥ १७ ॥

निशि निरशनाः क्षीरस्यन्तः क्षुधाऽश्वकिशोरका
मधुरमधुरं ह्रेषन्त्येते विलोलितवालधि ।
तुरगसमजः स्थानोत्थायं क्षणान्मणिमन्थभू-
धरभवशिलालेहायेहाचणो लवणस्यति ॥ १८ ॥

निशीति । भो राजन् निशि रात्रौ निरशना निराहारा अतएव क्षुधा क्षीरस्यन्तः आत्मनोऽर्थं क्षीरं दुग्धमिच्छन्तः एते अश्वकिशोरकाः अतिप्रसिद्धा अश्वबालकाः मधुरमधुरं अतिकलशब्दं यथा तथा विलोलिताः पुनः पुनश्चालिताः बालधयः पुच्छानि यस्यां क्रियायां तद्यथा तथा ह्रेषन्ति । ह्रेषारवं कुर्व्वन्ति । तथा तव मन्दुरायां स्थितस्तुरगाणां समजः समूहः स्थानोत्थायं शय्यास्थानाच्छीघ्रमुत्थाय क्षणान् ह्रेषमाणः सन् मणिमन्थनामकं भूधरं भवानां जातानां शिलानां सैन्धवशिलानां लेहायास्वादनाय ईहया इच्छया पुनः पुनर्मुखादिचालनचेष्टया वा चणः ख्यातः सन् लवणस्यति । आत्मनो लामुपलम लवणमिच्छति । अश्वकिशोरकाः प्रातः क्षीरपानार्थं ह्रेषन्ते । अश्वास्तु प्रातः सैन्धवास्वादनाय ह्रेषन्त इति जातिः । सूर्य्योदयो जात इत्यर्थः । क्षीरस्यन्तो लवणस्यतीत्यत्र चात्मेच्छायां क्यचि अश्वक्षीरेत्यादिना क्षीरलवणयोर्लालसायामिति (पा० ७।१।५१।वा० २) वचनात् लालसायामसुक् । किशोरकाः अल्प इति (पा० ५।३।८५) कः । ह्रेषन्ति ह्रेष इत्स्वने । समजः पशुविषयत्वात् समुदोरज (पा० ३।३।६९) इत्यप् । स्थानोत्थायं अपादाने परीप्सायामिति (पा० ३।४।५२) णमुल् । लेहः भावघञ् ॥ १८ ॥

उडुपरिषदः किं नार्हत्त्वं निशः किमु नौचिती
पतिरिह न यत्ताभ्यां दृष्टो गलेयरुचीगणः।
स्फुटमुडुपतेराश्मं वक्षः स्फुरन्मलिनाश्मन
श्छवि यदनयोर्विच्छेदेपि द्रुतं बत न द्रुतं ॥ १८ ॥

उडुरिति। हे राजन् उडुपरिषदः नक्षत्रपरम्परायाः अर्हत्त्वं किं न अपि तु औचित्यमेवैतत् तथा निशोरात्रेः औचिती न किमु अपि तौचित्यमेव यद्यस्मात्ताभ्यां तारापङ्क्तिविभावरीभ्यां गलेयान्ती रुचीगणा दीप्तिसमूहः क्षीणतेजाः पतिः प्राणेशश्चन्द्रः इहास्मिन् समये न दृष्टः। तस्मात्तयोरौचित्यमेवेत्यर्थः। धन्यास्ता या न पश्यन्ति पतिभङ्गं कुलक्षयमिति वचनात् पतिविपदमदृष्ट्वैव द्वयोरपि ध्वस्तत्वादौचित्यैव जातेत्यर्थः। स्फुरन्ती प्रकाशमाना कलङ्कव्याजेन मलिना कृष्णा आश्मनी पाषाणसम्बन्धिनी छविः कान्तिर्यस्यैवम्भूतं उडुपतेर्वक्षोमध्यं अथ च हृदयं स्फुटं निश्चितं आश्मं पाषाणविकाररूपं पाषाणघटितमिवातिकठिनं मलिनं चेत्यर्थः। यद्यस्मादनयोस्ताराराच्योर्विच्छेदे वियोगेऽथच विनाशे सत्यपि द्रुतं शीघ्रं द्रुतं स्फुटितं पाषाणनिर्मितमेवेत्यर्थः। बत खेदे। यत्। वक्षोविशेषणं वा। स्वस्यापि विलये निकटे सत्यपि तत्पतिना चन्द्रेण स्वप्रेयस्याः प्रेम न दर्शितमिति तस्यानौचितीत्यर्थः। तारापरम्परा रात्रिश्च विनष्टा। चन्द्रोपि क्षीणतेजा आसन्ननाशो जात इत्यर्थः। आर्हन्तीति पाठे अर्हः प्रशंसायामिति (पा० ३।२।१३३) शतरि अर्हता

अरुणकिरणे वह्नौ लाजानुडूनि जुहोति या
परिणयति तां सन्ध्यामेनामवैमि मणिर्द्दिवः ।
इयमिव स एवाग्निभ्रान्तिं करोति पुरा यतः
करमपि न कस्तस्यैवोत्कः सकौतुकमीक्षितुम् ॥ २० ॥

मात्र इत्यर्थे ब्राह्मणादित्वात् (पा०५।१।१२४) ष्यञि षित्त्वात् ङीप्। अर्हतो नुम् चेति (पा०५।१।१२४।वा०२) नुम्। आश्म विकारेऽपि अश्मनो विकारे टिलोपः (पा०६।४।१४४।वा०१) इति टिलोपः। आश्मनेति सम्बन्धेऽपि विकाराभावाट्टिलोपाभावे, आश्मनी चासौ छविश्चेति समासे पुंवत् कर्मधारयेति (पा०६।३।४२) पुंवत् ॥ १९ ॥

अरुणेति । भो राजन् या सन्ध्या अरुणस्य किरणरूपे वह्नौ । उडूनि नक्षत्राण्येव लाजान् जुहोति । दिवो मणिः सूर्यस्तामेतां प्रातःसन्ध्यां परिणयति प्रापयति विवाहयतीति अहं अवैमि मन्ये । यतः इयमिव सन्ध्या यथा रक्तवर्णत्वादग्निभ्रान्तिं वह्नि-विपर्य्ययज्ञानं पुरा करोति स्म अकरोत् । यद्वा यथैव करोति तथा स एव सूर्योऽपि रक्तवर्णत्वात् उष्णत्वाच्च वह्निबुद्धिं पुरा करोति उदितमात्र एव करिष्यति। अथवेयं सन्ध्या पुरा प्रथमं वह्निप्रदक्षिणं परिभ्रमणं यथा करोति तथैवास्या अनन्तरमेव सूर्योऽपि वह्निप्रदक्षिणं परिभ्रमणमिदानीमेव करिष्यति। एव-कारोऽप्यर्थः। यतश्च सकौतुकं यथा तथा तस्य सूर्यस्यैव करं किरणमपीक्षितुं कः पुरुषो न उत्कः नोत्कण्ठितजनः, अपि तु

रतिरतिपतिद्वैतश्रीकौ धुरं बिभृमस्तरां
प्रियवचसि यन्नग्नाचार्य्या वदामतमां ततः।

मन्देहराक्षसनिराकरणद्वारा अस्य किरणमोचितुं सर्व्वोऽप्यर्घदानं करोतीत्यर्थः। अथ च सकौतुकं माङ्गलिकसूत्रकङ्कणेन सह तस्य विवोढुः सूर्य्यस्यैव हस्तमपि वीचितुं कः पुरुषो नात्मनाः अपि तु सकङ्कणं वरकरं सर्व्वोऽपि द्रष्टुमुत्कण्ठित एव। या च वधूः परिणीयते सा प्रदीप्ते वह्नौ लाजान् जुहोति, सा च वह्निं पूर्व्वं प्रदक्षिणीकरोति। वरोऽपि तया सह पश्चात्प्रदक्षिणीकरोतीति सन्ध्यासूर्य्ययोर्वधूवरत्वमुक्तं। अरुणोदयो जातस्तत्प्रभया च तारा न दृश्यन्ते, अधुना रविरुदेतीति भावः। कौतुकं कुतुके ख्यातं हस्तसूत्रेऽपि कथ्यत इति विश्वः। किरण इति पक्षे जातावेकवचनं, परिणयति णोपदेशत्वाण्णत्वं। इयमिव पुरा करोतीति पक्षे पुरिलुङ्चेति (पा० ३।२।१२२) भूते लट्। पक्षान्तरे तु यावत्पुरेति (पा० ३।३।४) भविष्यति लट्॥ २०॥

रतीति। रतिरतिपत्योः रतिकामयोः द्वितैव द्वैतं रतिद्वैतं कामद्वैतमिति यावत्। तस्येव श्रीः शोभा ययोस्तत्सम्बोधनं हे भैमिनलौ नग्नानां वन्दिनामाचार्य्या वैतालिका वयं प्रिये मनोऽनुकूले वचसि यद्यस्माद्धुरं भारं बिभृमस्तरां चाटुवचनेषु वयमेव प्रगल्भतराः, ततस्तस्मात् वदामतमां अतितमां ब्रूवाम। सूर्य्योदयो जातस्तस्मात् क्रीडां त्यक्त्वा शीघ्रं शय्याया उत्तिष्ठतं इति प्रातःकाले धार्ष्ट्येन ब्रूम इत्यर्थः। यद्यूयं प्रियवचनचतुरा-

अपि विरचितो विघ्नः पुण्यद्रुहः खलु नर्मणः
परुषमरुषे नैकस्यै वामुदेतु मुदेऽपि तत् ॥ ६१ ॥

स्तर्ह्येवं परुषं किमिति वदथेत्याशङ्क्याह । तदस्मदुक्तं परुषं वच एव पुण्यद्रुहः प्रातःकालीनस्नानसन्ध्यादिधर्म्मविरोधिनः नर्म्मणः प्रातःकालीनालिङ्गनचुम्बनादिविलासस्य पुनः प्रबोधपूर्व्वमुत्थापनादिरचितोऽपि विघ्नः वां युवयोरेकस्यै अरुषे क्रोधाभावाय उदेत्विति न किन्तु खलु निश्चितं मुदेऽपि हर्षायापि उदेतु । यद्यप्येतदुक्तं तथापि रोषो न कार्य्यः परुषस्यापि पुण्यहेतुत्वात्, हर्षोऽपि यस्माद्भविष्यति । तथा च हितवादित्व अवयवतात्पर्य्यात् प्रियवचनचातुर्य्यमप्याहृतमेवेत्यर्थः । क्रीडां विहाय शीघ्रमुत्तिष्ठतमिति भावः । रतोत्यादिविशेषणेन नर्मोचितौ सूचिता । वां युवयोर्मध्ये अरुषे रोषहीनायै एकस्यै भैम्यै मुदे नोदेतु भैम्याः सम्भोगप्रियत्वान्नर्मविघ्ने यद्यपि सन्तोषो न भवेत्तथापि तव प्रियपुण्यत्वादेवास्माभिरुच्यत इत्यर्थ इति वा । भैम्याः कोपाभावायापि नोदेतु मुदेऽपि नोदेतु, भैम्या रोषो वास्तु तोषोऽपि माभूत्तथापि समयोचितमुच्यत एवेति वा । तत्तस्मादवसरोचितभाषित्वात् पुण्यद्रुहो नर्मणः परुषं यथा तथा विरचितो विघ्नोऽपि निश्चितमकोपाय केवलं उदेतु इति न किन्तु मुदेऽप्युदेतु । सदास्वोपजीविना अभिहितेऽपि परुषे रोषो न भवति किन्तु हर्ष एव भवतीत्यर्थ इति वा । किञ्च प्रियवचःप्रवीणा अपि वयं यतो नग्नाचार्य्या जितलज्जा अतः स्वच्छन्दं वदाम

भव लघु युताकान्तः सन्ध्यामुपास्व तपोमय
त्वरयति कथं सन्ध्येयं त्वां न नाम निशानुजा ।
द्युतिपतिरथावश्यङ्कारी दिनोदयमासिता
हरिपतिहरित्पूर्णभ्रूणायितः कियतः क्षणान् ॥ २२ ॥

इति भावः । नग्ना वन्दिक्षपणयोरिति विश्वः । वदामतमां प्रैषातिसर्गेति (पा० ३।३।१६३) प्राप्तकाले लोट् । तिङश्चेति (पा० ५।३।५६) अतिशये तमप् । पुष्पद्रुहः सत्सूद्विषेति (पा० ३।२।६१) क्विप् । उदेतीति पाठे वर्त्तमानसामीप्य इति (पा० ३।३।१३१) भविष्यति लट् । एकस्मै तादर्थ्यमात्रविवक्षया चतुर्थी ॥ २१ ॥

भवेति । हे राजन् त्वं तस्मात् लघु शीघ्रं युता पृथग्भूता कान्ता यस्मादेवम्भूतो भव । इदानीं भैम्या सह क्रीडां त्यज । ततः सन्ध्यां नित्यकृत्योपासनामुपास्व कुरु । हे तपोमय नित्यकर्माद्यनुष्ठानरूपेण धर्म्मेणामलोज्ज्वलनिर्दोष निशानुजा रात्र्यनन्तरजाता प्राभातिकी इयं सन्ध्या त्वां कथं नाम न त्वरयति अपि तु त्वरयत्येव । अथ मुहूर्त्तानन्तरक्षणे द्युतिपतिः सूर्य्यः दिनोदयं दिवसप्रारम्भमवश्यं कारी अवश्यं करिष्यति उदेष्यतीत्यर्थः । यतो हरिरिन्द्रः पतिर्यस्यास्तस्या हरितो दिशः प्राच्याः पूर्णभ्रूणायितः दशमासगर्भ इवाचरितो रक्ततरः कियतस्त्रिचतुरानेव क्षणान् आसिता स्थाता । प्रातःसन्ध्यामुपास्वेत्यर्थः । युतेति युमिश्रणामिश्रणयोरिति अस्मादमिश्रणे क्तः त्यक्तादिपदत्यागेन अमङ्गलप्रतीतिपरिहारार्थं युतेति श्लिष्टपदं

मुषितमनसश्चित्रं भैमि त्वयाद्य कलागृहै-
र्निषधवसुधानाथस्यापि श्लथश्लथता विधौ ।
अजगणदयं सन्ध्यां वन्ध्यां विधाय न दूषणं
नमसितुमना यन्नाम स्यान्न संप्रति पूषणं ॥ २३ ॥

प्रायोजि। सन्ध्यापदेन कर्मानुष्ठानपर्यन्तमेव कान्तारहिता भव तदनन्तरं पुनरपि युता संयुक्ता कान्ता येनेति मिश्रणमपि विवक्षितं एतदर्थमेतत्प्रायोजि वा। कान्ताशब्दस्य प्रियादित्वाद्युते-त्यस्य न पुंवत्। लक्ष्यति हेतुमण्णिच्। कारीति भविष्यत्यावश्यके णिनिः। तद्योगे अकेनोरिति (पा० २।३।७०) निषेधात् दिना-दर्यमिति षष्ठ्यभावः। आमिता लुट्। अगणयितः आचारक्य-ङन्तात् क्तः। क्षणान् कालवाचित्वाद्द्वितीया ॥ २२ ॥

मुषितेति। हे भैमि चतुःषष्टिकलानां गृहैर्निवासभूतया त्वया अद्य मुषितं चोरितं मनो यस्यापहृतचित्तस्य ध्यानगतस्व-भावस्य वा निषधवसुधानाथस्य नलस्यापि विधौ अभिविहितस-न्ध्यादिनित्यकर्मणि विषये श्लथश्लथता श्लथप्रकारता आलस्याति-शयोऽनादरातिशयो वा वर्त्तत इति चित्रं। परमधार्मिकोऽप्य-नेककलाभिज्ञया त्वया स्ववशीकारेण धर्मविमुखः कृत इत्याश्चर्यं अनुचितमेतदित्यर्थः। अथ च कलानिधिभूतया त्वया मुषि-तमनस्कत्वात्कलानिधौ विधावपि अनादर इति चित्रं। कथं शैथिल्यमित्यत आह। यद्यस्मात् परमधार्मिकोऽप्ययं सन्ध्यां वन्ध्यां सन्ध्योपलक्षितप्रातःकृत्यरहितां विधाय कृत्वा विहिताकरण-

न विदुषितरा काचित्त्वत्तस्ततो नियतक्रिया-
पतनदुरिते हेतुर्भर्त्तुर्मनस्विनि मा स्म भूः।
अनिशभवदत्यागादेनं जनः खलु कामुकी-
सुभगमभिधास्यत्युद्दामापराङ्कवदावदः॥ २४॥

जन्यं दूषणं नाजगणत्। यच्च सम्प्रति पूषणं सूर्यं नमस्कर्त्तुमना-नाम नमस्कर्त्तुकामोऽपि न स्याद्भवति। नामाप्यर्थे। परित्यक्तनि-त्यकर्म्मा सूर्यस्य नमस्कारमपि न करोतीत्युपालम्भः। अन्योऽपि कामी कस्याश्चिदासक्तो निजधर्म्मपत्नीमसंभुञ्जानो वन्ध्यां वि-धत्ते दोषञ्च न गणयति सम्भोगविघ्नभूतत्वाद्दिनकरमपि नाद्रि-यते। तथा अयमपि। सन्ध्यादिनित्यकर्म्मानुष्ठानार्थं क्षणमपि न मुमोचेति भावः। गृहशब्दस्य पुंस्त्वाद्बहुवचनान्तत्वेऽपि त्वये-त्यनेन सामानाधिकरण्यं युक्तं। स्यात् सम्भावने लिङ्॥ २३॥

नेति॥ भो मनस्विन्यतिधैर्ययुक्ते सावधाने वा त्वत्सका-शाद्विदुषितरा नितरां पण्डिता सर्व्वलोकशास्त्ररहस्यविदुषी काप्यन्या यद्यस्मान्नास्ति ततस्तस्माद्भर्त्तुर्नलस्य नियतक्रियापत-नान्नित्यसन्ध्यादिकर्म्मलोपाद्यद्दुरितं तत्र त्वं हेतुः मा स्म भूः सन्ध्याद्यनुष्ठानार्थं शीघ्रमेनं मुञ्चेत्यर्थः। किञ्च खलु यस्मात् उद्दामो निरङ्कुशोऽतएव पराङ्कवदावदः अन्यदीयकलङ्कभा-षणशीलो जनः अनिशं भवत्या अत्यागात् भवत्या कर्त्तृभूतया वा ऽमोचनात् हेतोरेनं नलं कामुक्यामतितरां मैथुनेच्छावत्यां सुभगं तत्परवशं कामुकी पूर्व्वोक्ता सुभगा सौभाग्यवती भवा-

रह सहचरीमेतां राजन्नपि स्त्रितमां स्त्रणं
तरणिकिरणैः स्तोकोन्मुक्तैः समालभते नभः ।
उदधिनिरयङ्गास्वतस्वर्णोदकुम्भदिदृक्षुता
दधति नलिनं प्रस्थायिन्यः श्रियः कुमुदान्मुदा ॥ २५ ॥

दृशौ स्त्री यस्य एवम्भूतं वाऽभिधास्यति वदिष्यति । स्त्रीपरव-शत्वादयं नित्यकर्म्मापि त्यजतीति निन्दां करिष्यति तस्माद्विहि-ता[illegible] एवं मुखेति भावः । विदुषितरा उगित्वात् ङीपि तरपि उगितश्चेति (पा० ६।३।४५) पक्षे ह्रस्वः । भवदत्यागात् सर्व्वनामत्वात पुंवत् । पूर्वेण सह मयूरव्यं सकादित्वात् समासः । सुभगाशब्दस्य प्रियादित्वात् पूर्व्वस्य न पुंवत् । वदतीति वदावदः पचाद्यच । चरिचलीत्या-दिना (पा० ६।१।१२।वा० ७) द्वित्वमभ्यासस्यागागमश्च ॥ २४ ॥

रहेति ॥ हे राजन् त्वं सहचरीं सदा सहचरणशीलां तया स्त्रितमां स्त्रीषु श्रेष्ठां एवम्भूतामप्येतां [illegible] मुञ्च । यतः नभः स्तोकोन्मुक्तैः अल्पनिर्गतैर्बालैस्तरणेः सूर्यस्य किरणैः क-रणैः समालभते आत्मानः कुङ्कुमानुलेपनं करोति । तथा सङ्कुचतः कुमुदात् सकाशाद्विकासोन्मुखं नलिनं कमलवनं प्रति मुदा प्रस्थायिन्यः प्रस्थास्यन्तो तत्रत्या: श्रियः उदधेः सकाशा-न्निरयन्निर्गच्छन् भास्वान् सूर्य एवोदकुम्भो जलपूर्णः जलशस्तं दिदृक्षुतां दर्शनेच्छुतां दधति धारयन्ति । कुमुदान्निर्गताः सत्यः कमलवनं प्रतिगन्तु सूर्योदयं प्रतीक्षन्त इत्यर्थः । जिग-

प्रथमककुभः पान्थत्वेन स्फुटेोचितवृत्तयो
गयनपदमिह द्रक्ष्यन्ति त्वां महांसि महःपतेः।
पटिमवहनाद्रूहापोहक्षमाणि वितन्वता
महह युवयोस्तावन्मन्त्रीविवेचनचातुरी ॥ २६ ॥

भिषजो हि जलपूर्णं कुम्भं विप्रतीचन्ते। प्रभातं जातमित्यर्थः। तस्मान्नित्यकर्मानुष्ठानार्थमत्यजनीयामपि नौ क्षणमात्रं मुञ्चेति भावः। रह रहत्यागे, स्तितमां पूर्ववत्। स्तोकान्मुक्तेः स्तोकान्तिकेति (पा० २।१।३९) पञ्चमी समासः पञ्चम्याः स्तोकादिभ्य (पा० ६।३।२) इत्यलुक्। कुमुदान्निर्गता इत्यस्मात्कृता उदकुम्भः एकहलादौ पूरयितव्य (पा० ६।३।५९) इत्युदकस्योदादेशः। दिदृक्षुरित्यप्रत्ययां तत्वाक्तलोकेति (पा० २।३।६९) षष्ठीनिषेधाद्द्वितीयेतियोगविभागात् समासः ॥ २५ ॥

प्रथमेति॥ हे राजन् महःपतेः सूर्यस्य महांसि तेजांसि प्रथमककुभः प्राच्याः पान्थत्वेन पथिकतया तेनैव मार्गेणागमनवशात् स्फुटं सविशेषमोचिता वृत्तयो येषां तादृशानि सन्ति, अनुपदमनन्तरं सविधमागत्य इह प्रासादे वर्त्तमानं त्वां द्रक्ष्यन्ति विलोकयिष्यन्ति। अनन्तरं पटिम्नोऽतितैक्ष्ण्यस्याथ च प्रज्ञातिशयस्य वहनाद्धारणात् असतः प्रकाशादेः प्रकटीकरणं ऊहः सतश्च तिमिरादेरपोहो निराकरणं तयोः क्षमाणि समर्थानि अनुक्तस्याप्यर्थस्य प्रज्ञावशादूहनमूह ऊहो वा उक्तस्यापि दोषोद्भावनाद्वर्जनमपोहस्तत्र समर्थानि सामान्यविशेष

अनतिशिथिले पुंस्त्वेन प्रगल्भबलाः खलु
प्रसभमलयः पाथोजास्ये निविश्य निरित्वराः।

भावादिनिर्णयनिपुणानि तानि रवितेजांसि युवयोरिन्द्रनल-योस्तावतीनामनेकप्रकाराणां शोभासम्पद्रूपाणां लक्ष्मीणां विवेचनचातुरीं तारतम्यविचारकौशलं वितन्वतां विस्तारयन्तु अहह चित्रं। अन्यैरेवंविधस्य चातुर्यस्यादर्शनादाश्चर्यं। इन्द्रातिशयितशोभासम्पत्तिमान्नलो वेति संशये प्रथमदर्शनादिन्द्रशोभासम्पत्तिसत्त्वसामान्यबुद्धिः। अनन्तरं च नलदर्शनान्नलशोभासम्पत्तिसत्त्वविशेषबुद्धिरिति सामान्यापेक्षया विशेषस्य बलवत्त्वात्, उभयदर्शिभिः सूर्यकिरणैरिन्द्रापेक्षया शोभासम्पत्तिभ्यां नल एवाधिक इति निर्णीयतामिति भावः। अन्योऽपि प्राज्ञः ऊहापोहक्षमः सामान्यविशेषभावादिचातुरीं तनोति। अन्वगन्वक्षमनुगनुपदं क्लीबमव्ययमित्यमरः। पटिमा पृथ्वादिः। ऊहा स्त्रीत्वविवक्षायां गुरोश्च हलः (पा० ३।३।१०३) इत्यप्रत्ययः॥ २६ ॥

अनतीति॥ हे राजन् खलु यस्मात् पुंस्त्वेन पौरुषेण प्रगल्भबलाः उत्कटशक्त्योऽतिधृष्टाः अतएवानतिशिथिले विकासान्मुखे अत्यकठिनेऽप्यधिककाठिन्येऽपि पाथोजास्ये कमलमुखे मकरन्दग्रहणार्थं प्रसभं हठान्निविश्य प्रविश्य निरित्वराः निर्गमशीलाः एवम्भूताः अलयः भ्रमराः किमपि कियदर्द्धं मुखतः मुखं कृत्वा आनीतं किमप्यपूर्व्वरसं स्वादुतरं सरोजिनीमधुरसं

हिमपि मुखतः कृत्वा नीतं वितीर्य सरोजिनी-
मधुरसमुषोयोगे जायां नवान्नमचीकरन्॥ २७॥
मिहिरकिरणाभोगम्भोक्तुं प्रवृत्ततया पुरः
कलितचुलुकापोशानस्य ग्रहार्थमियं किमु।

कमलिनीमकरन्दरूपं रसं आस्वाद्यं वस्तु उषोयोगे प्रभातकाले वितीर्य दत्त्वा नवान्नं नूतनमपूर्व्वमथ च प्रेमभरात् स्वयमभुक्तमनुच्छिष्टमेव जायां मधुकर्यो इत्यर्थः। अचीकरन् कारयामासुः। अविकसितेऽतिकठिने कमले अबलत्वात् प्रवेष्टुमशक्ता एता इति कृत्वा पौरुषेण स्वयं तत्र प्रविश्य मकरन्दं मुखे धृत्वा समानीय मधुकरीभ्यो दत्वा ताभिस्तद्भोजयामासुरित्यर्थः। किञ्चिदाखण्डमैारप्रकाशत्वात् कमलानि विकासोन्मुखानि जातानीति भावः। अन्येनापि प्रातः शुभयोगेऽन्नप्राशनं कार्य्यते। उषायोग इति पाठो विभावनीयः। नक्तमुषाचशार्वरीति चेति इत्यमरः। उषायोगे अर्थाद्दिनेन सहयोगे प्रातरित्यर्थः। निरिन्धनः। इणनशजी (पा॰ ३।२।१६३) तिक्करप्। मुखतः कृत्वेति नराः। इत्यमशब्दप्रत्यय इति (पा॰ ३।४।६१) कृञः क्त्वा। जायां हृक्रोरन्यतरस्यामिति (पा॰ १।४।५३) कर्म्मत्वं। जाया इत्यपि पाठः॥ २७॥

मिहिरेति॥ सरोजिनी कमलिनी दिनोदये प्रातःकाले प्राक्तन्यदलापेक्षया पूर्व्वविकसितेनैकन दलेन पत्रेणोपलक्षिता मालाकर्मुरात्मनः पश्यतो जनस्य इति मतिं जनयति। इति किं इयं मिहिरस्य सूर्य्यस्य किरणानां आभोगं परिपूर्णतां

इति विकसितेनैकेन प्राग्दलेन सरोजिनी
जनयति मतिं साक्षात्कर्तुं जनस्य दिनोदये ॥ २८ ॥
तटतरुखगश्रेणीसाराविणीरिव साम्प्रतं
सरसि विगलन्निद्रामुद्राऽजनिष्ट सरोजिनी ।
अधरसुधया मध्ये मध्ये वधूमुखलब्धया
धयति मधुपः स्वादुङ्कारं मधूनि सरोरुहां ॥ २९ ॥

भोक्तुं अनुभवितुमथ च भक्षयितुं प्रवृत्ततया कृतप्रारम्भतया हेतुभूतया पुनर्भोजनादावन्नस्यामृतकरणार्थस्यापोशानस्योपस्तरणमन्त्रोदकस्य ग्रहार्थं कल्पिता बद्धसम्पुटकः प्रकृतिविशेषो यया एवम्भूता किम्। भोजने प्रवृत्तेनापोशानक्रियापूर्व्वमादावन्ते च भोक्तव्यमिति स्मृतेः। अपोशानग्रहीता करकमले एकां कनिष्ठामङ्गुलिं प्रसारयति अन्यास्तु संकोचयतीति संप्रदायः। कमलविकाससमयो जातस्तस्मादुद्बुध्यस्वेति भावः ॥ २८ ॥

तटेति ॥ साम्प्रतं सरसि सरोजिनी सरस्तटे तरुषु वर्त्तमानानां खगश्रेणीनां सारावैर्निर्मितैः कलकलशब्दैरिव विगलन्ती भ्रश्यन्ती निद्रेव मुद्रा कोरकबन्धो यस्याः, यद्वा विगलन्ती निद्रायाः सङ्कोचस्य मुद्रा भङ्गी यस्याः सा त्यक्तनिद्रोन्मीलितकमललोचनेवाजनिष्ट जाता। कलकलेन च निद्रितस्य निद्रा अपयाति। तथा मधुपो भ्रमरः सरोरुहां मधूनि कमलमकरन्दान् वध्वाः भ्रमर्याः मुखात् लब्धयाऽधरसुधया ओष्ठगतपीयूषेण मध्ये मध्ये स्वादुङ्कारं स्वादूनि माधुर्यातिशय-

गतचरदिनस्यायुर्भ्रंशे दयोदयसङ्कुच-
त्कमलमुकुलक्रोडान्नोडप्रवेशमुपेयुषां।
इह मधुलिहां भिन्नेष्वम्भोरुहेषु समायतां
सह सहचरैरालोक्यन्तेऽधुना मधुपारणाः॥ ३०॥

युक्तानि कृत्वा धयति पिबति। कमलानि विकसितानि भ्रमराश्च तन्मधूनि भ्रमर्य्यधरञ्च पिबन्तीत्यर्थः। मधुप इति माभिप्रायं मद्यपा अप्येतादृशा भवन्ति। समन्तात्रावाः सांराविणानि आभिविधौ भाव (पा०३।३।४४) इन्नितीनुणं तात् स्वार्थं अस्निनुण इत्यण् (पा०५।४।१५)। स्वादङ्कारं स्वादमिण मुल् (पा०३।४।२६)। मान्तत्वञ्च पूर्व्वस्य स्वादुमीति निर्द्देशात॥ २९॥

गतेति॥ गतचरदिनस्यातीतचरदिनस्यायुर्भ्रंशेऽवसानकाले सायंसमये दयाया उदयादिव सङ्कुचतां म्लानानां कमलानां मुकुलानि कलिकाः तेषां क्रोडान्मध्यात् नीडेषु प्रवेशं उपेयुषां प्राप्तानां मकरन्दास्वादलाम्पट्यात् सायं सन्ध्यासमयेऽपि कमलेषु स्थितानामनन्तरञ्च तेषु सङ्कुचितेषु बहिर्निर्गन्तुमशक्तत्वात् संकुचत्कमलसमरूपेषु नीडेषु स्थितानामिति यावत्। क्रोडमिति पाठे मुकुलविशिष्टकमलक्रोडमेव नीडप्रवेशं गतानां। अनन्तरञ्च रात्रावतीतायां इह प्रातःसन्ध्यासमये भिन्नेषु ईषद्विकसितेषु अम्भोरुहेषु समायतां पूर्व्वदिनान्तसङ्कुचितेषु ईषदुन्मिषितेषु सत्सु सुखेन निर्गन्तुं शक्ता-

न्तेभ्यः सकाशाद्दीर्घात्रनीलकमलानि उद्दिश्य समागच्छतां मधुलिहां अधुना सहचरैः पूर्व्वदिनान्ते कमलसङ्कोचात् पूर्व्वमेव कमलक्रोडान्निर्गतैः सहचरैः सहचरीभिश्च मित्रकलत्रादिभिः सह मधुना मकरन्देन कृता पारणा: उपोषितसम्बन्धीनि भोजनानि आलोक्यन्ते लोकैरिति शेषः। ये रात्रौ कमलबद्धास्ते तत्र मकरन्दाभावान्निर्बन्धवशाच्च कृतोपवासाः। अनिबद्धाःसहचरास्तु रात्रौ निद्रावशात् तद्वियोगाद्धि कृतोपवासाः अतः सर्व्वेऽपि प्रातर्मिलित्वा विकसितकमलमधुना पारणां कुर्वन्तीत्यर्थः। पूर्व्वदिनान्ते सङ्कुचितानि कमलानि प्रातः पुनः किञ्चिद्विकसितानीति प्रसिद्धिः। भूयान् समयो जातः तस्माद्बुध्यस्वेत्यर्थः। अन्योऽपि कस्मिंश्चिन्महीयसि मृते बन्ध्यादौ वा निबद्धः कृपया सङ्कुचितहर्षो भवन्ति। केचिच्च सत्य्युपरते सति उपवासमकुर्वाणा गृहमध्ये प्रविश्य दिनान्तरे ज्ञातिभिः सह भुञ्जते। ज्ञातिभिः सह भोजनमेतत्प्रेतेषु दुर्लभमिति शास्त्रार्थः सहचरपदेन सूचितः। निगडबद्धोऽपि कारागृहेषु भिन्दन्नुपासितः समागच्छन् सन् स्वस्य बन्धनवशान्निराहारैर्ज्ञातिभिः सह मधुरैरन्नैः पारणां करोति। क्रोडादीनि यथायथं हेतौ ल्यबलोपे पञ्चमी। समायतां दृशः शता। सहचरैः पुमान् स्त्रियेत्येकशेषः (पा०१।२।६७)

॥ ३० ॥

तिमिरविरहात्पाण्डूयन्ते दिशः कृशतारकाः
कमलहसितैः श्येनीयन्ते सरसी न का।
शरणमिलितध्वान्तध्वंसिप्रभादरधारणा-
द्गगनशिखरं नीलत्येकं निजैरयशोभरैः ॥ ३१ ॥

तिमिरेति॥ प्राच्यादयो दिशास्तिमिरस्य विरहान्नाशात् पाण्डूयन्ते शुभ्रा इवाचरन्ति, अतएव कृशाः अप्रकाशाः किञ्चिद्दृश्यास्तारकाः कतिपयनक्षत्राणि यासु एवं विधाः। अन्यापि प्रियवियोगात् पाण्डुर्निस्तेजा अतिकृशनेत्रकनीनिका भवति। तथा का सरसी कमलानां हसितैर्विकासैः कृत्वा श्येनीव नाचरीयते न तर्क्यते, अपि तु सर्वा अपि सरस्यस्तैः शुभ्रायन्ते। अन्यापि प्रियप्राप्तैः कमलतुल्यमुखहसितैः श्वेता भवति। एकं गगनशिखरं गगनमध्यभागः शरणार्थं स्वपरित्राणार्थं गगनं प्रति मिलितस्य प्रत्यागतस्य ध्वान्तस्य ध्वंसिनी विनाशिनी या सूर्यप्रभा तस्यास्त्वादरधारणाद्धेतोः निजैरयशोभरैः स्वीयैरकीर्त्तिसमूहैः नीलति श्याम इवाचरतिः, अन्योऽपि शरणागतं परित्यज्य तद्वैरिणामादरेणाङ्गीकुर्व्वन् दुर्य्यशसा श्यामो भवति। दिशः सरांसि च प्रसन्नाः। गगनञ्च नक्षत्राद्याहार्य्यशोभापगमात् निजं नीलिमानं प्राप्तमिति भावः। पाण्डूयन्ते उपमानादाचारेऽर्थे कर्त्तुः क्यङिति (पा० ३।१।१०।११) क्यङ्। अकृत् सार्व्वधातुकयोरिति (पा० ७।४।२५) दीर्घः। वर्णवाचिनः श्येनशब्दात् वर्णादनुदात्तादिति (पा० ४।१।३९) ङीप् तस्य नश्च नीलति नीलवर्णे इति धातुः। आचारक्विबन्तान्नीलशब्दान्निष्ठा॥ ३१॥

सरसिजवनान्युद्यत्पत्नार्ध्माणि हसन्तु न
च्युतरुचिसुहृच्चन्द्रं तन्द्रामुपैतु न कैरवं।
हिमगिरिदृषद्दायादश्रि प्रतीतमदः स्मितं
कुमुदविपिनस्याथो पाथोरुहैर्निजनिद्रया ॥ ३२ ॥

सरसिजेति। सरसिजवनानि न हसन्तु अपि तु विकसन्त्वेव। यस्मादुद्यन्नुदितवरः पत्नःसहायभूतः अर्यमा सूर्यो येषां विकस्वराणीत्यर्थः। अथ च यदीयमित्रस्योदयो भवति स सर्व्वोऽपि हर्षवशाद्विकसत्येव। तथा कैरवं कुमुदं तन्द्रां सङ्कोचं नोपैतु अपि तु प्राप्नोत्वेव। यतः च्युतरुचिः गतस्वालोकः सुहृच्चन्द्रो यस्य तादृशं। चन्द्रोदये विकसतः कुमुदस्य चन्द्रक्षये सङ्कोचो युक्त एवेत्यर्थः। अन्योऽपि सुहृत्क्षये मूर्च्छावशान्निमीलति। अथो अथवा पाथोरुहैर्विकसितकमलैः रात्रिसम्बन्धिन्या निजनिद्रया कृत्वा कुमुदवनस्यादः प्रत्यक्षदृश्यं स्मितं विकसितं प्रतीतं विनिमयेन गृहीतं हिमगिरेर्हिमाचलस्य दृषदां शिलानां दायादांशभागिनी सदृशी श्रीःशोभा यस्य शुभ्रतरमित्यर्थः। कमलानां रात्रौ निद्रा कुमुदानाञ्च विकासः प्रातस्तु कमलानां विकासः कुमुदानाञ्च सङ्कोचो दृश्यते ततः स्वीयां निद्रां कुमुदेभ्यो दत्त्वा कमलैस्तद्विकासः परिवृत्त्य गृहीत इति सम्भाव्यत इत्यर्थः। सूर्य्ये उदितः कमलानि विकसितानि कुमुदानि च सङ्कुचितानीति भावः। प्रतीतं प्रतिपूर्व्वादिणो निष्ठा। प्रतीष्टमिति च पाठः अर्थः पूर्व्वोक्त एव ॥ ३२ ॥

धयतु नलिने माध्वीकं वा न वाऽभिनवागतः
कुमुदमकरन्दौघैः कुक्षिम्भरिर्भ्रमरोत्करः ।
इह तु लिहते रात्रीतर्षं रथाङ्गविहङ्गमा-
मधु निजवधूवक्त्राम्भोजेऽधुनाऽधरनामकं ॥ ३३ ॥

धयत्विति । अभिनवो नूतनः प्रभाते आगतः भ्रमरोत्करः नलिनेर्वर्त्तमानं माध्वीकं मकरन्दं धयतु पिबतु वा न वा । यतः रात्रौ कुमुदमकरन्दौघैः कुक्षिम्भरिः आकण्ठतृप्तः परिपूर्णोदरः रात्रौ कुमुदमकरन्दवृन्दैः पूरितोदरत्वात् प्रातर्मधु पिबतु वा मा पिबतु वा न तत्रास्माकमाग्रह इत्यर्थः । अन्योऽप्याकण्ठतृप्तोऽतिथिर्भुङ्क्ते न वा न तत्रादरः । रथाङ्गविहङ्गमास्तु रात्रीतर्षं सकलां रात्रिं तर्षित्वा वियुक्तत्वात् कुमुदमकरन्दं परित्यज्य पिपासयैव स्थित्वा इह प्रत्यक्षदृश्ये निजवधूवक्त्राम्भोजे वर्त्तमानमधरनामकमोष्ठसंज्ञं मधु अधुना प्रातःसमये लिहते आस्वादयन्ति. एतद्युक्तं । तावतैव चाम्भोजस्यापि कृतार्थत्वं जातमित्यर्थः । अन्यत्रापि तृप्त्यर्थे इच्छया उपोषितस्य भोजनं युक्ततरं भवति । भ्रमरा मकरन्दमास्वादयन्ति चक्रवाकास्तु प्रातर्वियोगापगमात् कमलमकरन्दमनादृत्य निजसहचरीश्चुम्बन्तीति भावः । फलेग्रहिरात्मम्भरिश्चेति (पा० ३।२।२६) चात्कुक्षिम्भरिः । रात्रीतर्षं अस्यतितृषोरिति (पा० ३।४।५७) णमुल् । तृतीया प्रभृतीनि (पा० २।२।२१) समासः ॥ ३३ ॥

विशति युवतित्यागे रात्रीमुचं मिहिकारुचं
दिनमणिमणिं तापे चिन्तान्निजाच्च यियासति।
विरहतरलज्जिह्वा बह्वाह्वयन्त्यतिविह्वला-
मिह सहचरीं नामग्राहं रथाङ्गविहङ्गमाः॥ ३५॥

स्तनभवणं प्रत्यये रुचिमस्य यथा जायते तथा वियोग एव सम्भोगे नितरां रुचिमुत्पादयतीति बुद्धा चक्रवाकाभ्यां क्रियत इति ताविव कामशास्त्ररहस्यज्ञाविति भावः। पारगौ अन्तात्यन्तेति (पा० ३।२।४८) डः। सम्भुज्ञाते भुजोनवन इति (पा० १।३।६६) तङ्। अनेन सम्भोगस्य वियोगादेव नूतनत्वं भवतीति सूच्यते॥ ३४॥

विशतीति। युवतित्यागे चक्रवाकनिष्ठस्त्रीवियोगे मिहिकारुचं शीतांशुं विशति सति रात्रीमुचं रात्रिलक्षणप्रियात्यागिनं तथा वियोगजन्ये तापे परितापे औष्ण्ये च निजाच्चित्ताच्चक्रवाकहृदयात् सकाशात् दिनमणिमणिं सूर्य्यकान्तं यियासति जिगमिषति सति विरहेण तरलन्तौ तरलेवाचरन्तौ विह्वलीभवन्तौ स्खलन्तौ जिह्वा येषां ते रथाङ्गविहङ्गमा विरहेणातिविह्वलां सहचरीं चक्रवाकीं नामग्राहं स्वसङ्केतेन नाम गृहीत्वा इह प्रभाते क्रीडासरसि वा बहुवारं आह्वयन्ति आकारयन्ति। अन्योऽप्यतिविह्वला बहु वारं आकार्य्यते अमिति नवेति सन्देहात्। प्रतिचक्रवाकानां संयोगः परितापत्यागः परस्पराह्वानं चन्द्रधूसरत्वं सूर्य्यकान्तसन्तापश्च। प्रालेयं मिहि-

खमुकुलमयैर्नेत्रैरन्धम्भविष्णुतया जनः
किमु कुमुदिनीं दुर्व्याचष्टे रवेरनवेक्षिकाम्।

कत्यमरः। राचीमुचं क्विप्। इगिति मम्पदादित्वात्। मिहिका इगयस्येति समासः। तरलजिह्वा तरलेवाचरतीति आचार क्विबन्ताच्छतरि गुम्वत्। आकर्यन्ति स्पर्द्धाभावात्तङभावः ॥ ३५ ॥

खेति। जनो लोकः खमुकुलमयैः आत्मीयकलिकानेत्ररूपैः कृत्वा अन्धम्भविष्णुतया अनन्धाया अप्यन्धत्वाङ्गीकाराद्धेतोः रवेः अनवेक्षिकां अनवलोकिकां कुमुदिनीं किमु किमर्थं दुर्व्याचष्टे दुष्टां कथयति। अवश्यदर्शनीयपवित्रसूर्य्यादर्शननियमादियं मित्रोदयं न सहत इति लोकः किमिति निन्दति, अपि त्वयुक्तेयं निन्देत्याक्षेपः। उ अहो किं निन्दतीति वा। अन्धम्भविष्णुतयाऽविचारतया रहस्यमजानन्नेव किमिति निन्दतीति जनविशेषणं वा। कथमयुक्तमित्यत आह। हे श्रोतारः यूयं शृणुत शृणुत तस्याः सूर्य्यादर्शने हेतुमाकर्णयत। रे राज्ञो नृपस्य दाराः कवीनां पाणिन्यादीनां प्रतिभाममुत्पन्नेषु व्याकरणादिग्रन्थेषु विषये लिखितास्तच्छब्दैः पठिताश्चातः अवश्यदर्शनीयं सूर्य्यमपि न पश्यन्तीत्यसूर्य्यम्पश्या राजदारा इत्येव लिखितास्तच्छब्दैस्तथैव पठिताः। ननु प्रकृते किमित्याशङ्क्याह सा कुमुदिनी किल प्रसिद्धं न भाविनी भविष्यति अर्थाद्राज्ञो दाराः, अपि तु राज्ञश्चन्द्रस्य अथच नृपस्य दारा भवन्त्येव।

लिखितपठिता राज्ञो दाराः कविप्रतिभासु ये
शृणुत शृणुतासूर्य्यम्पश्या न सा किल भाविनी ॥३६॥
चुलुकिततमःसिन्धोर्भृङ्गैः करादिव शुभ्यते
नभसि विसिनीबन्धोरन्धैश्च्युतैरुदविन्दुभिः।

राजमहिष्यो हि अतिसुरक्षितत्वादसूर्य्यम्पश्याः, इयमपि तथा, तस्मादेतस्या अपि असूर्य्यम्पश्यता युक्तेति रहस्यानभिज्ञो जनो वृथैवैतां निन्दतीत्यर्थः। किलशब्दः किमर्थो वा। अत्र य इति कुमुदिनीपरामर्शेऽपि दारैः सामानाधिकरण्याद्बहुवचनं। येति पाठः समीचीनः। लिखितपठिता एकवचनं बहुवचनं वा। सूर्य्योदयवशात् कुमुदिनी सङ्कुचितेति भावः। अन्धम्भविष्णुतया कर्त्तरि भुवः खिष्णुजिति (पा० ३।२।५७) अन्धशब्द उपपदे भुवः खिष्णुचः खित्वात् अरुर्द्विषदिति (पा० ६।३।६७) मुम्। अव-चिका णवुलि प्रत्ययस्थादिति (पा० ७।३।४४) कात्पूर्व्वस्येत्वं। लिखितपठिताः कर्म्मधारयो द्वन्द्वो वा। असूर्य्यम्पश्याः असूर्य्यल्ललाटयोरिति (पा० ३।२।३६) खश् खित्वान्मुम्। अत एव ज्ञापकात् क्रियायोगिनापि नञः समासः॥ ३६ ॥

चुलुकितेति। गगने गच्छद्भिर्भृङ्गैः उदविन्दुभिरिव नभसि शुभ्यते दीप्यते। विसिनीबन्धोः चुलुकितः कृतश्चुलुके धृत्वा पीतः तमःसिन्धुस्तिमिरसमुद्रो येन तस्य विसिनीबन्धोः पद्मिनीमित्रस्य सूर्य्यस्य करात् किरणादेव हस्तात् रन्ध्रेभ्योऽङ्गुल्यन्तरालविवरेभ्यश्च्युतैर्गलितैः, चुलुकेन पीततमःसिन्धोरुपरिव-

शतदलमधुस्रोतःकच्छद्वयीपरिरम्भणा-
दनुपदमदःपङ्काशङ्काममी मम तन्वते ॥ ३७ ॥
घुसृणसुमनःश्रेणिश्रोणामनादरिभिः सरः-
परिसरचरैर्भासां भर्त्तुः कुमारतरैः करैः ।

र्त्तमानस्य रवेः कराङ्गुलीविवरेभ्योऽधोगलिताः कृत्स्नजलविन्दव इव भृङ्गा गगने शोभन्त इत्यर्थः । चुलुकितेति करविशेषणं वा । अनुपदं गगनात् सकाशात् कमलानि प्रति पातानन्तरं शतदलाख्यान्यतिस्थूलानि कमलानि तेषां मधुस्रोतसः मकरन्दप्रवाहस्य कच्छद्वयी मकरन्दार्द्रभागद्वयं यत्तटद्वयं तस्याः परिरम्भणात् संश्लेषादुभयतस्तत्र लगनाद्धेतोरमी भृङ्गा अदःपङ्काशङ्कां अमुष्य पीतस्य तमःसिन्धोरधःस्थितावशिष्टकर्द्दमसम्भावनां वैतालिकस्य मम तन्वते विस्तारयन्ति । सकलेऽपि तमोजले पीतेऽवशिष्टतया पङ्क इव भृङ्गाः शोभन्त इत्यर्थः । अमुष्या मकरन्दप्रवाहकच्छद्वय्याः पङ्क इति वा । प्रवाहतटद्वयं पङ्कायुक्तः । भृङ्गास्तु मकरन्दस्योपरि नोपविशन्ति किन्तु अभित इति तेषां जातिः । प्रातःकालो जातोऽन्धकारः साकल्येन विनष्टः भ्रमरास्तरुनीडेभ्यो निर्गत्य गगन उड्डीय मधुपानार्थं कमलान्युद्दिश्य यान्तीति भावः । चुलुकित इति तत्करोतीति (पा० ३।१।२६।वा०१) एवन्ताक्तः शुम्भते शुम्भ दीप्तौ भावे यक् ॥ ३७ ॥

घुसृणेति । घुसृणसुमनसः कुङ्कुमकुसुमानि तासां श्रेणिस्तस्याः श्रोणां कान्तीनां अनादरिभिः अनादरणशीलैः ताभ्योऽपि

अजनि जलजामोदानन्दोत्पतिष्णुमधुव्रता-
वलिशवलनाद्गुञ्जापुञ्जश्रियं ग्रहयालुभिः ॥ ३८ ॥
रचयति रुचिः शोणीमेतां कुमारितमा रवे-
र्यदलिपटली नीलीकर्त्तुं व्यवस्यति पातुका।
अजनि सरसो कल्माषो तद्भुवं धवलस्फुट-
त्कमलकलिकाखण्डैः पाण्डूकृतोदरमण्डला ॥ [illegible]

रक्ततरैः सरःपरिसरचरैस्तीरमञ्जरणशीलैः कुमारतरै[illegible] [illegible]-लैर्भामां भर्त्तुः करैः सूर्य्यकिरणैः जलजामोदः गगनाव[illegible] [illegible]क-मलवकुलपरिमलस्तद्विषय [illegible] शीला मधुव्रतावलिस्तया शवलनात् मिश्रणाद्धेतोः गुञ्जापुञ्ज[illegible]यं अ-र्द्धरक्तपक्वकृष्णगुञ्जाराजिशोभां ग्रहयालुभिर्ग्रहणशीलैः अजनि तत्सदृशैर्जातमित्यर्थः। बाला अपि सुमनसां घोराणामप्यना-दरिणो भवन्ति। बाला अपि रक्तकरा भवन्तीति केचित्। अजनि भावे चिण्। उत्पतिष्णुः अलङ्कृञि (पा० [illegible] २।१३६) तीष्णुच्। शवलनं तत्करोतीति (पा० ३।१।२[illegible] वा० १) ण्यन्ता-न्नपुंसके भावे ल्युट् ॥ ३८ ॥

रचयतीति। यद्यस्मात् रवेः कुमारितमा अतिबाला रुचिः सरसों शोणों रक्तवर्णां रचयति। यस्माच्च कमले मकरन्दा-स्वादार्थं पातुका अलिपटली भृङ्गश्रेणी खसमस्त्वादेतां नीली-कर्त्तुं व्यवस्यति। यतस्तेयं धवलानां स्फुटन्तीनां कमलकलि-कानां खण्डैः समूहैः पाण्डूकृतं उदरमण्डलमध्यदेशो यस्याः

कमलकुशलाधाने भानोरहो पुरुषव्रतं
यदुपकुरुते नेत्राणि श्रीगृहत्वविवत्सुभिः।
कविभिरुपमादानादम्भोजतां गमितान्यसा-
वपि यदतथाभावान्मुञ्चत्युलूकविलोचने॥ ४०॥

सैतादृशी तस्मात् ध्रुवं निश्चितं इयं सरसी कल्माषी कर्व्वुरैवा-जनि जाता। रक्तकृष्णश्वेतवर्णमिश्रणात् कर्व्वुरलोमेत्ता। ध्रुवमु-त्प्रेक्षायां वा। बालातपो जातः भ्रमराः परितो भ्रमन्ति कम-लानि विकसितानीति भावः। चित्रं किर्मीरकल्माषेत्यमरः। शोणों शोणात्प्राचामिति (पा० ४।१।४३) ङीप्। कुमारितमा घरूपेति (पा० ६।३।४३) ह्रस्वः।पटलकल्माषी गौरादी॥३९॥

कमलेति। कमलमात्रस्य कुशलाधाने आनुकूल्याचरणे भानोः अहो अत्याश्चर्य्यरूपं पुरुषसम्बन्धि व्रतं नियमः, अङ्गी-कृतपरिपालनशीलत्वमिति यावत्, यं दृष्ट्वाऽहो आश्चर्य्यरूपः पुरुष इति सर्व्वे वदन्ति। कुतो ज्ञातमत आह। यद्यस्मात्ता-त्त्विकानि कमलानि विकासयतीति किं वाच्यं किन्तु श्रियः कान्तिलक्ष्म्योः गृहत्वं स्थानतां विवत्सुभिः वक्तुमिच्छुभिः व्यास-वाल्मीकिकालिदासादिभिः कविभिः उपमादानात् किञ्चिच्छ्री-गृहत्वादिगुणसादृश्यादपि अम्भोजतां कमलत्वं गमितानि प्रा-पितान्यारोपितकमलत्वान्यपि नेत्रकमलानीति निर्द्दिष्टानि लोकनेत्राण्यसौ रविः उपकुरुते उन्मीलयति। उदिते हि सूर्य्ये लोकनेत्राण्युन्मीलन्ति। अथच घटाद्यर्थग्रहणसमर्थानि

यदतिमहती भक्तिर्भानौ तदेनमुदित्वर-
स्त्वरितमुपतिष्ठस्वाध्वन्य त्वमध्वरपद्धतेः ।

करोति। यत आलोकमहकृतमेव चक्षुः पदार्थग्रहणसमर्थं। यदपि अतयाभावात् श्रीग्रहत्वाभावात् कविभिः कमललोचनाननरक्तत्वादुलूकविलोचनं मुञ्चति नोन्मीलयति। न च पदा- र्थानापादयति। यतोलूकस्य दृष्टिस्तत्रालक्ष्मीरिति लोकप- द्धिस्तन्नेत्रयोः श्रीग्रहत्वं दूरनिरस्तं। सूर्य्येण कमलानि क- तुल्यानि च लोकनेत्राणि विकाश्य उलूकनेत्राणि कमलग- गाभावादविकाश्यान्वयव्यतिरेकाभ्यां स्वप्रतिज्ञा सत्या । एवंविधः सत्यप्रतिज्ञः कोऽपि नास्तीत्यर्थः। कमलानि वि- तानि सर्व्वोऽपि लोकः प्रबुद्धः कौशिकनेत्रे च निमीलि- तःकालो जात इति भावः। श्रीग्रहत्वविवक्षुभिः द्वित त योगविभागात् समासः। उपमितिरुपमानं नपुंसके भावे ट्। उपमीयतेऽनेनेति उपमानं सादृश्यमिति भावः॥ ४०॥

यदिति। यद्यपि त्वं भानौ अतिमहती भक्तिर्यस्यैवम्भूतो वर्त्तसे तर्हि हे अध्वरपद्धतेर्यज्ञमार्गस्याध्वन्य सह याज्ञिक नत्व उदित्वरमुदयशीलमेनं सूर्य्यं त्वरितमुपतिष्ठस्व पूजय। शीघ्र- मुपस्थाने हेतुमाह। हि यस्मात् इह समये प्रभाते किल प्रसिद्धं रविमभिलक्षीकृत्य उपस्थानमन्त्रेणार्द्धं क्षिप्ता जलाञ्जलयो मन्देहाख्येषु राक्षसेषु उदवज्रतां जलरूपाशनिभावं व्रजन्ति वज्रीभूय तान् भस्मीकुर्व्वन्तीति श्रुतावुक्तमित्यर्थः। तिस्रः कोट्यो-

इह हि समये मन्देहेषु व्रजन्त्युदवज्रता-
मभिरविमुपस्थानोत्क्षिप्ता जलाञ्जलयः किल ॥ ४१ ॥
उदयशिखरिप्रस्थावस्थायिनी खनिरत्त्वया
शिशुतरमहोमाणिक्यानामहर्मणिमण्डली।

र्द्धकोटी च मन्देहा नाम राक्षसाः इति पुराणञ्च। तस्माद्-
दयात् पूर्व्वं शीघ्रमुत्तिष्ठस्वेत्यर्थः। अध्वन्यमिति पाठे अध्वरपङ्क्ते-
तेरध्वानमलं गामिनं। भक्तिशब्दस्य प्रियादित्वात् पुंवद्भावा-
द्भावः। अध्वन्य अलङ्गाम्यर्थे अध्वनो यत् खाविति (पा० ५।२।
१६) यत्। उदवज्रतां मन्थौदनेत्यादिना (पा० ६।३।६०) उद-
कस्योदादेशः। अभिरभागे (पा० १।४।९१) इत्यभेः कर्म्मप्रव-
चनीयत्वाद्द्वितीया॥ ४१ ॥

उदयेति। इयं अहर्मणेः सूर्य्यस्य मण्डली उदयशिखरिणः उदयाचलस्य प्रस्थे सानुनि अवस्थायिनी वर्त्तमानाऽत्वया भूयसी शिशुतराणि रक्ततराणि महांसि तेजांसि तान्येव माणिक्यानि तेषां खनिरुत्पत्तिभूमिः ध्वान्तेन तिमिरेण ध्वान्तवत्त्व श्यामां पिधायिकां आकरद्वारा आच्छादिकां रजनिरूपां दृषदं शिलां विधूयापनीय कतमेन केन जनेन विमुद्रिता उद्घाटितेति न खलु नैव जाने रात्रिविगमे यतो दृश्यत इत्यर्थः। वाक्यार्थः कर्म्म। न जाने अर्थात्तं जनमित्यर्थ इति वा। अन्यापि माणिक्यादिखनिः पर्व्वतप्रस्थावस्थायिनी कृष्णतरशिलापिहिताऽपि केनापि भाग्यवतोद्घाट्यते। अतिशयितः कः कतमो बहूनाऽनेन

रजनिदृषदं ध्वान्तश्यामां विधूय पिधायिकां
न खलु कतमेनेयं जाने जनेन विमुद्रिता ॥ ४२ ॥
सुरपरिवृढः कर्णात् प्रत्यग्रहीत् किल कुण्डल-
द्वयमथ खलु प्राच्यै प्रादान्मुदा स हि तत्पतिः।
विधुरुदयभागेकं तत्र व्यलोकि विलोक्यते
नवतरकरस्वर्णस्रावि द्वितीयमहर्मणिः ॥ ४३ ॥

विमुद्रितेत्यहं न जाने, अपि त्वेवमेव जानामि। कालपरिवर्त्तकारिणा ब्रह्मणैवोद्घाटितेत्यर्थ इति काकुर्वा। खनिः खलु खनिरिवेत्युत्प्रेक्षा वा। कतमः डतमच्। अतिशये स्वार्थे वा तम एव ॥ ४२ ॥

सुरेति। सुरपरिवृढः शक्रः कर्णात् कुण्डलद्वयं कर्णभूषणयुगं ब्राह्मणवेषं धृत्वा प्रतिग्रहरूपेणाग्रहीत्। किलेति पुराणादौ प्रसिद्धं। अथ प्रतिग्रहानन्तरं मुदा तत्कुण्डलद्वयं खलु निश्चितं प्राच्यै दिशे प्रादात्; हि यस्मात् स शक्रस्तस्याः प्राच्याः पतिः धवः रक्षिता च प्रियान् प्रियार्थे प्राच्या प्रीत्या निजकर्णादिभूषणं प्रयच्छति। तस्यै दत्तमिति कुतो ज्ञातमत आह। तत्र प्राच्यां तयोर्द्वयोर्मध्ये वा विधुः सायं उदयभाक् उदित्वर आरक्तकिरणरूपमेकं कुण्डलं व्यलोकि दृष्टं। प्रातः, अहर्मणिः, नवतरास्तत्कालनिर्गताः करा रक्ततरकिरणाः तद्रूपस्वर्णस्रावि सुवर्णस्रवणशीलं तादृशमेव द्वितीयं कुण्डलं विलोक्यते। तस्मात् तस्यै तद्द्वयं तेन प्रदत्तमित्यहं शङ्के इत्यर्थः। सूर्यस्य कुण्डलस-

दहनमविशद्दीप्तिर्याऽस्तङ्गते गतवासर-
प्रशमसमयप्राप्ते पत्यौ विवस्वति रागिणी।
अधरभुवनात् सोद्धृत्यैषा हठात्तरणेः कृता-
मरपतिपुरप्राप्तिर्धत्ते सतीव्रतमूर्त्तिताम्॥ ४४॥

मर्थनार्थं प्रसङ्गाच्चन्द्रस्य कुण्डलमुक्तं। बालतरकिरणः सूर्य्यः उत्तमसुवर्णमयाविकर्णकुण्डलमिव शोभत इति भावः। कर्णेनेन्द्राय कुण्डलद्वयं दत्तमित्यारण्यके पर्व्वणि कथा॥ ४३॥

दहनमिति। या दीप्तिः रागिणी रक्ता सती विवस्वति सूर्य्यलक्षणे पत्यौ गतवासरप्रशमे पूर्व्वदिनावसाने सायङ्कालसमयमस्तसमयकालं प्राप्तेऽतएवास्तं विनाशं अस्ताचलं वा प्राप्ते गते सति, अग्निर्ज्योतिरित्याद्यग्निहोत्रमन्त्रादिप्रामाण्यात् दहनमविशत्। सैषा दीप्तिः अधरभुवनात् पातालात् सकाशात् हठात् बलात्कारेणार्थात्तरणिमेवोद्धृत्यादयं प्रापय्य तरणेरस्य कृताम-रपतिपुरस्य स्वर्गस्य प्राप्त्या वा प्राप्तिर्यया एवम्भूता सती तीव्रतया तीक्ष्णतया सह वर्त्तमाना मूर्त्तिर्यस्यास्तत्तां धत्ते। क्रमेण सूर्य्ये ऊर्ध्वदेशे प्राप्ते दीप्तिः खरतरा जातेति भावः। या नारी भर्त्तरि विनाशसमयप्राप्ते विनष्टे सति तस्मिन्ननुरागिणी सती जन्मान्तरेऽपि तत्प्राप्त्यर्थमग्निप्रवेशं कुरुते, सा दुष्कृतैः पातालप्राप्तमपि निरयपतितं, व्यालग्राही यथा व्यालमित्यादिवचनप्रामाण्यान्निरयाद्बलादुद्धृत्य तस्य कृतस्वर्गप्राप्तिः सतीनां पतिव्रतानां व्रतमेव मूर्त्तिः शरीरं यस्याः, सती गौरी

बुधजनकथा तथ्यैवेयं तनौ तनुजन्मनः
पितृशितिहरित्पर्णाद्याहारजः किल कालिमा ।
शमनयमुनाक्रोडैः कालैरितस्तमसां पिबा-
दपि यदमलच्छायात् कायादभूयत भास्वतः ॥ ४५ ॥

तस्या वा व्रतयुक्ता मूर्त्तिर्यस्यास्तत्तां धत्ते। गौरीवदियमपोत्यर्थः। समयप्राप्ते प्राप्तापन्ने इति (पा० २।२।४) समासः ॥ ४४ ॥

बुधेति। तनुजन्मनोऽपत्यस्य तनौ वर्त्तमानः कालिमा श्यामत्वं किल प्रसिद्धं निश्चितं वा, पितुः पित्रोर्वा शितिहरिद्वर्णादीनां कृष्णनीलवर्णपत्रफलशाकादीनां य आहारो तल्लक्षणं शितिहरिद्वर्णं यदाद्यमदनीयं पत्रशाकादि वा तस्माज्जातः सश्यामो मैत्रातनयत्वादित्यादि बुधानामुदयनाचार्य्यादीनां इयं कथा गोष्ठी तथ्यैव सत्यैव। यद्यस्माद्भूता: भास्वतः इनः प्रत्यक्षदृश्यादमलच्छायादुज्ज्वलकान्तेः शुक्लभास्वरादपि तमसां पिबात् तमिस्रैकहारात् कायात् शमनयमुनाक्रोडैः यमयमुनाशनैश्चरैः कालैः श्यामैरभूयतोत्पन्नं। सूर्य्यकायस्योज्ज्वलत्वेऽपि श्यामतमिस्राहारपरिणतिवशात् यमादिभिरपत्यैः श्यामैर्जातं तस्मादियं पण्डितकथा सत्यैवेत्यर्थः। सर्व्वमपि तमः सूर्य्येण नाशितमिति भावः। आद्यं अदेः ऋहलोर्ण्यदिति (पा० ३।१।१२४) ण्यत्। कालीव कालो वेति पुमान् स्त्रियेत्येकशेषः (पा० १।२।६७)। तमसां कर्म्मणि षष्ठी। अभूततद्भावे तङ्। क्रोडः कालास्मितः पङ्गुर्मन्दः छायासुतः शनिरित्यमरशेषः ॥ ४५ ॥

अभजत चिराभ्यासं देवः प्रतिक्षणदात्ययं
दिनमयमयं कालं भूयः प्रसूय तथा रविः।
न खलु शकिता शीलं कालप्रसूतिरसौ पुरा
यमयमुनयोर्जन्माधानेऽप्यनेन यथोज्झितुं ॥ ४६ ॥

अभजतेति। अयं रविर्देवः क्षणदा रात्रिस्तस्या अत्ययं प्रत्यूषं प्रतिरात्र्यवसाने इत्यर्थः। दिनमयं दिनरूपं कालं त्र्याद्यादिलक्षणसमयं अथच तद्रूपं श्यामं वपुः भूयो बहुतरं यथा तथा पौनःपुन्येन वा प्रसूय उत्पाद्य चिरकालमभ्यासं तथा तेन प्रकारेण अभजत अशिश्रयत्। यथा येन प्रकारेण पुरा पूर्वं कालप्रसूतिर्यस्याथ च काली श्यामा प्रसूतिर्यस्यैवम्भूताऽसौ सूर्य्यः यमयमुनयोरपि प्रसविष्यतोर्जन्माधाने जन्मार्थं बीजक्षेपसमयेऽपि, अनेन चिराभ्यासेन हेतुना शीलं कालोत्पादनस्य स्वभावमुज्झितुं खलु निश्चितं न शकिता समर्थो भविता। कालप्रसूतिस्वभावः सूर्य्यः स्वभावस्य दुरतिक्रमत्वात् तावपि कालावुदपादयदित्यर्थः। उदयमानेन सूर्येण दिवसः कृत इति भावः। प्रातःकाले क्रियमाणोऽभ्यासः पटुतरो भवति। चिराभ्यासं मयूरव्यंसकादित्वात् समासः। यद्वाऽकारान्तस्य चिरशब्दस्य अत्यन्तसंयोगे चेति (पा० २।१।२८) समासः। प्रतिक्षणदात्यये वीप्सायामव्ययीभावे नाव्ययीभावादिति (पा० २।४।८३) सुपोनलुक्। तृतीया सप्तम्योर्बहुलमिति (पा० २।४।८४) त्यम् अत्ययमिति निपातः कालप्रसूतिः पक्षे पुंवत् ॥ ४६ ॥

रुचिरचरणः सूतोरुश्रीसनाथरथः शनिं
शमनमपि स त्रातुं लोकानसूत सुताविति।
रथपदकृपासिन्धुर्बन्धुर्दृशामपि दुर्जनै-
र्यदुपहसितो भास्वान्नास्मान् हसिष्यति कः खलः॥४७॥

रुचिरेति। सुजनैरेवम्भूतो यो भास्वानिति संस्तुतः [illegible] र्थ-
स्मादेवं उपहसित स्तस्मादतितुच्छान्परवर्णनोपजीविनः को-
नाम खलो नोपहसिष्यति, अपि तु सर्वोऽप्युपहसिष्यत्येव। यथा
उदिते सूर्ये सद्भिः सूर्यस्यार्हणा क्रियते तथा खलैर्न, एवं तुच्छा
एते स्वोदरभरणार्थं यत्किञ्चिद्व[illegible]न्त्यस्माकं खलैर्निन्दायां
कृतायां भवादृशै राजशिरोमणिभिरस्माकमर्हणा क्रियत एवेति
खलानां प्रयासो वृथा एवेत्यर्थः। एवं कथं स्तुतः कथमुपहसित-
इत्यत आह। सूर्यः रुचिराश्चरणाः [illegible] किरणा यस्य
तथा सूतस्यारुणस्य उर्व्या महत्या श्रिया सुता सूर्येणैव प्रसूता
उर्वी श्रीस्तया सनाथोऽलङ्कृतो रथो यस्य सः। तथा शनिं शमनं
शनैश्चरदण्डधरौ सुतौ लोकान् त्रातुं असूत। शनिर्हि स्तुत्यादि
सिद्धिमात्रहेतुर्लोकपालतया लोकान् रक्षति। यमोऽपि दुष्टा-
दुष्टयोर्निग्रहानुग्रहौ कुर्वन् धर्माधर्माचरणप्रवृत्तिजननद्वारा
रक्षति। एतादृशौ परोपकारपरौ पुत्रौ असूत। तथा रथपदा-
नामनाथानां चक्रवाकानां कृपासिन्धुर्दयासमुद्रः रथस्य पदेन
व्यवसायेन गत्या जगतो दयासमुद्रो वा। तथा सकलपदार्थग्रहण-
[illegible]कार्यालोकसम्पादनद्वारा दृशां सर्वजननेत्राणां बन्धुः मित्रं

शिशिरजरुजां घर्मं शर्मोदयाय तनूभृता-
मथ खरकराश्यानास्यानां प्रयच्छति यः पयः।

एवम्भूतः सुन्दरः परोपकारकरणैकस्वभावोऽपि इति स्तुतिपक्षः। रुचिस्तेजोरूपस्तापकर इति यावत्। तथा अचरणश्चरण-रहितः यद्वा विपरीतलक्षणया रुचिरौ चरणौ यस्य। पुराणादौ चरणाङ्गुल्यादिध्याने कुष्ठादिदृष्टफलश्रवणात् ध्यानेऽप्य-चरणएव सूर्यः। विश्वकर्मणा कुन्दे आरोपितस्य सूर्यस्य तेजसां दुःसहत्वाच्चरणाकारो न निर्मित इति वा। अन्धं प्रति सुनेत्र-वचनवदचरणस्यापि रुचिरचरणत्वोक्त्योपहासः। तथा सूतस्य अनूरोः सारथ्यरूपशोभया सनाथो रथो यस्य स इत्यपि विरुद्ध-लक्षणा। तथा शनेः क्रूरग्रहत्वाच्चिरकालभोग्यदुःखदत्वाद्यम-स्यापि जगत्प्राणहरणशीलत्वात् परपीडाकरणैकस्वभावौ श-निशमनौ पुत्रौ लोकान् त्रातुमसूतेत्यपि विरुद्धलक्षणा। तथा तिर्यग्योनिपक्षिविशेषचक्रवाकाणामेव दयासिन्धुर्नान्येषां ताप-करत्वात् तादृशानामेव बन्धुर्नान्येषां। यद्वा तेजोभरेण दृष्टि-प्रतिघातकारित्वादबन्धुरपि दृशां बन्धुरित्यपि विरुद्धलक्षणेति उपहासपक्षः। एवम्भूतः सूर्यः समुदेतीति भावः॥ ४७॥

शिशिरेति। स भानुरुदश्चति उदेति। स कः, यः शिशिरजौ शिशिरं हिमं तस्माज्जाता रुक् पीडा येषां तेषां तनूभृतां जनानां शर्मणः सुखस्योदयाय प्राप्तये वसन्तनिदाघसम्बन्धिनं घर्ममुष्णं क्रमेण प्रयच्छति। अथानन्तरं वसन्तनिदाघसम्बन्धिनः खरास्तीक्ष्णतरा कराः सूर्यकिरणास्तैः आश्यानं शुष्कं म्लानं आस्यं

जलभयजुषां तापं तापस्पृशां हिममित्यय-
मपरहितमिलत्कृत्यावृत्तिः स भानुरुदञ्चति ॥ ४८ ॥
इह न कतरश्चित्रं धत्ते तमिस्रततीर्दिशा-
मपि चतसृणामुत्सङ्गेषु श्रिता धयतां क्षणात्।

मुखं येषां तेषां देहिनां सुखाय पयः वर्षासम्बन्ध्युदकं प्रयच्छति ददाति। ततो जलभयजुषां जलभीतानां तापं दत्ते। ततस्तापस्पृशां शारदतापवतां देहिनां हेमन्ते हिमं दत्ते एवम्प्रकारेण परेभ्यो यद्धितं तस्मिन् विषये मिलतां पौनःपुन्येन घटमानानां कृतेः शीततापजलप्रदानरूपपुरुषव्यापारस्यावृत्तिरावर्त्तना यस्य। यद्वा कृत्यानां शीतादिदानरूपाणां कार्य्याणां आवृत्तिर्यस्यैवम्भूतः परोपकारपरः सूर्य उदेतीत्यर्थः। स्पृशेति द्रवमूर्त्तिस्पर्शयोरिति वलाभावात् सम्प्रसारणाभावः। निष्ठानत्वं। परहितेति चतुर्थी-तदर्थार्थेति (पा० २।१।३६) समासः। कृत्या कृञः शचेति (पा० ३।३।१००) योगविभागात् क्तिनि कृतिः। चकारात् क्यपि तुकि च कृत्या। पक्षे अर्हार्थे विभाषाकृवृषोरिति (पा० ३।१।१२०) क्यपि तुक् ॥ ४८ ॥

इहेति। पूर्व्वादीनां चतसृणामपि दिशां उत्सङ्गेषु प्रान्त-देशेषु श्रिता वर्त्तमानास्तमिस्रततीस्तिमिरपरम्पराः क्षणाद्ध-यतां विनाशयतामपि अर्यम्णः सूर्यस्य रोचिषां तेजसां रविः शरणं यस्य तद्भावं वृक्षतलवासिलादेत्य प्राप्य निवसद्वर्त्तमानं छायारूपं तमः शमयितुं विनाशयितुं असमैश्वर्य्यमसामर्थ्य-

तनुशरणतामेत्य च्छायामयं निवसत्तमः
शमयितुमभूदानैश्वर्यं यदर्यमरोचिषां॥४९॥
जगति तिमिरं मूर्च्छामब्जव्रजेऽपि चिकित्सतः
पितुरिव निजादस्मादस्त्रावधीत्य भिषज्यतः।

मभूदिति यत् इहात्रासामर्थ्यविषये कतमः को नाम जनश्चित्रं विस्मयं न धत्ते, अपि तु सर्व्वोऽप्याश्चर्य्यं प्राप्नोत्येव। दिगन्तगताया अपि तिमिरपरम्परायाः संहारे येषां शक्तिः तेषां रवितेजसां तरुतलमात्रस्थितं छायारूपं समीपवर्त्त्यपि तमः शमयितुं शक्तिर्नाभूदित्याश्चर्य्यमित्यर्थः। तनु इति पाठे तनु अल्पं शरीरं वा शरणं यस्य तद्भावं प्राप्य निवसदित्यर्थः। महदाश्रयेण स्थितमपि यो विनाशयितुं शक्नोति सोऽल्पाश्रयेण वर्त्तमानं शमयितुमपि शक्नोतीत्याश्चर्य्यमेव। तरुच्छायामयं देहच्छायामयं वा तमो विहाय सर्व्वमपि तमः सूर्य्येण विनाशितमिति भावः। आनैश्वर्य्यं अनीश्वरस्य भाव इत्यर्थे न नञ् पूर्व्वादिति (पा० ५।१।१२१) भावप्रत्ययनिषेधेऽपि ब्राह्मणादिष्वनीश्वरशब्दस्य पाठात् ष्यञि नञः शुचीश्वरेति (पा० ७।३।३०) पक्षे उभयपदवृद्धिः॥ ४९ ॥

जगतीति। दस्रौ नासत्यौ निजात् स्वीयात् अस्मात्पितुः सूर्य्यादधीत्यैवायुर्वेदं पठित्वैव भिषज्यतः। स्वर्लोके चिकित्सां कुरुतः। किम्भूतात् पितुः, जगति वर्त्तमानं तिमिरं अथच वस्तुदर्शनासामर्थ्यजनकं नेत्ररोगविशेषं चिकित्सतो नाशयतः। आयुर्वेदोक्तप्रतीकारेण शमयतः। तथाऽब्जव्रजे कमलखण्डे वर्त्तमानां

अपि च शमनस्यासौ तातस्ततः किमनौचिती
यदयमदयः कह्लाराणामुदेत्यपमृत्यवे॥ ५० ॥
उडुपरिवृढः पत्या मुक्तामयं यदपीडय-
द्यदपि विसिनीं भानोर्जायां जहास कुमुद्वती।

मूर्च्छां सङ्कोचमपि नाशयतः, अयचाप एव ससर्जादाविति वचनादपां मूलभूतत्वादब्जे लोकसमूहे वर्त्तमानां मूर्च्छां वैचित्त्यध्वस्तचैतन्यभावरूपं मोहमपाकुर्व्वतः। उपचारचतुरात् कल्याणपाणेर्वैद्यादधीत्यैव हि राजवैद्यो भवति, तस्माद्वैद्या-त्स्वपितुरेव वैद्यकमधीत्य ताभ्यामिन्द्रवैद्यत्वं प्राप्तमित्यर्थः। अपि च किञ्च सर्व्वभूतानि शमयति नाशयतीति शमनो यमस्तस्यासौ सूर्यो तातः पिता ततस्तस्मात् कह्लाराणां कुमुदानामपमृत्यवे सङ्कोचायाथचाकालमरणायोदेति। यत् यतोऽयं सूर्योऽदयो निष्कृपः सोऽस्य सूर्यस्य किमनौचिती अपि त्वेषाऽस्यौचित्यैव कारणगुणप्रक्रमेणैव कार्य्ये गुणारम्भाददयताऽपमृत्युदायिता च यमेनाप्यस्मात् स्वपितुरेव सकाशात् पठितेत्यर्थः। उदरे .. सूर्येण तमो नाशितं, कमलान्युन्मीलितानि, कुमुदानि मुकु-लितानीति भावः। पितुः आख्यातोपयोग (पा॰१।४।२९) इत्यपादानत्वं। भिषज्यतः। कण्ड्वादिः॥ ५० ॥

उडुपेति। अयमिदानीमस्तं जिगमिषुः उडुपरिवृढश्चन्द्रः सायं उदितः सन् अस्तं गतेन पत्या सूर्येण मुक्तां त्यक्तां वियो-गिनीं भार्यां पद्मिनीं यद्यस्माद्धतराचौ अपीडयत् सङ्कोचितवान्

तदुभयमतः शङ्के सङ्कोचितं निजशङ्कया
प्रसरति नवार्के कर्कन्धूकणारुणरोचिषि॥ ५१॥
श्रुतिमयतनोर्भानोर्जानेऽवनेरधराध्वना
विहरणकृतः शाखाः साक्षात्कृतानि दशत्विषां।

अथच करैर्दूषितवान्। यदपि चन्द्रे पद्मिनीं पीडयति सति कुमुद्वती कुमुदविकासव्याजेन रात्रौ जहास, अतएव हेतोः तदुभयं चन्द्रकुमुदिन्यौ कर्कन्धूफलवत् पक्वबदरवत् कणारुण-रोचिषि ईषद्रक्तकिरणे नवार्के तरुणादित्ये प्रसरति प्रकर्षेण गच्छत्युदयति सति निजशङ्कया स्वकृतानाचारनिमित्तभयेनैव प्रयोजकेन सङ्कोचितं सङ्कोचं प्रापितं निःप्रभीकृतमित्यर्थः। इत्यहं शङ्के मन्ये। सूर्य उदितः पद्मिनी च विकसिता चन्द्रो निःप्रभोऽस्तमेति कुमुदिनी सङ्कुचितेति भावः।अन्यच्चाप्युक्तं प्रमेयं बोद्धव्यं। कर्कन्धूर्बदरी कोलीत्यमरः। सङ्कोचितमिति ण्यन्तात् कर्मणि निष्ठा, अन्यथा व्याख्याने सङ्कुचितमित्येव स्यात्। तदुभयं निजशङ्कया करणभूतया स्वयमेव सङ्कुचितं कृतारम्भमिति वा व्याख्येयं। कर्कन्धुकुणेति पाठस्त्वन्यः। ग्रन्थविस्तारभयात् सा-धकबाधकादिर्नोक्तः सुबुद्धिभिर्विविच्य बोद्धव्यं॥ ५१॥

श्रुतीति।अहिपतिः शेषः ज्योतिःशास्त्रानुसारेण अवनेर्भूमे-रधराध्वना अधस्तनेन मार्गेण पातालमार्गेण रात्रौ विहरण-कृतः परिभ्रमतः।तथा श्रुतिमयी वेदरूपा तनुर्देहो यस्य तस्यास्य भानोस्त्विषां दशशतानि एकसहस्रमेव दशशतानि कठकण्वा-

निशि निशि सहस्राभ्यां दृग्भिः शृणोति सहस्वराः
पृथगहिपतिः पश्यत्यस्य क्रमेण च भास्वराः ॥ ५२ ॥
बहु न खरता येषामग्रे खलु प्रतिभासते
कमलसुहृदस्तेऽमी भानोः प्रवालरुचः कराः ।

दिशाखाः निशि निशि रात्रौ रात्रौ सहस्रफणत्वात् प्रतिफणञ्च नेत्रद्वयसद्भावाद्द्राभ्यां सहस्राभ्यां दृग्भ्यां सहस्रद्वयपरिमिताभिर्दृष्टिभिरनक्रमेण युगपत् पृथक् च चक्षुःश्रवस्त्वात् साक्षात् शृणो [illegible] पश्यति चेत्यहं जाने। क्रियाद्वये क्रमेण हेतुद्वयं । यतः स[illegible] [illegible]ः स्वरूपेणोदात्तादिस्वरैः सह वर्त्तमानाः स्वराणां शब्द[illegible] [illegible]ा-च्छृणोति । तथा भास्वराः शुक्लभास्वररूपाःशाखाः तत साक्षात् पश्यति च। रात्रौ पातालगामित्वात्तत्र च शेषस्य वर्त्तनाद्वेदमयशरीरस्य [illegible] रणसहस्ररूपं शाखासहस्रं शेषे [illegible] नेत्रसहस्रद्वयस्य सत्त्वाद्युगपत् पृथगेकेन नेत्रसहस्रेण शृणोति द्वितीयेन च पश्यतीति युगपत् पृथक्श्रवणदर्शनाभ्यामेव शेषनेत्रसहस्रद्वयस्य सार्थक्यमभूदित्यर्थः। श्रुतिमयतरोरिति पाठे वेदरूपस्य वृक्षस्य शाखा युक्ताः । अध्वना वलिसद्मनेति पाठे वलिसद्मरसातलमित्यभिधानात् स एवार्थः । दशशतानीति काकाक्षिवदुभयत्रापि सम्बध्यते । सहस्वराः वोपसर्जनस्येति (पा० ६।३।८२) पाक्षिकत्वात् सभावाभावः ॥ ५२ ॥

बह्विति। येषां कराणां खरता तीक्ष्णताऽग्रे पूर्व्वाह्णसमये बहु अतितरां न प्रतिभासते स्फुरति, सर्व्वथा नोपलभ्यत

उचितमुचितं जालेष्वन्तःप्रवेशिभिरायतैः
कियदवयवैरेषामालिङ्गिताङ्गुलिलिङ्गिमा ॥ ५३ ॥

इत्यर्थः। यद्वा मज्जसमासेन नखरताऽतीक्ष्णता। पूर्व्वाङ्के येषां अनितरां तीक्ष्णत्वाभाव उपलभ्यते खलु निश्चितं। अथच येषामुपरिभागे बहवो नखरा नखाः येषां तत्ता उपलभ्यते तेऽमी प्रत्यक्षदृश्या विकाशहेतुत्वात् कमलानां सुहृदो बन्धोर्भानोः कमलबन्धोर्वा कराः किरणा एव पाणयः प्रवालरुचः विद्रुमवद्रक्तकान्तयः, अथ च प्रकृष्टबालकान्तयः अतिबाला अथच बालपल्लववद्रक्तकान्तयो दृश्यन्त इति शेषः। तथा जालेष्वन्तःप्रवेशिभिः गवाक्षादिविवरमध्यप्रविष्टैः अतएवायतैः तद्वशाद्दण्डवद्दीर्घीभूतैः कियदवयवैः किरणैः एषां किरणानां पाणीनाञ्च य आलिङ्गितः सम्बद्धः अङ्गुलिलिङ्गिमा अङ्गुलिर्वल्लिङ्गिमा रुचिमाऽथवाऽङ्गुलिभिर्लिङ्गिमा तत् उचितमुचितमियमतितरा औचिती। गवाक्षविवरप्रविष्टैः किरणावयवैः किरणानामङ्गुलीतुल्यत्वादाश्रिताङ्गुलिवच्चारुता युक्तैव, पाणीनामपि दीर्घैः कतिपयैरवयवैरङ्गुलिकृता चारुता भवतीत्यपि युक्तमेवेत्यर्थः। अङ्गुलिचारुतेत्यपिपाठः। नखोऽस्त्री नखर इत्यमरः। उचितं वीप्सायां द्विरुक्तिः। प्रवेशिभिस्ताच्छिल्ये आवश्यके वा णिनिः। आलिङ्गिता लिगिधातोः पक्षे कर्म्मणि लट्, पक्षे निष्ठा। लिङ्गति रमणीयतया चित्तं प्राप्नोतीति गत्यर्थात् धातोः पचाद्यच् पृथ्वादेराकृतिगणत्वादिमनिच् समर्थनीयः ॥ ५३ ॥

नय नयनयोर्द्राक् पेयत्वं प्रविष्टवतीरमू-
र्भवनवलभीजालान्नाला इवार्ककराङ्गुलीः ।
भ्रमदणुगणक्रान्ता भान्ति भ्रमन्त्य इवाशु याः
पुनरपि धृताः कुन्दे किं वा न वर्द्धकिना दिवः ॥ ५४ ॥

नयेति । भो राजन् त्वं भवनस्य गृहस्योपरि वर्त्तमानानां वलभीनां गृहविशेषाणां जालाद्गवाक्षविवराद्धेतोर्वलभीमध्यात् प्रविष्टवतीरमूरर्ककररूपा अङ्गुलीर्जालप्रवेशादङ्गुलीतुल्यान् सूर्यकरान् अथच करेष्वङ्गुलीनां युक्तत्वादर्ककराङ्गुलीर्नाला इव कमलदण्डसदृशीर्नयनयोर्द्राक् शीघ्रं पेयत्वं गोचरत्वं नय प्रापय सादरं पश्य, त्वन्नेत्रयोः कमलत्वात् जालमार्गप्रविष्टास्त्वया विलोक्यमाना एताः स्वनेत्रकमलनाला इव जनैर्दृश्यन्त इत्यर्थः । जालानां कमलतुल्यत्वात्तन्नाला इव त्वं पश्येति वा । अमूः काः । याः भ्रमतां जालप्रविष्टकिरणमध्ये परिभ्रमतां अणूनां त्रसरेण्वादिरूपरजःकणानां गणेन समूहेन आक्रान्ता व्याप्ता अत एव दिवो वर्द्धकिना स्वर्लोकतक्षणा अंशुरेण विश्वकर्म्मणा पुनरपि कुन्दे शाणचक्रे धृता आरोपिताः सत्यः आशु भ्रमन्त्य इव किं वा न भान्ति अपि तु तथैव शोभन्ते । यद्वा भ्रमन्तः शाणघर्षणवशात् परितः पतन्तः येऽणवः शाणतेजसः कणास्तेषां गणेनाक्रान्तत्वं युक्तं । विश्वकर्म्मणा सूर्यः शाणमारोपित इति पुराणं । नयनयोराधेयत्वमिति पाठे स एवार्थः । गुणेति पाठे गुणेन वशेनेत्यर्थः । जालात् जातावेकवचनं ॥ ५४ ॥

दिनमिव दिवाकीर्त्तिस्तीक्ष्णैः क्षुरैः सवितुः करै-
स्तिमिरकवरीलूनां कृत्वा निशां निरदीधरत्।
स्फुरति परितः केशस्तोमैस्ततः पतयालुभिः
ध्रुवमधवलं तत्तच्छायच्छलादवनीतलं ॥ ५५ ॥

दिनमिति। दिवाकीर्त्तिरिव नापित इव दिवसः तीक्ष्णैः सवितुः करैरेव क्षुरैर्निशां तिमिरकवरीलूनां तमोरूपां वेणीं छिन्नमूलां कृत्वा निरदीधरत् निर्द्धारितवान्। मुण्डयित्वा क्वापि कश्चित् केशोऽवशिष्टः स्यादिति गवेषितवानित्यर्थः। अथवा वहिर्निष्कासयामास। नापितोऽपि व्यभिचारादिदुष्टां स्वीयां परकीयां वा स्त्रियं क्षुरैर्मुण्डयित्वा देशाद्वहिर्निष्कामयति। ततोऽनन्तरं तस्मात् मुण्डनाद्वा परितस्तत्र पतयालुभिरधःपतनशीलैः केशस्तोमैः कृत्वा अवनीतलं तेषां वृक्षादिपदार्थानां छाया प्रतिविम्बं तस्य छलाद्व्याजेन ध्रुवं निश्चितं अधवलं श्यामं स्फुरति शोभते। वृक्षाद्यधोभागे कृष्णत्वं मुण्डितकवरीपतयालुकेशवृन्दसम्बन्धकृतं न तु प्रतिविम्बकृतं इत्यर्थः। छायाव्यतिरिक्तं सर्व्वमपि तमो दिवसे सूर्यकरैर्नाशितमिति भावः। दिवाकीर्त्तिस्तु नापित इत्यमरः। कवरी जानपदेति (पा० ४।१।४२) ङीष् लूनां ल्वादिभ्य (पा० ८।२।४४) निष्ठानत्वं। निरदीधरत् धारेर्ण्यन्ताल्लुङि णिश्रिद्रुस्रुभ्यः कर्त्तरि चङि (पा० ७।४।१) त्युपधाह्रस्वत्वे अभ्यासस्य सन्वद्भावात् दीर्घो लघोरिति (पा० ७।४।९४) दीर्घः। तत्तच्छायेति विभाषासेनेति (पा० २।४।२५) वा नपुंसकत्वं ॥ ५५ ॥

ब्रूमः शङ्खं तव नल यशः श्रेयसे स्पष्टशब्दं
यत्सोदर्यः स दिवि लिखितः स्पष्टमस्ति द्विजेन्द्रः।
श्रद्धा श्रद्धाकरमिह करच्छेदमप्यस्य पश्य
म्लानिस्थानं तदपि नितरां हारिणो यः कलङ्कः ॥५६॥

इदानीं शाङ्खिकानां शब्दं श्रुत्वा तद्व्याजेन नलयशो ... कुर्व्वन्ति। ब्रूम इति॥ हे नल वयं श्रेयसे मङ्गलाय ... स्पष्टः शब्दो यस्य तं शङ्खं तव यश एव ब्रूमः, त्वत्कीर्त्तिमेव शङ्खरूपतया वर्णयामः। शाङ्खिकैर्यः शङ्खो वाद्यते स त्वद्यश एव, तद्वदुज्ज्वलतरं तव यश इत्यर्थः। शङ्खध्वनो हि मङ्गलदीपकः। त्वद्यशोऽपि लोकानां शुभाय तव पुण्यं ... भवति। यस्य शङ्खस्य यशसश्च समुद्रप्रभवत्वाच्छुभ्रतरत्वाच्च सोदर्य्यः समानोदर्य्यो भ्राता स प्रसिद्धो द्विजेन्द्रश्चन्द्रः दिवि स्पष्टं लिखितोऽस्ति निःप्रभत्वाच्चित्रलिखित इव निर्व्यापारः स्फुटोऽत्र दृश्यत इत्यर्थः। त्वमिह गगने प्रत्यूषसमये वाऽस्य चन्द्रस्य श्रद्धा निश्चितं श्रद्धाकरं शङ्खसहोदरत्वास्तिक्यबुद्धिजनकं करच्छेदं किरणविनाशमपि पश्य, शङ्खेऽपि किरणा न सन्ति अस्यापीदानीं न सन्ति। किञ्चास्य हरिणसम्बन्धो हारिणो यः कलङ्कस्तद्रूपं नितरां अतिशयितं म्लानेः श्यामतायाः स्थानमपि पश्य शङ्खस्याप्युदरभागे नितरां श्यामतास्ति सा चन्द्रेऽपि तस्मादपि चन्द्रस्य शङ्खसोदर्य्यत्वं निश्चितं तथा चन्द्रमपि तव यशो ब्रूम इत्यर्थः। उक्तप्रकारेण शङ्खसोदर्य्यत्वं चन्द्रस्य यद्यप्यस्ति तदपि तथाच हरिण-

सम्बन्धी यः कलङ्कस्तदस्य सुतरां म्लानिस्थानं पश्य। चन्द्रस्य अद्वैयशङ्खभ्रातृत्वेऽपि निष्कलङ्कं शङ्खमेव तव यशो ब्रूमः। न तु सकलङ्कं चन्द्रमिति भाव इति वा। अथच हे राजन् तव यशःश्रेयसे यशोविवृद्धये सृष्टशब्दं विरचितस्मृतिवाक्यं शङ्खनामानं मुनिं ब्रूमः। शङ्खस्तव यशोवृद्धये स्मृतिं चकारेत्यर्थः। यस्य शङ्खमुनेः सोदर्यो भ्राता स लिखितनामा द्विजेन्द्रो ब्राह्मणश्रेष्ठो दिवि स्पष्टमस्ति। इह लिखिते श्रद्धाकरं सत्यविश्वासकारकं श्रद्धा साक्षान्निश्चितं वा करयोः पाण्योः छेदं कर्त्तनमपि पश्य। तथा हरतीति हारीतस्तस्य शङ्खस्य भ्रातुरुद्यानफलहर्त्तुरस्य लिखितो यः स्वकलङ्कः पापं तदेव म्लानिस्थानं पश्य। अथच श्रेयसे लोकानां कल्याणाय पुण्यश्लोको सृष्टः नल इति शब्दो यस्मिन् एवम्भूतं तव यशः शङ्खनामानमृषिं ब्रूमः समानधर्मत्वात्, न तु तद्भ्रातरं कलङ्कित्वात्, सोऽपि धर्मार्थं स्मृतिवाक्यानि सृष्टवान्। यस्य भ्रातेति पूर्ववत्। लिखितस्य चौर्य्ये हस्तच्छेदस्तु भारते ज्ञातव्यः। शाङ्खिकास्तत्प्रबोधार्थं शङ्खं वादयन्ति तस्माच्छीघ्रमुत्तिष्ठेति भावः। लिखितमुनिरेव दिवि ताराशङ्खो जात इति केचित्। समानोदरे शयित इत्यर्थे सोदराद्य इति (पा॰ ४।४।१०८) यः। अस्मादेव निर्देशाद्यत्प्रत्ययविवक्षायामेव विभाषोदर इति (पा॰ ६।३।८८) पाक्षिकः समानस्य सः। हारिणः सम्बन्धेऽण्। पक्षे आवश्यके णिनिः ॥ ५६ ॥

ताराशङ्खविलोपकस्य जलजं तीक्ष्णत्विषो भिन्दतः
सारम्भं चलता करेण निविडां निष्पीडनां लम्भितः।
छेदार्थोपहृताम्बुकम्बुजरजोजम्बालपाण्डूभव-
च्छंखच्छित्करपत्रतामिह वहत्यस्तंगतार्द्धो विधुः॥५७॥

तारेति। विशाखानक्षत्ररूपस्य सार्द्धमण्डलमञ्जुस्य शङ्खा-कारशङ्खस्य विलोपकः स्वप्रभया नाशकस्तस्य तथा जलजं कमलानि भिन्दतो विकाशयतोऽथच यतस्ताराशङ्खविलोपकस्यात-एव जलजं शङ्खं खण्डयतःतीक्ष्णत्विषः सूर्यस्यैव शाङ्खिकशिल्पिनः सारम्भं सोद्योगं चलता प्रसरता अथच घर्षणवशात् साटोपं गमनागमने कुर्व्वता करेण रश्मिना पाणिना च निविडां निष्पीडनां बाधां दृढां यन्त्रणाञ्च लम्भितः प्रापितः अस्तं गत-मर्द्धं यस्य एतादृशो विधुश्चन्द्रः शंखच्छेदसौकर्य्यार्थमुपहृतमानीतं यदम्बु जलं तस्य कम्बुजरजोजम्बालः छिद्यमानशंखसञ्जातरजस्स-यकर्दमः उदकसम्बन्धाद्रजः कर्दमीभवति, तेन पाण्डूभवत्सोऽह-मयत्वादधवलमपि धवलपङ्कवशात् धवलं भवत्, यच्छंखच्छि-शंखच्छेदकारि करपत्रं तद्भावं इह प्रातः समये वहति चन्द्र इत्यर्थः। शांखिकशिल्पिनो हि छेदसौकर्य्यार्थं छिद्यमानशंखा-दिदेशे जलं क्षिपन्ति। दृढतरग्रन्थिच्छेदादौ च करपत्रं करेण निविडं पीडयन्ति शांखादिच्छेदकरपत्रञ्चार्द्धचन्द्राकारं सञ्जा-तरजःपङ्कपाण्डुरञ्च भवति। अस्तमितार्द्धश्चन्द्रस्तादृक्करपत्र-तुल्यो दृश्यत इत्यर्थः। सूर्योदयो जातस्तारा लुप्ताः कमलानि

यत्पाथोजविमुद्रणप्रकरणे निर्निद्रयत्यंशुमा-
न्दृष्टीः पूरयति स्म यज्जलरुहामक्ष्णा सहस्रं हरिः ।
साजात्यं सरसीरुहामपि दृशामप्यस्ति तद्वास्तवं
यन्मूलाऽऽद्रियतेतरां कविनृभिः पद्मोपमा चक्षुषः ॥ ५८ ॥

विकसितानि चन्द्रोऽर्द्धेनास्तमित इति भावः । जलजं पक्षे जात्येकवचनं पाण्डुभवदिति च्विः ॥ ५७ ॥

यदिति ॥ अंशुमान् पाथोजानां कमलानां विमुद्रणप्रकरणे उन्मीलनप्रस्तावे एव यद्यस्मात् दृष्टीर्लोकनेत्राणि निर्निद्रयति विगतनिद्राः करोति उन्मीलयतीत्यर्थः । यस्माच्च हरिः श्रीविष्णुः शिवपूजासमये एककमलन्यूनं जलरुहां कमलानां सहस्रं स्वीयेनाक्ष्णा पूरयति स्म । तत्तस्मात् सरसीरुहां दृशामपि वास्तवं अबाधितं साजात्यं तुल्यजातीयत्वं अस्ति । यत् साजात्यं मूलमारोपकारणं यस्यास्तादृशी यन्निबन्धना चक्षुषः पद्मेन सहोपमा सादृश्यं कविनृभिः कालिदासादिभिः कविभिराद्रियतेतरां अत्यादरेणोपनिबध्यते । यदि नेत्राणि कमलसजातीयानि नाभविष्यन् तर्हि रविः कमलोन्मीलनप्रस्तावे तानि नोदमीलयिष्यत्, श्रीविष्णुश्च कमलसहस्रं नेत्रेण नापूरयिष्यत्, नह्यन्यप्रस्तावेऽन्यस्य योग्यताऽस्ति, तस्मात् दृशां कमलानाञ्च साजात्यं वास्तवमस्त्येवेत्यर्थः । उदितः सूर्यः कमलानि विकसितानि सर्व्वोऽपि जनः प्रबुद्धः, तस्मात् त्वमपि प्रबुद्ध्यस्वेति भावः । विष्णुः स्वचक्षुषा कमलसहस्रं पूरितवानिति लिङ्गपुराणादौ द्रष्टव्यं ।

अवैमि कमलाकरे निखिलयामिनीयामिक-
श्रियं श्रयति यत् पुरा विततपत्त्रनेत्रोदरं ।
तदेव कुमुदं पुनर्दिनमवाप्य गर्भभ्रम-
द्विरेफरवघोरणाघनमुपैति निद्रामुदं ॥ ५९ ॥

विमुद्रणेति विगतमुद्रं करोतीत्यर्थे ण्यन्ताद्भावे ल्युट्। निर्निद्र-यतीति तत्करोतीति णिच्, पूरयतीत्यत्रापि। समाना जातिः साजात्यमिति विग्रहे चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ् समानस्येति योगविभागात् समानस्य सः। वास्तवं आगतार्थे सत्त्वे वा अण्। तत्पर्य्यायात् वस्तुशब्दात् प्रज्ञादित्वात् स्वार्थे वा। पद्मो-पमा षष्ठीसमासः॥ ५८ ॥

अवैमीति। यत्कुमुदं कमलानामाकरे देवखातसरसि वा अथ च कमलायाः लक्ष्म्याः आकरे गृहे कोशागारे विततं विकासितं पत्त्रदूपत्त्राणामुदरं येन विततानि पत्त्राण्येव नेत्रमध्यानि येन तत्। विकस्वरं अथ च प्रसारितपद्मनेत्राद उन्मीलितनेत्रं सत् निखिलयामिन्याः सकलाया रात्र्याः स्व-स्तिनो यामिकस्य रात्रिचतुष्प्रहरप्राहरिकस्य सकलरात्रिजा-गरूकस्य श्रियं शोभां पुरा श्रयति अशिश्रियत्। सायमारभ्य सूर्योदयावधि यद्विकसितमभूत्। अथ च सकलां रात्रिं जजा-गार, तदेव कैरवं पुनरिदानीं दिनमवाप्य गर्भे भ्रमन्तः सूर्य-किरणसङ्गसञ्जातशीघ्रसङ्कोचवशान्निर्गन्तुमशक्तैरन्तःसञ्चारिणा द्विरेफैर्भ्रमरैस्तेषां निर्वन्धसञ्जातो रवस्तद्रूपा या घोराणा प्रसुप्त-

इह किमुषसि पृच्छाशंसिकिंशब्दरूप-
प्रतिनियमितवाचा वायसेनैष पृष्टः ।
भण फणिभवशास्त्रे तातङःस्थानिनौ का-
वितिविहिततुहीवागुत्तरः कोकिलोऽभूत् ॥ ६० ॥

घर्घरा खाण्डवरस्तया घनं निविडं यथा तथा निद्रामुदं निद्रा-सम्बन्धिसुखं उपैति, अन्तर्गतभ्रमरं सत् सङ्कुचतीत्यर्थः । अथ च यः कोषागारे सकलां रात्रिं जागर्त्ति स दिवसे घोरणाघनं यथा तथा निद्रातीत्यर्थः । इत्यहमवैमि मन्ये । पुराश्रयतीति पुरिलुङ्चास्मे (पा० ३।२।१२२) इति भूते लट् । घोरणेति घुरिधातोर्णिजन्तात् युच् ॥ ५९ ॥

इहेति । इह प्रभाते पृच्छाशंसिनः प्रश्नवाचिनः किमशब्दस्य प्रथमान्तं रूपं तेनैव प्रतिनियमिता प्रतिक्षणं शब्दान्तर-भाषणाद् व्यावर्त्तिता वाग्येन कौ कौ इति नियतभाषिणा वायसेन काकेन फणिनः शेषाद्भवमुत्पन्नं महाभाष्यलक्षणं शास्त्रं पाणिनीयमिति यावत् । तत्र तातङ्लक्षणस्यादेशस्य स्थानिनौ आदेशिनौ कौ भण कथयेति पृष्टः कृतप्रश्न एषः कोकिलः विहिता कृता या तुहीति वाक् सैवोत्तरं यस्यैवम्भूतोऽभूत् । किं काकः प्रातः स्वभावत एव कौ काविति वदति कोकिलश्च तुही तुहीति । काकः स्वभावात् कौ काविति प्रथमद्वितीयवचनान्तं प्रश्नशब्दं ब्रूते । कोकिलश्च तुही तुही इति तत्रोत्तरमिवा तुश्च-हिश्च तुही तुह्योस्तातङाशिष्यन्यतरस्यामिति पाणिनिसूत्रस्य-

दाक्षीपुत्रस्य तन्त्रे ध्रुवमयमभवत् कोऽप्यधीती कपोतः
कण्ठे शब्दौघसिद्धिक्षतबहुकठिनी शेषभूषानुयातः।
सर्वं विस्मृत्य दैवात् स्मृतिमुषसि गतां घोषयन्यो घुसंज्ञां
प्राक्संस्कारेण सम्प्रत्यपि धुवति शिरः पट्टिकापाठनेन॥६१॥

रणशीलः सन् तु हि स्थाने तातङोविधानात्तुहीति तातङः स्थानिनाविल्युत्तरं कोकिला दत्तवान् किं। प्रभातं जातं काकादयः शब्दायन्त इति भावः। सूत्रवार्त्तिकयोर्महाभाष्येणैव दार्ढ्यापादनात् फणिभवेत्युक्तं। स्थानं प्रसङ्गः सोऽस्त्यनयोरिति स्थानिनौ अत इनीति इनिप्रत्ययः (पा०५।२।११५)॥ ६०॥

दाक्षीति। अयं आकर्ण्यमानः कोपि शब्दः कोपि कश्चित् कपोतः घुकलक्षणः पक्षी दाक्षीपुत्रस्य दक्षगोत्रमञ्जातमातृकस्य पाणिनेस्तन्त्रे पाणिनीयव्याकरणे अधीतं पठनमस्यास्तीति अधीती [illegible]ऽभवत्। अनेकेषु पाणिनिशिष्य मध्ये कोऽपि कपोतरूपः शिष्योऽभूत् ध्रुवमित्यहमुत्प्रेक्षे। किम्. तदध्ययनवशादेव कण्ठे देवादिशब्दौघानां सिद्धये उदाहरणसाधनाय क्षता घृष्टा बह्वी कठिनी खट्टिका तस्याः शेषः [illegible]ल्लोलग्नोऽवशिष्टभागस्तद्रूपया भूषयाऽनुयातः सम्बद्धः खट्टिकाशेषरेखया कण्ठेऽलिखत् इत्यर्थः। बालादिभिः पट्टिकादौ खट्टिकया लिखितं पठित्वा सरस्वतीबुद्ध्या सायं लिपिप्रोञ्छनाङ्गुलिलग्नखटिकादिरजसा कण्ठे रेखां रचयन्तीति लोकरीतिः। कपोतस्य कण्ठः स्वभावेनैव धूसरो भवति। यः कपोतः सर्व्वमपि शास्त्रं

पौरस्त्यायां घुसृणसुमनःश्रीजुषो वैजयन्त्याः
क्षौमैश्चित्तं हरति हरिति क्षीरकण्ठैर्मयूखैः।

विस्मृत्य दैवात् स्मृतिं गतां उषसि प्रातःस्मृतां दाधाघ्वदापिति पाणिनिकृतां घुसंज्ञां पुनर्विस्मरणभिया घोषयन् पुनः पुनः पठन् सन् भूयसि कालेऽतीतेऽपि सम्प्रत्यपि प्राक् काष्ठघटितपट्टिकालिखितसूत्रपाठादिपाठनेन संस्कारेण पटुतराभ्यासाहितवासनया शिरो धुवति, विस्मृतस्य प्रातःस्मृतिर्भवति। कपोतस्य प्रातर्घुशब्दं करोति, शिरस्य कम्पयति, तस्मादियमुत्प्रेक्षा। बालाश्च श्यामासु काष्ठघटितपट्टिकासु खट्टिकादिलिखितं धवलाकारं सूत्रपाठादि आवेशेन घोषयन्तः शिरः कम्पयन्ति। योऽपि विस्मृतं पुनः स्मरति सोऽपि शिरः कम्पयति। दक्षस्यापत्यं अत इञ् (पा० ४।१।८५) इतो मनुष्यजातेरिति (पा० ४।१।६५) ङीप् तन्त्रोक्तस्य विषयस्य कर्म्मणि सप्तमी। अधीतमनेनेत्यधीती इष्टादेराकृतिगणत्वादिनिः। घोषयन् चौरादिकात् घुषेः शता। धुवति तौदादिकात् धूञ् कम्पन इत्यस्माच्छस्य ङित्वाद्गुणनिषेधे उवङ्॥ ६१॥

पौरस्त्यायामिति। जाम्बूनदतनुः उत्तमसुवर्णतुल्यस्वरूपोऽतएव शक्रसौधस्य वैजयन्ताख्यस्योपरिवर्त्ती सुवर्णकलशरूपोऽसौ भानुः पौरस्त्यायां हरिति प्राच्यां दिशि कुङ्कुमेन युक्तायाः कुङ्कुमवद्वा सुमनसः श्रीः शोभा तां जुषो भजन्त्या वैजयन्त्याः पताकायाः क्षौमैः सङ्करूपैः क्षीरयुक्तकण्ठैर्लक्षणयाऽतिबालैर्म-

भानुर्जाम्बूनदतनुरसौ शक्रसौधस्य कुम्भः
स्थाने पानं तिमिरजलधेर्भाभिरेतद्भवाभिः ॥ ६२ ॥

सूर्खैः हत्वा चित्तं हरति। इन्द्रसौधस्योपरि वर्त्तमाना बालारुणाः सूर्यकिरणास्तदीयरक्तपताकासमूहा इव, सूर्यश्च स्वर्णकलश इव शोभत इत्यर्थः। राजादिप्रासादेषु हि रक्ता भूयस्यः पताकाः सुवर्णकलशाश्च वर्त्तन्ते। यतोऽयं इन्द्रसौधस्य स्वर्णकुम्भरूपोऽत एवैतस्माद्भवाभिरुत्पन्नाभिर्भाभिः कर्त्तीभिः तिमिररूपोऽतिश्यामो जलधिस्तस्य यत्पानं शोषेन तिरोधापनं तत् स्थाने नितरामुचितं। कुम्भाद्भवो ह्यगस्त्यः पूर्व्वसमुद्रमधात्, अतः तासामपि भानुरूपकुम्भाद्भवत्वात् समुद्रपानं युक्तमित्यर्थः। सू- ऊर्ध्वमागतस्तिमिरश्च सर्व्वं निरस्तमिति भावः। तार्केरिति पाठे ताकसपत्यं पताकाया अपत्यरूपैस्तत्सदृशैरित्यर्थः पौरस्त्या पुरोदेशे भवा दक्षिणापश्चात्पुरसस्त्यगिति (पा० ४।२।९८) त्यक् किति चेति (पा० ७।२।११८) वृद्धिः। कर्तृकर्म्मणोः कृतीति (पा० २।३।६५) कर्तरि प्राप्तापि षष्ठी उभयप्राप्तौ कर्म्मणीति (पा० २।३।६६) नियमेन व्यावर्त्तितत्वात् तिमिरजलधेरित्यत्रैव भवति। भाभिरित्यत्र तु कर्त्तरि तृतीयैव ॥ ६२ ॥

द्वित्रैरेव तमस्तमालगहनग्रासे दवीभावुकै-
रुस्रैरस्य सहस्रपत्त्रसदसि व्यश्राणि घस्त्रोत्सवः ।
घर्माणां रयचुम्बिनं वितनुते तत् पिष्टपिष्टीकृत-
क्ष्मादिग्व्योमतमोऽघमोघमधुना मोघं निदाघद्युतिः ॥ ६३ ॥

द्वित्रैरिति। तमस्तमालानां तिमिररूपातिश्यामलतरुविशेषाणां गहनस्य गाम्भीर्यस्यैव ग्रासे विनाशे दवीभावुकैर्वनवह्नितां व्रजद्भिः द्वित्रैरल्पमङ्ख्यैरेव अस्य सूर्यस्योस्रैः किरणैः सहस्रपत्त्राणां सदसि आकरे घस्त्रोत्सवः दिनसम्बन्धी हर्षो विकासो यस्माद्व्यश्राणि वितीर्णः तत्तस्मात् कारणान्निदाघद्युतिः सूर्यः घर्माणामुष्णानां किरणानां ओघं समूहं अधुना द्वित्रैरेव करैस्तमोविनाशे पद्मविकासे च जाते रयचुम्बिनं वेगवत्तरं मोघं निष्फलं वितनुते विस्तारयति । किम्भूतं अतएव पिष्टं पिष्टं अतत्तत्कृतं पिष्टपिष्टीकृतं अत्यन्तचूर्णीकृतं क्ष्मादिग्व्योम्नां भूदिगाकाशानां तम एवाघं मालिन्यात्पातकं येन। तिमिरविनाशस्य कमलविकाशस्य च द्वित्रैरेव किरणैस्तत्करणे पिष्टपेषणवद्वैयर्थमित्यर्थः । दवदावौ वनारण्यवह्नौ किरणोस्त्रमयूखेत्यादि, घस्त्रो दिनाहनी इत्याद्यमरः । द्वित्रैः द्वौ त्रयो वा द्वित्राः सङ्ख्याव्ययेति (पा० २।२।२५) बहुव्रीहौ, बहुव्रीहौ सङ्ख्येय इति (पा० ५।४।७३) डच् । दवीभावुकै भुवो लषपतपदेति (पा० ३।२।१५४) ताच्छील्यादावुकञ् व्यश्राणि दानार्थाच्छ्रणातेश्चौरादिकात्कर्मणि चिण् ।

द्विचैरेव तमस्तमालगहनग्रासे द्रवीभावुकै-
रुस्रैरस्य सहस्रपत्रसदसि व्यश्राणि घस्रोत्सवः।
घर्माणां रयचुम्बिनं वितनुते तत् पिष्टपिष्टीकृत-
क्ष्मादिग्व्योमतमोऽघमोघमधुना मोघं निदाघद्युतिः॥ ६३॥

द्विचैरिति। तमस्तमालानां तिमिररूपातिश्यामलतरुविशेषाणां गहनस्य गाम्भीर्य्यस्यैव ग्रासे विनाशे द्रवीभावुकैर्वनत्रक्तितां व्रजद्भिः द्विचैरल्पसङ्ख्यैरेव अस्य सूर्यस्योस्रैः किरणैः सहस्रपत्राणां सदसि आकरे घस्रोत्सवः दिनसम्बन्धी हर्षो विकासो यस्माद्व्यश्राणि वितीर्णः तत्तस्मात् कारणान्निदाघद्युतिः सूर्यः घर्म्माणामुष्णानां किरणानां ओघं समूहं अधुना द्विचैरेव करैस्तमोविनाशे पद्मविकासे च जाते रयचुम्बिनं वेगवत्तरं मोघं निष्फलं वितनुते विस्तारयति। किम्भूतं अतएव पिष्टं पिष्टं अतत्तत्कृतं पिष्टपिष्टीकृतं अत्यन्तचूर्णीकृतं क्ष्मादिग्व्योम्नां भूदिगाकाशानां तम एवाघं मालिन्यात्पातकं येन। तिमिरविनाशस्य कमलविकाशस्य च द्विचैरेव किरणैस्तत्करणे पिष्टपेषणवद्वैयर्थ्यमित्यर्थः। दवदावौ वनारण्यवक्ली किरणोस्नमयूखेत्यादि, घस्रो दिनाहनी इत्याद्यमरः। द्विचैः द्वौ त्रयो वा द्विचाः सङ्ख्याव्ययेति (पा० २।२।२५) बहुव्रीहौ, बहुव्रीहौ सङ्ख्येय इति (पा० ५।४।७३) डच्। द्रवीभावुकै भुवो लषपतपदेति (पा० ३।२।१५४) ताच्छील्यादावुकञ्। व्यश्राणि दानार्थाच्छ्रणातेश्चौरादिकात्कर्मणि चिण्।

दूरारूढस्तिमिरजलधेर्वाडवश्चित्रभानु-
र्भानुस्ताम्यद्वनरुहवनीकेलिवैहासिकोऽयं।
न स्वात्मीयं किमिति दधते भास्वरश्वैतिमानं
द्यामद्यापि द्युमणिकिरणश्रेणयः शोणयन्ति ॥ ६४ ॥

रयचुम्बिनं पिष्टपिष्टीकृतमिति च कर्मणि भावे वा निष्ठा ॥ ६३ ॥

दूरेति। अयं भानुः तिमिरजलधेस्तमःसमुद्रस्य शोषकत्वाद्वाडवो बडवानलरूपश्चित्रभानुरग्निस्तथा ताम्यन्त्याः खिद्यन्त्या वनरुहवन्याः कमलवन्या एव कान्तायाः केल्या क्रीडया वैहासिकः परिहासकः क्रीडानर्मकारी, हेलामात्रेण विकासक इत्यर्थः। तथा दूरं गगनमार्गमारूढ ऊर्ध्वमागतः एवम्भूतः सन् स्वात्मीयं स्वीयतेजोरूपत्वात् सहजं भास्वरं श्वैतिमानं स्वपरप्रकाशकं शुक्लभास्वररूपत्वमद्यापि दूरारूढत्वेऽपि किमिति कुतो न दधते धारयति, तथा द्युमणेः सूर्यस्य किरणश्रेणयस्त्वाद्यापि गगनं किमिति न शोणयन्ति रक्तीकुर्व्वन्तीति प्रश्नद्वयं। यद्वा स्वीयं रूपं रविर्न धत्त इति कुतो ज्ञातमित्याशङ्क्य प्रत्यक्षं प्रमाणयति, यस्मादद्यापि सूर्यकिरणपंक्तयः शोणयन्ति तस्माद्भास्वरश्वैतिमा सूर्येण न धृत इति ज्ञायत इत्यर्थः। एवंविशिष्टः सूर्यो दूरारूढः सञ्जातस्तस्मादद्यापि सूर्यकिरणाः स्वीयं शुक्लभास्वरत्वं किमिति न दधते न धारयन्ति। ऊर्द्ध्वमागतः सूर्यः कमलानि च विकसितानि तस्मात्क्षोभमुत्तिष्ठेति भावः।

प्रातर्वर्णनयाऽनया निजवपुर्भूषाप्रसादानदा-
द्देवी वः परितोषितेति निहितामान्तःपुरीभिः पुरः ।
स्तुता मण्डनमण्डलीं परिदधुर्माणिक्यरोचिर्मय-
क्रोधावेगसरागलोचनरुचा दारिद्र्यविद्राविणीं ॥ ६५ ॥

चित्रभानुर्विभावसुरित्यमरः। दूरारूढः गम्यादिदर्शनात्समासः। वैहासिक इति विहासे नियुक्तः सप्रयोजनं शिल्पमस्येति। तत्र नियुक्त (पा० ४।४।६९) इति वा शिल्पमिति (पा० ४।४। ५५) ठक्। प्रयोजनमिति (पा० ५।१।१०९) ठञ्। स्वात्मीयं वृद्धाच्छः (पा० ४।२।११४)। दधते दधधारण इत्यस्यैकवच-नान्तं धाञस्तु बहुवचनान्तञ्चेति। स्वेतिमा पृथ्व्यादिः। श्रोणं कुर्व्वन्तीति तत्करोतीति एयन्ताणाविष्टवद्भावः पुंवद्भावः ष्टि-लोपो वा ॥ ६४ ॥

प्रातरिति। स्तुता मण्डनमण्डलीं भूषणश्रेणीं परिदधुः तत्तदस्तुवर्णाद्यवयवेषु धारयामासुः। किम्भूतां आन्तःपुरीभि-रवरोधसञ्चारिणीभिः सखीभिरित्युक्त्वा पुरो मागधानामग्रे निहितां स्थापितां। इति किं। हे मागधाः अनया प्रातर्वर्णनया प्रयोजिकया परितोषिता नितरां सन्तोषं प्रापिता देवी कृता-भिषेका राज्ञी भैमी निजवपुर्भूषाः स्वीयशरीरालङ्कारभूता-नेकविधसुवर्णमणिप्रभृतीनि भूषणान्येव प्रसादान् पारितो-षिकाणि वो युष्मभ्यं अदादिति। पुनः किम्भूतां माणिक्यरो-चिर्मयया पद्मरागप्रभारूपया क्रोधस्य आवेगः आडम्बरस्तेन

आगच्छन्भणतामुषः क्षणमथातिथ्यं दृशोरानशे
स्वर्गङ्गाम्बुनि वन्दिनां कृतदिनारम्भाप्लुतिर्भूपतिः।
आनन्दादतिपुष्पकं रथमधिष्ठाय प्रियायौतुक-
प्राप्तं तैरवरागतैरविदितप्रासादतो निर्गमः॥ ६६॥

सरागलोचनरुचा अरुणनेत्ररुचा कृत्वा दारिद्र्यस्य विद्राविणीं पलायनकारिणीं मयि स्थितायामप्यत्र त्वं कथं नाम स्थातुमिच्छसि इति क्रुद्धयाऽनया माणिक्यप्रभाःरूपनेत्रारुणकान्त्या कृत्वा दारिद्र्यं दूरादपसारितं। एवं प्रभातवर्णने क्रियमाणे भैम्या निजशरीरभूषणैस्ते सम्मानिता इत्यर्थः। अन्योऽपि रोषारुणलोचनरुचा किञ्चिद्विद्रावयति। आन्तःपुरीभिरिति बहुत्वेन माणिक्यत्यादिना भूषणानां भूयस्त्वममूल्यत्वञ्च सूचितं। देवी अदादित्यनेन च नलः स्नानार्थं गतः प्रासादे नास्तीति सूचितं। प्रातर्लुप्तषष्ठीकमव्ययं। परितोषिता णयन्तान्निष्ठा। आन्तःपुरीभिः सम्बन्धेऽन्। अन्तःपुरिकेति पाठे अन्तःपुरशब्दात् अन्तःपूर्व्वपदाट्ठञिति (पा० ४।३।६०) भवार्थे ठञ्। रोचिर्मयेति स्त्रियाः पुंवदिति (पा० ४।३।३४) पुंवत्॥ ६५॥

आगच्छन्निति। भूपतिर्नलः वन्दिनां दृशोरातिथ्यं प्रेक्षणविशेषद्योतितप्रेमभक्तिबाहुल्येन गोचरत्वं आनशे लेभे। किम्भूतानां क्षणमात्रमुषः प्रभातसमयं भणतां वर्णयतां। किम्भूतः स्वर्गङ्गाम्बुनि मन्दाकिनीजले कृतदिनारम्भाप्लुतिः कृतप्रातःस्नातः, तथा अवरागतैर्नलवहिर्गमनानन्तरमागतैस्तैर्मागधै-

रविदितोऽज्ञातः प्रासादतो निर्गमः राजगृहाद्बहिर्निर्गमो यस्य। तथा प्रियायौतुके भैमीपाणिग्रहणसमये कन्यादानप्रतिष्ठाङ्गतया दीयमाने वस्तुनि मध्ये प्राप्तं अतिपुष्पकं अतिक्रान्तपुष्पकाख्यकुवेरविमानं अतिरमणीयवेगवत्तरं सर्व्वत्राप्रतिहतगमनञ्च रथमधिष्ठायारुह्यानन्दाज्जवातिशयमज्ञातहर्षादागच्छन्। मागधागमनात् पूर्व्वं न तु वर्णनानन्तरं प्रबुद्धः प्रासादान्निर्गच्छन्नित्यर्थः। अतएव भैम्यैवैते सम्मानिता इति पूर्व्वश्लोके उक्तं। तस्याः परमधार्म्मिकत्वं सूचितं। कृतदिनारम्भाप्लुतिरागच्छन्नित्यनेन वक्ष्यमाणभैमीप्रत्युद्गमनं उत्तरसर्गकृतिश्च सूचिता। नलस्य पुण्यश्लोकत्वात् सर्व्वत्राप्रतिहतत्वात् तस्य च रथस्य पूर्व्वमेव सुलङ्घ्याद्रिसमुद्रकापथमित्यादिना सर्व्वत्राप्रतिहतगतिर्लोक्तेश्च। अतिपुष्पकत्वोक्तेः स्वर्गगमनोक्तिर्युक्तैव। आनशे अश्नोतेश्चेति (पा० ७।४।७२) नुट्। अतिपुष्पकं अत्यादयः क्रान्ताद्यर्थ इति (पा०२।२।१८।वा०५) समासः। रथं अधिशीङित्याधारस्य (पा०१।४।४६) कर्मत्वं। यौतकप्राप्तमिति पाठे कर्तृकरणेति (पा०२।१।३२) समासः। अवरागतैः कात्वा इति (पा०२।१।२८) द्वितीया समासः। प्रासादतो निर्गमः पञ्चमीतियोगविभागात् समासः पश्चाद्बहुव्रीहिः॥ ६६॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम्।
एका न त्यजता नवार्थघटनामेकान्नविंशे महा-
काव्ये तस्य कृतौ नलीयचरिते सर्गो निसर्गोज्ज्वलः॥ ६७॥

श्रीहर्षमिति। पूर्वार्धः पूर्ववत्॥ मुख्यां नवार्थघटनां नवार्थनिर्मितिमत्यजताऽमुञ्चतः नूतनमेव प्रमेयं सर्वत्र वदतः श्रीहर्षस्य। एकान्नविंशः विंशतेः पूरण इत्यर्थे डटि विंशतेर्डितीति (पा० । । ) लोपे च विंशः। तत एको नविंश इति, तृतीयेति योगविभागात् समासे एकादिश्चैकस्य चाऽदुगिति (पा०६।३।७६) नञः प्रकृतिभावः एकशब्दस्यादुगागमश्च ॥ ६७ ॥

इति श्रीवेदरकरोपनामकश्रीमन्नरसिंहपण्डितात्मजना-रायणकृते नैषधीयप्रकाशे एकान्नविंशः सर्गः॥

---

## उत्तरनैषधचरिते ।

### विंशः सर्गः ।

---

श्रीलक्ष्मीनृसिंहौ जयतः ।

सौधाद्रिकुट्टिमानेकधातुकाधित्यकातटम् ।
स प्राप रथपाथोभृद्वातजातजवो दिवः ॥ १ ॥
ततः प्रत्युदगाद्भैमी कान्तमायान्तमन्तिकं ।
प्रतिचो सिन्धुवीचीव दिनोङ्कारे सुधाकरम् ॥ २ ॥

सौधेति । सर्गसङ्गतिरुक्तैव । स, रथ एव पाथोभृत् मेघः दिवः स्वर्गात् गगनाच्च सौधो राजसदनमेवाद्रिस्तस्य कुट्टिमः नानावर्णानेकमणिबद्धभूमिः सैवानेकधातुका नानाविधगैरिकादिधातुयुक्ताऽधित्यकोर्द्धभूमिस्तस्यास्तटं पर्यन्तप्रदेशं प्राप । किम्भूतः वातात् सकाशादधिको जातो जवो वेगो यस्य । यद्वा जातो जवो यस्य स जातजवः वातो जातजवो यस्माद्धेतोः तेनापि यस्माद्रथात् सकाशाद्वेगः शिक्षितः, अथवा तेन जातवेगः मेघोऽपि उक्तविशेषणविशिष्टो पर्व्वतोर्द्धदेशं गगनात् पतति । धातुकेति शेषाद्विभाषेति (पा० ५।४।१५४) कप् ॥ १ ॥

तत इति । ततः सौधोर्द्धभूमिप्राप्त्यनन्तरं दिनोंकारे दिनप्रारम्भे प्रभाते अन्तिकं आयान्तं सुधाकरं चन्द्रं प्रतीचीसिन्धुवीचीव पश्चिमदिक्समुद्रलहरीव भैमी रथादवतीर्य्यान्तिकं

स दूरमादरं तस्या वदने मदनैकदृक्।
दृष्टमन्दाकिनीहेमारविन्दश्रीरविन्दत ॥ ३ ॥
तेन स्वदेशसन्देशमर्पितं सा करोदरे।
बभ्राजे बिभ्रती पद्मं पद्मेवोन्निद्रपद्मदृक् ॥ ४ ॥

गृहपरिसरप्रदेशमागच्छन्तं कान्तं नलं प्रति लचीव त्योदगात् प्रत्युज्जगाम। एतेन भैम्या नले आदरातिशयः सूचितः अन्तिक इत्यपि पाठः। अधिकरणे चेति चकारबलात् दूरा कार्थेभ्योऽपि सप्तमीविधानात् सप्तमी। वीची कृदिकारा ङीष् (पा० ४।१।४५।वा०) दिनोकारे ओमाङोश्चेति (पा० ५) पररूपम् ॥ २ ॥

स इति। दृष्टा मन्दाकिन्याः हेमारविन्दश्रीर्येन ए : स नलः तस्या वदने दूरं स्वर्णकमलादपि नितरामादरं - न्दत लेभे, अतएव मदने एका केवला मुख्या वा दृक् य नः स्वर्णकमलादप्यधिकं तत् दृष्ट्वा स सम्भोगवासनयाऽपश्यदि र्थः। एका दृग्यस्येति एकदृक् मदने एकदृक् सप्तमीति योगविभागात समासः। माद्यति सहर्षो भवतीति मदनः न दिलात् ल्युः तत. समानाधिकरणे वा बहुव्रीहिः ॥ ३ ॥

तेनेति। सा पद्मेव श्रीरिव बभ्राजे, किम्भूता स्वदेशस्यागमनसमये मन्दाकिनीस्वर्णकमलं मम क्रीडार्थमानेयमिति सन्देशरूपं पद्मं तेन नलेनार्पितं दत्तं करोदरे बिभ्रती, तथा हर्षादुन्निद्रपद्मदृक् विकसितकमलतुल्यनेत्रा लक्ष्मीरपि करे पद्मं

प्रियेणाल्पमपि प्रत्तं बहु मेनेतरामसौ।
एकलक्षतया दध्यौ यत्तमेकवराटकम्॥ ५॥
प्रेयसाऽवादि सा तन्वी त्वदालिङ्गनविघ्नकृत्।
समाप्यतां विधिः शेषः क्लेशश्चेतसि चेन्न ते॥ ६॥

धारयति प्रमादादिकमितपद्मदृक् भवति। सन्देशः कर्मणि घञ्॥ ४॥

प्रियेति। असौ भैमी प्रियेण प्रेम्णा दत्तं एककमलरूपत्वात् अल्पमपि बहु मेनेतरां नितरां बहु मेने। यद्यस्माद्धेतोरेको मुख्यः वराटको वीजकोशो यस्य तं पद्मं एकमेव लक्षं नयनविषयो यस्य यस्या वा तद्भावेन वस्तुविलोकनपरित्यागेन तदेकपरतयाऽत्यादरेण दध्यौ, अचिन्तयत्, शोभां पुनः पुनरपश्यदित्यर्थः। अथ च यद्यल्पमपि दत्तं बहुतरं न मन्येत तदेकश्चासौ वराटकश्च तमेककपर्दकमपि एकलक्षसंख्यापरिमितद्रव्यत्वेन न ध्यायेदिति श्लेषप्रतिभोत्थार्थापत्तिः। तेन प्रेम्णा स्वर्णकमलदानात् 'वसन्ति हि प्रेम्णि गुणा न वस्तुनि' इति न्यायेन तत् स्वर्णकमलं लक्षकोटिपरार्द्धद्रव्यादपि नितरामधिकं मेने इति भावः। प्रियपदेन प्रेमभरः सूचितः। पद्मस्य पुंलिङ्गत्वात्तमिति पुंनिर्देशः॥ ५॥

प्रेयसेति। प्रेयसा नलेन सा भैमी इत्यवादि उक्ता। इति किं। हे तन्वि कृशाङ्गि तवालिङ्गनविघ्नं करोतीति कृत् स शेषः स्नानसन्ध्यानन्तरकरणीयत्वेनावशिष्टः श्रुतिस्मृत्युक्ताऽनतिक्रमणीयो

कैतावान्नर्म्मममर्माविद्विद्यते विधिरद्य ते।
इति तं मनसा रोषादवोचद्वचसा न सा ॥ ७ ॥

नित्याग्निहोत्रादिरूपो विधिर्मया समाप्यतां परिपूर्णीक्रियतां तदेव वदेति सामप्रश्नः। परं यदि ते चेतसि आलिङ्गनविलम्बवशात् क्रोधः खेदश्च भवेत् समागतेनाश्लेषलोलुपेन मया त्वदाश्लेषः कर्त्तव्यः। परं अन्तरा यत्तपःशेषो विधिरस्ति स पुनस्तन्नचिन्तनेन यद्यनुजानासि तर्ह्येव समाप्तिं नेष्यते नान्यथेत्यर्थः। भैमीकर्म्मकालिङ्गनविषयमेतत्, भैमीकर्तृकालिङ्गनविषयं वा-लिङ्गनखिन्नां तां प्रत्येवं तेन प्रार्थना कृतेति भावः। ...धीः ...रोष इत्यपि पाठः ॥ ६ ॥

केति। असौ भैमी इति रोषात् ईर्ष्यया तं मनसैवावोचत् मनस्येवमेवाचिन्तयत्, न वचसा साक्षादवोचेत्यर्थः। इति ... ... हे प्रिय नर्ममर्मावित् आलिङ्गनादिकेलिरहस्यभेदी एतावान् अतिबहुलः अद्यापि ते तव विधिः क्व कुतः, कियति वा काले, विद्यते अपि तु नास्त्येव। सर्व्वोऽपि विधिस्त्वयाचरित एव केवलं ममालिङ्गनार्थं जात्युत्तरमात्रमेतत्। यद्वा अद्यैतावान् क्व विद्यते, अपि तु नास्त्येव। पूर्व्वं कदाप्येतावतो विधेरदर्शनात्। इद-मपि जात्युत्तरमेवेत्यर्थः। रोषार्थः रोषवशाल्लज्जावशाद्वा सा साक्षान्न बभाष इत्यर्थः। प्रतारणामेव मम करोषीति रुष्टा ऽभूदिति भावः। नर्ममर्म विध्यति इति व्यधेः क्विपि सम्प्रसारणे च नहि वृतीति (पा० ६।३।११६) पूर्व्वपदस्य दीर्घः ॥ ७ ॥

क्षणविच्छेदकादेव विधेर्मुग्धे विरज्यसि।
विच्छेत्ताऽहं चिरं न त्वा हृदाऽऽह स्म तदा कलिः॥८॥
सावज्ञेवाथ सा राज्ञः सखीं पद्ममुखीमगात्।
लक्ष्मीः कुमुदकेदारादारादम्भोजिनीमिव॥ ९॥

क्षणेति। तदा भैमीचिन्तावसरे गृहारामस्थ विभीतकनिवासी कलिः हृदा मनसा इति आह स्म अवोचत्। इति किं। हे मुग्ध मूढे भैमि क्षणविच्छेदकात् क्षणमात्रवियोगदात् विधेर्नित्यकर्म्मण एव हेतोस्त्वं विरज्यसे उद्विग्ना भवसीति काकुप्रश्नः। एतावता उद्वेगो न कार्य्य इत्यर्थः। यतोऽहं कलिस्त्वा त्वां चिरं बहुकालं न विच्छेत्ता त्वां विच्छेदभाजां न करिष्यामि, अपि तु वियोजयिष्याम्येवेति। एवमहं करिष्यामि न जानासीति सप्रतिभं मनोरथमकरोदित्यर्थः। भावी वियोगः सूचितः। विच्छेत्ता ताच्छील्ये तृन्। त्वेति त्वमाविति (पा० ७।२।९७) त्वादेशः॥ ८॥

सावज्ञेति। अथ एवं नलवाक्यश्रवणोद्वेगानन्तरं सा भैमी नलेन अनालिङ्गनात् स्वयमारब्धालिङ्गनानङ्गीकाराद्वा सावज्ञेव सापमानेव सती पद्ममुखीं नलात् सकाशाङ्गैम्यागमनसञ्जातहर्षत्वाद्विकसितकमलतुल्यवदनां सखीं कलानाम्नीं अगात् प्रतिजगाम। का कस्मात् कामिव। लक्ष्मीः कुमुदानां केदारात् क्षेत्रात् आरान्निकटे पद्मरूपवदनां अम्भोजिनीं कमलिनीमिवेत्युपमा। लक्ष्मीनिर्गमे च कुमुदक्षेत्रस्य यथा म्लानत्वं तथा

ममासावपि मा सम्भूत् कलिद्वापरवत्परः ।
इतीव नित्यसत्रे तां स त्रेतां पर्य्यतूतुषत् ॥ १० ॥
क्रियां प्राक्तनतनीं कृत्वा निषेधन् पाणिना सखीं ।
कराभ्यां पृष्ठगस्तस्या न्यमीमिलदसौ दृशौ ॥ ११ ॥

भैमीनिर्गमे नलस्य, अम्भोजिन्याश्च लक्ष्म्यागमनानन्तरं यथा हर्षस्तथा भैम्यागमनानन्तरं सख्या इति सूचितमुपमया ॥ ८ ॥

ममेति । स नलः इतीव हेतोर्नित्यसत्रे नित्याग्निहोत्रे विषये तां आहवनीयगार्हपत्यदक्षिणाग्निरूपेण प्रसिद्धां त्रेतां, अथ च त्रेतारूपं द्वितीयं युगं आज्यादिना पर्य्यतूतुषत् परितोषितवान् पूजितवांश्च । इति किं । असौ त्रेताऽपि कलिद्वापरवत् मम परः शत्रुर्मा सम्भूत्, इति । अग्नित्रयमप्यपूजनेऽहितकारित्वाच्छत्रुरेव भवति, एतेन चाकरणे प्रत्यवायभियैव नित्याग्निहोत्रमकरोत् तत्त्वतस्तु भैमीपरवश एवाभूदिति भावः । त्रेता त्वग्नित्रये युगे इत्यमरः । अतूतुषत् णौचङ्युपधाया ह्रस्वः (पा० ७।४।१)॥१०

क्रियामिति । दमयन्त्या इति । युग्मम् । असौ नलः पृ[illegible] सन् कराभ्यां तस्या दृशौ न्यमीमिलत् पिदधौ । किं कृत्वा प्राक्तनतनीं प्राभातिकीं अर्चाऽग्निहोत्रादिक्रियां कृत्वा, किं कुर्व्वन् पाणिनाऽहमागत इति तस्या अग्रे भवत्या न कथनीयमिति करसञ्ज्ञयैव सखीं निषेधयन्, अत एव सहास्याभिर्नलस्य सम्मुखीभिः दमयन्त्या वयस्याभिः समीचितः । तया किं कुर्व्वन्निव प्रसृतिभ्यां करद्वयचुलुकाभ्यां प्रेयसीदृशावियत्परिमाणमेतयोर्दैर्घ्य-

दमयन्त्या वयस्याभिः सहास्याभिः समीक्षितः।
प्रसृतिभ्यामिवायामं मापयन् प्रेयसीदृशोः ॥ १२ ॥
तर्किताऽऽलि त्वमित्यर्द्धवाणीका पाणिमोचनात्।
ज्ञातस्पर्शान्तरा मौनमानशे मानसेविनी ॥ १३ ॥
साऽवादि सुतनुस्तेन कोपस्ते नायमौचिती।
त्वां प्रापं यत्प्रसादेन प्रिये तन्नाद्रिये तपः ॥ १४ ॥

मायामं मापयन्निव। क्रीडाकारिणामियं जातिः। युग्मपाणिनि करप्रसृतिरित्यमरः प्रसृतिप्रमाणे दृशाविति सूचितं। प्राक्तनीं मायं चिरमिति(पा० ४।३।२३) ट्युट् टित्वान्ङीप् मोलेरकर्म्मकत्वाद्गतिबुद्धीत्यादिना अणौ कर्त्तुर्णौ कर्मत्वात् दृशाविति द्वितीया। मापयन् मा माने अस्माद्धेतुमण्णिचि शता ॥११॥१२॥

तर्कितेति। हे आलि सखि मया नेत्रपिधापनी त्वं तर्किता ज्ञातासीत्येवंरूपाऽर्द्धा मां मुञ्चेत्याद्यवचनात् अपरिपूर्णपदा वाणी यस्याः तथा स्वकराभ्यां नलपाण्योर्मोचनहेतोः ज्ञातं स्पर्शान्तरं स्त्रीयस्पर्शाद्विलक्षणो नलस्पर्श इति यया ज्ञातस्पर्शमन्तरं चेतो यस्या इति वा। सा मौनमानशे प्राप। यतो मानसेविनी मानिनी। स्पर्शेन नलं ज्ञात्वा मामवज्ञाय चेतायामनुरक्तोऽधुना वृथैव किमित्यागत इत्यभिमानात् किमपि नावददित्यर्थः। वाणीकेति नद्यन्तत्वात् नद्यृतश्चेति (पा० ५।४।१५३) कप् ॥१३॥

सेति। तेन नलेन सुतनुः शुभाङ्गी सा इति अवादि उक्ता। अयि प्रिये भैमि ते तवायं मयि कोपो नौचितो। औचितीशब्द-

निशि दास्यङ्गतोऽपि त्वां स्नात्वा यन्नाभ्यवीवदं।
तं प्रवृत्तासि मन्तुं चेन्मन्तुं तद्वद वन्द्यसे॥ १५॥
इत्यनम्याःपदासत्त्यै पत्यैषा प्रेरितौ करौ।
रुध्वा सकोपं सातङ्कं तङ्कटाचैरमूमुचत्॥ १६॥

स्याविशिष्टलिङ्गत्वादुचितोऽयं नेत्यर्थः। अहं यस्य प्रमादेन त्वां प्रापं प्राप्तवानस्मि तत्तपोऽग्निहोत्रादि नाद्रिये आदरेण न कुर्य्यामित्याक्षेपे काकुः प्रश्नः। एवंविधमहाफलस्य तपसः ऽत्यादरो युक्त एवेत्यर्थः। त्वत्प्रापकत्वादेवास्यादरः क्रियते न त्वन्यथा तस्मात् कोपं माकार्षीरिति भावः॥ १४॥

निशीति। हे भैमि अहं निशि तव दास्यं आलिङ्गनादिचुम्बनादिचरणपर्य्यन्तं सेवाकारित्वं गतोऽपि सन् प्रातःस्नात्वा त्वां नाभ्यवीवदं न नमस्कृतवानिति यत् तं मन्तुं अपराधं मन्तुं अङ्गीकर्तुं त्वं प्रवृत्तासि चेत्तर्हि वद तवापराधमार्ज्जनायेदानीमेव वन्द्यसे नमस्क्रियसे। रात्रौ दास्यं प्राप्त इत्यनेन सखीभैमीरतिवृत्तमपि सूचितम्। अभ्यवीवदं अभि पूर्व्वान्नमस्कारार्थाच्चौरादिकाद्वदेः स्वार्थे णिचि चङ्चणी चङो (८०७। ४।१) इत्युपधा ह्रस्वः॥ १५॥

इतीति। एषा इत्थमुक्तप्रकारेणैतस्याः भैम्याः पदासत्त्यै चरणनिकटीभावाय प्रणामार्थं पत्या प्रेरितौ करौ नमस्कारारम्भानौचित्याद्रात्रिवृत्तस्य प्रकटनेन वा सरोषं, पतित्वात् स्वीयचरणयोः पतिकरस्पर्शस्यानौचित्याद्वा आतङ्को भयं तेन

अवोचत ततस्तन्वीं निषधानामधीश्वरः।
तदपाङ्गचलत्तारझलत्कारवशीकृतः॥ १७॥
कटाक्षकपटारब्धदूरलङ्घनरंहसा।
दृशा भीत्या निवृत्तं ते कर्णकूपं निरूप्य किं॥ १८॥

च सह यथा तथा, चरणस्पर्शात् पूर्व्वमेव रुध्वा स्वकराभ्यां निवार्य्य तं कटाक्षैरमूमुहत कामाधीनं चकार। एवं नला विलोकित एव कामवशो जात इति भावः। पदार्थे तादर्थ्य-मात्रे चतुर्थी। मुहेरकर्म्मकत्वाद्गतिबुद्धीत्यादिना (पा॰ १।४।५२) अणौ कर्तुर्णौ कर्म्मत्वात्तमिति द्वितीया। अमूमुहत् हेतुमण्णि चङि उपधा ह्रस्वादिः॥ १६॥

अवोचतेति। ततस्तस्यास्तादृशकटाक्षविलोकनानन्तरं निषधानामधीश्वरः तन्वीं वक्ष्यमाणं अवोचत। किम्भूतः तारशब्दस्य कनीनिकावाचित्वे नपुंसकलिङ्गत्वात्तस्यापाङ्गे चलतस्तारस्य कनीनिकायाः किरणोल्लासलक्षणो दर्शननमस्कारझलत्कारश्चमत्कारस्तेन वशीकृतः, यद्वा चलन्ती तरला तारा यत्र तादृशश्चासौ झलत्कारश्च ततः पूर्व्वया षष्ठीसमासः। झलत्कार इति देश्यं पदं॥ १७॥

कटाक्षेति। हे प्रिये कटाक्षकपटेन नेत्रप्रान्तवक्रविलोकनव्याजेनारब्धं कर्तुं व्यवसितं दूरलङ्घने अतिदूरदेशातिक्रमणे रंहो वेगो यस्याः, एतादृश्या ते दृशा कर्णरूपं कूपं अग्रे निरूप्य विलोक्य भीत्या पुनर्निवृत्तं परावृत्तं किमित्युत्प्रेक्षा। दूरं

सरोपाऽपि सरोजाक्षि त्वमुदेषि मुदे मम ।
तपाऽपि शतपत्रस्य सौरभायैव सौरभा ॥ १९ ॥
कर्त्तुमिन्दौ भवद्वक्त्रबिम्बविभ्रमविभ्रमं ।
शङ्के शशाङ्कमानङ्के भिन्नभिन्नविधिर्विधिः ॥ २० ॥

गन्तुमुपक्रान्ता हि महान्तं कूपं पुरो दृष्ट्वा भयेन शीघ्रं परावर्तन्त एव। दृशेत्यनेन स्त्रीत्वं युज्यते,स्त्रिया हि भीतियुक्ता ॥ १८॥

सरोषेति। हे सरोजाक्षि सरोषाऽपि त्वं मम मुदे हर्षायैवोदेषि भवसि, अङ्गानामालिङ्गनाद्यर्थं दुरापत्वेन स्पृहणीयतरत्वात्सौन्दर्य्यातिशयाच्चेत्यर्थः। यस्मात्तपाऽपि उष्णस्पर्शाऽपि सूरः सूर्य्यस्तत्सम्बन्धिनी सौरी भा दीप्तिः शतपत्रस्य कमलस्य विकासपूर्वं सौरभायैवेति न तु म्लान्यै। सौरभेत्यत्र पुंवत्कर्म्मधारयेति (पा० ६।३।४२) पुंवत् भावः ॥ १९ ॥

कर्त्तुमिति। हे भैमि विधिर्ब्रह्मा पूर्वं निष्कलङ्केऽपीन्दौ विषये अतिसादृश्यात् प्रतिक्षणं भवन् उत्पद्यमानो भवतो वा वक्त्रबिम्बस्य विभ्रमः विशिष्टा भ्रान्तिस्तस्य विभ्रमं विलासं कर्त्तुं शशाङ्कं आनङ्के, शशरूपेण कलङ्केन चिह्नितवानित्यहं शंके। यतो भिन्नभिन्न प्रकारः किञ्चित्किञ्चिद्भेदयुक्तो विधिर्घटपटादिविधानं यस्य तादृशः। तस्माद्भवन्मुखमृगाङ्कयोरुत्पद्यमानसादृश्यभ्रान्तिनिरासाय चन्द्रं कलङ्केन चिह्नितवानित्यर्थः। इत्यहं मन्ये। निष्कलङ्कं भवन्मुखं चन्द्रादप्यधिकमिति भावः। आनङ्के चौरादिकाल्लक्षणार्थादङ्केर्लिट्। भिन्नभिन्नेति प्रकारे द्विरुक्तिः ॥ २० ॥

ताम्रपर्णीतटोत्पन्नैर्मौक्तिकैरिन्दुकुक्षिजैः।
बद्धस्पर्द्धतरा वर्णाः प्रसन्नाः स्वादवस्तव ॥ २१ ॥
त्वद्गिरः क्षीरपाथोधेः सुधयैव सहोत्थिताः।
अद्य यावद्दहो धावद्दुग्धल्लेपल्लवस्मिताः ॥ २२ ॥

ताम्रपर्णीति। तव वर्णास्त्वद्वदननिर्गता वर्णाः प्रसन्नाः स्पष्टतराः, निर्दोषत्वादुज्ज्वलाश्च, तथा स्वादवो मधुराः सुश्राव्याः क्रमेण मलयनिर्गतमलयदक्षिणसमुद्रगामिताम्रपर्ण्याख्यनद्यास्तट उत्पन्नैः, तथा अमृतमयस्य इन्दोः कुक्षौ जातैर्मौक्तिकैः सह बद्धा धृता स्पर्द्धा सादृश्यदर्पो यैस्ते, अतिशयेन बद्धस्पर्द्धा बद्धस्पर्द्धतराः, इक्षुकुक्षिजैरिति पाठे इक्षुकुक्षेर्जातैर्मौक्तिकैः। ताम्रपर्णीजातस्य मौक्तिकस्य सौन्दर्य्यं न तु माधुर्य्यं। इक्षुकुक्षौ मौक्तिकानि यदि जायेरन् तदा माधुर्य्यातिशयात् तैः सह बद्धस्पर्द्धतरा इत्यभूतोपमा। इक्षुवंशविशेषस्तत्रोत्पन्नस्य मौक्तिकस्य वैद्यकनिर्घण्टे शैत्यं माधुर्य्यं पित्तापशमकत्वञ्चोक्तं वंशान्मौक्तिकोत्पत्तिः प्रसिद्धा पूर्व्वमुक्ता च ॥ २१ ॥

त्वदिति। तव गिरः क्षीरपाथोधेः क्षीरसमुद्रात् सकाशात् सुधयैव सहोत्थिताः उत्पन्नाः। यस्मादद्य यावत् अद्यतनदिनमवधीकृत्य अद्यापि अहो चित्रं धावत्प्रसरत् दुग्धल्लेपल्लवरूपं स्मितं हास्यं यासां तादृश्यः। अमृतेन सह निर्गतत्वादमृतवन्मधुरक्षीरसमुद्राच्च निर्गतत्वात् स्मितव्याजेन दुग्धल्लेपल्लवा एवाद्यापि अनुवर्त्तते, तदद्धवलस्मिताश्चेति भावः। धावत् धावु गतिशुद्ध्योरित्यस्माच्छता ॥ २२ ॥

पूर्व्वपर्व्वतमाश्लिष्टचन्द्रिकश्चन्द्रमा इव।
अलञ्चक्रे स पर्यङ्कमङ्कसङ्क्रमितप्रियः ॥ २३ ॥
प्रावृडारम्भणाम्भोदः स्निग्धो द्यामिव स प्रियां।
परिरभ्य चिरायास विश्लेषायासमुक्तये ॥ २४ ॥
चचुम्बास्यमसौ तस्या रसमग्नः श्रितस्मितं।
नभोमणिरिवाम्भोजं मधुमध्यानुविम्बितः ॥ २५ ॥

पूर्व्वेति। स नलः पर्य्यङ्कमलञ्चक्रे। किम्भूतः, अङ्के सङ्क्रमिता समारोपिता प्रिया येन सः। कः कमिव, आश्लिष्टा चन्द्रिका कौमुदी येन स चन्द्रमाः पूर्व्वपर्व्वतमिव॥ २३ ॥

प्रावृडिति। सः प्रियां विश्लेषः प्रातःस्नानादिनित्यकर्म्मानुष्ठानवशेन तावन्मात्रभिन्नदेशावस्थायितया वा वियोगस्तज्जनितो य आयासः खेदस्तस्य मुक्तये निवृत्तये परिरभ्य चिराय आस तस्थौ शुशुभे वा। कः कामिव प्रावृडारम्भणे वर्षारम्भे अम्भोदो मेघो द्यामिव। किम्भूतः स्निग्धः सजलत्वात् श्यामः। मेघो यथा वीनां श्लेषो योगः शरदादौ सदा गगने क्रीड[illegible] पक्षिभिर्यः श्लेषः सम्बन्धस्तज्जनितदुःखपरिहाराय जलभिया पक्षिणां नीडनिवेशित्वात्तद्योगक्लेशमुक्तये दिवमालिङ्ग्य चिरं तिष्ठति। किम्भूतः स्निग्धोऽतिप्रीतिमान्। असगतिदीप्यादानेषु ॥ २४ ॥

चुचुम्बेति। असौ रसमग्नः प्रेमभरपरवशः सन् तस्या गतरोषत्वादालिङ्गनसुखाच्चाश्रितस्मितं आस्यं चुचुम्ब। कः कमिव

अथाहूय कलां नाम पाणिना स प्रियासखीं ।
परस्तादेशितामूचे कर्त्तुं नर्म्मणि साक्षिणीं ॥ २६ ॥
कस्मादस्माकमज्ञास्या वयस्या दयते न ते ।
आसक्ता भवतीष्वन्यं मन्ये न बहु मन्यते ॥ २७ ॥

मधुमध्ये मकरन्दमध्ये अनुविम्बितः प्रतिफलितः, अत एव रममग्नो नभोमणिः सूर्य्यः अम्भोजमिव श्रितविकासं। सूर्य्य-पद्मयोर्दूरदेशत्वात् कथं चुम्बनमिति प्रश्ने मधुमध्यानुविम्बित इत्युत्तरं ॥ २५ ॥

अथेति। अथ चुम्बनानन्तरं स पाणिना हस्तसंज्ञया कलां नाम प्रियायाः सखीमाहूय ऊचे। किम्भूतां नर्म्मणि अन्योन्य-रहःक्रीडाहास्ये साक्षिणीं कर्त्तुं परस्तादग्रे देशितां स्थापितां। देशितां एत्तान्निष्टा ॥ २६ ॥

कस्मादिति। हे कले अज्ञास्या पद्ममुखी ते वयस्या भैमी कस्मात्कारणादस्माकं न दयते कृपां न करोति कथय पृच्छेति शेषः। स्वयमेव कारणमाशङ्कते भवतीषु भवादृशीषु भूयसीषु सखीषु आसक्ता सामस्त्येन अनुरक्ता सती हितकारिणमप्यन्यं मादृशं बहु यथा तथा नितरां न मन्यते, इत्यहं मन्ये, तेन मयि कृपां न करोतीत्यर्थः। राचावात्मानं मम हस्तेन स्पृष्टुमपि नाद।दिति तां प्रति सूच्यते। भवदासक्तेरस्माकमियं दशा अनया कृतेति कलां प्रत्यपि सोल्लुण्ठनं। अथ च नवपरिचयेऽप्य-स्माकं दयते चिरपरिचयेऽपि ते तुभ्यं दयते। कुतः भवतीषु

अन्वग्राहि मया प्रेयान्निशि स्वोपनयादिति।
न विप्रलभते तावदालीरियमलीकवाक्॥ २८॥
आह स्मैषा नलादन्यं न जुषे मनसेति यत्।
यौवनानुमितेनास्यास्तन्मृषाऽभून्मनोभुवा॥ २९॥

आसक्ता सती अन्यं मल्लक्षणं बहु मन्यते। यत इत्युत्तरानुरोधेन व्याख्येयं। अस्माकं धीगर्व्वेति (पा० २।३।५२) षष्ठी अस्मदो-द्वयोश्चेति (पा० १।२।५९) एकत्वेऽपि बहुवचनं॥ २७॥

अन्विति। अलीकाऽसत्या वाक् यस्याः सेयं इत्युक्ता विश्राम-स्थानभूता भवादृशीरालीः सखीस्तावन्न विप्रलभते प्रतारयति। इति किं। मया निशि आलिङ्गनचुम्बनादिना स्वस्यात्मशरीरस्यो-पनयाद्दानादानुकूल्येन रमणात् मया प्रेयान्नलोऽन्वग्राहीति विप्रलभते प्रतारयति। मादृशान् यद्यपि वञ्चयति तथापि भवादृशीः कथं वञ्चयेदिति तावच्छब्दार्थः। अलीकवाक् प्रतारयतीति विपरीतलक्षणया मोक्षुण्डभाषणाद्विप्रलभत -त्यर्थः। आलीस्तावन्न विप्रलभते, अपि तु ता अपि वञ्चयत्ये-वास्मादृशान्तु का कथेति काकुर्वा। तस्मादियमस्माकं न दयते इत्येव तथ्यं जानीत सर्व्वथा वाऽस्या वचसि भवतीभिर्न विश्व-सनीयमिति भावः। एतेन भेदोपायप्रयोगः कृत इति सूचितं॥ २८॥

पुनरप्यलीकतामेवाह। आहेति। एषा भवादृशीनां पुर इति यत् आह स्म। इति किं। अहं नलादन्यं मनसाऽपि न जुषे

आस्यसौन्दर्य्यमेतस्याः शृणुमो यदि भाषसे ।
तद्धि लज्जानमन्मौलेः परोक्षमधुनाऽपि नः ॥ ३० ॥
पूर्णयैव द्विलोचन्या सैषालीरवलोकते ।
द्रागदृगन्ताणुना मान्तु मन्तुमन्तमिवेक्षते ॥ ३१ ॥

भेजे इति तदेतस्याः प्रतिवाक्यं, यौवने प्रस्तुते सति अनुमितेन प्रकटीभूतेन मन एव भूः स्थानं यस्य तेन कामेन कृत्वा मृषा मिथ्याऽभूत् । यदन्यस्य कामस्य मनसि धारणादसत्यप्रतिज्ञेयमिति निन्दा । वस्तुतस्तु तारुण्यमारभ्य मय्येवानुरक्तेति स्तुतिरेवास्याः कृतेति व्याजस्तुतिः ॥ २९ ॥

आस्येति । हे कले त्वं एतस्या आस्यसौन्दर्य्यं चिरपरिशीलनज्ञाताशेषविशेषत्वाद्यदि भाषसे तर्हि वयं शृणुमः । आदर्शे हस्तकङ्कणदर्शनवदसङ्गतमेतदित्याशङ्क्य हेतुमाह, हि यस्मात्तदेतदस्या आस्यसौन्दर्य्यं अधुनाऽपि विवाहमारभ्याद्यतनक्षणपर्य्यन्तं नोऽस्माकं परोक्षमप्रत्यक्षं नेत्रविषयो न जातमित्यर्थः । यतः लज्जया नमन्मौलेर्नम्रमस्तकायाः नम्रमौलित्वादेतन्मुखं कदाऽपि न मया दृष्टं तस्मादेतदास्यसौन्दर्य्यं त्वं कथयेत्यर्थः । एतस्या मुखमपि न दृष्टं सम्भोगकथा तु दूरापास्ता। यस्मादेतदीयवचने सर्व्वथा न विश्वसनीयं इति भावः । अधुनेत्यस्य वर्त्तमानार्थत्वात् परोक्षस्य भूतार्थत्वाद्वर्त्तमानस्य भूतत्वविरोधात् परोक्षाधुनाशब्दयोरर्थान्तरपरिग्रहाद्विरोधाभास इति ॥ ३० ॥

पूर्णयेति । सैषा, आलीर्भवादृशीः सखीः पूर्णयैव द्विलोचन्या

नान्वीक्षते यथेदानीं मामियन्तेन कल्पये।
योऽहं दूत्येऽनया दृष्टः सोऽपि व्यस्मारिषीदृशा॥ ३२॥

नेत्रद्वयेनावलोकते मान्तु पुनः मन्तुमन्तमिव सापराधमिव एकस्या अपि दृशः अन्तः प्रान्तदेशस्तस्यापि अणुर्लेशस्तेनापि द्राक् झटिति क्षणमात्रमेव ईक्षते। पूर्णद्विलोचन्या चिरकालविलोकनस्य का कथा इत्यर्थः। सापराधोऽपि सरोषया दृशा विलोक्यते। प्रियया च प्रेयान् दृगन्तेनैव विलोक्यते, सख्यादिबान्धवजनस्तु सरलैः सकलैः नेत्रैः। द्विलोचन्या समाहारद्विगोर्द्विगोरिति (पा॰ ४।१।२१) ङीप्॥ ३१॥

नेति। हे सखि यथा येन प्रकारेण यत इति यावत्, यस्मादिदानीं इयं मां नालोकते, तेन हेतुना योऽहं दूत्यावसरे अनया दृष्टोऽप्यहमीदृशा सर्व्वथाऽनवलोकिन्याऽनयैव व्यस्मारिषि विस्मृत इति कल्पये सम्भावयामि। सम्प्रति जिज्ञासिताशेषविशेषं मां दृक्ष्यतीति तु कथादूरेऽस्तु, किन्तु सर्व्वथा नाव- कयत्यपीत्यर्थः। स एवायमिति प्रत्यभिज्ञानं यद्यभविष्यत्तर्हि तादृगेव व्यलोकयिष्यत्, नत्वेवं, तस्माद्विस्मृत एवाहमनयेति कल्पना युक्तेति सामुण्ठनपूर्व्वकवक्रोक्तिः। कल्पयेत्। चिन्तार्थाचौरादिकात्क्लृपेः णिचश्चेति (पा॰ १।३।७४) तङ्। व्यस्मारिषि विस्मरतेः कर्म्मणि लुङुत्तमैकवचने, इटि, स्यसिच्सीयुडित्यादिना (पा॰ ६।४।६२) सिचःसियुडागमे, तस्य चिण्वद्भावे, अचोञ्णितीति (पा॰ ७।२।११५) वृद्धिः॥ ३२॥

रागं दर्शयते सैषा वयस्याः सूनृतामृतैः।
मम त्वमिति वक्तुं मां मानिनी मौनिनी पुनः॥ ३३॥
कां नामन्त्रयते नाम नामग्राहमियं सखीं।
कले नलेति नास्माकं स्पृशत्याख्यां तु जिह्वया॥ ३४॥

रागमिति। हे कले सैषा वयस्या भवादृशीः सूनृतानि प्रियाणि सत्यानि च वचनानि तद्रूपैरमृतैः कृत्वा रागं निजां प्रीतिं दर्शयते बोधयति। भवतीष्वतितमा मम प्रीतिरिति ज्ञापयतीत्यर्थः। मां पुनः त्वं ममेति एतावन्मात्रमपि वक्तुं मौनिनी तूष्णीम्भवतीत्यर्थः। यतो वृथैव मानिनी धृताभिमाना, न हि मया किमप्यपराद्धमित्यर्थः। त्वं मदीय इत्येतावतैव वचनेनाहं सनाथः, परं तावदपि न वदतीति मय्यस्याः कृपा नास्त्येवेति सोल्लुण्ठनं, लज्जावशान्न वदतीति व्याजेन स्तुतिर्वा। दर्शयते णिचश्चेति (पा०१।३।७४) तङ्। वयस्या दृशेर्बुध्यर्थत्वाद्गतिबुद्धीति (पा०१।४।५२) अणौ कर्त्तुर्णौ कर्मत्वं॥ ३३॥

कामिति। हे कले इयं कां नाम सखीं नामग्राहं नाम गृहीत्वा नामन्त्रयते सम्बोधनपूर्व्वं नाह्वयति, अपि तु सर्व्वामपि। नाम शिरश्चालने। अस्माकमस्मत्सम्बन्धिनीं तु पुनर्नलेति सम्बुध्यन्तामाख्यां संज्ञां जिह्वया न स्पृशति नोच्चारयति रहस्यभाषणं तु दूरापास्तमित्यर्थः। स्त्रीणां भर्त्तुर्नामग्रहणस्य निषिद्धत्वाद्नौचित्यारोपेणोपालम्भाद्व्याजस्तुतिः। आख्यानमाख्या, आतश्चोपसर्गे (पा०३।३।१०६) इत्यङ्॥ ३४॥

अस्याः पीनस्तनव्याप्ते हृदयेऽस्मासु निर्दये।
अवकाशलवोऽप्यस्ति नात्र कुत्र बिभर्त्तु नः ॥ ३५ ॥
अधिगत्येदृगेतस्या हृदयं मृदुतामुचोः।
प्रतीम एव वैमुख्यं कुचयोर्युक्तवृत्तयोः ॥ ३६ ॥

अस्या इति। अस्याः परिदृश्यमानेऽत्र हृदये अवकाशलवः स्थानलेशोऽपि नास्ति तस्मान्नोऽस्मान् कुत्र कस्मिन् स्थाने बिभर्त्तु धारयतु। अवकाशलेशाभावे हेतुमाह। यस्मात् पीनाभ्या[illegible]-बाहुमूलप्रसृताभ्यां स्तनाभ्यां व्याप्ते समन्तादावृतेऽतिसङ्कटे[illegible] दयया समावेशो भवति, इत्याशङ्क्य साऽपि नास्तीत्याह, अस्[illegible] निर्दयेऽस्मद्विषये कृपारहिते। एतेन नास्याः कश्चिद[illegible] इति सोत्प्रासं। उच्चकुचाभ्यामहमुपर्य्येव ध्रियेन तु मम [illegible]-स्पर्शः कदाऽपि दीयत इत्यौचित्येऽप्यनौचित्यारोपाद [illegible]का-र्व्याजस्तुतिर्वा ॥ ३५ ॥

अधिगत्येति। हे कले वयं ईदृगेवं पूर्व्वोक्तप्रकारेण कठिनं तस्या हृदयमधिगत्य प्राप्य ज्ञात्वा वा मृदुतामुचो काठिन्याश्रयवशात् काठिन्यं भजतोः कदाप्यनालिङ्गनान्मयि विषये निर्दययो-रिति यावत्। तथा युक्तमुचितं वृत्तमाचरणं ययोः, कदाचिद-प्यालिङ्गनकारणाद्विरुद्धलक्षणयाऽनाचारशीलयोरिति यावत्। एवम्भूतयोरस्यास्तनयोः कदाचिदप्यालिङ्गनादानाद्वैमुख्यं परा-ङ्मुखत्वमेव प्रतीमो जानीमः। आलिङ्गने कुचौ सम्मुखौ भवतः। निर्दयहृदयत्वादेव तस्याः पराङ्मुखत्वादेवम्भूतावेतत्कुचावपि

सदा मम पराङ्मुखाविव जाताविव्यर्थः। अथ च स्त्रीणां हृदयस्यातिमृदुत्वादेतस्या हृदयमीदृगतिमृदु ज्ञात्वाऽपि सर्व्वस्य तस्यावरणान्निर्दयत्वं भजतोः, अत एव विपरीतलक्षणया युक्तवृत्तयोरनाचारशीलयोः। मृदु प्रति हि मृदुनैव भवितव्यं। विशेषतस्तु स्त्रियम्प्रति, तथा च विपरीताचरणादनाचारशीलयोरत एव वैमुख्यं पराङ्मुखत्वं, अथच विरुद्धमुखत्वं जानीम एव। अनाचारशीलो हि कस्मैचिदपि स्वं मुखं न दर्शयति मलिनमुखश्च भवति। एतयोरप्युक्तप्रकारेण पराङ्मुखत्वं चूचुकयोः श्यामत्वान्मलिनमुखत्वं जानीम इति सोल्लुण्ठं। अथचैतस्या हृदयं कठिनं ज्ञात्वा आर्जवं हि कुटिलेषु न नीतिरिति न्यायेन निष्ठुरत्वमङ्गीकुर्व्वतोः। यस्मादुचितं वृत्तं स्थितिर्ययोरथ च युक्ताचारयोः पराङ्मुखत्वं प्रतीम एव। हृदयस्योपर्य्यूर्द्धमुखेन वर्त्तमानत्वात् हृदयं प्रति कुचौ सदा पराङ्मुखाविवेत्यर्थः। युक्ताचारो हि कठिनहृदयं प्रति निर्दयो भूत्वा तस्मात् पराङ्मुख एव भवति, न तु पश्यति, अथ च ईदृक्सुन्दरमन्तरपरित्यागेनास्या हृदयं प्राप्य कठिनतरत्वगुणं भजतोः तथा पीवरत्वादन्योन्यसंश्लिष्टयोर्वर्त्तुलयोश्च विगतमुखत्वं निमग्नचूचुकत्वगौरत्वविरुद्धश्याममुखत्वञ्च जानीम एव। अथ चेदृगतिकोमलमेतदीयं हृदयं ज्ञात्वा प्राप्य वा मूढतामसुस्नातारालिङ्गनादीनामपि विषये सङ्कपयोरतएव युक्ताचारयोर्विशिष्टमत्युन्नतं मुखमग्रं ययोस्तादृक् प्रसन्नमुखत्वञ्च जानीम एवेति इत्यादि ज्ञातव्यं ॥ ३६ ॥

इति मुद्रितकण्ठेऽस्मिन् सोत्कण्ठमभिधाय तां ।
दमयन्तीमुखाधीतस्मितयाऽसौ तया जगे ॥ ३७ ॥
भावितेयं त्वया साधु नवरागा खलु त्वयि ।
चिरन्तनानुरागाऽहं वर्त्तते नः सखीः प्रति ॥ ३८ ॥

इतीति। अस्मिन्नले इत्युक्तप्रकारेण सोत्कण्ठं वक्रोक्त्यादिमत्रितं यथा तथा तां भैमीं कलां वा अभिधायोक्त्वा मुद्रितकण्ठे मौनिनि सति दमयन्तीमुखादधीतं स्मितं यया नलवक्रोक्तिमाकर्ण्य दमयन्तीमुखं दृष्ट्वा सञ्जातहासया भैमीमुखेनाधीतं स्मितं यस्याः, नलीयमात्मामवचनात् स्वयं दमयन्ती भैमीमपि हासयति सात्यर्थः। तादृश्या वा तया कलया असौ नलो जगे, अभाणि। सोत्कण्ठनं तु सात्प्रामित्यमरः। उत्कण्ठनमुत्कण्ठः, भावे घञ्, तेन सह यथा स्यादिति क्रियाविशेषणं। मुखाधीतेति पञ्चमीति योगविभागात् समासः। पक्षे कर्तृकरणे कृतेति (पा०२।१।३२) तृतीयासमासः। असौ तयेति पाठे क्रियया यमभिप्रैतीति (पा०१।४।३२वा०१) सम्प्रदानत्वं ॥ ३७ ॥

कस्मादस्माकमित्यस्योत्तरमाह ॥ भावितेति। हे राजन् त्वयेयं साधु सम्यक् भाविता सम्यक् तर्किता यत्त्वयि विषये खलु निश्चितं नवरागा नवप्रीतिर्वर्त्तते नवोढत्वादधार्ष्ट्येन सलज्जा वर्त्तत इत्यर्थः। त्वयि नवरागा सती नः सखीः प्रति चिरन्तनो दोऽनुरागस्तस्याऽहं योगं यथा तथा वर्त्तते बहुकालीनस्नेहवशान्निशङ्कादित्यर्थः। त्वयि नवरागा सती नः प्रति चिरन्तना-

स्मरशास्त्रविदा सेयं नवोढा नस्त्वया सखी।
कथं सम्भुज्यते बाला कथमस्मासु भाषतां ॥ ३९ ॥

नुरागार्हमतिदृढप्रीतिर्यथा तथा वर्त्तते न तु त्वयीत्येकवाक्यता वा। तस्मात्लज्जावशाद्धाष्ट्यान्मय्युदासीना भवतीषु तु प्रीतिमती तव बुद्धिरुत्पन्नेत्यर्थः। अथ च त्वयेयं साधु तर्किता साध्विति काका विपरीतलक्षणया वा साध्वेव विपरीतमेव तर्कितेत्यर्थः। यद्वा अकार प्रश्लेषेणासाधुतर्किता, खलु यस्मात् त्वयीयं नूतनानुरागा अतिदृढप्रीतिर्वर्त्तते, अस्मासु तु जीर्णानुरागयोग्यं यथा तथा अतिशिथिलप्रीतिर्वर्त्तते न तु त्वयि। अतिपरिचयादवज्ञा इत्यादि न्यायादित्यर्थः। यतोऽस्मभ्यं दयते तुभ्यं न दयत इति पूर्वोक्तवचनात् त्वया सत्यमुक्तं इत्यर्थः। यद्वा सम्यक् भाविता भावं प्रापिता द्राविेतेत्यर्थः यस्मात् त्वयि नवरागत्वाद्दृढप्रीतिः सती अस्मान्प्रति पुराणप्रीतिसदृशमतिशिथिलप्रीतिर्वर्त्तते न तु त्वयि। तथा सम्यग्भाविता यथा त्वय्येव दृढप्रीतिः सती अस्मान् सर्व्वथा न गणयतीत्यर्थः। तस्मादस्मान् वृथैव उपहससीति भाव इति सोल्लुण्ठं ॥ ३८ ॥

अन्वग्राहीत्यादेरुत्तरमाह ॥ स्मरेति।

बालां बलान्न भुञ्जीत विरागोत्पत्तिशङ्कया।
भुञ्जीत चेत्त्रपाभीतित्याजनक्रमसङ्गतां ॥

इत्यादि स्मरशास्त्रविदा कामशास्त्ररहस्यज्ञेन त्वया नवोढा

नवपरिणीता सेयं बाला नोऽस्माकं सखी कथं सम्भुज्यते, अपि तु विरागोत्पत्तिभिया बलादुपमर्दनं कथं विद्रम्यते, अत एव त्वया सम्भुक्तत्वादेवास्मासु कथं केन प्रकारेण भाषतां कथयतु, अपि तु त्वत्ततरतत्वादेव किञ्चिद ् न कथयतीति स्पष्टोऽर्थः। अथ चैवं वक्रोक्तिः कामशास्त्रज्ञेन त्वयेयं नवोढा बाला कथं किंवा सम्भुज्यते, अपि तु सामस्त्येन भोगो न क्रियत एव, किन्तु स्मरशास्त्रवित्त्वात् स्वल्पमेव भुक्त्वा मुच्यत इत्यर्थः। अत एवास्मासु किं भाषतां, अपि तु अतिपीडनाभावान्न किञ्चिदप्यस्मासु भाषते। या हि बाला सुरते नितरां पीड्यते सैव सखीषु ममातिपीडा भवति मया सोढुं न शक्यत इत्यादि वदति, न तु नाभिभुक्तमुक्तेत्यर्थः। अथ च कामशास्त्रज्ञेन त्वया बालाऽपीयमेतन्मनोऽनुकूलमेव भुक्ता, अतः कथमस्मासु भाषतां अपि तु न कथञ्चिद्भाषते कस्याप्यग्रे न कथयतीत्यर्थः। बाला हि कामशास्त्रकौशलवशाद्यथानुरागं भुक्ता यद्यपि भोगं सहते तथाप्यतीव लज्जालुत्वात् सम्भोगरहस्यं कस्याप्यग्रे न कथयतीत्यर्थः। तस्मादुभावपि वञ्चकौ युवामस्मान् वञ्चयथ इति भावः। ... च सामर्थ्याच्छास्त्रविदा कामशास्त्रज्ञेन त्वया नवोढेयं बाला केन प्रकारेण सम्भुज्यते स्मर चिन्तय तं प्रकारमित्यर्थात् रात्रौ कृतमेव सम्भोगमकृतमेव कथयसि, सम्भोगप्रियेण स विस्मृतोऽतः स्मरेति काकूक्तिः। कथञ्चेयमस्मासु भाषतामपि तु नास्मासु कथयतीत्यर्थः। अथ च विपरीतलक्षणया त्वयेयं भुक्ता अनया रहस्यमस्मासु कथितं किमिति नः प्रतारयसीत्यर्थः। अथ च

नासत्यवदनं देव त्वां गायन्ति जगन्ति यं ।
प्रिया तस्य सरूपा स्यादन्यथालपना न ते ॥ ४० ॥

त्वयेयं बाला परिणीता कथं समन्ताद्भुज्यते, अपि तु अनुचितमेतत् विदुषाऽपि त्वया क्रियते, अस्मासु कथं न भाषतां अपि तु भाषत एवेत्यादि ज्ञातव्यं ॥ ३९ ॥

आलीरियमलीकवागित्यंशस्य, आह स्मेत्यच तन्मृषाभूदित्यस्यांशस्योत्तरमाह॥ नासत्येति। हे देव राजन् जगन्ति त्रयोऽपि लोका यं त्वा त्वां असत्यं वचनं भाषणं यस्य तादृशं न गायन्ति किन्तु सत्यवादिनमेव वदन्ति। यद्वा न असत्यं नासत्यं सत्यमेव भाषणं यस्य तं तस्य तादृशस्य सत्यभाषिणस्ते तव प्रिया अन्यथा विपरीतार्थमलीकमालपनं भाषणं यस्यास्तादृश्यसत्यवादिनी सरूपा तुल्यस्वभावा योग्या न स्यात् किन्तु सत्यवादिन्येव प्रिया तव योग्या स्यादित्यर्थः। तस्मादस्मासु यदनया कथितं सत्यमेवेति भावः। अथ च वक्रोक्तिः, त्रयो लोका यं त्वामसत्यभाषिणं न गायन्ति, अपि तु असत्यभाषिणमेव गायन्ति। यद्वा आ ईषदपि सत्यभाषणं यस्य तं सदाऽनृतवादिनं त्वां वदन्ति तस्मानृतवादिनस्तवान्यथालपनात् सत्यवादिनी सदृशी योग्या न स्यात् किन्तु असत्यवादिन्येवोचिता। कृतमपि सम्भोगमहं न कृतवानिति वदसि तथेयमपि रात्रौ कृतमपि सम्भोगं नेति वदति योग्यं योग्येन सम्बध्यत इति न्यायो युक्तः, इति द्वावपि प्रति सोल्लुण्ठं। भो राजन् त्रयोऽपि लोका नासत्यवदयिनौकुमा-

मनोभूरस्ति चित्तेऽस्याः किं नु देव त्वमेव सः।
त्वदवस्थितिभूर्यस्मान्मनः सख्या दिवानिशम् ॥ ४१ ॥
मतस्तेऽथ सखीचित्ते प्रतिच्छाया स मन्मथः।
त्वयास्य समरूपत्वमतनोरन्यथा कथं ॥ ४२ ॥

रत्नमुखं यस्य तमतिसुन्दरमुखं वदन्ति तस्य तव प्रिया अन्यथाऽनुरूपं त्वपनं मुखं यस्यास्तादृशी तुल्यरूपा न स्यात् किन्तु सुन्दरतरवदनैव योग्या स्यात्, तथा च त्वन्मुखचन्द्रेणैतस्या अपि मुखं सुन्दरमिति जानीहीति भावः ॥ ४० ॥

आह स्मेत्यादिः श्लोकद्वयेणोत्तरमाह ॥ मनोभूरिति। अस्याश्चित्ते मनोभूः कामोऽस्तीति सत्यं, हे देव किन्तु त्वमेव स मनोभूः न तु त्वदन्यः कश्चिदित्यर्थः। कुतः, यस्मात् कारणात् सख्या भैम्या मनः दिवानिशं तवावस्थितेर्भूः स्थानं। कामपरत्वे मनसि भवति, नलपरत्वे मनोभूः स्थानं यस्य, अस्यास्त्वमसि सुन्दरतरो मनोभूस्त्वमेव वर्त्तसे नान्य इति ॥ ४१ ॥

यद्यहमेव कामस्तर्हि मद्विषयेऽस्याः कामो नास्तीति नलायावान्तरच्छलाशङ्कानिराकरणव्याजेन प्रकारान्तरेण तस्यैवोत्तरमाह ॥ मत इति। अथाथवा स मन्मथो सख्याः भैम्याश्चित्ते मतो वर्त्तमानस्य तव प्रतिच्छाया प्रतिबिम्ब एव न तु स्वतन्त्रो बिम्बरूपः, प्रतिबिम्बश्च स्वच्छ एव मुकुरादौ भवतीति भैमीमनसः स्वच्छतरत्वं द्योतितं। कुत एतदित्याशङ्क्यान्यथानुपपत्तिं प्रमाणयति। अन्यथा यदि प्रतिच्छाया स भवेत्तर्ह्यतनोरशरी-

कः स्मरः कस्त्वमत्रेति सन्देहे शोभयोभयोः ।
त्वय्येवार्थितया सेयं धत्ते चित्तेऽथवा युवां ॥ ४३ ॥

रस्यास्य कामस्य त्वया सह समरूपत्वं कथं स्यादपि तु न कथ-ञ्चित्, ऐलनामत्यादीनां सशरीरत्वात् त्वया सह सारूप्यं युज्यते, अयं त्वतनुस्तस्मादस्य प्रतिविम्बत्व एव त्वत्सारूप्यं युज्यते। प्रति-विम्बमेव ह्यशरीरमपि तुल्यरूपं भवति। तस्मात् प्रतिविम्बस्य विम्बं विना स्थातुमशक्यत्वान्मनसि तव धारणात् सारूप्यं त्वत्प्र-तिविम्बभूतं त्वदेकविषयं कामं नान्तरीयकतया धारयतीत्यर्थः। विम्बत्वे अनङ्गत्वेन सारूप्यानुपपत्तेः प्रतिविम्ब एवायमित्यनु-मानं ॥ ४२ ॥

क इति। अथ चोभयोर्द्वयोर्भवतोस्तुल्यया शोभया कृत्वाऽत्र द्वयोर्मध्ये स्मरः कः त्वं नलश्च क इति सादृश्यात् सन्देहे सति अत्रास्मिन् सन्देहे सति वा त्वय्येव विषये अर्थितया साभिलाष-तया सेयं भैमी युवां द्वावपि स्मरनलौ चित्ते धत्ते। सर्वो ह्यति-सदृशयोः काचमण्यादिपदार्थयोः सन्देहे एकतरपरित्यागे मणिरेव परित्यक्तः स्यात्तन्मा भूदिति मण्यर्थित्वेनैव यावन्निर्णयं काचमपि न मुञ्चति। तथा तुल्यशोभत्वेन निश्चेतुमशक्यत्वात् स्मरपरित्यागे भवानेव परित्यक्तः स्यात्तन्मा भूदिति त्वय्येव साभिलाषतया द्वावपि न मुञ्चतीत्यर्थः। त्वदर्थमेव धारयति न तु कामार्थं त्वामिति भावः। त्वयेति पाठे त्वया हेतुना याऽर्थिता तयेत्यर्थः ॥ ४३ ॥

त्वयि न्यस्तस्य चित्तस्य दुराकर्षत्वदर्शनात्।
शङ्कया पङ्कजाक्षी त्वां दृगंशेन स्पृशत्यसौ ॥
विलोकनात् प्रभृत्यस्या लग्न एवासि चक्षुषोः।
स्वेनालोकय शङ्का चेत् प्रत्ययः परवाचि कः ॥ ४५ ॥

पूर्णयेत्यादेरुत्तरमाह ॥ त्वयीति। पङ्कजाक्षी असौ त्वयि न्यस्तस्य चित्तस्य दुराकर्षत्वस्यापत्यावर्त्तमानत्वस्य दर्शनाद्धेतोः शङ्कया चित्तवत् पुनरप्रत्यावृत्तिभिया त्वां दृगंशेन नेत्रप्रान्तेन स्पृशति पश्यति। न तु पूर्णया विलोचन्या, त्वयि न्यस्तेति अनुरागातिशयः, पङ्कजाक्षीति दृशोरतिसौन्दर्यञ्च सूचितं। सुन्दरवस्तुनः पुनरप्रत्यावृत्तौ सन्देहं इति च सूचितं। शङ्कयेति प्रतीयमानोत्प्रेक्षा ॥ ४४ ॥

नालोकत इत्यादेरुत्तरमाह ॥ विलोकनादिति। विलोकनात् प्रभृति अनया प्रथमं त्वं यदा दृष्टोऽसि तदारभ्य त्वं अस्याश्चक्षुषोः संलग्न एवासि। त्वामेवेयं सदा पश्यति नान्यत् किञ्चिदपीति। अस्यास्त्वयि महती नेत्रप्रीतिरित्यर्थः। एवं सति मद्वचने इयं मिथ्या वदतीति शङ्का चेत्तर्हि एतदीयचक्षुषोर्मध्ये अहं वर्त्ते न वेति निश्चेतुं स्वेनात्मनैवावलोकय एतदीयचक्षुषी पश्य अहमत्र वर्त्ते इत्यनुभवेनैव निर्द्धारयिष्यसीत्यर्थः। स्वेनालोकने हेतुमाह। परवाचि को नाम प्रत्ययो विश्वासः, अपि त्वनुभवयोग्येऽर्थे परवचनमप्रमाणमेवेत्यर्थः। दृश्यकनीनिकायां सम्मुखं दृष्टुमवश्यं प्रतिविम्बो भव-

परीरम्भेऽनयारभ्य कुचकुङ्कुमसङ्क्रमं।
त्वयि मे हृदयस्यैवं राग इत्युदितैव वाक्॥ ४६ ॥

त्ययेति छलोक्तिः। अथच नेत्रलग्नत्वादेव नेत्रकज्जलबदोचितुममासमर्थान्नालोकत इति त्वया सत्यमेवोक्तमित्यर्थः। अत्र चेच्छङ्का तर्हि स्वनेत्रलग्नमेव गोलकादि स्वयमालोकय तदा ज्ञास्यसि, यतः परवाचि कः प्रत्ययः। विलोकनात् आरभ्यार्थयोगे पञ्चमी॥ ४५॥

रागं दर्शयत इत्यादेरुत्तरमाह॥ परीति। अनया परीरम्भे गाढालिङ्गने क्रियमाणे तव हृदये कुचकुङ्कुमस्य सङ्क्रममारभ्योपक्रम्य तद्व्याजेन मे हृदयस्य मनसोऽथ च वचसस्त्वय्येवं अनेन प्रकारेण रागोऽनुरागोऽथ च रक्तिमा, एतादृशी वागुदितैव, साक्षात् यद्यपि नोक्तं तथाप्युक्तप्रायमेवेत्यर्थः। गाढालिङ्गनं ह्यनुरागं विना न घटत इति गाढालिङ्गनं कुचकुङ्कुमाङ्गरागलेपनव्याजेन मम त्वय्येवमनुरागो वर्त्तत इत्यन्तर्गतोऽनुरागभर एव प्रकटीकृत इति भावः। हृदयस्यैवेति पाठे त्वय्येवेति योजना। त्वयि मे हृदयस्यैव रागो न तु वाचिकः। सख्यादौ तु वाङ्मात्रेणैव रागो न तु हृदयस्येति वा। उदितैवेति पाठे तूत्प्रेक्षा। अनया गाढालिङ्गनेन तव हृदये लग्नमिदं परिदृश्यमानं कुचकुङ्कुमादिकमेव सर्व्वमपि राचिहृत्ताान्तमस्मान् बोधयतीति वृथैव वक्षयमीति सूचितं॥ ४६॥

मनसाऽयं भवन्नामकामसूक्तजपव्रती।
अक्षसूत्रं सखीकण्ठश्चुम्बत्येकावलिच्छलात् ॥ ४

अध्यासिते वयस्याया भवता महता हृदि।
स्तनावन्तरसम्मान्तौ निष्क्रान्तौ ब्रूमहे बहिः ॥ ४

कां नामस्मयत इत्यादेरुत्तरमाह ॥ मनसेति। अयं सख्या भैम्याः कण्ठो मनसैव भवतो नलेति ते नाम तदेव कामसूक्तं स्मरस्य प्रकाशको मन्त्रस्तस्य जपः स एव व्रतं अस्यास्तीति तादृशः सन् एकावलिच्छलात्, एकयष्टिकमुक्ताहारविशेषव्याजात् अक्षसूत्रं पद्माक्षादिरचितां जपमालिकां चुम्बति। अर्द्धनामग्रहणनिषेधात् 'साहस्रं मानसो जपः' इति मानसजपे फलविशेषश्रवणाच्च मुक्ताहारजपमालिकया त्वन्नामैव मनसा जपतीति भावः। नलेति स्मरणमात्रेणैव कामोद्रेकान्नाम्नः कामसूत्रत्वं ॥ ४७ ॥

अस्या पीनस्तनेत्यादेरुत्तरमाह ॥ अधीति। महता .नतरां गौरवयुक्तेनाथ च महापरिमाणेन भवता त्वया वयस्यायाः भैम्या हृदि अध्यासितेऽधिष्ठिते सति अन्तर्हृदयमध्येऽसम्मान्तौ स्थातुमशक्तौ स्तनौ हृदयात् बहिर्देशे निष्क्रान्तौ, इति वयं ब्रूमहे सम्भावयामः। यदाप्रभृति त्वं चित्ते लग्नस्तदाप्रभृत्येवैतौ बहिर्दृश्येते तस्मात् पूर्व्वमन्तराऽवस्थितत्वाद्बहिर्न दृश्येते त्वदधिष्ठानानन्तरं तु बहिर्निर्गतौ इति तवैवावकाशोऽभूत् न तु कुचयोस्तस्मादस्मानेवं प्रतारयसीति भावः। अन्योऽपि महताऽ

कुचौ दोषोज्झितावस्याः पीडितौ व्रणितौ त्वया।
कथं दर्शयतामास्यं वृहन्तावावृतौ ह्रिया॥ ४९॥

धिष्ठिते स्थाने स्थातुमशक्तौ वहिर्निर्गच्छत्येव। वहिरपि यदादि त्वया हृदयं स्पृष्टं तदादि साटोपं निर्गताविति भावः। अध्यासिते हृद्यन्तरमस्मान्ताविति वान्वयः॥ ४८॥

अधिगत्येत्यादेरुत्तरमाह॥ कुचाविति। दोषेणोज्झितौ निर्दोषावथ च दोषायां रात्र्यां कूर्प्पासेन त्यक्तौ, तथा वृहन्तावतिपीवरौ, अत एव त्वया पाणिभ्यां पीडितौ मर्द्दितौ व्रणितौ नखैस्च क्षतयुक्तौ कृतावस्याः कुचौ दिने ह्रिया हेतुना आवृतौ वस्त्रेणाच्छादितौ सन्तौ आस्यं चूचुकाग्रं कथं दर्शयतां अपि तु न कथञ्चित्। रात्रौ हि सम्भोगसमये निर्विघ्नं स्तनदर्शनं भवेत् दिवा तु ह्रिया नखक्षतादिसम्भोगचिह्नदर्शनभिया च वस्त्रावृतत्वात् कथं नाम चूचुकाग्रस्यापि दर्शनं स्यादपि तु न कथञ्चिदित्यर्थः। दोषया रात्र्या त्यक्तौ रात्रेर्गतत्वाद्दिनप्रकाशसम्बद्धौ, अत एव ह्रिया वस्त्रावृतत्वाद्दिवा वैमुख्यमेव तयोर्युक्तमित्यर्थः, इति वा। वहिःस्थितं त्वाम्प्रति वैमुख्यासम्भवात् हृदयस्थितस्य तव स्वमुखं कथं दर्शयतामिति ह्रिया पराङ्मुखत्वाद्वा भैम्या कुचौ स्वमुखं न दर्शयतः। स्वाश्रयभूतस्य भैमीहृदयस्य वा कुचौ स्वमुखं न दर्शयतः। न हि कुचौ हृदस्य सम्मुखौ भवतः। अन्योऽपि दोषोज्झितो निरपराधो लब्धप्रतिष्ठो धनादिग्रहणेन पीडितो नासादिकर्त्तनेन कृत-

इत्यसौ कलया सूक्तैः सिक्तः पीयूषवर्षिभिः ।
ईदृगेवेति पप्रच्छ प्रियामुन्नमिताननां ॥ ५० ॥
बभौ च प्रेयसीवक्त्रं पत्युरुन्नमयन् करः ।
चिरेण लब्धसन्धानमरविन्दमिवेन्दुना ॥ ५१ ॥
ह्रीणा च स्मयमाना च नमयन्ती पुनर्मुखं ।
दमयन्ती मुदे पत्युरत्युच्चैरभवत्तदा ॥ ५२ ॥

भ्रणा लज्जितः कस्याप्यग्रे मुखं न दर्शयति । भ्रणितो तारकादित्वादितच् ॥ ४८ ॥

इतीति । कलया पीयूषवर्षिभिरमृतं वरद्भिरतिमधुरैः सूक्तैः शोभनवक्रोक्त्यादिरूपैर्वाक्यैः सिक्तः सञ्जातगाढप्रेमभरोऽसौ नलः उन्नमितं पाणिना ऊर्द्धीकृतमाननं यस्यास्तां प्रियां भैमीं हे भैमि इदं कलावचनमीदृगेवमेवेति सत्यमिति पप्रच्छ । उन्नमितेति ज्वलकलेति (मि० कौ० चा० १२५ पत्रे) मित्वपक्षे ह्रस्वः ॥ ५० ॥

बभाविति । पत्युः करोऽरविन्दमिव बभौ । किङ्कुर्व्वन् प्रेयसीवक्त्रमुन्नमयन् । किम्भूतमरविन्दं चिरेण बहुकालेन वैरं विस्मृत्य निवृत्तवैरतया इन्दुना सह लब्धं सन्धानं येन, अभूतोपमा । चन्द्रकमलयोः सदा वैरित्वं ॥ ५१ ॥

ह्रीणेति । नलोक्तिकलोक्तिवक्रोक्तिप्रत्युक्तिपरिहासेन ह्रीणा स्मयमाना चातएव लज्जावशेन स्मितश्च नलेन द्रष्टव्यमिति बुध्वा वा, अत्युच्चैर्नितरामुन्नमितमपि मुखं पुनर्नमयन्ती दमयन्ती तदा तस्मिन्मुखोन्नमनसमये पत्युर्मुदेऽभवत् । अत्युच्चैर्मु-

भूयोऽपि भूपतिस्तस्याः सखीमाह स सस्मितं।
परिहासविलासाय स्पृहयालुः सहप्रियः॥ ५३॥
चन्तुं मन्तुं दिनस्यास्य वयस्येयं व्यवस्यतात्।
निशेव निशिधात्वर्थं यदाचरति नात्र नः॥ ५४॥

देऽभूदिति वा। तादृशीं तां दृष्ट्वा नितरां हृष्टोऽभूदिति भावः॥ ५२॥

भूय इति। प्रियया सह वर्त्तमानो भूयोऽपि पुनरपि वक्रोक्त्यादिपरिहासविलासाय स्पृहयालुरभिलाषुको भूपतिस्तस्याः सखीं कलां सस्मितं यथा तथा आह स्म। विलासाय स्पृहेरीप्सितः (पा॰ १।४।३६) सम्प्रदानत्वं। सहप्रियः वोपसर्जनस्येति (पा॰ ६।३।८२) पाक्षिकत्वात् सादेशाभावः॥ ५३॥

चन्तुमिति। हे कले इयं तव वयस्या अस्य वर्त्तमानस्य दिनस्य मन्तुमपराधं चन्तुं सोढुं व्यवस्यतात् प्रयततां। कोऽपराधो दिनस्येत्यत आह। यद्यस्मादियं भैमी निशेव रात्राविव नोऽस्माकं निशि चुम्बन इति पठितस्य धातोरर्थमत्र दिने नाचरति, रात्रौ यथा मां निःशङ्कं चुम्बति तथा भवतीभ्यो लज्जया दिने नेति दिनस्यापराधस्तस्मात्तस्यापराधं चमस्वेति प्रार्थित इत्यर्थः। व्यवस्यतामिति पाठे आत्मनेपदं चिन्त्यं॥ ५४॥

दिनेनास्या मुखस्येन्दुः सखा यदि तिरस्कृतः।
तत्कृताः शतपत्राणां तन्मित्राणामपि श्रियः॥ ५५॥

दिनेनेति। दिनेनास्या मुखस्य सखा इन्दुर्यदि तिरस्कृतः निष्प्रभीकृत्य पराभूतः, एवमपराधश्चेन्मन्यते तर्हि तस्य भैमीमुखस्य सादृश्यान्मित्रभूतानां बहूनां शतपत्राणां कमलानां श्रियो विकासलक्ष्म्योऽथ च सम्पदोऽपि तेन कृताः। अनेकापकारकारिण्येकस्मिन् पराभूते यदि बहूनां क्षेमं भवति तदा बहूनामुपकार एवेति त्वन्मुखमित्रभूतानां कमलानां प्रकाशकत्वादिनेनापकार एव कृता नापकारस्तस्मादेतस्यापराधो नास्तीति मन्मुखतुल्यत्वं दिनेऽपि कुर्वीति भावः। एकस्मिन् धर्षितापाये बहूनामपकारिणि बहूनां भवति क्षेमं तस्य पुण्यप्रदो वध इत्याद्युक्तेः। तत्कृत्ता इति पाठे दिनस्य मित्रभूतानां सम्बन्धात् मत्सखीकाणां कमलानां, अथ च शतसंख्यानि बहूनि पत्राणि वाहनानि येषां मित्राणां श्रियोऽपि तेन चन्द्रेण कृत्ताश्छिन्नाः। रात्रौ सङ्कोचकरणात् दिनेन तु त्वन्मुखमित्रं चन्द्रो धर्षितश्चन्द्रेण तु दिनमित्राणि बहूनि कमलानि धर्षितानीति चन्द्रेण स्वयं वैरनिर्यातनं कृतमेवेति दिनस्यापराधोऽनया न गणनीय इत्यर्थः। त्वन्मुखमित्राणां कमलानां श्रियोऽपि छिन्ना अपि तु न, किन्त्वतिवृद्धिमेव प्रापितास्तस्मात् पूर्ववदेवापराधो नास्तीति काकुर्वा। त्वन्मुखमित्रं चन्द्रो यदि दिनेन तिरस्कृतस्तर्हि दिनमित्राणां कमलानामपि श्रियस्तेन त्वन्मुखेन छिन्नाः, स्वकान्त्या

लज्जितानि जितान्येव मयि क्रीडितयाऽनया ।
प्रत्यावृत्तानि तत्तानि पृच्छ सम्प्रति कम्प्रति ॥ ५६ ॥
निशि दष्टाधरायापि सैषा मह्यं न रुष्यतु ।
क्व फलं दश्यते बिम्बीलता कीराय कुप्यति ॥ ५७ ॥

तेषां निःशोभीकरणात् वैरं निर्यातितमेवेति दिनस्यापराधो न गणनीय इति भाव इति वा ॥ ५५ ॥

लज्जितानीति । हे कले अनया मयि विषये तावल्लज्जितानि लज्जाविशेषा जितान्येव निरस्तान्येव । यतो रात्रौ क्रीडितया कृतसुरतक्रीडया मयि प्रदर्शितबहुविधसुरतचातुर्य्यया, तत्तस्मात् सम्प्रति तानि लज्जितानि यत् पुनः प्रत्यावृत्तानि तत् कं प्रति उद्दिश्येति त्वमेनां पृच्छ, मयाऽस्या सुरतचातुर्य्यधार्ष्ट्यं बहुवारं दृष्टमेव । त्वामेव प्रति इयं लज्जत इति जानीहीति भावः ॥ ५६ ॥

इदानीं श्लोकचतुष्टयेन स्वापराधमाशङ्क्य परिहरति ॥ निशीति । सैषा निशि दष्टः अधरो येन तस्मादपि मह्यं न रुष्यतु न कुप्यतु:, यस्मात् पक्वबिम्बी फलं दश्यते आस्वाद्यते, कीराय शुकाय बिम्बीलता क्व कुप्यति, अपि तु न कुत्राऽपि । किन्तु स्वसम्बन्धेन शोभाहेतवे तस्मै स्निह्यत्येवेत्यर्थः । दन्तचतं कृतेऽपि व्रणसम्बन्धवशान्नितरामधरशोभाकारित्वेन मह्यं प्रसाद एव युक्तो न तु कोप इति भावः । रुष्यतीति पाठे सिद्धवत्कारेणोक्तिः । मह्यं कीराय च क्रुध द्रुहेति(पा०१।४।३७) चतुर्थी ॥ ५७ ॥

सृणीपदस्तुचिह्ना श्रीश्चोरिता कुम्भिकुम्भयोः ।
पश्यैतस्याः कुचाभ्यान्तन्नृपस्तौ पीडयामि न ॥ ५८ ॥
अधरामृतपानेन ममास्यमपराध्यतु ।
मूर्द्धा किमपराद्धं यत् पादौ नाप्नोति चुम्बितुं ॥ ५९ ॥

सृणीति । एतस्याः कुचाभ्यां सृणीपदं अङ्कुशाघातचतमेव शोभनं चिह्नं यस्याः, अथ चाङ्कुशाकारनखपदविशेष एव शोभनं चिह्नं यस्या सा कुम्भिनःकरिणः कुम्भयोः श्रीः शोभा सम्पत्त्व यस्माच्चोरिता, पश्य, एतत्कुचयोरङ्कुशाकारं नखं यदि नास्ति तर्हि त्वमेव विलोकय । तत्तस्मान्नृपो दण्ड्यदण्डकरणाधिकारी अहं तौ स्तेयकारिणावेतत्कुचौ न पीडयामि. अपि तु पीडयाम्येव । तयोः पीडनं दण्डरूपनखक्षतादिरूपं चोचितमित्यर्थः । राज्ञा हि चोरस्य दण्डः क्रियते । ममापराधो नास्तीति भावः । अङ्कुशो स्त्री सृणिर्द्वयोरित्यमरः । सृणी कृदिकारादिति (पा० ४।१।४५ वा०) ङीप् ॥ ५८ ॥

अधरेति । ममास्यं मुखमेतस्या अधरामृतस्य पानेन कृत्वाऽपराध्यतु, अयं मुखस्यापराधोऽङ्गीकृत इत्यर्थः । मम मूर्द्धा पुनः किमपराद्धं यो मस्तकः प्रणामहेतुनाऽस्याः पादौ चुम्बितुं स्प्रष्टुमपि नाप्नोति. नमस्कर्त्तुमपि न ददाति कोऽपराधो तेन कृत इति पृच्छेत्यर्थः ॥ ५९ ॥

अपराद्धं भवद्वाणीश्राविणा पृच्छ किं मया ।
वीणाऽऽह परुषं यन्मां कलकण्ठी च निष्ठुरं ॥ ६० ॥
सेयमालिजने स्वस्य त्वयि विश्वस्य भाषतां ।
ममताऽनुमताऽस्मासु पुनः प्रस्मर्य्यते कुतः ॥ ६१ ॥

अपराद्धमिति । भवद्वाणीश्राविणा त्वद्वचनाकर्णनशीलेन मया वीणायाः कोकिलायाश्च तव वा किमपराद्धं को वाऽपराधः कृत इति कले त्वं भैमीमनेन किमपराद्धमिति पृच्छ । यद्यस्माद्वीणा साम्प्रतं परुषमाह:, कलकण्ठी कोकिला च मां प्रति निष्ठुरं ब्रूते तस्मादपराधः सम्भाव्यते । येन हि यस्याः कश्चिदपराधः क्रियते तं प्रति सा तदीया वा तत्सदृशः कश्चित्परुषं भाषते । अथच वीणाकोकिलयोःस्वरे यस्मान्माधुर्य्यं नास्ति तस्मात् पश्चादागत्य निभृतं मयाऽसमक्षभाषमाणाया भवत्या भारती श्रुता न त्वन्येन केनाप्यासमर्थनेति । सोऽप्यपराधो न भवतीत्यर्थः । वीणाकोकिलालापापेक्षया भैमीवाणी मधुरतरा रात्रौ एतद्वाणीमाधुर्य्यं मया बह्वनुभूतं, इदानीन्तु त्वां दृष्ट्वा मां प्रति तूष्णीमस्ति इति । परुषं निष्ठुरं च क्रिया विशेषणं । परुषं निस्नेहं निष्ठुरं सतिरस्कारं । कलकण्ठी अङ्गगात्रेति (पा० ४।१। ५४। वा०) ङीप् ॥ ६० ॥

सेति । हे कले सेयं स्वस्यालिजने त्वयि विषये विश्वस्य भाषतां कथयतु । अस्मासु विषये अनुमताऽङ्गीकृता ममता स्वीयतामतिः पुनः कुतः प्रस्मर्य्यते विस्मर्य्यते इति त्वं पृच्छ । इयं च

अथोपवदने भैम्याः स्वकर्णोपनयच्छलात्।
सन्निधाप्य श्रुतौ तस्या निजास्यं सा जगाद तां॥ ६२॥
अहो मयि रहोवृत्तं धूर्त्ते किमपि नाभ्यधाः।
आस्व सत्यमिमं तत्ते भूपमेवाभिधापये॥ ६३॥

त्वयि विश्वस्य कथयत्वित्यर्थः। गच्छ रतानुकूल्यमाचरितमनया इदानीं तु तव समचं प्रातिकूल्यं किमित्याचर्य्यत इति भाव इत्युपालम्भनभङ्गिः। प्रशब्दस्य गतार्थतया विस्मरणार्थता॥ ६१॥

अथेति। अथ नलोक्त्यनन्तरं सा कला भैम्याः उपवदने वदनसमीपे स्वकर्णस्य उपनयच्छलात् समीपनयनव्याजात् तस्या भैम्याः श्रुतौ कर्णे निजास्यं सन्निधाप्य सन्निहितं कृत्वा तां जगाद। अवदन्त्या अपि भैम्या वचनं शृण्वतीव कर्णं भैमीमुखसमीपे कृत्वा अनन्तरञ्च तद्वचः प्रतिवचनमेकान्ते वितरन्तीव भैमीकर्णसमीपे निजमुखं कृत्वा भैमीं जगादेत्यर्थः। कथकानुकथन जातिः। उपवदनेऽव्ययीभावे सप्तम्या अम्भावाभावः। सन्निधाप्य हेतुमण्यन्ताल्ल्यप्॥ ६२॥

अहो इति। हे धूर्त्ते वचनचतुरे त्वं मयि विषये रहोवृत्तं एकान्ते निष्पन्नमालिङ्गनादि किमप्येकमपि अल्पमपि च नाभ्यधाः, अहो आश्चर्य्यं एतादृशी धूर्त्ता काऽपि न दृष्टेत्यर्थः। त्वं आस्व तिष्ठ तिष्ठः, यद्यपि त्वं नाचकथा, तथापि ते तव तद्रहोवृत्तं सत्यं सत्यवादिनमिमं भूपं नलमेवाभिधापये

स्मरशास्त्रमधीयाना शिक्षिताऽस्मि मयैव यं ।
अगोपि सोऽपि कृत्वा किं दाम्पत्यव्यत्ययस्त्वया ॥ ६४ ॥

वादयामि । अहमपि त्वया यतो वञ्चिता तथा किञ्चिद्वञ्च-
यिष्यामि यथा नल एव स्वयं त्वदीयसुरतप्रागल्भ्यं प्रकटयति
मां वञ्चयित्वा कथङ्कारं स्थास्यसि क्व यास्यसि क्षणमात्रं स्थिरा
भवेति सरोषोक्तिः । सभ्यमिति पाठे आभिधापये नलं सभ्यं
जानीहीत्यर्थः । आस्वसभ्यमिति पाठे इमं रूपमेव तमेवेदम-
सभ्यं सभार्यां जनसमक्षं वक्तुमनर्हं तद्रहोवृत्तमाशिदानीमेवा-
भिधापये तिष्ठ तिष्ठेत्यर्थः । रूपं अकथितञ्चेति (पा० १।४।
५१) कर्मत्वं अभिधापये अभिपूर्वाद्घोषणार्थाद्दधातेर्हेतुमणि
चि णिचश्चेति (पा० १।३।७४) तङ् ॥ ६३ ॥

स्मरेति । स्मरशास्त्रं वात्स्यायनादिप्रणीतं शास्त्रं अधीयाना
पठन्ती त्वं तत्र प्रतिपादितं यं दाम्पत्यव्यत्ययं विपरीतसम्भोगं
मयैव शिक्षिताऽसि । स दाम्पत्यव्यत्ययः त्वया कृत्वाऽपि निष्पा-
द्यापि मम पुरस्तात् किमगोपि गोपितः कथयेति प्रश्नः । नितरां
धार्ष्ट्यमवलम्ब्य मया शिक्षितं विपरीतसुरतं कृत्वाऽपि ममैव
पुरस्तादकृतमेव कथयसीति नितरां वञ्चनचतुराऽसीति भावः ।
स्मरशास्त्रं नलोकेति (पा० २।३।६९) षष्ठीनिषेधः । दम्पत्यो-
र्भावः सम्भोग इति यावत् । पत्यन्तपुरोहितादिभ्य इति (पा०
५।१।१२८) यक् ॥ ६४ ॥

मौनिन्यामेव सा तस्यां तदुक्तीरिव शृण्वती।
वादं वादं मुहुश्चक्रे ऊं ऊमित्यान्तरान्तरा ॥ ६५ ॥
अथासावभिसृत्यास्या रतिप्रागल्भ्यशंसिनी।
सख्या लीलाम्बुजाघातमनुभूयालपन्नृपं ॥ ६६ ॥

मौनिन्यामिति। सा कला तस्यां भैम्यां मौनिन्यामवदन्त्यामेव सत्यां तदुक्तीर्भैमीवचनानि शृण्वतीव भैम्यामवदन्त्यामपि भैमी मां प्रति किमपि वदतीत्यहं शृणोमीति नलम्प्रति प्रकटयन्ती वादं वादं भैमीवचनप्रतिवचनव्याजेन स्वयमेव किञ्चिदुक्त्वा अन्तराऽन्तरा मध्ये मध्ये मुहुर्मुहुः ऊं ऊं इति शब्दं चक्रे। वदत्यचिक्रीत्यादेर्वक्ष्यमाणस्य सत्यत्वबुद्धिजननार्थं पूर्व्वरङ्गभूतमलीकमेव श्रवणोत्तरदानरीतिप्रकटनमकरोदिति भावः। वादं वादं आभीक्ष्ण्ये णमुल् चेति (पा° ३।४।२२) द्विर्वचनञ्च ॥ ६५ ॥

अथेति। अथ श्रवणप्रकारप्रकटनानन्तरं असौ कला नृपं भिसृत्य भैम्याः सकाशान्नलं प्रति गत्वा वक्ष्यमाणमेव अवोचत्। किम्भूता, अस्या भैम्या रतिप्रागल्भ्यशंसति वर्णयति त्वं लीला विपरीतसुरतमपि करोषि साम्प्रतं नितरां धृष्टा जातासीति भैमीकर्णे प्रेमभाषणं कुर्व्वाणा, अत एव सख्या भैम्या लीलाम्बुजेनाघातमनुभूय प्राप्य रतिप्रागल्भ्यं नलेन शंसयति तच्छीलेति च। शंसिनी केवलाद्धेतुमण्यन्ताद्वा शंसेस्ताच्छील्ये णिनिः ॥ ६६ ॥

दृष्टं दृष्टं महाराज त्वदर्थाभ्यर्थना क्रुधा ।
यत्ताडयति मामेवं यद्वा तर्जयति भ्रुवा ॥ ६७ ॥
वदत्यचिह्नि चिह्नेन त्वया केनैष नैषधः ।
शङ्के शक्रः स्वयं कृत्वा मायामायातवानयं ॥ ६८ ॥
स्वर्णदीस्वर्णपद्मिन्याः पद्मदानं निदाननां ।
नयतीयं त्वदिन्द्रत्वे दिवश्चागमनञ्च ते ॥ ६९ ॥

दृष्टमिति । हे महाराज सार्व्वभौम इयं नलाय सम्भोगं वितरेति त्वदर्थं त्वत्सम्भोगसम्बन्धितया क्रियमाणमभ्यर्थनं तस्माज्जातया क्रुधा कोपेन हेतुना मामेवं लीलाकमलाघातप्रकारेण यत्ताडयति, यद्वा यच्च भ्रुवा कटाक्षेण तर्ज्जयति भीषयते तत्त्वया दृष्टं दृष्टं त्वं पश्य पश्येत्यर्थः। त्वयि परपुरुषबुद्धिं कृत्वा तत्र मां कथं प्रवर्त्तयसीति मां ताडयति भ्रूक्षेपेण चतः परं मा वादीरिति तर्ज्जयती च तत्त्वं पश्येति भावः दृष्टं दृष्टं सम्भ्रमे द्विरुक्तिः ॥ ६७ ॥

वदतीति । हे राजन् इयं इति वदति । इति किं हे कल्ले यदर्थमर्थनां त्वं करोषि एष नैषधः त्वया केन चिह्नेन अचिह्नि निर्द्धारितः, तर्हि कः अयं शक्रः स्वयंवरणकाल इव माया नलरूपं कृत्वा स्वयमायातवान् इति अहं शङ्के त्वदर्थमर्थनां कुर्व्वन्त्या मम कर्णे इति वदति ॥ ६८ ॥

भैमी त्वदिन्द्रत्वे इन्द्रप्रमाणमाह ॥ स्वर्णदीति । इयं स्वर्णद्यां मन्दाकिन्यां स्वर्णपद्मिन्याः पद्मस्यात्मनो दानं, दिवः स्वर्गात्ते

भाषते नैषधच्छायामायाऽमायि मया हरेः ।
आह चाहमहल्यायां तस्याकर्णितदुर्नया ॥ ७० ॥
सम्भावयति वैदर्भी दम्भोग्राभामतिस्तव ।
जम्भारित्वं कराम्भोजाद्दम्भोलिपरिरम्भिणः ॥ ७१ ॥

भूमिं प्रति आगमनस्य तवेन्द्रत्वे निदानतां प्रथमकारणतां नयति प्रापयति । न हि मनुष्यस्य स्वर्णदीस्वर्णपद्मिनीसुवर्णकमलानयनं स्वर्गादागमनं च सामर्थ्यं दृष्टं । तस्मान्नलरूपं धृत्वा पूर्वं इन्द्र एवायमागत इति । एतदर्थं साम्प्रत्यर्थना त्वया कर्तुमयुक्ता इतीयं मत्कर्णं कथयतीति भावः । स्वर्णदीति पूर्वपदात्संज्ञायामग इति (पा० ८।४।३) णत्वं ॥ ६८ ।

भाषत इति । हरेरिन्द्रस्य नैषधस्य छायाया कान्तेः माया कापट्यं मया स्वयंवरकाले अमायि ज्ञातेति इयं भाषते । स्वयंवरकाले तव परस्त्रीलाभावात् नलरूपं धृतं, इदानीन्तु परस्त्रीलभियैवं न करिष्यतीति मया प्रत्युक्ता सती इयं भैमी अहल्यायां गौतमपत्न्यां तस्येन्द्रस्याकर्णिता व्यभिचारलक्षणो दुष्टो नयो यया एवंविधोऽयमिति चाह ब्रूते । परस्त्रीलभीतिरपि तस्य नास्ति तस्मादिन्द्र एवायमिति त्वयाऽभ्यर्थना न कार्य्येति मां प्रति भाषत इति भावः । नैषधस्येव छाया यस्यामिति मायाविशेषणेन पृथग्वा ॥ ७० ॥

सम्मिति । कुशाग्राभा मतिर्यस्याः सा वैदर्भी दम्भोलिः सार्व्वभौमत्वसूचकं वज्रं तत्परिरम्भिणो युक्तात् कराम्भोजाद्धेतोस्तव

अनन्यसाक्षिकाः साक्षात्तदाख्याय रहःक्रियाः ।
शङ्कातङ्कं नुदैतस्या यदि त्वं तत्त्वनैषधः ॥ ७२ ॥
इति तत्सुप्रयुक्तार्थं निह्नुतीकृतकैतवाम् ।
वाचमाकर्ण्य तद्भावे संशयालुः शशंस सः ॥ ७३ ॥

जम्भारिस्त्वमिन्द्रत्वं सम्भावयति, तर्कयति न ह्यनिन्द्रो वज्रहस्तः । रेखारूपादपि वज्रादेवमनुमानात् कुशाग्रबुद्धित्वमस्याः ॥ ७१ ॥

अनन्येति । तस्माद्धे राजन् त्वं यदि तत्त्वेन नैषधो भवसि न तु छद्मना, तत्तर्हि न विद्यतेऽन्यो भैमीभवद्व्यतिरिक्तः साक्षी यासु युवाभ्यामेव ज्ञायन्त इत्यर्थः । तादृशो रहःक्रिया एकान्तक्रीडाः साक्षात् स्वयमेवाथ च व्यङ्ग्यवृत्तिं विना आख्याय प्रकटं कथयित्वा एतस्याः शङ्कातङ्कमिन्द्रमायासंशयभयं त्वं नुद निराकुरु एतत्प्रत्यायिकां क्रीडासमयचेष्टामुक्त्वा अस्माकमेतस्याश्च सन्देहमपनुदेत्यर्थः । सत्यनैषध इति वा पाठः ॥ ७२ ॥

इतीति । इत्युक्तप्रकारेण तया कलया सुप्रयुक्तत्वेन कैतवद्योतकहास्यादिविकारव्यतिरेकेण सुवर्णकमलदानादिन्द्रत्वनिश्चायकोपपत्तिमत्तया च सम्यक् प्रयुक्तत्वेन निह्नुतीकृतं आच्छन्नं कैतवं छद्म यस्यास्तां कलावाचमाकर्ण्य तद्भावे मयीन्द्रभ्रान्त्यैवेयं चुम्बनादि न करोति किमिति भैम्याशये संशयालुः सन्दिहानः स नलः भैमीभ्रान्तिनिरासार्थं शशंस रहोवृत्तमित्यर्थः ॥ ७३ ॥

स्मरसि च्छद्मनिद्रालुर्मया नाभौ शयार्पणात्
यदानन्दोल्लसल्लोमा पद्मनाभीभविष्यसि ॥ ७४ ॥

स्मरसीति। हे भैमि छद्मना निद्रालुर्निद्राणा अलीकमेवाङ्गीकृतनिद्रात्वं मया नाभौ शयस्य करकमलस्यार्पणाद्धेतोः आनन्देन सात्त्विकभावेनोल्लसन्ति लोमानि यस्याः मत्करनाभिस्पर्शेन जातरोमाञ्चा सती पद्मयुक्तनाभिर्यस्यास्तादृशी भविष्यसि सञ्जाता, तत् स्मरसि। पाणिरोमाञ्चसम्बन्धात् सकण्टककमलसम्बन्धसम्भावनया पद्मनाभीत्वं तव यज्जातं तत्स्मरेत्यर्थः। नलपाणिः पद्मस्थानीयः रोमाञ्चश्च तत्कण्टकस्थानीयः। अथ च विकसितकमलदलतुल्यरोमाञ्चोद्गमात् पद्ममिव नाभिर्यस्यास्तादृशी जाताऽसि तत्स्मर। शयार्पणं रोमाञ्चोद्गमे हेतुः। अथ च नाभौ शयार्पणादपद्मनाभः पद्मनाभः श्रीविष्णुर्भविष्यसि। पद्मनाभी भविष्यसीति च्विः। तत् स्मरसि नाभौ करकमलधारणा[illegible]ऽसि। न हि विष्णुं विनाऽन्यस्य नाभौ कमलमस्तीत्यर्थः। निद्रिताऽसीति बुद्ध्या वसनस्रंसनार्थं नाभिसमीपं मया करेऽर्पिते तत्संस्पर्शाज्जातसात्त्विकरोमाञ्चा जाताऽसि तत् स्मरेति भावः। आनन्दोल्लासि लोमेति निद्राया अलीकत्वं द्योतितं। न हि निद्रायाः सत्यत्वे करस्पर्शाद्रोमाञ्चोद्गमो भवति। भैमीपक्षेऽपि पद्मनाभीति च्विः। स्मरतियोगेलभूतेऽभिज्ञावचने लृट्। त्वदानन्देति पाठः सभ्यः ॥ ७४ ॥

जानासि ह्रीभयव्यग्रा यन्नवे मन्मथोत्सवे ।
सामिभुक्तैव मुक्ताऽसि मृद्वि खेदभयान्मया ॥ ७५ ॥
स्मर जित्वाऽऽजिमेतस्त्वां करे मत्पदधाविनि ।
अङ्गुलीयुगयोगेन यदाश्लिष्यं घने जने ॥ ७६ ॥

जानासीति । हे मृद्वि सुकुमाराङ्गि शीघ्रद्राविणि च भैमि मया नवे मन्मथोत्सवे ह्रीभयाभ्यां व्यग्रा व्याकुलितचित्ता त्वं, अतिमृदुत्वात् सम्पूर्णसम्भोगोपमर्द्दासहतया तव खेदो भविष्यतीति भयात् सामि अर्द्धं भुक्तैव अप्राप्तसुरतावसानैव यत् मुक्ताऽसि तज्जानासि स्मरसि । सामिभुक्ता सामीति (पा० २।१।२७) समासः ॥ ७५ ॥

स्मरेति । हे भैमि आजिं सङ्ग्रामं जित्वा त्वां आशामुखेनेतः प्राप्तोऽहं नमस्कारार्थं चालनार्थं वा मत्पदधाविनि मच्चरणस्पर्शिनि तव करे अङ्गुलीयुगयोगेन मदीयचरणाङ्गुलीद्वयसम्बन्धेन दर्शनार्थं समागते घने भूयसि जने मध्ये यदाश्लिष्यं आलिङ्गितवान् तत्स्मर । जनसमक्षं साक्षादालिङ्गनस्यानौचित्यात्प्रवासोत्कण्ठाभरतरलतया चरणाङ्गुलिद्वयेन त्वत्पाणिपीडनवशात्त्वदालिङ्गनवाञ्छां त्वां प्रति द्योतितवान् तत् स्मरेत्यर्थः । आश्लिष्यं श्लिष आलिङ्गने लुङुत्तमैकवचने श्लि: क्सः विभाषासाकाङ्क्ष इति (पा० ३।२।११४) वैकल्पिकत्वादङभावः ॥ ७६ ॥

सेव्यमानेऽपि मत्त्यागदूना स्वं माञ्च यन्मिथः।
मद्दृष्टाऽऽलेख्यपश्यन्ती व्यवधा रेखयाऽन्तरा ॥ ७७ ॥
प्रसृतन्तत्त्वया तावद्यन्मोहनविमोहितः।
अतृप्तोऽधरपानेषु रसनामपिवन्तव ॥ ७८ ॥
त्वत्कुचार्द्रनखाङ्कस्य मुद्रामालिङ्गनोत्थितां।
स्मरेः स्वहृदि यत् स्मेरसखीः शिल्पं तवाब्रुवं ॥ ७९ ॥

हे भैमि माने प्रणयकलहे सत्यपि मत्कर्मकत्यागेन दूना क्षणमात्रमपि मद्विरहं सोढुमशक्ता सती मिथ एकान्ते स्त्रीरूपं स्वं पुंरूपं माञ्चालेख्ये पश्यन्ती संयुक्तपरस्परदर्शनसुखमनुभवन्ती त्वं मया दृष्टा सती यच्चित्रलिखितयोरावयोरन्तरा मध्ये तुलिकादिलिखितया रेखया व्यवधाः व्यवधानं कृतवत्यसि तद्वेत्थ जानासीत्यर्थः ॥ ७७ ॥

प्रसृतमिति। हे भैमि मोहनेन सुरतेन विशेषेण मोहितः सुरतपरवशः मोहनकारिणा कामबाणेन मोहितो निरस्तविवेकोऽहं तवाधरपानेषु अतृप्तः सन् तव रसनां जिह्वामपिव तत्त्वया तावत् शाकल्येन प्रसृतं। जिह्वायलेहनमपि कामशास्त्रोक्तमिति ॥ ७८ ॥

त्वदिति। अहं स्वहृदये तवालिङ्गनोत्थितां तव कुचे तात्कालिकत्वादार्द्रस्याशुष्करुधिरस्य मया कृतस्य नखाङ्कस्य मुद्रां नखक्षतदर्शनादेव स्मेरसखीः हास्यपरास्तव सखीः प्रति तव शिल्पं भवत्सख्या भैम्येदं नखक्षतं कृतं पश्यतेति त्वन्निर्माणं यद-

त्वयाऽन्याः क्रीडयन्मध्येमधुगोष्ठि रुषेक्षितः ।
वेद्मि तासां पुरो मूर्ध्ना त्वत्पादे यत्किलास्खलं ॥ ८० ॥
वेत्थ मय्यागते प्रोष्य यत्त्वां पश्यति हार्दिनि ।
अचुम्बीरालिमालिङ्ग्य तस्यां केलिमुदा किल ॥ ८१ ॥

भुवं तत्स्मरेः चिन्तयेः । स्मेर इति पाठे स्मेरः मन्दहमित्यर्थः, सखीः मुख्यं कर्म्म । शिन्यमिति अकथितञ्चेति (पा० १।४।५१) कर्म्मत्वं ॥ ७८ ॥

त्वयेति । मधुगोष्ठ्या मद्यशालाया मध्ये मद्यमहपानावसरे अन्याः सपत्नीः क्रीडयन् त्वया रुषा रोषकषितया दृशा ईक्षितो ऽहं तासां सपत्नीनां पुरः समक्षमेव किल मद्यमत्तत्वात् स्खलनव्याजेन त्वत्पादे मूर्ध्ना यदस्खलं यदपतं तद्वेद्मि जानामि। स्खलनव्याजेन प्रणामेन त्वां प्रसादितवान् असि तत्स्मरेत्यर्थ-इति भावः । मध्येमधुगोष्ठि पारे षष्ठ्या वेति (पा० २।१।१८) समासः ॥ ८० ॥

वेत्थेति । मयि प्रोष्य विजययात्रां कृत्वा आगते एव हार्दिनि प्रेमभरतरले त्वां पश्यति सति आलिं सखीं आलिङ्ग्य अन्याः प्रति तस्यां केलिमुदा हर्षेण किल विलासप्रकरणव्याजेन यत्त्वां अचुम्बीः तद्वेत्थ स्मरसि । कामशास्त्राभ्यासकौशलवशात्सख्यालिङ्गनचुम्बनव्याजेन मां प्रत्यालिङ्गनचुम्बनद्वारा स्वप्रेमभरं यत् सूचितवत्यसि तत्स्मरेति भावः । हे हार्दिनि इति भैमीसम्बुद्धिर्वा । प्रोष्य प्रपूर्व्वाद्वसेः क्त्वयपि यजादित्वात्

जागर्त्ति तत्र संस्कारः स्वमुखाद्भवदानने।
निक्षिप्यायाचिषं यत्त्वां न्यायात्ताम्बूलफालिकाः॥ ८२॥
चित्ते तदस्ति कश्चित्ते नखजं मयि यत् क्रुधा।
प्राग्भावाधिगमागःस्थे त्वया शम्बाकृतं क्षतं॥ ८३॥

सम्प्रसारणं। हार्द्दिनि हृदयस्य हृल्लेखेति (पा० ६।३।५०) हृद्भावः॥ ८१॥

जागर्त्तीति। अहं ताम्बूलस्य चर्व्वितपूगफलनागवल्लीदलस्य फालिकाः शकलानि स्वमुखात् सकाशाद्भवत्या आनने निक्षिप्य निधाय यदीयो निक्षेपः स तस्मै दातव्योऽन्यथा दण्ड्यं इति न्यायाच्छास्त्रोक्तयुक्तेर्यत्ताः ताम्बूलफालिकाः मदीयाः पुनर्मह्यं देहीति याचितवान् तत्र विषये स्मरणकारणभूतो भावनाख्यः संस्कारो जागर्त्ति स्फुरद्रूपो वर्त्तते स्मरसि किमित्यर्थ इति प्रश्नः॥ ८२॥

चित्त इति। मयि प्राक् त्वय्यप्राप्तसुरतान्तसुखायामेसत्यां यो भावाधिगमः सुरतान्तसुखप्राप्तिः तद्रूपे आगस्यपराधे तिष्ठतीति एवम्भूते सति मयि विषये वा समरतस्यैव सुखहेतुत्वाद्विषमरतस्यासुखहेतुत्वात् क्रुधा मध्य एव सुखजन्याद्रोषाद्धेतोः नखजं क्षतं त्वया यत् शम्बाकृतं। प्रथमं फालकृष्टे क्षेत्रे पुनरपि सीतावदारणवत्प्रथमकृष्टभूम्यां पुनः कर्षणवत् प्रथमकृतनखक्षतमध्य एव पुनरपि गाढतरं नखक्षतं यदारोपितं तत्ते चित्ते अस्ति कच्चित् तत्स्मरेत्यर्थः। शम्बाकृतं द्वितीये स्यादि-

स्वदिग्विनियमेनैव निशि पार्श्वविवर्त्तिनोः ।
स्वप्नेष्वप्यस्तवैमुख्ये सख्ये सौख्यं स्मरावयोः ॥ ८४ ॥
क्षणं प्राप्य सदस्येव नृणां विमनितेक्षणं ।
दर्शिताधरमदंशा ध्याय यन्मामतर्ज्जयः ॥ ८५ ॥

त्यमरः शम्बाकृतं कृषो द्वितीयेति (पा०५।४।५८) डाच् लक्षणया प्रयोगः ॥ ८३ ॥

स्वेति । स्वीयस्वीयदिशा विनिमयेनैव परिवर्त्तनेनैव निशि पार्श्वविवर्त्तिनोर्वामदक्षिणकुक्षिपरिवर्त्तनशीलयोर्न तु यथावस्थितयोः सम्मुखयोरेवैवम्भूतयोः आवयोस्तव मम च स्वप्नेष्वपि निद्रास्वपि सख्ये अस्तं त्यक्तवैमुख्यं पराङ्मुखत्वं यत्र तादृशे सख्ये मैत्रे यत्सौख्यं सुखमखिलं वा तत्स्मर । सम्मुखयोर्हि यथावस्थितयोरेव पार्श्वपरिवर्त्तिनोर्द्वयोरपि पृष्ठभागघटनात्पराङ्मुखत्वमेव स्यादिति स्वस्वदिग्विनिमयपूर्व्वकमेव पार्श्वपरिवर्त्तनेनैव वैमुख्याभावान्निद्रासमयेऽपि साम्मुख्येन यदावयोर्मैत्र्यं तत्स्मरेत्यर्थः । स्वदिग्विनिमयेन पार्श्वपरिवर्त्तनं वाऽन्योन्यसाम्मुख्यमेव भवतीति सर्व्वसाक्षिकं । सौख्यं स्वार्थे भावे वा ष्यञ् ॥ ८४ ॥

क्षणमिति । सदस्येव सभायामेव वर्त्तमानाऽपि त्वं सभास्थानां नृणां विमनितानि कार्य्यान्तरदर्शनपराणि कृतानि ईक्षणानि यत्र येन वा तादृशं क्षणं अवसरं नृत्ताद्युत्सवं वा प्राप्य मह्यं अङ्गुल्यादिना दर्शिताऽधरे वर्त्तमानो मद्दंशो मत्कृतो दन्तव्रणो यया एवम्भूता सती तर्जन्यादिना मां यदतर्जयः

तथाऽवलोक्य नीलाञ्जनालभ्रमणविभ्रमात्।
करौ योजयताऽध्येहि यन्मयाऽसि प्रसादिता ॥ ८६ ॥
ताम्बूलदानमन्यस्तकरजं करपङ्कजे।
न मम स्मरसि प्रायस्तव नैव स्मरामि तत् ॥ ८७ ॥
तदध्येहि त्रपोद्यं मां हित्वा यच्च गता सखीः।
तत्रापि मे गतस्याग्रे लीलयैवाच्छिनस्तृणं ॥ ८८ ॥

ध्याय स्मर। विमनितेति तत्करोतीति (पा० ३।१।२६। वा०) णिचि णाप्रातिपदिकेति मि० कौ० चु० १५१ इष्टवद्भावाट्टि-लोपः ॥ ८५ ॥

तथेति। तथाऽधरदन्तचतदर्शनपूर्वं तर्जनप्रकारम क्य लीलाञ्जनालस्य कराभ्यां भ्रमणरूपाद्विभ्रमात् तद्व्याजा प्रणा-मप्रमादाञ्जलिबन्धनरूपेण करौ योजयता संयुक्तौ कुर्वता मया कोपत्याजनपूर्वं यत्प्रसादिताऽसि तदध्येहि स्म त्यर्थः। इक् स्मरणे ॥ ८६ ॥

ताम्बूलेति। त्वं त्वदीयकरपङ्कजे मम ताम्बूलदानं अन्यस्त-करजं अक्षिप्तनखचतं प्रायो बाहुल्येन न स्मरसि। अहमपि मदीयपाणिपद्मे त्वत्कृतं तृषाच्छेदकं तत्ताम्बूलदानं अक्षिप्त नखचतं यथा तथा बाहुल्येन नैव स्मरामि किन्त्वन्योन्यवीटि-कादानचणे प्रेमभरात्पाणिपद्मगर्भारोपितनखचतमेव सदा ताम्बूलदानमावयोस्तत्स्मरेति भावः ॥ ८७ ॥

तदिति। कमप्यपराधं कृत्वाप्यहमेतन्नाकार्षमित्यादित्रपोद्यं

स्मरसि प्रेयसि प्रायो यद्द्वितीयरतासहा ।
शुचिरात्रीत्युपालब्धा त्वं मया पिकनादिनी ॥ ८९ ॥
भुञ्जानस्य नवं निम्बं परिवेविषती मधौ ।
सपत्नीष्वपि मे रागं सम्भाव्य स्वरुषः स्मरेः ॥ ९० ॥

अलीकभाषिणं मां कोपेन हित्वा सखीः प्रति गता त्वं तत्रापि सखीसमीपे भवदीयपृष्ठदेशानुवर्त्तित्वेन गतस्य मे अग्रे लीलयैव स्वभावेनैव यत्तृणं अच्छिनः चिच्छेद तदध्येहीति पूर्व्ववत्, अद्य-प्रभृत्यलीकभाषिणस्तवाहं न काऽपि त्वं मम न कोऽपि इति मैत्रीविच्छेदकसूचकं वा तृणच्छेदं यथा बालकाः कुर्व्वन्ति तद्वदत्र त्वयाऽपि कृतमिति स्मरेत्यर्थः । मृषोद्यं राजसूयेति (पा० ३।१।११४) निपातः ॥ ८८ ॥

स्मरसीति। हे प्रेयसि बालत्वात्स्त्रीकुमार्य्यविशेषाच्च यत् द्विती-यरताभिलाषिणोऽपि मम द्वितीयस्य रतस्यासहा तथा पिक-वन्नदति तच्छीला कोकिलतुल्यकूजना त्वं मया शुचिरात्री ग्रीष्मर्तुसम्बन्धिनी रात्रीति उपालब्धा सोपालम्भमामन्त्रिताऽसि तत्प्रायः स्मरसि कथयेत्यर्थः । शुचिरात्रिरपि स्वल्पप्रमाणत्वा-देकवारसुरतेनैव जातप्रभातत्वात्, द्वितीयसुरतासहा । वसन्त-नैकट्याच्च पिकनादोऽस्यां वर्त्तत इति । तत्रापि प्रभाते कोकि-लालापो भवतीत्यर्थः । यद्वा वसन्तस्यातीतत्वात्कोकिलानाम-भावतः पिकव्यतिरिक्ताः पक्षिणः अपिकास्तन्नादयुक्ता ॥ ८९ ॥

भुञ्जानस्येति। मधौ वसन्ते नवं नूतनसमागतपत्रपुष्पादिकं

स्मर शार्करमास्वाद्य त्वया राद्धमिति स्तुवन् ।
स्वनिन्दारोषरक्तात्तु यदभैषं तवाधरात् ॥ ९१ ॥

निम्बं भुञ्जानस्य मे सपत्नीष्वपि रागं प्रीतिं सम्भाव्य अनुमाय कोपवशात् पुनः निम्बमेव मम भोजनार्थं परिवेविषती पात्रे परितः क्षियन्ती त्वं स्वरुषः स्वीयात् कोपात् स्वकोपस्य वा स्मरः, मधुतरशर्करादिपरित्यागेनातिकटुरसेऽपि चेदस्यैव रुचिस्तर्हि मदीयापेक्षयातिहीनासु मत्सपत्नीष्वप्यस्य रुचिः स्यादिति स-म्भाव्य बहुतरनिम्बमेव भुङ्क्ते इति वारंवारं अतिकटुनिम्बानिदा-नेन यत्कोपान्मां प्रति व्यञ्जितवत्यसि तत्स्मरेति भावः। वसन्ते च जना निम्बं भुञ्जते। परिवेविषती परिवेषणार्थात्परिपूर्व्वाद्विषेः शता। श्लाविति (पा० ६।१।१०) द्विर्वचनं, स्वरुषः अधीगर्थेति। षष्ठी (पा० ३।२।५२) कर्म्मत्वविवक्षया द्वितीया वा ॥ ९० ॥

स्मरेति। शार्करं शर्कराविकारभूतं शर्करासंस्कृतं वा कि-मपि भक्ष्यमास्वाद्य एतत् सर्व्वातिशायिरसं अमृतस्याविहस्तया त्वया साधितं किमिति स्वादातिशयात् अतिस्तुवन् वारंवारं तदेव वर्णयन्, अहं सर्व्वातिशायिरसमेतच्छार्करमिति स्तुतौ अधरस्यापि सर्व्वमधुरवर्गान्तःपातितया निन्दापर्य्यवसानान्म-दपेक्षयाऽप्येतदधिकरसमिति अयं वर्णयति। ननु तर्ह्ययमप्रभृति अयमेतदेव रमयतु मम तु कयाऽप्यनेन न कार्य्येति स्वनिन्दया रोषस्तेन रक्तात्तवाधरात् पुनर्यदभैषं भीतवानस्मि तत् स्मर। कोपेन लौहित्यं युक्तं त्वदधरकल्पशार्करवर्णनया कुपितया

मुखादारभ्य नाभ्यन्तं चुम्बं चुम्बं न तृप्तवान्।
न प्राप्तं चुम्बितुं यत्ते धन्या तच्चुम्बतु स्मृतिः॥ ९२॥
कमपि स्मरकेलिं तं स्मर यत्र भवन्निति।
मया विहितसम्बुद्धी व्रीडिता स्मितवत्यसि॥ ९३॥

त्वया अधरस्फुरणादिना व्यञ्जितात्कोपाद्यद्भेषं तत्स्मरेति भावः। शार्करं विकारे संस्कृतार्थे वा अण्, अधरात् भीतेत्यपादानत्वम् (पा० १।४।२५)॥ ९१॥

मुखादिति। मुखादारभ्य नाभ्यन्तं नाभिपर्य्यन्तं त्वदङ्गं चुम्बं चुम्बं चुम्बित्वा चुम्बित्वा अतृप्तवान् असमाप्तचुम्बनेच्छुः सन्नहं स्मरमन्दिरं यत्तदङ्गं पाण्यादिना प्रतिबन्धात् लज्जातिशयाद्वा गोपितत्वात्तच्चुम्बितुं न प्राप्तं तत्स्मरमन्दिरं धन्या स्मृतिः चुम्बतु इति अतिरागात्स्मरमन्दिरमपि चुम्बितुं प्रवृत्तस्य मम तन्न दत्तवती तत्स्मरेति भावः। चक्रवर्त्तिनाऽपि मया यच्चुम्बितुं न प्राप्तं तत्स्मृत्या प्राप्तं अत एव सा धन्येति भावः। मुखाक्षिकचाकुचनाभिमूलवराङ्गभागाश्चुम्बनस्थानानि॥ ९२॥

कमिति। त्वं कमपि तं अनिर्वचनीयं लोकोत्तरपुरुषायितारव्यं स्मरकेलिं कामकेलिं स्मर, यत्र कामकेलौ पुंस्त्वारोपेण भवन्नित्येवं पुंलिङ्गोचितसम्बुद्ध्या मया विहिता सम्बुद्धिर्यस्याः सा त्वं व्रीडिता स्मितवत्यसि कामशास्त्राभ्यासकौशलाद्यद्विपरीतसुरतमकार्षीः तत्स्मरेत्यर्थः। केलौ पुंस्त्वं पूर्व्वं दर्शितं॥ ९३॥

नीलदाचिबुकं यत्र मदाक्तेन श्रमाम्बुना।
स्मर हारमणौ दृष्टं स्वमास्यं तत्क्षणोचितं॥ ९४॥
स्मर तन्नखमत्रेरौ कस्तेऽधादिति त मृषा।
ह्रीदैवतमलुम्पं यद्व्रतं रतपरीक्षणं॥ ९५॥

नीलदेति। तत्रोक्तरूपे पुरुषायिते ललाटकपोललिखितपत्त्रवल्लीसम्बन्धिना मदेन कस्तूर्य्याक्तेन मिश्रितेन कलुषितेन गच्छता श्रमाम्बुना आचिबुकं हनुभागमभिव्याप्य नीलत् नीलवर्णं भवत् उपरिस्थितलादधोविलोकयतो मुखस्य कस्तूरीमिलितेन गलता श्रमजलेन चिबुकसम्बन्धस्यौचित्यान्नीलं भवत् एवम्भूतं। अधोभागे वर्त्तमानस्य मम हृदि वर्त्तमाने मुक्ताहारमध्यमणौ तत्क्षणं विपरीतरताचरणसमये तत्क्षण उत्सवे वा उचितमुक्तरीत्या योग्यमथ च पुरुषायितक्षणे तादृशस्य श्रमजलस्य चूचुकातिवाहित्वेनोचितं दृष्टं स्वमास्यं स्मर। मदो रेतसि कस्तूरी गर्व्वे हर्षमदानयोरित्यभिधानान्मदसदृश एकदेशलक्षणया मृगमदवाची। नीलत् आचारक्विबन्ताच्छता। नीलवर्णधातुरिति केचित्॥ ९४॥

स्मरेति। अहमत्र स्थिते तवोरौ को नखमधाद्दत्तवानिति मृषाऽसत्यभाषी सन् ह्रीरेव दैवतं यस्य तत्, अत एव रतस्य परीक्षणं परीक्षाकरणं ब्रह्मचर्य्यरूपं रतिप्रतिबन्धकं व्रतं नियमं यदलुम्पं निर्वर्त्तितवान्, तत्स्मर। परपुरुषसम्बन्धशङ्कोत्पादनार्थं मृषाभाषणेन रसान्तरमुत्पाद्य लज्जाकृते सुरतप्रतिबन्धकमनु-

वनकेलौ स्मराश्वत्थदलं भूपतितं प्रति- ।
देहि मह्यमुदस्येति मह्निरा व्रीडिताऽसि यत् ॥ ९६ ॥
इति तस्या रहस्यानि प्रिये शंसति सान्तरा ।
पाणिभ्यां पिदधे तस्याः श्रवसी ह्रीवशीकृता ॥ ९७ ॥
कर्णौ पीडयती सख्या वीक्ष्य नेत्रासितोत्पले ।
अप्यपीडयतां भैमीकरकोकनदे नु तौ ॥ ९८ ॥

योगं यन्निर्वर्त्तितवान् तत् स्मरेत्यर्थः । व्रतं सदैवतं भवतीति ह्रीदैवतमित्युक्तं ॥ ९५ ॥

वनेति । त्वं इति मह्निरा यद् व्रीडिताऽसि तत्स्मर । इति किं । हे भैमि त्वं वनकेलौ आरामविहारसमये भुवि पतितं अश्वत्थदलं उदस्य पाणिना उत्क्षिप्य मह्यं प्रतिदेहीति अश्वत्थपत्रसदृशं विपुलञ्च गुह्यमिति कामशास्त्रवचनात् भूपतिताश्वत्थदलयाचनेन वराङ्गयाचनस्य सूचितत्वाद् व्रीडिताऽसि तत् स्मरेति भावः ॥ ९६ ॥

इतीति । सा भैमी प्रिये इति पूर्व्वोक्तप्रकारेण तस्या रहस्यानि एकान्तरतवृत्तानि शंसति सति ह्रिया वशीकृता लज्जिता सती अन्तरा मध्ये एवासमाप्त एव वचने पाणिभ्यां सख्याः कलायाः श्रवसी कर्णौ पिदधे आच्छादितवती । इतः परमयं सङ्गतमपि रहस्यमस्यै कथयिष्यति तदनया अनाकर्णनीयमिति बुध्वा तस्याः कर्णौ पिधत्तेत्यर्थः ॥ ९७ ॥

कर्णपिधानमेवोत्प्रेक्षते ॥ कर्णाविति । भैमीकराविव कोक-

तत्प्रविष्टं सखीकर्णे पत्युरालपितं ह्रिया।
पिदधाविव वैदर्भी स्वरहस्याभिसन्धिना ॥ ९९ ॥
तमालोक्य प्रियाकेलिं नले सोत्प्रासहासिनि।
आरात्तत्त्वमबध्वाऽपि सख्यः सिस्मियिरेऽपराः ॥ १०० ॥

नदे रक्तोत्पले अपि कर्त्तारौ सख्याः कलाया नेत्रे एवासितोत्पले तस्या एव कर्णौ पीडयती यन्त्रयती वोच्य तौ कलाकर्णौ कर्म्मभूतौ अपीडयतां नु। कलानेत्रनीलोत्पलयोराकर्णपूर्णतया कर्णाक्रमणात् पीडाकरणे इव भैमीकररक्तोत्पले अपि साजात्यान्नेत्रनीलोत्पलसाहायकाचरणबुध्येव स्पर्द्धयेव वा भैमीकरकोकनदे अपि तत्कर्णौ पीडयामासतुः किमिति भावः। सवर्णयोः साहाय्यकं स्पर्द्धा च युक्ता। पीडयती वा नपुंसकस्येति (पा० ७।१।७९) नुमभावः ॥ ९८ ॥

पुनरन्यथोत्प्रेचते ॥ तदिति। वैदर्भी सखीकर्णे प्रविष्टं तत्पूर्व्वोक्तं रहस्यरूपं पत्युरालपितं स्वरहस्यं एतत्कर्णाभ्यां सकाशात् वहिर्मा गादिति अभिसन्धिना अभिप्रायेणेव ह्रिया पिदधौ आच्छादितवती। अन्यदपि गोप्यवस्तु भाण्डे निक्षिप्यान्यो मा ज्ञासीदिति तद्द्वारं पिधीयते ॥ ९९ ॥

तमिति। आराद्दूरे स्थिता अप्यपराः सख्यस्तत्त्वं नलहासकारणमबुध्वाऽपि सिस्मियिरे जहसुः। कस्मिन् सति। नले तं पूर्वोक्तं प्रियाकेलिं आलोक्य सोत्प्रासहासिनि उत्प्रासेनोच्चैस्त्वेन सह यथा तथा हसति सति। नलाट्टहासश्रवणमात्रेण सिस्मियिर इत्यर्थः ॥ १०० ॥

दम्पत्योरुपरि प्रीत्या ता धराप्सरसस्तयोः ।
ववृषुः स्मितपुष्पाणि सुरभीणि मुखानिलैः ॥ १०१ ॥
तदास्यहसिताज्जातं स्मितमासामभासत ।
आलोकादिव शीतांशोः कुमुदश्रेणिजृम्भणं ॥ १०२ ॥
प्रत्यभिज्ञाय विज्ञाऽथ स्वरं हासविकस्वरं ।
सख्यास्तासु स्वपत्रायाः कला जातबलाऽजनि ॥ १०३ ॥

दम्पत्योरिति। ताः सख्य एव धरायां उर्व्वश्याद्यप्सरसः तयो-र्दम्पत्योरुपरि प्रीत्या प्रेमातिशयेन मुखानिलैः सुरभीणि स्मितान्येव पुष्पाणि ववृषुः सर्व्वा अपि सख्यस्तावुभौ क्रीडावशा-ज्जहसुरित्यर्थः। मुखानिलसुरभित्वेन तासां पद्मिनीत्वं सूचितं तयोः षष्ठ्यतसर्थेति (पा० २।३।३०) षष्ठी ॥ १०१ ॥

तदेति। अस्य नलस्यास्यहसिताज्जातमासां सखीनां स्मितं शीतांशोरालोकात् सकाशाज्जातं कुमुदश्रेण्यां जृम्भणं विकास-नमिवाभासत । तदस्येति क्वचित् पाठः॥ १०२ ॥

प्रतीति। अथ सखीसमूहहासानन्तरं विज्ञा अतिचतुरा कला तासु सखीषु मध्ये स्वपत्राया निजमित्रभूतायाः कस्या-श्चित् सख्याः स्वरं हास्येन विकस्वरं सुव्यक्तं, अत एव सोऽयं मत्सख्या एव स्वर इति प्रत्यभिज्ञाय परोक्षप्रत्यक्षोभयात्मकज्ञा-नविषयं कृत्वा, जातं बलं यस्यास्तादृशी भैमीप्रतारणार्थं सम-हायोत्साहशक्तियुक्ता वाऽजनि। मत् पक्षीयाऽत्र विद्यतेऽतोऽस्याः सकाशान्मां मोचयिष्यति,अवशिष्टञ्चाकर्णयिष्यतीति साऽऽश्वस्ताऽ

साऽऽहूयोच्चैरथोचे तामेहि स्वर्गेण वञ्चिते।
पिव वाणीः सुधावेणीर्नृपचन्द्रस्य सुन्दरि ॥१०४॥
साऽश्रृणोत्तस्य वाग्भागमनत्यासत्तिमत्यपि।
कल्पग्रामाल्पनिर्घोषं वदरीव कृशोदरी ॥१०५॥

भूदिति भावः। अन्योऽपि केनचित् प्रतिबद्धः स्वपत्नीयं दृष्ट्वा जातबलो भवति। सखीस्वरश्रवणं कर्णपिधानात् पूर्वमेव ज्ञातव्यं अन्यथा स्वरश्रवणानुपपत्तेः। भैमीकरयोः कोमलतरतया कर्णनिविडपीडनसामर्थ्याभावेन वा स्वरश्रवणोपपत्तेः। तथ्यज्ञा इति च पाठः ॥१०३॥

सेति। अथ स्वपत्नीयस्वरप्रत्यभिज्ञानानन्तरं सा कला तां स्वसखीं उच्चैस्तारस्वरं यथा तथा आहूय इति ऊचे। इति किं दूरस्थत्वात् हे स्वर्गसुखेन वञ्चिते सुन्दरि एहि समीपमागच्छ। आगत्य त्वं नृप एवाह्लादकत्वाच्चन्द्रस्तस्य सुधावेणीः अमृतप्रवाहरूपा वाणीः पिव सादरमाकर्णयेति। स्वर्गेऽपीन्द्रमृतपानमेव, नलपरिहासाकर्णनसुखं स्वर्गसुखमेव तदनुभवेत्यर्थः ॥१०४॥

सेति। कलयाऽऽहूता ऽनत्यासत्तिमत्यपि अत्यन्तनैकट्यरहिताऽपि यत्र स्थितौ किञ्चित् श्रूयते किञ्चिन्नेति तत्र स्थिता कृशोदरी सा कलासखी तस्य वचोभागमवशिष्टमंशं अशृणोत् कलाकर्णयोर्भैम्या पिहितत्वादाहूता सखी नलकथ्यमानरहस्यकथाशेषमशृणोदित्यर्थः। का कमिव। कृशोदरी कृशमध्या अन्यजनेति यावत्। एवम्भूता वदरी कल्पग्रामनाम्नो ग्रामस्याल्पनिर्घोषं

अथ स्वपृष्ठनिष्ठायाः शृण्वन्त्या नैषधाभिधाः।
नलमौलिमणौ तस्या भावमाकलयत् कला ॥ १०६ ॥
प्रतिविम्बेचितैः सख्या मुखाकूतकृतानुमा।
तद्व्रीडाद्यनकुर्व्वाणा शृण्वती चान्वमायि सा ॥ १०७ ॥

लोककलकलं तत्र पठतां वेदध्वनिम्वा तमिव, वदरिकाश्रमस्थो लोकः मुनिजनस्थानभूतः कल्पग्रामनिवासिनो जनस्य कोलाहलं शृणोतीति तैर्थिकप्रसिद्धिः ॥ १०५ ॥

अथेति। अथ कलासख्या नलवाक्यशेषश्रवणानन्तरं स्वपृष्ठे निष्ठा स्थितिर्यस्याः कर्णपिधानपरतया कलापश्चाद्भागे स्थितायास्तया कलासखीं प्रति रहस्यं ब्रुवतो नैषधस्याभिधा वचनानि शृण्वन्त्याः तस्या भैम्या भावं रहस्यकथनाद्धामकोपाभिव्यञ्जकमुखचेष्टाविशेषं नलस्य मौलिमणौ शिरोरत्ने प्रतिविम्बवशादाकलयदज्ञासीत्, ददर्शेत्यर्थः। नलेन कलासखीं प्रति रहस्ये उक्ते भैम्या हासकोपादिचेष्टां नलमौलिरत्ने प्रतिविम्बितां सा कला ददर्श न लशृणोदित्यर्थः ॥ १०६ ॥

प्रतिविम्बेति। प्रतिविम्बे ईचितैः सख्याः पृष्ठस्थिताया भैम्याः स्वपचसख्या वा मुखाकूतैः व्रीडाहास्यादिसूचकमुखमङ्गाचविकासादिचेष्टितैः कृला कृता अनुमाऽनुमितिर्यया तादृङ्मुखविकारदर्शनात् प्रायेण नलेनैवमुक्तं स्यादित्येवं कृता नलवाक्यार्थसम्भावना यया सा, तथा तस्या भैम्याः स्वपचसख्या वा नलवाक्यानुरूपव्रीडाद्यनुकुर्व्वती प्रतिविम्बदर्शनादेवाङ्गमङ्गाचाद्यभिनयेना-

कारङ्कारं तथाकारमूचे साऽश्रृणवन्तमां।
मिथ्या वेत्थ गिरश्चेत्तद्व्यर्थाः स्युर्मम देवताः॥ १०८॥
मत्कर्णभूषणानान्तु राजन्निविडपीडनात्।
व्यथिष्यमाणपाणिस्ते निषेद्धुमुचिता प्रिया॥ १०९॥

नुकुर्व्वाणा दर्शयन्ती सती सा कला भैमीपाणिपिहितकर्णाऽपि तत् क्रीडाद्यनुकरणादेव भैमीवत्सखीवद्वा नलवचनं शृणवती-वान्नमानि भैमीनलाभ्यां सम्भाविता। क्रीडादि न लोकेति (पा०२।३।६९) षष्ठीनिषेधाद्द्वितीया। अनुकुर्व्वाणा अनुपरा-भ्यां कृञ् इति (पा०१।३।७९) परस्मैपदविधानाच्छानजभावे ताच्छील्ये शत्रे वा चानश्॥ १०७॥

कारमिति। सा कला तथा पूर्व्वोक्तभैम्याः स्वपक्षसख्या वा नलमौलिमणिदृष्टं मुखक्रीडाहर्षाद्याकारं कृत्वा कृत्वा अनया सर्व्वं श्रुतमिति यथा प्रतीतिर्भवति तथाऽभिनयं कृत्वा इत्यूचे। इति किं। अहं भवदीयं सर्वं वृत्तान्तं सर्व्वमश्रृणवन्तमां नि तरां आकर्णितवत्यस्मि, हे भैमि त्वं भवद्वचनश्रवणसूचिका मम गिरः मिथ्या चेद्वेत्थ जानीषे अनाकर्णितमप्याकर्णितमियं वद-तीति मन्यसे चेत्तर्हि अभीष्टसिद्ध्यर्थं प्रत्यहं पूज्यमाना मम गौर्य्यादीष्टदेवताः व्यर्थाःनिष्फलाः स्युरिष्टदायिन्यो मा भूवन्नि-ति मया शपथः क्रियते इति नलं प्रत्यवोचद्वा। अश्रृणवन्तमां तिङश्चेति (पा०५।३।५६) तमप्॥ १०८॥

मदिति। इतीति युग्मम्॥ सा कला इति पूर्व्वोक्तं नलं प्रति

इति सा मोचयाञ्चक्रे कर्णौ सख्याः करग्रहात् ।
पत्युराश्रवतां यान्त्या मुधायासनिषेधिनः ॥ ११० ॥
श्रुतिसंरोधजध्वानसन्ततिच्छेदतालताम् ।
जगाम झटितित्यागस्वनस्तत्कर्णयोस्ततः ॥ १११ ॥

उक्ता सख्या भैम्याः करग्रहात् पाणिभ्यां पीडनात् सकाशात् कर्णौ मोचयाञ्चक्रे, अर्थाद्भैम्येव प्रयोज्यया । तृतीयान्तस्तु स्पष्टार्थः । किम्भूतायाः । कर्णपिधानरूपान्मुधायासात् वृथाप्रयासात् निषेधिनो निवारयितुः पत्युराश्रवतां वचनकारित्वं यान्त्या गच्छन्त्यास्तद्वचनकारिण्या इत्यर्थः । शपथरूपकलावचनमाकर्ण्य कर्णपिधानप्रयासो व्यर्थ इति निविडपीडनात् तव पाणिपीडैव भविष्यतीति तत्कर्णौ मुञ्चति । नलवचनाद्भैमी तत्कर्णावमुञ्चदित्यर्थः । इति किं । हे राजन् मत्कर्णपिधानवशात् कर्णभूषणानां निविडपीडनाद्धेतोस्तु पुनः सौकुमार्य्यातिशयादितः परमपि व्यथिष्यमाणौ पीडां प्राप्स्यन्तौ पाणी यस्यास्तादृशी ते तव प्रिया निषेद्धुर्मोचतेति, कर्णपिधानफलं नास्ति, पिधानप्रयासो व्यर्थः, प्रत्युतास्याः पीडा भविष्यति, इयं त्वया निषेद्धव्येत्यर्थः ॥ १०८ ॥ ११० ॥

श्रुतीति । ततः कर्णमोचनानन्तरं, तता विस्तृता, वा तस्याः कलायाः कर्णयोः झटिति शीघ्रं त्यागस्तस्माच्छीघ्रहस्तमोचनाज्जातो यो यन्त्रादिस्वनः स श्रुत्योः संरोधान्निविडपीडनाज्जातो यो ध्वानः शब्दस्तस्य सन्ततिरविच्छिन्नता निरन्तरं समुत्पन्नो गुमगुमारव इति यावत् । तस्य छेदे विरतौ तालतां हस्ततालद्-

साऽपसृत्य कियद्दूरं मुमुदे सिस्मिये ततः।
इदञ्च तां सखीमेत्य ययाचे काकुभिः कला ॥ ११२ ॥
अभिधास्ये रहस्यं तद्यदश्रावि मयाऽनयोः।
वर्णयाकर्णितं मह्यमेह्यालि विनिमीयतां ॥ ११३ ॥

यवाद्यपरिच्छेद्यगीतादिक्रियामानभूतकालतां जगाम। झटिति-मुद्रितकर्णमोचनादनुभूयमानयन्त्रादिशब्दः कर्णपिधानसमये ऽनुभूयमानगुमगुमारवविरामज्ञापकोऽभूदित्यर्थः। एतच्च प्रत्य-क्षसिद्धं ॥ १११ ॥

सेति। सा कला ततोऽनन्तरं तस्माद्भैम्युपवेशनस्थानाद्वा सकाशात् कियत्किञ्चिद्दूरमपसृत्य गत्वा मुमुदे सिस्मिये [illegible]ार-णकौशलवशाज्जहास च तां स्वसखीं श्रुतनलवचनां एत्य इदं वक्ष्यमाणं काकुभिरर्थविशेषव्यञ्जकैरुच्चनीचैर्ध्वनिविकारैः कृपण-भाषणैर्ययाचे, अवोचदिति यावत् ॥ ११२ ॥

अभिधास्य इति। हे सखि मया अनयोर्यद्रहस्यमश्रावि तं रहस्यं तुभ्यमभिधास्ये। मत्कर्णपिधानानन्तरं अनयोः रहस्यं त्वया आकर्णितं तत्त्वं मह्यं वर्णय कथय, एहि शीघ्रमागच्छ विनि-मीयतां परिवृत्तिः क्रियतां। मह्यं क्रिययायमभिप्रैतीति (पा० १।४।३२ वा० १) सम्प्रदानत्वं भिन्नवाक्यत्वादन्वादेशाभावान्न मयादेशः ॥ ११३ ॥

वयस्याभ्यर्थनेनास्याः प्राक्कूटश्रुतिनाटने।
विस्मितौ कुरुतः स्मैतौ दम्पती कम्पितं शिरः॥ ११४॥
तथाऽऽलिमालपन्तीं तामभ्यधान्निषधाधिपः।
आस्व तद्वञ्चितौ स्वश्चेन्मिथ्या शपथसाहसात्॥ ११५॥
प्रत्यालापीत् कलाऽपीमं कलङ्कः शङ्कितः कुतः।
प्रियापरिजनोक्तस्य त्वयैषाऽद्य मृषोद्यता॥ ११६॥

वयस्येति। अश्रुतरहस्यश्रवणार्थमाहूताया वयस्याया अभ्यर्थनेन स्वाश्रुतश्रवणप्रार्थनेन हेतुनाऽस्याः कलायाः अशृणवन्नामित्यादिप्राक्कूटश्रुतिः पूर्व्वकृतमिथ्याशिरःकम्पादिपूर्व्वं श्रवणं तस्या नाटनेऽभिनये विस्मितौ अनया कथमावां प्रतारितौ स्वः दृष्टं दृष्टं इति मिथोवचनपूर्व्वकं माश्चर्य्यौ तौ दम्पती शिरःकम्पितं कुरुतः स्म। नाटने चौरादिकान्नटेर्नपुंसके भावे ल्युट्॥ ११४॥

तथेति। निषधाधिपः तथा रहस्यविनिमयकथनप्रार्थनरूपेण यां स्वपक्षभूतां आलिं प्रत्यालपन्तीं तां कलामभ्यधात् अवोचत्। हे कले मिथ्याशपथरूपात् साहसादविचारकारित्वाद्धेतोः चेद्यद्यावां कर्णमोचनार्थमेव त्वयाऽलीकवचनोक्त्या वञ्चितौ प्रतारितौ स्वो भवावः तर्हि आस्व तिष्ठ तिष्ठ। तत्तर्हि आस्वेति भिन्नं वा प्रतारनिमित्तां तर्ज्जनोक्तिमूचे इत्यर्थः॥ ११५॥

प्रतीति। कलाऽपि इमं नलं प्रति उद्दिश्य आलापीत्, अवोचत्, हे राजन् त्वया प्रियाया भैम्याः परिजनस्य सेवकभूताया ममोक्तस्य वचनस्य एतावत्सु दिनेषु मध्ये अद्यैव मृषोद्यता मि-

सत्यं खलु तदाश्रौषं परं गुमगुमारवं।
शृणोमीत्येव चावोचं न तु त्वद्वाचमित्यपि॥ ११७॥
आमन्त्र्य देव तेन त्वां तद्वैयर्थ्यं समर्थये।
शपथः कर्कशोदर्कः सत्यं सत्योऽपि दैवतः॥ ११८॥

थ्याभाषणरूपः कलङ्को दोषः कुतः कस्माद्धेतोः शङ्कितः सम्भावितः तत्कारणं कथयेति सत्यवादित्वाद्भैम्याः परिचारिकायाः ममालीकभाषित्वं सम्भावयितुमप्यशक्यमित्यर्थः। भैमी राज्ञो वृत्तमपि सुरतमध्यादयं अवृत्तमिति कथयति परिजनस्य प्रभुसदृशो युक्तः। तथाचालीकभाषणं मम गुणा एव न तु कलङ्क इत्यर्थः। परिजनस्योक्ताविति वा पाठः॥ ११६॥

स्ववचनस्य सत्यतां प्रतिपादयति। सत्यमिति। अहं तदा श्रवणपिधानकाले खलु निश्चितं अश्रौषं इति सत्यं, परं केवलं गुमगुमारवं न तु त्वद्वचनं। तथाच श्रवणमात्रं सत्यमेवेत्यर्थः। शपथकरणसमये शृधातोः सकर्मत्वेऽपि कर्माविवक्षया शृणोमीत्येव वाऽवोचं न तु त्वद्वाचमिति विशेषणमप्यवोचं। शपथोऽपि साधारणश्रवणमात्रविषयत्वात् सत्य एवेति। न कथञ्चिदपि ममालीकभाषित्वं त्वया शङ्कनीयमित्यर्थः। अशृणवन्त्वामिति तत्रोक्तत्वादत्र शृणोमीति श्रवणमात्रोपलक्षणपरं न तु भूतवर्त्तमानपरमिति ज्ञातव्यं॥ ११७॥

वार्थाः स्मर्ममेति देवताशब्दस्यान्यार्थत्वेन शपथो मया न कृत एवेति समर्थयते। आमन्त्र्येति। हे राजन् अहं तेन

**असम्भोगकथारम्भैर्वञ्चयेथे कथं नु मां ।**
**हन्त सेयमनर्हन्ती यत्तु विप्रलभे युवां ॥ ११९ ॥**

व्यर्था स्युरित्यादिना वाक्येन देवेति त्वामामन्त्र्य सम्बोध्य ताः श्रवणप्रतिपादिका अशृण्वन्तमामित्यादयो मम गिरो व्यर्था अलीकाः स्युः यथा त्वं मिथ्याभूता वेत्थ तादृश्य एव कामं स्युरिति अशृण्वन्तमामित्यादीनां त्वद्वचनश्रवणप्रतिपादिकानामपि गिरां वैयर्थ्यमेव समर्थये मिद्धान्तत्वेन प्रतिपादयामि। अथ च या गुमगुमारवरूपा अशेषं याश्च त्वं मिथ्या वेत्थ तासां गिरां अनुकरणशब्दत्वात् अर्थशून्यत्वात् निरर्थकत्वाद्वैयर्थ्यं समर्थये पूर्व्वकृतस्य शपथस्यान्यमर्थं कृत्वा कथमपलपसीत्यत आह।

सत्येनापि शपेद्यस्तु देवाग्निगुरुसन्निधौ।
तस्य वैवस्वतो राजा धर्मस्यार्द्धं निकृन्तति॥

इत्यादि मन्वादिवचनप्रामाण्याद्देवतासम्बन्धी सत्योऽपि शपथो सत्यं निश्चितं यस्मात् कर्कशोदर्कः दारुणपरिणामः किं पुनरसत्यः तस्मादिति ज्ञात्वा मया शपथो न कृत एव। परं देवस्यैव शपथभ्रान्तिर्जातेत्यर्थः। अत एव त्वां देवत्यामन्त्रितवती देवेति सत्योऽपि शपथः कर्कशोदर्क इति यन्मन्वादिभिरुक्तं तत्सत्यं। यस्माच्छपथभ्रान्त्या सम्प्रत्येव त्वया मयि कलङ्क आरोपित इत्यर्थ इति वा ॥ ११८ ॥

इदानीं आर्जवं हि कुटिलेषु न नीतिरिति न्यायादलीकभाषणेऽपि अदोषत्वमाह। असम्भोगेति। हे भैमीनलौ युवां

कर्णे कर्णे ततः सख्यौ श्रुतमाचख्यतुर्मिथः ।
मुहुर्विस्मयमाने च स्मयमाने च ते बहु ॥ १२० ॥
अथाख्यायि कलासख्या कुप्य मे दमयन्ति मा ।
कर्णाद्द्वितीयतोऽप्यस्याः सङ्कोप्यैव यदब्रुवं ॥ १२१ ॥

भैमी मह्यं स्प्रष्टुमपि न ददाति नलेनाहं कदाचिदपि न स्पृष्टा ऽपि इत्यसम्भोगकथारम्भैरन्योन्यसम्भोगाभावविषयवृत्तान्तारम्भैः मिथोऽनुभूतसुरतभरनिह्नवैः छला मां कथं नु कथमिव वञ्चयेथे प्रतारयथः । यत्तु पुनः, अहं कर्म्मीभूतौ युवां विप्रलम्भे प्रतारयामि सेयमहं अनर्हन्ती अयोग्या अनुचितकारिणी हन्त कचित्रं वेति काकुः । युवाभ्यामहं वञ्चनीया मया तु भवन्तौ वञ्चनीयौ का वा रीतिरियं वञ्चनकरणमाम्यात् समदोष युवामहं चेति भावः। अर्हन्तीति अर्हः प्रशंसायामिति र उगित्वान्ङीप् नुम् युवां कर्तृत्वेन चावृत्त्या योज्यं ॥ ११८ ॥

कर्णे इति । ततः स्ववञ्चकत्वदोषपरिहारानन्तरं भैमीसुरतप्रागल्भ्ये मुहुर्विस्मयमाने आश्चर्य्यं कुर्वाणे च बहु नितरां स्मयमाने हसन्त्यौ च ते कलासखीलक्षणे सख्यौ भैम्या वा सहचर्य्यौ मिथोऽन्योन्यस्य कर्णे कर्णे स्वस्वश्रुतं स्वरहस्यं आचख्यतुः । चावन्योन्यसमुच्चये । अन्योन्यकर्णापेक्षया वीप्सायां द्विरुक्तिः ॥ १२० ॥

अथेति । अथान्योन्यकर्णे तत्तद्रहस्यकथनानन्तरं कलायाः सख्या कलयैव सख्या वा भैमी आख्यायि इति उक्ता हे दम-

प्रियः प्रियामथाचष्ट दृष्टं कपटपाटवं ।
वयस्ययोरिदं तस्मान्मा सखीष्वेव विश्वसीः ॥ १२२ ॥
आलापि कलयाऽपीयं पतिर्नालपति क्वचित् ।
वयस्येऽसौ रहस्यं तत्सभ्ये विस्रभ्यमीदृशि ॥ १२३ ॥

यन्ति त्वं मे मह्यं मा कुप्य अहं यदब्रुवं तदस्या द्वितीयताऽपि कर्णात् मङ्क्षोऽप्येवाब्रुवं, अस्या एकेनैव कर्णेन श्रुतं न तु द्वितीयेनेति लौकिकादाभाषणात् परिहासोऽपि । एवमिति पाठे एवम्प्रकारेण मङ्क्ष्यतीति । कुप्य मे क्रुधद्रुहेति (पा० १।४।३७) सम्प्रदानत्वं मा निरनुबन्धकः अब्रुवं लङ् ॥ १२१ ॥

प्रिय इति । अथ सख्युक्त्यनन्तरं प्रियः प्रियां आचष्टे इति ऊचे । इति किं हे भैमि त्वं वयस्ययोः कपटपाटवमिदं वचनचातुर्यं दृष्टमनुभूतं यतः तस्मात्सखीष्वेव मा विश्वसीः किन्तु मयि कदाचिद्विश्वसिहि सखीषु मैव विश्वसीः किन्तु मय्येवेति वा । यद्वा मा विश्वसीरेव ॥ १२२ ॥

आलापीति । कलयाऽपि इयं भैमी मधुरकाकूक्त्या आलापि इत्युक्ता । इति किं । हे वयस्ये असौ तव पतिः क्वचिदपि देशे जने वा त्वद्रहस्यं नालपति किन्तु गोपायत्येव । तत्तस्मादीदृशि एतत्सदृशेऽन्यस्मिन्नपि सभ्ये साधौ विस्रभ्यं विश्वसनीयं त्वया किं पुनरेतस्मिन्निति विरुद्धलक्षणया अयं सर्व्वस्याग्रे त्वद्रहस्यं प्रकटयत्येव, असभ्यश्चाज्ञोऽयमित्यस्मिन्नेतत्तुल्येऽन्यस्मिन्नपि मैव विश्वसीरिति । नालपति अपित्वालपति विस्रभ्यमपि तु नेति काकुर्वा । आलपीत्यपि क्वचित्पाठः ॥ १२३ ॥

इति व्युत्तिष्ठमानायां तस्यामूचे नलः प्रियां।
भण भैमि वहिःकुर्व्वे दुर्व्विनीते गृहादमू ॥ १२४ ॥
शिरःकम्पानुमत्याऽथ सुदत्या प्रीणितः प्रियः।
चुलुकं तुच्छमुत्क्षिप्य सख्योः सलिलमक्षिपत् ॥ १२५ ॥

इतीति। नलस्तस्यां कलायां इति उक्तप्रकारेण प्रतिबन्ध्या व्युतिष्ठमानायां प्रतिरोधकारिण्यां सत्यां प्रियां प्रति इत्यूचे। इति किं। हे भैमि अहं दुर्व्विनीते दुष्टे नितरां विश्रामघातिन्यौ अमू सख्यौ गृहाद्वहिःकुर्व्वे निष्कामयामि भण आज्ञापय। एतेन नलस्य सम्भोगेच्छा व्यज्यते तदर्थमेव कुर्व्वे इति लट्। व्युत्थानं प्रतिरोधे च विरोधाचरणेऽपि चेत्यभिधानादूर्द्धकर्म्मत्वाभावात् उदोऽनूर्द्धकर्मणीति (पा०१।३।२४) तङ्। व्युत्तिष्ठमानायां विरोधाचरणे कृतोद्यमायां वा ॥ १२४ ॥

शिर इति। अथोत्तरविषयकथानन्तरं सुदत्या भैम्याः शिरःकम्पेन या सखीनिष्कामनस्यानुमतिरनुज्ञा तया कृत्वा प्रीणितः जनितानन्दः प्रियः सख्योर्विषये तुच्छं रिक्तं चुलुकमुत्क्षिप्य उद्यस्य वरुणवरेण प्राप्तं सलिलं तन्निष्कासनार्थं अक्षिपत्। सख्योर्दृष्टत्वाच्छिरःकम्पेन भैम्या तद्वहिष्करणमङ्गीकृतं, नलस्तु स्वाशयानुसारेण भैम्यपि सम्भोगेच्छयैवैते वहिष्कर्त्तुमिच्छति मत्सम्भोगोऽनुमतोऽस्या इति सन्तुष्टोऽत एव तन्निर्गमनार्थं जलं क्षिप्तवानिति भावः। शिरःकम्प एवानुमतिर्यस्यास्तया सुदत्येति वा ॥ १२५ ॥

तच्चित्रदत्तचित्ताभ्यामुच्चैः सिचयसेचनं ।
ताभ्यामलम्भि दूरेऽपि नलेच्छापूरिभिर्ज्जलैः ॥ १२६ ॥
वरेण वरुणस्यायं सुलभैरम्भसां भरैः ।
एतयोस्तिमितीचक्रे हृदयं विस्मयैरपि ॥ १२७ ॥
तेनापि नापसर्पन्त्यौ दमयन्तीमयं ततः ।
हर्षेणादर्शयत् पश्य नन्विमे तन्वि मे पुरः ॥ १२८ ॥

तदिति। तुच्छचुलुकमोचनमात्रेण जलसेचनात् तज्जलेन चित्रे आश्चर्य्ये दत्तं स्थापितं चित्तं ययोस्ताभ्यां दूरेऽपि स्थिताभ्यां सखीभ्यां तुच्छं चुलुकं नलेच्छामात्रेण पूरयन्ति सर्व्वमाप्लावयन्ति तच्छीलैः परिपूर्णतरैर्जलैः कृत्वा उच्चैर्नितरां सिचयस्य वस्त्रस्य सेचनमार्द्रीभावोऽलम्भि प्रापि॥ १२६ ॥

वरेणेति। अयं नलो वरुणवरेण सुलभैरनायासलभ्यैरम्भसां भरैः पूरैः तथाऽऽकस्मिकदर्शनप्रभवैर्विस्मयैराश्चर्य्यैरपि कृत्वा एतयोः सख्योः क्रमेण हृदयं उरःस्थलमन्तरञ्च स्तिमितीचक्रे पूर्व्वमनार्द्रमप्यार्द्रीचक्रे तथाऽनिश्चलमपि निश्चलीचक्रे वारिपूरसेकेनातितरां आश्चर्य्यं जातमित्यर्थः। तिमस्तिम आर्द्रीभावे ॥ १२७ ॥

तेनेति॥ क्लिन्नीकृत्येति॥ युग्मं॥ ततो जलसेकानन्तरं अयं नलः तेन तावता जलसेकेनापि गृहाद्बहिर्नापसर्पन्त्यौ अनिर्गच्छन्त्यौ ते सख्यौ कुचदर्शनाज्जातेन हर्षेण दमयन्तीं अदर्शयत्। हस्तेनेति पाठे कुचदर्शनोपलचकपाणिचेष्टाभिनयेन, ननु तन्वि

क्लिन्नीकृत्याम्भसा वस्त्रं जैनप्रव्रजितीकृते ।
सख्यौ सक्षौमभावेऽपि निर्विघ्नस्तनदर्शने ॥ १२९ ॥
अम्बुनः शाम्बरत्वेन माययैवाविरभूदियं ।
तत्पटावृतमप्यङ्गमनयोः कथयत्यदः ॥ १३० ॥

त्वं मे पुर इमे सख्यौ पश्य । किम्भूते सख्यौ । अम्भसा कर्तृभूतेन करणेन कर्तृभूतेन मया वा वसनं क्लिन्नीकृत्यार्द्रीकृत्य जैन-प्रव्रजितीकृते दिगम्बरपरिव्राजिकात्वं प्रापिते । यतः सक्षौम-भावे दुकूलसाहित्ये सत्यपि निर्विघ्नमन्तरायरहितं स्तनदर्शनं ययोस्ते सूक्ष्मतरे वस्त्रे जलसिक्ते निरन्तरसङ्गदर्शनं भवति तथा च नग्नप्राये एते सख्यौ ममाग्रे विलोकयेति तयोर्लज्जात्याग-द्वारा वहिर्निर्गमनार्थं कुचदर्शनोपलक्षकपाणिचेष्टाभिप्रायेनाद-र्शयदित्यर्थः । दृशेर्बुध्यर्थत्वात् दमयन्तीमित्यत्र, अणौ कर्त्तणौ-कर्म्मत्वं । जैनानां दिगम्बराणां प्रव्रजिता प्राव्राजिकाश्च अता दृश्यौ तादृश्यौ कृते, अभूततद्भावे (पा० ५।४।५०) इति च्विः ॥ १२

॥ १२९ ॥

अम्बुन इति । अदः जलं कर्त्तृ, अनयोः सख्योः पटावृतम-प्यङ्गं स्तनजघनादिकर्म्म यत्कथयति प्रकटयति सेयं अम्बुनः नी-रचीराम्बुशम्बरमित्यभिधानाच्छम्बरसंज्ञत्वेनाथ च शम्बराख्यदै-त्यभावेन माययैवाविरभूत् प्रकटाऽजनि । शाम्बरी हि माया अविद्यमानमपि वस्तु प्रकाशयति । अत्रापि निर्जले जलदर्शनात् अनग्ने नग्नीकरणाच्चेयं शाम्बरी मायेव प्रकटाऽभूदितिच्छलेन नलवचः कविवचो वा । एवमुत्तरश्लोकेऽपि ज्ञेयम् ॥ १३० ॥

वाससो वाऽम्बरत्वेन दृश्यतेयमुपानमत्।
चारुहारमणिश्रेणितारवीक्षणलक्षणा॥ १३१॥
ते निरीक्ष्य निजावस्थां ह्रीणे निर्ययतुस्ततः।
तयोर्वीक्षारसात् सख्यः सर्व्वा निश्चक्रमुः क्रमात्॥ १३२॥

अत्रैव पश्चान्तरमाह। वासस इति। वा अथवा समाद्य-ङ्गानां इयं दृश्यता प्रत्यक्षगोचरता वाससोऽम्बरत्वेनातिसूक्ष्मव-स्त्रविशेषत्वेनाथचाम्बरशब्दवाच्यत्वसादृश्यादाकाशत्वेनोपानमत् समागता जाता। निरावरणमम्बरे स्थितं वस्तु यथा प्रकटं दृश्यते तथैव वस्त्रावृतमपि च दृश्यते तर्हि तत्राम्बरत्वमेव हेतु-रित्यर्थः। किम्भूता। चारवः स्थूलतरनिर्म्मलमनोहरा मणयः मौक्तिकानि तेषां श्रेणयः पङ्क्तय एवताराणि नक्षत्राणि तेषां वीक्षणमेव लक्षणं स्वरूपं चिह्नं वा यस्याः सा। अम्बरे हि नक्षत्रदर्शनं भवति तदेव च तस्य लक्षणं तद्वदत्रापि वस्त्रावृ-तत्वेऽपि जलसेकाद्धारमुक्ताफलानि स्फुटानि दृश्यन्ते तस्माद-म्बरत्वमेव हेतुर्युक्त इत्यर्थः। तारशब्दस्य नक्षत्रवाचित्वं बहुधा दर्शितं॥ १३१॥

ते इति। ते सख्यौ नितरां जलसेकाद्दोषाङ्गदर्शनरूपां निजावस्थां निरीक्ष्य ह्रीणे लज्जिते सत्यौ ततस्तद्राजगृहात् निर्ययतुः, वहिर्निर्जग्मतुः। अन्या अपि सर्व्वाः सख्यः तयोर्जला-र्द्रीकृतवस्त्रयोः सख्योर्वीक्षारसात् दर्शनकौतुकातिशयात् तयोः पश्चात् क्रमान्निश्चक्रमुः॥ १३२॥

ता वहिर्भूय वैदर्भीमूचुर्नीतावधीतिनि।
उपेक्ष्ये ते पुनः सख्यौ मर्मज्ञे नाधुनाप्यम् ॥ १३३ ॥
उच्चैरूचेऽथ ता राजा सखी यमिदमाह वः।
श्रुतं मर्म ममैताभ्यां दृष्टं मर्म मया तयोः ॥ १३४ ॥

ता इति। ताः सख्यो वहिर्भूय गृहाद्दहिःस्थित्वा वैदर्भीमूचुः हे भीतौ नीतिशास्त्रे अधीतिनि सुतरां कृताभ्यासे भैमि ते त्वया मर्मज्ञे त्वद्रहस्यवेदिन्यावम् सख्यौ अधुनाऽपि पूर्व्वं यत्कृतं तत् कृतमेवेतःपरमपि यावद् दूरं न गमिष्यतस्तावत् पुनर्नोपेक्ष्ये "विरोधयेन्न सर्व्वज्ञं नोपेक्षेत विरोधिनम्। प्रसादयेदशक्यं तु" इत्याद्युशनः स्मरणात् मर्मज्ञयोरेतयोस्त्वया नीतिशास्त्रप्रवीण-योपेक्षा नैव कार्य्या किन्त्वेते पुनः प्रसादनीये आकारणीये वेत्यर्थः। मर्मज्ञो ह्युपेक्षितो विकरोतीति नीतिज्ञत्वं तस्मा देते आकारणीये प्रसादनीये वेत्यर्थः ॥ १३३ ॥

उच्चैरिति। अथ राजा ताः सखीरुच्चैर्दूरादाकर्णन योग्यं तारस्वरं वक्ष्यमाणप्रकारेणोचे। हे सख्यः वो युष्माकमियं सखी युष्मानिदं वक्ष्यमाणमाह, एताभ्यां मम मर्म रहस्यं श्रुतमित्येता-वन् मया तु पुनरनयोः सख्योर्मर्म गुह्यमङ्गं दृष्टं श्रुताद्दृष्टं बलव-दिति न्यायादेताभ्यामहमेव बलवतीति न काऽपि मे भीति-रिति वक्ष्यमाणञ्च भैमीवचनानुवादरूपेण नलोऽवोचदित्यर्थः। राज्ञेति पाठे ताः प्रति राज्ञा, ऊचे इत्यर्थः ॥ १३४ ॥

मद्विरोधितयोर्वाचि न श्रद्धातव्यमेतयोः।
अभ्यषिञ्चदिमे मायामिथ्यासिंहासने विधिः॥ १३५॥
धौतेऽपि कीर्त्तिधाराभिस्त्वरिते चारुणि द्विषः।
मृषामषीलवैर्लक्ष्म लेखितुं के न शिल्पिनः॥ १३६॥

मदिति। हे सख्यः वह्निर्निष्कामनाद्यनुमितिद्वारा मया विरोधितयोः कृतवैरयोरेतयोः सख्योर्वाचि न श्रद्धातव्यं सत्यत्वबुद्धिर्न कार्य्या, विरोधिनो हि प्रायेणासत्यमेव वदन्तीत्यर्थः। किञ्च विधिर्ब्रह्मा इमे सख्यौ मायानां कपटानां मिथ्याऽसत्यानाञ्च सिंहासने कपटासत्यसर्व्वाधिपत्ये अभ्यषिञ्चत्। योऽनयोर्जलसेको दृश्यते स ब्रह्मकृतो मायामिथ्यासिंहासनाभिषेक एवेति भैमी मन्यत इत्यर्थः। तस्माद्भवतीभिरेतयोर्वचसि न विश्वसनीयमिति भावः॥ १३५॥

शत्रुवचसि न विश्वसनीयमित्येतदेवार्थान्तरन्यासेन समर्थ्यते। धौतेऽपीति। कीर्त्तिधाराभिः कीर्त्तिपूरैः धौते अत एव चारुणि मनोज्ञे धवले एवंविधेऽपि द्विषच्चरिते मृषामष्याः लवैः लेशैः कृत्वा लक्ष्म कलङ्कं लिखितुं के जनाः शिल्पिनश्चतुरा न भवन्ति अपि तु सर्व्वेऽप्यलीकदोषारोपं कुर्व्वन्त्येवेति मद्विरोधितयोर्वचसि न विश्वसनीयमित्यर्थः। अन्येऽपि शिल्पिनो जलधाराक्षालिते स्मरणीये कुड्यादौ मस्यादिवर्णकैश्चित्रं लिखन्ति केचिद्द्विषः शिल्पिनो वा॥ १३६॥

ते सख्यावाचचक्षाते न किञ्चिद्ब्रूमहे बहु ।
वक्ष्यावस्तत्परं यस्मै सर्व्वा निर्वासिता वयं ॥ १३७ ॥
स्थापत्यैर्न स्म वित्तस्ते वर्षीयस्त्वचलत्करैः ।
कृतामपि तथावाचि करकम्पेन वारणां ॥ १३८ ॥
अपयातमितो धृष्टे धिग्वामश्लीलशीलतां ।
इत्युक्ते चोक्तवन्तश्च व्यतिद्राते स्म ते भिया ॥ १३९ ॥

ते इति । ततस्ते सख्यौ इति आचचक्षाते ऊचतुः । इति किं । आवां अन्यत्किञ्चित् बह्वधिकं न ब्रूमहे किन्तु यस्मै प्रयोजनाय सर्व्वा वयं युवाभ्यां गृहाद्वहिर्निर्वासिता निष्कासितास्तदेव परं केवलमावां वक्ष्यावो वदिष्यावः सर्व्वेषामग्रे सुरतार्थं वयं निष्कासिता इति कथयिष्यावो न चान्यत्किञ्चिदिति ॥ १३७ ॥

स्थापत्यैरिति । ते सख्यौ तथावाचि सुरतार्थं वयं निष्कासिता इति वचने विषये स्थापत्यैः सौविदल्लैः करकम्पेन कृतामपि वारणां निषेधं न वित्तःस्म जानीतः स्म यस्माद्वर्षीयस्त्वेन वार्द्धकेन चलन्तः कराः येषां तैः वार्द्धकातिशयजनितदोषवशेन स्वाभाविककरकम्पनभ्रान्त्या कृतमपि निषेधं न वित्तः स्मेत्यर्थः । सौविदल्लाः कञ्चुकिनः स्थापत्याः सौविदाश्चते, इत्यमरः । अतिशयेन वृद्धो वर्षीयान्, इयसुनि प्रियस्थिरेति (पा० ६।४।१५७) वर्षादेशः ॥ १३८ ॥

अपेति । हे धृष्टे अतिनिर्लज्जे सख्यौ युवामितो गृहात्

आह स्म तद्गिरा ह्रीणां प्रियां नतमुखीं नलः।
ईदृग्भण्डसखी काऽपि निस्त्रपा न मनागपि ॥ १४० ॥

अपयातं निर्गच्छतं यस्माद्वा युवयोरश्लीलशीलतां ग्राम्यभाषणसखीभावत्वं धिक् धिक् इति तैः स्थापत्यैरुक्ते गदिते सति ते सख्यौ तेभ्यो मारणभिया व्यतिद्राते स्म पलायाञ्चक्रतुः, एवं उक्तवन्तस्ते कञ्चुकिनश्च पलायाञ्चक्रुः। तयोः पलायमानयोः पश्चाल्लगन्ति स्म तयोर्भागेच्छुतां ज्ञात्वा सखीतर्ज्जनव्याजेन तेऽपि निर्गता इति भावः। ते इति व्यतिद्राते इति द्विवचनबहुवचनश्लेषः। इत्युक्ते सतीति वा। व्यतिद्राते इति वचनत्रयेऽपि तुल्यं रूपं। द्रातेः परस्मैपदत्वादात्मनेपदं चिन्त्यं। व्यतिद्राति स्मेति पठनीयं इत्युक्ते ते उक्तवन्तश्च सर्व्वे व्यतिद्राति स्मेत्यर्थः ॥ १३९ ॥

आहेति। नलरतार्थं सर्व्वे निर्व्वासिता इति तयोः सख्योर्गिरा ह्रीणां लज्जितां अत एव नतमुखीं प्रियां इति आह स्म। इति किं। ईदृश्यश्लीलभाषणशीला भण्डा निर्लज्जाः सख्यो यस्यास्तादृशी काऽपि मनागपि निस्त्रपा निर्लज्जा न। अपि तु सखीयुक्तत्वमेव समानशीलव्यसनेषु सख्यमिति न्यायादनुरूपयोर्हि सख्यं युक्तमिति त्वमपि लज्जां मुञ्चेति सकामस्य नलस्य वचः। भण्डसखी कापि ईदृक् कलामदृशी न दृष्टा ॥ १४० ॥

अहो नापत्रपाकन्ते जातरूपमिदं मुखं।
नातितापार्ज्जनेऽपि स्यादितो दुर्वर्णनिर्गमः ॥ १४१ ॥

अहो इति। अहो भैमि ते इदं मुखं जातं रूपं सौन्दर्यं यस्यैवंविधं सदपत्रपाकं गतलज्जं न भवति किन्तु सलज्जमेव, स्त्रीणां तु लज्जैव मद्भूषणमित्यर्थः। नापत्रपाकमिति समा नैकपदं वा। अथ च पत्राणां नागवल्लीदलानां पाकः फल पूगादियोगसञ्जातो रागः स नास्ति यस्य तदपत्रपाकं न भवति ताम्बूलरागसहितमिति यावत्, अत एव रां जातलावण्यं। अथ च सुन्दरमपि नापत्रपाकं सलज्जं अहो चित्रम्, असुन्दरं हि सलज्जं भवति स्वं न दर्शयति। इदन्तु सुन्दरमपि स्वं न दर्शयतीत्याश्चर्यं। अतिनम्रत्वान्मुखं किञ्चिदपि न दृश्यत इत्यर्थः। अथ च त्रपैवाकं दुःखमपगतंत्रपाकं यस्मादपत्रपाकं तादृङ्न भवति लज्जारूपदुःखसहितमत एव न जातं रूपं यस्य सुरतार्थं सर्व्वनिर्व्वासने ताभ्यामुक्ते लज्जातिशयान्मुखं नितरां मलिनं जातं चित्रमेतदित्यर्थः। अथ च पत्रयोर्म्मृत्पुटयोर्मध्ये यः पाकः स नास्ति यस्य तादृशमपि न भवति यत्तदपत्रपाकं कृतपुटपाकमिति यावत्, एवम्भूतं सुवर्णमेव तव मुखमहो चित्रं मुखस्य सुवर्णत्वमाश्चर्य्यकारीत्यर्थः, यतः सलज्जमत एव नितरां तापस्य क्रोधाग्नेरर्ज्जने सम्पादने सत्यपि सम्यगसभ्यभाषणादिना सखीकोपे समुत्पादिते सत्यपि, इतो मुखात् सकाशात् दुर्व्वर्णानां परुषाक्षराणां निर्गमो न स्यात्

तामथैष हृदि न्यस्य ददौ तल्पतले तनुं ।
निमिष्य च तदीयाङ्गसौकुमार्य्यमसिस्वदत् ॥ १४२ ॥
न्यस्य तस्याः कुचद्वन्द्वे मध्येनीवि निवेश्य च ।
स पाणेः सफलं चक्रे तत्करग्रहणश्रमं ॥ १४३ ॥

कोपे सत्यपि लज्जावशात् सखीः प्रत्युत्तरमपि परुषं न भाषसे एतदपि चित्रमित्यर्थः। अथच हृतपुटपाकसुवर्णस्वरूपं यतो ऽतएव पुटरहितं नितरामग्निदाहे सत्यप्यस्मात् सुवर्णाद्दुर्वर्णस्य रजतस्य निर्गमो न स्यात् पुटपाकादेव मिश्रितरजतनिर्गमे सति निर्दुष्टस्य शुद्धरजतस्य पश्चात् सुतरामग्निदाहे हृतेऽपि दुष्टाशयस्य पूर्व्वमेव गतत्वात्तस्माद्रजतनिर्गमो न भवत्येव। तथा सति तापार्जनेऽप्यस्मान्मुखादपि दुर्वर्णनिर्गमो न स्यात् सपत्रपाकजातरूपं ते मुखमित्यर्थः। अथच वर्णसाम्येन सुवर्णसदृशं ते मुखं यद्यपि तथापि नितरामग्निदाहे तस्माद्दुर्वर्णं निर्गच्छत्येव। अतितापार्जनेऽपि ते मुखाद् दुर्वर्णनिर्गमो नास्त्येवेत्याश्चर्य्यमित्यर्थः। अत्युत्तमशोऽशवर्णसुवर्णवर्णापरुषभाषिणी चासीति भावः। अपत्रपाकं पचे न कपीति (पा० ७।४।१४) ह्रस्वनिषेधः॥ १४१॥

तामिति। अथैष नलस्तां हृदि न्यस्य तल्पतले शय्यायां तनुं शरीरं ददौ पृष्ठेन शय्यां पस्पर्शेत्यर्थः। तदालिङ्गनसुखवशादेव निमिष्य नेत्रे निमील्य तदीयाङ्गसौकुमार्य्यमसिस्वदत्, अनुबभूव च॥ १४२॥

न्यस्येति। स तस्याः कुचद्वन्द्वे स्वकरं न्यस्य निचिप्य तथा

स्थापितामुपरि स्वस्य तां मुदा मुमुदे वहन्।
तदुद्वहनकर्तृत्वमाचष्ट स्पष्टमात्मनः ॥ १४४ ॥
स्विद्यत्कराङ्गुलीलुप्तकस्तूरीलेपमुद्रया।
फूत्कार्य्यपीडनौ चक्रे स सखीषु प्रियास्तनौ ॥ १४५ ॥

नीवीगां मुग्धे च नाभिमूले निवेश्य स्थापयित्वा पाणेः स्वकरस्य तस्याः करग्रहणे पाणिविवाहने विषये जातश्रमं सफलं चक्रे। स्तनजघनादिस्पर्शसुखानुभवादित्यर्थः। एतदेव विवाहफलं यत् स्तनादिस्पर्शसुखानुभवनं। अथच तत्प्रसिद्धं करस्य राजोपदायाः ग्रहणं तज्जनितस्वपाणेः श्रमं सफलं चक्रे स्तनादिमर्दनमेव राजदण्ड इत्यर्थः। अथच स्वपाणिभैम्याः करे यद्ग्रहणं निरोधनं तज्जनितं तस्याः श्रमं सफलं चक्रे। कुचनीवीस्पर्शमात्रेण निवृत्तो न लज्जान्तरे करं निवेशितवान् न च सम्बुभुजे इत्यर्थः। एतच्चो-त्तरचसम्भोगनिषेधाल्लभ्यते ॥ १४३ ॥

स्थापितामिति। स मुदा कामाभिलाषेण स्वस्योपरि आ-पितां वक्षसि निवेशितां तां वहन् मुमुदे सुखातिशयाज्जहर्ष। स्पष्टमुत्प्रेक्षते। आत्मनस्तस्या भैम्या उद्वहनं विवाहं प्रति अथचो-र्ध्वधारणं प्रति कर्तृत्वमाचष्ट चेति शब्दच्छलेनोत्प्रेक्षा ॥ १४४ ॥

स्विद्यदिति। स प्रियास्तनौ स्विद्यन्तीभिः सञ्जातसात्त्विकस्वे-दाभिः कराङ्गुलीभिः लुप्तया कस्तूरीलेपसम्बन्धिन्या मुद्रया पत्त्रभङ्गरचनाविशेषेण कृत्वा सखीषु विषये फूत्कार्य्यं महाकल-कलकथनीयं पीडनं मर्दनं ययोर्याभ्यां वा तौ चक्रे। भैमी-

तत्कुचे नखमारोप्य चमत्कुर्व्वंस्तयेरितः ।
सोऽवादीत्तां हृदिस्थन्ते किं मामभिनदेष न ॥ १४६ ॥
अहो अनौचितीयन्ते हृदि शुद्धेऽप्यशुद्धवत् ।
अङ्कः खलैरिवाकल्पि नखैस्तीक्ष्णमुखैर्मम ॥ १४७ ॥

कुचयुगले स्वरचितां कस्तूरीपत्रवल्लीरचनां प्रोञ्छितां दृष्ट्वा प्रियेण गाढमेतौ पीडिताविित्यन्योन्यमुच्चैः कलकलं सख्यो यथा फूत्कारं कुर्व्वन्ति, वृत्तं कुचमर्दनं स्वयमेव यथा जानन्ति तथा तत्कुचौ ममर्देति भावः । लोकेऽपि स्वक्ततां मुद्रां लुप्तां दृष्ट्वा अन्यथाभावशङ्कया उच्चैः फुत्कारं कुर्व्वन्तीति ॥ १४५ ॥

तदिति । तस्याः कुचे नखमारोप्य निखाय स्वयमेव चमत्कुर्व्वन्नङ्गसङ्कोचाभिनयपूर्व्वं शङ्कमानो नखक्षतपीडाविशेषादेव तया किञ्चित्कोपेनेरितः, हे भैमि एष नखस्ते हृदिस्थं मां किं नाभिनदपि तु मामपि व्यदारयदेव । अन्यथा कथं त्वदीये हृदि नखे क्षिप्ते ममाङ्गचमत्कार इति ॥ १४६ ॥

अहो इति । हे भैमि तीक्ष्णमुखैर्नापितकल्पितशितायैर्मम नखैः शुद्धे निष्कपटेऽपि हृदि अशुद्धं रुधिरं वर्त्तते कल्पते यत्र तद्यथा तथाऽङ्को मयूरपदादिचिह्नमकल्पि आकारीति यस्मा इयं महती अनौचिती अहो चित्रं । कैरिव । दोषारोपरूपपरुषभाषणवशात् तीक्ष्णमुखैः दुःसहवदनैः खलैरिव । यथा खलैः शुद्धेऽपि पुरुषे अशुद्धवत् सदोषे पुरुष इव अङ्को दोषारोपः कल्प्यते सा यथाऽनौचिती, नखक्षतेन दुष्टायाः स्वेनैव

यच्चुम्बति नितम्बोरू यदालिङ्गति च स्तनौ ।
भुङ्क्ते गुणमयं तत्ते वासः शुभदशोचितं ॥ १४८ ॥
लीनचीनांशुकं स्वेदि दरालोक्यं विलोकयन् ।
तन्नितम्बं स निश्वस्य निनिन्द दिनदीर्घतां ॥ १४९ ॥

मखानामनौचित्यप्रकटनव्याजेन प्रमादनामकरोदित्यर्थः । अशुद्धवदिति पक्षे सप्तमीसामर्थ्याद्वतिः ॥ १४७ ॥

यदिति । हे भैमि गुणमयं सूक्ष्मं अत्युत्तरतन्तुकं ते वासः नितम्बोरू जघनमूरू च यद्यस्माच्चुम्बति स्पृशति तथा यस्माच्च ते स्तनौ आलिङ्गति तत्तस्मात् कारणाच्छुभानां रमणीयानां दशानां प्रान्ततन्तूनां यथायोग्यमुचितं तद्भुङ्क्ते तादृशं भोगमनुभवतीत्यर्थः । यत्तदौ वासोविशेषणे वा । अथच यो गुणमयः शौर्य्यौदार्य्यादिगुणपरिपूर्णो निर्दोषश्च शुभाया दशायाः पूर्व्वाचरितपुण्यपरिपाकोपनतशुभग्रहयोगानुकूलसमयविशेषस्योचितं भोगं ल... स एव सुन्दरतररमणीयनितम्बोरुचुम्बनं तत्कुचालिङ्गनञ्च भजते नान्य इति त्वन्नितम्बादिचुम्बनकारिणो मत्तोऽपि वसनमेव धन्यमिति भावः । नितम्बोरू प्राण्यङ्गत्वादेकवद्भाव इति ॥ १४८ ॥

लीनेति । सात्त्विकस्वेदवशादतिसूक्ष्मत्वात् समच्छवीभूय लीनं संलग्नं चीनाख्यं अंशुकं यत्र, तथा स्वेदि सात्त्विकस्वेदयुक्तं अत एव च दरालोक्यं ईदृशं नितम्बं व्यलोकयन् स कामान्मत्तो भूत्वा निश्वस्य दिने सुरतनिषेधान्निराशतया निश्वासमोचनेन दुःखमभिव्यज्य दिनस्य दीर्घतां कथं वा दिनं शीघ्रं गमि-

देशमेव ददंशासौ प्रियादन्तच्छदान्तिकं।
चकाराधरपानस्य तत्रैवालीकचापलं ॥ १५० ॥
न क्षमे चपलापाङ्गि सोढुं स्मरशरव्यथां।
तत्प्रसीद प्रसीदेति स तां प्रीतामकोपयत् ॥ १५१ ॥

ष्यतीत्यादिना निनिन्द। सुरतार्थं दिनावसानमभिललाषेत्यर्थः। कामपरवशत्वात् सम्भोगेच्छुरभूत्, दिवा तन्निषेधाच्च सुरते सहसा न प्रवृत्त इति भावः॥ १४९ ॥

देशमिति। असौ प्रियादन्तच्छदोऽधरस्तस्यान्तिकं समीपवर्त्तिनं देशं कपोलचिबुकादिभागमेव पूर्व्वं दशनैर्ददंश, अनन्तरं तत्रैवाधरसमीपदेश एव अधरोपान्तस्थापितमुख एवाधरपानस्यालीकमेव चापलं पुनरोष्ठचालनं चुङ्कारादिलरां चकार। चापलस्यालीकत्वञ्च तादृगभिनयमात्रकरणात् तात्त्विकचापलकरणेऽपि अधरसम्बन्धाभावाज् ज्ञेयं। सम्बुभुत्सातिशयाद् यावता क्षणेनाधरं चुम्बितुं प्राप्यते तावन्तमपि विलम्बं सोढुमशक्तः सन्नयमधर एवेति भ्रान्त्या वाऽधरोपान्तदंशादि चकारेति भावः। अतिरिरंसोरियं जातिः॥ १५० ॥

नेति। स परिहासादिवशादालिङ्गनादिवशाच्च पूर्व्वं प्रीतां प्रसन्नामपि तां इत्युक्त्वाऽकोपयत्। इति किं। हे चपलापाङ्गि अहं स्मरशरव्यथां सोढुं न क्षमे शक्तोऽस्मि यतस्तस्मात् त्वं मम प्रसीद प्रसीद मह्यं सुरतं देहि देहीति दिने रन्तुमनुचितत्वात् कोपव्याजेनापि दिनं गमयितुं तामकोपयदित्यर्थः। प्रसादनमपि

नेत्रे निषधनाथस्य प्रियाया वदनाम्बुजं।
ततस्तनतटौ ताभ्यां जघनं घनमीयतुः॥ १५२॥
इत्यधीरतया तस्य हठवृत्तिविशङ्किनी।
झटित्युत्थाय सोत्कण्ठमसावन्वसरत्सखीः॥ १

कोपं विना न सम्भवतीति कोपसम्पादनं। शरव्यतामिति ाठः। चपलापाङ्गि अङ्गगात्रेति (पा० ४।१।५४ वा० १) ङीष ५१॥

नेत्रे इति। निषधनाथस्य नेत्रे पूर्व्वं प्रियाया ाम्बुजं ततोऽनन्तरं स्तनतटौ, अनन्तरञ्च ताभ्यां स्तनतटाभ्यां ाद् घनं पीवरं जघनं इयतुः प्रापयतुः सुरतौत्सुक्यात् स वद-नादिक्रमेणालोकयदिति भावः। अम्बुजतटजघनपदै दरा-लोकनार्हत्वं सूचितं। घनपदं सादरालोकनद्योतनार्थं क्रया-विशेषणत्वेन सर्व्वत्र वा योज्यं॥ १५२॥

इतीति। इत्येवं वदनादिविलोकनपूर्व्वं जघने चिरकाल सादरदृष्टिस्थापनद्वारा धीरतया रतौत्सुकतयाऽस्य हटवृत्तौ बलात् सुरतारम्भे विशङ्किनी विशेषतः शङ्कमाना सम्भाव-यन्ती असौ झटिति सद्याद्युत्थाय चिरनिर्गतसखीगवेषणाय सोत्कण्ठं यथा तथा कलाद्याः सखीरन्वसरत्। सख्यनुसरणो-त्कण्ठाव्याजेन प्रियसुरतारम्भं पर्य्यहार्षीदिति भावः। अति-तरां रसपरवशता दोषाय रसत्यागश्च नायकस्य नीरसतामे-वापादयतीति तदुभयपरिजिहीर्षया रसान्तरद्वारेण सम्भोग-शृङ्गारपरां काष्ठामापादयितुं श्रीहर्षेण भैमीनलयोर्भिन्नदे-शावस्थायित्वकथनोपक्रमः कृतः॥ १५३॥

न्यवारीव यथाशक्ति स्यन्दमन्दं वितन्वता ।
भैमीकुचनितम्बेन नलसम्भोगलोभिना ॥ १५४ ॥
अपि श्रोणिभरस्वैरां धर्त्तुं तामशकन्न सः ।
तदङ्गसङ्गजस्तम्भो गजस्तम्भोरुदोरपि ॥ १५५ ॥
आलिङ्ग्यालिङ्ग्य तन्वङ्गि मामित्यर्द्धगिरं प्रियं ।
स्मित्वा निवृत्य पश्यन्तो द्वारपारमगादसौ ॥ १५६ ॥

न्यवारीवेति । नलसम्भोगलोभिना भैमीकुचनितम्बेन मन्दं शनैः स्यन्दगमनं वितन्वता स्वीयपीवरतातिशयेन शीघ्रं गन्तुमददता सता भैमीशक्तिमनतिक्रम्य शीघ्रगमनप्रतिबन्धकत्वरूपनिजशक्त्यनुसारेणैतो रतिगृहाद्वहिस्त्वया न गन्तव्यमिति न्यवारीव न्यषेधीव । निर्गताऽपि स्तननितम्बभराक्रान्तत्वाच्छीघ्रं गन्तुं न शशाकेति भावः । कुचनितम्बेन प्राण्यङ्गत्वादेकवद्भावः । लोभिना अत इनी (पा० ५।२।११५) इनिः ॥ १५४ ॥

अपीति । स श्रोणिभरेण नितम्बभाराक्रान्तत्वेन स्वैरां मन्दगामिनीमपि समीपे गच्छन्तीमपि तां स्वयं गजबन्धनस्तम्भवदुरू दीर्घौ च पीवरौ दोषौ बाहू यस्यैवम्भूतः सन् अङ्कपाल्यां धर्त्तुं नाशकत्, यतस्तस्या अङ्गसङ्गाज्जघनाङ्गस्पर्शाज्जातो निष्क्रियत्वरूपसात्त्विकभावः स्तम्भो यस्य सः सात्त्विकस्तम्भवशात् तां धर्त्तुं नाशकदित्यर्थः ॥ १५५ ॥

आलिङ्ग्येति । असौ भैमी इति पूर्व्वोक्तप्रकारेणार्द्धगिरं वाक्यशेषं वक्तुमसमर्थं प्रियं नलं स्मित्वाऽधीरत्वेन हसित्वा नि-

प्रियस्याप्रियमारभ्य तदन्तर्दूनयाऽनया ।
शेके शालीनयाऽऽलिभ्यो न गन्तुं न निवर्त्तितुम् ॥ १५७ ॥

वृत्य परावृत्य वलितग्रीवं पश्यन्ती सती द्वारस्य पारं देहली-बहिःप्रदेशमगात्। इति किं। हे तन्वङ्गि प्रियं आलिङ्गालि-ङ्गापरिपूर्णवाग् वाणी यस्य तमित्यर्थः। कामोन्मादवाङ्कुल्येन गद्गदभिन्नस्वरतया आलिङ्गालिङ्ग मां सुखय पश्चाद्गच्छेति वाक्यशेषः। स्मितादयः सम्भोगशृङ्गाररसाङ्गीभूततयाऽलङ्कारः ॥ १५६ ॥

प्रियस्येति। प्रियस्य तत्सम्भोगप्रातिकूल्यलक्षणमप्रियमारभ्य कृत्वा तद्वशादेवान्तर्हृदये दूनया उपतप्तया प्राप्तपश्चात्तापयेति यावत्। द्वारबहिर्देशं प्राप्तयाप्यनया प्रियस्यानीप्सिताचरणा-नन्तरं तस्य प्रसादनमकृत्वैव सखीं प्रतिगन्तुमयुक्तमिति विचा-र्यालीभ्यः सखीः प्रति गन्तुं न शेके समर्थाऽभूत् तत्रैव तस्था-वित्यर्थः। सखीभ्यः सकाशान्निवर्त्तितुं नलं प्रति परावर्त्तितु-मपि न शेके यतः शालीनयाऽधृष्टयाऽतिसलज्जया, अस्मदुद्देशे नागताऽपि सुरतार्थं प्रियं प्रति पुनर्गतेति सख्यो वदिष्यन्ति तथा च लज्जा स्यादिति भिया पुनर्न निवृत्तेत्यर्थः। नलविष-यैव वा लज्जा। क्षणमात्रं मार्गमध्ये चिन्तावशात्तूष्णीं स्थितेति भावः। आलीभ्यः गत्यर्थकर्मणीति (पा०२।३।१२) चतुर्थी। निवृत्तिं प्रत्यपादानत्वात् पञ्चमी वा ॥ १५७ ॥

अकथयदथ वन्दिसुन्दरी द्वाः-
सविधमुपेत्य नलाय मध्यमह्नः।
जय नृप दिनयौवनोष्णतप्ताऽऽ-
प्लवनजलानि पिपासति क्षितिस्ते ॥ १५८ ॥
उपहृतमधिगङ्गमम्बु कम्बु-
च्छवि तव वाञ्छति केशभङ्गिसङ्गात्।

अकथयदिति। अथ परिहासपूर्व्वं भैमीवहिर्निर्गमनानन्तरं पुरुषस्यान्तःप्रवेष्टुमशक्यत्वादवसरज्ञापकवचनस्यावश्यं श्रावणीयत्वाद्वन्दिसुन्दरी विदग्धमागधवनिता द्वाःसविधं द्वारदेशसमीपमुपेत्य इति अह्नो मध्यं मध्याह्नमकथयत् व्यज्ञापयदित्यर्थः। इति किं। हे नृप जय सर्व्वोत्कर्षेण वर्त्तस्व दिनस्य यौवनं मध्याह्नस्तत्सम्बन्धिनोष्णेन तप्ता, आतपसन्तापेन कृतसन्तापवती क्षितिः ते आप्लवनजलानि माध्याह्निकस्नानजलानि पिपासति पातुमिच्छति। माध्याह्निकस्नानावसरो वर्त्तत इत्यसूचयदित्यर्थः। मध्याह्नतप्ता हि जलं पातुमिच्छति। अकथयदिति लङ्। अचकथदिति पाठे ण्यन्ताच्चङ्। नलाय क्रियया यमभिप्रैतीति (पा०१।४।३२।वा०१) सम्प्रदानत्वं ॥ १५८ ॥

उपेति। अधिगङ्गं गङ्गामधिकृत्य वर्त्तमानमुपहृतं भागीरथ्याः सकाशादानीतं कम्बुच्छवि शङ्खधवलं अम्बु तव कृष्णतरकुटिलकेशपाशस्य भङ्गिभिः कुटिलभावैः सह सङ्गात् सम्बन्धात्, अनन्तरं सम्बन्धे जाते तरङ्गैः कृत्वाऽसमाऽतुल्यरूपा विषमा वा

अनुभवितुमनन्तरं तरङ्गा-
समशमनस्वसृमिश्रभावशोभाम् ॥ १५९ ॥
तपति जगत एव मूर्ध्नि भूत्वा
रविरधुना त्वमिवाद्भुतप्रतापः।
पुरमथनमुपास्य पश्य पुण्यै-
रधरितमेनमनन्तरं त्वदीयैः ॥ १६० ॥

अतिकृष्णा वा शमनस्वसा यमभगिनी यमुना तया सह मिश्र-भावेन मिलितत्वेन सङ्गमेन या शोभा तां गङ्गायमुनासम्भूत-प्रयागकामनीकमनुभवितुं प्राप्तुं वाञ्छति। शुभ्रतरस्य जलस्य कृष्णतरकेशपाशसङ्गे सति प्रयागजलशोभां भविष्यतीति गङ्गा-जलेच्छां पूरय माध्याह्निकस्नानं कुर्व्विति भावः। अधिगङ्गं विभक्त्यर्थेऽव्ययीभावः ॥ १५९ ॥

तपतीति। हे राजन्, अद्भुतोऽसह्यः प्रकृष्टस्तापः करौष्ण्यं यस्य स रविरधुना मध्याह्नसमये जगत एव विश्वस्यापि मूर्ध्नि [illegible] तपति। क इव। त्वमिव। यथा अद्भुतः प्रतापः क्षात्रतेजो यस्य स त्वं विश्वस्य मूर्ध्नि चरणमारोप्य तपसि राजलक्ष्म्या दीप्यसे तथे-त्यर्थः। मध्याह्नसमयो निश्चितो वर्त्तत इत्यर्थः। अत एव पुर-मथनं हरमुपास्याराध्योपार्ज्जितैरिति शेषः। एवम्भूतैस्त्वदीयैः पुण्यैर्देवपूजानन्तरं त्वमेनं सूर्य्यमधरितं मस्तकोपरिभागाच्च्या-वितं तिर्य्यग्गगनभागे वर्त्तमानमेनं सूर्य्यं पश्य। देवपूजानन्तरं हि सूर्य्यो नमस्क्रियत इत्याचारात्त्वमप्यपराह्णे सूर्य्यं नमस्कुर्व्विति

आनन्दं हठमाहरन्निव हरध्यानार्चनादिक्षण-
स्यासत्तावपि भूपतिः प्रियतमाविच्छेदखेदालसः।
पक्षद्वारदिशं प्रति प्रतिमुहुर्द्रागनिर्गतप्रेयसी-
प्रत्यावृत्तिधिया दिशन् दृशमसौ निर्गन्तुमुत्तस्थिवान्॥१६१॥

भावः। अधुना तु त्वत्पूजाजनितपुण्यैस्त्वया जितोऽधोगतो भविष्यतीत्यर्थः॥१६०॥

आनन्दमिति। असौ भूपतिः स्नानाद्यर्थं वहिर्निर्गन्तुं शय्यायाः सकाशादुत्तस्थिवान्। किम्भूतः। द्राक् झटिति वहिर्निर्गतायाः प्रेयस्या भैम्याः प्रत्यासत्तिधिया पराहत्यागमनस्य बुध्या पुनरप्यागमिष्यति किमिति सम्भावनया तद्विलोकनार्थं पक्षद्वारदेशं पार्श्वद्वारप्रदेशं प्रति लक्षीकृत्य प्रतिमुहुर्मुहुर्मुहुर्दृशं दिशन् ददानः, तथा प्रियतमाया विच्छेदो वियोगस्तज्जन्येन खेदेन दुःखेनालसोऽपि तथा हरध्यानार्चनादेः क्षणस्य मध्याह्नस्यासत्तौ, अतिनैकट्ये सत्यामपि हठं यथा स्यादेवं बलात्कारेण गतमप्यानन्दमाहरन्निव परावर्तयन्निव, अर्चनादिरेव क्षण उत्सवस्तदासत्त्याऽपीति वा विरहखेदायासे सत्यपि नित्याह्निककाललोपभिया शिवभक्त्या च सानन्दबलाद्बहिर्निर्गत इत्यर्थः। श्लोकचतुष्टयेनोत्तरसर्गसङ्गतिः सूचिता इति ज्ञेयं। प्रतिमुहुरित्यर्थे प्रतेर्मुहुः शब्देन सह सुपेति (पा०२।१।४) समासः मुहुर्मुहुरित्यर्थः॥१६१॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यं ।
अन्याक्षुण्णरसप्रमेयभणितौ विंशस्तदीये महा-
काव्येऽयं व्यगलन्नलस्य चरिते सर्गो निसर्गोज्ज्वलः॥१६२॥

समाप्तो विंशः सर्गः ॥

श्रीहर्षमिति । पूर्वार्द्धः पूर्ववत् ॥ अन्यैः श्रीहर्षव्यतिरिक्तैः कविभिरक्षुण्णा रसस्य शृङ्गारादेः प्रमेयस्य समासोक्त्युत्प्रेक्षादेश्च भणितिर्गुम्फना यत्र तादृशेऽपूर्व्वरसादिमति महाकाव्ये विंशः सर्गः विंशतेः पूरणः व्यगलत् समाप्तिमितः । भणितौ । भावित-पुंस्कं विंशः तस्य पूरणे डटिति (पा०५।२।४८) डट् ॥१६२॥

इति श्रीमन्नरसिंहपण्डितात्मजनारायणकृते नैषधीयप्रकाशे विंशः सर्गः ॥

# उत्तरनैषधचरित।

## एकविंशः सर्गः।

तं विदर्भरमणीमणिसौधा-
दुज्जिहानमनुदर्शितसेवैः।
अर्पणान्निजकरस्य नरेन्द्रै-
रात्मनः करदता पुनरूचे॥ १॥

इदानीं पूर्व्वसर्गान्तप्रस्तावितमध्याह्नस्नानदेवपूजादिवर्णनार्थमेकविंशं सर्गमारभते। तमिति। विदर्भरमण्या भैम्या मणिसौधान्मणिबद्धसुधाधवलितप्रासादात् सकाशादुज्जिहानं वहिर्निर्गच्छन्तं नलमनुलचीकृत्य दर्शिता अन्तःपुरद्वारि प्रणामादिना ज्ञापिता सेवा यैः, अवसरपर्य्यन्तं वहिस्थितैरन्तरङ्गैर्नरेन्द्रैर्नलहस्तावलम्बनार्थं निजकरस्यार्पणाद्धेतोरात्मनः स्वस्य करदता पुनरूचे पुनरुक्तीचक्रे इत्यर्थः। पूर्व्वं सर्व्वेऽपि राजानः वलिरूपकरसमर्पणात् करदा अभूवन्, इदानीन्तु सोपानमार्गेणावरोहतो नलस्य हस्तावलम्बनार्थं निजपाणिसमर्पणात् करदा जाता इति छलेनोत्प्रेक्षा। एतेन नलस्य चक्रवर्त्तित्वं द्योत्यते॥ १॥

तस्य चीनसिचयैरपि बद्धा
पद्धतिः पदयुगात् कठिनेति ।
तां व्यधत शिरसा खलु माल्यै
राजराजिरभितः प्रणमन्ती ॥ २ ॥
द्रागुपाक्रियत तस्य नृपैस्त-
द्दृष्टिदानबहुमानकृतार्थैः ।

तस्येति। खल्वितीव हेतौ: अभितः पार्श्वद्वयेऽपि प्रणमन्ती राजराजिर्नृपपरम्परा तां सिचयैर्बद्धामपि पद्धतिं शिरसा माल्यैः शिरोधृताभिः पुष्पमालाभिः व्यधत आच्छादयति स्म। इति किं। चीनसिचयैः देशविशेषोद्भवैः सूक्ष्ममृदुभिर्वस्त्रैर्बद्धा सज्जिता आच्छादितापि सती पद्धतिः तस्य नलस्य पदयुगात् सकाशात् कठिनेति, मृदुतरयोर्हि चरणयोर्मृदुतरपुष्पबद्धायां भुवि गमनं युक्तं इति शिरोधृतपुष्पस्रंसनं यावद्भवति तावत्पर्य्यन्तं सध्येमार्गं तस्य सादरं दण्डवत् प्रणामं सर्व्वेऽपि चक्रुरित्यर्थः ॥ २ ॥

द्रागिति। अथ प्रणामानन्तरं तेन कृतं दृष्टिदानं नेत्रनिरीक्षणं तल्लक्षणेन बहुमानेन कृतार्थैः सफलश्रमैर्नृपैः देशे भवं देश्यं स्वस्वदेश्यं स्वीयस्वीयदेशभवं तत्रान्यत्र वाऽपूर्व्वं दुर्लभं अत्युत्तमं, तथा यत्नेन बुद्धिपूर्व्वं शिक्षावशेन कल्पितैरारोपितैर्वृत्तलोज्ज्वलत्वादिरमणीयकलादिगुणविशेषैरधिकं अतितरां चित्रमाश्चर्य्यरूपं सहजैराहितैश्च गुणैरतितरामाश्चर्य्यकारि-

स्वस्वदेशजमथ रत्नमपूर्व्वं
यत्नकल्पितगुणाधिकचित्रं ॥ ३ ॥
अङ्गुलीचलनलोचनभङ्गि-
भ्रूतरङ्गविनिवेदितदानं।
रत्नमन्यनृपढौकितमन्ये
तत्प्रसादमलभन्त नृपास्तत् ॥ ४ ॥

मणिमुक्ताकरितुरगादिरत्नं वस्तु तस्य द्राक् शीघ्रं प्रणामानन्तरमव्यहितमेवोपाह्रियत उपढौकितं। तत्र उपढौकिते रत्नजाते दृष्टिदानमेव यजमान इति वा। केनेदमिदमानीतमित्यादरप्रश्नपूर्वं तेषु दृष्टिदानमेवेति वा यत्नेति पाठे यत् कल्पितगुणाधिकचित्रं न भवति किन्तु स्वाभाविकगुणाधिकचित्रमेतद्रत्नमिति सम्बन्धः। देश्यं भवार्थे दिगादित्वाद्यत् दिश्यमिति पाठेऽपि, रत्नजातावेकवचनं, एवमुत्तरश्लोकेऽपि ॥ ३ ॥

अङ्गुलीति। अन्ये चिरकालमेविनस्तदानीमेवागता वा नृपा अन्यनृपढौकितं उपढौकितं तत्पूर्व्वोक्तं मणिमुक्तादिरत्नजातमेव तस्य नलस्य प्रसादं पारितोषिकं दानं अलभन्त। किम्भूतं। अङ्गुलीचलनेन लोचनभङ्ग्या प्रसादसूचकनेत्रवीक्षणविशेषेण भ्रूतरङ्गेण च एतस्मै एतद्देहीति सेवकान् प्रति एतत् त्वं गृहाणेतत् त्वं गृहाणेति राज्ञः प्रत्येव वा विशेषेण निवेदितं दानं यस्य। अन्यैरानीतमन्येभ्यो दत्तवान् न तु कोषागारे निवेशितवानि-

तानसौ कुशलसूनृतसेकै-
स्तर्पितानथ पितेव विसृज्य।
अस्त्रशास्त्रखुरलीषु विनिन्ये
शैष्यकोपनमितानमितौजाः॥ ५॥

त्यनेनौदार्य्यातिशयश्चातुर्य्यञ्च सूच्यते। चतुरो हि तदीयमेव तस्मै न ददाति। अङ्गुल्यादिचालनेन आदानादिवेदनमीश्वरजातिः॥ ४॥

तानिति। अथ नूतनागतराजस्वीकृतोपदानानन्तरं चिरागतराजेभ्यो वितरणानन्तरं असौ अमितौजा अतुल्यपराक्रमो नलो नूतनागतान् राज्ञः कुशलसूनृतसेकैः कुशलप्रश्नसम्बन्धिसत्यप्रियवचनामृतसेचनैः भवतां राष्ट्रे देहे च कुशलं भवतां कार्य्यं करिष्यामीत्येवंरूपैः कृत्वा तर्पितान् प्रीणितान् सवङ्गमानं स्वशिविरं विसृज्य शैष्यकेन शिष्यभावेन प्रयोजकेनोपनमितान् समीपमानीतान् अस्त्रादिशिक्षार्थं समीपमागतानन्यनृपान् अस्त्राण्याग्नेयादीनि शस्त्राणि वाणादीनि तेषां खुरलीषु हस्तचरणादिसंस्थानचातुरीविशेषेषु विनिन्ये तद्विषयं कौशलमशिक्षयदित्यर्थः। क इव, पितेव। शैष्यकेति भावे षोपधाद्वुञ्। शिष्यतेति च पाठः॥ ५॥

मर्त्यदुःप्रचरमस्त्रविचार-
श्चारु शिष्यजनतामनुशिष्य।
स्वेदबिन्दुकितगोधिरधीरं
स श्रमन्नभवदाप्लवनेच्छुः॥ ६॥
यक्षकर्दममृदून्मृदिताङ्गं
प्राक्कुरङ्गमदमीलितमौलिं।

मर्त्येति। स नल आप्लवेच्छुः जलावगाहनाय साभिलाषो-ऽभवत्। किम्भूतः। मर्त्येषु दुःप्रचरमविद्यमानप्रसरं मर्त्यैः दुःप्रचर्य्यते दुःप्रचरं नलातिरिक्तैर्मर्त्यमात्रैरज्ञाताशेषविशेषं अस्त्राणां आग्नेयाद्यस्त्राणां विचारं मोचोपसंहारोपायप्रकारविशेषं चारुः प्रौढप्रतिभः शिष्यजनस्तत्समूहं चारुमस्यथवा अनुशिष्य शिक्षयित्वा स्थितोऽनन्तरं श्रमवशाज्जाता ये स्वेदबिन्दुकास्ते सञ्जाता यस्य तादृशो गोधिः ललाटं यस्य अत एव धीरं दीर्घं न धीरमल्पं श्रमन्। बिन्दुकेत्यत्राल्पार्थे कन्। तारकादित्वादितच्। ललाटमलिकं गोधिरित्यमरः॥ ६॥

यक्षेति। उच्चकुचा अङ्गनास्तं बकुलपरिमलेनानुबन्धिताः सिलन्तो भृङ्गा येषु तैर्गन्धवारिभिः कर्पूरादिवासितजलैः सिषिचुः अभ्यङ्गस्नानमकारयन्नित्यर्थः। किम्भूतं। प्राक् पूर्वं कर्पूरागरुकस्तूरीचन्दनकङ्कोलचूर्णरूपेण यक्षकर्दमेन सुगन्धद्रव्येण कृत्वा मृदु यथा तथा शनैः उन्मृदितं अङ्गं यस्य तथा पश्चात् कुरङ्गमदेन कस्तूरिकया मीलितः सम्बन्धं प्रापितः

गन्धवारिभिरनुबधितभृङ्गै-
रङ्गना सिषिचुरुच्चकुचास्तं ॥ ७ ॥
भूभृतं पृथुतपो घनमाप्त-
स्तं शुचिः स्नपयति स्म पुरोधाः ।
सन्दधज्जलधरस्खलदोघ-
स्तीर्थवारिलहरीरुपरिष्टात् ॥ ८ ॥

मौलिर्यस्य कस्तूरिकानिर्व्वासिततैलशिरसमिति यावत् । तथा ।

कर्पूरमगरुश्चैव कस्तूरीचन्दनं तथा ।
कङ्कोलं च भवेदेभिः पञ्चभिर्यक्षकर्द्दमः ॥

इति* विष्णुपुराणात् ॥ ७ ॥

भूभृतमिति । अभ्यङ्गस्नानानन्तरं शुचिः साचार आप्तो हितः स्वकुलपरम्परायातः पुरोधाः पुरोहितः जलधराज्जलपूर्णात् स्वर्णकलशात् स्खलन् पतन्नोघः सन्ततधारापरम्परा यासान्ताः प्रयागादितीर्थवारीणां लहरीस्तरङ्गान् उपरि सन्दधत् प्रक्षिपन् सन् पृथुना तपसा चान्द्रायणादिजनितेन च पुण्येन घनं पूर्णं तं भूभृतं नलं स्नपयति स्म । पूर्व्वमुष्णोदकस्नानेन शरीरशुद्धिं कारयित्वा सङ्कल्पपूर्व्वं शीतलोदकेन वेदोक्तमन्त्रस्नानमकारयदिति भावः । शुचिराषाढः पृथुना तपसा माघमासेनाघनं माघमारभ्य वृक्षाणां गलितपत्रत्वादगहनं एवम्भूतं पर्व्वतमभिषिञ्चती विशिष्टा लहरीरुपरि धारयन्

* गरुड इति पा० ।

प्रेयसी कुचवियोगहविर्भुग्
जन्मधूमविततीरिव बिभ्रत्।
स्नायिनः करसरोरुहयुग्मं
तस्य गर्भधृतदर्भमराजत् ॥ ९ ॥
कल्प्यमानममुनाचमनार्थं
गाङ्गमम्बु चुलुकोदरचुम्बि।
निर्म्मलत्वमिलितात् प्रतिविम्बा
द्यामयच्छदुपनीय करे नु ॥ १० ॥

बहुजलं विक्षिपन् आषाढः पृथुतपो येषां तैस्तपस्विभिर्घनं निरन्तरव्याप्तं पर्व्वतमभिषिञ्चतीति वा। तपा माघ इत्यमरः शुचिस्त्वयमाषाढ इति च ॥ ८ ॥

स्नानक्रममाह ॥ प्रेयसीति। स्नायिनो मन्त्रवत्तीर्थजलाव-गाहनस्नानविधिना स्नानं कुर्व्वाणस्य करसरोरुहयुग्मगर्भयो-स्तर्जनीकनिष्ठान्तरालयोर्धृतौ दर्भौ येन एवम्भूतमराजत् शुशुभे। किम्भूतमिवोत्प्रेक्ष्यते। प्रेयस्याः कुचवियोग एव हविर्भुक् तस्माज्जन्म यासान्ताः धूमविततीर्विभ्रदिव दर्भाणां श्यामला-द्धूमविततित्वं युक्तम् ॥ ९ ॥

कल्प्येति। अमुना आचमनमर्थः प्रयोजनं यस्य आचमनं कर्त्तुं वा कल्प्यमानं स्वीक्रियमाणं चुलुकोदरचुम्बि चुलुकम-ध्यवर्त्ति गाङ्गं अम्बु कर्त्तृ निर्म्मलत्वेन मिलितस्तस्मिन् जातः प्रति-विम्बो यस्यास्तां द्यां स्वर्गं उपनीय समीपस्थां कृत्वा हस्तप्राप्यां

मुक्तमाप्य दमनस्य भगिन्या
भूमिरात्मदयितं धृतरागा।
अङ्गमङ्गमनु किं परिरेभे
तं मृदो जलमृदुग्रहयालुं ॥ ११ ॥

ह्वत्वा करे आयच्छत्। दाणदाने तदुत्प्रेचायां स्नानप्रारम्भानन्तरमाचमनं चकारेत्यर्थः। अन्यदपि दुर्लभं वस्तु हस्ते आनीय दीयते ॥ १० ॥

मुक्तमिति। भूमिः आत्मनो भूपतित्वाद्दयितं प्रियं भर्त्तारं नलं स्नानकाले दमनस्य भगिन्या भैम्या मुक्तं विरहितमाप्य लब्ध्वा धृतो रागो लौहित्यं यया अथ च सानुरागा सती ऊषरादिमृत्तिकानिषेधात्तत्परिहाराय जलस्पर्शमात्रेण शिथिलावयवाः मृदुतरस्पर्शाः स्नानार्थमानीताः मृदो गङ्गादिमृत्तिका गृहयालुं गृह्णन्तं अनुकं आत्मनः कामुकं तं अङ्गमङ्गं प्रत्यङ्गं परिरेभे आलिलिङ्ग। श्रौतमार्गेण ललाटाद्यङ्गेषु र... मृत्तिकालगनव्याजेनान्यदा दुःप्रापं स्ववल्लभं भूरालिलिङ्गेति भावः। प्रतीयमानोत्प्रेचा। अन्याऽपि सपत्नीमुक्तं वल्लभं चिरात्प्राप्य सानुरागा सती प्रत्यङ्गमालिङ्गति कं सुखं लचीकृत्य सुखोद्देशेनालिलिङ्गेति वा।

शुक्ला विप्रस्य रक्ता तु चत्रियस्याथ मृद्दिशः।
मिश्रा शूद्रस्य कृष्णा तु क्रमान्मृद उदाहृताः ॥

इति स्मृतेः। अनुकं अनुकाभिकाभीकःकमिता (पा०५।२।७४)

मूलमध्यशिखरस्थितवेधाः
शौरिशम्भुकरकाङ्घ्रिशिरस्थैः ।
तस्य मूर्ध्नि च करे शुचिदर्भैः
वारि वान्तमिव गाङ्गतरङ्गैः ॥ १२ ॥

इति साधुः । अनुकिमिति पाठे सर्व्वाण्यङ्गानि लचीकृत्य परिरेभे किमित्यर्थः ॥ ११ ॥

मूलेति । साग्रमूलैस्त्रिभिरगर्भैर्दर्भैस्तस्य मूर्ध्नि शुचि निर्म्मलं कुत्राप्यसम्बन्धात् पवित्रतरञ्च मार्जनं मन्त्रं तत्सम्बन्धि वारि च करे विचिप्तं । क्वविचेपे किम्भूतैः ।

कुशमूले स्थितो ब्रह्मा कुशमध्ये जनार्दनः ।
कुशाग्रे शङ्करं विद्यात्त्रयो देवाः कुशे स्थिताः ॥

इति वचनात् मूले मध्ये शिखरे च क्रमेण स्थितानां वेधशौरिशम्भूनां ब्रह्मविष्णुहराणां क्रमेण करके कमण्डलौ अङ्घ्रौ पदाम्बुजे शिरसि च गङ्गा सर्व्वदेति पुराणप्रामाण्यस्थितैरेवम्प्रकारेण दर्भेषु सम्भवद्भिर्गङ्गासम्बन्धिभिस्तरङ्गैर्वान्तमिव उद्गीर्णमिव कुशमूलादिस्थितब्रह्मादिदेवता यत्र करकादिनिष्ठगाङ्गतरङ्गभ्रष्टैरिव पवित्रैर्दर्भाग्रजलैः स्नानाङ्गभूतं मार्जनमकरोदित्यर्थः । कमण्डलौ करक इत्यमरः । वान्तं उद्गिलाकः यस्य विभाषेति (पा० ७।२।१५) निष्ठायामिण्णिषेधः ॥ १२ ॥

प्राणमायतवतो जलमध्ये
मञ्जिमानमभजन्मुखमस्य।
आपगा परिवृढोदरपूरे
पूर्व्वकालमुचितस्य सुधांशोः ॥ १३ ॥
मर्त्यलोकमदनः सदृशत्वं
विभ्रदभ्रविशदद्युतितारम्।

प्राणमिति। सुवर्णघटितमहापात्रस्थतीर्थलोपकल्पितसमन्त-ककरकृतावगाहनजलमध्ये।

गायत्रीं शिरसा सार्द्धं जपेद्व्याहृतिपूर्व्विकां।
प्रतिप्रणवसंयुक्तां त्रिरयं प्राणसंयमः॥ इति।

याज्ञवल्क्योक्तलक्षणलक्षितं प्राणं प्राणायामं [illegible]वतः कृतवतः जलमध्ये मुखं नम्रीकृत्य कनिष्ठाङ्गुष्ठेन ना[illegible]ुखश्वासनिरोधपूर्व्वं अघमर्षणं कृतवत इति यावत्। एवंभूतस्यास्य नलस्य जलान्तर्वर्त्तिमुखं आपगानां परिवृढस्य स्वामिनः समुद्रस्य उदरपूरे गर्भप्रवाहमध्ये मन्थनात् पूर्व्वकाले उषितस्य कृतवासस्य सितांशोश्चन्द्रस्य मञ्जिमानं सौन्दर्य्यमभजत् सागरोदरस्थचन्द्रदृशमभूदित्यर्थः। पुंसिभूम्न्यसवःप्राणा इत्यमरोक्तेः प्राणशब्दस्य बहुवचनान्तत्वनियमादेकवचनं चिन्त्यं। आयतवतः यमेः क्तवतुः। अत्यन्तसंयोगे द्वितीया॥ १३ ॥

मर्त्येति। मर्त्यलोकमदनो नलः दशदिश एव वसनं यस्य तस्य दिगम्बरस्य विधुमौलेश्चन्द्रशेखरस्य स्पर्द्धयेव अम्बरं वस्त्रं अथ

अम्बरं परिदधे विधुमौले
स्पर्द्धयेव दशदिग्वसनस्य ॥ १४ ॥
भीमजामनुचलत् प्रतिवेलं
संयियंसुरिव राजऋषीन्द्रः।

च गगनं परिदधे। अत्र कृतदशदिग्रूपविभागं गगनमुच्यते तेन गगनवसनस्येत्यर्थः। किम्भूतं। सदृशत्वं दशाभिर्दीर्घप्रान्ततन्तुभिः सह वर्त्तते तद्भावं अथ च दशभिःसहवर्त्तमानं तद्भावं दशत्वसङ्ख्यायोगिदिग्विभागोपाधिरेव दशत्वसङ्ख्यायोगित्वं बिभ्रत् सदशत्वमुदितभाग्यत्वं बिभ्रदिति नलविशेषणं वा। तथा अभ्रवदौचित्याच्छरन्मेघस्येवाभ्रका परिपर्ष्या यस्य शुभ्रतरद्रव्यविशेषस्येव वा। विशदा शुभ्रतरा द्युतिर्यस्य अत एव तारं सूक्ष्मतरं धवलद्युतिवत् तारश्चेति एकपदं वा अभ्रवद्विशदा द्युतिर्यस्य तद्भावस्तताताभारात् आदत्ते तद्धवलतरं वा शरन्मेघवदभ्रकद्रव्यवद्वा निर्म्मलाद्युतिर्यासां तादृशस्तारका यत्र। यद्वा अभ्राणि मेघा विशन्ति अत एव मेघावृतत्वादद्युतयः कान्तिरहितास्तारका यत्रेति वा। अच्छिन्नं धौतं वस्त्रं परिदध इत्यर्थः ईश्वरोऽपि विशिष्टमाकाशमेव वस्ते शिवकामयोर्विशेषात् स्पर्द्धा युक्ताः। अभ्राणि विशन्तीति पक्षे द्वितीयेति योगविभागात् समासः॥ १४ ॥

भीमजामिति। राजऋषीणां सदाचारनृपाणां मध्ये इन्द्रः स नलः उत्तरी यस्योपरितनवस्त्रस्य परिवेषमिषेण वेष्टनव्याजेन

प्राववार हृदयं स समन्ता-
दुत्तरीयपरिवेषमिषेण ॥ १५ ॥
स्नानवारिघटराजदुरोजा
गौरमृत्तिलकविन्दुमुखेन्दुः।
केशशेषजन्ममौक्तिकदन्ता
तं बभाज सुभगाप्लवनश्रीः ॥ १६ ॥

हृदयं मनः अथ च वक्षःस्थलं समन्तात् प्राववार बबन्ध पिदधे च। किम्भूतं। यतः प्रतिवेलं वारं वारं भीमजामनुलक्षीकृत्य अनुरागातिशयाच्चलदभिमुखं धावत्। किम्भूत इव तद्धृदयं संयियंसुरिव सम्यक् नितरां नियन्तुमिच्छुरिव क्षणमात्रं त्वया न गन्तव्यमिति गाढं सयत्नं कर्त्तुमिच्छति वा स्नात्यादाविकवाससः कर्मानधिकारात्तेरुत्तरीयवस्त्रधारणं युक्तं। अन्योऽप्यन्यत्र गमनोत्सुको बलाद्रज्ज्वादिना स्थाप्यते समन्तादिति च पाठः। राजा ऋषिरित्यक इति प्रकृति भावः ॥ १५ ॥

स्नानेति। सुभगा मनोहरा अथ च सौभाग्यवती आप्लवनश्रीः स्नानलक्ष्मीस्तं बभाज सिषेवे स्नानेन नितरां शुशुभे इत्यर्थः। किम्भूता। स्नानार्थं वारि तद्युक्ताः सुवर्णघटास्त एव राजन्तौ उरोजौ कुचौ यस्याः सा तथा ऊर्द्धवृत्ततिर्य्यगर्द्धचन्द्राकाराः वर्णानां क्रमात्तिलका इति दक्षवचनात्। ललाटे धृतो गौरमृत्तिलकविन्दुर्गङ्गातीरमृद्गोपीचन्दनादिरचितो वर्त्तुलस्तिलकः स एव गौरवृत्तत्वान्मुखेन्दुर्यस्याः सा तथा हस्तवस्त्रैर्न मार्ज-

श्वैत्यशैत्यजलदैवतमन्त्र-
स्वादुनाप्रमुदितां चतुराचीं ।
वीक्ष्य मोघधृतसौरभलोभं
घ्राणमस्य सलिलघ्रमिवाभूत् ॥ १७ ॥

येदिति व्यासवचनेन वैधस्नानानन्तरं वस्त्रादिना केशमार्जनस्य निषेधात् केशेषु शेषं जलं केशप्रान्तेभ्यो गलद्यज्जलं जलविन्दवस्त एव मौक्तिकानि दन्ताश्च यस्याः, यद्वा जलमौक्तिकानि मुक्तावत् स्थूलजलविन्दवस्त एव दन्ताः यस्याः सा एवम्भूता रमणीयदशना तिलकं दधारेति भावः। अन्याऽप्येवंविधा तरुणी कश्चिद्भजत इति ॥ १६ ॥

श्वैत्येति । श्वैत्येन शैत्येन च जलदैवतं येषां तैराणैः तज्जलदैवतं वरुणस्तत्सम्बन्धिभिर्वारुणैर्मन्त्रैः शब्दात्मकैः स्वादुतया मधुररसतया च जलगतविशिष्टरूपस्पर्शशब्दरसलक्षणस्वस्वविषयलाभेन प्रमुदितां अतितरां मन्तुष्टा चतुराचीं इन्द्रियचतुष्टयं क्रमेण चक्षुस्त्वक्श्रोत्ररसनसमाहाररूपां नेत्रादिचतुष्टयीं वीक्ष्य घ्राणेन्द्रियं सहजगन्धस्य पृथिव्या असाधारणगुणत्वाज्जले तदसम्भवात् कर्पूरादिवासितस्य च जलस्य देवस्नापनादिधर्मकर्मसु प्रतिषेधादौपाधिकस्याप्यसम्भवात् मोघो निष्फल एव धृतः सौरभे शोभनगन्धे लोभो येन लोभस्तज्जातीयस्पर्द्धा, विगलितविवेकं सत् अतं चेत्यादिसन्ध्याघमर्षणे चुलुकोदकस्पर्शमिषेण सलिलं जिघ्रतीति सलिलघ्रं जलाघ्राणं कुर्व्वदिवाभूत्, लोभस्य-

राज्ञि भानुमदुपस्थितयेऽस्मि-
न्नात्तमम्बु किरति स्वकरेण।
भ्रान्तयः स्फुरति तेजसि चक्रु-
स्त्वष्टृतर्कुचलदर्कवितर्कं॥ १८॥

द्वाभ्यां विगलितविवेको ह्यविषयेऽपि प्रवर्त्तते। सन्ध्याघमर्षणं चकारेति भावः। श्वैत्यं वर्णवाचित्वात् ष्यञ्। चतुराचीं समाहारे द्विगोरिति (पा० ४।१।२१) ङीप्। सलिलघ्नं आदन्तत्वात् कः॥ १७॥

राज्ञीति। अस्मिन् राज्ञि भानुमतः सूर्य्यस्योपस्थितये उपस्थानार्थं आत्तं गृहीतमर्घ्यदानसम्बन्धि स्वकरेण स्वपाणिना अर्घ्यदानानन्तरं वा "असावादित्यो ब्रह्म" इत्यादिमन्त्रपूर्व्वक जलं शिरः परितः स्वपाणिना स्फुरति प्रकाशमाने तेजसि सौरप्रभाप्रसरे मध्ये गलद्विन्दु क्रमेण किरति सति भ्रान्तयः चिप्तोदकस्य प्रादक्षिण्यपरिभ्रमणानि लोकस्य त्वष्टुर्विश्वकर्म्मणस्तर्कुः शा० चक्रं तत्र घर्षणवशाच्चलतो भ्राम्यतो विस्वक्पतनशीलतेजःकणस्य अर्कस्य वितर्कं तद्विषयविशिष्टमूहं चक्रुः। प्रकाशमानसौरप्रभा प्रक्षिप्तगलद्विन्दुजलभ्रमणदर्शनेन विश्वकर्म्मणा सूर्य्यः पुनरपि शाणचक्रे धृतः किं। अत एव तत्कणाः पतन्तीति लोकस्य तदानीं बुद्धिरभूदित्यर्थः। भानुमदुपस्थितये गृहीतमम्बु स्वकरेण विक्षिपन् यस्मिन् राज्ञि विषये लोकस्य तदानीं भ्रान्तयो सलाक्षप्रभाप्रसरे प्रकाशमाने सति शाणचक्रपरिभ्रमसूर्य्यसम्भा-

सम्यगस्य जपतः श्रुतिमन्त्राः
सन्निधानमभजन्त कराब्जे ।
शुद्धवीजविशदस्फुटवर्णाः
स्फाटिकाक्षवलयच्छलभाजः ॥ १९ ॥

वनां लोकस्य चक्षुरिति वा । राज्ञा यदम्बु गृहीतं तस्मिन् क्षिप्ते जले स्फुरति प्रतिफलति रवितेजसि जायमाना भ्रान्तयो भ्रमणानि त्वष्टुस्तत्क्षणं चलदर्के वितर्कञ्चक्रुः । उत्क्षिप्ता आपो वियति भ्रमन्त्यः पतन्ति तत्प्रतिविम्बितेजस्यपि भ्रमणानि जायन्ते तत्रोत्प्रेक्षा इति वा । अर्घदानं सूर्य्योपस्थानञ्च कृतवानिति भावः । स्फुरिततेजसीति पाठे नलविशेषणं ॥ १८ ॥

सम्यगिति । श्रुतिमन्त्राः सम्यग् जपतः सावित्र्यादिमन्त्रमावृत्त्योपांशु उच्चारयतः अस्य कराब्जे सन्निधानमभजन्त अशोभन्त । किम्भूताः शुद्धैरागमोक्तक्रमोच्चारणनिर्म्मलैर्वह्निवारुणादिवीजैः कृत्वा विशदस्फुटाः मात्रादिसाकल्योच्चारणनासन्दिग्धा वर्णाः अक्षराणि येषु । अथ च शुद्धेषु त्रासादिदोषरहितेषु वीजेषु स्फटिकगुटिकासु विशदा धवलः प्रकटो वर्णः कान्तिर्येषां । यद्वा निर्दोषः स्फाटिकवीजान्येव धवलाः प्रकटा वर्णा अक्षराणि येषु । तथा स्फाटिकाक्षाणां वलयस्य मालाया छलं भजन्ति ते तदाकारेण परिणता भक्त्यतिशयात् मूर्त्तीभूय तत्पाणिपद्मे वसन्ति स्मेति भावः । उपस्थानानन्तरं सावित्रीजपञ्च कृतवानिति भावः ॥ १९ ॥

पाणिपर्व्वणि यवः पुनराख्या-
द्देवतर्पणयवार्पणमस्य।
न्युप्यमानजलयोगितिलौघैः
स द्विरुक्तकरतालुतिलोऽभूत्॥ २०॥
पूतपाणिचरणः शुचिनोच्चै-
रध्वना नितरपादहतेन।

पाणीति। अस्य पाणिपर्व्वणि हस्ताङ्गुलीनां ग्र॰॰ काण्डे वर्त्तमानो यवाकारः सामुद्रिकलक्षणभूतशुभरेखाविन्यासरूपो यवो देवतर्पण॰जले यवार्पणं कर्म्मभूतं पुनरुक्तमाख्यात् अकरोदित्यर्थः। देवतर्पणं हि यवैः क्रियते ते चाङ्गु॰॰पर्व्वसु पूर्व्वमेव वर्त्तन्ते एतावतैव पौनरुक्त्यं। तथा न्युप्यमानेन पितृभ्यो दीयमानेन जलेन योगिभिः सहजक्षिप्यमाणैः कृष्णतिलौघैः कृत्वा स नलो द्विरुक्तः पुनरुक्तः करतालुतिलः करकमलमध्यवर्त्तीसामुद्रिकलक्षणभूतः सूक्ष्मकालतिलाकारो अङ्को यस्य तादृशोऽभूत्। पितृतर्पणं हि तिलैः क्रियते स च तिलस्तत्रहस्तमध्ये वर्त्तत एवेति पौनरुक्त्यं ब्रह्मयज्ञदेवपितृतर्पणमपि तेनाकारीति भावः। आद्यन्तयोर्देवपितृतर्पणयोर्मध्ये वर्त्तमानं ऋषितर्पणमपि तेन कृतमिति ज्ञेयं। न्युप्यमानं यज्ञादित्वात् सम्प्रसारणं॥ २०॥

पूतेति। एष राजा चासौ ऋषिः श्रुतिधर्म्माचरणशीलो नलः देवपूजागृहप्रवेशौचित्यार्थं पूतं जलक्षालितं पाणिचरणौ येनैवंभूतः सन् शुचिना गोमयलिप्तेन पवित्रेण तथा नितरस्य नला-

ब्रह्मचारिपरिचारिसुरार्चा-
वेश्म राजऋषिरेष विवेश ॥ २१ ॥
क्वापि यन्नभसि धूपजधूमै-
र्मेचकागुरुभवैर्भ्रमराणाम् ।
भूयते स्म सुमनः सुमनःस्र-
ग्दामधामपटले पटलेन ॥ २२ ॥

तिरिक्तस्य पादेनाहतेऽन्यचरणस्पर्शदूषितेनेत्यर्थः । ऊर्ध्वैः ऊर्द्धं अध्वना सोपानबद्धमार्गेण । यद्वाऽनितरपादहतेन अत एवोच्चै-र्नितरां शुचिनाऽध्वना ब्रह्मचारिण उपनीता द्विजाः परिचारिणो देवसेवाकारिणो यत्र एवम्भूतं सुरार्चावेश्म सुवर्णादिनिर्मितमन्त्रसंस्कृतप्रतिमा गृहं देवपूजासम्बन्धिना गृहं विवेश ॥ २१ ॥

क्वेति । यस्य देवपूजागृहस्य नभसि अन्तरावकाशे क्वापि कस्मिन्नपि प्रदेशे सुमनसां देवानां पूजार्थमानीताः सुमनसः पुष्पाणि तासां स्रग्दामानि मालापरम्पराः । यद्वा स्रजः कण्ठमाला दामानि शिरोमाल्यानि तेषां धामानि स्थानानि मध्यस्थापितपुष्पवेणुसुवर्णादिपात्राणि तेषां पटले समूहे विषये तेषामुपरिष्टान् मेचकागरुसमूहैः कृष्णागरुसमुद्भवैर्धूपजैः सौगन्ध्यार्थं रचितैर्धूमोत्पन्नैर्धूमैरेव भ्रमराणां पटलेन गणेन भूयते स्म जातं । पुष्पाणामुपरि भ्रमरैर्भाव्यं तथा च धूपजधूमा एव तत्स्थाने जाता इत्यर्थः । सुमनसो मालत्याः पुष्पाणां मालापरम्परास्तासां स्थानं तद्रचितमिति यावत् एवं पटलं वितानं

साङ्कुरेव रुचिपीततमायै-
र्यैः पुरास्ति रजनीरजनीव।
ते धृता वितरितुं त्रिदशेभ्यो
यत्र हेमलतिका इव दीपाः ॥ २३ ॥

यत्र तादृशे वा देवानामुपरि पुष्पवितानमपि निबद्धं यत्रे... देवपूजार्थं उपहृतपुष्पमालापरम्पराणां स्थानभूतं प... गृह-प्रान्तच्छदिर्यत्रतादृशपदान्तरप्रदेशे देवतागारे हि छदिः प्रान्ते। ...रभरामणीयकार्थं पुष्पमाला बध्यन्ते तासामुपरि ...मा एव भृङ्गा जाता इत्यर्थ इति वा। बकुलरा धूपाः पुष्प-मालाश्च यत्र सन्तीति भावः। सुमना मालतीजातिरित्यमरः। प्रान्तेऽथ पटलं छदिः ॥ २२ ॥

साङ्कुरेति। यत्र देवगृहे ते दीपा हेमलतिका इव त्रिद-शेभ्यो वितरितुं धृताः स्थापिताः सन्ति ते के यैः यैर्दीपैरुच्या दीप्त्या पीतं ग्रस्तं तमो यस्यास्तादृशी सा भूता भविष्यति वा रजनी रात्रिः साङ्कुरेवोद्भिन्नप्रत्यग्रतेजोऽङ्कुरसहितेव पुरास्ति अभूत् भविष्यति वा। तथा यैः कृत्वा कान्त्या पीततमा अतितरां पीतवर्णा अत्यन्तगौरी रात्रिः उद्भिन्नप्रत्यग्राङ्कुरा रजनीव हरिद्रेव अभूत् भविष्यति वा। रात्रिः पीतीभूततया हरि-द्रावत्, प्रदीपकलिकाश्च तदङ्कुरा इवेत्युत्प्रेक्षोपमा वा। निशा-ख्या काञ्चनी पीतेत्यमरः। पीततमा पक्षे सान्तं पक्षे तमबन्तं। परास्तीति पुरिलुङ् चेति (पा० ३।२।१२२) यावत् पुरेति (पा० ३।३।४) भविष्यति वा लट् ॥ २३ ॥

यत्र मौक्तिकमणेर्विरहेण
प्रीतिकामवृतवह्निपदेन ।
कुङ्कुमेन परिपूरितमन्तः
शुक्तयः शुशुभिरेऽनुभवन्त्यः ॥ २४ ॥

यत्रेति। यत्र देवागारे मौक्तिकमणेः प्रियतमस्य विरहेण कर्त्रा कुङ्कुमस्य स्वोद्दीपनहेतुतया प्रीतिस्तया कामं वृतं दत्तं कामेन कर्त्रा वा दत्तं वह्नेः पदं दाहकत्वादिरूपोऽधिकारः तद्रूपं चिह्नं वा यस्य तेन कुङ्कुमेन केसरेण परिपूरितं अन्तर्मध्यभागमनुभवन्त्यो बिभ्राणाः शुक्तयः शुशुभिरे वियोगिन्योऽपि विरहाग्नितप्तं हृदयमनुभवन्ति। कुङ्कुमपूर्णाः शुक्तयो वियोगिन्यो रूपकेन वर्ण्यन्ते। यद्वा मौक्तिकमणेर्विरहेण उपलक्षिताः शुक्तयः कुङ्कुमस्य कामोद्दीपने हेतुतया या प्रीतिस्तया युक्तेन कामेन। अन्यत् पूर्ववत्। धृतदाहकत्वरूपाधिकारेण कुङ्कुमेन परिपूरितं अन्तः अनुभवन्त्यः शुशुभिरे इति वा। प्रीतो हि किञ्चित् पदं ददाति। शुक्तयः विश्लिष्टेन कुङ्कुमेन उपलक्षिताः सत्यः मौक्तिकमणेर्विरहेण पूर्णं मध्यमनुभवन्त्य इव शुशुभिरे इति प्रतीयमानोत्प्रेक्षा वा। प्रीतेति पाठे स्वोद्दीपकत्वेन प्रीतात् कामात् वृतवरेण लब्धवह्निपदं येनेत्यर्थः। मुक्ताफलोत्पत्तिहेतुभूताः शुक्तयः पुत्रविरहेण मातरो यथा हृदयान्तर्दाहं वहन्ति तथा कुङ्कुमरूपमन्तर्दाहं वहन्त्यः शुशुभिरे इति वा ॥ २४ ॥

अङ्कचुम्बिघनचन्दनपङ्कं
यत्र गारुडशिलाजममत्रम्।
प्राप केलिकवलीभवदिन्दोः
सिंहिकासुतमुखस्य सुखानि॥ २५॥
गर्भमेणमदकर्द्दमसान्द्रं
भाजनानि रजतस्य भजन्ति।
यत्र साम्यमगमन्नमृतांशो-
रङ्करङ्कुकलुषीकृतकुक्षेः॥ २६॥

अङ्केति। यत्र देवागारे अङ्कचुम्बी मध्यवर्त्ती घनश्चन्दनपङ्को यस्य तत् गारुडशिलाजं अतिनीलस्थलगरुडोद्गारमणिघटितममत्रं पात्रं केल्या लीलामात्रेण कवलीभवन् ग्रासीभवन् मुखमध्यवर्त्त्यर्द्धभाग इन्दुर्यस्य तस्य सिंहिकासुतमुखस्य राहुवदनस्य शीतलान्नभोजनसुखानि प्राप तत्सममभूदित्यर्थः। गारुडमणिपात्राणि यत्र चन्दनभरितानि सन्तीति भावः। अमत्रमिति जात्या एकवचनं भवदिन्दोर्भाषितपुस्तकं॥ २५॥

गर्भमिति। यत्र देवागारे एणमदकर्द्दमेन कस्तूरीपङ्केन सान्द्रं पूर्णगर्भमध्यं भजन्ति बिभ्राणानि रजतघटितानि भाजनानि पात्राणि अङ्करङ्कुः कलङ्कमृगः तेन कलुषीकृतो मलीनीकृतः कुक्षिर्यस्य तस्यामृतांशोश्चन्द्रस्य साम्यमगमत्। देवपूजार्थं रजतपात्राणि कस्तूरीपूर्णाणि यत्र सन्तीति भावः॥ २६॥

उज्जिहानसुकृताङ्कुरशङ्का
यत्र धर्म्मगहने खलु तेने ।
भूरिशर्करकरम्भवलीना-
मालिभिः सुगतसौधसखानां ॥ २७ ॥

खर्व्वमाख्यदमरौघनिवासं
पर्व्वतं क्वचन चम्पकसम्पत् ।
मल्लिकाकुसुमराशिरकार्षीद्
यत्र च स्फटिकसानुमनुच्चं ॥ २८ ॥

उज्जिहानेति । धर्म्मेण गहने निविडे, अथ च पुण्यकानन-रूपे यत्र देवपूजार्थरचितगृहे उच्चवर्त्तुलधवलतराणां सुगत-सौधानां बौद्धदेवालयानां वा सखायः सदृशास्तेषां भूरि शर्करा येषु तेषां करम्भवलीनां दधिसक्तूपहाराणां दध्योदनोपहा-राणां वा आलिभिः पङ्क्तिभिः उज्जिहान उद्गच्छन् सुकृता-ङ्कुरस्तस्य शङ्का सम्भावना खलु निश्चितं तेने व्यरचि। आम्रा-दिवने हि आम्राद्यङ्कुर एवोद्गच्छति तथा धर्म्मकानने धर्म्मा-ङ्कुर एवेति। यत्र शर्करामिश्रितं दध्योदनवलिश्रेणय उपक-ल्पिताः सन्तीति भावः। सुगतसौधसखानां राजति (पा० ५। ४।९१) टच्॥ २७ ॥

खर्व्वमिति। यत्र क्वचन प्रदेशे विकसितचम्पककुसुमानां सम्पत् उच्चतरपुञ्जः अमरौघाणां निवासभूतं पर्व्वतं मेरुं खर्व्वं ह्रस्वमाख्यत्, सुमेरुवर्णश्चम्पकराशिर्मेरोरप्युच्चतरः। यत्रास्ती-

स्वात्मनः प्रियमपि प्रतिगुप्तिं
कुर्व्वती कुलवधूमवजज्ञौ ।
हृद्यदैवतनिवेद्यनिवेशा-
द्यत्र भूमिरवकाशदरिद्रा ॥ २९ ॥
यत्र कान्तकरपीडितनील-
ग्रावरश्मिचिकुरासु विरेजुः ।

त्यर्थः । तथा मल्लिकाकुसुमराशिः स्फटिका एव शिखराणि यस्य तं कैलासं पर्व्वतं अनुच्चं खर्व्वं अकार्षीत् । शुद्धतरस्फटिकवर्ण-कैलासतुल्यो मल्लिकापुष्पराशिः कैलासादप्युच्चतरो यत्रास्ती-त्यर्थः । पृथगन्वयात् खर्व्वानुच्चपदद्वयं भिन्नमिति ज्ञेयं ॥ २८ ॥

स्वात्मन इति । यत्र हृद्यानां वर्णरसादीनां मनोहारिणां देवतासम्बन्धिनां निवेद्यानां पञ्चखाद्याद्युपहाराणां निवेशाद्-वस्थापनाद्धेतोः तिलमात्रावकाशेनापि दरिद्रा रहिता भूमिः स्वात्मनः प्रियं नलं प्रत्यपि लक्षीकृत्य गुप्तिं सर्व्वाङ्गं सुवर्णरूपं गोपनं कुर्व्वती, शोभनस्य स्वस्य वा देहस्य गोपनं कुर्व्वती वा, तिलमात्रमपि प्रदेशं द्रष्टुमददाना सती कुलवधूमवजज्ञौ, अवमेने, कुलस्त्रीतुल्याऽभूदित्यर्थः । कुलवधूरपि स्वप्रियं प्रति लज्जातिशयात् स्वशरीरं गोपयति । बहूनि निवेद्यानि यत्र स्थापितानि सन्तीत्यर्थः ॥ २९ ॥

यत्रेति । यत्र वर्त्तमानासु कुट्टिमक्षितिषु चन्द्रकान्तादि-मणिबद्धभूमिषु देवपूजावसरे गातॄणां गायकानां गानवशात्

गाहमूर्द्धविधुतेरनुविम्बात्
कुट्टिमक्षितिषु कुट्टमितानि ॥ ३० ॥
नैकवर्णमणिभूषणपूर्णे
स क्षितीन्दुरनवद्यनिवेद्ये ।
अध्यतिष्ठदमलं मणिपीठं
तत्र चित्रसिचयोच्चयचारौ ॥ ३१ ॥

मूर्द्धविधुतेः शिरःकम्पस्यानुविम्बात् प्रतिविम्बाद्धेतोस्तद्व्याजेन कुट्टमितानि हठक्रियमाणचुम्बनादिपरिहारार्थं कामिनीशिरःकम्पविलसितानीव विरेजुः। किम्भूतासु। भौमा भीमसेनवद्दत् सूर्य्यकान्ताश्चन्द्रकान्ता वा तेषां करैः किरणैः पीडिताः पुरस्ताद्घनं प्रतिबद्धास्तत्रैव घनीभूता इति यावत्। नीलग्रावरश्मयो नीलमणिकिरणा एव चिकुराः सुनीला केशा यासां तासु। कामिन्यो हठपरिचुम्ब्यमाना प्रियपाणिगृहीता नीलमणिरश्मितुल्याः। सुनीलाः केशा यासां। कृतकचग्रहाः सत्यः चुम्बनादिपरिहाराय शिरःकम्पनरूपान् विलासान् कुर्व्वन्ति। मणिबद्धा भूमयो देवसेवका गायकाश्च यत्र सन्तीति भावः ॥ ३० ॥

नेति। स क्षितीन्दुः भूचन्द्रो नलः तत्रोक्तरूपे देवपूजागृहे अमलं मणिभीरत्नैः खचितं पीठमध्यतिष्ठत्। किम्भूते। नैकवर्णा मणयो येषु देवार्थं कल्पितैर्नानावर्णैः भूषणैः पूर्णे। तथाऽनवद्यानि मोदकादिनिवेद्यानि यस्मिन्। तथा चित्राणां नाना-

सम्यगर्चति नलेऽर्कमतृष्णं
भक्तिगन्धिरमुनाऽकलि कर्णः।
श्रद्धधानहृदयं प्रति चान्तः
साम्बमम्बरमणिर्निरचैषीत् ॥ ३२ ॥

वर्णानामाश्चर्य्यकारिणां देवार्थमानीतानां मित्रयानां वस्त्राणां उच्चयेन राशिना चारौ रमणीये। मणिपीठं अधिशीङिति (पा०१।४।४६) कर्म्मत्वम्। चार्विति पाठे पीठविशेषणं ॥ ३१ ॥

पञ्चायतनपूजायां प्राथम्येन सूर्य्यपूजाया विहितत्वात् प्रथमं सूर्य्यपूजामाह। सम्यगिति। नले सूर्य्यकान्तमणिरूपं सुवर्णादि-घटितप्रतिमारूपं वाऽर्कं सम्यक् श्रौतस्मार्तमार्गेण अतृष्णं त्वरार-हितं सावधानतया चिरकालं अर्चति सति अमुना सूर्य्येण कर्णो राधेयो भक्तिगन्धः अल्पा भक्तिर्यस्य तादृश अकलि अज्ञा-यि, सूर्य्यभक्तोऽपि कर्णो नलापेक्षया अतिहीन एवेति सूर्य्येण अन्तर्निश्चित इत्यर्थः। तथा नले अर्कं शनैरर्चति सति अम्ब-रमणिः सूर्य्यः श्रीकृष्णपुत्रं साम्बं अन्तःकरणे श्रद्धधानहृदयं प्रति श्रद्धधानहृदयमात्रं निरचैषीत् निश्चितवान्। साम्बोऽपि भक्ततया प्रसिद्धोऽप्यल्पश्रद्धावान्न तु नलवदत्यन्तभक्त इति नि-श्चिकायेत्यर्थः। उभाभ्यामपि सकाशान्नलस्य सूर्य्ये महती भक्ति-रभूदिति भावः। अर्चतीत्यचौरादिकादर्चतेः शता। भक्तिगन्धि अल्पाख्यायां (पा०५।४।१३६) इति गन्धस्य इत्। हृदयं प्रति सुप्रतिना मात्रार्थे (पा०२।१।९) इत्यव्ययीभावः ॥ ३२ ॥

तत्तदर्घ्यमरहस्यजपेषु
स्रङ्मयः श्रयममुष्य बभाज।
रक्तिमानमिव शिक्षितुमुच्चै-
रक्तचन्दनजवीजसमाजः ॥ ३३ ॥
हेमनामकतरुप्रसवेन
त्र्यम्बकस्तदुपकल्पितपूजः।

तदिति। तेषामर्घ्यसमन्विनां रहस्यानां श्रौतस्मार्तमन्त्राणां जपेषु उपांशुमन्त्रावृत्तिषु विषये स्रङ्मयो जपमालिकारूपः रक्तचन्दनकाष्ठजानां कृतच्छिद्रमणीनां फलमध्यवर्त्तिवीजानां वा समाजः समूहः जपतोऽमुष्य नलस्य श्रयं हस्तं बभाज सिषेवे। उत्प्रेक्षते। तत्करे वर्त्तमानं उच्चैरतिशयितं रक्तिमानं रक्तत्वं शिक्षितुमिव। अन्योऽपि शिष्य उपाध्यायं सेवत एव। रक्तचन्दनवीजजपमालिकाजापेन सौरमन्त्राणां शीघ्रफलदत्वात् सौरमन्त्रान् रक्तचन्दनमालिकया जजापेत्यर्थः। स्रङ्मयः एकाद्युत्वान्मयट् ॥ ३३ ॥

इदानीं श्लोकाष्टकेन हरपूजामाह हेमेति। हेमनामकधत्तूरस्य तरोः प्रसवेन विकसितकुसुमेन कृत्वा तेन नलेन उपकल्पिता पूजा यस्य स त्र्यम्बको राजितः शुशुभे। उत्प्रेक्षते। कयेव। रतीशं युधि विजित्य बलात् आत्तया गृहीतया कुसुमरूपया काहलया धत्तूरपुष्पाकारवाद्यविशेषेणेव, कुसुमकाहलयोपलक्षित इवेति वा। शराणां कौसुमत्वाद् वादित्राणामपि कौसु-

आत्तया युधि विजित्य रतीशं
राजितः कुसुमकाहलयेव ॥ ३४ ॥
अर्चयन् हरकरं स्मितभाजा
नागकेसरतरोः प्रसवेन।

मतया युक्तत्वात् कामकाहलायाः कौसुमत्वमुचितमेव। परा-भूतात् कामाद्बलात् गृहीतया कौसुमकाहलयेव धत्तूरपुष्पेण राजत इत्यर्थः। अन्योऽपि शत्रुं जित्वा बलाद् गृहीतेन छत्रवा-दित्रादिना शोभते सौन्दर्य्येण स्वस्पर्द्धितया स्वस्य शिवभक्ततया कामस्य च शिवविरोधित्वात् स्वविरोधिनं स्वामिविरोधिनञ्च स्मरं रणे जित्वा तस्माद्बलात्नलेनैव गृहीतया कुसुमकाहलया धत्तूरपुष्पेण कृत्वा नलेन उपकल्पितपूजः शुशुभे। सेवका हि स्वविरोधिनं स्वस्वामिविरोधिनञ्च रणे जित्वा तच्छत्रवादित्रा-दिबलाद् गृहीत्वा स्वामिन उपढौकयति तेन च स्वामी शोभते इति वा। प्रियतरेण धत्तूरपुष्पेण स राजा नलः शिव-मपूजयदिति भावः। धत्तूरः कनकाह्वय इत्यमरः। वाद्यभा-ण्डविशेषे तु काहलेति विश्वः॥ ३४॥

अर्चयन्निति। स्मितं विकासं भजते स्मितभाक् तेन विक-सितेन नागकेसराख्यस्य तरोः प्रसवेन पुष्पेण कृत्वा हरकरं सु-वर्णादिघटितदक्षिणामूर्त्यादिशिवप्रतिमापाणिं अर्चयन् पूजार्थं स्थूलतरं शुभ्रतरं केसरतरुकुसुमं तत्पाणौ स्थापयन् सोऽयं नलः तिरश्चा दिशः तिर्य्यग्वर्त्तमानप्राच्यादिदिगष्टकान्

सोऽयमापयदतिर्य्यगवाग्दिक्-
पालपाण्डुरकपालविभूषां॥ ३५॥
नीलनीररुहमाल्यमयीं स
न्यस्य तस्य गलनालविभूषां।
स्फाटिकीमपि तनुं निरमासी-
न्नीलकण्ठपदसान्वयतायै॥ ३६॥

अवाच्या अधोदिशः सकाशाद्याच्या अतिर्य्यगवाग्दिक् ऊर्द्धा तस्याः पालो रचको ब्रह्मा तस्य चिरकालघर्षणाद्गतकृत्तिं पाण्डुरं धवलं शिरः तेन ब्रह्मकपालेन कृता विभूषां अलङ्कृतिं कपालरूपां विभूषां आपयत् अलम्भयत्। हरेण ब्रह्मणः पञ्चमं शिरः छिन्नं तत्प्रायश्चित्तं कुर्व्वतो हरस्य भिक्षार्थं करे तिष्ठति ततश्च तत्प्रतिमायामपि तेन भवितुं युक्तमिति नागकेसरपुष्परूपेण ब्रह्मकपालेन तत्करमलञ्चकारेत्यर्थः। चाम्पेयः केशरो नागकेसरः काञ्चनाह्वय इत्यमरः। हरकरमर्चनापेक्षया कर्म्मत्वम्, पक्षे आप्नोतेर्गत्यर्थत्वाद्णौ कर्त्तुर्णौ कर्म्मत्वं। तिर्य्यगवागिति अव्ययं तिर्य्यगवाक्कासौ दिक् च वा इति समासः॥ ३५॥

नीलेति। स नलः तस्य हरस्य स्फटिकनिर्म्मितामपि तनुं हरप्रतिमां नीलनीररुहाणां माल्यं माला तन्मयीं गलनालः कण्ठः तस्य विभूषां भूषणं न्यस्य आवध्य नीलकण्ठवाचकं यत्पदं तस्य सान्वयतायै अन्वयसाहित्याय नीलः कण्ठो यस्येति सम्बन्धसार्थक्याय निरमासीत् निर्म्मितवान्। नीलोत्पलमालां कण्ठे

प्रीतिमेष्यति कृतेन ममेह-
कर्म्मणा पुररिपुर्मदनारिः।
तत्पुरः पुरमतोऽयमधाक्षी-
द्धूपरूपमथ कामशरञ्च ॥ २७ ॥

सध्वा स्फाटिकीमपि शिवप्रतिमां नीलकण्ठपदसहितामकरो-दित्यर्थः। कण्ठ एव नीलोत्पलपूजां चकार अन्यत्र तु चन्द-नश्वेतपुष्पादिभिः पूजितवानिति भावः ॥ २६ ॥

प्रीतिमिति। पुराणां दैत्यविशेषाणां रिपुस्तथा मदनस्य अरिः शिवः मम कृते ईदृशा कर्म्मणा पुरकामशरदाहरूपव्या-पारेण प्रीतिमेष्यति प्रसन्नो भविष्यति। अतो हेतोरिव इति बुध्येव अयं नलस्तस्य पुररिपोः कामारेः पुरः धूपस्वरूपं अथच धूप-वेषधारिणं पुरं गुग्गुलं अधाक्षीत् ददाह। अथ च तद्दाहानन्तरं धूपविशेषरूपं कामशरञ्च ददाह यस्यारिर्यद्रिपुः शरस्य यदग्र येन दह्यते स तस्मिन् प्रीयत एव। शिवभयेन वेषान्तरधारिणं पुरं दैत्यं कामवाणञ्च मोहनाख्यं ददाहेत्यर्थः। धूपसमर्पणान्तां शिवपूजामकरोदिति भावः। ईदृशपुष्पपूजां तेन भक्तियुक्तेनापि कर्म्मणा पुररिपुः कामारिः शिवो मम कृते मदर्थं मयि विषये प्रीतिं न यास्यति एतावताऽपि सन्तुष्टो न भविष्यति, अतः कारणादिव तदग्रे पुरं कामशरञ्च ददाह। एवं कृते सन्तुष्टो भविष्यतीति धियेति भाव इति वा। पुररिपुर्मदनारिः इति च योगस्यैवात्र प्राधान्यान्न पौनरुक्त्यं। गुग्गुलौ कथितः पुर इति

तन्मुहूर्त्तमपि भीमतनूजा-
विप्रयोगमसहिष्णुरिवायं।
शूलिमौलिशशिभीततयाऽभू-
द्ध्यानमूर्च्छननिमीलितनेत्रः ॥ ३८ ॥
दण्डवद्भुवि लुठन् स ननाम
त्र्यम्बकं शरणभागिव कामः।

त्रिस्रः। तत्पुरः शेषषष्ठीसमासः। अन्यथाऽव्ययेन सह षष्ठीसमासनिषेधः स्यात्। तदिति लुप्तषष्ठीकविभक्तिप्रतिरूपकमव्ययं, पृथक् पदं वा ॥ ३७ ॥

तदिति। तन्मुहूर्त्तं तस्मिन् देवपूजाक्षणेऽपीत्यर्थः। भीमतनुजायाः विप्रयोगमसहिष्णुरयं नलः शूलिमौलौ वर्त्तमानाच्छशिना भीततयेव त्रिनेत्रध्यानेन यन्मूर्च्छनं एकाग्रतालक्षणः प्रलयः तेन हेतुना निमीलिते सङ्कोचितपक्ष्मीकृते नेत्रे येनैवम्भूतोऽभूत्। विरहित्वाद् हरशिरश्चन्द्रदर्शनस्य नितरां सन्तापकारित्वभिया ध्यानमूर्च्छनव्याजेन नेत्रे निमीलितवानित्यर्थः। पूजानन्तरं शिवस्य ध्यानं चकारेति भावः। शूलधारिणाऽपि यः शिरसि धृतः तस्मादधिकभयं सूचयितुं शूलिपदं प्रायोजि। तन्मुहूर्त्तं कालाध्वनोरत्यन्तसंयोगे (पा० २।३।५) इति द्वितीया। विप्रयोगं न लोकेति (पा० २।३।६९) षष्ठीनिषेधाद्द्वितीया ॥ ३८ ॥

दण्डवदिति। स नलो दण्डेन तुल्यं साष्टाङ्गयोगेन भुवि

आत्मशस्त्रविशिखासनबाणान्
न्यस्य तत्पदयुगे कुसुमानि ॥ ३९ ॥
त्र्यम्बकस्य पदयोः कुसुमानि
न्यस्य सैष निजशस्त्रनिभानि।
दण्डवद्भुवि लुठन् किमु काम-
स्तं शरण्यमुपगम्य ननाम ॥ ४० ॥

लुठन् सन् त्र्यम्बकं ननाम। किं कृत्वा। तस्य हरस्य पदयुगे पुष्पाञ्जलिदानार्थमञ्जलिना धृतानि कुसुमानि न्यस्य समर्प्य। तच्चोत्प्रेक्षते। तान्येव कुसुमानि आत्मनः शस्त्रं खड्गादि, विशिखासनं धनुः, बाणान् स्वशस्त्रभूतानि पुष्पाणि तस्य हरस्य पदयुगे न्यस्य समर्प्य शरणभाक् काम इवाद्यप्रभृति शस्त्रं न धारयामि दासोऽस्मि मच्छस्त्राणि त्वमेव गृहाणेत्यादिवचनपूर्व्वकं चरणयुगसमीपे स्वशस्त्राणि कुसुमानि परित्यज्य दण्डवद्भुवि लुठन् सदा रक्षेत्यादि वदन्, शरणं रक्षितारं शिवमेव भजमानो रूपसाम्यात् काम इव ध्यानानन्तरं पुष्पाञ्जलिदानपूर्व्वकं भक्त्यतिशयेन दण्डवत् प्रणाममकरोदित्यर्थः। विशिखासनं तूणीरं वा। अन्योऽपि शरणागत एवमेव करोति ॥ ३९ ॥

त्र्यम्बकेति क्षेपकः। सैष इत्यत्र सोचिलोपे चेदिति (पा० ६।१।१३४) सुलोपः। पूर्व्वश्लोकोक्त एवार्थः ॥ ४० ॥

व्यापृतस्य शतरुद्रियजप्ये
पाणिमस्य नवपल्लवलोलं ।
भृङ्गभङ्गिरिव रुद्रपराक्ष-
श्रेणिराश्रयत रुद्रपरस्य ॥ ४१ ॥
उत्तमं स महति स्म महेशस्तत्
पूरुषं पुरुषसूक्तविधानैः ।

व्यापृतेति । रुद्रशब्दात् परेषां पश्चाद्धार्य्यमाणानां रुद्राक्षाणामित्यर्थः । रुद्रः परो दैवतं येषां वा रुद्रपराः शिवभक्ताः तत्सम्बन्धिनां तैर्धार्य्यमाणानामिति यावत् । तादृशानाञ्च अक्षाणां मणीनां श्रेणिर्माला भृङ्गभङ्गिर्भ्रमरपङ्क्तिरिवास्य नलस्य नवपल्लववल्लीला यस्य तत्सदृशमित्यर्थः । एवंविधं पाणिं करं आश्रयत, सिषेवे । किम्भूतस्य । रुद्रपरस्य शिवभक्तस्य अत एव शतं रुद्रा देवता अस्य, शतरुद्रसम्बन्धिनः शतरुद्रियमन्त्रस्य "नमस्ते" इत्यादिशिवसूक्तस्य जप्ये जपे विषये व्यापृतस्य सव्यापारस्य, रुद्राक्षाणां रुद्रप्रियत्वात् नमस्त इत्यादिषडङ्गरुद्रजपं रुद्राक्षजपमालया चकारेत्यर्थः । भृङ्गमालाऽपि नवपल्लवं सेवते । शतरुद्रियेत्यत्र शतरुद्राद्घश्चेति वक्तव्यात् (पा० ४।२।२८वा०) घः । जप्ये तितुत्रेति (पा० ७।२।९) इड् निषेधः । "पद्माक्षैश्चैव रुद्राक्षैः" इत्यादि हारीतोक्ता हरोक्तश्च जपमालाविधिर्द्रष्टव्यः । अणिमादिसिद्धये पद्माक्षैश्चैव रुद्राक्षैरिति ज्ञातव्यं ॥ ४१ ॥

उत्तममिति । स महीभृन्नलः उत्तमं पूरुषं पुरुषोत्तमं

द्वादशापि च स केशवमूर्त्ती-
र्द्वादशाक्षरमुदीर्य्य ववन्दे ॥ ४२ ॥

पुरुषसूक्तस्य सहस्रशीर्षेत्यादिषोडशर्च्चा विधानैरनुष्ठानप्रकार-विशेषैः।

"दद्यात् पुरुषसूक्तेन यः पुष्पाण्यप एव वा।
अर्चितं स्याज्जगदिदं तेन सर्व्वं चराचरं॥
आनुष्टुभस्य सूक्तस्य त्रिष्टुभस्तस्य देवताः।
पुरुषो यो जगद्बीजमृषिर्नारायणः स्मृतः"।

तथा। "ॐकारपूर्व्वकैश्चैव सर्व्वैर्मन्त्रैः पृथक् पृथक्।
आवाहनासनं पाद्यमर्घ्यमाचमनीयकं॥
स्नानं वस्त्रोपवीतञ्च गन्धमाल्यादि च क्रमात्
धूपं दीपञ्च नैवेद्यं नमस्कारं प्रदक्षिणं।
षोडशोद्वासनं कुर्य्यादेष नारायणे विधिः"॥

इत्यादिस्मृतिवाक्यविहितप्रत्यृक्क्रमं निर्द्दिष्टषोडशोपचारैर्महति स्म अपूजयत्। तथा स नलः "यवादेसुवातेवगभभ न" इति व्युत्क्रमोक्तं द्वादशाक्षरं वासुदेवमन्त्रं वैष्णवागमोक्तक्रमेण उदीर्य्य सम्यगुच्चार्य्य द्वादशापि केशवसम्बन्धिनीर्मूर्त्तीर्व्वैष्णवो द्वादशशालग्रामशिलामूर्त्तीर्ववन्दे तुष्टाव प्रणनाम वा ता अप्यपूजयदिति भावः।

"शिला द्वादश भो वैश्य शालग्रामसमुद्भवाः।
विधिवत् पूजिता येन तस्य पुण्यं वदामि ते॥

कोटिद्वादशलिङ्गैस्तु पूजितैः स्वर्णपङ्कजैः।
यत्स्याद्द्वादशकल्पेषु दिनेनैकेन तद्भवेत्" ॥

इति विष्णुपुराणादिति भावः। पूर्व्वोक्तद्वादशाक्षरमुच्चार्य्य द्वादशसङ्ख्याका अपि केशवसम्बन्धिनोर्मूर्त्तीः सामर्थ्यादेतन्मन्त्राक्षरक्रमसूचिताः। "ॐ केशवाय धात्रे नमः" इति प्रकारेण

"द्वादशादित्यसहिता मूर्त्तीर्द्वादश विन्यसेत्।
केशवाद्याःक्रमाद्देहे वक्ष्यमाणविधानतः॥
ललाटे केशवं धात्रा कुक्षौ नारायणं पुनः।
अर्य्यम्णा हृदि मित्रेण माधवं कण्ठदेशतः॥
वरुणेन च गोविन्दं पुनर्दक्षिणपार्श्वके।
अंशुना विष्णुमंसस्थे भगेन मधुसूदनं॥
गले विवस्वता युक्तं त्रिविक्रममनन्तरं।
वामपार्श्वस्थमिन्द्रेण वामनाख्यमथांसके॥
पूष्णा श्रीधरनामानं गले पर्जन्यसंयुतं।
हृषीकेशाह्वयम्पृष्ठे पद्मनाभं ततःपरं॥
त्वष्ट्रा दामोदरं पश्चाद्विष्णुना ककुदि न्यसेत्।
द्वादशार्णमहामन्त्रं ततो मूर्द्ध्नि प्रविन्यसेत्"॥

द्वादशाक्षरमन्त्रगर्भितमिति ज्ञातव्यं। इति प्रकारान्तरमागमोक्तं द्रष्टव्यं। मदीयानिति पाठे नितरामागमशास्त्रकोविदः परमभक्तस्येत्यर्थः। पुरुषाः पूरुषा नराः, इत्यमरः॥ ४२ ॥

मल्लिकाकुसुमदुण्डुभकेन
स भ्रमीवलयितेन कृते तं ।
आसने निहितमैक्षत साक्षात्
कुण्डलीन्द्रतनुकुण्डलभाजं ॥ ४३ ॥

मेचकोत्पलमयी बलिबन्धु-
स्तद्बलिस्रगुरसि स्फुरति स्म ।

कथमपूपुजदित्याह । मल्लिकेति । स नलो भ्रमीं भ-
णैर्वेष्टनैर्वलयितेन वलयाकारीकृतेन मल्लिकाकुसुमम धना
दुण्डुभकेन निर्विषनिष्फणस्थूलराजिलतुल्येन घनस्थूल रदाम्ना
कृत्वा नलेनैव कृते रचिते आसने निहितं स्थापितं तं पुरुषो-
त्तमं साक्षात् तत्त्वतः कुण्डलिनां चक्षुःश्रवसामिन्द्रः शेषस्तस्य
तनुः शरीरं तस्य कुण्डलं पुच्छवेष्टितवलयाकारशरीरभागं तद्भ-
जत इति कुण्डलाकारे शेषशरीरे वर्त्तमानमिवैक्षत। दुण्डुभस्य
विफणतया साम्यात् स्थूलघनतरे पुष्पदाम्नि दुण्डुभपदं लाक्ष-
णिकं। दुण्डुभप्रतिकृतिर्दुण्डुभकः। इवेति प्रतिकृताविति (पा०
५।३।९६) कन्। दुडि निमज्जने दुण्डतीति दुण्डुभ इत्यौणा-
दिकः पृषोदरादिर्वा ॥ ४३ ॥

मेचकेति। मेचकोत्पलानि नीलोत्पलानि तन्मयी तेन
नलेन समर्पिता बलिस्रक् पूजामाला बलिबन्धुः बलेर्बन्धनका-
रिणः श्रीविष्णोरुरसि स्फुरति स्म, अशोभत। उत्प्रेक्षते। कौ-
स्तुभाख्यमणेः सम्बन्धि कुट्टिमं कौस्तुभमणिबद्धा भूः वक्षोलक्षणं

कौस्तुभाख्यमणिकुट्टिमवास्तु-
श्रीकटाक्षविकटायितकोटिः ॥ ४४ ॥

स्वर्णकेतकशतानि स हेम्नः
पुण्डरीकघटना रजतस्य ।
मालयाऽरुणमणेः करवीरं
तस्य मूर्द्धि पुनरुक्तमकार्षीत् ॥ ४५ ॥

तद् वास्तु वसतिस्थानं यस्यास्तस्या श्रियः कटाक्षाणां विकटायितानि विस्तारान्नीलतरनेत्रगोलकवक्रविस्फुरितकिरणास्तेषां कोटिःपरम्परेव। नीलोत्पलमालायाः वक्षस्येव वर्त्तमानत्वात् तत्रैव च लक्ष्म्या अपि वर्त्तमानत्वात् साम्यं। तत्कटाक्षविकटायितकोटिरिव अशोभत इति प्रतीयमानोत्प्रेक्षा। वलिबन्धुः त्वनि पूर्व्वेण द्वितीयेति योगविभागात् समासः। विकटायितं आचारक्विबन्तत्वाद्भावे निष्ठा ॥ ४४ ॥

स्वर्णेति। स नलः तस्य पुरुषोत्तमस्य मूर्द्धि हेम्नः सुवर्णघटितपुष्पाणां मालया कृत्वा स्वर्णकेतकीपुष्पाणां शतानि,तथा रजतस्य रूप्यघटितपुष्पाणां मालया कृत्वा पुण्डरीकाणां सिताम्भोजानां घटनां समर्पणां, तथाऽरुणमणेः समर्पितमाणिक्यपद्मरागादिरक्तवर्णमणीनां मालया च कृत्वा करवीरपुष्पाणि एतत् सर्व्वं पुनरुक्तमकार्षीत्। सुवर्णेनान्येनैव पूजायाः सिद्धत्वात् स्वर्णकेतकादिनिरर्थकं चकारेत्यर्थः। स्वर्णकेतकादिभिः सुवर्णघटितपुष्पादिभिश्च श्रीपुरुषोत्तममपूजयदिति भावः। विष्णुपूजायां

नान्यभक्तबलिरन्ननिवेद्यै-
स्तस्य हारिणमदेन स कृष्णः।
शङ्खचक्रजलजातवदर्चः
शङ्खचक्रजलपूजनयाऽभूत्॥ ४६॥

कमलकरवीरजपावाणपुष्पव्यतिरिक्तानां रक्तपुष्पाणां निषेधाद्वारापितकरवीरकुसुमपूजानिषेध इत्यविरोधः। पुनक्तं नपुंसकमनपुंसकेन (पा०१।२।६९) इत्येकशेषेऽन्द्वात्रौ॥ ४५॥

नान्येति। स पुरुषोत्तमः तस्य नलस्यान्ननिवेद्यैः तेन समर्पितैर्नानाविधौदनानामुपहारैः कृत्वा नान्योऽतिमहान् भक्तबलिः, ओदनोपहारो यस्य, अथ च अतिमहानभक्तःश्रद्धापरो बलिर्वैरोचनिर्यस्यैवम्भूतोऽभूत्। तथा नलसमर्पितेन हारिणमदेन कस्तूर्या कृष्णवर्णोऽथ च कृष्णनामाऽभूत्। तथा हेमरूप्यादिबद्धदक्षिणावर्त्तादिशङ्खानां चक्रं समूहस्तत्र स्थितेन जलेन कृत्वा या पूजना अभिषेकार्घ्यदानादिरूपा तया कृत्वा शङ्खचक्रजलेन जातवती सम्पन्नाऽर्चा पूजा यस्य, अथ च शङ्खःपाञ्चजन्यः चक्रं सुदर्शनं जलजातं पद्मं तानि विद्यन्ते यस्यास्तादृशी शङ्खचक्रपद्मयुक्ताऽर्चा प्रतिमा यस्यैवम्भूतोऽभूत्। पुरुषोत्तमसम्बन्धिनामेतेषां शब्दानामन्वर्थत्वं। एतत्कृतान्ननैवेद्यादिसमर्पणेन इदानीमभूदित्यर्थः। एतन्निबन्धना एवास्य एताः सञ्ज्ञा इति वा। अत्र प्रतीयमानोत्प्रेक्षा। प्रतिकृतिरर्चा पुंसि इत्यमरः। नान्येति न समासः। हारिणेऽपि सम्बन्धेऽण्॥ ४६॥

राज्ञि कृष्णलघुधूपजधूमाः
पूजयत्यहिरिपुध्वजमस्मिन्।
निर्ययुर्भवधृता भुजगा भी-
र्दुर्यशो मलिनिता इव जालैः॥ ४७॥

अर्घनिस्वमणिमाल्यविमिश्रैः
स्मेरजातिमयदामसहस्रैः।
तं पिधाय विदधे बहुरत्न-
क्षीरनीरनिधिमग्नमिवैषः॥ ४८॥

राज्ञीति। कृष्णलघु कृष्णागुरुः तस्य धूपजधूमा धूपकरणसम्बन्धिनो धूमा अस्मिन् राज्ञि नलेऽहिरिपुर्गरुडो ध्वजे यस्य तं गरुडध्वजं धूपोपचारेण पूजयति सति जालैर्गवाक्षैर्वहिर्निर्ययुः। उत्प्रेक्षते। भीरेव दुर्यशो गरुडासक्तिः भयजन्येन अयशसा स्वतो धवलतरा अपि मलिनिताः श्यामीकृता देवतागारस्थितेन भक्तेन हरेण स्वदेहे भूषणत्वेन धृता वासुकिप्रमुखा भुजगा इव। अयमस्मद्रिपुकेतुं याजयति, अतो रिपुनिकटे स्थातुमशक्यमिति हराश्रिताः सबला अपि सर्पा दुर्यशोमलिनिता इव दण्डायमानकृष्णागुरुधूमव्याजेन जालैर्निर्ययुरित्यर्थः। अन्योऽपि भीमलिनो जालादिद्वारेण निर्गच्छति। अगुरुपर्यायो लघुशब्दः तेन कृष्णागुरुरित्यर्थः॥ ४७॥

अर्घेति। एष नलः अर्घेन मूल्येन निस्वा दरिद्रास्तेषां अत्युत्तमानां मणीनां माल्यैर्मालाभिर्विमिश्रैः स्मेरजातिम-

अक्षसूत्रगतपुष्करवीज-
श्रेणिरस्य करसङ्करमेत्य।
शौरिसूक्तजपितुः पुनरापत्
पद्मसद्मचिरवासविलासं॥ ४९॥

यदामसहस्रैर्विकसितमालतीकुसुममालासहस्रैः तं पुरुषोत्तमं पिधाय आच्छाद्येव बहूनि रत्नानि यस्मिन् एवम्भूतो यः क्षीर-नीरनिधिस्तत्र मग्नमिव विदधे चकार। मध्ये मध्ये मणि-मालाभिर्मध्ये पुष्पमालाभिः संवेष्ट्य बहुरत्नक्षीरसमुद्रशायिन-मिव चकारेत्यर्थः। रत्नस्थाने रत्नान्येव क्षीरस्थाने च तानि दामानि तै राशिभिः पर्य्यपूपुजदिति भावः। सम्पदतिशयो भक्त्यतिशयस्य सूचितः। बहूनि रत्नानि क्षीराणि च यस्मिन् स चासौ निधिश्चेति वा॥ ४८॥

अक्षेति। अक्षसूत्रजपमालां तां गतानि प्राप्तानि तत्र वि-द्यमानानीति यावत्। ईदृशानि यानि पुष्करवीजानि कमल-वीजानि तेषां श्रेणिः पद्माक्षरचिता जपमालिका शौरिसूक्त-जपितुः "विष्णोर्नुकं" इत्यादिविष्णुसूक्तजपशीलस्य अस्य नलस्य करसङ्करं पाणिपद्मसम्बन्धमेत्य प्राप्य पुनरपि पद्मरूपे सद्मनि स्वगृहे चिरं वासः स्थितिस्तेन कृत्वा यो विलासः शोभा त आपत्, प्राप। विष्णुमन्त्रा हि पद्माक्षमालया जप्यन्ते नलक-रस्य पद्मसदृशः तत्सम्बन्धात् पद्माक्षमाला पुनरपि पद्मसद्म-निवासं प्राप्तेवेति प्रतीयमानोत्प्रेक्षा। पुष्कराम्भोरुहाणि चेत्य-

कैटभारिपदयोर्नतमूर्द्ना
सञ्चिता विचकिलस्रगनेन ।
जह्नुजेव भुवनप्रभुणाऽभात्
सेविताऽनुनयताऽऽयतमाना ॥ ५० ॥

सरः। अपितु: तास्कील्ये इति द्वितीयेति योगविभागात् पूर्व्वेण समासः ॥ ४८ ॥

कैटभेति। अनुनयता अर्थादात्मानमेव चरणसमीपं प्रापयता भुवनप्रभुणा लोकनाथेन नतमूर्द्ना नम्रशिरसा प्रणामलक्षणं षोडशमुपचारं कुर्व्वता अनेन नलेन कैटभारे: श्रीविष्णो: पदयो: सञ्चिता पुष्पाञ्जलित्वेन समर्पिता आयतमाना अतिदीर्घा विचकिलस्रक् मल्लिकामाला जह्नुजा गङ्गेवाभात्। चरणसम्बन्धादतिदैर्घ्यादुज्ज्वलतरत्वाच्च गङ्गेव शुशुभ इत्यर्थ:। साप्येवंविधा। अथ च अन्याऽपि मानिनी नायिका एवंविधा प्रियेणैवमनुनीयते। अथ च भूलोकं प्रति गमनार्थं यतमाना सप्रयत्ना अतएवानु पश्चान्नयता परावर्त्त्य पुनरपि ब्रह्मलोकं प्राप्य पुनरत्रागन्तव्यमिति प्रार्थयमानेन नतमूर्द्ना लोकनाथेन ब्रह्मणा सेविता जाह्नवीव। भुवनप्रभुणा रुद्रेण वा उक्तविशेषणविशिष्टेन जलप्रभुणा वरुणेन समुद्रेण वा सेवितेति वा। प्रणामान्तां षोडशोपचारपूजां समापयदिति भाव:। स्त्रतो विचकिलो मल्लीप्रभेदे मदनेऽपि चेति विश्व: ॥ ५० ॥

स्वानुरागमनघः कमलायां
सूचयन्नपि हृदि न्यसनेन।
गौरवं व्यधित वागधिदेव्याः
श्रीगृहोर्ध्वनिजकण्ठनिवेशात्॥ ५१॥
इत्यवेत्य वसुना बहुनाऽपि
प्राप्नुवन्न मुदमर्चनया सः।
सूक्तिमौक्तिकमयैरथ हारै-
र्भक्तिमैहत हरेरुपहारैः॥ ५२॥

स्वेति। इतीति युग्मं। स नलः इति पूर्व्वोक्तं श्रीविष्णोर-भिप्रायमवेत्य ज्ञात्वा बहुनाऽपि वसुना स्वर्णमणिवसनादिना लक्ष्मीयानीयेन समर्पितेन कृता या अर्चना तया मुदं न प्राप्नुवन् हर्षमलभमानः। अथ पश्चात् सूक्तयो सरसशोभ दवन्यास्तद्रूपाणि मौक्तिकानि तन्मयैर्हारैरेकावल्यादिरूपैर्व उपहारैः पूजनैः कृत्वा भक्तिमैहत तेन हरेर्भक्तिर्महतं कृते-त्यर्थः। सम्यग्वैदिकपूजनं कृत्वा श्रीपुरुषोत्तमदशावतारादि-स्तुतिं प्रारेभ इति भावः। इति किम्। न विद्यते अघं दुःखं पापं दारिद्र्यञ्च यस्मात् सोऽनघः पुण्यश्लोकः श्रीविष्णुः हृदि न्यसनेन स्थापनेन कृत्वा कमलायां लक्ष्म्यां विषये स्वस्यानु-रागं प्रेमभरं तां प्रति लोकं प्रति वा सूचयन्नपि श्रीगृहा-त्निजहृदयादूर्द्ध्वमुपरिभागे वर्त्तमानो निजकण्ठस्तत्र निवेशात् स्थापनाद्धेतोः वागधिदेव्याः सरस्वत्या गौरवं व्यधित बहुस-

दूरतः स्तुतिरवाग्विषयस्ते
रूपमस्मदभिधास्तव निन्दा ।
तत् क्षमस्व यदहं प्रलपामी-
त्युक्तिपूर्व्वमयमेतदवोचत् ॥ ५३ ॥

स्थानमकृत । अन्योऽपि राजादिः एकां प्रियामधोभागे स्थापयन्नालिङ्गनादिना सम्भावयन्नन्यां तत्सपत्नीं प्रियतमां तदीयगृहस्योर्द्धदेशे स्थापयन् कण्ठाश्लेषञ्च कुर्व्वंस्तस्या गौरवं करोति । तथा विष्णोर्वक्षसि लक्ष्मीः तिष्ठति तदुपरिभागे कण्ठे सरस्वती तिष्ठति विष्णोः सरस्वत्यां गौरवमधिकमिति ज्ञात्वा सरस्वत्या कृत्वा स्तुतिश्चक्रे इत्यर्थः । मौक्तिकरूपसूक्तैर्नैर्मल्यं सूच्यते । स्तुत्या नलस्य भक्त्यतिशयश्च ॥ ५१ ॥ ॥ ५२ ॥

स्वमौद्धत्यं परिहरन् स्तुतिमाह । दूरत इति । अयं नलः इत्युक्तिपूर्व्वं यथातथा पूर्व्वमेवमुक्त्वा एतद्वक्ष्यमाणप्रकारमवोचत् । इति किं । हे स्वामिन् ते तव स्तुतिर्दूरतो नितरां अवाग्विषयो वाचामगोचरो यतस्तव रूपं "यतो वाचो निवर्त्तन्ते" इत्यादि श्रुतेरर्थाद्गोचरो नेति मदीया स्तुतिः कथङ्कारं कर्त्तुं शक्या स्वरूपकथनेऽप्यशक्यत्वात् तव स्तुतिरप्यशक्यकरणेति अत एवास्माभिः कृताऽभिधा भवद्गुणवर्णनविषया वाणी तव निन्दैव । अत्यन्ताल्पकस्तावकत्वादवाग्गोचरस्यापि वा गोचरकरणाच्चेत्यर्थः । एवं सत्यपि मूर्खतया यदहं प्रलपामि स्वरू-

स्वप्रकाश जड एष जनस्ते
वर्णनं यदभिलष्यति कर्त्तुं।
नन्वहर्पतिमहः प्रति स स्या-
न्न प्रकाशनरसस्तमसः किं ॥ ५४ ॥
नैव वाङ्मनसयोर्विषयो भू-
स्त्वां पुनर्न कथमुद्दिश[illegible]ते।

पाशामान्निरर्थकं वदामि तत् क्षमस्वेति। प्रलपामीत्यनेन नितरामनौद्धत्यं सूचितं ॥ ५३ ॥

स्वेति। ननु हे स्वप्रकाश सूर्यादिवत्प्रकाशान्तरनिरपेक्ष परमात्मन्, एष मल्लक्षणो जडोऽविद्याच्छादितचैतन्यो जनस्ते वर्णनं कर्त्तुं यदभिलपति सोऽहर्पतेः सूर्य्यस्य महस्तेजः प्रति लक्षीकृत्य सूर्य्यतेजोऽहं प्रकाशयिष्यामीति तमसोऽन्धकारस्य प्रकाशने रसोऽनुरागः किं न स्यात्, अपि तु स्वप्रकाशस्य तव वर्णनं जडस्य ममाभिलाषः सूर्य्यतेजःप्रकाशने तमसोऽभिलाष इवात्यन्तमनुचित एवेत्यर्थः। आत्मा स्वप्रकाश इति वेदान्तसिद्धान्तः ॥ ५४ ॥

ननु यदि त्वं जडो मदीयं स्वरूपं न जानासि तर्हि त्वदीये वाङ्मनसी कथं मत्परायणे इत्याशङ्कां परिहरन् स्तुत्यवसरं दातुमाह। नैवेति। हे भगवन् त्वं "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह" इत्यादिश्रुतिप्रामाण्याद्वाङ्मनसयोर्विषयो गोचरो नैव भूः ताभ्यां ग्रहीतुं न शक्यम एव यद्यपि तथापि ते

उत्कचातकयुगस्य घनः स्यात्
तृप्तये घनमनाप्नुवतोऽपि ॥ ५५ ॥
छद्ममत्स्यवपुषस्तव पुच्छा-
स्फालनाज्जलमिवोद्धतमब्धेः ।

वाङ्मनसे पुनस्त्वां कथं नोद्दिशतां, अपि तु अविषयमपि त्वामुद्दिश्य प्रवर्त्ततामेवेत्यर्थः। दृष्टान्तमाह। अतिदूरवर्त्तित्वात् घनं मेघं अनाप्नुवतोऽलभमानस्यापि उत्कस्य जलार्थमुत्कण्ठितस्य चातकस्य स्त्रीपुंसयुगस्य घनो मेघो जलदानेन तृप्तये स्यादेवेति दृष्टान्तेन अविषयोऽपि भवान् स्तुतो ध्यातश्च मोक्षहेतुः स्वयमेवानुग्रहीष्यतीति तव स्तुतिं कर्त्तुं युक्तमेवेति भावः। वाङ्मनसयोः अचतुरेत्यादिना (पा० ५।४।७७) साधुः ॥ ५५ ॥

इदानीं प्रथमं मत्स्यावतारं स्तोतुमाह। छद्मेति। हे हरे शङ्खासुरापहृतवेदोद्धरणरूपेण छद्मना मत्स्य एव वपुर्यस्य तस्य तव पुच्छेनास्फालनादाघातादूर्द्धमुद्धतं क्षिप्तमुच्छलितं अब्धेः सागरस्य जलमेव गगनाङ्गणस्य सङ्गात् सम्बन्धात् श्वैत्यं धवलतामेत्य प्राप्य विबुधालयस्य स्वर्गस्य गङ्गा मन्दाकिनी आविरस्ति प्रकटीभवति। तदेव जलं मन्दाकिनीभूय गगने स्फुरतीत्यर्थः। वेदरक्षणद्वारा लोकानुग्रहार्थमेव त्वया तत्तच्छरीरं धार्य्यते इति भावः। एवमुत्तरत्रापि ज्ञेयं। श्वैत्यमेवेति वाऽन्वयः। “यदा यदा हि धर्म्मस्य ग्लानिर्भवति भारत” इत्यादिश्रीकृष्णवचनमेव छद्मपदेन सूचितं। सागरोदकस्याश्रयो-

श्वैत्यमेत्य गगनाङ्गणसङ्गा-
दाविरस्ति विबुधालयगङ्गा ॥ ५६ ॥
भूरिसृष्टिधृतभूवलयानां
पृष्ठसीमनि किणैरिव चक्रैः ।
चुम्बिताऽवतु जगत्क्षितिरक्षा
कर्म्मठस्य कमठस्तव मूर्त्तिः ॥ ५७ ॥

पार्थिवतया प्रतिभासमानस्यापि गगने क्षिप्तया निरुपाधिकं शुक्लमेवापां रूपं प्रकटितमित्यनेनातिस्थूलतरशरीरवत्त्वं सूचितं। नदी चाद्यापि तथैव तिष्ठति न त्वधः पततीति सामर्थ्यातिशयः सूच्यते। यद्यपि नलः शैव इति प्रथा तथापि शिवस्य विष्णु-भक्तत्वाद्विष्णुस्तुत्यै। च शिवस्य प्रीतिसम्भवादैकरूप्याच्च नलस्य विष्णुस्तुतिकरणं श्रीहर्षस्य च परमवैष्णवत्वात् पुरुषोत्तमस्तु-तिनिबन्धनं युक्तमेवेति न काचिदनुपपत्तिः। अत एवोपसंहा-रेऽपि हरिहरं परिपूज्येत्युक्तं ॥ ५६ ॥

कूर्म्मं वर्णयति॥ भूरीति। हे भगवन् तव कमठसञ्ज्ञा मूर्त्तिर्जगदवतु। किम्भूता। भूरिषु सृष्टिषु धृतानां प्रतिसर्ग-भूवलयानां किणैः अतिघर्षणनिष्ठुरीभूतमस्थानैर्वर्त्तुलग्रन्थिभिरेव चक्रैः चक्राकाररेखाविन्यासविशेषैः पृष्ठसीमनि स्थले चुम्बिता स्पृष्टा। किम्भूतस्य। क्षितौ क्षये प्रलये रक्षायां च कर्म्मठस्य कर्म्मशूरस्य पृष्ठे धारणेन क्षितिरक्षणक्षमस्य। पृथ्वीधारणद्वारा लोकानुग्रहार्थमेव कमठरूपं त्वया धृतमिति भावः। सप्तपाता-

दिक्षु यत्खुरचतुष्टयमुद्रा-
मभ्युपैमि चतुरोऽपि समुद्रान् ।
तस्य पोत्रिवपुषस्तव दंष्ट्रा
तुष्टयेऽस्तु मम वास्तु जगत्याः ॥ ५८ ॥
उद्धृतिस्खलदिलापरिरम्भा-
क्षोमभिर्वहिरितैर्बकुहष्टैः ।

लान्तेऽधस्तात् फणिमण्डलेन शेषो भुवं बिभर्त्ति ततोऽप्यधो ब्रह्माण्डाधःकटाहस्य भारं पृष्ठे वहन् ब्रह्माण्डावरणरूपे जले कूर्म्मराजो वर्त्तत इति पुराणं । एतेन प्रतिसर्गमनन्तभूमण्डल-धारणेन अनिर्वाच्यमहिमत्वं सूचितं । कमठपृष्ठे च स्वभावतस्त्र-क्राणि भवन्ति ॥ ५७ ॥

श्लोकद्वयेन वराहं वर्णयति ॥ दिक्ष्विति । अहं चतसृषु प्राच्यादिदिक्षु चतुरोऽपि समुद्रान् यस्य वराहस्य खुराणां चतुष्टयस्य मुद्रां विन्यासं स्थापितचरणातिभारमज्जातभूगर्भ-मेव अभ्यवैमि जाने । तस्य पोत्रिवपुषो महावराहदेहस्य तव दंष्ट्रा मम तुष्टये कामपूर्त्त्याऽऽनन्दाय अस्तु । किम्भूता दंष्ट्रा । जगत्याः पातालादुद्धरणावसरे दंष्ट्राग्रधारणाद् भूमेर्वास्तु व-सतिगृहं धृतमभूदित्यर्थः । कोलःपोत्री किरिः किटिरित्य-मरः ॥ ५८ ॥

उद्धृतीति । हे केल्या क्रीडामात्रेण कोल धृतवराहरूप भगवन् हिरण्याक्षं दैत्यं हत्वा पातालात् सकाशादुद्धृतौ उद्धु-

ब्राह्ममण्डमभवद्वलिनीयं
केलिकोल तव तत्र न मातः ॥ ५९ ॥
दानवाद्यगहनप्रभवस्त्वं
सिंह मामव रवैर्घनघोरैः।

रणसमये स्खलन्त्याः पतन्त्या इलाया भुवः परिरम्भात् समारम्भेण धारणात्, आलिङ्गनाच्च हेतोः बहु नितरां हृष्टैः उन्नतीभूतैः अत एव ब्रह्माण्डं निर्भिद्य वहिरितैर्निर्गतैर्लोमभिः कृत्वा ब्राह्ममण्डं तव वलेः पूजायाः सम्बन्धिनीयं तत्कालविकसितकदम्बकुसुममिव अभवत्। किम्भूतस्य। तत्र ब्रह्माण्डे स्थूलतरदेहत्वान्न मातः सम्मातुमशक्तस्य। एवंविधकुसुमपूजायोग्यस्त्वमेव भवसीत्यर्थः। अन्योऽपि योषिदालिङ्गनादुदितरोमाञ्चो भवति। ब्राह्मं जाताविति साधुः। मातः मामान इत्यस्माच्छता॥ ५९

श्लोकद्वयेन श्रीनृसिंहं वर्णयति। दानवेति। हे नृसिंह -नवानामाद्यस्य प्रथमस्य हिरण्यकशिपोर्गहनं मरणरूपं सङ्कटं तदर्थं प्रभव उत्पत्तिःप्रा[illegible]र्थ्यं यस्य तन्मरणार्थं कृतावतारः, अथ च दानवो हिरण्यकशिपुः तद्रूपमाद्यं पुरातनं यद्गहनं वनं तत्र प्रभवो यस्य,पुरातने हि वने सिंहसम्भवो युक्तः,अथ च दानवानामाद्यभक्तः श्रीहरिभक्तत्वान्मुख्यः प्रह्लादस्तस्य गहने पितृकारितताडनादिदुःखनिमित्ते हिरण्यकशिपुविदारणद्वारा भक्तप्रह्लादसंरक्षणार्थं धृतोत्पत्तिर्येन तादृशस्त्वं घनवन्मेघवद्घोरैर्गम्भीरैर्निविडैर्भीषणैश्च वा रवैः सिंहनादैर्मामव। किम्भूतः। वैरिण:

वैरिदारिदिविषन्मुक्तास्त्र-
ग्रामसम्भवभवन्मनुजार्द्धः ॥ ६० ॥
दैत्यभर्त्तुरुदरान्धुनिविष्टां
शक्रसम्पदमिवोद्धरतस्ते ।
पातु पाणिसृणिपञ्चकमस्मा-
श्छिन्नरज्जुनिभलग्नतदन्त्रं ॥ ६१ ॥

शत्रून् दारयन्ति तच्छीलानि दिविषदां मुनीनां देवानाञ्च मुक्तानि अस्त्राणि च तेषां ग्रामः समूहस्तस्माद् सम्भव उत्पत्तिर्यस्य तादृशो भवन् सम्पद्यमानो मनुजो मनुष्य एवार्द्धं एकदेशो यस्य। दानवाघेति पाठे दानवानां पापानि तेषां गहनं लक्षणया बाहुल्यं तेन प्रभवो यस्य दानवदुरितोद्रेकात् तिर्य्यग्योनिः सिंहरूपस्त्वं दिविषत्पुण्योद्रेकाच्चान्मयोनिर्मनुष्यस्त्वमित्यर्थः। दानवनामाद्यस्य हिरण्यकशिपोर्गहने सभामध्योद्याने प्रभवः प्रकटनं यस्य वा। एतेन स्वर्गवासिनां पुण्यैरस्त्रैश्च कृतमनुष्यार्द्धदेहः स्वतेजोनिर्म्मितसिंहार्द्धश्च नरहरिर्हिरण्यकशिपोर्म्महासभोपवने एवावततारेति सकलपुराणसंवादः। प्रकटितस्तम्भादिति तु प्रवादमात्रमिति भागवतविरोधादपेक्ष्यं ॥ ६० ॥

दैत्येति। हे श्रीनृसिंह ते पाणिसम्बन्धिनां सृणीनां तीक्ष्णतरनखरूपाणामङ्कुशानां पञ्चकमस्मान् पातु। किम्भूतस्येव तव। दैत्यभर्त्तुः हिरण्यकशिपोः उदरलक्षणे अन्धौ कूपे निविष्टां पतितां शक्रसम्पदं उद्धरत इव, तस्माद् वहिर्निर्गमयत इव।

स्वेन पूर्य्यत इयं सकलाशा
भो बले न मम किं भवतेति।

किम्भूतं पञ्चकं। छिन्नरज्जुनिभानि मध्यत्रुटितपूर्वकपतितदोरक-तुल्यानि लग्नानि तस्य दैत्यरिपोः उदरस्य चाङ्गाणि यत्र यस्य वा। यथा कूपपतितं वस्तु समुद्धर्त्तुं लोहनिर्म्मिताङ्कुशपञ्चकं कूपमध्ये निक्षिप्य वलयित्वा पूर्व्वनिमग्नरज्जुखण्डसहितं तद्यथाऽऽदाय निर्गच्छति तथा तव रज्जुस्थानीयभुजदण्डकपाणिजस्र-णिपञ्चकं दैत्यराजोदरकूपपतितामिन्द्रसम्पदमुद्धरच्छिन्नरज्जु-निभलग्नतदन्त्रं मन्नाममवत्वित्यर्थः। सृणाति हिनस्तीति सृणि-रौणादिकः। अस्मान्, अस्मदो द्वयोश्चेति (पा० १।२।५९) बहुत्वं ॥ ६१ ॥

श्लोकचतुष्टयेन वामनं वर्णयति। स्वेनेति। हे वामन इति पूर्व्वार्द्धोक्ता या कपटवाक् तस्यां विषये पटीयान् अतिनिपुणो वटुर्ब्रह्मचारिवेषधारी च यतस्त्वं नोऽस्मदादीनां मम वा मनसः प्रमदं हर्षं देहि। सर्व्वाभिलाषपूरणं कुर्व्वित्यर्थः। वटुवाचश्च कप-टवाचो भवन्ति। इति किं। पादत्रयमात्रस्थलयाचिनि वामने किमेतदल्पीयस्त्वया याचितं सकलमेतद्भुवनं गृहाण अहं ददामीति दानशूरत्वाद्बलिचक्रवर्त्तिनि भाषमाणे श्लेषवक्रोक्तिच्छलेन वामनस्य प्रत्युत्तरमेतत्। भो बले चक्रवर्त्तिन् भवता स्वेन आत्मना हेमरत्नादिद्रव्येण वा इयं मदीया सकला आशा सर्व्वोऽप्यभिलाषो न पूर्य्यते, अपि तु परिपूर्णीकरिष्यत एव, परं

दातुं समर्थ एव परन्तु मम प्रयोजनं नास्ति कुटीनिर्म्माणार्थं पादत्रयमितं स्थलमेव देहीत्यर्थः। स्वेन आत्मीयेन बलेन सैन्येन च निजशक्त्या वा सकला दिक् भवता पूर्य्यते आद्रियत एव तथाऽपि मम किं तेन यो यद्याचते तस्मै तद्ददामीति प्रत्यक्षदर्शनाद्धस्ताभिनयदर्शनीयेयं सकलानां तृष्णा। भो बले त्वया परिपूर्णीक्रियते, अतो मम कलया लेशेन सहिताऽन्यीयसीति यावत्। एवम्भूता पादत्रयमिता। तस्मात् किं न पूर्य्यते अपि तु पूरयिष्यते एव। अथ च भो बले इयं सकलाऽपि विदित्या मम स्वेनात्मना न पूर्य्यतेऽपित्वावरिष्यत एव। भवता किं कर्त्तुं शक्यते, अपि तु न किञ्चिदित्यर्थ इति वा। मया सकलाऽपि दिगात्मना पूर्य्यते भवता बलेन किं कर्त्तुं शक्यत इति वा। अथ च भो बले पादत्रययाचनविषया मम सकला तृष्णा भवता स्वेनात्मस्वरूपेण स्वदेहेन किं न पूर्य्यतेऽपि तु पूरयिष्यत एव मदीयःशरीरधारणेन लोकद्वये पादद्वयेन मया व्याप्ते प्रतिश्रुतं तृतीयं पादमदातुं निरयो भविष्यतीति भिया अवशिष्टपदस्थापनार्थं स्वशरीरमेव त्वया दास्यत इत्यर्थः। त्वां पाताले पातयिष्यामीति भावः। भूस्वर्गरूपलोकद्वयमेव बलेः स्वं नरकपतनभिया स्वशरीरमेव तृतीयपादत्वेन दत्तमिति श्रीभागवते।

दानवारिरसिकाय विभूते-
र्वश्मि तेऽस्मि सुतरां प्रतिपत्तिं।
इत्युदग्रपुलकं बलिनोक्तं
त्वां नमामि कृतवामनमायं॥ ६३॥

"पदं तृतीयं कुरु शीर्ष्णि मे निजं" इति वचनात्। इत्यादिकपटवाग् ज्ञेया। प्रमदसम्मदौ हर्ष इति (पा० ३।३।६८) साधुः॥ ६२॥

एवं वामनेनोक्ते बलिरुत्तरमाह। दानेति। हे वामन अहं कृता वामनस्य ह्रस्वपुरुषस्य माया येन तथाऽहमनेन ज्ञातः इति ज्ञात्वा जाताश्चर्यवशादुदग्रपुलकं सञ्जातरोमाञ्चमिति पूर्वार्द्धोक्तप्रकारेण बलिचक्रवर्त्तिना उक्तं भाषितं त्वां नमामि। इति किं। हे ब्रह्मन् अस्मि अहं दानवारिणि रसिकाय कृताभिलाषाय ते तुभ्यं विभूतेः स्वीयसम्पदः सुतरां प्रतिपत्तिं सङ्कल्पेन दानं वश्मि इच्छामि। सर्व्वामपि सम्पदं तुभ्यं दातुमिच्छामि। अथ त्वं दानवानामरिः शत्रुरसि ते तव कायविभूतेः शरीरवैभवस्य प्रतिपत्तिं ज्ञानं नितरामहमिच्छामि कीदृशं महच्छरीरं धारयिष्यसि तद्द्रष्टुमिच्छामीत्यर्थः। यद्वा तव कायवैभवस्य प्रतिपत्तिं रूपान्तरं धारयिष्यामीति त्वया सूचितं सुखेन धारणीयमित्यहं कामये इत्यर्थः। अस्मीत्यहमर्थेऽव्ययं॥ ६३॥

भोगिभिः क्षितितले दिवि वासं
बन्धमेष्यसि चिरं ध्रियमाणः।
पाणिरेष भुवनं वितरेति
च्छद्मवाग्भिरव वामन विश्वं॥ ६४॥

एवं बलिनोक्तो वामनः प्राह। भोगिभिरिति। हे वामन इति एवंरूपाभिः छद्मवाग्भिः कपटवचनैरुपलक्षितस्त्वं विश्वं अव रक्ष। इति किं। भो बले चिरं चिरायुषेन बहुकालं क्षितितले भूलोके दिवि वा ध्रियमाणोऽवतिष्ठमानस्त्वं भोगिभिः सखिभिर्मित्रभ्रातादिभिःसह सम्बन्धं संयोगं एष्यसि प्राप्स्यसि यदि, यदि भूलोकेऽवस्थितिमिच्छसि तर्हि तत्र, यदि दिवि तत्र वा मित्रादिभिः सह सुखेन चिरकालमवस्थितिं प्राप्स्यसीत्यर्थः। इत्याशीः। एष प्रतिग्रहार्थं प्रसार्य्यमाणः प्रत्यक्षदृश्यो मम करोऽस्ति तस्मादत्र पाणौ यद्दानसम्बन्धिभुवनं जलं वितर देहीति। अथ च क्षित्यास्तले पातालक्षणे दिवि रमणीयत्वात् स्वर्गे भोगिभिःसर्पैर्ध्रियमाणो बध्यमानः सन् चिरकालं वासं दुःखबहुलत्वाद् वसतिरूपं बन्धनं प्राप्स्यसि। यद्वा चिरञ्जीवन् पाताले सर्पैः सह वासं बन्धनञ्च एष्यसि वा। इवार्थो वा। दिवि वेत्यर्थः। यथा सुखिभिः सह स्वर्गे तिष्ठन् सम्बन्धं प्राप्नोषि तथेदानीमेव पाताले सर्पैः सह सम्बन्धमेष्यसि। यद्वाऽदिवि स्वर्गव्यतिरिक्ते पाताले तृतीयपादार्थं स्वर्गात् सकाशात् त्वमस्वर्गरूपपाताले पातयिष्यसीत्यर्थः। एष चक्रविक्षेपतत्परो

आशयस्य विवृतिः क्रियते किं
दित्सुरस्मि हि भवच्चरणेभ्यः।
विश्वमित्यभिहितो वलिनाऽस्मान्
वामन प्रणतपावन पायाः॥ ६५॥

मम करोऽस्ति, इन्द्राद् गृहीतं भुवनं त्रैलोक्यं देहि पुनस्तस्मै समर्पयेति, भुवनं वितरेत्यवतारप्रयोजनं सूच्यते। जीवनं भुवनं जलं, पिष्टपं भुवनं। इति चामरः॥ ६४॥

एवं वामनेनोक्ते वलिः पुनराह। आशयस्येति। हे वामन प्रणतपावन, वलिना इति पूर्व्वोक्तप्रकारेण अभिहित उक्तस्त्वं अस्मान् पायाः रक्ष। इति किं। भो वामन त्वया शयस्य पाणेर्विवृतिः प्रसारणं किं क्रियतेऽपि तु तन्न कर्त्तव्यं। आशब्दोऽयोग्यतया शिरःकम्पपूर्व्वकं वारणाभिनये। अनुचितमेतन्न कर्त्तव्यमित्यर्थः। आ सामस्त्येन नितरां शयस्य विवरणं किं क्रियतेऽपि तु तन्न कर्त्तव्यमिति वा, वाक्यपूरणे वा। हि यस्माद्भवच्चरणेभ्यः पूज्येभ्यो भवद्भ्यः विश्वं सकलं हेमरत्नादि च दित्सुर्दातुमिच्छुरस्मि, चरणशब्दः पूजार्थः। अहं सर्व्वमिदानीमेव ददामि किमिति पाणिप्रसारणेनैतावदधैर्य्यं प्रकटीक्रियत इत्यर्थः। अथ च सहस्रपात्त्वाद् बहुभ्यो भवदीयपादेभ्य सर्व्वं दित्सुरस्मि सर्व्वस्वदानेन भवच्चरणान् पूजयिष्यामि तस्मात् करप्रसारणं किं क्रियते॥ ६५॥

क्षत्रजातिरुदियाय भुजाभ्यां
या तवैव भुवनं सृजतः प्राक्।
जामदग्न्यवपुषस्तव तस्या-
स्तौ क्षयार्थमुचितौ विजयेताम् ॥ ६६ ॥
पांशुला बहुपतिर्नियतं या
वेधसाऽरचि रुषा नवखण्डा।

श्लोकत्रयेण परशुरामं स्तौति ॥ क्षत्रेति। हे भगवन् तव तौ भुजौ विजयेतां सर्व्वोत्कर्षेण वर्त्तेताम्। तौ कौ। प्राक् सृष्ट्यादौ भुवनं सृजतो ब्रह्मरूपिणस्तवैव "बाहू राजन्यः कृतः" इति श्रुतिप्रामाण्याद् भुजाभ्यां सकाशाद् या क्षत्रजातिः क्षत्रियमात्रं उदियाय उत्पन्ना तस्याः क्षत्रजातेर्लयार्थं क्षयार्थं जामदग्न्यवपुषस्तव यौ भुजौ उचितौ, कारणे कार्यलयस्यौचित्यात्।

"अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम्।
एषां सर्व्वत्रगं तेजः स्वासु योनिषु शाम्यति" ॥

इति भारतवचनादवतारप्रयोजनमुक्तं। जातेर्नित्यत्वादुत्पत्तिविनाशावयुक्ताविति ये आक्षिपन्ति ते आविर्भावतिरोभावयोर्विवक्षितत्वेनोत्तरणीयाः। वेदान्तसिद्धान्ते जातेर्नित्यत्वाभाव इत्यपि। जामदग्न्येति गर्गादिषु पाठसामर्थ्याद् यञ् इति ज्ञातव्यं। विजयेतां विपराभ्यां जेरिति (पा० १।३।१९) तङ्॥६६॥

पांशुलेति। नियतं सर्व्वदा पांशुला धूलिबहुला बहवो मन्वादयः पतयो यस्याः सा मन्वादिभिः पालिता च या

तां भुवं कृतवतो द्विजभुक्तां
युक्तकारितरता तव जीयात्॥ ६७॥
कार्त्तवीर्य्यभिदुरेण दशास्ये
रैणुकेय भवता सुखनाश्ये।

भूः वेधसा रुषेव नवखण्डा भारतादिनवसङ्ख्यविभागाऽपरा निर्म्मिता। तां नवखण्डामपि कृत्स्नां भुवं द्विजभुक्तां काकादिपक्षिभिः कृतोपभोगां व्याप्तां, अथ च ब्राह्मणैर्गृहीतफलां कृतवतः त्रिसप्तकृत्वः क्षत्रियमात्रं हत्वा निष्कण्टकीकृत्य प्रतिवारं ब्राह्मणेभ्यो ददतस्तव युक्तकारितरता नितरामुचितकारणशीलता जीयात् सर्व्वोत्कर्षेण वर्त्तताम्। एवंविधमतिशूरं दाशूरञ्च त्वां प्रति प्रणतोऽस्मीत्यर्थः। नियतमित्युत्प्रेक्षायां वा। रुषा नियतं रुषेवेत्यर्थ इव वा। अथ च या स्वैरिणी अत एव बहुभिर्जारैर्भुक्ता सती तद्भर्त्रा कोपेन करचरणादिमान्विष्य पृथक् तत्कालच्छेदेन नवानि प्रत्यङ्गाणि खण्डानि यस्याः … दृशीं कृतखण्डां तामग्निसंस्कारनिवारणाद्धेतोः काकादिभिः पक्षिभिर्भक्षितां कुर्व्वतो भर्त्तुर्युक्तकारिता सर्व्वैः कीर्त्यते। स्वैरिणी पांशुला समेत्यमरसिंहः॥ ६७॥

कार्त्तवीर्य्येति। हे रैणुकेय रेणुकापुत्र कार्त्तवीर्य्यभिदुरेण यदीयकारागारे निबद्धो रावणोऽपि बहूनि वर्षाण्यतिष्ठत् तं कार्त्तवीर्य्यं सहस्रार्ज्जुनं हतवता भवता दशास्ये रावणे सुखेन अनायासेन नाश्ये हन्तुं शक्ये सति कालभेदस्य विरहादु-

कालभेदविरहादसमाधिं
नौमि राम पुनरुक्तिमहं ता ॥ ६८ ॥

भयोरवतारयोरेककालीनत्वादसमाधिं परिहाररहितां मनुष्यावतारेण क्षत्रियेण दाशरथिना रामेण विषयान्तराभावात् तस्मिन्नेव काले किमर्थमवतीर्णमिति वक्तुमशक्यत्वात् प्रयोजनाभावादहं ते भो राम पुनरुक्तिं दाशरथिरूपजामदग्न्यरूपां दाशरथिरूपां वाऽहं नौमि स्तौमि। अन्यत्र पुनरुक्तेः कार्य्यभेदात् कालभेदाद्वा परिहारः कर्त्तुं शक्यते। वीप्सायामप्येककालप्रयुक्तस्यापि शब्दस्य भयादरसम्भ्रमादिना परिहारोऽस्त्येव, अत्र तु पूर्व्वोत्तरावतारकार्य्यस्यापि कर्त्तुं शक्यत्वात् कार्य्यभेदाभावाच्च परिहारो नास्तीत्यर्थः। स्वतन्त्रस्य तव केनाप्यनुयोगः कर्त्तुं न शक्यत इति भावः। जामदग्न्यस्य मानुषत्वेऽपि दैवज्ञानस्य तथैव सद्भावाद्देवावध्यत्वस्य रावणे हृतत्वात् तस्य तेन हन्तुमशक्यत्वाद्रावणवधपर्य्यन्तं च श्रीरामस्य दैवज्ञानाभावान्मानुषत्वेन तेनैव तस्य हन्तुं शक्यत्वात् कार्य्यभेदादेकस्मिन्नपि कालेऽवतारान्तरस्य युक्तत्वात् सूक्ष्मः परिहारोऽस्त्येव। तथापि स्थूलदृष्ट्या परिहाराभाव उक्त इति ज्ञेयं। नर्म्मदायां जलक्रीडां कुर्व्वता सहस्रार्जुनेन रावणः कारागारे निक्षिप्त इतीतिहासः। रेणुकेय इति क्षत्रियत्वसूचनं। अपत्यार्थे स्त्रीभ्यो ढक् (पा० ४।१।१२०) इति ढक् ॥ ६८ ॥

हस्तलेखमसृजत् खलु जन्म-
स्थानरेणुकमसौ भवदर्थं।
राम राममधरीकृततत्त-
ल्लेखकः प्रथममेव विधाता॥ ६८॥

दशभिः श्लोकैः श्रीरामचन्द्रं वर्णयति। हस्तेति। भो राम दाशरथे असौ विधाता भवदर्थं त्वादृशोत्तमशिल्पनिर्म्माणार्थं जन्मस्थानं रेणुकैव यस्य तादृशं रामं प्रथमं त्वदपेक्षयाऽऽद्यं जामदग्न्यं खलु निश्चितं हस्तलेखमेवासृजत्, चक्रे। त्वन्निर्म्माणार्थं जामदग्न्यं हस्ताक्षराभ्यासमेवाकरोदित्यर्थः। खल्विवार्थे वा हस्तलेखमिव चक्रे। किम्भूतः। अधरीकृताः एतादृशनिर्म्माणसमर्थत्वान्नितरां हीनाः कृता ते प्रसिद्धा लेखका देवा इन्द्रादयो दक्षप्रभृतयोऽष्टौ प्रजापतयो वा येन तादृशः। अथ वा अधराः स्वर्गस्था अप्यधराः कृता भूमौ अवतारितास्ते हनुमत्सुग्रीवादिरूपा इन्द्रादयो देवा येन सः। प्रथमस्यैव हस्तलेखरूपणेन हीनत्वं न तु द्वितीयस्येत्यवोक्तं। प्रथममेवाद्यं भव रामं न तु द्वितीयं त्वामिति वा। उत्तमशिल्पनिर्म्माणार्थं हि हस्तलेखा पूर्व्वं क्रियते। हीनाः कृतास्ते तेऽतिप्रसिद्धा लेखका लिपिकरा येन स इति वा। अक्षराभ्यासेऽप्येवमेव क्रियते। जन्मस्थाने रेणुः घृष्टेष्टकादिचूर्णरूपः पांसुर्यस्यैतादृशं। हस्तलेखं शेषाद्विभाषेति (पा०५।४।१५४) कप्॥ ६८॥

उद्भवाजतनुजादज कामं
विश्वभूषण न दूषणमत्र ।
दूषणप्रशमनाय समर्थं
येन देव तव वैभवमेव ॥ ७० ॥

उद्भवेति । हे अज जन्मरहित श्रीरामचन्द्र । अजस्य रघुपुत्रस्य तनुजाद्दशरथात् सकाशात् कामं स्वेच्छया उद्भव उत्पत्तिर्यस्य सो विश्वविभूषण जगदलङ्कारभूत, अत्र दशरथादपि जन्मविषये, अजस्यापि जन्मविषये दूषणं दोषलेशोऽपि नास्ति। यस्य पितामहेनाप्यजेनोत्पन्नस्तत्पुत्रः स्वपिता कुतस्तरामुत्पन्नः तत्पुत्रः स्वयं कुतस्तमामुत्पत्स्यते। तथा स्वयमप्यजः कथं जायत इत्याशङ्कायां स्वेच्छामात्रविलसितमित्याशङ्कापरिहारः। अज्ञैव हि स्वाविद्यया संसरति मुच्यते चेति न्यायात्। विश्वभूषणस्य तव दूषणरूपत्वाभावादपि दूषणलेशोऽपि तव नास्तीत्यर्थः। अथ वाऽजतनुजादजस्योत्पत्तिर्यस्यैव, अजो हि छागस्तत्पुत्रोऽप्यज एव जातिनामत्वादजशब्दस्येत्यपि दूषणाभावः। दूषणाभावे हेत्वन्तरमप्याह। येन कारणेन हे देव श्रीराम तव वैभवमेव प्रभाव एव दोषाणां प्रकर्षेण शमनाय नाशाय समर्थं यत्स्मरणादिवैभवादन्येषामपि भक्तानां दोषा नश्यन्ति तत्स्वरूपे दोषलेशसंस्पर्शोऽपि कथङ्कारं स्यादपि तु न कथञ्चिदित्यर्थः। अथ च दूषणाख्यराक्षसविनाशाय तवैव सामर्थ्यं यतस्तस्मादज तवोत्पत्तौ सत्यां दूषणाभावो युक्त एवेति फलं। अथ च परशु-

नो ददासि यदि तत्त्वधियं मे
यच्छ मोहमपि तं रघुवीर।
येन रावणचमूर्युधि मूढा
त्वन्मयं जगदपश्यदशेषं॥ ७१॥
आज्ञया च पितुरज्ञभिया च
श्रीरहीयत महीप्रभवा हि:।

रामे सत्यपि तस्मिन्नेव काले त्वं दशरथात् सुखेनोत्पद्यस्व। अत्र तवोत्पत्तिविषये दूषणं पुनरुक्तिदोषो नास्ति। यतो दूषणादि-रावणान्तराक्षसविनाशाय तवैव सामर्थ्यं न तु परशुरामस्य-त्यत्र दूषणशब्द उपलक्षणपरः। तस्मादेककालोत्पन्नत्वेऽपि का-र्यभेदान्न पुनरुक्तिदोषः। एतेनावतारप्रयोजनमुक्तं। अनुका-ममिति पाठे कामं लक्षीकृत्य यथेच्छमित्यर्थः॥ ७०॥

नो ददासीति। हे रघुवंश्यानां मध्ये वीर, ईश्वरतम श्रीर-घुनाथ त्वं तत्त्वधियं मोक्षोपयोगिनमात्मतत्त्वं साक्षात्कारं यदि मे मह्यं नो ददासि तर्हि तं मोहमपि तां विशिष्टां भ्रान्ति-मेव यच्छ देहि। तं कं। येन मोहेन भयसञ्जातभ्रान्तिविला-सेन युधि मूढा भ्रान्ता रावणचमूरशेषं सकलं जगत् त्वन्मयं श्रीरामचन्द्ररूपमपश्यत्। रावणसेनया च मोहेन जगद्रामा-त्मकं दृष्टमिति सर्वपुराणे॥ ७१॥

आज्ञयेति। हे श्रीरामचन्द्र भवता महीप्रभवा कृष्याद्युपा-येर्भूलोकोत्पन्ना श्री राज्यलक्ष्मीः, अथ च भूमेरुत्पन्ना लक्ष्म्यव-

लङ्घितस्य भवता किमु न द्वि-
र्वारिराशिरुदकाङ्कगलङ्कः ॥ ७२ ॥

तारूपा जानकी क्रमेण पितुराज्ञया च अङ्गेभ्यो भिया च मूर्ख-जनापवादभयेन च द्विर्द्विवारमहीयत त्यक्ता। वनवासाङ्गीकारा-द्राज्यलक्ष्मीः, जनापवादभयाच्च वह्नौ विशुद्धाऽपि सीता त्यक्ता, इत्येवं द्विप्रकारं त्यक्तेत्यर्थः। एवं पितुराज्ञाकारी लोकप्रवाद-भीरुश्च कोऽपि नास्तीति भावः। चावन्योन्यसमुच्चये। तथा वा-रिराशिररिराशिर्वा द्विवारं द्विधा च न लङ्घितः किमु, अपि तु सेतुं बद्ध्वा समुद्रोऽपि लङ्घित एव। तथा रावणादिशत्रुसमूहो-ऽपि पराभूत एव। वा चार्थ इवार्थो वा। अरिराशिश्च अरिरा-शिरिव वागन्धनार्थाद्वातेः क्विपि वातीति वाः स चासावरिरा-शिश्च स सकलो वैरिसङ्घ इत्यर्थः। किम्भूतः। उदकाङ्कगा जलम-ध्यगा लङ्का यस्य यदीयजलमध्ये लङ्कास्तीत्यर्थः। अरिराशिर-पि समुद्रजलमध्यवर्त्तिनी लङ्का यस्य। समुद्रपक्षे यस्येत्यस्योदकेन सम्बन्धः। अरिराशिपक्षे तु लङ्कायाः। एतावान् विशेषः। उत्कष्टमकं दुःखं यस्यास्तादृशी अङ्कगा लङ्का यस्येति वा। उत्कृष्टमकं कर्त्तनलक्षणं दुःखमुदकं तदेवाङ्कश्चिह्नं येषां ता-दृशा गलाः कण्ठा यत्र क्रियायां यथा तथा कः किमु शत्रुसङ्घो न लङ्घितः, अपि तु सर्वोऽपीति वा। सागरस्यापि बन्धना-द्रावणस्यापि बधाच्च एतादृशो महाप्रभावः शूरतमश्च त्वदन्यः कोऽपि नास्तीति भावः॥ ७२ ॥

कामदेवविशिखैः खलु नेशं
माऽर्पयज्जनकजामिति रक्षः ।
देवताद्मरणे वरवाक्यं
तथ्ययत्स्वमपुनाद्भवदस्त्रैः ॥ ७३ ॥
तद्यशो हसति कम्बुकदम्बं
शम्बुकस्य न किमम्बुधिचुम्बि ।

कामदेवेति । रक्षो रावण इतीव हेतोर्देवतान्मरणाभाव-विषये देवाद्धेतोर्न मरिष्यसीति ब्रह्मणो वरवाक्यं यत् सत्यं कुर्वन् स्वमात्मानं भवदस्त्रैरपुनात् धूतकल्मषं चकार । इति किं । जनकजां सीतां रामायार्पयद्ददद्हं रक्षः कामदेवस्य मो-हनशोषणादिभिर्विशिखैः खलु निश्चितं मा नेशं तद्विरहसन्ता-पवशान्मृतो मा भूवमिति । सीताप्रत्यर्पणे कामदेवस्य देवत्वात् तद्वाणैर्मरणे वरवाक्यमसत्यं स्यादितीव तामददद् वरवाक्य-सत्यत्वार्थं मानुषावतारकामरूपभवद्वाणैरात्मानं नाशितवा-नित्यर्थः । कामवाणात् शरीरविनाशमात्रं त्वद्वाणात् तु मरणे संसारहेतुनिःशेषकल्मषक्षय इति महान् विशेषोऽपुनादित्यनेन सूच्यते । नेशं माङ्योगादड्भावः । तथ्ययत् तत्करोतीति (पा० ३।१।२६वा०) ण्यन्ताच्छतृ ॥ ७३ ॥

तदिति । हे रघुनाथ नामशेषितजः कथाशेषीकृतो हतः येनया सहितो दशास्यो येन तत्तस्मात् तव हस्तादसौ शम्बुकः यत् फलं विनाशं आप तत् शम्बुकस्य शम्बुकनाम्नः शूद्रस्य अम्बु-

नामशेषितससैन्यदशास्या-
दस्तमाप यदसौ नव हस्तात् ॥ ७४ ॥
मृत्युभीतिकरपुण्यजनेन्द्र-
त्रासदानजमुपार्ज्य यशस्तत् ।
क्षीणवानसि कथं न विहाय
क्षुद्रदुर्जनभिया निजदारान् ॥ ७५ ॥

धिचुम्बि समुद्रमध्यवर्त्ति यशःकम्बु कदम्बं शङ्खवृन्दं धवलतया किं न हसति अपि तु हसत्येव तत्तुल्यं भवतीत्यर्थः। येन त्वत्करेण अतिशूरो रावणो हतः तेनैवान्त्यवर्णोऽधमो दुर्बलः शम्बुकोऽपि हत इति महत्तस्य भाग्यमित्यर्थः। यो ह्यात्मगुणं बलिनं हन्ति तेनैव हीने दुर्बले हते दुर्बलस्य महद् यशो भवति। ब्राह्मणस्य बालपुत्रमरणनिमित्तं शूद्राणामविहितधूमपानमधोमुखं कुर्व्वन्तं शम्बुकं शूद्रं श्रीरघुनाथो हतवानितीतिहासः। अय च शम्बुकस्य जलशुक्तेः श्वैत्यरूपं यशः समुद्रमध्यस्थं शङ्खवृन्दं हसति तत्तुल्यं भवतीति युक्तमेव। नामशेषितेति। तत्करोतीति (पा० १।१। २६ वा० १) ण्यन्तान्निष्ठा ॥ ७४ ॥

मृत्युभीतीति। यस्मात् मृत्योर्यमादन्येषां भीतिस्तस्यापि मृत्योर्भीतिकरः पुण्यजनेन्द्रो राक्षसेन्द्रो रावणस्तस्यापि मरणपर्य्यन्तं त्रासदानाद् भयोत्पादनाद्धेतोर्जातं तत् अतिप्रसिद्धं लोकत्रयेऽपि गीयमानं यश उपार्ज्य क्षुद्रोऽत्यल्पको दुर्जनस्तस्माद्भिया भयेन पामरलोकापवादभिया निजदारानात्मनः

इष्टदारविरहौर्वपयोधि-
स्त्वं शरण्य शरणं स ममैधि।
लक्ष्मणक्षणवियोगकृशानौ
यः स्वजीविततृणाहुतियज्वा ॥ ७६ ॥

प्रियां सीतां विहाय परित्यज्य कथं न ह्रीणवान् लज्जितवानसि, लज्जितव्यं तावत् त्वयेत्यर्थः। यो रावणाय भयं दत्तवांस्तस्य दुर्जनभीत्या निष्ठुरजनापवादभयेन प्रियापरित्यागे लज्जैव युक्ता। अभिमानान्निजस्त्रीहर्ता रावणो नाशितो लोकापवादभयाच्च सापि परित्यक्तेति एतादृशः शूरोऽभिमानी लोकापवादभीरुश्च कोऽपि नास्तीति भावः। यातुधानः [illegible]जन इत्यमरः। भीतिकरेति ताच्छील्ये टः ॥ ७५ ॥

इष्टेति। हे शरण्य शरणागतभक्तरक्षक रघुनाथ त्वं मम शरणं रक्षकः एधि भव। स कः। यस्त्वं इष्टदाराणां सीतायाः विरह एव दुःसहत्वादौर्वो वडवानलः तस्य पयोधिः आश्रयः एवंविधः सन् लक्ष्मणस्य क्षणमात्रमपि वियोगः स एव दुःसहत्वात् कृशानुस्तत्र स्वजीवितानामात्मप्राणानामेव तृणानामाहुतेस्तद्रूपहोमद्रव्यस्य यज्वा होता। योऽहि लक्ष्मणवियोगं क्षणमात्रं सोढुमशक्तस्तृणवदिच्छामात्रेण स्वप्राणांस्तत्याज। स यावज्जीवं सीताविरहानलं कथं सोढवानिति क्रिययोर्विरोधादाश्चर्यं। यज्वना चाहुतिरग्नौ हूयते। सीताविरहसहनेन जितेन्द्रियधुर्यत्वं सूचितं। इन्द्रजितः शक्त्या मूर्च्छिते लक्ष्मणे स्वयमपि मुमूर्च्छ

क्रौञ्चदुःखमपि वीक्ष्य शुचा यः
श्लोकमेकमसृजत् कविराद्यः।
स त्वदुत्थकरुणः खलु काव्यं
श्लोकसिन्धुमुचितं प्रबबन्ध ॥ ७७ ॥

तथा मुनिरूपकालकृतसमयभङ्गभग्नप्रतिज्ञे लक्ष्मणे रघुनाथाज्ञया शरयूजलप्रवेशेन कृतदेहत्यागे सति तद्वियोगमसहमानस्तत्क्षणेऽव रघुनाथोऽपि गोप्रतारतीर्थे जलप्रवेशेन स्वयमपि स्वस्थानं प्रापेति युद्धकाण्डोत्तरकाण्डरामायणकथा। एतेन स्त्रीवियोगदुःखादपि भ्रातृवियोगदुःखं दुःसहमिति सूचितं। परमकारुणिकस्त्वं शरणागतं मामपि रक्षेति सूचितं॥ ७६ ॥

क्रौञ्चेति। दैवी वाक् येन भुवं प्रथममानीता स आद्यः प्रथमः कविर्वर्णको यो वाल्मीकिः क्रौञ्चयोः पक्षिविशेषयोर्मध्ये रिंरसावेकस्मिन् व्याधेन हतेऽन्यस्य दुःखं शोकमपि वीक्ष्य तिर्य्यग्योनेरपि तस्य दुःखं दृष्ट्वा उत्पन्नया शुचा शोकेन हेतुना।

मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितं॥

इत्यादिकमेकं श्लोकमसृजत्। स कविस्त्वयि उत्पन्नः करुणरसो यस्य सीताविरहविक्लवमहानुभावभवद्दर्शनात्पन्नशोक इव श्लोकानां सिन्धुः सागरभूतं चतुर्विंशतिसहस्रमितरामायणाख्यं काव्यमुचितं योग्यं प्रबबन्ध। तिर्य्यग्योनिविषये शोकेन येन श्लोकः कृतः तस्य उत्तमपुरुषविषये महाकाव्यनिर्म्माणमुचि-

विश्रवःपितृकयाप्तुमनर्हं
सश्रवस्त्वमनयेत्युचितज्ञः ।
त्वं चकर्त्तिथ न शूर्पणखायाः
लक्ष्मणेन वपुषा श्रवसी वा ॥ ७८ ॥

तमेव। अथ च त्वया सिन्धुर्वद्धः। अयमपि त्वदेकचित्तः सिन्धुं ववन्धेत्युचितं। परित्यक्तसर्व्वसङ्गो मुनिरपि त्वद्दर्शनां ...नवान्। एतादृशः परमपुरुषोऽसीति खल्वित्यर्थः ॥ ७७ ॥

विश्रव इति। हे रघुनाथ, इति हेतोः उचितं जानाति यः स उचितकारी त्वं चतुर्द्धावतीर्णत्वात् लक्ष्मणलक्षणेन स्वीयेनैव वपुषा शूर्पनखायाः श्रवसी कर्णौ त्वं न चकर्त्तिथ, अपितु कर्त्तितवान् एव। इति किं। विश्रवा मुनिः पिता यस्याः, अथ च कर्णरहितः पिता यस्यास्तयाऽनया शूर्पनखया सश्रवस्त्वं सकर्ण... प्राप्तुमनर्हमयोग्यमिति स्त्रीवधस्यानौचित्यात् कर्णच्छेद ... चितः, यतः अकर्णपितृकाया अकर्णत्वस्यौचित्यात्कर्णौ ल...णेन कर्त्तयामासिथेत्येवंविधः समुचितकारी मह...प्रभावोऽसीति भावः। वा इवार्थो वा इतीव हेतोरिति योजना। विश्रवः-पितृकया न ऋतश्चेति (पा०५।४।१५३) कप्। शूर्पणखा पूर्व्वपदात् सञ्ज्ञायामिति (पा०८।४।३) णत्वं। नखस्य स्वाङ्गत्वेऽपि नखमुखात् सञ्ज्ञायामिति (पा०४।१।५८) ङीबभावः। अस्पर्द्धा चेयं सञ्ज्ञा ॥ ७८ ॥

ते हरन्तु दुरितव्रततिं मे
यैः स कल्पविटपी तव दोर्भिः।
छद्मयादवतनोरुदपाटि
स्पर्द्धमान इव दानमदेन॥ ७९॥

नवभिः श्लोकैः श्रीकृष्णं वर्णयति। त इति। कंसादितत्तद्दैत्यमारणरूपकद्मना यादवमज्ञा तनुर्यस्य, अथ च छद्मया नीतिछद्मया एवम्भूता चासौ यादवतनुश्च, मायावान् कंसादिवंशवनवह्निरूपशरीरस्य तस्य श्रीकृष्णरूपस्य तव यैर्दोर्भिः भुक्तिमुक्तिप्रदैश्चतुर्भिर्हस्तैरतिप्रसिद्धः कल्पविटपी कल्पितफलदानसमर्थः पारिजातवृक्षः उदपाटि उन्मूलितः। किं कुर्व्वन्निव। तादृशकल्पितदानसमर्थः कोऽपि नास्त्येवेति दानमदेन दर्पेण तैर्भुजैः सह स्पर्द्धमान इव। ते बाहवो मे दुरितानां व्रततिं लतां दैन्यसंहतिं हरन्तु उन्मूलयन्तु। पारिजातलक्षणमहावृक्षोन्मूलने समर्थानां तेषां लतोन्मूलने सुतरां सामर्थ्यं। कपटदावानलदेहस्य च भुजानां वृक्षलताद्युन्मूलने सामर्थ्यं युक्तमेवेत्यर्थः। दानशूरो महाप्रभावश्च त्वादृशः कोऽपि नास्तीति भावः। सत्यभामया याचितः पारिजातः इन्द्रं जित्वोन्मूल्य सत्यभामाङ्गणे श्रीकृष्णेन स्थापित इति हरिवंशोक्तिः। निर्ऋतिव्रततिमिति पाठे स्यादलक्ष्मीस्तु निर्ऋतिरित्यमरः॥ ७९॥

बालकेलिषु तदा यदलावीः
कर्परीभिरभिहत्य तरङ्गान्।
भाविबाणभुजभेदनलीला-
सूत्रपात इव पातु तदस्मान्॥ ८०॥
कर्णशक्तिविफला खलु कर्तुं
सज्जितार्ज्जुनरथाय नमस्ते।

बालेति। हे कृष्ण त्वं तदा कृष्णावतारसमये भूयसीषु
बालकेलिषु मध्ये कर्परीभिः स्फुटितघटशकलैः कृत्वा यमुना-
जले तरङ्गानभिहत्य तेषामभिघातं कृत्वा ताननेकप्रयत्नेना-
लावीः अच्छैत्सीः इति यत् तत् कर्परीभिस्तरङ्गलवनं कर्तृ
उषाहरणावसरे भावि करिष्यमाणबाणासुरभुजच्छेदनं तल्लक्ष-
णलीला विलासः तत्सम्बन्धी सूत्रपात इव प्रथमसमार्जवच्छेद-
नाभ्यासरूपमिव अस्मान् पातु रक्षतु। अक्षरपङ्क्तेः रजुत्वार्थं
बालैः प्रथमं खटिकादिप्राक्षिप्तसूत्रपातनं क्रियते। तक्षादिभि-
रपि काष्ठस्यार्जवेन छेदनार्थं गैरिकादिप्रक्षितसूत्रपातनं क्रियते
तद्वद्बाणभुजार्जवच्छेदनार्थं कर्परीभिरभिहत्य तरङ्गलवनं यद-
कारि तव बालक्रीडनमस्मानवतु इत्यर्थः। कर्पर्य्याघाते ते तर-
ङ्गच्छेदनमिति बालजातिः। अवतारप्रयोजनञ्चोक्तं॥ ८०॥

कर्णेति। हे कृष्ण ते नमोऽस्तु। किम्भूताय। ते उरसि लग्ना
इन्द्रजिन्मुक्ता शक्तिर्यस्य तं लक्ष्मणं द्रोणाचलानीतविशल्यक-
रौषधिप्रक्षेपेण हृतं निष्काशितं शक्तिलक्षणं शल्यं यस्य तादृश

केतनेन कपिनोरसि शक्तिं
लक्ष्मणं कृतवता हृतशल्यं ॥ ८१ ॥
नापगेयमनयः सशरीरं
द्यां वरेण नितरामपि भक्तं ।
मा स्म भूत् सुरवधूसुरतज्ञो
दिव्यपि व्रतविलोपभियेति ॥ ८२ ॥

कृतवता। केतनेन ध्वजस्थपताकारूपेण कपिना हनूमता कृत्वा कर्णस्य शक्तिमाङ्गिकं बलं, अथ च इन्द्रदत्तां शक्तिं अफलां कर्त्तुमिव सज्जितो योजितो अर्ज्जुनरथो येन तस्मै नरनारायणरूपाय। यो हि यत्र कर्म्मणि शक्तः स तत्र नियोक्तुमुचितः स हनूमांश्च शक्तिविफलीकरणे दृष्टप्रभावस्तस्मात् कर्णशक्तिविफलीकरणार्थमिवार्ज्जुनरथे तं स्थापितवानसीति भक्तवत्सलाय तुभ्यं नम इत्यर्थः। यो मर्मभृतां उरःस्थितां शक्तिं विफलीकरोति सश्रवणस्थां सुतरां विफलीकरोत्येवेति छलेनोक्तिः,खलु इवार्थः उरसि शक्तिः अमूर्द्धमस्तकादिति अलुक् (पा०६।३।१२) ॥८१॥

नेति। हे कृष्ण त्वं नितरां भक्तमपि आपगेयं भीष्मं सशरीरेण प्रसादेन कृत्वा इति विचार्य्य कारणात् वा द्यां स्वर्गं न अनयः न प्रापितवानसि। इति किं। स भीष्मः अनेन शरीरेण सुरतं न करिष्याम्यद्यप्रभृति मम ब्रह्मचर्य्यमिति नियमवान् व्रतस्य विलोपाद्भीतस्तया भिया हेतुना दिव्यपि स्वर्गेऽपि सुरवधूनां रम्भादीनां सुरतज्ञो मा भूत् इति। भक्तमस्य वरदानेन

घातितार्कसुतकर्णदयालु-
र्जैत्रितेन्दुकुलपार्थकृतार्थः।
अर्द्धदुःखसुखमभ्यनयस्त्वं
साश्रुभानुविहसद्विधुनेत्रः॥ ८३॥

यद्यपि तेनैव शरीरेण स्वर्गप्रयाणमुचितं तथाऽपि तस्य श   स्य स्वर्गप्रापणेऽपि न कोऽप्युपयोगस्तेन तच्छरीरस्यातितुच्छत्वात् तच्छरीरं विनाश्य यतः स्वर्गमनयः न तु तुच्छशरीरसहितस्य प्रापणे तवाशक्तिरिति भावः। यद्वा भुक्तेरतितुच्छत्वाच्छरीरं विनाश्य मुक्तिमेव प्रापितवानिति हेतुः। आपत्येयं अपत्यार्थे स्त्रीभ्य इति (पा०४।१।१२०) ढक्॥ ८२॥

घातितेति। अर्कसुतेन प्रयोज्येन मर्म घातितो योऽर्कसुतः कर्णस्तस्मिन् विषये दयालुः सकरुणः। तथा स्वसामर्थ्येन जैत्रितो जेता कृतो दत्तजय इत्यर्थः। इन्दुकुलं सोमवंशभूतः पार्थोऽर्ज्जुनस्तेन कृत्वा कृतार्थः सम्पादितावतारप्रयोजनः कृतकृत्यत्वात् सहर्षः, अत एव क्रमेण साश्रुः पुत्रशोकवशाद् रुदन् भानुः सूर्य्यः पुत्रविजयाच्च विशेषेण हसन् हर्षानुभवं कुर्व्वन् विधुश्चन्द्रः तावेव दक्षिणवामनेत्रे यस्य एतादृशः त्वं यथाक्रमं अर्द्धदुःखं अर्द्धसुखञ्च अभ्यनयः, अभिनयेन युगपद्दर्शनवानसि। परमार्थतोऽविद्यमानमप्यनाद्यविद्याविलासाद्बहिर्नाटितवानसीत्यर्थः। सूर्य्यचन्द्रयोर्विष्णुनेत्रत्वात् कर्णस्य च सूर्य्यपुत्रत्वात् नाशे शोकात् सूर्य्यस्य साश्रुत्वं, अर्ज्जुनस्य च सोमवंशत्वात् तद्विजये चन्द्रस्य

प्राणवत्प्रणयिराध न राधा-
पुत्रशत्रुसखता सदृशी ते ।
श्रीप्रियस्य सदृगेव तव श्री-
वत्समात्महृदि धर्त्तुमजस्रं ॥ ८४ ॥

हर्षेण विस्मितत्वात् ताभ्यामर्द्धसुखदुःखाभिनयेन अद्भुतरूपोऽसीति भावः । घातितेति हेतुमण्ण्यन्तान्निष्ठा । जैत्रितेति तत् करोतीति (पा० ३।१।२६ वा०) ण्यन्तान्निष्ठा । पार्थेति कुरुत्वात् ऋष्यन्धकेत्यण् (पा० ४।१।११४) अर्द्धञ्च तद्दुःखसुखञ्चेति द्वन्द्व-गर्भः कर्मधारयः ॥ ८३ ॥

प्राणेति । प्राणवत् प्रणयिनी निरुपाधिपरप्रेमास्पदं राधाख्या गोपिका यस्य एवम्भूत हे श्रीकृष्ण ते तव राधापुत्रः कर्णः तस्य शत्रुरर्जुनस्तत्सखता तन्मैत्री सदृशी योग्या न । राधावल्लभस्य हि राधापुत्रशत्रुमैत्री कथंकारमुचिता, अपि तु अयुक्तैव विरोधादित्यर्थः । एकत्र राधा गोपिका, अन्यत्र तु कर्णपालनकारिणी कैवर्त्तवधूरिति परिहारः । श्रियः प्रियस्य श्रीवल्लभा यस्य वा तस्य तव श्रीवत्सं ब्राह्मणपादन्यासरूपलाञ्छनं । अथ च श्रियो वत्सं पुत्रमजस्रं आत्महृदि धर्त्तुं सदृगेव उचितमेव, यस्य श्रीर्वल्लभा स तत्पुत्रं स्ववक्षसि सदा बिभर्त्तीति युक्तमेवेत्यर्थः । एतादृशः स्वपक्षपातदक्षो लोकशिक्षार्थं ब्राह्मणभक्तिपरश्च कोऽपि नास्तीति भावः । प्रणयिराधेति स्त्रियाः पुंवदिति (पा० ६।३।३४) ॥ ८४ ॥

तावकापरतनोः सितकेश-
स्त्वं हली किल स एव च शेषः।
साध्वसाववतरस्तव धत्ते
तज्जराचिकुरनालविलासं॥ ८५॥

तावकेति। हे श्रीकृष्ण हली लाङ्गलधरो बलभद्रः स एव च शेषोऽनन्तस्त्वमेव शेषावताररूपोऽपि बलभद्रो भवानेव न तु स त्वत्तो भिन्न इत्यर्थः। त्वं बलभद्रः स एव शेषः त्वत्तो हली न भिद्यते। हलिनश्च शेषो न च भिद्यत इति वा। यतः कायस्य जरसा सितकेशः धवलितकचः किलेत्यागमे। विष्णुपुराणादौ च यदुक्तं "उज्जहारात्मनः केशौ सितकृष्णौ ततः प्रभुः" इति। तव इयं तावकी न विद्यते परा उत्कृष्टाऽन्या यस्याः सा तावकी अपरा तनुस्त्वत्सम्बन्धिनी सर्वोत्कृष्टा सत्त्वमूर्त्तिस्तस्याः सितकेशः श्वेतकेशरूपो हली तव अवतारः अंशावताररूपोऽसौ हली त्वं किल त्वदवयवभूतकेशरूपत्वात् तस्य, स च हल्येव शेष इति वा। शेषरूपबलदेवलक्षणोऽसाववतारो मूर्त्तिः, अत एव तस्याः त्वदीयाया अपरतनोर्जरसा धवलीकृतस्य चिकुरनालस्य केशदण्डस्य विलासं वर्णसारूप्यं साधु यथा तथा धत्ते। अतिगौरो बलदेवस्त्वदियापरतनुर्धवलकेश इव भातीत्यर्थः। केशस्यापि दीर्घत्वधवलत्वाभ्यां जराधवलदीर्घकेशसारूप्यधारणं युक्तमेव। कारणगुणा हि कार्ये गुणानारभन्त इति न्यायाच्च युक्तमेव। अंशावतारो बलभद्र इति चोक्तं। अत्र श्वेतकेशः सहज एव

न तु जरायोगादिति वा। यतो हरिर्नित्यतरुण इति पुराणादिप्रसिद्धिः। वस्तुतस्तु कस्य ब्रह्ममुखस्य सदृशौ सुखस्वरूपावित्यर्थः। प्रकाशत्वेन सत्त्वस्य सितशब्दवाच्यत्वात् मोहकत्वेन च तमसः कृष्णशब्दवाच्यत्वात् सितकृष्णौ सत्त्वतमोगुणद्वयात्मकावेतावावतारौ भूभारोत्तारणार्थं प्रभुरादिनारायणः स्वस्मात् प्रकटीचकारेति विष्णुपुराणस्थसितकृष्णपदस्यार्थः। "कृष्णस्तु भगवान् स्वयं" इति श्रीभागवतवचनेन कृष्णस्तु लीलाविग्रहधारी परब्रह्मैव। "समोऽहं सर्व्वभूतेषु न मे द्वेष्योऽस्तु न प्रियः" इति भगवद्वचनात्। बलभद्रस्तु अवतारः, रामो रामश्च रामश्चेति वचनात्, अन्यथा बलभद्रस्य सत्त्वमूर्त्तित्वं कृष्णस्य तमोगुणमूर्त्तित्वं प्रापद्येत, न च तथास्तीति बलभद्रस्य तमः प्रधानत्वदर्शनादित्याशयः। शितिकेश इति पाठे शितौ धवलमेचकावित्यभिधानात्। त्वदीयपुराणतनोः सम्बन्धी शितिकेशः श्यामकेशरूपस्त्वं, हली च धवलकेशरूपः स एव च हलीति शेषः। बलभद्रः शेषावतार इति पुराणादौ। स त्वदीयधवलकेशविलासं धत्ते तत्साधु। कृष्णस्य कृष्णवर्णत्वाद् हलिनश्चातिगौरत्वाद्यथाक्रमश्यामसितगौरत्वमौत्प्रेक्षिकत्वेनैव व्याख्येयमित्यलमतिविस्तरेण। तावकापरेति पाठः साधीयान्, यतः युष्मदस्मदोरिति खञि (पा० ४।३।१) तवकादेशे वृद्धौ च वृद्धिनिमित्तस्येति (पा० ६।३।३८) पुंवद्भावप्रतिषेधे प्रसक्तेऽपि कर्म्मधारयत्वात् पुंवत्कर्म्मधारयेति (पा० ६।३।४२) प्रतिप्रसवात् पुंवद्भावः। अवतरः। पूर्व्ववत्॥ ८५॥

हृद्यगन्धवह भोगवतीश:
शेषरूपमपि बिभ्रदशेषः।
भोगभूतिमदिरारुचिरश्री-
रुल्लसत्कुमुदबन्धुरुचिस्त्वं॥ ८६॥

हृद्येति। हृद्यो हृदयानन्दकारी गन्धश्चन्दनादिसौरभं तं वहसि धारयसि तत्सम्बोधने हे एवंविधरम्यसौरभधारिन् श्रीकृष्ण त्वं शेषरूपं बलभद्ररूपं। अथ च नागाधीशरूपं बिभ्रत् धारयन्नपि अशेष उभयविधोऽपि शेषो न भवसि इति विरोधः। अथ च न विद्यते शेषः शिष्टं भिन्नं यस्मात् असौ ऽशेषः सकलजगदात्मकत्वमिति तत्परिहारः। अथ च बलभद्रोऽप्यति- ङ्गारित्वाद् हृद्यगन्धवहः, अत एव भोगवतीनां सुखीन -पिकादीनां ईशः प्राणप्रियः। अथ च भोगवत्या ारां सुखिन्याः रेवत्या ईशः पतिरिति। श्रीकृष्णोऽपि हृद्यग शरीरं स्वाभाविकं चन्दनादिजन्यञ्च गन्धं वहतीनां भोगवतीनां सुखिनीनां गोपिकादीनामीशः। शेषोऽपि जलक्रीडाक्षालितचन्दनकर्पूराद्यङ्गरागसम्बन्धिहृद्यसौरभधारिण्याः भोगवत्याः पातालनद्याः पतिः। कर्पूरादिवज्जलसौरभयुक्ताया नागर्य्या वा तृप्तिहेतुत्वाद् हृद्यो गन्धवहो वायुर्यस्य स चासौ नागपुर्य्या नद्या वा पतिः। तथा कृष्णरूपस्त्वं भोगस्य सुखस्य भूतेर्हेतोः मदिरावत् रुचिं सुखं राति जनयति या तादृशी श्रीःकायकान्तिर्यस्य सः। भोगः शेषफणा तत्कायो वा स एव भूः स्थानं तस्या ऊतिः अवनं

स्वाधिष्ठानेन रक्षणं तेन माद्यति हृष्यतीति भोगभूतिमत्तो। तथा इराया भूमेरिव रुचिरा रमणीया दूर्वादलश्यामला श्रीः कान्तिर्यस्य सः स्निग्धश्यामलकायकान्तिरित्यर्थः। इरायाः भारत्याः प्रियायाः धरण्या वा रुचिरा रमणी श्रीः कान्तिर्यस्मादिति वा। तयोरुभयोः सपत्न्योरपि रुचिं प्रीतिं ददाना समवर्त्तिनी श्रीः हृदिस्था लक्ष्मीर्यस्येति वा। भोगानां कालियफणानां भूतिरैश्वर्य्यजनितो दर्पः तं मथ्नाति तादृशो वा। पृथग्वा पदं। गोपिकादिसम्भोगसुखसमृद्धिर्भोगभूतिः तद्वान् स चासौ उक्तरीत्या इरारुचिरश्रीश्चेति वा। अथ च बलभद्ररूपस्त्वं भोगस्य सुखस्य भूतिरुत्पत्तिहेतुः तादृशी या मदिरा तया कृत्वा रुचिरा रमणीया सरागा कान्तिः शोभा यस्य। बलदेवो हि सर्व्वदा मदिरामत्तः। अथ च शेषरूपस्त्वं भोगस्य स्वकायस्य फणानां वा भूतिः समृद्धिः तद्वान् अतिदीर्घमहाकायः सहस्रफणासमृद्धिमान् वा। तेन माद्यति स चासौ स्वशिरःसु धारणेन भूमेः रुचिं राति ददातीति रुचिरा श्रीः कायकान्तिर्यस्य सः। तथा कृष्णरूपस्त्वं उल्लसन्ती कुमुदबन्धोः चन्द्रस्य सम्बन्धिनी रुचिः प्रीतिर्यस्मिन् सर्व्वाह्लादकारित्वाच्चन्द्र इव सर्व्वप्रेमास्पदभूत इत्यर्थः। कुमुत् श्वेतं कैरवं तस्य अबन्धुः तद्विरोधिनी कृष्णा रुचिः श्रीर्यस्य जलदश्याम इत्यर्थः इति वा। उल्लसन्ती कुमुदाख्ये वानररूपे सुहृदि रुचिः प्रीतिर्यस्य रामावतारे इति वा। पृष्ठे दंष्ट्रायां वा उल्लसन्ती कुः पृथ्वी यस्मिन्मोदत इति मुदः स चासौ स

रेवतीश सुषुमा किल नील-
स्याम्बरस्य रुचिरा तनुभासा ।

च तया बन्धुषु बन्धौ वा बलभद्रे वा रुचिः प्रीतिर्यस्य स चासौ स चेति वा। उल्लसन्ती कुमुदतुल्योऽतिगौरे बन्धौ बलभद्रे रुचिः प्रीतिर्यस्येति वा। उल्लसन्ति कुमुदानि येन स चन्द्र एव उद्दीपकत्वाद् बन्धुर्यस्य सः प्रद्युम्नावतारः कामः तत्र रुचिः प्र[illegible] प्रीतिर्यस्येति वा। अथ च बलभद्ररूपस्त्वं, उल्लसन्ती कु[illegible]न्धुः कैरवसदृशी गौरतरा कुमुदवत्सोमचन्द्रस्येव वा गौरत[illegible] रुचिः कान्तिर्यस्य। उल्लसन्ती कुः पृथ्वी यस्मात् तस्मिन्मुदे सहर्षे बन्धौ अनुजे श्रीकृष्णे रुचिः प्रीतिर्यस्य वा। उत्कर्षेण लसनकुमुदबन्धुः पार्व्वणचन्द्रः तस्येव रुचिर्यस्य। उल्लसत् कुमुदबन्धौ उक्तप्रकारेण प्रद्युम्ने रुचिर्यस्येति वा। अथ च शेषरूपस्त्वं उल्लसन्ती कुमुदनाम्नि सूर्य्ये सुहृदि प्रीतिर्यस्य। उल्लसन्ती चन्द्रस्येव धवला कान्तिर्यस्य वा। उल्लसन्ती कुमुदस्य चन्द्रस्य बन्धुःसदृशी कान्तिर्यस्य वा। उल्लसत्पृथ्वीकः सहर्षः सुहृत्प्रीतिर्यस्य वा। कुमुदेऽपि कुमुत्प्रोक्तमिति विश्वः। गोचा कुः पृथिवी पृथ्वीत्यमरः। भोगः सुखं बधे वाहे शरीरफणयोर्मत इति विश्वः। इरा वारिसुराभूमिभारतीषु इति च। ऊतिः। अवतेः क्तिनि ज्वरत्वरेति (पा० ६।४।२०) वस्योपधायाश्च ऊठि। मत् इति माद्यतेर्मस्रातेश्च क्विपि। मुदः इगुपधलक्षणकः॥ ८६॥

रेवतीशेति। हे रेवतीनाम्न्याः प्रियाया ईश, तथा हे कामपालपूरक कुः पृथ्वी तस्या मुदो हर्षस्याविर्भावेन प्रादुर्भावेन

कामपाल भवतः कुमुदावि-
र्भावभावितरुचेरुचितैव ॥ ८७ ॥

भाविता सञ्चारिता रुतिः प्रीतिरिच्छा वा यस्य तस्य भवतः श्रीकृष्णतनुभासा कायकान्त्या कृत्वा नीलस्य अम्बरस्य तत्तुल्यस्येत्यर्थः। तव रुचिराः शोभना लोकानां रुचिं प्रीतिं ददाना वा। रेवतीशसुषमा चन्द्रसम्बन्धिनीपरमा शोभा उचितैव किल। आकाशस्य चन्द्रशोभा उचितैव। अथ च बलभद्रस्वरूपत्वाद् रेवतीशसुषमा बलभद्रस्य परमशोभा उचितैव। किम्भूतस्य। कुः पृथ्वी तस्या मुदस्य हर्षस्य आविर्भावेन प्रकटनेन भाविनी त्रिलोकानां रुचिः प्रीतिर्येन। कुमुदस्य चन्द्रस्य आविर्भावेन वा। अथ च रेवतीनाम्नी प्रिया सदृशी। तथा हे कामपाल बलभद्र कुः पृथ्वी तस्या मुदस्य हर्षस्याविर्भावेन प्रादुर्भावेन भाविता सञ्चारिता रुचिः प्रीतिरिच्छा वा यस्य तस्य भवतः तव तनुभासा कायकान्त्या नीलस्याम्बरस्य वस्त्रस्य रुचिं दीप्तिं राति ददाति एवंविधा सुषुमा उत्कृष्टशोभा उचिता योग्यैव किल। धवलवस्तुसम्पर्कान्नीलं अतिशयेन शोभते। अथ च हे कामपाल कन्दर्पपोषक रेवतीश चन्द्रकुमुदानां कैरवाणां अविकासेन भाविता स्फुरिता रुचिः कान्तिः प्रीतिर्वा यस्य भवतः तनुभासा बिम्बतेजसा नीलस्य अम्बरस्य आकाशस्य सुषमा परमा शोभा उचितैवेति ध्वनिः॥ ८७ ॥

एकचित्ततति॑रद्वयवादिन्
न त्रयीपरिचिताध्वबुधस्त्वं।

चतुर्भिः श्लोकैर्बुद्धं वर्णयति ॥ एकेति। हे अद्वयवादिन् द्वैतवाद्यघटपटादिभेदानामसत्यतया प्रतिपादनेनैकस्याज्ञानकारणतयैव सत्यताङ्गीकारादद्वैतवादिन् त्वं मां पाहि। किम्भूतः। एकैव चित्ततति: ज्ञानसन्ततिर्यस्य दीपकलिकान्यायेन क्षणिकज्ञानप्रवाह एवैकीयस्य मतेन तु तदतिरिक्तं न किञ्चिदप्यस्ति तादृशः। अत एवाद्वयवादिन्निति योजना। तथा त्रय्या अपरिज्ञातो ज्ञातस्तादृशो न भवसीत्यत्रयीपरिचितो नञ् समासो वा। नेति पृथग्वा। वेदत्रयीगम्योऽपि न भवसीत्यर्थः। अथ च वेदत्रय्या परिचितः कृतपरिचयः वेदत्रयी परिचिता अभ्यस्ता येन तादृशो वा न भवसि। सर्व्वस्य क्षणिकताङ्गीकाराद्धर्माधर्म्मभोगव्यवस्थाया निरासादनङ्गीकृतवेदप्रामाण्य इत्यर्थः। अत एव बुधः पण्डितः। न हि पण्डितं विना वेदादिसर्व्वदूषणसमर्था अन्यस्य बुद्धिः सम्भवति। अथ च अत्रयीपरिचितो बुध इति विरोधाभासः। न हि वेदत्रयमजानानस्यापि पाण्डित्यं सम्भवति। अथ च यः पण्डित एकमेवाद्वितीयं ब्रह्मेति मन्यमानो वेदान्ती स वेदत्रयीं न मन्यते इति विरोधः। वेदान्तिना हि वेदप्रामाण्यस्य स्वीकृतत्वात्। अथ च अद्वयवादाद् द्वित्वसङ्ख्यामपि यो नाङ्गीकरोति स त्रित्वसङ्ख्यां न मन्यत इति युक्तमेवेत्यर्थः। तथा माध्यमिकानामपि किञ्चिन्मात्रमतभेदेन बौद्धसिद्धान्तपातित्वात्।

पाहि मां विधुतकोटिचतुष्कः
पञ्चबाणविजयी षडभिज्ञः ॥ ८८ ॥

न सन्नासन्नसदसन्न चाप्यनुभयात्मकं ।
* चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिकं विदुः ॥

इति । अनिर्वचनीयप्रपञ्चवादित्वाद् विधुतं निराकृतं सत्, असत्, सदसत्, तद्विलक्षणं, कोटिचतुष्कं प्रकारचतुष्टयं येन, अथ च त्रित्वनिषेधान्निरस्तचतुष्टयः, तथा विरक्तत्वाद्दिगम्बरत्वाच्च पञ्चबाणः कामस्तद्विजयी मारजित्, अथ च वणशब्दे इत्यस्माद् घञिः वाणशब्दः । तं पञ्चसङ्ख्यावाचिनं पञ्चशब्दं न सहत इत्यर्थः । यो हि चतुष्टयं न सहते स पञ्चापि न सहत इति युक्तमेवेत्यर्थः । तथा देशादिव्यवहितवस्तुदर्शनं देशादिव्यवहितशब्दश्रवणमतीतजन्मस्थितिस्मरणं परचित्तज्ञानमविद्यास्मितारागद्वेषाभिनिवेशाख्यपञ्चक्लेशक्षयः, अणिमादिसिद्धिरेति षडभिज्ञा ज्ञानप्रकारा यस्य स षडभिज्ञः । वेदानुसारिभिर्दैत्यैः पराभूता देवा ब्रह्माणं शरणं गताः, ब्रह्मणा प्रसादितो नारायणो बुद्धरूपेणावतीर्य्य दैत्यबुद्धिं वेदार्थभ्रष्टां विधाय बौद्धमतमुपदिदेश, ततस्ते देवानां जय्याः सम्पन्ना इति । अत एव चैतदीयमतपरिभाषयैव स्तुतिरकारि । परिचिता ऽप्यबुद्धबुधस्त्वमिति पाठे नेति पदं भित्वा त्वया वेदत्रयी न

* चतुष्कामिति पाठान्तरं ।

तत्र मारजयिनि त्वयि साक्षा-
त्कुर्व्वति क्षणिकतात्मनिषेधौ ।
पुष्पवृष्टिरपतत् सुरहस्तात्
पुष्पशस्त्रशरसन्ततिरेव ॥ ८९ ॥

परिचिता न स्वीकृतप्रामाण्या । अप्यविरोधे । तथापि बुध-स्त्वमित्यर्थः। परिचिताध्वबुध इति पाठे त्रयीपरिचितानां वैदि-कानामध्वनि मार्गे बुधः पण्डितो न भवसि, अवैदिकमार्गमेव जानान इत्यर्थः ॥ ८८ ॥

तत्रेति । तत्र तस्मिन्नवतारूपे सौन्दर्य्याज्जितेन्द्रियत्वाच्च मारजयिनि कामस्य जेत्रे त्वयि क्षणिकता, सर्व्वं क्षणिकं सत्त्वात्, तथा आत्मनिषेधश्च, "समनस्केन्द्रियजन्यनीलपीताद्याकारसवि-कल्पकनिर्विकल्पकवासनोपहितचित्सन्ततिरेवात्मा, भूतान्येव चे-तयन्ते, मनसा संयोगेन ज्ञानमुत्पद्यते, तस्माद्देह एवात्मा न तु नित्योऽन्यः कश्चित्" इत्यादिप्रकारेण सर्व्वभावानां क्षणमात्र-स्थायितां नैरात्म्यञ्च स्वदर्शनोक्तसमाधिना साक्षात् कुर्व्वति सति पुष्पशस्त्रस्य कामस्य शरसन्ततिर्बाणपरम्परारूपा सुरहस्तात् पुष्प-वृष्टिरेवापतत्। अतिबले हि शत्रौ भीतानां करादायुधा नि-पतन्ति। कामोऽपि त्वत्तो भीतः, पुष्पशरस्य तथा च तस्य करात् लङ्घयेन पतिता पुष्परूपबाणपरम्परा क्षणिकतात्मनिषेधौ सा-क्षात् कुर्व्वति त्वयि विषये सुरमुक्ता पुष्पवृष्टिरिवापतदित्युत्प्रे-क्षा । कामोऽपि देव एव पुष्पवृष्टिमोचने हेतुः । यो हि लोको-

तावके हृदि निपात्य कृतेयं
मन्मथेन दृढधैर्य्यतनुत्रे।
कुण्ठनादतितमां कुसुमाना-
ञ्छत्रमित्रमुखतेव शराणां॥ ९०॥

त्तरं वस्तुप्रत्यक्षगोचरं करोति यस्य कस्यचन विजयते तथोक्त परि देवैः पुष्पवृष्टिः क्रियत इत्यादि ज्ञातव्यं॥ ८९॥

तावक इति। मन्मथेन दृढमभेद्यं धैर्य्यमेव तनुत्रं कवचं यस्य तस्मिंस्तावके हृदि मनसि अथ च वक्षसि अर्थात शरान् निपात्य नितरां दृढपातपूर्व्वं यथा तथा पातयित्वा दृढतनुत्रत्वादेव अतितमां कुण्ठनात् तीक्ष्णत्यागाद्धेतोः कुसुमरूपाणां शराणां छत्रं मित्रञ्च येषां तानि, छत्रस्य वा मित्राणि मुखानि येषां ते भग्नत्वादिशकलितमुखास्तेषां भावस्तत्ता सूचीमुखतापरित्यागेन छत्रतुल्यवृत्तमुखतेयं प्रत्यक्षदृश्या कृता। दृढतनुत्रे हि पतिता बाणः कुण्ठितत्वाद्वृत्तमुखा भवति। स्मरशराः शरत्वात पूर्व्वं सूचीमुखा आसन्, इदानीं धैर्य्यकञ्चुके त्वदीये हृदि निपात्य नितरां कुण्ठनादिव तेषां पुष्परूपाणां शराणां छत्राकारमुखता जातेत्युत्प्रेक्षोपमा वा। विकसितानि पुष्पाणि छत्रतुल्यानि भवन्ति। अथ च छत्रं छायाकारित्वात् सुखदमेव न तु दुःखदं यथा तथा कामशरा अपि त्वद्धृदयस्य निर्वापका एव जाताः, न तु त्वां जेतुमशकन्नित्यर्थः। एतादृशो जितेन्द्रियः कोऽपि नास्तीति भावः। निपात्य ण्यन्तात् ल्यप्॥ ९०॥

यत् तव स्तवविधौ विधिरास्यै-
श्चातुरीं चरति तच्चतुरास्यः।
त्वय्यशेषविदि जाग्रति शर्व्वः
सर्व्वविद्ब्रुवतया शितिकण्ठः॥ ८१॥

यदिति। विधिः तव स्तवविधौ स्तुतिविधौ बहुभिरास्यैर्मुखैः चातुरीं वैदग्ध्यं यत् यदि चरति प्राप्नोति नानाप्रकारैर्यदि वर्णनं करोति तत् तर्ह्येव। चतुराणि वर्णननिपुणानि आस्यानि यस्य वा तादृशो भवेन्नान्यः। अथ च त्वद्वर्णनाविधौ यस्माच्चातुरीं प्राप्नोति तस्मादेव हेतोश्चतुराण्यास्यानि यस्येति चतुरास्यो न तु चत्वार्य्यास्यानि यस्येति विग्रहेण चतुरास्यः। आस्यानाञ्चतुष्के सत्यपि तत्रार्थे गौरवाभावात्, अत्र तु गौरवसद्भावात् तथैवोच्यत इत्यर्थः। त्वदीयस्तुतिपरत्वाद् ब्रह्मणो लोकत्रयेऽप्येतं कीर्त्तिरजनीति भावः। तथा शर्व्वो हरः त्वयि बुद्ध एव अशेषविदि सर्व्वज्ञे जाग्रति सति सर्व्वविदं सर्व्वज्ञमात्मानं ब्रूते स सर्व्वविद्ब्रुवस्तत्तयेव,परगुणस्यात्मन्यारोपणेन हेतुना कलङ्केन शितिकण्ठो नीलकण्ठः न तु कालकूटभक्षणेन नीलकण्ठः त्वत्स्पर्द्धितया लोकत्रयेऽपि महेशस्य एवमपयशो जातमित्यर्थः। ब्रह्ममहेशाभ्यामपि सकाशात् त्वमेव परमपुरुषः सर्व्वज्ञश्चेति भावः। अन्यस्य यथाऽऽत्मस्तुत्या सर्व्वज्ञसन्निधौ लज्जया मालिन्यं भवति॥ ८१॥

धूमवत् कलयता युधि कालं
म्लेच्छकल्पशिखिना करवालं ।
कल्किना दशतयं न मम कल्कं
त्वं व्युदस्य दशमावतरेण ॥ ८२ ॥

श्लोकद्वयेन कल्किनं स्तौति ॥ धूमवदिति । त्वं धूमवत्कालं करवालं खड्गं युधि म्लेच्छैः सह युद्धे कलयता धारयता कालं मृत्युरूपं करवालं खड्गं धूमवद् धूममिव धारयता वा । अत एव म्लेच्छानां कल्पशिखिना प्रलयकालानलरूपेण म्लेच्छा इव म्लेच्छाः पापिनस्तेषां वा, म्लेच्छप्रायाणां वा, एवम्भूतेन कल्किना कल्किसञ्ज्ञेन दशमावतारेण कृत्वा मम दशतयं दशात्मकं कल्कं पापं व्युदस्य निराकुरु समूलमुन्मूलयेत्यर्थः । अथ च यः स्वयं कल्की सोऽन्यकल्कं विनाशयतीति विरोधः कल्किशब्दस्य विष्णुनामत्वात् तत्परिहारः । म्लेच्छकल्पशिखिनेत्यवतारप्रयोजनमुक्तं । अदत्तस्य वस्तुनः स्वयं ग्रहणं, यागीयातिरिक्ता हिंसा, परस्त्रीगमनञ्चेति त्रिविधं कायिकं । पारुष्यं, अनृतं, पैशून्यं, असम्बद्धप्रलापश्चेति चतुर्विधं वाचिकं । परद्रव्यग्रहणेच्छा, परानिष्टचिन्ता, वृथैव परेषु दोषाभिध्यानञ्चेति त्रिविधं मानसं । इति दशविधं पापं । चक्षुस्त्वक् श्रोत्रघ्राणजिह्वापाणिपादपायूपस्थमनोजन्यं वा दशसु मासेषु भवतीत्याहुः, गर्भवासलक्षणं दुःखमिति वा । कल्कः पापाशये पापे, इति विश्वः ॥ ८२ ॥

देहिनेव यशसा भ्रमतोर्व्वीं
पाण्डुरेण रणरेणुभिरुच्चैः ।
विष्णुना जनयितुर्भवताऽभू-
न्नाम विष्णुयशसश्च सदर्थं ॥ ८३ ॥
सन्तमद्वयमयेऽध्वनि दत्ता-
त्रेयमर्ज्जुनयशोऽर्ज्जुनवीजं ।

देहिनेति । हे कल्किन् विष्णुयशसस्तन्नामकस्य जनयितुः पितुः विष्णुरितिनाम भवतैव त्वयैव कृत्वा सदर्थं सान्वयमभूत् । किम्भूतेन भवता । रणरेणुभिरुच्चैः पाण्डुरेण धवलतरेण शरीरधारिणा तथा दुष्टगवेषणार्थं उर्व्वीं भ्रमता विष्णुना व्यापकेन विष्णुसञ्ज्ञकेन च पाण्डुरत्वाद् व्यापित्वाच्च देहिना शरीरधारिणा यशसेव यशोरूपेणेव विष्णुर्व्यापकं यशो यस्य त्वया पुत्रेणेति यावत् । तस्य तव पितुर्नाम सान्वयमभूज्जातप्रायमेवेति भाविन्यपि भूतवदुपचारः । अतीतकलियुगावतारापेक्षया अभूदिति निर्द्देशो वा । पूर्व्वं नु डित्थादिवत्तन्नामाभूत् त्वय्युपपन्ने तु सार्थकमभूदित्यर्थः ॥ ८३ ॥

सन्तमिति । दत्तात्रेयं स्तौति । अहं दत्तात्रेयनामानं त्वां नौमि । किम्भूतं । अद्वयमयेऽध्वनि अद्वैतमार्गे एकात्मवादे सन्तं वर्त्तमानं । तथा अर्ज्जुनस्य कार्त्तवीर्य्यार्ज्जुनस्य यशसो यदर्जनं तस्य वीजं मूलं । पूर्व्वं कार्त्तवीर्य्येणाराधितो दत्तात्रेयः, तव यशो लोकत्रयव्यापि भविष्यतीति वरं दत्तवान् । अर्ज्जुन इति

नौमि योगजनितानघसञ्ज्ञं
त्वामलर्कभवमोहतमोर्कं ॥ ९४ ॥
भानुसूनुमनुगृह्य जय त्वं
राममूर्त्तिहतवृत्रहपुत्रः ।
इन्द्रनन्दनसपत्नमपि त्वां
नौमि कृष्ण निहतार्कतनूजं ॥ ९५ ॥

पाठे अर्ज्जुनयश एवार्ज्जुनवृक्षस्तस्य वीजं। वृक्षस्योत्पत्तिर्वीजादेव युक्ता। यद्वा अर्ज्जुनं धवलं यशो यस्य एवंविधोऽर्ज्जुनः कार्त्तवीर्य्यस्तस्य वीजं। तथा योगेनाष्टाङ्गयोगेन जनिता उत्पादिता मायादिराहित्यादनघ इत्यपरा सञ्ज्ञा यस्य तदा हि देवैर्योगबाहुल्यादनघेति सञ्ज्ञा कृता। अलर्कनाम्नः ऋतुशत्रुध्वजमदालसापुत्रस्य राज्ञो भवमोहो ममतादिरूपः संसारमोहः स एव तमोऽन्धकारः तस्य विनाशहेतुत्वादर्कस्तं। योगोपदेशेन तस्य मोहं चिच्छेदेति पुराणकथा ॥ ९४ ॥

एवं दशावतारान्निर्वर्ण्य भक्त्यतिशयेन पुनरपि कियतस्तानेवावतारान् त्रिविक्रमं हरिहरौ बालमुकुन्दञ्च सङ्क्षेपेण चतुर्विंशतिश्लोकैर्वर्णयति। भानुसूनुमिति। हे विष्णो भानुसूनुं सूर्य्यपुत्रं सुग्रीवमनुगृह्य बालिनं हत्वा तद्वधूं तारां तस्मै दत्त्वा राज्याभिषेकद्वारा कृतार्थीकृत्य राममूर्त्त्या रामावतारेण हतो मारितो वृत्रघ्नस्य इन्द्रस्य पुत्रः बाली येन स त्वं रामो जय उत्कर्षेण वर्त्तस्व। नमस्तेऽस्मीत्यर्थः। तथा भो कृष्णावतार अहं

वामनादणुतमादनुजीया-
स्त्वं त्रिविक्रमतनूभृतदिक्कः।
वीतहिंसनकथादथ बुद्धात्
कल्किना हृतसमस्त नमस्ते॥ ८६॥

इन्द्रनन्दनस्य अर्ज्जुनस्य सपत्नं मित्रभूतं अत एव निहतो मारितोऽर्कतनुजः कर्णो येन तं त्वामपि नौमि स्तौमि। अपिशब्दाद्राममपीत्यर्थः। कृष्णेन अर्ज्जुनेन कृत्वा निहतोऽर्कतनूजो येनेति वा। यो भानुसूनुमनुगृह्णाति स निहतार्कतनूजः। कथं। तथा यो हतेन्द्रपुत्रः स इन्द्रपुत्रमित्रं कथमिति विरोधार्थो ऽपिशब्दः। निग्राह्यानुग्राह्ययोस्तत्पुत्रयो रामकृष्णावतारयोश्च भेदाद् विरोधपरिहारः। एतादृग्विरुद्धचरितत्वाद् दुर्विज्ञेयः। परमपुरुषोऽसीति भावः॥ ८५॥

वामनादिति। रामकृष्णौ वर्णितौ। हे विष्णो अणुतमात् ह्रस्वतमशरीराद् वामनाद् वामनावतारादनुपश्चात् त्रिविक्रमस्य त्रिविक्रमावतारस्य तन्वा शरीरेण, त्रिविक्रमावताररूपया वा तन्वा भृता व्याप्ता दिशो येन स त्वं जीयाः, सर्व्वोत्कर्षेण वर्त्तस्व। त्रिविक्रमेति सम्बुद्धिर्वा। तथा वीता निवृत्ता हिंसनकथा प्राणिवधवार्त्ताऽपि यस्मादेवम्भूताद् बुद्धावतारात्, अथ पश्चात् कल्किना दशमावतारेण कृत्वा हृतं मारितं कलिमलदूषितं समस्तं प्राणिजातं येन तादृशविष्णो ते तुभ्यं नमः। यो ह्यणुतमः स तनुभृद्दिक्को व्यापकदेहः कथं। तथा यस्य वीतहिंसन-

मां त्रिविक्रम पुनीहि पदे ते
किं न्यगन्नजनि राहुरुपानत् ।
किं प्रदक्षिणनकृद्भ्रमिपाशं
जाम्बवानदित ते बलिबन्धे ॥ ८७ ॥

कथाः स एव ह्रतसमस्तः कथमिति विरोधः। अवतारभेदेन परिहार इति भावः। वामनत्रिविक्रमौ वर्णितौ ॥ ८६ ॥

मामिति। हे त्रिविक्रम त्वं मां पुनीहि, तथा गगनव्यापिनी ऊर्द्धीकृते ते पदे विष्णुपदे न्यगन् नक्षत्रमालामध्यवर्त्ती श्यामरूपो राहुरुपानदजनि पादरक्षिकेव जाता किं। एतावदतिमहच्छरीरं धृतं। यस्य चरणस्थाने गगनस्थो राहुः उपानदिव जात इत्यर्थः। साऽपि श्यामा चरणे च लगति। तथा प्रदक्षिणनं प्रदक्षिणाग्रं पञ्चदशमुपचारं कुर्वन् जाम्बवान् ऋक्षराजो ब्रह्मावतारो बलिबन्धननिमित्ते ते तुभ्यं भ्रमिपाशं भ्रमणरूपवलयाकारवेष्टनमेव पाशं बन्धनरज्जुमेव अदित दत्तवान् किं। यो हि कञ्चिद्बद्धुमुपक्रमते तस्मै केनचित् पाशो दीयते। यद्यपि देवेन च बलिर्वाम्बन्धमेव प्रापितो न तु रज्ज्वादिबन्धं तथाऽपि लोके बद्ध इति प्रसिद्धिवशाद् बन्धशब्दच्छलेन कविः पाशशब्दं प्रायुङ्क्त। जाम्बवान् किल तदा त्रिविक्रमस्य षोडशोपचारपूजामकृतेति प्रवादः। अत्रापि त्रिविक्रमो वर्णितः। बन्ध इति पाठे हलन्तात्बन्धेश्चतुर्थी। ते इत्यस्य विशेषणं। बन्ध इति पाठे तस्मादेव सम्बुद्धिः ॥ ८७ ॥

अर्द्धचक्रवपुषाऽर्ज्जुनबाहून्
यो लुनात् परशुनाऽथ सहस्रं।
तेन किं सकलचक्रविलूने
बाणबाहुनिचये ऽञ्चति चित्रं॥ ९८॥
पाञ्चजन्यमधिगत्य करेणा-
पाञ्च जन्यमसुरानिव वक्षि।

अर्द्धेति। यो जामदग्न्यो भवान् चक्रस्यार्द्धं समो भागस्तस्येव वपुः स्वरूपं यस्य तदाकारेण परशुना कृत्वा सहस्रमर्ज्जुनबाहून् शीघ्रमेव अलुनात् चिच्छेद। तेनैव भवता सकलेन सम्पूर्णेन चक्रेण सुदर्शनाख्येन विलूने छिन्ने बाणासुरबाहुनिचये विषये लोकश्चित्रमाश्चर्य्यमञ्चति किं, अपि तु न प्राप्नोति। अथ च किमञ्चति किमिति प्राप्नोति, अपि तु वृथैव तत्। येन पूर्व्वं एकस्य बाहुसहस्रं छिन्नं तेनैव यदान्यस्य बाहुसहस्रे छिन्ने न किञ्चिच्चित्रं तस्य तत्र क्लृप्तशक्तित्वादित्यर्थः। येन अर्द्धेनैव चक्रेण बाहुसहस्रं छिद्यते तेन समग्रेण चक्रेण बाहुसहस्रे छिन्ने सुतरां न किञ्चिच्चित्रमित्यर्थः। परशुरामकृष्णौ वर्णितौ॥ ९८॥

पाञ्चजन्यमिति। हे विष्णो त्वं वामकरेण पाञ्चजन्यनामानं शङ्खमधिगत्य धृत्वा तथा अपां जलानां जन्यन्तु उत्पाद्य कमलवद्दक्षिणकरे कृत्वा असुरान् दैत्यान् इति वक्षीव प्रतिवदसीव। इति किं। हे दैत्या अचेतनोऽपि अयं शङ्खः मयि

चेतनास्थ किल पश्यत किं मा-
चेतनोऽपि मयि मुक्तविरोधः ॥ ९९ ॥
तावकोरसि लसद्वनमाले
श्रीफलद्विफलशाखिकयेव ।

विषये मुक्तविरोधः किं न, अपि तु त्यक्तविरोध एव। किल यस्मात् पाञ्चजन्यत्वे सत्यपि अपाञ्चजन्यत्वमङ्गीकरोतीति यूयं पश्यत। यतः सचेतनाः स्थ चैतन्ययुक्ता वर्त्तध्वे कस्मान्मयि विषये विरोधं कुरुथेति। अचेतना अपि मयि विरोधं नाचरन्ति किमुत मरणभीताः सर्व्वज्ञाः, तस्मान्मयि विरोधं मास्माकुरुं। शब्दत एव विरोधोऽर्थद्वयेन तत्परिहारः। अथ वा अचेतन एव मयि मुक्तविरोधः शङ्खवत्, यूयं तु सचेतनाः स्थ तस्मान्मयि विरोधं माऽऽचरथेति शङ्खवङ्गवताऽपि यावदचेतनात्व कुर्व्वं तावद्वि-रोधो न त्यज्यत इति। अथ च अचेतनोऽपि शङ्खो मयाऽद्यापि न मोच्यते सचेतनास्तु शङ्खादयो भवन्तः कथं वा मया मो-च्येरन्, अपि तु युष्मान् मारयिष्याम्येवेति वचोत्यर्थः। अधिगत्य च अधिगत्येवेति पचे सम्बन्धः। अचेतनोऽपि मयि मुक्तविरोधः किं न पश्यतेति वा। अपामिति कृत्यानां कर्त्तरि (पा० २।३। ७१) इति षष्ठी ॥ ९९ ॥

तावकेति। कमलया लक्ष्म्या लसन्ती पत्रपुष्पफलमयी माला वनमाला यस्मिंस्तस्मिंस्तावकोरसि श्रीफलस्य विल्ववृक्षस्य द्विफलशाखिकयेव फलद्वययुक्तया ह्रस्वकोमलशाखयेव स्थीय-

स्थीयते कमलया त्वदजस्र-
स्पर्शकण्टकितयोत्कुचया च ॥ १०० ॥
त्यज्यते न जलजेन करस्ते
शिक्षितुं सुभगभूयमिवोच्चैः।
आननञ्च नयनायितबिम्बः
सेवते कुमुदहासकरांशुः ॥ १०१ ॥

ते। किम्भूतया श्रिया। तव अजस्रं अनवरतं स्पर्श आश्लेषस्तेन कण्टकितया सञ्जातसात्त्विकरोमाञ्चया, तथा उत्कुचया च उन्नतपीवरस्तनया च। यत्र हि वनानां माला पङ्क्तिर्विलसति तत्र सकण्टकया पत्लसहितया च विल्वशाखया स्थीयते। तथात्रापि लसद्वनमालत्वादिशिष्टया लक्ष्म्या विशिष्टविल्वशाखयेव स्थीयत इत्युपमोत्प्रेक्षा वा। शाखिका। अल्पे इति ह्रस्वे इति वा (पा० ५।३।८५।८६) कः॥ १०० ॥

त्यजत इति। जलजेन शङ्खनाय च पद्मेन ते करः कदाचिदपि न त्यज्यते सशङ्खचक्रगदापद्मत्वात् तवैवेत्यर्थः। तच्चोत्प्रेक्षते। उच्चैरत्यन्तं सुभगभूयं त्वत्करकमलरक्तिमादिसौभाग्यं शिक्षितुमिव। गुरुशुश्रूषा हि विद्याप्राप्तिहेतुः। तथा कुमुदहासकराः कैरवविकासकारिणोंऽशवो यस्य स चन्द्रः, नयनायितं नेत्रमिवाचरितं बिम्बं यस्य तथाभूतः सन् त्वदीयवामनयनीभवंश्चन्द्रः परमं निष्कलङ्कत्वादि त्वन्मुखसौभाग्यं शिक्षितुमिव त्वदाननञ्च गुरुं सेवते। अनयोः सौभाग्यं पद्मचन्द्रयोरद्यापि

ये हिरण्यकशिपुं रिपुमुच्चै-
रावणञ्च कुरुवीरचयं च ।
हन्त हन्तुमभवंस्तव योगा-
स्ते नरस्य च हरेश्च जयन्ति ॥ १०२ ॥
कोयमर्द्धभवता भवतो हे
मायिना ननु भवः सकलस्त्वं ।

नागतमिति सूच्यते। पाञ्चजन्येत्यादिश्लोकत्रयेण मूलप्रकृतिरेव वर्णिता। नयनायितेति आचारक्यडन्तान्निष्ठा। हासकरेति ताच्छील्ये टः ॥ १०१ ॥

य इति। हे विष्णो ये तव क्रमेण नरस्य मनुष्यस्य च हरेः सिंहस्य च तथा नरस्य श्रीरामचन्द्रस्य हरेः सुग्रीवस्य च तथा नरस्य अर्ज्जुनस्य हरेः श्रीकृष्णस्य च संयोगा उच्चैरधिकं रिपुं हिरण्यकशिपुं हन्तुं तथा उच्चै रिपुं रावणं हन्तुं तथा उच्चै रिपुं कुरुवीराणां भीष्मादीनां चयं समुदायं हन्तुं अभवन्, ते तव नरस्य हरेश्च योगा जयन्ति सर्व्वोत्कर्षेण वर्त्तन्ते हन्त आश्चर्य्ये। अवतारत्रयेऽपि नरहरियोगावलम्बनाद्योगः संश्लेषो मैत्री च ॥ १०२ ॥

केति। हे विष्णो तव इयं पुराणादिषु दृश्यमाना अर्द्धं भवो महेशो यस्य तादृशोऽर्द्धभवः, तत्ता हरिहरमूर्त्तिता काऽप्यपूर्व्वा आश्चर्य्यकारिणी। मायिना भवता देहे: मुखात् प्रभृति चरणपर्य्यन्तं श्यामलादितत्तदसाधारणचिह्नयुक्तताऽर्द्धस्य,

शेषतामपि भजन्तमशेषं
वेद वेदनयनो हि जनस्त्वां ॥ १०३ ॥

अर्द्धस्य च धवलत्वाद्यसाधारणचिह्नयुक्तता ईदृशी लोकोत्तरा तव माया आश्चर्य्यकारिणीत्यर्थः। अथ च केयं अपि त[illegible]-चित्रैव। ननु यस्मात् त्वं सकलः समग्रो भवो महेशः [illegible]थ च चन्द्रकलासहितो यो महेशः स्वतन्त्रमूर्त्तिः स त्वमेव। तथा च सकलभवरूपस्यार्द्धभवरूपता विरोधादयुक्ता। आश्चर्य्यकारित्वेऽप्ययमेव हेतुः। हरिहरात्मकता च अवतारान्तरमिति। अवतारभेदेन तु विरोधपरिहारः। भवत इयं अर्द्धभवता का कथमूढेत्यर्थ इति वा। अथ च तवेयमर्द्धसंसारता काऽपि तु विरुद्धा चित्ररूपा वा। यतः सकलः समग्रः कलाभिरवयवैः सह वर्त्तमानस्य भवः संसारः, उत्पत्तिधर्म्मा त्वमेवेति वा। हि यस्मात् वेदा एव नयनानि यस्य सः सकलवेदार्थनिश्चयदृढप्रत्ययी जनो लोकस्त्वां शेषतां एकदेशभूततां पृथग्भूततां भजन्तमपि अशेषं चराचरं जगद्रूपं वेद जानाति। सर्व्वं विष्णुमयं जगदित्यादिश्रुतिस्मृतिभिस्तव चराचररूपत्वप्रतिपादनात् त्वयि सकलभवत्वं युक्तमेवेत्यर्थः। किं पुनर्हरिहरादिचित्ररूपधारणं। अथ च शेषोऽपि विष्णोरेव मूर्त्तिः, अनन्ततां भजति स एव कथमशेषोऽनन्तो न भवतीति च विरोधः, व्याख्यान्तरेण तत्परिहारः ॥ १०३ ॥

प्राग्भवैरुदगुदग्भवगुम्फा-
न्मुक्तियुक्तिविहताविह तावत् ।
नापरः स्फुरति कस्यचनापि
त्वत्समाधिमवधूय समाधिः ॥ १०४ ॥

प्राग्भवैरिति । प्राग्भवैः प्राक्तनैः पूर्व्वजन्मोपार्जितैः कर्म्मभिर्हेतुभिः उदगुदग्भवस्य उत्तरोत्तरस्य संसारस्य जन्मनो वा गुम्फाद्ग्रथनाद्धेतोः आत्यन्तिकी दुःखनिवृत्तिः, अविद्यास्तमयो वा मोक्ष इत्येव लक्षणा मुक्तेर्युक्तिर्योगः प्राप्तिरिति यावत् । तस्याः विहतौ अनेकजन्मसु तत्तत्सुकृतदुष्कृतरूपकर्म्मार्जनान्मूलसद्भावात् संसारानिवृत्तौ कथं नाम मुक्तिः सम्भवतीत्यादिभिर्युक्तिभिरनुपपद्यमानतायां तावन्निश्चयेन सत्यां इहैव पूर्व्वपक्षे विषये कस्यचनापि वादिनः त्वयि समाधिश्चित्तैकाग्र्यं ध्याने सन्ततानुचिन्तनं तदवधूय परिहृत्य अपरोऽन्यः समाधिः परिहारः सिद्धान्तरूपो न स्फुरति प्रकाशते। उक्तयुक्त्या यद्यपि मुक्तिविहतिस्तथापि तव ध्यानादिद्वारा प्राप्तपरमात्मरूपसाक्षात्कारेण च प्राचीनतत्तज्जन्मार्जितकर्म्मणां समूलमुन्मूलनादिदानीमन्यकर्म्मानारम्भे प्रारब्धकर्म्मणो भोगादेव क्षयान्नैष्कर्म्यसम्पन्ने मुक्तिर्युज्यत एवेति सर्व्वेषामपि वादिनां त्वत्समाधिरेव सिद्धान्त इत्यर्थः । मुक्तिहेतुस्त्वमेवेति भावः । न तावत् स्फुरतीति वा ॥ १०४ ॥

ऊर्द्धदिक्कदलनां किमकार्षीः
किं ननु हरिहरीभवनाय।
किञ्च तिर्य्यगभिनो नृहरित्वे
कः स्वतन्त्रमनु नन्वनुयोगः॥ १०५॥

ऊर्द्धेति। हे विष्णो त्वं हरिहरीभवनाय अहरिहरयोरपि हरिहरयोर्भवनाय हरिहरमूर्त्तीभवितुं ऊर्द्धा दिग्यस्मिन् तदूर्द्धदिक्कमेवम्भूतं दलनं विभागो यस्यास्तादृशीं तनुं [illegible] कारं किं किमर्थमकार्षीः, हरिहरमूर्त्तौ चरणादिम [illegible] त्तत्तद्दिशदृशवर्म्मादिधारणेऽधोभागमारभ्योर्द्धभागपर्य्यन्त [illegible] समर्थमकार्षीः। नृहरित्व इव तिर्य्यग्विभागमेव किमिति न [illegible] कार्षीरित्यर्थः। चरणादेवारभ्य देवतावर्णनस्य कर्त्तुं युक्तत्वा [illegible] र्द्धदिक्कत्युक्तं। यदि च हरिहरतनुं नगूर्द्धदिग [illegible] मिति नृहरित्वे च नरहरीभवितुं तिर्य्यग्यथा तथा किमित्यभिनः विभक्तवान्। कण्ठा [illegible] धोभागे नरत्वेन ऊर्द्धभागे सिंहत्वेनैव तिर्य्यग्दिक्कविभागं किमित्यकार्षीः। हरिहरत्व इव ऊर्द्धदिक्कविभागमेव किमिति नाकार्षीरित्यर्थः। एवमा [illegible] पद्वयं स्वयमेव परिहरति। ननु भो विष्णो स्वतन्त्रं त्वां अनु त्वां प्रति अनुयोगः प्रश्नः कः, अपि तु न युक्तोऽयं प्रश्नद्वारक आक्षेपः। समर्थो हि स्वेच्छया यत्किञ्चित् करोति परं किमर्थमेवं करोषीत्याक्षेपार्हः स न भवतीत्यर्थः। न खलु परतन्त्राः प्रभुधिय इति न्यायेन स्वेच्छामात्रेण तथारूपं करोषीति भावः, अत्र हरिहरनरहरिवर्णनं। ऊर्ध्वदिक्केति बहुव्रीहौ कप्॥ १०५॥

आप्तकाम सृजसि त्रिजगत् किं
किं भिनत्सि यदि निर्म्मितमेव ।
पासि चेदमवतीर्य्य मुहुः किं
स्वात्मनाऽपि यदवश्यविनाश्यं ॥ १०६ ॥
जाह्नवीजलजकौस्तुभचन्द्रान्
पादपाणिहृदयेक्षणवृत्तीन् ।

आप्तेति । हे आप्तकाम अवाप्तसकलाभिलाष विष्णो त्वं त्रिजगत् किं सृजसि । यदि निर्म्मितमेव तर्हि निष्प्रयोजनमेव किं भिनत्सि । यदि चेदं स्वात्मनाऽपि यदवश्यं विनाश्यं स्वयमपि निश्चयेन संहरणीयमेव तर्हि मुहुर्वारं वारं तेन तेन रूपेण अवतीर्य्य जन्मादिक्लेशमप्यनुभूय इदं जगत् किमर्थं पासि च । यदवश्यं विनाश्यं तत्कोऽपि न हि स्वात्मना स्वयमेव पालयति प्रयोजनाभावात् । सृष्टिपालनसंहारान् किमर्थं करोषीत्यर्थः । अत्रापि कः स्वतन्त्रमित्यादि पूर्व्वं एव परिहारः । ब्रह्मादिरूपस्त्वमेवेति भावः । इष्टप्राप्तिरनिष्टनिवृत्तिश्चेति द्वयं प्रयोजनं सर्व्वस्य । ततश्च इष्टप्राप्तौ अनिष्टनिवृत्तेरन्तर्भावं मन्यमानः श्रीहर्ष आप्तकामेत्येव सम्बुद्धिमकृतेति ज्ञेयं ॥ १०६ ॥

जाह्नवीति । अब्धिसलिलादुत्थिता निर्गता लीला स्वभावतश्चपलाऽपि श्रीर्लक्ष्मीः यथाक्रमं जाह्नवी च जलजं पद्मजन्यश्च कौस्तुभश्च चन्द्रश्च तान् पादे पाणौ हृदये ईक्षणे नेत्रे वृत्तिरवस्थानं येषामेवम्भूतान् परिचितान् समुद्रैकाश्रयतया सह-

उत्थिताऽब्धिसलिलात्त्वयि लोला
श्रीः स्थिता परिचितान् परिचिन्त्य ॥ १०७॥
वस्तु वास्तु घटते न भिदानां
यौक्तनैकविधबाधविरोधैः।

वासमज्ञातस्नेहान् सुहृदस्त्वयि विष्णौ परिचिन्त्य विचार्य्य दृष्ट्वैव च त्वयि स्थिता श्रीः चाञ्चल्यं परित्यज्य त्वयि नित्यावस्थिताऽभूत्। किं जाङ्गव्यादयो लक्ष्मीश्च तव सेवां कुर्व्वन्ति, एतादृशः परमपुरुषोऽसीति भावः ॥ १०७ ॥

वस्त्विति। हे विष्णो घटपटादिवस्तुजातं यौक्तैः युक्तिसम्बन्धिभिर्युक्तिकृतैर्न्यायोत्थैर्नैकविधैर्बहुप्रकारैर्बाधैः साधारणदूषणैः तथाविधैः ब्रह्माद्वैतप्रतिपादकसर्व्वोपनिषद्वाक्यवैपरीत्यरूपैरसाधारणदूषणैश्च यद्वा अनेकविधान् भिन्नान् घटपटादीन् बाधन्ते इति नैकविधबाधास्तथाभूतैर्विरोधैर्हेतुभिरिदमस्माद्भिन्नमिदमस्माद्भिन्नमित्येवं विशेषणत्वेन प्रतीयमानानां भिदानां वास्तु आधारो न घटते न प्रयुज्यते किन्तु अभिन्नं ब्रह्माद्वैतमेव घटत इत्यर्थः। तर्हि भेदप्रतीतेः का गतिरित्यत आह। तदिति। यस्मादुक्तहेतुभिर्भेदस्तद्विशिष्टं वस्तु वा न घटते तस्मादनिर्व्वाच्यामायविद्यारूपेण त्वदीहितेन त्वच्चेष्टितेनानिर्व्वचनीयत्वादिना अतिप्रसिद्धेन त्वदीहितेन वा करणेन कर्त्रा वा विजृम्भितः प्रकटीभूतः कृतो वाऽविद्यमानोऽप्यारोप्यत्वेन प्रत्यायितः घटपटादिरूपो भेदो यस्य तादृशमेव तद्वस्तुजातमि-

तत्त्वदोहितविजृम्भिततत्त-
द्भेदमेतदिति तत्त्वनिरुक्तिः ॥ १०८ ॥
वस्तु विश्वमुदरे तव दृष्ट्वा
बाह्यवत् किल मृकण्डतनूजः ।

त्वयेवं तत्त्वस्य प्रामाणिकस्यार्थस्य निरुक्तिर्निर्व्वचनं निश्चितोक्तिः। अभेददर्शनोक्तयुक्तिशतबाधात् तत्तच्छ्रुतिविरोधाच्च तत्त्वतो वस्तुभेदाभावे प्रतिभासमानस्य च भेदस्य द्विचन्द्रबुद्धिवदप्रामाणिकत्वे सकलमिदं जगदभिन्नमिति श्रवणमननादिक्रमेण सञ्जातमभवत्। साक्षात्कारस्य सर्व्वदानन्दघनस्त्वमेको न तु त्वदतिरिक्तं किञ्चिदिति बोधःसमुदेतीति तत्त्वनिर्णय इति भावः। एतेन तत्त्वमसीत्याद्युपनिषदर्थोऽपि सङ्गृहीत इति ज्ञेयं। योक्तेति सम्बन्धेऽण्। युक्त्यन्तरग्रन्थान्तरात् सुधिया बोद्धव्यं विस्तरभयादत्र न लिखितं ॥ १०८ ॥

वस्त्विति। किलेत्यागमे हे विष्णो मृकण्डतनुजः मार्कण्डेयः बाह्यवत् बाह्ये त्रिजगति यथा वर्त्तते तथैव तवोदरे वर्त्तमानं विश्वं त्रैलोक्यसम्बन्धिघटपटादिसर्व्वं वस्तु दृष्ट्वा विशेषणमिश्रं एकत्रैवोदरे द्वयोरपि स्थितत्वादविविक्तमुभयं पूर्व्वं वहिरन्तश्च वर्त्तमानत्वाद् विविधं स्वात्मानं न विविञ्चन् अनिश्चिन्वन् वहिश्चरो योऽहमुदरं प्रविष्टः स कः, यश्च पूर्व्वमेवोदरे वर्त्तते स क इति भवन्मायोपबृंहितत्वाद्विशेषेणाजानन् स कतमो द्वयोरन्तर्व-हिश्चरयोर्मध्ये क इति विवक्तुमशक्नुवन् सन् निर्ययौ। मायाबा-

स्वं विमिश्रमुभयं न विविञ्च-
न्निर्ययौ स कतमस्त्वमवैषि ॥ १०९ ॥
ब्रह्मणोऽस्तु तव शक्तिलतायां
मूर्द्धि विश्वमथ पत्युरहीनां
बालतां कलयतो जठरे वा
सर्व्वथाऽसि जगतामवलम्बः ॥ ११० ॥

लको भवन् निश्वासेन सहोदरं प्रवेश्य तत्र लोकत्रयं प्रदर्श्य मा- ण्डेयस्तस्य वक्त्राच्छनैर्विनिर्गतः स कतम इति त्वमेवावैषि जानं नान्य इत्यर्थः। अयमितिहासो हरिवंशादेव ज्ञेयमित्यलं। त्वमुकुन्दरूपोऽपि त्वमेवासीति भावः। यदा यस्य तवोदरे स्थि सर्व्वं वस्तु दृष्ट्वा मार्कण्डेयो जठरस्थेन स्वेनैव विमिश्रमुभयं न म- जानन् सन् निर्ययौ स कतमोऽनेकेष्ववतारेषु मध्ये को वा वि- शिष्टस्तवावतार इति त्वमे जानीषे नान्यः कश्चित् त्वां जानाति स्वप्रकाशत्वादित्यर्थ इति व्याख्येयं। कतम इत्यत्र बहूनां जा- तिपरिप्रश्ने डतमच् (पा०५।३।९३) ॥ १०९ ॥

ब्रह्मण इति। स्थावरजङ्गमात्मकं विश्वं ब्रह्मणः परमात्म- स्वरूपस्य तव शक्तिरूपायां सामर्थ्यरूपायां लतायां सृष्टेः प्राक् अस्तु वर्त्ततां। सृष्टेः प्रागमूर्त्तेर्ब्रह्मणि विश्वं लीयत इति पुरा- णोक्तेः। तथा च त्वन्मायालतायां विश्वं वर्त्तते। अथ सृष्ट्या- नन्तरं सृष्टं विश्वं त्वदंशस्य अहीनां पत्युः शेषस्य मूर्द्धि वर्त्ततां। प्रलये च संहारार्थं बालतां मायाशिशुत्वं कलयतोऽङ्गीकुर्व्वतः

धर्म्मबीजसलिला सरिदङ्घ्रा-
वर्थमूलमुरसि स्फुरति श्रीः।
कामदैवतमपि प्रसवस्ते
ब्रह्म मुक्तिदमसि स्वयमेव ॥ १११ ॥
लीलयाऽपि तव नाम जना ये
गृह्णते नरकनाशकरस्य।

तवैव जठरे चास्तु समस्तमास्तामित्येवं सर्व्वथा सर्व्वप्रकारेण त्वं जगतामवलम्बोऽसि। वा समुच्चयार्थः। एतेन सृष्टिस्थितिलय-कर्त्ता त्वमेवेति सूचितं। अस्तीत्यपि क्वचित् पाठः ॥ ११० ॥

धर्म्मेति। हे विष्णो धर्म्मस्य प्रथमपुरुषार्थस्य बीजं प्ररोह-कारणं सलिलं यस्याः सा सरिद् गङ्गा तव अङ्घ्रौ चरणे स्फुरति शोभते। तथा अर्थस्य द्वितीयपुरुषार्थस्य मूलमादि-कारणं श्रीस्तवोरसि स्फुरति। तथा कामरूपदैवतं कामरूपस्तृ-तीयपुरुषार्थोऽपि ते प्रसवः कृष्णरूपस्य तव प्रद्युम्नरूपतया पुत्र-त्वादधीन एवेत्यर्थः। तथा मुक्तिदं चतुर्थपुरुषार्थभूतमोक्षदान-समर्थं ब्रह्म परमात्मरूपेणैव त्वमसि चतुर्विधपुरुषार्थहेतुतया धर्म्मार्थकाममोक्षार्थिनां त्वदुपासनैवोचितेति भावः ॥ १११ ॥

इदानीं कतिचिद्भिः श्लोकैः भगवन्नामसङ्कीर्त्तनमाहात्म्यं वर्णयति। लीलयेति। हे विष्णो ये जना नरकस्य भौमासुरस्य नाशकरस्तस्य, अथ च पुण्यश्लोकत्वान्निरयनाशकारिणस्तव नाम राम विष्णो इत्यादिसञ्ज्ञां सङ्केतपरिहासादिप्रसङ्गान्नरक-

तेभ्य एव नरकैरुचिता भी-
स्ते तु बिभ्यतु कथं नरकेभ्यः ॥ ११२ ॥
मृत्युहेतुषु न वज्रनिपाताद्
भीतिमर्हति जनस्त्वयि भक्तः ।

यया लीलया विलासमात्रेणापि गृह्णते उच्चारयन्ति तेभ्य एव त्वन्नामग्राहिभ्य एव सकाशात् पातकियातनास्थानभूतैर्महारौरवादिनरकैर्भीस्त्वत्कर्तृका तदधिकरणा वा भीतिरुचिता ये तेभ्य एव तैर्भयं प्राप्तुमुचितमित्यर्थः । ते तु नरकनाशकारिभवन्नामग्राहिणः क्षीणपापा नराः पुनः नरकेभ्यः सकाशात् कथं नाम बिभ्यतु भयं प्राप्नुवन्तु अपि तु न कथञ्चित् । तदुक्तं श्रीभागवते ।

साङ्केत्यं पारिहास्यञ्च स्तोभं हेलनमेव वा ।
वैकुण्ठनामग्रहणमशेषाघहरं विदुः ॥ इति ।

लीलयाऽपीत्यपिशब्देन ये बुद्धिपूर्व्वं भवन्नामजपमेव कुर्व्वन्ति तेभ्यो नरका बिभ्यतीति किमु वक्तव्यमिति सूचितं । नरकैर्भीरिति कर्तृकर्म्मणोः कृतीति (पा० २।३।६५) षष्ठी प्राप्तावपि भीरिति सम्पदादित्वात् क्विपि । स्त्र्यधिकारविहितत्वात् स्त्रीप्रत्ययत्वे कर्तृकरणयोरिति (पा० २।३।१८) कर्त्तरि तृतीया ॥ ११२ ॥

मृत्युहेतुष्विति । हे विष्णो त्वयि विषये भक्तो जनोऽनेकेषु मृत्युहेतुषु मध्ये वज्रनिपातान्मृत्युकारणात् सकाशाद्भीतिं ना-

यत् तदोच्चरति वैष्णवकण्ठा-
न्निष्प्रयत्नमपि नाम तव द्राक् ॥ ११३ ॥
सर्व्वथाऽपि शुचिनि क्रियमाणे
मन्दिरोदर इवावकिरा ये।

र्हति भयं प्राप्तुं योग्यो न भवति। यद्यस्मात् कारणात् तदा वज्रपातसमये तस्य वैष्णवस्य कण्ठान्निष्प्रयत्नं निरन्तरं हरिस्मरणाभ्यासबलेन तस्मिन् काले विशिष्टमुद्यमं विनापि तव श्रीरामकृष्णादिनाम द्राक् शीघ्रमुच्चरति निर्गच्छति। वज्रनिपातान्मरणे सञ्जातेऽपि तस्मिन् समये उक्तरीत्या नामोच्चारणसद्भावात् तावन्मात्रेण मोक्षप्राप्तेः पुनर्जन्माभावान्मृत्योर्भयं वैष्णवस्य नास्तीति भावः। मृत्युहेतुषु मध्ये अन्यापेक्षया दारुणात् मृत्युहेतोर्वज्रनिपातादपि सकाशाद्वैष्णवो भयं नार्हति, अन्येभ्यो नार्हतीति किं वाच्यमित्यर्थः। तस्मान्मृत्युसमये वैष्णवकण्ठान्निष्प्रयत्नमपि तव नाम द्राक् निर्गच्छति। व्याघ्राद्यनेकेषु मृत्युषु हरिस्मरणादेव मृत्युभयं नास्तीति ज्ञातव्यं। उच्चरति सकर्म्मकत्वाभावात् तङभावः ॥ ११३ ॥

स्मरणमाहात्म्यमाह। सर्व्वथापीति। हे विष्णो सर्व्वथा मनोवाक्कायनियमाद्यनेकप्रकारैर्निर्धूतपापतया शुचिनि शुद्धे ब्रह्मार्पितफलत्वेन बन्धककर्म्मरहिते वा क्रियमाणेऽपि भविनां संसारिणां चेतसि मनसि ये अज्ञानप्रमादकृता अवकरा रागादिदोषा उद्भवन्ति तेषां दोषाणां भवतोऽनुस्मृतिर्ध्यानं तस्या

उद्भवन्ति भविचेतसि तेषां
शोधनीभवदनुस्मृतिधारा ॥ ११४ ॥
अस्मदाद्यविषयेऽपि विशेषे
रामनाम तव धाम गुणानां।

धारा परम्परैव शोधनी चालनहेतुर्नान्यः कश्चित्। कस्मिन्निव। मन्दिरोदरे गृहमध्य इव यथा पुनः पुनर्मार्जनेन विरजस्के क्रियमाणे गृहमध्ये ये तृणरजःपुञ्जाः नवा नवा उद्भवन्ति तेषां शोधनी सम्मार्जनी भवति तथेत्यर्थः। भवदनुस्मृतिरेव चित्तशुद्धिसम्पादनद्वारा नैष्कर्म्यसम्पादनेन मोक्षहेतुरिति भावः। भुवीति पाठे चेतस्येव भुवि स्थाने इत्यर्थः। सम्मार्जनी शोधनी स्यात्। सङ्करोऽवकरस्तथेत्यमरः ॥ ११४ ॥

पुनरपि नामान्तरापेक्षया रामनाम्नो माहात्म्यमाह। अस्मदिति। अत्रैते गुणाः सन्तीति विशेषाकारेण विशेषे अस्मदादीनामज्ञानामविषये बुध्यगोचरे सत्यपि तव सहस्रनामसु मध्ये रामेति नाम गुणानां धाम स्थानं। यद्वा हे राम तव नाम गुणानां स्थानं। अज्ञातेऽपि विशेषे कुत एव तन्निर्णीतमित्याशङ्क्य अर्थापत्तिं प्रमाणयति। अन्यथा तु पुनर्यद्येवं न स्यात् तर्हि ननु जनुस्त्रितयेऽपि जामदग्न्यदाशरथिबलभद्ररूप जन्मत्रयेऽपि भवतैव कस्माद्धेतोः आग्रहेण पौनःपुन्येन वा रामरामेत्येव नाम अन्वबन्धि अङ्गीकृतं। अनेकजन्मस्वेतस्य त्वयैव स्वीकारात् तवाप्येतत् प्रियतममिति ज्ञायते। तस्माद्रा-

अन्ववन्धि भवतैव तु कस्मा-
दन्यथा ननु जनुस्त्रितयेऽपि॥ ११५॥
भक्तिभाजमनुगृह्य दृशा मां
भास्करेण कुरु वीततमस्कं।
अर्पितेन मम नाथ न तापं
लोचनेन विधुना विधुनासि॥ ११६॥
लङ्घयन्नहरहर्भवदाज्ञा-
मस्मि हा विधिनिषेधमयीं यः।

मनाम गुणगणस्थानमित्यर्थापत्तिः। तथा च शिवेनापि राम रामेति रामेतीत्यादि पार्व्वतीं प्रत्युक्तं॥ ११५॥

भक्तीति। हे नाथ त्वं भास्करेण सूर्य्यरूपया दक्षिणया दृशा त्वयि भक्तिभाजं मामनुगृह्य मयि प्रसाददृष्टिपातं कृत्वा वीततमस्कं गताज्ञानं कुरु। प्रसाददृष्टिपातनान् मम सकलामप्यविद्यां विनाशयेत्यर्थः। सूर्य्येण च तिमिरं निरस्यते। तथा मयि अर्पितेन प्रसादनिहितेन विधुना चन्द्ररूपेण वामलोचनेन कृत्वा मम त्रिविधमपि तापं न विधुनासि न दूरीकरोषि, अपि तु निराकुर्व्विति काकुः। चन्द्रेण च शीतलत्वात् तापशान्तिः क्रियते। एवं स्तुवन्तं मां प्रसाददृष्ट्या विलोक्य कृतार्थीकुर्व्विति भावः॥ १६॥

लङ्घयन्निति। हे स्वामिन् योऽहं, सन्ध्यावन्दनादि कुर्य्यादिति विधिः, ब्राह्मणहननादि न कुर्य्यादिति निषेधः, तन्मयीं

दुर्लभं स तपसाऽपि गिरैव
त्वत्प्रसादमहमिच्छुरलज्जः ॥ ११७ ॥
विश्वरूप कृतविश्व कियत् ते
वैभवाद्भुतमणौ हृदि कुर्व्वे।

तद्रूपां भवदाज्ञां श्रुतिस्मृतिरूपामहरहः प्रतिदिनं लङ्घयन्नतिक्रामन् यत् कर्त्तव्यतया त्वयोपदिष्टं तन्न करोमि, यन्न कर्त्तव्यमित्युपदिष्टं तत् करोम्येवेति त्वदाज्ञां लङ्घयन् अस्मिन् वर्त्ते। हा कष्टं, अनुचितकारी सोऽहं महीयसा तपसा दुर्लभं त्वत्प्रसादं इच्छुः प्रसीदेति गिरैव प्रार्थयमानःसन् अलज्जो निर्लज्जोऽस्मि। यो हि एकदाऽपि प्रभोराज्ञां करोति सोऽपि कथञ्चित् स्वामिप्रसादं लभते। यस्तु कदापि स्वाम्याज्ञां न करोति स दण्ड्योऽपि भवति वाङ्मात्रेण प्रसादमिच्छन्निर्लज्ज एव। अत एव दयालुस्त्वं प्रसीद प्रसीदेति भावः। त्वत्प्रसादं न लोकेति षष्ठीनिषेधः (पा० २।३।६८) ॥ ११७ ॥

विश्वेति। हे विश्वरूप स्थावरजङ्गमात्मक, तथा कृतविश्व स्थावरजङ्गमकारिन् विष्णो, अहं ते तव वैभवाद्भुतं सामर्थ्यातिशयजन्यं तद्रूपं वा आश्चर्य्यं अणौ परमाणुरूपे हृदि मनसि कियत् किं परिमाणं कुर्व्वे, अपि तु आधारस्याल्पीयस्त्वादाधेयस्य च महीयस्त्वात् सर्व्ववैभवाद्भुतमणौ हृदि धारयितुं न शक्नोमीत्यर्थः। यद्यपि ते सामर्थ्यं महत् तथापि कियदल्पमेव धारयामीति वा युक्तमेतत्। यस्माद् दरिद्रोऽकिञ्चनो जनः

हेम नह्यति कियन्निजचीरे
काञ्चनाद्रिमधिगत्य दरिद्रः ॥ ११८ ॥
इत्युदीर्य्य स हरिं प्रति सम्प्र-
ज्ञानवासिततम समपादि।

काञ्चनाद्रिं सुमेरुमधिगत्य प्राप्य स्फुरदुरुसुवर्णग्रहणाभिलाषो ऽपि सन् शतधा शकलीभूते अत्यन्तजीर्णे निजचीरे स्वीये वस्त्रे कियत् किं परिमाणं हेम नह्यति बध्नाति, अपि स्वल्पमेव ग्रन्थौ बध्नाति असामर्थ्यात्, तथा सकलगुणवर्णनाभिलाषे सत्यपि सामर्थ्याभावात् कियन्मात्रं गुणवर्णना कृतेति भाव इति स्तुत्युपसंहारः ॥ ११८ ॥

इतीति। स नलो हरिं प्रति इत्युक्तप्रकारेण उदीर्य्य प्रसादं सम्प्रार्थ्य द्विविधसमाधिमध्ये सम्प्रज्ञाताख्येन समाधिना तत्र वासिततमः अतितरां वासितमनाः तदेकतानः समपादि जातः, अत एव भावनाबलेन सम्प्रज्ञाते ध्यानबलेन विलोकिते साक्षात्कृते विष्णोर्विषये प्रीतः प्रेम्णः भक्तेश्च सदृशानि योग्यानि कर्म्माणि आनन्दवाष्पगीतनृत्यादीनि चरितुं कर्त्तुं शीलं यस्य सः। यदुक्तं भागवते।

शृण्वन् सुभद्राणि रथाङ्गपाणे-
र्जन्मानि कर्म्माणि च यानि लोके।
गीतानि नामानि तदर्थकानि
गायन् विलज्जो विचरेदसङ्गः॥ इति।

भावनाबलविलोकितविष्णोः
प्रीतिभक्तिसदृशानि चरिष्णुः ॥ ११९ ॥
विप्रपाणिषु भृशं वसुवर्षी
पात्रसात्कृतपितृक्रतुकव्यः ।

एवं सम्प्रार्थ्य प्रतिमादिसाकारध्यानेन विष्णुं साक्षादृक्तेति भावः । विष्णुरिति पाठे भावनाबलेन विलोकितो विष्णुर्येन सः, अत एव प्रीतिभक्तिसदृशानि चरिष्णुः । विष्णौ भक्तियोग्यान्युपहारादीनीत्यर्थः । ध्यानसमाधिर्द्विविधः सम्प्रज्ञातोऽसम्प्रज्ञातश्च । ध्येयध्यातृभावयुक्तः साकारध्यानसमाधिः सम्प्रज्ञातः । सम्वित्संवेद्यभेदविलोपेन निराकारस्वप्रकाशपरमाणुलक्षणात्मसाम्राज्यध्यानसमाधिरसम्प्रज्ञात इति योगशास्त्रं ॥ ११९ ॥

विप्रेति । एष नलः प्रह्वः सन् शरणं भोजनगृहं प्रविवेश, नलत्वं गृहप्रवेशिनो जातिः । किम्भूतः । विप्रपाणिषु भृशं नित्यदानसम्बन्धिवसुगोभूतिलहिरण्यादि वर्षत्येवंशीलः । तथा पात्रसात्कृतं विद्यातपोव्रतयुक्तपात्रभूतब्राह्मणाधीनं देयं कृतं पितृक्रतुकव्यं नित्यश्राद्धरूपपितृयज्ञसम्बन्धि कव्यं येन । तथा श्रेयसा स्नानदेवपूजादिनित्यश्राद्धतत्कर्म्मानुष्ठानजन्येन पुण्येन पुष्पादिना च हरिहरावभेदबुद्ध्या विष्णुशिवरूपनारायणं परिपूज्य तस्मिंस्तदर्पणेन तं परितोष्य भक्तिनम्रः सन् नमस्कारं कृत्वा नित्यश्राद्धात्मकर्म्मसमर्पणं कृत्वा भोजनार्थं गृहं प्राविशदिति

श्रेयसा हरिहरौ प्रतिपूज्य
प्रक्ष एष शरणं प्रविवेश ॥ १२० ॥
माध्यन्दिनादनुविधेर्वसुधासुधांशु-
रास्वादितामृतमयौदनमोदमानः ।

भावः । हव्यकव्ये दैवपैत्रे इत्यमरः । पाचमाद्दैये चाचेति (पा० ५।४।५५) साति: ॥ १२० ॥

माध्यन्दिनादिति । स वसुधासुधांशुर्भूचन्द्रो नलो माध्यन्दिनात् मध्यन्दिने विधेयाद् विधेरनु पश्चात् पञ्चमहायज्ञनिर्वपणानन्तरं आस्वादितः अमृतमयशाकसूपादिव्यञ्जनादिना अमृतरूप ओदनस्तेन शालितण्डुलप्रभवौदनेन कृत्वा मोदमानः, आस्वादितो अमृतमय ओदनो येन, अत एव मोदमानो हृष्यमाणो हृष्टतमः, एवम्भूतः सन् प्राचं यत्र भैम्या सह परिहासविलासं कृतवांस्तं पूर्व्वं । अथ च वास्तुशास्त्रे शयनस्थानं प्राच्यं कर्त्तव्यमित्युक्तत्वान्मुख्यराजप्रासादात् पूर्व्वदिक्स्थं सचित्रं चित्रलेख्ययुक्तमद्भुतरूपं वा । तथा अत्युच्चत्वात् शोभासाम्याच्च अविदूरितो निकटीकृतो वैजयन्तो महेन्द्रप्रासादो येन तं वैजयन्तेन तुल्यं वेश्माचलं प्रासादरूपं पर्व्वतं निजरुचीभिः स्वीयकायकान्तिभिरलञ्चकार । भोजनं कृत्वा तं प्रासादमारूढवानित्यर्थः । चन्द्रोऽपि उदयन् आस्वादितामृतरूपेणोदनेन मोदमानः सुधापूर्णोदनेन मोदमानः सुधापूर्णोऽद्भुतरूपं प्राच्यां वर्त्तमानत्वादुच्चसन्निहितवैजयन्तं प्राच्यां

प्राचं सचित्रमविदूरितवैजयन्तं
वेश्माचलं निजरुचोभिरलञ्चकार ॥ १२१ ॥
भीमात्मजाऽपि कृतदैवतभक्तिपूजा
पत्यौ च भुक्तवति भुक्तवती ततोऽनु ।

वर्त्तमानमचलमुदयाचलं निजकिरणैरलङ्करोति। अथ च चित्रमिति विरोधादाश्चर्यं। चन्द्रो हि मध्यन्दिने वर्त्तमानं मध्यन्दिनसमयानन्तरमस्ताचलमेव रुचिभिरलङ्करोति न तु प्राच्यमचलं। अयं तु चन्द्रो मध्याह्नानन्तरमपि प्राच्यमचलमलञ्चकारेत्याश्चर्यमित्यर्थः। चित्रस्वानिति पाठे पूर्व्ववदन्वय: आस्वादितं सर्व्वेभ्यो गृहीतं यदमृतं जलं तद्रूपणादनेन मोदमानः सूर्य्योऽप्यत्रभूतमुदयाचलं निजदीप्तिभिरलङ्करोति। अथ च सूर्य्योऽपि मध्याह्नानन्तरमस्ताचलमेवालङ्करोति न तु प्राञ्च मलङ्करोति। अयं तु सूर्य्यः प्राञ्चमचलमलङ्कृतवानिति चि मित्यर्थः। प्राचं ऋत्विगित्यादिना (पा० ३।२।५८) क्विन उगिदचामिति (पा० ७।१। ७०) नुमि सुलं ॥ १२१ ॥

भीमेति। ततो नलप्रासादारोहणानन्तरं भीमात्मजाऽपि तस्याङ्कं अध्यास्त। कीदृशी। कृता गौर्य्यादिदेवतानां भक्त्या षोडशोपचारपूजा यया। तथा पत्यौ च भुक्तवति भति स्वयमपि भुक्तवती। अनन्तरञ्च भूषणभरेण अलङ्कारबाहुल्येन योऽतिभरो गौरवं तेन अलसमङ्गं यस्याः सा। भूषणबाहुल्येन अतिभरा यथा वा भूषणभरमपि वोढुमसमर्था अतिमृद्वी

तस्याङ्कमङ्कुरिततत्परिरिप्सुमध्य-
मध्यास्त भूपपभगाऽनिनगानमाङ्गी ॥ १२२ ॥

तामन्वगाद्‌शितविम्बविपाकचञ्चोः
स्पष्टं शलाटुपरिणत्युचितच्छदस्य ।

तदङ्गनान्दगतिर्वा । कीदृशमङ्कं । अङ्कुरिता सम्यगुदिता तत्परिरिप्सा भैम्यालिङ्गनवाञ्छा यस्य तादृशो मध्यो मध्यदेशो यस्य । उक्तविशेषणविशिष्टा सती नलाज्ञया तदङ्कं समुपाविशदिति भावः । अपि समुच्चयार्थः । पत्यौ भुक्तवतीति पतिव्रताजातिः । परिशुद्धमध्यमिति पाठान्तरं चिन्त्यं । अङ्कं अधिशीङ्स्थासामिति (पा० १।४।४६) कर्म्मत्वं ॥ १२२ ॥

तामिति । काऽप्यनिर्द्दिष्टनाम्नी अतिसुन्दरी बाला सखी तां भैमीं अनुलक्षीकृत्य पश्चात् अगात् जगाम । कीदृशी । कीरस्य शुकस्यैकं पञ्जरं करवारिरुहे पाणिपद्मे वहन्ती । उत्प्रेक्षते । शुकस्य आत्मनो वा सुवर्णादिघटितत्वात् पञ्जरस्यैव वा मूर्त्तिं सौन्दर्य्यपुञ्जमिव पृथक्कृतं पञ्जररूपेण वहन्तीति सम्बन्धः । किम्भूतस्य कीरस्य । अशितस्य भक्षितस्य पक्कस्य विम्बीफलस्य विपाकः परिणामस्तद्रूपा चञ्चुर्यस्य अतिप्रियभुक्तपक्वविम्बीफलमेव तदीयचञ्च्वाकारेण परिणतमिति यावत् । तादृशस्यातिरक्तचञ्चोरित्यर्थः । तथा स्पष्टं सर्व्वथापि शलाटु अपरिपक्कं यत्किञ्चित् फलं भुक्तविम्बीफलमेव वा तस्य परिणतिः अतिनीलता तस्या उचिता तद्योग्यास्तत्तुल्या अतिनीलाः छदाः

कीरस्य काऽपि करवारिरुहे वहन्ती
सौन्दर्य्यपुञ्जमिव पञ्जरमेकमाली ॥ १२३ ॥
कूजायुजा बहुलपक्षशितिम्निसीम्ना
स्पष्टं कुहूपदपदार्थमिथोऽन्वयेन ।

पक्षा यस्य। अपक्वानि श्यामानि भक्षितानि यानि फलान्तराणि विम्बीफलान्येव वा यदीयच्छदाकारेण परिणतानीति यावत्। तादृशस्य अतिहरितपक्षस्य रक्तचञ्चुलं ... पक्षलक्ष्म जातिः। पाठितशुकादिपञ्जरादिधारिण्याः ...था अपि नायिकानुगमनं जातिः। भोजनानन्तरं पाठितशुकसारिकादिशब्दानां गीतस्य च श्रवणेन नृत्यादिवीक्षणेन च क्रीडनं राज्ञामपि जातिः। आमे फले शलाटु स्यादित्यमरः ॥ १२३ ॥

कूजेति। एका सखी पिकेन कोकिलेन सह उपलक्षिता वा तां भैमीं अन्ववर्त्तत अनुलक्षीकृत्य जगाम। किम्भूतेन पिकेन। कूजया मधुराव्यक्तेन शब्देन सह आत्मानं युनक्तीति युजा युक्तेन कुहूशब्दं कुर्व्वतेत्यर्थः। तथा बहुलो भूयान् पक्षाणां शितिमा कृष्णत्वं तस्मिन् सीम्ना अवधिभूतेन अत एव विशेषेण कुहूरिति पदस्य तथा तदर्थस्य तत्पदवाच्यस्य अमावास्यारूपस्य च मिथो अन्योन्यसम्बन्धो यत्र तादृशेनेव स्पष्टमुत्प्रेक्षायां कुहूपदयोगित्वात् कृष्णतमत्वाच्च अमावास्याविषये कुहूपदपदार्थयोस्तादात्म्यरूपेणेति यावत्। अमावास्याऽपि कृष्णपक्षसम्बन्धिनी मर्य्यादा

निर्य्यग्धृतस्फटिकदण्डकवर्त्तिनैका
तामन्ववर्त्तत पिकेन मदाधिकेन ॥ १२४ ॥

शिष्याः कलाविधिषु भीमभुवो वयस्या
वीणा मृदुक्वणनकर्म्मणि याः प्रवीणाः।
आसीनमेनमुपवीणयितुं ययुस्ता
गन्धर्व्वराजतनुजा मनुजाधिराजं ॥ १२५ ॥

तासामभासत कुरङ्गदृशां विपञ्ची
किञ्चित् पुरः कलितनिष्कलकाकलीका।

भवति। अत एव कुब्जशब्दवाच्या च। तथा तिर्य्यक् तिरश्चीनं करधृतस्फटिकदण्डकः ह्रस्वदण्डः तत्र वर्त्तिना स्थितेन तथा मदाधिकेन मदोन्मत्तेनेत्यर्थः ॥ १२४ ॥

शिष्या इति। या भीमभुवो भैम्या वयस्याः सख्यः कलाविधिषु चतुःषष्टिकलाकर्म्मसु विषये भैम्या एव शिष्याः, तथा वीणाया मृदुक्वणनकर्म्मणि मधुरशब्दरूपे व्यापारे प्रवीणास्ता गन्धर्व्वराजो विश्वावसुस्तस्य तनुजाः कन्याः तत्तुल्याः प्रासाद आसीनं एनं मनुजाधिराजं नलं उपवीणयितुं वीणयोपगातुं ययुः प्रापुः ॥ १२५ ॥

तासामिति। तासां कुरङ्गदृशां विश्वावसुकन्यानां विपञ्ची वीणा अभासत शुशुभे। किम्भूता। किञ्चित् पुरः ईषत्पूर्व्वं प्रारम्भसमये कलिता अङ्गीकृता निष्कला गम्भीरमन्द्रस्वरश्रुतिवर्णविशेषाभिव्यक्तिरहिता काकली सूक्ष्ममधुरा अव्यक्तरागवि-

भैमीतथामधुरकण्ठलतोपकण्ठे
शब्दायितुं प्रथममप्रतिभावतीव ॥ १२६ ॥
सा यद्धृताखिलकलागुणभूमभूमी-
भैमीतुलाधिगतये स्वरसङ्गताऽऽसीत् ।

शेषो यथा । अत एवोत्प्रेक्षते । भैम्यास्तथा अनिर्वचनीयमधुरस्वरयुक्तायाः कण्ठलतायाः उपकण्ठे शब्दायितुं तस्याः पुरस्ताच्छब्दं कर्त्तुं प्रथमं प्रारम्भे अप्रतिभावतीव प्रतिभारहितेव अधृष्टेव । अन्योऽप्यधिकविद्यस्य पुरस्ताद्भाषितुं गातुं वा अधृष्टत्वादशब्दः सन् प्रथमं मन्दमेव भाषते गायति वेति सङ्गीतविद्याविदामियं जातिः । प्रथमं गायमानाः प्रारम्भे काकलीमारचयन्तीति काकल्यादिसङ्गीतशास्त्रादेव गन्तव्यं । काकलीकेति न द्युतश्चेति कप् (पा० ५।४।१५२) शब्दायितुं शब्दवैरेति (पा० ३।१।१७) क्यङ् ॥ १२६ ॥

सेति । सा विपञ्ची धृतानामखिलानां गीतनृत्यादिचतुःषष्टिकलानां सौन्दर्य्यादिगुणानाञ्च भूम्नो बाहुल्यस्य भूमी स्थानभूता भैमी तस्यास्तुलाधिगतये साम्यप्राप्तये स्वयमपि पूर्व्वोक्तप्रकारेण तादृशी सती भैमीस्वरतुल्यत्वप्राप्तये यत् स्वरैः षड्जादिभिः सङ्गता सम्बन्धा आसीत् । अथ च भैम्या सार्द्धं साम्यप्राप्तये स्वरस्वाच्छन्द्याभिलाषं गताऽभूत् । असौ विपञ्ची तं भैमीसाम्यस्वाच्छन्द्याभिलाषलक्षणमविनयमत्युत्तमावमाननमेव परिवादं लोकमुखे स्फुटं दोषं प्राक् पूर्व्वं एत्य प्राप्य । अथ

ं प्रागसावविनयं परिवादमेत्य
लोकेऽधुनाऽपि विदिता परिवादिनीति ॥ १२७ ॥
नादं निषादमधुरं ततमुज्जगार
साऽभ्यासभागवनिभृत्कुलकुञ्जरस्य ।

च परिवादं वीणावादनसाधनं तद्रूपमविनयं प्राप्य अधुनाऽपत्य यावदपि लोके परिवादिनीति विदिता ख्याता परिवादयोगात् परिवादिनीत्यद्यापि गीयत इत्यर्थः। अथ च वीणावादनसाधनयुक्ता। यद्वा सप्ततन्त्रीयुक्ता वीणा परिवादिनी। भीता भयानि पश्यतीति न्यायेन पूर्व्वमपि लोके दृष्टतां प्राप्ता पुनरपि उत्तमस्य पुरस्तात् प्रागल्भ्ये दोषान्तरं शङ्कमानेव अप्रतिभावतीति प्राचीनश्लोकार्थहेतुतया योज्यं। परिवादः कलङ्कः स्याद्वीणावादनवस्तुनीति विश्वः॥ १२७॥

नादमिति। अवनिभृतां कुलं वंशस्तत्र कुञ्जरः श्रेष्ठस्तस्य नलस्य अभ्यासभाक् समीपवर्त्तिनी सा तन्त्री वीणावाद्यरूपा निषादस्वरेण मधुरं श्रव्यं नादं उज्जगार उद्गीर्णवती। किम्भूता। कृतः सश्रुतीनां द्वाविंशतिश्रुतियुतानां षड्जादीनां मूर्द्ध्नि नादप्रान्ते कम्पः कम्पितस्वरो यया, कृतः सह श्रुतिभिर्यथा तथा मूर्द्धनि वीणाया एव उपरितनभागे कम्पितः स्वरो यया, वीणाङ्कं समग्राङ्गुलि संयोगाद्धि निषादस्वरो जायते तादृशी वा। कृतः सश्रुतीनां द्वाविंशतिविदां सङ्गीतशास्त्रविदां मूर्द्ध्नि कम्पो यया वा। तथा विचित्रं करचापलं नानारूपं आङ्ग-

स्तम्बेरमीव कृतसंश्रुतिमूर्द्धकम्पा
वीणा विचित्रकरचापलमाभजन्ती॥ १२८॥
आकृष्य सारमखिलं किमु वल्लकीनां
तस्या मृदुस्वरमसर्जि न कण्ठनालं।

हावरांहादिक्रमेण अङ्गुलिप्रान्तस्पर्शवशेन वादकपाणिचाञ्चल्यं तल्लक्षणमेवानेकस्थानावस्थानलक्षणं आ सामस्त्येन भजन्ती निषादप्रधानं ललितादिमङ्गलगीतं प्रकटीचकारेत्यर्थः। केव। स्तम्बेरमी हस्तिनीव। साऽपि अवमिश्रत् पर्व्वतः कुलं वंश उत्पत्तिस्थानं यस्य तादृशपर्व्वतभवस्य हस्तिश्रेष्ठस्य राजसम्बन्धिनो वा हस्तिनः समीपवर्त्तिनी सकामा। तथा जातिस्वभावात् कृतः संश्रुतिशिरःकम्पः सशब्दशिरःकम्पो यया। तथा नानाप्रकारं शुण्डदण्डताण्डवं भजमाना सती ततं निषादञ्च गजो वदति इति शास्त्रप्रामाण्यान्निषादस्वरेण मञ्जुलं नादं उद्गिरन्ती चापलभाग्भवन्तीत्यपि पाठः। स्तम्बेरमीति स्तम्बकर्णयो- त्यचि (पा॰३।२।१३) हलदन्तादित्यलुकि (पा॰६।३।९) जातिवाचित्वात् ङीष्॥ १२८॥

आकृष्येति। ब्रह्मणा वल्लकीनां वीणानां अखिलं अन्तरं सारं श्रेष्ठभागं आकृष्य तस्या भैम्याः कण्ठनालं ग्रीवादण्डः किमु न असर्जि न सृष्टं, अपि तु तमेव सारमाहृत्य तदीयं कण्ठनालं सृष्टं। यतो मृदुस्वरं सकलवीणासारनिर्म्मितत्वादेव भैमीकण्ठस्य मधुरतमलं जातमित्यर्थः। यस्मादेवं तेनैव हेतुना

तेनान्तरं तरलभावमवाप्य वीणा
क्षीणा न कोणममुचत् किमु वा लयेषु ॥ १२८ ॥
तद्दम्पतिश्रुतिमधून्यथ चाटुगाथा
वीणास्तथा जगुरतिस्फुटवर्णबन्धं।

हृतसारतयैव अन्तरं वीणादण्डमध्यगतं तरलभावं लक्षणया मन्दशब्दत्वमवाप्य क्षीणा किमु लज्जितेव। वीणालयेषु स्वरविश्रान्तिरूपासु मूर्च्छनासु विषये कोणं वा लोलाधनुःसदृशाकारं वीणावादनसाधनं सत् नामुचत्। गृहीतसारोऽन्योऽपि निःसारतया अगम्भीरान्तःकरणतां प्राप्य क्षीणः सन् आलयेषु गृहेषु कोणं कुड्यभागद्वयसंयोगस्थानं न मुञ्चति। पुष्कलच्छिद्रस्य वीणादण्डस्वरोऽतिगम्भीरः प्रशस्ततरो भवति मधुरतरं वीणा क्वणति सेति भावः। वीणास्वरापेक्षया भैमीस्वरस्याधिक्यमेतेन सूचितं। वीणादण्डस्य सच्छिद्रत्वेन निःसारत्वोत्प्रेक्षा। वीणादिवादने कोणोऽप्येकदेशो गृहस्य चेति विश्वः ॥ १२८ ॥

तदिति। अथ काकल्युद्गिरणानन्तरं गन्धर्व्वराजकन्यानां वीणाः तयोर्दम्पत्योः श्रुतीनां कर्णानां मधूनि अमृततुल्यानि भैमीनलप्रियस्तुतिकारिणीनां चाटुगाथाः श्लोकान् तथा तेन प्रकारेण अतिस्फुटो वर्णबन्धः तन्त्रीविनिबद्धाक्षरविन्यासः यस्मिंस्तद्यथा तथा जगुः। यथा येन प्रकारेण वसुमत्यां भूमौ रतिरूपाया भैम्या गृहस्थकः पञ्जरबद्धः कीरः शुको मुदं किरन् आहृ-

इत्थं यथा वत्तुमनौरतिगृह्यकास्ताः
कीरः किरन्मुदमुदीरयति स्म विम्बाः ॥ १३० ॥

अस्माकमुक्तिभिरवेष्यथ एव बुद्धे-
र्गाधं युवामतिमती स्तुमहे तथापि।
ज्ञानं हि वागवसरावचनाद्भवद्भ्या-
मेतावदप्यनवधारितमेव न स्यात् ॥ १३१ ॥

णां हर्षमुत्पादयन् विम्बाः सर्व्वाः तत्तद्वर्णमात्रादिसहिता गाथाः इत्थं वच्यमाणरीत्या उदीरयति स्म। तिर्य्यग्योनिः शुकोऽपि यथा श्रवणमात्रेण सर्व्वा अपि गाथा अनुवदितुं शक्नोति तथा तल्लोषु स्फुटतराचरबन्धान् भैमीनलस्तावकश्लोकान् वीण स्फुटं गायन्ति स्मेति भावः। एतेन गन्धर्व्वराजकन्यानां वि प्रावीण्यं शुकस्यापि प्रज्ञातिशयः सूचितः। गृहासक्ताः प तस्त्र- गाम्छेकास्ते गृह्यकास्तु ते, इत्यमरः॥ १३० ॥

इत्थमिति यदुक्तं तदेवाह। अस्माकमिति। यद्यपि अति शयिता मतिः प्रज्ञा ययोस्तौ युवां अस्माकमुक्तिभिर्गाथारूपा भिरेव अस्मद्वाग्वचनाभिः अस्माकं बुद्धेर्गाधं उत्तानार्थत्वं अव- ष्यथ एव ज्ञास्यथ एव, तथापि वयं युवां स्तुमहे स्तुम एव। हि यस्मात् भवद्भ्यां वागवसरे स्तावकादिवचनावसरे सत्यपि अवचनात् अभाषणाद्धेतोरेतावत् अत्युन्नतार्थेऽत्यल्पमपि अ स्मदीयं ज्ञानं नावधारितमेव न स्यात् अज्ञातमेव न स्यान्नाम इत्यर्थः। तस्मात् स्तुम एव। वर्णनायां क्रियमाणायां अयमल्प

भूभृद्भवाङ्कभुवि राजशिखामणेः सा
त्वञ्चास्य भोगसुभगस्य समः क्रमोऽयं।

शानो बहुशान इति वा शातुरये प्रसिद्धो भवति तस्माद्दर्ण-याम इति भावः। इत्येवं वीणानिबद्धगन्धर्व्वपुत्रीवचनं शुके अन्ववददित्यर्थः। एवमुत्तरत्रापि ज्ञेयं। एतेन गन्धर्व्वपुत्रीभिः स्वमौढ्यं परिहृतं ॥ १३१ ॥

भूभृदिति। सा भूभृद्भवा हिमाचलसुता पार्व्वती भोगै-र्वासुक्यादिसर्पशरीरैः सुभगस्य भूषितस्य राजा चन्द्रः शिखा-मणिर्यस्य चन्द्रमौलेः अङ्कभुवि उत्सङ्गदेशे, वर्त्तत इति शेषः, प्रियतमत्वात्। त्वञ्च त्वमपि भीमपुत्रीचन्दनादिभोगैर्मनोहरस्य राज्ञां मुकुटमणेः श्रेष्ठतमस्यास्य नलस्य उत्सङ्गदेशे वर्त्तसे, इत्ययं क्रमः समः। परिपाटी उचिता। पार्व्वत्या महेशस्य च तव नलस्य च राजन्यायाः राजश्रेष्ठस्य च अन्योन्यसम्बन्धः समु-चित एवेत्यर्थः। अथ च समस्तुल्यः। यथा तयोः सम्बन्धः तथा युवयोरपीत्यर्थः। अथ वाऽयं शब्दश्लेषरूपः सम्बन्धस्तुल्यः। एवं यद्यपि क्रमः समस्तथापि स पुनर्भेदो विसदृशत्वं यत् नाक-पालस्येन्द्रस्य कलनांशत्वेन एव भवनं तया कलितस्य ख्यातस्य राजत्वादिन्द्रांशत्वेन प्रसिद्धस्य भर्त्तुर्नलस्य सम्बन्धिनी अत्राप्य-स्मिन्नपि जन्मनि भवती सती पतिव्रता। अपि शब्दात् केवल-मत्रैव किन्तु जन्मान्तरेऽपि त्वं सत्येव। अन्यथाऽत्रापि सतीत्वानुप-पत्तेः। पार्व्वती तु ब्रह्मकपालस्य कलनया करे धारणाया

यन्नाकपालकलनाकलितस्य भर्त्तु-
रत्रापि जन्मनि सती भवती स भेदः ॥ १३२ ॥

एषा रतिः स्फुरति चेतसि कस्य यस्याः
स्तते रतिं द्युतिरथ त्वयि चाननोति ।

कलितो विदितो न भवति अकपालकलकलनाकलितस्या-
स्पृशोऽपि न भवति । कपालित्वेन ख्यातस्य भर्त्तुर्महेशस्य सम्ब-
न्धिनी पूर्व्वजन्मनि दचापत्यत्वे एव सती न तु हिमवदपत्य-
त्वेऽपीति महद्वैषम्यं । हरस्य नलस्य चोक्तसकलश्लेषसाम्यत्वेऽपि पा-
र्वत्यास्तव किञ्चिदेव शब्दश्लेषसाम्यं न तु सर्व्वं उक्तरीत्या तवा-
धिकत्वादित्यर्थः । हिमवदपत्यत्वे पार्व्वत्या सतीत्वोक्तेर्निन्दा ना-
शङ्कनीया भैमीस्तुतिपरस्य सतीशब्दस्य पार्व्वत्या नामपरत्व-
मात्रव्यावर्त्तकत्वेनोक्तेर्निन्दापर्य्यवसानाभावात् ॥ १३२ ॥

एषेति । एषा भैमी कस्य वा चेतसि रतिः कामप्रिये
स्फुरति । अपि तु न कस्यापि यतो यस्या एतस्या द्युतिः का -
कान्तिः रतिं कामप्रियां स्तते । अथ च अनुरागं प्रसूते अर्थात्
त्वयि अङ्गजत्वात् कान्तिः पुत्री । रतिस्तु तत्पुत्री स यस्मान्न श्रोः
सेयं रतिरिति कस्य वा चेतसि मतिः स्यान्न कस्यापीत्यर्थः । अथ
वा त्वय्यपि विषये चैत्यत्रेण हरसम्बन्धिना वीक्षणेन तृतीयनेत्रेण
खिलीकृतः न्यूनीकृतः निर्जरत्वेन देवत्वेन सिद्धोऽमरत्वरूप
आयुषोऽध्वा मार्गो यस्य तादृशस्य मकरध्वजस्य कामस्य संशयं
रूपसादृश्यात् किमयं काम इति सन्देहः को वा तनोति अपि

चैय्यत्वमीक्षणखिलीकृतनिर्जरत्व-
सिद्धायुरध्वमकरध्वजसंश्रयं कः ॥ १३३ ॥
एतां धरामिव सरित्कविहारिहारा-
मुल्लासितस्त्वमिदमाननचन्द्रभासा।

तु न कोऽपि करोति। कामस्य हरेण दग्धत्वात् सन्देहानिवृत्ति-रित्यर्थः। आ इत्याश्चर्ये। यस्य तव अङ्गजा कान्तिर्यतो रतिं सूते ततो रतिः सा तवापि न स्त्री। सा कामस्य स्त्री। तस्मात् त्वयि कामसंश्रयं कोऽपि न करोतीत्यर्थं इति नलं प्रति तद्व-चनं शुकेन अन्ववादीदिति वा। रतिकामाभ्यामपि युवामति-तमां सुन्दराविति भावः। चैय्यचेति सम्बन्धे ष्यञ्, नञ्वाभ्या-मिति (पा० ७।३।३) वृद्धिनिषेधे पूर्व्वमैजागमः ॥ १३३ ॥

एतामिति। हे नल त्वं विभासि। किम्भूतः। एतां भैमीं बिभ्रत् अङ्के धारयन्। किम्भूतां। सरितां नदीनां छविं कान्तिं हरन्ति तच्छीला उज्ज्वलतरा मौक्तिकहारा यस्यास्तां। तथा वेद्या अन्तः अन्तर्वेदि वेदिकामध्यं तद्वदतिकृशा श्रीः शोभा यस्याः, अन्तर्मध्ये वेदिवदतिकृशा श्रीर्यस्या वा। तथा जनमनसां प्रियः आनन्ददायी मध्यदेशः शरीरमध्यभागो यस्यास्तां। किम्भूतस्त्वं। अस्या भैम्या आननं तल्लक्षणश्चन्द्रस्तस्य भासा कान्त्या उल्ला-सितः हर्षं प्रापितः। क इव। चन्द्रभासा वृद्धिं प्रापितः पयसां राशिः समुद्र इव। कामिव। धरां भूमिमिव। यथा पृथ्वीं अङ्के धारयन् समुद्रः शोभते। किम्भूतां धरां। सरितो नद्या एव

विभ्रद्विभासि पयसामिव राशिरन्त-
र्वेदिश्रियं जनमनःप्रियमध्यदेशा॥ १२४॥
दत्ते जयं जनितपत्रनिवेशनेयं
साचीकृतेन्दुवदना मदनाय तन्वी।

काव्या कान्त्या हारिणो मनोहरा हाराः यस्यास्तां। तथा अन्तर्वेद्याख्या या गङ्गायमुनामध्यभवा श्रीर्यस्यास्तां। तथा जनमनसां प्रियो मध्यदेशो विन्ध्यहिमाचलान्तरभूभागरूप आर्य्यावर्त्तपरपर्य्यायः पुण्यभूतो मध्यदेशो यस्यास्तां।

हिमवद्विन्ध्ययोर्मध्ये यत् प्राक्विनशनादपि।
प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्त्तितः॥

इति मनुः। इदमाननं षष्ठीसमासः॥ १२४॥

दत्त इति। जनितानि सखीभिः कस्तूर्य्यादिविरचितानि यत्र निवेशनानि मकराद्याकारपत्रवल्लीलिखितानि यस्यां सा पत्रवल्लीविभूषिता, तथा अक्षिभ्यां सह वर्त्तमानः साक्षः असाक्षः साक्षःकृतः सलेचतां प्रापितः साचीकृतः स चासाविन्दुश्च स एव वदनं यस्याः सा चन्द्राधिकवदना इयं तन्वी कृशाङ्गी भैमी मदनाय जयं दत्ते। एवंविधभैमीदर्शनेन कामो नितरामुल्लसतीत्यर्थः। अद्य च कामाय जयं दत्ते। एवंविधभैमीदर्शनवशीकृतस्त्वं कामेन जीयस इत्यर्थः। यत्र कायकान्त्या भर्त्सितो जितो मत्स्यकेतुः कामो येन तस्य तव अत्र भैम्या विषये भक्तिरेवैतच्छरीरोपभोगः एतन्मध्य उदरभागे स्थितस्य वर्त्तमानस्य दुर्बल-

मध्यस्थदुर्बलतमत्वफलं किमेत-
द्भुक्तिर्यदत्र तव भर्त्सितमत्स्यकेतोः ॥ १३५ ॥

तमत्वस्य कार्श्यस्य फलं परिपाकः किमिति प्रश्नः, सम्भावना वा। अतिसुन्दरस्य तवैतच्छरीरभागेऽतिकृशैतदुदररामणीयकमेव प्रयोजकमित्यर्थः। अथ च मध्यदेशवर्त्तिनोऽतिकार्श्यस्य फलं एतदेव यदतिसुन्दरस्य तवात्र भुक्तिर्नामेत्यर्थः। कामेन तत्र विजये एतन्मुखचन्द्रस्य च साक्षाद्दृश्यत्वात् साक्षित्वं युक्तं। अथ च कामेन जितमिति कामस्य जयदाने साक्षीकृता इन्दुवदनाः स्वसख्य उपयाताः। अपि हि कामेन नलो भैमीवशीकृत इति जानन्ति एवं सत्यपि कुरङ्गाक्ष्यादिना तर्जितः कामो येन तस्य तव अन्यस्मिन् भैमीविषये वा विवादविषयोपभोगो लब्धजयं कामं कुरङ्गाक्ष्या सन्तर्ज्य तदीयमन्यं भैमीरूपं वा विषयं त्वं भुङ्क्ष्व। एतदुदरमध्यवर्त्तिनो कार्श्यस्य फलं किं रामणीयकातिशयात् परित्यक्तुमशक्तः सन् अन्यदीयमपि विषयं बलादन्यायेनैव भुङ्क्षे इत्यर्थः। अथ च मध्यस्थानां सभ्यानां दुर्बलतमत्वस्य ज्ञानदौर्बल्यस्य निश्चेतुमसामर्थ्यस्य स्वदत्तजयनिर्वहणासमर्थत्वस्य वा फलं परिपाकं किमियमिति सम्भावना, अत्रापि विवादपदे साक्षिवादनं कृत्वा जयपत्रदानपुरःसरं एकस्मै जयपत्रं दीयते। तत्र निर्णये कृतेऽपि मध्यस्थाश्च दुर्बला भवन्ति तर्हि पराजितोऽप्येको लब्धजयमपि द्वितीयं तिरस्कृत्य तदीयं विवादं पदं क्षेत्रादिकं बलाद्भुङ्क्ते, कथमन्यथा साक्षिकृतजय-

चेतोभवस्य भवती कुचपद्मराज-
धानीयकेतुमकरा ननु राजधानी।
अस्यां महोदयमहस्पृशि मीनकेतोः
के तोरणं तरुणि न ब्रुवते भ्रुवौ ते ॥ १३६ ॥

पद्मदर्शं निर्भत्स्य अन्योन्यादीयभुक्तिं करोतीत्यर्थापत्तिः। साची-
कृतेति तेन सहेति तुल्ययोग इति (पा० २।२।२८) बहुव्रीहिः।
बहुव्रीहौ सक्थ्यक्ष्णोरिति (पा० ५।४।११३) षच्चिः। पक्षे
साक्षाद्द्रष्टरीति (पा० ५।२।९१) इनौ च्चिः ॥ १३५ ॥

चेत इति। ननु भैमी भवती चेतोभवस्य राजधानी। कीदृ-
शी। कुचपद्मेषु राजानः श्रेष्ठाः पद्मवत्य इत्यर्थः, तेषु धानी[illegible]ः
स्थापनीयः। यद्वा कुचपद्ममेव राजधानी यो राज[illegible]-
सम्बन्धीकेतुर्ध्वजस्चिह्नभूतो मकरो मत्स्यो यस्यां स रा[illegible] मु-
ख्यावस्थाननगर्यां राजधान्यां साभिज्ञानचिह्नरूपः [illegible]ताका-
दिध्वजो भवति। तथा च केतुभूतस्य मकरस्य त्वत्कुचयोर्वर्त्त-
मानत्वात् त्वं कामराजस्य राजधानी साक्षान्मदननगरी। मद-
नस्त्वय्येव वर्त्तत इत्यर्थः। अत एव हे तरुणि आरूढयौवने भैमि
के जना मीनकेतोर्मकरध्वजस्य सम्बन्धिनं महोदयरूपं महं
उत्सवं महान् अभ्युदयो यस्मिंस्तादृशं वा उत्सवं स्पृशन्त्यां स्वस्वा-
मिकामोत्सववत्यां अस्यां भवद्रूपायां राजधान्यां ते तव भ्रुवौ
तोरणं न ब्रुवते। अपि तु सर्व्वेऽपि जनास्त्वद् भ्रूयुगं कामाभ्यु-
दयोत्थितवक्रितशिखं वंशद्वयनिबद्धं आम्रादिमाङ्गलिकसुना-

अस्या भवन्तमनिशं भवतस्तथैनां
कामः श्रमं न कथमृच्छतु नामगच्छन्।
छायेव वामथ गतागतमाचरिष्णो-
स्तस्याध्वजश्रमहरा मकरध्वजस्य ॥ १२७ ॥

सपल्लवरूपं तोरणमेव वदन्ति। कामस्तदेकाश्रयः सन् सर्वोत्कर्षेण वर्त्तत इति भावः। पत्त्रराजीत्यपि पाठः स्पष्टार्थः राजेति पाठो मुख्यः। राजाहः इत्यादिना (पा० ५।४।९१) समासान्तष्टच्॥ १२६ ॥

अस्या इति। हे नल अस्या भैम्याः सकाशात् भवन्तं अनिशं गच्छन्, तथा भवतः सकाशात् एनां भैमीं अनिशं गच्छन् प्राप्नुवन् यातायातं कुर्वन् कामः कथं नाम श्रमं ऋच्छतु गच्छतु अपि तु श्रमं न गच्छत्येव। सदा यातायातं कुर्व्वन् श्रमं गच्छतीति युक्तमेव। अथ वा यस्मात् वां युवयोः छाया कायकान्तिरेव उत्प्रेक्षा गतागतमाचरिष्णोस्तस्य मकरध्वजस्य अध्वनि जातं श्रमं हरति श्रमहरा एवम्भूता भवतीति शेषः। दृश्यमानभवच्छोभावशादेव यातायातश्रमं न वेत्तीत्यर्थः। अथ च वृक्षच्छत्रादिनिर्म्मितच्छायाभागे गतागते कुर्व्वतः पुरुषस्य श्रमं हरत्येव। भैम्यास्त्वय्येव कामस्तव च भैम्यामेव नान्यत्रेत्येवं परस्परानुरागः कुत्रापि नास्तीति भावः ॥ १२७ ॥

स्वेदाम्रवप्रणयिनी तव रोमराजी
रत्यै यदाचरति जागरितव्रतानि।
आभासितेन नरनाथ मधूत्थसान्द्र-
मग्नासमेषुशरकेसरदन्तुराङ्गः ॥ १३८ ॥

स्वेदेति। हे नरनाथ स्वेदो घर्म्मजलं तस्मिन् तेन वा आ-स्रवः स्नानं तत्र प्रणयिनी प्रीतिमती सात्त्विकसञ्जातस्वेदपू-र्णा तव रोमराजिः रत्यै सुरतार्थं जागरितस्य उद्गत-व्रतानि उद्गतरोमाञ्चनिचयान् यदाचरति उन्निद्रा भवति यावत्। तेन कारणेन रोमाञ्चेन वा त्वं मधुनः पुष्परसस्य आ-सेनोद्रयेन सान्द्रः पुष्परसपूरेण निरन्तरं व्याप्तत्वाच्छरीरा-न्तःप्रविष्टाः असमेषोः कामस्य पुष्परूपा शरास्तेषां केसरैः पिञ्जप्रायैर्दन्तुरं उच्चावचीकृतं अङ्गं यस्य एवम्भूतस्य स्वेदरो-माञ्चो युक्तत्वात् प्रत्यङ्गमन्तर्मध्ये समधुकामवाणस्तद्बहिर-वस्थिता यत्र तत्र रागव्याप्ताङ्ग इवाभासि भैमीयोगात् सस्वे-दरोमाञ्चो रिरंसुः कामशास्त्रयोजितः सुतरां शोभसे इत्य-र्थः। अथ च रोमराजिर्दूतीस्थानीया। तथा च तव दूती रोमराजिः कृततीर्थस्नाना रत्यै कामप्रियां त्वदधीनां कर्त्तुं यस्माज्जागरणादिनियमान् करोति तेन कारणेन विशिष्टनि-मग्नकामवाणपिञ्जसम्भूत इव शोभसे। अन्याऽपि तरुणीकृत-स्नाना रत्यर्थं कामेन सह स्वेदात् सकलां रात्रिं जागर्त्ति ॥ १३८ ॥

प्राप्ता तवापि नृप जीवितदेवतेयं
घर्माम्बुशीकरकरं वनमम्बुजाक्षी।
ते ते यथा रतिपतेः कुसुमानि बाणाः
स्वेदस्तथैव किमु तस्य शरक्षतास्रं॥ १३८ ॥
रागं प्रतीत्य युवयोस्तमिमं प्रतीची
भानुश्च किं द्वयमजायत रक्तमेतत्।

प्राप्तेति। हे नृप अम्बुजाक्षी तव जीवितदेवता प्राणेश्वरी इयं भैम्यपि घर्माम्बुशीकरकरं वनं स्वेदजलबिन्दुमिश्रणं प्राप्ता। इयमपि त्वदीयस्पर्शवशात् सात्त्विकस्वेदयुक्ताऽभूदित्यर्थः। न केवलं त्वमेव स्थितः,अपि तु इयमपीत्यपेरर्थः। अथ च देवतायाः स्वेदो नास्ति इयन्तु देवताऽपि सस्वेदेति चित्रमित्यपि शब्दार्थः। अतश्च कुसुमान्येव यथा येन प्रकारेण ते ते भैमीकरचरणादिरूपेण प्रसिद्धपराक्रमाः मोहनशोषणादिकाः कामबाणाः तथैव तेनैव प्रकारेणायं स्वेदस्तस्य कामस्य सम्बन्धि कामेन रचितं शरक्षतास्रं स्वीयबाणव्रणरुधिरं किमु। एतस्याः कामबाणविद्धत्वात् स्वेदः। तज्जन्यव्रणरुधिरत्वं नैव सम्भावयितुं युक्तं यादृशो यक्ष स्तादृशो बलिरिति न्यायेन पुष्पबाणानां धवलत्वात् तज्जरुधिरमपि तादृगेव युक्तं इति स्वेदजलस्य रुधिरत्वं युक्तमित्यर्थः। कुङ्कुमाङ्गरागलगनाद्वा रक्तत्वात् स्वेदजलस्य रुधिरत्वं युक्तं। इयमपि कामबाणविद्धा रिरंसुरस्तीति भावः॥ १३८ ॥

रागमिति। प्रतीची दिक् भानुश्च एतद्द्वयं युवयोः तं सात्त्वि-

तद्वीक्ष्य वां किमिव केलिसरित्सरोजैः
कामेषुतोचितमुखत्वमधीयमानं ॥ १४० ॥

कस्वेदरोमाञ्चसूचितं इमं प्रत्यक्षदृश्यमिव अनुरागं प्रतीत्य किं ज्ञात्वेव रक्तं अजायत लोहितवर्णमभूत्, भैमीनलाविदानीं रिरंसू अपि दिवामैथुननिषेधभिया साशङ्कौ वर्त्तेते । तस्माद्रात्रिं करिष्यामीति सूर्य्यमस्तं प्रापयितुमिव प्रतीची रक्तवर्णाऽभूत् । इदानीं मयाऽप्यस्तं गन्तुं युक्तमितीव सूर्य्योऽपि रक्तवर्णोऽभूदित्यर्थः । अथ च सरागौ युवां दृष्ट्वा तद्द्वयमपि सरागमभूत् । अथ च युवयोरेव केलिसरितः सरोजैः कमलैः तद् भानुप्रतीचीरूपं रक्तमिथुनं वीक्ष्य वां भैमीनलौ च वीक्ष्य किं दृष्ट्वेवेह सन्ध्यासमयकामस्य इषुतोचितं शरत्वयोग्यं मुखं अग्रं येषां तद्भावत्वं तीक्ष्णाग्रत्वं अधीयमानं अभ्यस्यमानं विद्यत इति शेषः । वाञ्च सानुरागौ दृष्ट्वा कमलैर्मुकुलीभवनव्याजेन पुष्पवाणतीक्ष्णाग्रत्वमनुभूयते किं । कामो हि रिरंसुस्त्रीपुंसौ दृष्ट्वा तीक्ष्णमुखैः शरैर्विध्यतीत्यर्थः । अथ च एतौ भैमीनलौ प्रतीचीभास्करौ च यदि सरागौ जातौ तर्हीदानीं रात्रिः सन्निहिताऽस्तीति अस्माभिरपि मुकुलीभावं प्राप्तुमुचितमिति तैरपि मुकुलीभूतं । पद्मानां सङ्कुचितमुखत्वं कामशरयोग्यं तीक्ष्णमुखीभावेनोत्प्रेक्षितं सन्ध्याकालो जातः, कमलानि च मुकुलितानि इति भावः ॥ १४० ॥

अन्योन्यरागवशयोर्युवयोर्विलास-
स्वच्छन्दताच्छिदपयातु तदालिवर्गः।
अत्याजयन् सिचयमाजिमकारयन्वा
दन्तैर्नखैश्च मदनो मदनः कथं स्यात्॥ १४१ ॥
इति पठति शुके त्रपा ययुस्ता
बहुनृपकृत्यमवेत्यसान्ध्यवेलं।

अन्योन्येति। आलिवर्गः अन्योन्यरागेण परस्परानुरागेण रमणाभिलाषेण वशयोः रिरंसयाऽन्योन्याधीनयोर्युवयोर्विलासस्य स्वच्छन्दतां निःशङ्कप्रवृत्तिं छिनत्ति कामक्रीडाविप्रकारी यस्मात् तस्मादपयातु गृहाद्बहिर्निर्गच्छतु, यस्मात् मदनः कामः सिचयं वसनं अत्याजयन् अपरिहारयन्, अर्थात् स्त्रीपुंसौ, तथा दन्तैर्नखैश्च करणभूतैः आजिं सङ्ग्रामं एतैरुपलक्षितं वा नानाबन्धकरसुरतसमरयुद्धं च स्त्रीपुंसौ अकारयन् मन् मादयतीति मदनः मदकारी कथं वा स्यादपि लवमेव कारयन् मदनो हर्षकारी भवेदेव तस्मात्सखीवर्गो गृहान्निर्गच्छत्विति त्यर्थः। मदनः कथं स्यात् कथं भवेत्, मदनः, नन्द्यादित्वात् ल्युः॥ १४१॥

इतीति। ता गन्धर्व्वराजपुत्र्यः सख्यश्च शुके इति पूर्व्वोक्तं पठति सति व्यक्तं भाषमाणे सति गन्धर्व्वपुत्रीवीणानिबद्धा गाथाः स्पष्टमनुवदति सति सान्ध्यवेलं दिनरात्रिसन्धिवेलायां भवं बहुनृपकृत्यं सन्ध्यावन्दनं सायं होमादिकं नलस्य नित्यकर्म्म अवेत्य

कुपितनिजसखीदृशार्द्धदृष्टाः
कमलतयेव तदा निकोचवत्यः ॥ १४२ ॥
अकृत परभृतःस्तुहिस्तुहीति
श्रुतवचनस्वगनूक्तिचुञ्चुचञ्चुः ।

ज्ञात्वा मृषालोकमेव अत्रेदानीं भवतीभिः न स्थातव्यमिति शुकोऽस्मान्निष्काशयति तर्हि वयं याम इति मिषामात्रेण ययुर्गृहाद्बहिर्निर्जग्मुः । रिरंसुरपि नलः सन्ध्यावन्दनादिसमये नित्यकर्म्माद्यतिक्रम्य सम्भोगं न करोति रिरंसुर्भैम्यपि स्वयं ग्रहं न करोति इति यद्यपि ता जानन्ति तथापि भैमीपरिहासार्थं तादृशं शुकवचनमेव व्याजीकृत्य बहिर्निर्गता इत्यर्थः । किम्भूतास्ताः, कमलतयेव कमलरूपत्वेनेव तदा सन्ध्यासमये निकोचवत्यः सङ्कोचवत्यः । कमलानि सन्ध्यायां सङ्कुचन्ति । तादृश्या वृथागमनारम्भेण क्रीडासौख्यभञ्जननात् कुपिताया निजसख्या भैम्या दृशार्द्धेन एकदेशेन दृष्टाः विलोकिताः सङ्कोचलान्नेत्रतृतीयभागतिर्य्यग्व्यापारेणैव दृष्टाः । कुपिता हि मानिनी दृगन्तेन पश्यति । निकोचः भावे घञ् ॥ १४२ ॥

अकृतेति । सख्या पूर्व्वमानीतःपरभृतःकोकिलोऽपि उन्मत्तत्वात् स्वभावाच्च जातो नेत्रयो रागो लौहित्यं यस्य एवंविधः सन् स्तुहिस्तुहीत्येवं रूपं शब्दमकृत, पिकः स्वभावादेव स्तुहि स्तुहीत्येवं चुकूजेत्यर्थः । तत्रोत्प्रेक्षते । पठिता समाप्तिं प्रापिता नलस्य नुतिःस्तुतिर्येन तं स्तुतिं कृत्वा तूष्णीभूतं कीरं शुकं प्रतीव

पठितनलनुतिं प्रतीव कीरं
तमिव नृपं प्रति जातनेत्ररागः ॥ १४३ ॥
तुङ्गप्रासादवासादथ भृशक्षशतामायतीं केलिकुल्या-
मद्राक्षीदर्कबिम्बप्रतिकृतमणिना भीमजा राजमानां।

उद्दिश्येव स्तुहिस्तुहीत्यकृत। हे कीर किमिति तूष्णीम्भूतोऽसि इतःपरं नलस्य स्तुतिं कुर्व्विति नलस्तुतौ बुद्धिं प्रावर्त्तयदित्यर्थः। एवं वचने पिकस्य कथं सामर्थ्यमित्याशङ्क्याह। श्रुता वीणानिबद्धशुकानूदिततवचनस्रक् तस्याः अनूक्तिः सर्व्वानुवादः तया विज्ञा प्रसिद्धा प्रवीणाचक्षुर्यस्य तादृशः, शुकानूदितं सर्व्वमनूद्य इतःपरमपि स्तुहिस्तुहीत्याहेत्यर्थः। नेत्ररागेत्युत्प्रेक्षते तं नलं प्रतीव लक्षीकृत्येव जातनेत्र प्रीतिसुन्दरतरं नयनानन्दकारिणं नलं दृष्ट्वा जातनेत्रप्रीतिः स्तुहिस्तुहीत्यकृतेत्यर्थ इति रागशब्देनोत्प्रेक्षा अनूक्तिपुष्करिति तेन वित्त इति (पा० ५।२।२६) चुञ्चुप ॥ १४३ ॥

तुङ्गेति। अथैवं वीणाक्वणनानुवादिशुकालापानन्तरं भीमजा केलिकुल्यां क्रीडार्थकृत्रिमनदीमद्राक्षीत्। किम्भूतां भैम्याः तुङ्गे उच्चतरे प्रासादे वासात् स्थितेर्हेतोः भृशं क्षशतां आयतीं प्राप्नुवतीं। अधोदेशे स्थिता स्वयं महीयस्युच्चतरदेशे स्थितां भैमीं प्रत्यणीयस्त्वेन प्रतिभासमाना तामित्यर्थः। तथा अस्तगामिनोऽर्कबिम्बस्य प्रतिकृत्या प्रतिबिम्बरूपेण महाप्रकाशेन मणिना राजमानां। तथा वक्रं वक्रं स्वभावकुटिलं प्रजन्तो गच्छन्तो, अत

वक्रं वक्रं व्रजन्ती फणियुवतिरिति चक्षुभिर्व्यक्तमुक्ता-
ऽन्योन्यं विद्रुत्य तीरे रथपदमिथुनैः सूचितामार्त्तिरुत्या ॥१४४॥
अथ रथचरणौ विलोक्य रक्ता-
वतिविरहौ सततार्त्तनाविवास्रैः।

एव फणियुवतिरिति कृष्णसर्पीयमिति चक्षुभिः चामशीलैः रथ-
पदमिथुनैश्चक्रवाकस्त्रीपुंसयुगलैः व्यक्तं स्पष्टं सक्तमन्योन्यं परस्परं
यथा तथा तीरे विषये विद्रुत्य पलाय्य कर्म्मभूते वा द्वे तीरे प्रति-
गत्वा आर्त्तिरुत्या विरहपीडासम्बन्धिना रुतेन कृत्वा सूचितां
प्रकटीकृतां। दूरस्थत्वात् सान्ध्यतमसावृतत्वाच्च स्पष्टतरमदृश्य-
मानाऽपि तदीयमिति चक्रवाककूजितेन ज्ञापिता। फणियुव-
तिरिति सूचितामिति वा। कृष्णसर्प्यपि कृशा भवति सूर्य्यबिम्ब
तुल्येन शिरस्थेन मणिना शोभते च। वक्रं वक्रं व्रजिताश्च दृ
जनाः पक्षिणो वा पलाय्य दीनस्वरोपलक्षिताः परस्परम
वासं मुञ्चन्ति। सूर्य्यमस्तं जिगमिषुं दृष्ट्वा चक्रवाकमिथु
सान्ध्यविरहपीडया रुतं कृत्वाऽन्योन्यं मुक्त्वा पलाय्य केलिकुल्या-
परावारे तीरे तिष्ठतीति भैमी ददर्शेत्यर्थः। उष्यतेऽस्मिन्निति
वासः। तुङ्गप्रासादमारुह्य अद्राचीदिति ल्यब्लोपो वा ॥१४४॥

अथेति। अथ केलिकुल्यादर्शनानन्तरं सा भैमी रक्तौ पर-
स्परानुरक्तौ स्वभावेन रक्तवर्णौ च अतिविरहौ सततं निरतं
वियोगासहिष्णुतयाऽऽहतौ कामशरैर्विद्धौ, अस्रैः रुधिरैरिव
रक्तौ रथचरणौ चक्रवाकौ विलोक्य तं वर्त्तमानपश्चात्तां सुप्रि-

अपि तमक्रत पद्मसुगन्धिकालं
श्वसनविकीर्णसरोजसौरभं सा ॥ १४५ ॥
अभिलपति पतिम्प्रति स्म भैमी
सदय विलोकय कोकयोरवस्थां ।
मम हृदयमिमौ च भिन्दतीं हा
क इव विलोक्य नरो न रोदितीमां ॥ १४६ ॥

कालं सङ्कोचसमयं सायं सन्ध्यासमयमपि विरहपीडितकोकदर्शनदुःखेन सञ्जातश्वसनो निश्वासभरस्तं निर्गमेन कृत्वा विकीर्णं सरोजसौरभं यस्मिन्, तादृशं अकृत, सन्ध्यासमये पद्मसङ्कोचात् सौरभासम्भवेऽपि निश्वाससोचनेन पद्मिनीत्वात् पद्मसौगन्ध्यं तदानीमपि विस्तारयति स्मेत्यर्थः । तौ तादृशौ दृष्ट्वा भृशं निःश्वस्येत्यर्थः । अन्योऽप्यसन्तृतरकपादं दृष्ट्वा भृशं निःश्वसिति । विरहासहताहताविवार्त्तैरिति पाठः सुयोज्यः । रथचरणौ पुमान् स्त्रिया (पा० १।२।६७) इत्येकशेषः ॥ १४५ ॥

अभीति । भैमी पतिं प्रति इति अभिलपति स्म अवोचत् । इति किं । हे सदय सकरुण त्वं कोकयोरवस्थां विरहविक्लत्वं विलोकय हा कष्टं । इमौ कोकौ भिन्दतीं पृथग्देशावस्थितौ कुर्व्वतीं अत एव मम भैम्या अपि हृदयञ्च एतच्छोकेन विदारयन्तीं इमां कोकयोरवस्थां विरहविक्लत्वं विलोक्य क इव नरः सचेता मनुष्यो न रोदिति अपि तु सर्व्वोऽपि

कुमुदमुदमुदेष्यतीमसोढा
रविरविलम्बितुकामतामतानीत्।
प्रतितरु विरुवन्ति किं शकुन्ताः
स्वहृदि निवेशितकोककाकुकुन्ताः ॥ १४७ ॥

परिदेवनं करोत्येव। मदयत्नात्तव दुःखं भविष्यतीति किं व्यक्तव्यमित्यर्थः ॥ १४६ ॥

कुमुदेति। हे प्रिय रविः उदेष्यतीं उत्पत्स्यमानां कुमुदानां मुदं विकासरूपं हर्षं असोढेव सोढुमशक्नुवन्निव अविलम्बितुं सत्वरं गन्तुकामो यस्य तद्भावस्तता तां अतानीत् विस्तारितवान्। आसन्नास्तमयो वर्त्तत इत्यर्थः। तथा शकुन्ताः पक्षिणः प्रतितरु विरुवन्ति विशेषेण रुतं कुर्व्वन्ति आसन्ननेत्रनिमीलनावासार्थिनो विरुवन्तःसन्तः स्वस्वनिवासवृक्षं प्रतिगच्छन्तीत्यर्थः। तत्रोत्प्रेक्षते स्वहृदि निवेशिताः कोकानां काकवः शोकविकृता विरावा एव अतिपीडाकारित्वात् कुन्ताः भल्लायैस्तादृशाः किं। चक्रवाकशोकपीडिता इव पक्षिणः क्रन्दन्तीत्युत्प्रेक्षा। अन्योऽपि वैरिणां उदेष्यतीं अभिवृद्धिं असहमानः सत्वरं कुत्रचिद्गच्छति। तथा अपरःसरूपः कश्चिद्दुःखितं कश्चिद्दृष्ट्वा क्रन्दति। सोढा तृन्। मुदं नलोकेति (पा० २।३।६९) षष्ठीनिषेधः। उदेष्यती आच्छीनद्योरिति (पा० ७।१।८०) विकल्पानुमभावः ॥ १४७ ॥

अपि विरहमनिष्टमाचरन्ता-
वधिगमपूर्व्वकपूर्व्वसर्व्वचेष्टौ।
इदमत्र्‌ निदर्शनं विहङ्गौ
विधिवशचेतनचेष्टितानुमाने॥ १४८॥

अपीति। हे प्रिय स्वस्यानिष्टमपि विरहमाचरन्तौ स्वयमेव कुर्वाणौ तर्हि सदास्वानिष्टाचरणस्वभावावेव भविष्यत इत्यत आह। अधिगमो ज्ञानं तत्पूर्व्विकाः पूर्व्वा विरहाचरणात् प्राचीनाः सर्व्वाश्चेष्टा कर्त्तव्यता ययोस्तौ। अधिगमो लाभो हितमिति यावत्। तत्पूर्व्विकास्तदुद्देश्या पूर्व्वाश्चेष्टा ययोस्तादृशौ वा। बुद्धिपूर्व्वकारी हि स्वाहितेन प्रवर्त्तते, कोकयोश्च दिने भोजनादयः सकलाश्चेष्टा ज्ञानपूर्व्विकाः स्वहिताः। एवं सति अनेनैव स्वभावादप्येतौ सन्ध्यायां अकस्मादेवान्योन्यविरहं स्वयमेव यस्मादाचरतः तस्माद्विधिवशं दैवाधीनं चेतनानां प्राणिनां चेष्टितं पूर्व्वकर्म्माधीनं प्राणिनामाचरणमित्येवंरूपे अनुमाने कार्य्यकारणविशेषज्ञाने विषये यावेतौ विशिष्टौ विहङ्गौ कोकौ। इदमेव निदर्शनं, अयमेव दृष्टान्तः। अत्र अद्भुते खेदे वा, तस्मात् प्राचीनकर्म्मानुसारेणैव प्राणी कदाचित् हितं कदाचिच्चाहितमाचरतीति भावः। प्राणिनो दैवाधीनचेष्टिताः ज्ञानेऽपि प्रतिकूलतया प्रवर्त्तमानत्वात्। चक्रवाकवत्। इत्युपमानं॥ १४८॥

अह्निस्थाऽरुणिमेष्टकाविसरणैः शोणे कृपाणः स्फुटं
कालोऽयं विधिना रथाङ्गमिथुनं विच्छेत्तुमिच्छता ।
रश्मिग्राहिगरुत्मदग्रजसमारब्धाविरामभ्रमौ
दण्डभ्राजिनि भानुशाणवलये संसज्य किं निज्यते ॥१४९॥

अह्नीति । स्फुटमुत्प्रेक्षते हे प्रिय रथाङ्गमिथुनं विच्छेत्तुं वियोक्तुं । अथ च विशेषेण विदारयितुं अनिच्छता विधिना ब्रह्मणा दैवेन वा अयं कालः सन्ध्यासमय एव स्फुटं खड्गगुणयोगात् कालः कृष्णलोहमयः कृपाणः भानुशाणवलये सूर्य्यरूपे शाणचक्रे संसज्य संयोज्य निज्यते किं तीक्ष्णीक्रियते किमित्यर्थः । किम्भूते वलये । अस्तमयकालसांनिध्यात् अह्निस्थः किरणस्थोऽरुणिमा सएव इष्टकाविसरणानि इष्टकाचूर्णप्रसारणानि तैः शोणे रक्तवर्णे तथा रश्मिग्राहिणा गरुत्मतोऽग्रजेन अरुणेन समारब्धाऽविरामा निनरां भ्रमिर्भ्रमणं तस्मिन् सदा अरुणेन कृतभ्रमणे । अथ वा आकर्षणरज्जुग्राहिभिः अरुणसमैस्तद्वत्तेजस्विभिर्वलिभिः पुरुषैः आरब्धनिरन्तरभ्रमणे तथा दण्डसंज्ञकेन सूर्य्यपार्श्ववर्त्तिना भ्राजिनि शोभनशीले । अथ च शाणचक्राधारभूतेन आकर्षणरज्जुसंयुक्तेन दारुमयेन दण्डेन शोभमाने सन्निहितास्तमयसूर्य्यसायंसन्ध्यासमयसान्निध्याच्चक्रवाकयुगं तीक्ष्णतरखड्गविदारितमिव विधिवशादियुक्तं सत् व्यथत इति भावः । अन्योऽपि किञ्चिच्छेत्तुं खड्गमुक्तविशेषणविशिष्टे शाणचक्रे तीक्ष्णं करोति । किरणप्रग्रहौ

इति स विधुमुखीमुखेन मुग्धा-
लपितसुधासवमर्पितं निपीय।
स्मितशबलवलन्मुखोऽवदत् तां
स्फुटमिदमीदृशमीदृशं यथात्थ॥ १५०॥
स्त्रीपुंसौ प्रविभज्य जेतुमखिलावालोचितौचित्ययो-
र्नम्रौ वेद्मि रतिप्रसूनशरयोश्चापद्वयीं त्वद्भ्रुवौ।

दण्डी माठरः पिङ्गलो दण्डश्चण्डांशोः पारिपार्श्विका इत्य-
मरः। भ्रमाविति भाषितं पुंस्त्वं। निज्यते णिजिरशौचे इत्य-
स्मात् कर्म्मणि यक्। नकारतकारभ्रान्त्यैव तिज्यत इति पठन्ति
तदसत्॥ १४९॥

इतीति। स नलोऽपि तां भैमीमिति अवदत्। इति किं।
हे प्रिये त्वं यथा आत्थ तत् स्फुटं निश्चितं ईदृशं सत्यमेवेत्यर्थः।
किम्भूतः। इति पूर्व्वोक्तरीत्या विधुमुख्या भैम्या मुखेनार्पितं दत्तं
मुग्धं मनोहारि आलपितं मञ्जुभाषितमेव सुधासवं रसवा-
हुल्यादमृतं उन्मादकत्वाच्च मधु निपीय आस्वाद्य सादरमा-
कर्ण्य च स्मितेन शबलं मिश्रितं वलत् भैमीसम्मुखं भवत् मुखं
यस्य सः। कामिनो हि कामिनीमुखार्पितं मद्यं सानुरागं पि-
वन्ति, अनन्तरं चलितमुखाः सहासं किञ्चिद्वदन्ति च॥ १५०॥

स्त्रीति। अयि प्रिये अहं वक्रतरे त्वद्भ्रुवौ रतिः प्रसूनशरः
कामश्च तयोर्नम्रौ स्त्रीजयाय रत्या पुञ्जयाय च कामेन आक-
र्णमाकृष्य वक्रितां चापद्वयीं वेद्मि। त्वद्भ्रुवावेव तयोर्धनुषी

त्वन्नासाच्छलनिह्नुतां द्विनलिकीं नालीकमुक्त्येषिणो-
स्त्वन्निश्वासलते मधुश्वसनजं वायव्यमस्त्रं तयोः ॥ १५१ ॥
पीतो वर्णगुणस्तवातिमधुरः कायेऽपि सोऽयं यथा
यं बिभ्रत् कनकं सुवर्णमिति कैराद्दत्य नोत्कीर्य्यते।

इत्यर्थः। किम्भूतयोः। अखिलौ त्रिजगति वर्त्तमानौ तत्तज्जातीयौ स्त्रीपुंसौ प्रविभज्य विभागं कृत्वा पृथग् जेतुं आलोचितं विचारितं औचित्यं याभ्यां तयोः। स्त्रियाः स्त्र्येव जेतुं योग्या। पुंसश्च पुमानेवेति आलोचितौचित्ययोरित्यर्थः। तथा नालीकानां वितस्तिमात्रनालीकाख्यशरविशेषाणां मुक्तिं मोचणमिच्छतः एवंशीलयोः। रतिकामयोः सम्बन्धिनीं द्विनलिकीं नालीकमोचनोपायभूतसरन्ध्रवंशद्वयपर्व्वद्वयं त्वन्नासाच्छलेन त्वदीयवाम-दक्षिणनासापुटद्वयव्याजेन निह्नुतां गोपितां जानामि। त्वन्नासापुटद्वयमेतन्न भवति किन्तु नालीकद्वयमुक्त्युपायभूता रतिकामयोः द्विनलिकीत्येवाहं शङ्के इत्यर्थः। तथा त्वन्निश्वासलते वामदक्षिणनासानिश्वासधाराद्वयं तयोः रतिकामयोः प्र[illegible] मधुश्वसनजं वसन्तकालीनमलयानिलप्रभवं वायव्यं वायुदेवताकं अस्त्रमेवाहं वेद्मि, सुन्दरत्वद्भ्रूनासाद्यवयवदर्शनमात्रेण कामवश्यत्वं भवतीति भावः। द्विनलिकीं समाहारे द्विगौ ङीप्। वायव्यं साऽस्य देवता (पा० ४।२।२४) इत्यर्थे वाय्वृतुपित्रुषसो-यत् (पा० ४।२।३१) ॥ १५१ ॥

पीत इति। हे भैमि वर्णेषु शुक्लादिषु मध्ये गुणो वैशेषि-

का वर्णान्तरवर्णना धवलिमा राजैव रूपेषु य-
स्तद्योगादपि यावदेति रजतं दुर्वर्णतादुर्यशः ॥ १५२ ॥

कादिभिर्गुणपदार्थत्वेन निर्दिष्टः पीतो हरिद्राभो वर्णः स च स एव अतिमधुरो रमणीयतरो न तु वर्णान्तरं मधुरमित्यर्थः। यथा येन कारणेन अयं पीतो वर्णः तेऽपि तवापि काये देहे वर्त्तते, अत्युत्तमया त्वयापि देहे धार्य्यते तस्मादयमत्युत्तम इत्यर्थः। अथ च रूपान्तरापेक्षया शुक्लरूपस्यैव प्रधानत्वादन्येषां चाप्रधानत्वाद् वर्णेषु मध्ये गुणो प्रधानभूतोऽपि पीतो हरिद्राभो वर्णः स एवातिमधुरः प्रधानभूत इत्यर्थः। यस्मादयं ते काये वर्त्तते। अप्रधानस्यापि केनचिदत्युत्तमेनाङ्गीकृतत्वाद्धि प्राधान्यं भवति, तथा च त्वयाङ्गीकृतत्वात् प्राधान्यं युक्तमेवेत्यर्थः। अथ च गुणः पीत एव नान्यो गुणः पीतवर्ण एव गुणरूपोऽन्ये तु दोषरूपा इत्यर्थः। स एव च अतिमधुरः। उभयत्रापि हेतुः। पीतोऽयं तव काये वर्त्तते तस्माद्गुणोऽतिमधुरश्चेत्यर्थः। अथ च तव काये वर्त्तमानोऽयं प्रत्यक्षगम्योऽतिमधुरो रसो यथा पीतः तत्तच्चुम्बनस्थानचुम्बनेनास्वादितः, तथा तव कायेऽतिप्रसिद्धो वर्णगुणो गौरिमाऽपि पीतः सादरं निरीक्षितोऽथ च हरिद्राभ इत्यर्थः। अपि चान्योन्यसमुच्चये। सोऽतिमधुरोऽधरो यथा पीतस्तथायं वर्णगुणोऽपि पीत एवेति वा सम्बन्धः। अथ च तव अतिमधुरो वर्णगुणो वर्णात्मकशब्दलक्षणो यथा पीतः आस्वादितः, अतिमधुरा तव वाणी पीतेत्यादि ज्ञातव्यं

एवं कृतत्वेनोक्ता प्रकृतपीतरूपवर्ण एव युक्तिमाह। त्वच्छरी-राश्रयं पीतवर्णं विभ्रत् कनकचम्पकशोभनो वर्णो यस्य तत् सुवर्णमिति कैर्जनैः आदृत्य आदरेण नोत्कीर्त्यते नोद्घोष्यते। अपि तु त्वदङ्गधृतसुवर्णतुल्यवर्णधारणादेव वर्णकं सुवर्णमित्यु-च्चैः कीर्त्यते। अथ च त्वच्छरीराश्रयं पीतवर्णं धारयञ्चामीकरं शोभनो वर्णोऽस्येति व्युत्पत्त्या सुवर्णमिति कैर्जनैरादरेण नोद्घो-ष्यते, अपि तु त्वच्छरीराश्रितपीतवर्णमिति त्वदीयाङ्गमेव सुव-र्णमिति कीर्त्तिर्लेभे इत्यर्थः। अथ च शोभनो वर्णः स्तुतिर्यस्य त्वदङ्गवर्णं विभ्रदतितरां स्तुत्यं, न तु स्वत इति मुख्यया वृत्त्या सुवर्णमिति त्वदीयमङ्गमेव, कनकं तु त्वदङ्गवर्णसाम्यधारणा-द्गौण्या वृत्त्या लोकेन कथ्यत इत्यर्थः। अत एव पीतवर्णस्य पुर-स्ताद् प्रधानानां वर्णान्तराणां नीलरक्तादीनां वर्णना का, अपि तु सा नैव कृताप्युपयुज्यते, तत्कथा न कार्येव, यावत् यतः कार-णात् यो धवलिमा शुक्लगुणः षड्विधेषु रूपेषु मध्ये राजैव श्रेष्ठतम एव निर्मलत्वादभ्यर्हितत्वाद् रूपविभागवेलायां वैशेषिकैः प्रथ-मोच्चारितत्वाच्च प्रधानभूत एव तस्य प्रधानभूतस्यापि योगात् सम्बन्धाद् रजतं दुष्टोऽसमीचीनो वर्णो यस्य तस्य भावस्तत्ता दुर्व्वर्णशब्दवाच्यता तद्रूपं दुर्यशः अकीर्त्तिरतिनिन्दितनीलादि-वर्णान्तरयुक्तन्तु दुर्वर्णतां प्राप्नोतीति किं वाच्यमित्यर्थः। यावत् सकलं रजतमिति वा। अत्र प्रधानस्यापि पीतरूपस्य भैमीशरीरे-णाङ्गीकृतत्वादेव उत्तमत्वं तद्योगात् काञ्चने सुवर्णमिति कीर्त्तिः। भैमीशरीरेणाङ्गीकृतत्वादेव च उत्तमस्यापि धवलिम्नोऽनुत्त-

खण्डक्षोदमृदि स्थले मधुपयःकादम्बिनीतर्पणात्
क्षिप्ते रोहति दोहदेन पयसां पिण्डेन चेत् पुण्ड्रकः।

मता। धवलिमा वर्णवाचित्वाद्गुणवचनत्वाद्वा इमनिच्॥१५२॥

इदानीं नवभिः श्लोकैर्भैम्या वाणीं वर्णयति। खण्डेति। हे भैमि पुण्ड्रकः स्थूलेक्षुविशेषः पयसां पिण्डेन दुग्धानामत्यन्ताग्निसंयोगाद्घनीभूतेन गोलकेनैव दोहदेन एवम्भूते स्थले क्षेत्रे चेत् रोहति साङ्कुरो भवति। किम्भूते स्थले। खण्डः शर्करा तस्य क्षोदः चूर्णमेव मृत् मृत्तिका यस्मिन्, तथा मधु अमृतं माक्षिकमेव वा पयो यस्याः तया कादम्बिन्या मेघमालया तर्पणात् पूर्णजलकरणाद्धेतोर्द्विगुणाकृष्टमेघमालावृष्टजलं हि क्षेत्रं पुनः क्षिप्यते तादृशे समीकृते, उप्तं हि वीजं अङ्कुरार्थं पुनः पयोऽपेक्षते तस्याने ऽत्र दुग्धगोलकः। दोहदेत्यनेन निरातङ्कमभिवृद्धिः सूचिता। अनन्तरञ्च प्ररूढाङ्कुरः सन् पुण्ड्रकः फलोत्पत्तिसमयपर्य्यन्तं द्राक्षाणां द्रवः पक्कफलनिष्पीडितरसस्तस्य सेचनैः कृत्वा इक्षुदण्डादपि परिणतमाधुर्य्यातिशयं फलं यदि धत्ते तदा तर्हि ततोऽपि विशिष्टेक्षुफलादपि सकाशात् त्वद्गिरां तव वाणीनामुद्देशाय निर्देशार्थं मधुरशब्द आधारो मूलप्रकृतिर्यस्य तादृशस्तमप् प्रत्यय उदेति उत्पद्यते। कीदृग्भैम्या वाणीति पृष्टे उक्तविशेषणविशिष्टादिक्षुफलादतिमधुरतमेति तदा निर्देष्टुं शक्यत इति अतिशायने तमप् तदैव सङ्गच्छत इत्यर्थः। एवंविशिष्टफलं यदि भवेत् तर्हि तदेव तावदतिमधुरं तस्मादप्यतिमधुरं

स द्राक्षाद्रवसेचनैर्यदि फलं धत्ते तदा त्वद्गिरा-
मुद्देशाय ततोऽप्युदेति मधुराधारस्तमप्प्रत्ययः ॥ १५३ ॥
उन्मीलद्गुडपाकतन्तुलतया रज्ज्वा भ्रमीरर्जयन्
दानान्तश्रुतशर्कराचलमथस्वेनामृतान्धः स्मरः ।

वस्तु विद्यते किं इति पृष्टे निःसीममधुरतमस्यान्यस्याभावात् तमप् प्रत्ययान्तमधुरशब्देन भवद्वाणीवोत्तमत्वेन दातुं योग्या न तु विशिष्टमपीक्षुफलं निःसीममाधुर्याभावात् तमप्प्रत्ययानुपपत्तेः, किमुत मधुराणि द्रव्यान्तराणि त्वद्वचनवन्मधुरतमं वस्तु किञ्चि-दपि न दृष्टं इति भावः । एवंविधे क्षेत्रे यदि पुण्ड्रको रोहति स च पयसां पिण्डेन दोहदेन द्राक्षाद्रवसेचनैश्च दोहदेन यदि फलं धत्ते इति वा । कादम्बिनी मेघमालेत्यमरः । पुण्ड्रो दैत्य-विशेक्षुभेदेऽपीति विश्वः । ततः स्वार्थे कन् ॥ १५३ ॥

उन्मीलदिति । अमृतमेवान्धोऽन्नं यस्य देवत्वात् तादृशो भ-वन् स्मरो यदि इक्षुरस एवोदधिस्तस्मात् सकाशात् नव्यां देवा-सुरोत्थापितपूर्व्वसुधाया अन्यादृशीं सुधामात्मनैवोत्थापयेन्नि-र्गमयेत् तर्हि सा मधुरतमा सुधा मत्कर्णयोः परमां पारणां अद्वितीयतृप्तिहेतुं भवत्या जिह्वायाः कृतिं त्वद्रसनानिर्म्मितां वाणीं आक्रयेत स्पर्द्धापूर्वकमाकारयेत् । किम्भूतः स्मरः । उन्मी-लन् अतिप्रकाशमानः अतिशयितः गुडस्य इक्षुरसविकारस्य पाकः तज्जन्या ये तन्तव ऊर्ध्वोर्ध्वप्रसारितगुडनिर्गतदोरकाः, त एव दैर्घ्याल्लता तयैव रज्ज्वा मन्थभ्रमणदोरकेण कृत्वा दा-

नव्यामिक्षुरसोदधेर्यदि सुधामुत्थापयेत् सा भव-
ज्जिह्वायाः कृतिमाह्वयेत परमां मत्कर्णयोः पारणां ॥ १५४ ॥
आस्ये या तव भारती वसति तल्लीलारविन्दोल्लस-
द्वासे तत् कलवैणनिक्वणमिलद्वाणीविलासामृते ।

नान्ते तुलापुरुषदानादिमध्ये आयुरारोग्यैश्वर्यादिफलकः श्रुतः शर्कराचलः स एव मथो मन्थानमन्दरः तस्य भ्रमीर्भ्रमणानि अर्जयन् कुर्वन्, तया रज्वा शर्कराचलं मन्थानं चालयन् अतिमधुरसामग्रीसम्पादितं हि मधुरतमं भवतीत्येवंविधमधुरसामग्रीकलान्मधुरतमाऽपि अन्या सुधा भवद्वाणीतुल्या भवेद्वा न वा तदन्या तु नैवेत्यर्थः ।

अथातः सम्प्रवक्ष्यामि शर्कराचलमुत्तमं ।
यस्य प्रदानाद्विष्णवर्करुद्रास्तुष्यन्ति सर्व्वदा ॥

इति दानखण्डे । आह्वयेत स्पर्द्धायामाङः (पा० १।३।३१) इति तङ् ॥ १५४ ॥

आस्य इति । हे प्रिये तवास्ये या भारती सरस्वती वसतिः । किम्भूते आस्ये । तस्या भारत्या एव हस्ते स्थितस्य लीलारविन्दस्येव उल्लसन् प्रसरन् वासो गन्धो यस्मिन् पद्मिनीत्वात् पद्मतुल्यपरिमले । तथा तस्या एव कलो वैणो निक्वणः मधुरःस्फुटो वीणासम्बन्धी नादः तद्रूपं मिलत् सम्बध्यमानं वाणीविलासरूपं वक्रोक्त्यादिनानाविधवाग्विलासरूपं अमृतं यस्मिन् । तथा

**तत्केलिभ्रमणार्हगैरिकसुधानिर्म्माणहर्म्याधरे**
**तन्मुक्तामणिहार एव किमयं दन्तस्रजा राजतः॥ १५५॥**
**वाणी मन्मथतीर्थमुज्ज्वलरसस्रोतस्विनी काऽपि ते**
**खण्डा खण्ड इतीदमीयपुलिनस्यालप्यते वालुका।**

तस्या एव केलिभ्रमणार्हे लीलागमनयोग्ये गैरिकेनोक्त... विशेषेण सुधया धवलतया धवलसाधनचूर्णद्रव्येण च ...वादिनिर्म्माणं यत्र तादृशं यत् हर्म्यं गृहं तद्रूपस्तत्तुल्यो ऽधरो यस्मिन् तादृशे आस्ये पुरो दृश्यमाने ये दन्तस्रजौ द्वे दन्तमाले राजतः शोभेते। तद्रूपः अयं पुरो दृश्यमानः तस्या भारत्याः मुक्तामणिरचितो हार एव किं तद्दन्ते रेजाते इत्यर्थः। सरस्वतीवीणाक्वणिततुल्या तव वाणीत्यर्थः। अत्र प्राधान्येन वाणीवर्णनं, अन्यत्रासङ्गिकं। पद्मगन्धादिभिर्मुखे भारतीवासोऽनुमीयते। ईश्वराणां गृहं गैरिकादिविचित्रं भवति गैरिकयुक्ता सुधेति वा॥ १५५॥

वाणीति। हे भैमि वाणी काऽपि वर्णयितुमशक्यत्वात् लोकोत्तरा, अथ वा निर्दिश्यमाना उज्ज्वलरसस्रोतस्वती शृङ्गाररससम्बन्धिनी वा नदी, अथ च निर्म्मलजलसम्बन्धिनी वा नदी अत एव मन्मथस्य तीर्थं कामोद्दीपिका, तथा इदमीयस्याः अस्या नद्याः सम्बन्धिनः पुलिनस्य सम्बन्धिनी वालुकैव इक्षुविकाररूपः खण्ड इति आलप्यते गीयते। तथा पूताः निर्म्मलाः सिताः शुभ्राः चक्रिकाः शर्कराकृतचक्राणि एतस्यास्तीरस्य मृदैव धवलमृत्तिकयैव रचिताः किं। तथा पीयूषं अमृतं अस्याः सम्ब-

एतत्तीरभुवैव किं विरचिताः पूताः सिताश्चक्रिकाः
किं पीयूषमिदम्पयांसि किमिदन्तीरे तवैवाधरौ ॥ १५६ ॥
परभृतयुवतीनां सम्यगायाति गातुं
न तव तरुणि वाणीयं सुधासिन्धुवेणी ।
कति न रसिककण्ठे कर्त्तुमभ्यस्यतेऽसौ
भवदुपविपिनाम्रे ताभिराम्रेडितेन ॥ १५७ ॥

न्धीनि पयांसि इदम्पयांसि किं अस्या जलान्येव अमृतत्वेना-लप्यन्ते किं । तथा तवाधरावेव इदन्तीरे अस्या नद्यास्तीरे उभौ तटौ किं । शृङ्गाररसप्रधाना कामोद्दीपिका भवद्वाणी मधुरतमेति भावः ॥ १५६ ॥

परेति । हे तरुणि प्रादुर्भूतयौवने सुधासिन्धुवेणी सुधानदी-प्रवाहरूपा तव इयं वाणी परभृतयुवतीनां सम्यग्याथात्म्येन गातुं भाषितुं नायाति, यस्माद्धेतोस्ताभिः कोकिलाभिरसौ त्वद्वाणी भवत्या उपविपिने उपवने स्थिता य आम्रवृक्षः तस्मिन् स्थित्वा रसालाङ्कुरास्वादेन रसिकेऽतिमधुरे, अथ च ममाप्येवं वाणी भवत्वेवं साभिलाषे कण्ठे कर्त्तुं कण्ठस्थां कर्त्तुं आम्रेडितेन पुनः-पुनर्घोषणेन कतिवारान्नाभ्यस्यते, अपि तु बहुवारमभ्यस्यत एव । तस्मादद्यापि तासां भवद्वाणी सम्यग्नायातीति ज्ञायत इत्यर्थः । कोकिलालापादपि त्वद्वाणी मधुरतमेति भावः । भिक्षाटनेन विद्याभ्यासः सुकर इति सूचनार्थं परभृतपदं । एमपत्नथा स्त्रीणां विशेषतस्तरुणीनामिति सूचनार्थं युवतिपदं ॥ १५७ ॥

ऊर्ध्वस्ते रदनच्छदः स्मरधनुर्बन्धूकमालामयं
मौर्वी तत्र तवाधराधरतटाधःसीमलेखालता।
एषा वागपि तावकी ननु धनुर्वेदः प्रिये मान्मथः
सोऽयं कोणधनुष्मतीभिरुचितं वीणाभिरारभ्यते॥ १५८॥
स ग्राम्यः स विदग्धसंसदि सदा गच्छत्यपाङ्क्तेयतां
तञ्च स्प्रष्टुमपि स्मरस्य विशिखा मुग्धे विगानोन्मुखाः।

ऊर्ध्व इति। हे प्रिये ते ऊर्ध्वो रदनच्छदः ओष्ठएव बन्धूकमालामयं स्मरधनुः तवाधराधरतटस्य अधःसीमापर्य्यन्तमर्य्यादायां वर्त्तमाना लेखा सैव दैर्घ्याल्लता तत्र कामचापे मौर्वी एषा। तावकी वागपि मान्मथः कामसम्बन्धी कामाद्वैतप्रतिपादकः धनुर्वेदएव सोऽयं विशिष्टस्वराणीरूपो कान्मथधनुर्वेद उचितं योग्यं यथा तथा कोणधनुष्मतीभिर्वीणात्रादनसाधनधनुर्युक्ताभिः वीणाभिः आरभ्यते, अभ्यस्यते परमद्यापि नायातीत्यर्थः। त्वद्वाणी वीणाक्वणितादपि मधुरतरेभावः। धनुर्वेदस्य धनुर्धरैरेवाभ्यस्यत इत्यौचित्यं, अभ्यस्यते एतदुचितमिति वा। यत् स्वस्य नायाति तदागमनार्थमभ्यासोऽप्युचित एवेत्यर्थः॥ १५८॥

स इति। हे मुग्धे सुन्दरि यः पुरुषः मधु किं नामेति पृच्छति प्रश्नं कुर्व्वाणे जने विषये तवाधरमेव उत्तरं न दत्ते स ग्राम्यः पामरोऽचतुरः, न तु स नगरनिवासयोग्य इत्यर्थः। तथा हेम किं प्रकारकमिति प्रश्नं कुर्व्वाणे जने विषये यस्त्वद्वपुरेव

यः किं मध्विति नाधरं तव कथं-त्वेमेति न त्वद्वपुः
कीदृङ्नाम सुधेति पृच्छति न ते दत्ते गिरं चोत्तरं ॥१५८॥
मध्ये बद्धाणिमा यत्सगरिममहिमश्रोणिवक्षोजयुग्मः
जाग्रच्चेतोवशित्वा स्मितधृतलघिमा मां प्रतीशित्वमेपि।

उत्तरं न दत्ते। स विदग्धानां चतुराणां संसदि सभायां सदा अपाङ्क्तेयतां पङ्क्तिबहिर्भूतत्वं याति गच्छति तेषां पङ्क्तौ नोपवेश्यते सोऽप्यचतुर इत्यर्थः। तथा सुधा नाम कीदृगिति पृच्छति प्रश्नं कुर्व्वाणे जने यत्ते गिरश्च उत्तरं न दत्ते स्मरस्य विशिखास्तञ्च पुरुषं स्प्रष्टुमपि विगानोन्मुखा जुगुप्सायै कृतो-द्यमाः नीरसोऽयमिति जुगुप्सायां न स्पृशन्ति न भिन्दन्तीति किं वाच्यं सोऽप्यचतुर इत्यर्थः। त्वद्वाणी सुधाया अपि मधु-रतमेति भावः। अधरादिवर्णनं तु प्रासङ्गिकं। ग्राम्यः। ग्रामा-द्यखञौ (पा० ४।२।९४) इति भवार्थे यः। पाङ्क्तेयः सख्या-दित्वाड्ढक्॥ १५८॥

मध्य इति। हे प्रिये त्वं यद् यस्माद्धेतोर्मध्ये उदरभागे बद्धो धृतः अणिमा सौक्ष्म्यातिशयो यया सा कृशोदरी, तथा गरिममहिमभ्यां गुरुत्वमहत्त्वाभ्यां सह वर्त्तमानं श्रोणिर्नितम्बः वक्षोजयुग्मं स्तनयुगञ्च यस्याः सा गुरुस्थूलनितम्बा महोच्चकुचा च, तथा जाग्रत् स्फुरद्रूपं चेतसि वशित्वं जितेन्द्रियता यस्याः सा पतिव्रता। तथा स्मिते ईषद्धास्येऽपि धृतो लघिमाऽल्पत्वं यया सा, अल्पहासेत्यर्थः। तथा मां प्रत्युद्दिश्य ईशित्वं स्वामितामेषि,

सूक्तौ प्राकाम्यरम्या दिशि विदिशि यशोलब्धकामावसा
भूतीरष्टावपीशस्तददित मुदितः स्वस्य शिल्पाय तुभ्यं ॥१९०॥

मम प्राणेश्वरी। तथा सूक्तौ वचनचातुर्य्यविषये प्राकाम्येन प्रकारबाहुल्येन रम्या वक्रोक्त्यादिना। ...रं वाणीं वक्तुं यो यथा वाञ्छति तथा वक्तुं त्वमेव जानासि नाऽन्या। तथा दिशि प्राच्यादौ विदिशि आग्नेयादौ च यशसः सौन्दर्य्यादिविषयकीर्त्तेः यशसा वा कृत्वा लब्धः कामेन स्वेच्छया अप्रतिहतप्रसरोऽवसायो गतिर्यया सा [illegible]प्रसरकीर्त्तिः, एवंविधा यस्मात् तस्मात् कारणात् मुदितो हृष्टः ईश ईश्वरः त्वां निर्माय सौन्दर्य्यादिना मुदितः परितुष्टः सन् अणिमादीरष्टावपि भूतीः महासिद्धीः तुभ्यं स्वशिल्पाय त्वद्रूपाय निजनिर्म्माणाय अदित प्रायच्छत्। सन्तुष्टो हि पित्रादिः अपत्यादिभ्यः स्वयं धृतमलङ्कारादि ददाति। तथेश्वरेण सन्तुष्टेन स्वयं धृतमणिमा महिमा गरिमा लघिमा वशित्वमीशित्वं प्राकाम्यं कामावसायिता चेत्येवमष्टविधमैश्वर्य्यं तुभ्यं दत्तं, अन्यथा एतत्त्वयि कथं स्यादित्यर्थः। एवं सूक्तिः कस्याश्चिदपि नास्तीति भावः। शब्दश्लेषशक्तिच्छलेनैतत् सर्व्वमुक्तमिति ज्ञेयं। वाणीवर्णन एव तात्पर्य्यं। मध्यादिवर्णनं प्रासङ्गिकं। अणिमादौ गुणवचनत्वादिमनिच्। वश इन्द्रियाणां स्वाधीनत्वं तदस्यास्तीति वशी तद्भावो वशित्वं जितेन्द्रियत्वं ईशनमीशः ऐश्वर्य्यं तदस्यास्तीति ऐशी तद्भावः ईशित्वम् ॥१९०॥

त्वद्वाचः स्तुतये वयं न पटवः पीयूषमेव श्रम-
स्तस्यार्थे गरुडामरेन्द्रसमरः स्थाने स जानेऽजनि ।
द्राक्षापानकमानमर्द्दनसृजा क्षीरे दृढावज्ञया
यस्मिन्नामधृतोऽनया निजपदप्रक्षालनानुग्रहः ॥ १६१ ॥
शोकश्चेत् कोकयोस्त्वां सुदति नुदति तद्व्याहराज्ञाकरस्ते
गत्वा कुल्यामनस्तं व्रजितुमनुनये भानुमेनज्जलस्थं ।

त्वदिति । हे प्रिये वयं त्वद्वाचः स्तुतये न पटवः, तस्मात् पीयूषममृतमेव श्रमः तस्य अमृतस्यार्थे स पुराणादिप्रसिद्धः गरुडस्यामरेन्द्रस्य च समरः अजनि स्थाने युक्तं तदित्यहं जाने मन्ये । नाम यस्माद्धेतोरनया तव वाण्या यस्मिन्नमृते निजपादयोः प्रक्षालनेनैवानुग्रहो धृतः कृतः । किम्भूतया द्राक्षापानकस्य पक्वद्राक्षासम्बन्धिनः संस्कृतरसविशेषस्य मानो-ऽहङ्कारस्तस्य मर्द्दनं खण्डनं सृजति तया । तथा क्षीरे दुग्धे विषये दृढा अन्येन त्याजयितुमशक्या अवज्ञा यस्यास्तया । अथ च यस्मिन् पीयूषे भवद्वाक्यभूतया वाण्या स्वीयसुप्तिङ-न्तरूपाणां पदानां प्रक्षालनादनुपश्चाद् ग्रहाणां ग्रहः कृतो ऽस्त्येव, अमृतक्षालिततयैव निर्दोषमधुरञ्च वदसीत्यर्थः । द्रा-क्षाक्षीरे तिष्ठतः पीयूषादपि त्वद्वाणी मधुरतमेति भावः । प्रभोर्यस्मिन्ननुग्रहातिशयः स एव चरणक्षालनादि करोति ॥ १६१ ॥

शोकेति । हे सुदति कोकयोर्विरहजनितः शोकः सदय-

बद्धे यद्यञ्जलावप्यनुनयविमुखः स्यान्ममैकग्रहोऽयं
दत्त्वैवाभ्यां तदम्भोञ्जलिमिह भवतीं पश्य मामेष्यमाणं॥१६२॥

इदयलात् त्वां चेन्नुदति तर्हि व्याहर आज्ञापय। ते आज्ञा-
करः अहं कुल्यां गत्वा एतस्याः कुल्याया जलस्थं उद[illegible]त-
विम्बितं भानुं सूर्य्यं अनस्तं अस्ताभावं अजितुं प्राप्तुं अस्तमगन्तुं,
यद्वा अनस्तं अस्ताचलप्रतियोगिभूतं उदयाचलं गन्तुं अनु-
नये प्रार्थये। इदानीं त्वया अस्तो न प्राप्तव्यः पुनरुदयाचले
गन्तव्यं इत्येवं सूर्य्यं करसम्पुटयोजनया सम्प्रार्थ्य पुनः प्राचीं
नेष्यामीति यावत्। यदि मया अञ्जलौ बद्धेऽपि अयं सूर्य्यः
मामनुनये प्रार्थनायां विमुखः स्यात् यतः एकः केवलो ग्रहो-
ऽभिनिवेशो यस्य एवंविधः, अथ च एको मुख्यो ग्रहराजः
तत्तर्हि सूर्य्यार्घ्यदानसम्बन्धिनं अम्भोञ्जलिं आभ्यां कोकाभ्या-
मेव दत्त्वा इह प्रासादे भवतीं प्रति पुनरेष्यमाणमागमिष्यन्तं
मां पश्य, एवं कोकनदव्याजेन बहिः सन्ध्यामुपासीतेति वच-
नात् सायंसन्ध्योपासनानिमित्तं वहिर्निर्गमनार्थमनुज्ञां या-
चितवानिति भावः। सुदतीत्यनेनोक्त्याऽनन्तरं ईश्वरदत्तकिर-
णप्रकाशेन महानानन्दो जनिष्यते तदर्थं व्याहरेति प्रार्थ्यत
इति सूच्यते। दत्त्वेति पाठे उत्प्रेक्षा। एष्यमाणं गत्यर्थादीङो
लटः शानच्॥१६२॥

तदानन्दाय त्वत्परिहसितकन्दाय भवती
निजालीनां लीनां स्थितिमिह मुहूर्त्तं मृगयताम् ।
इति व्याजात् कृत्वाऽऽलिषु वलितचित्तां सहचरीं
स्वयं सोऽयं सायन्तनविधिविधित्सुर्बहिरभूत् ॥ १६३ ॥

तदिति । सोऽयं नलः स्वयं सायन्तनं विधिं सान्ध्याग्निहोत्रादिकं कर्म्म विधित्सुः कर्त्तुकामः सन् प्रासादाद्बहिरभूत्, निरगादित्यर्थः । किं कृत्वा इति व्याजादेवंप्रकारेण सूर्य्यानुनयसखीगवेषणमिषेण सहचरीं भैमीं आलिषु सखीषु विषये आलिङ्गनमिषाद् वलितं चित्तं यस्यास्तादृशीं कृत्वा । इति किं हे प्रिये अहं सूर्य्यानुनयार्थं नदीम्प्रति गमिष्यामि भवती च निजालीनां निजसखीनां इहाचैव कस्मिंश्चित् प्रदेशे त्वया न द्रष्टव्यमिति लीनां गुप्तां स्थितिं त्वत्कर्त्तृकं कर्म्मकं वा परिहसितं परिहासितं परिहासक्रीडैव कन्दो मूलं उत्पत्तिहेतुर्यस्य तादृशाय तज्जनिताय तासां सखीनामानन्दाय मुहूर्त्तं मृगयतां गवेषयतु इति । एवं तद्वचनाद्भैमी क्वचिल्लीनाः सखीर्गवेषितुं निर्गता । नलोऽपि सायंसन्ध्यां कर्त्तुं बहिर्निर्गमनादिना उत्सर्गसङ्गतिः सूचिता । विधित्सुः द्वितीयेति योगविभागात् समासः ॥ १६३ ॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यं।
तस्यागादयमेकविंशगणनः काव्येति नव्ये कृतौ
भैमीभर्तृचरित्रवर्णनमये सर्गो निसर्गोज्ज्वलः॥ १६४॥

श्रीहर्षमिति। तस्य कृतौ श्रीहर्षकृते अतिशयेन नव्ये अपूर्व-तरप्रमेयपरिपूर्णे भैमीभर्तुः चरित्रवर्णनं प्राचुर्य्येण प्रस्तुतं य ताहृशे काव्ये एकविंशतेः पूरणः एकविंशगणना सङ्ख्या य यद्वा एकविंशतेः पूरणी एकविंशी गणना सङ्ख्या यस्य सः स ऽगात् समाप्तः॥ १६४॥

इति श्रीवेदरकरोपनामकश्रीमन्नरसिंहपण्डितात्मजना रा-यणकृते उत्तरनैषधीयव्याख्यायां एकविंशः सर्गः॥ २१॥

# उत्तरनैषधचरिते।

## द्वाविंशः सर्गः।

ॐ तत् सत्।

उपास्य सान्ध्यं विधिमन्तिमाशा
रागेण कान्ताधरचुम्बिचेताः।
अवाप्तवान् सप्तमभूमिभागे
भैमीधरं सौधमसौ नरेन्द्रः॥ १॥

इदानीं पूर्व्वसर्गान्तप्रस्ताविंत सायङ्कालं वर्णयिष्यन् कविर्द्वाविंशं सर्गमुपक्रमते। उपास्येति। असौ नरेन्द्रो नलः सन्ध्याप्रान्तभाविनान्तिमाशायाः प्रतीच्या आशाया दिशो रागेण रक्तवर्णेन हेतुना कान्ताया अधरचुम्बि अधरोष्ठस्मारि चेतो यस्य तादृशः सन्ध्यारागसदृशभैम्यधरस्मारी सन् तद्विरहासहिष्णुतया वहिरवस्थातुमशक्तो यत्र सा विद्यते तं सप्तमे भूमिभागे कक्षायां स्थितं भैम्याः धरं पर्व्वतरूपं सौधं हर्म्यं प्रासादस्य सप्तमीमुपकारिकामवाप्तवान् प्राप। किं कृत्वा। सान्ध्यं सन्ध्यासम्बन्धिनं सन्ध्याजपादिविधिमुपास्य कृत्वा॥ १॥

प्रत्युद्गजन्त्या प्रियया विमुक्तं
पर्य्यङ्कमङ्कस्थितसज्जशय्यं ।
अध्यास्य तामप्यधिवास्य सोऽयं
सन्ध्यामुपश्लोकयति स्म सायं ॥ २ ॥
विलोकनेनानुगृहाण ताव-
द्दिशं जलानामधिपस्य दारान् ।

प्रतीति । सोऽयं नलः सायङ्कालसम्बन्धिनीं सन्ध्यां रात्रि-
न्दिनसम्बन्धिनं मुहूर्त्तं भैम्याः पुरउपश्लोकयति स्म [illegible]कैः
स्तौति स्म । किं कृत्वा । प्रत्युद्गच्छन्त्या सम्मुखमागच्छन्त्या [illegible]या
विमुक्तमङ्के मध्ये स्थिता सज्जा आस्तृता शय्या तूलि[illegible]त्र
तं पर्य्यङ्कमध्यास्य स्वयमधिष्ठाय तां भैमीमपि अधिवा[illegible]ा-
पवेश्य । पर्य्यङ्कं अधिशीङ (पा० १।४।४६) इति कर्मत्व[illegible] अ-
धिवास्य णयन्तादस्तेर्ल्यप् तस्य धात्वन्तरत्वात् उपा[illegible]ङ्कम
(पा० १।४।४८) इति कर्मत्वाप्राप्तेस्तामधिवास्येत्यत्र सा[illegible]र्थ्यात्त-
त्रैवेति ज्ञेयं । उपश्लोकयति सत्यापपाशेति (पा० ३।१।२५)
णिचि स्म योगे भूते लट् ॥ २ ॥

विलोकनेनेति । हे भैमि त्वं जलानामधिपस्य वरुणस्य दा-
रान् भार्य्यां पश्चिमां दिशं विलोकनेनानुगृहाण कृतार्थीकुरु
तावदादौ विलोकनेनानुगृहाण वर्णनया तु पश्चादित्यर्थः ।
यावच्चन्द्रोदयादिना प्राच्यां रामणीयकं भवति तावत्सन्ध्या-
रागेण कृतरामणीयकां पश्चिमां दिशं विलोकयेति वा ताव-
च्छब्दार्थः । जलाधिपस्य च भार्य्या दुःखिता विलोकनादिना

अचालि लाक्षापयसेव सेय-
मपूरि पङ्कैरिव कुङ्कुमस्य ॥ ३ ॥
उच्चैस्तरादम्बरशैलमौले-
श्च्युतो रविर्गैरिकगण्डशैलः।
तस्यैव पातेन विचूर्णितस्य
सन्ध्यारजोराजिरिहोज्जिहीते ॥ ४ ॥

अनुगृहीतुमर्हा भवतीत्युक्तिः। येयं पश्चिमा दिक् लाक्षापयसा-ऽलक्तरसेन कृत्वा केनापि अचालीव चालितेव। तथा कुङ्कुमस्य पङ्कैः कृत्वा केनापि अपूरीव। एवंविधा रक्ता दृश्यते यत-स्तस्माद्रमणीयामेतां विलोकयेत्यर्थः ॥ ३ ॥

उच्चैरिति। हे प्रिये रविरेव गैरिकाख्यधातुविशेषसम्बन्धी गण्डशैलः उच्चैस्तरादत्युन्नतादम्बरशैलस्य गगनगिरेर्मौलेः शि-खरात् सकाशाच्च्युतः पतितः स्थूलपाषाण एवाधः पतितोऽयञ्च सन्निहितः पातेनोच्चतरगिरिशिखरादधःपतनेन हेतुना विचू-र्णितस्य विशेषेण सूक्ष्मचूर्णीकृतस्य तस्यैव गैरिकगण्डशैलस्य सम्ब-न्धिनी सन्ध्येव रजोराजिः सन्ध्यासम्बन्धी राग इत्यर्थः। इह सायङ्काले पश्चिमदिशि वा उज्जिहीते उपरिष्टात् प्रसरति। अस्तसमये सूर्य्यस्य रक्तत्वाद्गगनगिरिशिखराच्च्युतत्वाच्च गैरिक-गण्डशैलत्वं। उच्चतरात् प्रदेशात् पतितो गण्डशैलश्चूर्णीभवति। चूर्णीभूतस्य रजोराजिरूर्द्धं प्रसरति। तद्रजोराजिरेव सन्ध्या-रागः प्रायेणोर्द्धं गच्छति प्रसरतीत्यर्थः ॥ ४ ॥

अस्ताद्रिचूडालयपक्कणालि-
च्छेकस्य किं कुक्कुटपेटकस्य।
यामान्तकूजोल्लसितैः शिखौघै-
र्दिग्वारुणी द्रागरुणीकृतेयं॥ ५॥
पश्य द्रुतास्तद्रुतसूर्य्यनिर्य्यत्-
करावलीहैङ्गुलवेत्रयाऽत्र।

अस्तेति। हे प्रिये कुक्कुटानां पेटकस्य समूहस्य यामान्ते प्रहरान्ते या कूजा शब्दितं तद्वशादुल्लसितैः प्रकाशमानैः किञ्चिदुच्चीभूतैः उत्फुल्लजपाकुसुमतुल्यैः शिखानां शिरसि रक्तचर्म्ममयकेसराणामोघैर्वृन्दैः किमियं वारुणी दिक् द्राक् अकस्मादरुणीकृता रक्तीकृतेत्युत्प्रेक्षा। किम्भूतस्य। अस्ताद्रेश्चूडा शिखरं सैव लयः स्थानं यस्य स च पक्कणः शवरगृहं तस्यालिः समूहस्तत्र छेकस्यासक्तस्य शवरैर्गृहेषु सङ्गृहीतस्य, कुक्कुठानां कूजने उल्लसितशिखत्वं जातिः, ते च यामान्ते कूजन्ति सायं समये ।-नादुत्फुल्लशिखावृन्दसम्बन्धादरुणीभवनसम्भवार्थं यामान्तेत्याद्युक्तम्। पक्कणः शवरालयः। गृहासक्ताः पक्षिमृगाश्छेकास्ते इत्यमरः। पेटकं पुस्तकादीनां मञ्जूषायां कदम्बकमिति विश्वः॥ ५॥

पश्येति। सन्ध्ययाऽत्र सायंसमये चन्द्रस्य नायिका रात्रिः तत्सम्बन्धिनः प्रतीहारस्य दौवारिकस्य पदेऽधिकारमास्पदमपि पश्य विलोकय। किम्भूतया। द्रुतं शीघ्रं अस्तङ्गतस्य सूर्यस्य निर्य्यन्ती वहिर्निर्गच्छन्ती करावली किरणपरम्परैव हैङ्गुलं

निषिध्यमानाह्नि सन्ध्ययाऽपि
रात्रिप्रतीहारपदे ऽधिकारं॥ ६॥
महानटः किं नु स भानुरागे
सन्ध्याय सन्ध्यां कुनटीमपीशां।

हिङ्गुलाख्यं रञ्जकरक्तद्रव्यविशेषेण रक्तं वेत्रं दण्डविशेषोऽस्यास्तया। किम्भूते पदे। निषिध्यमानं निवार्य्यमाणप्रवेशं अहो दिनं यस्मिन्। स्त्रिया हि दौवारिकी स्त्र्येव युक्तेति सन्ध्यैव रात्रेर्दौवारिकी जातेत्यर्थः। सूर्य्योऽस्तमितो दिनं गतं रात्रिरागतेति सायंसन्ध्यया ज्ञाप्यत इति भावः। दौवारिक्यपि हैङ्गुलवेत्रपाणिः सती प्रविशन्तं कमपि प्रतिषेधयति। तिर्य्यक्करावलीति पाठे तिर्यक्प्रसारिणश्च ते कराश्चेति। अह्नीत्यत्र तत्पुरुषत्वाभावादजभावः॥ ६॥

इदानीं सन्ध्यानक्षत्रयोगं वर्णयति। महानट इति। अङ्ग हे भैमि महान् सन्ध्योपासनादिविषयेऽतिप्रशस्तस्तयाऽटति गच्छतीत्येवम्भूतः कालः स प्रकृतः सायन्तनो, यद्वा महान् परमेश्वरो नटो नर्त्तको यस्मिन्, सन्ध्याकाले हि ईश्वरो नृत्यति स प्रकृतः सायंसन्ध्यासमयः। भानोः सूर्य्यस्य रागे लौहित्ये सति अस्तमयानन्तरं सूर्य्यस्य रागमात्रेऽवशिष्टे सति सन्ध्यां सन्ध्याकान्तिं किञ्चित् पीतरक्तवर्णत्वात् कुनटीं, नेपाली कुनटी गोलेत्याद्यभिधानान्मनःशिलारूपां, तथा ईशामपि स्वकालस्वामिनीं वा अथ पितृप्रसूरूपब्रह्मत्वाद्देवतारूपां, अथ च मस्ट-

तनोति तन्वा विय्नताऽपि तार-
श्रेणिस्रजा साम्प्रतमङ्गहारं॥ ७॥

द्धिमतीं सन्ध्याय सम्यग्विचिन्त्य साम्प्रतमिदानीं तन्वा किञ्चि-
दृद्धतया सन्ध्यारागतिरोहितकान्तितया वा कृशया किञ्चि-
दृश्यया। तथा वियताऽपि गगनरूपया लक्षणया याव... नं
विस्तीर्णया च। यद्वा आभासमस्येन व्याप्तं वियद्यया गगन... प-
न्या च तारश्रेण्या नक्षत्रपरम्परारूपया स्रजा पुष्पा...मालया
हारं तनोति विरचयति किं। यद्वा ताराणां शुद्धमौक्ति-
कानां श्रेणिर्यच तादृश्या ग्रथितमौक्तिकमालया हारविर-
चनं युक्तमिति सन्ध्याकालः सन्ध्यामेवंविधां सञ्चिन्त्य नक्षत्रपर-
म्परामेव विरचयति किमित्यर्थः। सन्ध्यारागः कियानवशि-
ष्टोऽस्ति मुक्तातुल्यानि नक्षत्राणि च किञ्चिद्दृश्यानि जाता-
नीति भावः। तथा तारश्रेणिस्रजोपलक्षितेन तद्युक्तेन वियता
गगनेनैव हारं तनोतीति वा। सन्ध्यामेवंविधां विज्ञाय तूष्णी-
भूत, इति न किन्त्वौचित्यादिशिष्टया तारश्रेणिस्रजा हारमपि
विचरयतीत्यर्थ इति वा अपिशब्दार्थः। अथ च स प्रसिद्धो
महानटस्ताण्डवनृत्तकर्त्ता शिवः भानोः सूर्य्यस्य रागे सति
अस्तमितार्द्धे सूर्य्ये सतीति यावत्। तच सन्ध्यासमये मनःशि-
लातुल्यवर्णां अचिरस्थायित्वात् कुत्सितनर्तकीरूपां वा ईशां देवीं
सन्ध्याय सम्यग् ध्यात्वा सायं सन्ध्यावन्दनं कृत्वाऽष्टमूर्त्तिषु मध्ये
तारापरम्परैव माला यस्यां तया गगनरूपयाऽपि अमूर्त्तयाऽपि

कृत्वा इदानीं सन्ध्यावन्दनाद्युक्तं शृङ्गारं मुखकरपार्श्वीयाङ्गानां विक्षेपं करोति किमिति वितर्कः। अमूर्त्तस्याङ्गहारकरणं विचित्रमिति विरोधार्थोऽपिशब्दः। न केवलं चन्द्रसूर्य्यभोगादिभूषितयैव तन्वाऽङ्गहारं करोति किन्तु वियताऽपि तन्वेति समुच्चयार्थो वा। ईश्वरोऽपि सायं समये नृत्यति। भानुरागे मनःशिलातुल्यवर्णां सन्ध्यामपीशां सहचरीं पार्व्वतीं विचिन्त्य विशिष्टया वियद्रूपयाऽपि तन्वाऽङ्गहारं तनोति। पार्व्वतीसमीपेऽपीश्वरो नृत्यति। अथ च महानतिप्रवीणो नटः कुत्सितां नटीं नृत्तेऽनतिचतुरामपि सन्ध्यां वयःसन्धौ वर्त्तमानां तरुणीं रसभावसन्धौ वर्त्तमानां वा रसभावज्ञां। अत एव सभायां अनुरागे ईशां सन्ध्यानुरागजनने समर्थां सञ्चिन्त्य वियत्तुल्ययाऽतिविशालया शुद्धमौक्तिकपरम्पराकूपया मालयोपलक्षितया तन्वा अङ्गहारं तनोति तदसाम्प्रतं किन्तु रसभावादिजनयन्त्या तया सभ्यानुरागे समुपपादितेऽपि नृत्तकर्म्मकौशलेनापि सभ्यानुरागार्थं स्वयमङ्गहारं तनोतीति युक्तमेवेत्यर्थः। अथ च महान्नर्त्तको वयःसन्धौ रसादिसन्धौ वा वर्त्तमानां तथा समृद्धिमतीमपि स्त्रियं कुत्सितां नटीं नृत्तानभिज्ञां ज्ञात्वा सभानुरागे निमित्ते विशिष्टया तन्वा स्वयमङ्गहारं तनोति तदसाम्प्रतं किं नु अपि तु तस्या नृत्तकौशलाभावान्नृत्तेन सभानुरञ्जने सामर्थ्याभावात् सभानुरञ्जनार्थं स्वयमेव निपुणं नृत्यतीति युक्तमेवेत्यर्थः। अथ वा अन्योऽपि महानतिसमृद्धो अटति सर्व्वत्र गच्छति तादृशोऽतिचञ्चलोऽतिप्रसिद्धो

भूषास्थिदाम्नस्त्रुटितस्य नाट्यात्
पश्योडुकोटीकपटं वहद्भिः।
दिङ्मण्डलं मण्डयतीव खण्डैः
सायं नटस्तारकराट्किरीटः॥ ८॥

नटः कुनटीमपि नृत्तविद्यायामपि मया कान्त्या कलाऽपि ... ऽनुरागस्तद्विषये ईशां सौन्दर्यातिशयेनैव रागमुत्पादय ... तया शैशवतारुण्ययोः सन्धौ वर्त्तमानां प्रादुर्भूतयौवनां र... वसन्धिस्थत्वाद्रसभावज्ञां वा सञ्चिन्न कायकान्त्याऽनुरा... ति कुनटीमपि तरुणीं रसभावज्ञां वा तथेशां सम्पन्नाञ्च ... न्त्य तन्वा तदीयशरीरस्यातिविशिष्टतया शुद्धमौक्तिकमाल... हारं विरचयति तत्रानुरक्तः सन् तस्यै मुक्ताहारं वितरतीत्यर्थः। एवमन्या अपि योजनाः सुधियोहनीयाः। सभानुरागैः सन्ध्या-येति पाठो बहुपु...रस्त्वकं घदृश्यत्वादुपेक्ष्यः। अटः पचाद्यच्। सन्ध्या दिगादित्वाद्यत्। तारशब्दस्य नक्षत्रकनीनिकाभिधा-यित्वं दशमसर्ग एवोक्तं॥ ७॥

भूषेति। हे भैमि तारकराट् चन्द्रः किरीटे यस्य स शम्भुः सायं नटति सायं नटनर्त्तकः सन् उद्धतात् नाट्यात् नृत्ताद्धेतो-स्त्रुटितस्य भूषास्थिदाम्नो भूषणास्थिमालाया उच्छलितैः खण्डैः शकलैः तैरेव उडुकोटीकपटं कोटिसङ्ख्यानक्षत्रव्याजं वहद्भिर्धा-रयद्भिरिह सायं समये दिङ्मण्डलं मण्डयति पश्य। एतानि नक्षत्राणि न किन्तु ताण्डवत्रुटितास्थिमालोच्छलच्छकलान्येव

कालः किरातः स्फुटपद्मकस्य
वधं व्यधाद्यस्य दिनद्विपस्य ।
तस्यैव सन्ध्या रुचिराऽस्रधारा
ताराश्च कुम्भस्थलमौक्तिकानि ॥ ९ ॥
सन्ध्यासरागः ककुभो विभागः
शिवाविवाहे विभुनाऽयमेव ।

दिक्षु शोभन्त इत्यर्थः । अन्योऽपि चन्द्रतुल्यकिरीटो नटो नृत्यंस्त्रुटितहारखण्डैस्त्रीवृन्दं मण्डयति । मण्डयतीवेति पाठे उत्प्रेक्षा ॥ ८ ॥

काल इति । हे प्रिये कालः सन्ध्यासमय एव किरातो ऽथ च कृष्णवर्णो हिंसकत्वान्मृत्युरूपो वा कालो गिरिमध्यारण्यसञ्चारी शवरः स्फुटानि विकसितानि पद्मानि यस्मिन्, यद्वा विकसितकमलं कं जलं यस्मिन्, अथ च प्रकटीभूतशुण्डदण्डाग्रे प्रकाशमानं पद्मकं रक्तबिन्दुवृन्दं यस्मिन् तादृशस्य दिनरूपस्य द्विपस्य वधं व्यधादकरोत् । तस्यैवेह तस्य करिणो रुचिरा रम्या सन्ध्याऽस्रधारा रुधिरधारा । ताराश्च नक्षत्राणि विदारिततदीयकुम्भस्थलमौक्तिकानि, सन्ध्यारागो रक्तधारा ताराश्च स्थूलमुक्ता इव शोभन्त इत्यर्थः । स्फुटपद्मकस्येति बहुव्रीहौ कप् ॥ ९ ॥

सन्ध्येति । विभुना प्रभुणा हरेण पूर्वं शिवायाः पार्वत्याः विवाहावसरे सन्ध्यया सरागो रक्तवर्णोऽयमेव ककुभः पश्चि-

दिग्वाससा पूर्व्वमवैमि पुष्प-
सिन्दूरिकापर्व्वणि पर्य्यधायि ॥ १० ॥
सतीमुमामुद्वहता च पुष्प-
सिन्दूरिकार्थं वसने सुनेत्रे।

माशाया विभागः प्रदेशः पुष्पवर्णयुक्ता सिन्दूरिका रक्तवस्त्रं तत्सम्बन्धिनि तद्योगात् पुष्पसिन्दूरिकाख्ये पर्व्वण्युत्सवे पर्य्यधायि परिहितः। यतो दिग्वस्त्रमेव वासो यस्य तेन रक्तवस्त्रपरिधानावसरेऽपि दिग्वसनादौचित्या रक्तदिग्भाग एव परिहित इत्यवैमि शङ्के। विवाहस्य चतुर्थे दिने प्रथमदिनपरिहितानि वस्त्राणि प्रक्षालनार्थं परित्यज्य पुष्पसिन्दूरिकाख्यपर्व्वणि कौसुम्भादिरक्तवस्त्राणि बधूवरेण परिधीयन्त इति वृद्धाचारः। तत्रेशस्य दिग्वसनत्वाद्रक्तपश्चिमभाग एवानेन परिहित इत्यर्थः। वर्णकभूतपुष्पस्थाने ताराः सिन्दूरिकास्थाने सन्ध्यासरागः पश्चिमदिग्भाग इति भावः॥ १० ॥

प्रातःसायंसन्ध्ययोः प्राचीप्रतीच्योर्द्वयोरपि तुल्यवर्णत्वात् सायंसन्ध्यारक्तपश्चिमदिश एव पुष्पसिन्दूरिकात्वं कथं वर्ण्यत इत्याक्षेपे तस्य परिहारार्थं प्राच्या अपि तद्भावमाह। सतीमिति। हे सुनेत्रे सतीं दाक्षायणीमुमां पार्व्वतीं च उद्वहता परिणयता दिग्वाससा हरेण पूर्व्वोक्तपुष्पसिन्दूरिकार्थं द्विसन्ध्योसभि द्वे अपि प्रातःसायंसन्ध्ये लक्षीकृत्य द्वे प्राचीप्रतीच्यौ दिशावेव रागेण रक्तवर्णेन शोभा ययोस्ते रक्तवर्णेन शोभेते

दिशौ द्विसन्ध्यीमभि रागशोभे
दिग्वाससोभे किमलम्भिपातां ॥ ११ ॥
आदाय दण्डं सकलासु दिक्षु
योऽयं परिभ्राम्यति भानुभिक्षुः।

इति वा। तादृशे रक्ते उभे द्वे वसने ऽलम्भिपातां प्राप्ते किं। विवाहद्वये सन्ध्याद्वयरक्तदिग्द्वयमेव दिग्वसनत्वाद् रक्तवस्त्रद्वयं शिवेन लब्धमित्यहं मन्य इत्यर्थः। शिवेन द्वे दिशावेव वस्त्रे द्वे सन्ध्ये लक्षीकृत्य रागेण रञ्जकद्रव्येण कृत्वा ये शोभे कर्मभूते ते प्रापिते किं। विवाहे वस्त्रं रञ्जनाय कस्यचित् करे समर्प्यते तस्माच्छिवेन दिग्द्वयरूपे मम वस्त्रे भवतीभ्यां रक्तशोभे प्रापणीये इति सन्ध्याद्वयं आज्ञप्तं स दिग्द्वयं रक्तशोभं चकारेत्यर्थ इति वा। सुनेत्रीति पाठे संयोगोपधादिति (पा० ४।१।६३) निषेधात् ङीष् चिन्त्यः। द्विसन्ध्यी समाहारे द्विगोरेकत्वे आबन्तो वेति (पा० २।४।३०।वा० ४) स्त्रीत्वे च द्विगोरिति (पा० ४।१।२१) ङीपि सन्ध्याशब्दस्य तद्धितान्तपदत्वाद्धलस्तद्धितस्येति (पा० ६।४।१५०) यलोपः, अभिरभागे इत्यभेः (पा० १।४।९१) कर्मप्रवचनीयत्वात् तद्योगे द्वितीया। गत्यर्थत्वादणौ कर्त्तुर्णौ कर्मत्वं ॥ ११ ॥

आदायेति। योऽयं भानुरेव भिक्षुः परिव्राट् दण्डं पारिपार्श्विकमेव वैणवयष्टिमादाय सकलासु दिक्षु परिभ्राम्यति सोऽयं तापसः परिव्राट् सायङ्काले अब्धौ निमज्जन् पाताल

अब्धौ निमज्जन्निव तापसोऽयं
सन्ध्याभ्रकाषायमधत्त सायं ॥ १२ ॥
अस्ताचलेऽस्मिन्निकषोपलाभे
सन्ध्याकषोल्लेखपरीक्षितो यः ।
विक्रीय तं हेलिहिरण्यपिण्डं
तारावराटानियमादित द्यौः ॥ १३ ॥

प्रविशन्नथ च बहुजले जलाशये स्नानं कुर्व्वन् सन्ध्यायामभ्रं गगनं तदेव काषायं रक्तवस्त्रमधत्तेव, उपरि स्वस्योर्द्धभागः अथ चोच्चतटस्योपरि दण्डस्योपरि वा निजमस्तकोपरि वा धृत वानिव। एवं यतिरपि बहुकालावस्थानस्य निषिद्धत्वादुत्कल-चणः सन् परिभ्रमन् काषायं वस्त्रं धारयति। काषाया इव सन्ध्या शोभत इत्यर्थः। माठरः पिङ्गलो दण्डः, भिक्षुः परि-व्राट् कर्म्मन्दीति चामरः। काषायं तेन रक्तं (पा० ४।२।१) इत्यण्॥ १२ ॥

अस्तेति। यः सूर्य्यः अस्मिन् प्रतीच्यां वर्त्तमाने निकषोप-लाभे सुवर्णपरीक्षापाषाणतुल्येऽस्ताचले सन्ध्याराग एव कषो-ल्लेखः घर्षणोल्लेखस्तेन परीक्षित इयं द्यौस्तं हेलिं सूर्य्यमेव हिर-ण्यपिण्डं विक्रीय विनिमयेन कस्मैचिद्दत्वा तारारूपान् वराट-कान् कपर्द्दकान् आदित जग्राह। उत्तमं सुवर्णं रक्तपीतं भवति तथा च रक्तपीतसुवर्णसूर्य्यगोलकस्य निकषपरीक्षितसुवर्णरेखेव सन्ध्या दृश्यते। तारास्तु वराटका इव दृश्यन्त इत्यर्थः।

पचेलिमं दाडिममर्कबिम्ब-
मुत्तार्य्य सन्ध्या त्वगिवोज्झिताऽस्य।
तारामयं बीजभुजाऽदसीयं
कालेन निष्ठ्यूतमिवास्थियूथं ॥ १४ ॥

द्यौरिति लोकव्यवहारानभिज्ञत्वद्योतनार्थं स्त्रीलिङ्गनिर्देशः । स्त्री हि सुवर्णं दत्त्वा मूर्खतया वराटकान् गृह्णाति धूर्त्तेन वञ्च्यते च । वराटकस्य व्यवहारे देशे सुवर्णमपि दत्त्वा वराट एव गृह्यते ॥ १३ ॥

पचेलिममिति। दाडिमबीजभुजा कालेन रक्तमर्कबिम्बमेव पचेलिमं तरोरुपर्य्येव स्वयं पक्वं दाडिमफलमुत्तार्य्य गगनतरोस्त्रोटयित्वा बीजग्रहणार्थं भित्त्वा वा सन्ध्यात्वगिव अस्य दाडिमस्य पक्वत्वाद्रक्तकान्तिरेवोज्झिता परित्यक्ता, तद्बीजभक्षणार्थमुपरितनबीजकोशवत् सन्ध्या पृथक् कृता। तथा बीजभक्षणानन्तरं तारमयं ताराह्रपं अदसीयममुष्य दाडिमस्य अमीषां बीजानां वा सम्बन्धि अस्थ्नां बीजमध्यस्थश्वेतकणानां यूथं वृन्दं निष्ठ्यूतमिवोद्गीर्णमिव, बीजानि भक्षयित्वा गृहीतं रसमन्तर्गतश्वेतकणावृन्दं पुनः फूत्कृतमिव। न हि कालादृते: सूर्य्यदाडिमं भक्षितुं समर्थः। अन्योऽपि दाडिममुत्तार्य्य तत्त्वचं परित्यज्य बीजान्याखाद्य गृहीतरसान् बीजकणान् फूत्कृत्य त्यजति ॥ १४ ॥

तारानतिर्वीजमिवादमाद-
मियं निरष्ठीवि यदस्थियूथं ।
तन्निष्कुलीकृत्य रविं त्वगेषा
सन्ध्योज्झिता पक्किमदाडिमं वा ॥ १५ ॥
सन्ध्यावशेषे कृतताण्डवस्य
चण्डीपतेर्यत्पतनाभिघातात् ।

तारेति । सामर्थ्यात् कालेन कार्त्रा रविमेव तत् पक्किमं पचेलिमं दाडिमं निष्कुलीकृत्य निर्गतवीजकुलं कृत्वा वीजरूपं सारं गृहीत्वा तदीया त्वगेवैषा सन्ध्या उज्झिता, वाशब्दः सम्भावनायामुज्झिता किमित्यर्थः । तत्किमित्याशङ्क्याह । वीजानि आदमादं भक्षयित्वा अस्य सूर्य्यरूपस्य पक्कदाडिमस्य संबन्धि अस्थियूथमिव इयं तारानतिः निरष्ठीवि निष्ठ्यूता । जग्ध्वा-जग्ध्वा इति आदमादं अदेराभीक्ष्ण्येन द्विर्वचनञ्च । निरष्ठीवि कर्म्मणि चिण् निष्कुलीकृत्य निष्कुलान्निष्कोषणे (पा० ५।४।६२) इति डाच् । क्षेपकोऽयं श्लोकः ॥ १५ ॥

सन्ध्येति । हे प्रिये सन्ध्यावशेषे सन्ध्यावन्दनान्ते कृतं ताण्डवं नृत्यं येन तस्य चण्डीपतेः पदोश्चरणयोर्दृढयत्नेनाभिघाताद्धेतोः उत्पतयालुभिरुत्पतनशीलैरुच्छलितैः कैलासशैलसम्बन्धिस्फटिकात्मनां खण्डैः शकलैः द्यौरमण्डि अलङ्कृता यस्य, कैलासस्फटिकखण्डा एव गगने तारारूपेण शोभन्ते ।

कैलासशैलस्फटिकाश्मखण्डै-
रमण्डि पश्योत्पतयालुभिर्द्योः ॥ १६ ॥

इत्थं क्रिया वर्णनजन्मनेव
सन्ध्यामपक्रान्तवतीं प्रतीत्य।
तारातमोदन्तुरमन्तरिक्षं
निरीक्षमाणः स पुनर्बभाषे ॥ १७ ॥

रामेषुमर्मव्रणनार्त्तिवेगा-
द्रत्नाकरः प्रागयमुत्पपात।

उत्पतयालुभिः स्पृहि गृहीत्यालुच् (पा० ३।२।१५८) ॥ १६ ॥

इत्थमिति। स नलः पुनर्भैमीं बभाषे। किम्भूतः। इत्थमुक्त-प्रकारेण वर्णनजन्मना स्तुतिजातया क्रियेव अपक्रान्तवतीं नि-र्गतां सन्ध्यां प्रतीत्य नित्यं निश्चित्य अन्तरिक्षं गगनं तारात-मोभ्यां दन्तुरितं मिश्रितं निरीक्षमाणः। अन्याऽप्युत्तमा निज-वर्णनजातलज्जयाऽपक्रामति ॥ १७ ॥

रामेति। भोः हे कामशरासनभ्रूः कामशरासनमेव भ्रुवौ यस्याः भ्रूदर्शनमात्रेण कामोदयकारिणि भैमि रामस्य राघ-वस्य जामदग्न्यस्य वा इषुणा मर्मणो व्रणमाछेदमाछेतोरुत्पन्ना आर्त्तिः पीडा तस्या वेगादाधिक्याद्धेतोर्निजस्थाने स्थातुमशक्तः सन् भीत्या रत्नाकर एवायं प्राक् तस्मिन्नवसरे उत्पपात ऊर्द्ध-मागात्, नेदं नभो यः पूर्वमुत्पपात सः श्यामजलः स्फुटरत्नगर्भो रत्नाकर एवायं न त्वेतन्नभ इत्यर्थः। कीदृशः। याषाणां अल-

ग्राहौघकिर्मीरितमीनकम्बु
नभो न भोः कामशरासनभूः ॥ १८ ॥
मोहाय देवाप्सरसां विमुक्ता-
स्ताराः शराः पुष्पशरेण शङ्के ।

चारिणां जन्तूनामोघैः किर्मीरिता मिश्रिता तत्सहिता मीनाः कम्बवः शङ्खाश्च यस्मिन् । नभस्तु ग्रहसम्बन्धि ओघः शुक्रवृह-स्पत्यादितारायहसमूहो ध्रुवमण्डलग्रहसम्बन्धी समूहो वा, तेन मिश्रितो मीनाख्यो राशिः कम्बुः शङ्खाकारविशाखानक्षत्रञ्च यस्मिन् । रघुनाथेन किल सेतुबन्धसमये शरेण समुद्रो भेत्तुमा-रब्ध इति तावन्मात्रेण पीडातिशयात्पतित इत्युच्यते । परशु-रामेणापि निजवसत्यर्थं समुद्रो बाणेन परास्तः सन्नुत्पतितः, समुद्रजलस्यैवायं कालिमा न तु गगनस्येत्यर्थः । समुद्रस्या-धोदेशे स्थितानि रत्नग्राहादीनि अधस्थितेन जलेन सुखेन द्रष्टुं शक्यन्ते । मकरकर्कटादयः साक्षान्मीनादय एव । न तु रा-श्यादिभूताः शिष्टाश्च ताराः समुद्रमौक्तिकान्येव न तु तारा इत्यादि ज्ञातव्यं । शरासनभूरित्युवङ्स्थानत्वान्नदीत्वाभावाद्ध्र-स्वत्वाभावः । ह्रस्वपाटस्तु सहैकवंशप्रभवन्निति वत् समर्थनीयः । यद्वा शिष्टकविप्रयोगदर्शनाद् ज्ञातव्यं ॥ १८ ॥

मोहायेति । हे भैमि पुष्पशरेण कामेण देवानामप्सरसाञ्च मोहायान्योन्यमत्यन्तानुरागसञ्जननार्थं देवादीनामुपरि वर्त्त-मानत्वादिमुक्ता ऊर्द्धं क्षिप्ताः, शुभ्रपुष्परूपाः शरा एव तारा

पञ्चास्यवत् पञ्चशरस्य मौर्वि
प्रपञ्चवाची खलु पञ्चशब्दः ॥ १९ ॥
नभोनदीकूलकुलायचक्री-
कुलस्य नक्तं विरहाकुलस्य।

इत्यहं शङ्के। ननु कामस्य पुष्पशरत्वेऽपि पञ्चबाणत्वात् ताराणां बहुतरत्वात् कथं कामबाणत्वमित्याशङ्क्य समर्थयते। खलु यस्मात् पञ्चशरस्य नाम्नि पूर्वपदत्वेन वर्त्तमानः पञ्चशब्दः प्रपञ्चवाची प्रकर्षः पञ्चो विस्तारः तद्वाचकः, न तु सङ्ख्यावाचकः, पचि विस्तारवचने इति स्वार्थणिजन्ताद्व्रातोः पचाद्यचि पञ्चयन्ति विस्तृता भवन्ति पञ्चाः शरा यस्येति विग्रहो न तु पञ्चसङ्ख्याकाः शरा यस्येति, तस्मात् पुष्पबाणत्वं ताराणां युक्तमेवेत्यर्थः। कस्येव। पञ्चास्यवत् "सिंहो मृगेन्द्रः पञ्चास्यः" इति सिंहाभिधायिनि पञ्चास्यशब्दे सिंहस्य पञ्चसङ्ख्यमुखत्वाभावात् पञ्चयति विस्तृतं भवति पञ्चं विस्तृतमास्यं यस्यासौ पञ्चास्य इति व्युत्पत्त्या पञ्चशब्दो यथा विस्तारवाची तथेति भावः। प्रपञ्चो विस्तार इति हलायुधः ॥ १९ ॥

नभ इति। नक्तं विरहेणाकुलस्य पीडितस्य नभोनद्या मन्दाकिन्याः कूलमेव कुलायः स्थानं यस्य तस्य चक्रीकुलस्य चक्रवाकीसमूहस्य दृग्भिर्नयनैरपामश्रुजलानां पृषन्ति विन्दवः सन्ति त एव तारका अधःस्थितैर्जनैर्दृश्यन्ते। तथा तासां ताराणां सङ्क्रमणानि पुष्पचयवशाद्भूमिं प्रत्यागमनानि गलदा-

दृशोरपां सन्ति पृषन्ति ताराः
पतन्ति तत्सङ्क्रमणानि धाराः ॥ २० ॥
अमूनि मन्ये सुरनिर्झरिण्या
यादांसि गोधा मकरः कुलीरः ।
तत्पूरखेलत्सुरभीतिदूर-
मग्नान्यधः स्पष्टमितः प्रतीमः ॥ २१ ॥

ध्यजस्रामां धारा एव पतन्ति। दृशोः सन्ति चिरस्थितिम याणि वाष्पपृषन्ति तानि तारा इति वा। तत्सङ्क्रमणानि ि तताराप्रतिविम्बभूतानि तत्तुल्यानि पतन्त्यधःपातीनि य पृषन्ति तानि धारा अश्रुप्रवाहाः तासां ताराणां सङ्क्रमण वीथयो मेघादिसङ्क्रान्तयो वा। धारा अश्रूणा प्रवाहा वा। स्त्रियो हि विरहमसहमाना रुदन्ति। पतन्तीति तिङ पृषदिशेषणं वा ॥ २० ॥

अमूनीति। हे प्रिये गोधाख्यास्तारा गोधा म राशि ब्बन्धिन्यस्तारा: मकरः कुलीरः कर्कटराशिस्तत्सम्बन्धिन्यस्त अमूनि प्रत्यक्षदृश्यानि अमरनिर्झरिण्याः मन्दाकिन्या याद जलजन्तव एवेत्यहं मन्ये। गोधा मत्स्याः कर्कटा अपि जले व उपरि च दृश्यन्ते तस्माद्देवनद्याया दांस्येवैतानीत्यर्थः। उपरिवर्त्तमानेन द्रष्टुं योग्या न त्वधःस्थितेनेत्यत आह त माकनद्याः पूरे प्रवाहे खेलन्तः क्रीडन्तः सुरास्तेभ्यः सका भीत्या दूरतलपर्य्यन्तमग्नानि, अत एव जलतलगामित्वाद

स्मरस्य कम्बुः किमयं चकास्ति
दिवि त्रिलोकीजयवादनीयः।
कस्यापरस्योडुमयैः प्रसूनै-
र्वादित्रसृष्टिर्घटते भटस्य॥ २२॥
किं योगिनीयं रजनी रतीशं
याऽजीजिवत् पद्ममसूमुचच्च।

भागे इतो भूदेशादपि स्पष्टं सुखेन जानीमः। भूभागे स्थिता अपि जलगामि गङ्गाधादियादांसि व्यक्तं जले पश्याम इत्यर्थः। गोधाकारं धृतमण्डलं, गोधा ज्येष्ठा वा॥ २१॥

स्मरस्येति। त्रिलोकीविजये वादनीयो वादनार्हः स्मरस्य सम्बन्धी अयं प्रत्यक्षदृश्यो विशाखानक्षत्ररूपः कम्बुः शङ्खः दिवि चकास्ति किं। उच्चतरदेशे वादितत्वाद्यं सर्व्वत्राकर्ण्यत इति गगने स्थापितो लोकत्रयविजयवादनार्हः कामस्यैव कम्बुः कि-मित्यर्थः। यस्मादपरस्य कस्य भटस्योडुमयैस्ताराकपैः प्रसूनैः कृत्वा वादित्रसृष्टिः वाद्यनिर्म्माणं घटते, स्मरस्यैव धनुषः पुष्प-रूपत्वदर्शनात् तदीयस्यैव वाद्यस्य पुष्परूपत्वसम्भावनायुक्तत्वात्। ताराकुसुमरूपः कामशङ्ख एवायं गगने शोभते न त्वन्यदीय इत्यर्थः॥ २२॥

किमिति। इयं रजनी योगिनी स्त्रीपुंसयोगवती, अथ च शाक्तमन्त्रसिद्धा मारणोच्चाटनाद्यभिज्ञा स्त्री किं। या रतीशं दिवा निर्जीवमिव वीजमन्त्रविधेरजीजिवत् सञ्जीवं चक्रे, पद्मम-

योगर्द्धिमस्या महतीमलग्न-
मिदं वदत्यम्बरचुम्बि कम्बु ॥ २३ ॥
प्रबोधकालेऽहनि बाधितानि
ताराः खपुष्पाणि निदर्शयन्ती।

मूमुहत् पद्मानि च समकोचयत्। रात्रौ च स्त्रीपुंसयोगे कामः उदीतो भवति पद्मानि च सङ्कुचन्ति। अलग्नं निराधारं अम्बरचुम्बि आकाशवासि तारामात्रात्मकत्वादलग्नमराशिभूतं वा इदं प्रत्यक्षरूपं कम्बु ताराख्यः शङ्खोऽस्या रात्रियोगिन्या महतीं योगर्द्धिं वदति, दिवा दर्शनाभावादिदानीं दृश्यमानः शङ्खो रात्रिर्जातेति कथयति। योगशक्तिं विना निराधारं वस्तु कथं स्थापयेत्। योगिन्यपि मृतमपि जीवयति किञ्च मोहयति मूर्च्छां प्रापति भ्रान्तं करोति वा, तस्माद्योगिनी किमित्युत्प्रेक्षा। कम्बुशब्दस्य नपुंसकत्वमप्यस्तीति पूर्वमेवोक्तं स्मर्त्तव्यं। अजीजिवदमूमुहदिति णौचङीत्युपधा ह्रस्वः ॥ २३ ॥

प्रबोधेति। हे प्रिये प्रबोधकाले जागरणसमयेऽथ च सम्यग्ज्ञानोत्पत्तिसमयेऽहनि दिवा बाधितानि सूर्य्यदीप्तिध्वस्तकान्तीनि ताराः नक्षत्ररूपाणि खपुष्पाणि गगनसम्बन्धीनि कुसुमानि नितरां दर्शयन्ती प्रकाशयन्ती, अथ च दृष्टान्तीकुर्व्वती शून्याध्वनि बौद्धाध्वनि शून्यादिदर्शने विषमयोगिनी काचित् प्रव्रजितेवेयं निशा स्फुटाभमतितरां दृष्टमपि प्रत्यक्षेण प्रतीयमानमपि स्थावरजङ्गमात्मकं सकलं जगन्मृषाऽसत्यमाह ब्रूते।

निशाऽऽह शून्याध्वनि योगिनीयं
मृषा जगद्दृष्टमपि स्फुटाभं ॥ २४ ॥
एणः स्मरेणाङ्कमयः सपत्री-
कृतो भवद्भ्रूयुगधन्वना यः।
मुखे तवेन्दौ लसता स तारा-
पुष्पाग्निबाणानुगतो गतोऽयं ॥ २५ ॥

बौद्धादिदर्शने हि ज्ञानस्यैव घटाद्याकारस्यानातिरिक्तं सर्वं मिथ्येति बोध्यते। योगिन्यपि प्रपञ्चो मिथ्येति दर्शयति तथेयमपि रात्रिरसन्त्यपि पुष्पतुल्यानि नक्षत्राणि निजयोगात् गगने दर्शयतीति भावः। निदर्शनं करोति वेति प्रतीयमानोत्प्रेक्षा ॥ २४ ॥

एण इति। हे भैमि तव मुखे एवेन्दावाह्लादकत्वादिगुणयोगाच्चन्द्रे लसता प्रकाशमानेन, तथा भवद्भ्रूयुगमेव धनुर्यस्य तेन स्मरेण तव मुखेन्दौ विमतो मृगवांश्चन्द्रत्वात् सम्प्रतिपन्नवदित्यनुमानप्रसिद्धो योऽङ्कमयः कलङ्करूप एणो मृगः सपत्रीकृतः मुखे, तत्स्वरूपदर्शनाज्जठरावस्थितपत्रस्यैव बाणस्यापरपार्श्वे निर्गमनं यथा भवति तथा व्यथितः, स एव मृगः तारापुष्पाग्निर्नक्षत्ररूपपुष्पपङ्क्तिसलक्षणो बाणस्तेनानुगतः सन् सहित एव पलाय्य गतोऽयं गगने दृश्यते किं। चन्द्रे मृगेन भाव्यं स चात्र नास्ति, सचापः कामस्य मुखे लसति, गगने च मृगशिरो नक्षत्रं मृगाख्यबाणाकारपुष्पतुल्यतारानुगतं दृश्यते,

लोकाश्रयो मण्डपमादिसृष्टि-
ब्रह्माण्डमाभात्यनुकाष्ठमस्य ।
स्वकान्तिरेणूत्करवान्ति सन्ति
घुणव्रणद्वारनिभानि भानि ॥ २६ ॥

तर्हि कामेन विध्यान्तर्गतपत्रपार्श्वबहिर्निर्गतबाणसहितो व्यथितः पलाय्य गतः स एणोऽयं मृगो दृश्यते किमिति प्र... नोत्प्रेक्षा । सपत्रनिष्पत्रादति व्यथन इति (पा० ५।४।६१) डाच् ॥ २५ ॥

लोकेति । हे भैमि ब्रह्माण्डं आदौ सर्व्वस्मादपि पूर्व्वं सृष्टिर्निर्म्माणं यस्य, अथ च चिरकालनिर्म्मितं पुराणं मण्डपमिति आभाति तत्र दिव शोभत इत्यर्थः । यतस्त्रयाणामपि लोकानामाश्रयः ब्रह्माण्डाधारत्वाज्जगतां मण्डपोऽपि लोकानामाश्रयः तच्छायानिवासित्वाल्लोकानामाश्रयनामत्वाच्च तस्य । अत एवास्य ब्रह्माण्डमण्डपस्याऽनुकाष्ठं दिशि दिशि एतत्सम्बन्धिनीषु सर्व्वासु दिक्षु, अथ चैतत्सम्बन्धीनि काष्ठानि दारूणि लक्षीकृत्य तेषु भानि नक्षत्राणि स्वकान्तिरूपस्य उत्खातरेणूत्करस्य सम्बन्धीनि वान्तिरुद्गारस्तद्वन्ति सन्ति घुणाख्यकीटनिर्म्मितो व्रणः छिद्रन्तस्य द्वारं मुखं तन्निभानि तत्तुल्यानि घुणोत्कीर्णदारुरजोयुक्तानि दारुच्छिद्रमुखानीव दृश्यन्त इत्यर्थः । अनाश्रयनामा मण्डपोऽप्यतिजीर्णो यदा भवति तदा तदीयकाष्ठेषु घुणाः पतन्ति घुणोत्कीर्णगलद्रजोयुक्तानि घुण-

शचीसपत्न्यां दिशि पश्य भैमि
शक्रेभदानद्रवनिर्झरस्य ।
पोस्पूयते वासरसेतुनाशा-
दुच्छृङ्खलः पूर इवान्धकारः ॥ २७ ॥
रामालिरोमावलिदिग्विगाहि
ध्वान्तायते वाहनमन्तकस्य ।

शतच्छिद्रमुखानि वृन्तानि च दृश्यन्ते तानीव भान्तीति भावः । मण्डपोऽस्त्री जनाश्रय इत्यमरः । अनुकाशं वीप्सायामव्ययीभावः ॥ २६ ॥

इदानीं सर्व्वदिग्व्यापितमोवर्णनं प्राच्यादिक्रमेणोपक्रमते । शचीति । हे भैमि अन्धकारः शच्याः सपत्नी दिक् प्राची तस्यां वासररूपस्य सेतोः सूर्य्यस्य प्रभामर्यादाया नाशादुच्छृङ्खलो निरर्गलः शक्रेभस्य दानद्रवो दानोदकं तस्य निर्झरप्रवाहस्तस्य श्यामः पूर इव पोस्पूयते भृशं प्रसरति प्राचीं प्राप्नोतीत्यर्थः । त्वं पश्य प्राच्यामेव ऐरावतदानजलप्रवाहपूरसम्भवः जलपूरोऽपि बन्धोपगमादप्रतिहतप्रसरः सन्नितरां प्रसरति । पुङ् सर्पण इत्यस्माद्भृशार्थे यङ् द्विर्वचनं ॥ २७ ॥

दक्षिणदिग्व्यापितमो वर्णयति । रामेति । श्रीरामस्यालिः सतुः सेतुबन्ध एव श्यामत्वाद्रोमावलिर्यस्यास्तस्या दक्षिणस्या दिशो विगाहि नितरां व्यापकं अन्तकस्य दिक्पतित्वाद्दक्षिणदिक्स्थं तद् वाहनं महिष एव ध्वान्तायते कृष्णत्वेनो

यद्वीक्ष्य दूरादिकविभ्यतः स्वा-
नश्वान् गृहीत्वाऽपहृतो विवस्वान्॥ २८॥
पक्वं महाकालफलं किलासीत्
प्रत्यग्गिरेः सानुनि भानुविम्बं।
भिन्नस्य तस्यैव दृषन्निपाता-
द्वीजानि जानामितमां तमांसि॥ २९॥

ऽन्धकार इवाचरति। विवस्वान् सूर्य्यः यद्यमवाहनं दूराद् वीक्ष्य सहजाश्वमहिषवैरस्मरणाद्विभ्यतः सभयान् स्वानश्वान् गृहीत्वाऽपहृतः पलायित इव। दक्षिणदिशि तिमिरं यममहिषवच्छोभत इत्यर्थः। अन्तकपदेन तद्वाहनस्य दारुणत्वं सूचितं, अत एव ततोऽप्यश्वानां भयं युक्तं। ध्वान्तायते उपमानादाचारे कर्त्तुः क्यङिति (पा०३।१।११) ङकारत्वात् तङ्। सेतुरालौ स्त्रियां पुमानित्यमरः॥ २८॥

प्रतीच्याव्यापितमो वर्णयति। पक्वमिति। भानुविम्बं प्रत्यग्गिरेः प्रतीच्यां वर्त्तमानस्यास्ताचलस्य सानुनि कालवशात् पक्वं महाकालस्यैन्द्रवारुण्याः फलमासीत् किलैवमहं मन्य इत्यर्थः। तथाऽहमतिपक्वत्वादतिश्लथत्वादुच्चतरदेशादधस्ताद् दृषदि शिलायां निपातात् तदभिघाताद्धेतोर्भिन्नस्य विदीर्णस्य तस्य भानुविम्बरूपस्य महाकालफलस्य कृष्णतमानि वीजान्येव तमांसीति जानामितमां नितरां मन्ये। पर्व्वतादिकठिनभूसमुद्भवं जम्बीरवर्त्तुलं पक्वं सदतिरिक्तकृष्णवीजं महाकालफलं गृहोप-

पत्युर्गिरीणामयशः सुमेरु-
प्रदक्षिणाह्वास्वदनादृतस्य ।
दिशस्तमश्चैत्ररथान्यनाम-
पत्रच्छटाया मृगनाभिशोभि ॥ ३० ॥
ऊर्द्धं धृतं व्योम यदुष्णरश्मे-
र्दिवा सहस्रेण करैरिवासीत् ।

सर्गनिवारणार्थं गृहद्वारे वृद्धैर्बध्यते । अस्तमयसमयस्थात् परिण-
तकालं रक्तं महतः कालस्य फलभूतस्य भानुबिम्बं महाकालफ-
लमिव । तमांसि विदीर्णस्य तस्य कृष्णतमानि बीजानीव प्रसर-
न्तीत्यर्थः । अन्यदिगपेक्षया प्रतीच्यां सायंसमये सूर्यसन्ध्यास-
म्बन्धिनः प्रकाशस्यासन्नत्वादल्पान्धकारसूचनार्थं तमसां बीज-
त्वेन निरूपणं ॥ २८ ॥

उदीचीव्यापितमो वर्णयति । पत्युरिति । चैत्ररथं कुबेर-
वनं तदेवान्यनाम यस्यास्तादृशी पत्रच्छटा पत्रवल्ली यस्याश्चैत्र-
रथाख्यवनरूपपत्रवल्लिकाया उत्तरस्या दिशो मृगनाभिः पत्र-
वल्लीरचनासाधनभूता कस्तूरी तद्वच्छोभते एवंशीलं कृष्णतमं
तमो गिरीणां पत्युर्हिमाचलस्यायश एव, यतः सुमेरोः प्रद-
क्षिणीकरणाह्वास्वता सूर्य्येणानादृतस्यानादृतस्य । हिमाद्रिर्य-
द्यपि गिरीणां पतिस्तथापि सूर्य्येणानादृतत्वाद्धीन एव ।
मेरुरेव महान् । अस्योद्यानं चैत्ररथमित्यमरः ॥ ३० ॥

ऊर्द्धदिग्व्यापितमो वर्णयति । ऊर्द्धमिति । तमालश्यामलं

पतत्तदेवांशुमता विनेदं
नेदिष्ठतामेति कुतस्तमिस्रं ॥ ३१ ॥
ऊर्द्धार्पितन्युब्जकटाहकल्पे
यद्व्योम्नि दीपेन दिनाधिपेन।

यद्व्योम दिवा सहस्ररश्मेः सहस्रसङ्ख्यैः करैः किरणैरथ च हस्तैरूर्द्धं दूरोच्चप्रदेशे धृतमिवासीत्, तन्नभ एवेदं तमालश्यामलं अंशुमता विना सायंसमये सूर्य्यविनाशाद्धारकेणानेन विनाऽधः-पतत् सत् नेदिष्ठतामतितमां नैकट्यमेति, तमिस्रं कुतः कस्मा-दकस्मादागतमपि तिमिरं नाम किमपि नास्ति, किन्तु निक-टीभवद्गगनमेव तमिस्रमित्यर्थः। पततद्व्योमैव तमिस्रं कृत्वा भूमौ निकटतामेति, न तु तदतिरिक्तं नभोऽस्तीति वा। अन्यदपि यत् कस्यचित् कराभ्यामूर्द्धं धार्य्यते तदभावेऽधः पतत्येव। नेदिष्ठतां अतिशयने इष्ठनि, अन्तिकबाढयोरिति (पा० ५।३।६३) नेदा-देशः। कुतः। पक्षे सार्व्वविभक्तिकस्तसिः ॥ ३१ ॥

अधोदिग्व्यापितमो वर्णयति। ऊर्द्धेति। सामर्थ्याद्दिवि ना ऊर्द्धं सूर्य्यदीपस्योपरिभागेऽर्पितो न्युब्जः कज्जलधारणार्थमधोमुखोऽतितमां महाकटाहः कर्परं तत्कल्पे तत्तुल्ये कृष्णतमे व्योम्नि अधिकरणे प्रकाशकारिणा कज्जलधारणार्थेन दिना-धिपेनैव दीपेन करणेन यत् कज्जलं न्यधापि न्यस्तं तत्कज्ज-लमेव तमो भूम्ना क्रमसञ्जातबाहुल्येन कृत्वा मिलत् युक्तं भवत् पतनाख्यकर्म्मकारणं गुरुत्वं यस्य तादृशं सत् भूमावस्खलत् किं

न्यधायि तद्भूममिलद्गुरुत्वं
भूमौ तमः कज्जलमस्खलत् किं ॥ ३२ ॥
ध्वान्तैणनाभ्या शितिनाऽम्बरेण
दिशः शरैः सूनशरस्य तारैः ।

अतिभारेण पतितं किं। गुरुत्वाद्धि पतनं युक्तं। तत् कज्जलमेव भूमौ पतितं किं, अपि तु तमो नाम न किञ्चिदित्यर्थ इति वा। कज्जलमपि कर्परे धृतं क्रमेण बहु भवद् गुरुत्वादधः पतति। कटाहः कर्परे तथैति निघण्टुः। ईषदसमाप्तौ कल्पप्प्रत्ययः ॥ ३२ ॥

ध्वान्तेति। ध्वान्तैनैवैणनाभ्या कस्तूर्य्या तथा शितिना नीलेनाम्बरेण गगनेनाथ च वस्त्रेण। यद्वा। ध्वान्तैणनाभ्या कृत्वा नीलेन गगनेनोपलक्षितास्तथा निशित्वात् पुष्पतुल्यरूपत्वाच्चोज्ज्वलैस्तारैर्नक्षत्रैरेव सूनशरस्य कामस्य शरैरुपलक्षिताः, अथ च तारैरुज्ज्वलैः पुष्पैरुपलक्षितास्तथा प्रकाशाभावान्नान्दातैर्मन्दनयनैर्नरैर्लक्ष्या लक्षणीयाः, अथ च मन्दाक्षस्य लज्जाया विषयभूताः सलज्जा अत एवाभिसारिकाभाः स्वैरिणीतुल्याः दिशः, अनिन्दौ चन्द्ररहितायां अनुदितचन्द्रत्वाच्छायायां निशि समायान्ति प्रत्यागच्छन्ति तस्मात् सपत्नीभ्रान्त्या त्वं सेर्ष्या भव। अभिसारिका अपि शुभ्रायां रात्रौ शुभ्रवस्त्राद्याभरणाः, कृष्णायाञ्च रात्रौ कृष्णवस्त्राद्याभरणाः समायान्तीति। ता अपि कस्तूरीकृताङ्गरागा नीलवसनाः प्रच्छन्नधृतपुष्पाः

मन्दाक्षलक्ष्यार्णनिशि मामनिन्दौ
सेर्ष्या भवायान्त्यभिसारिकाभाः ॥ ३३ ॥
भास्वन्मयीं मीलयतो दृशं द्राङ्
मिथोमिलद्द्व्यञ्चलमादिपुंसः ।
आचक्ष्महे तन्वि तमांसि पक्ष्म
श्यामत्वलक्ष्मीविजितेन्दुलक्ष्म ॥ ३४ ॥

कामबाणपीडिताः सलज्जाः सत्यः कामुकं प्रति समायान्ति तदीयनायिकास्तु सेर्ष्या भवन्ति, तथा दिशोऽपीत्यर्थः । सर्वा अपि दिश एकत्र मिलिता इति प्रतीतिः । तिर्य्यग्व्यापि[illegible] वर्णितमनेन । कान्तार्थिनी तु या याति सङ्केतं साऽभि[illegible] केत्यमरः । मन्दाक्षमन्दा इति पाठे मन्दनयनानामल[illegible] लक्ष्मोबाहुल्यात् । अथ च तमोबाहुल्यान्मन्दाक्षा अत ए[illegible] द-गमनाः, लज्जया वा मन्दगमना इत्यर्थः । तारशब्द पूर्व-वत् ॥ ३३ ॥

भास्वदिति । हे तन्वि कृशाङ्गि भास्वन्मयीं [illegible]रूपां द-क्षिणां दृशमस्तमयव्याजेन द्राक् शीघ्रं मीलयतः सङ्कोचयतः आदिपुंसः श्रीविष्णोर्मिथोऽन्योन्यं मिलन्तौ द्वावप्यञ्चलावूर्ध्वाधः-पुटे यस्य निमीलनवशादन्योन्यसंलग्नपुटत्वान्निबिडरोमकं, अत एव श्यामत्वलक्ष्म्या विजितं नितरां पराभूतं इन्दुलक्ष्म येन ता-दृशं पक्ष्म नेत्रसम्बन्ध्यूर्ध्वाधःपुटे पुनर्घनीभूतरोमाण्येव तमांसि वयमाचक्ष्महे ब्रूमः, न तु ततोऽन्यानि तमांसीत्यर्थः । तिमिर-

विवस्वताऽनायिषतेव मिश्राः
स्वगोसहस्रेण समञ्जनानां।
गावोऽपि नेत्रापरनामधेया-
स्तेनेदमान्ध्यं खलु नान्धकारैः॥ ३५॥
ध्वान्तस्य वामोरु विचारणायां
वैशेषिकं चारु मतं मतं मे।

व्याप्तत्वात् किमपि न दृश्यत इति भावः। पश्येति आर्थैकवचनं॥ ३४॥

विवस्वतेति। विवस्वता नेत्रमित्यपरनामधेयं यासां ताश्चक्षुरूपा जनानां गावोऽपि स्वस्य गवां किरणानां सहस्रेण समं सह मिश्रा दिने निमीलिताः सत्यः अनायिषतेव नीता इव यस्मात् तेन खलु तेनैवेदमान्ध्यं प्रकाशाभावान्नेत्रापगमाच्च रूपाग्रहणं, नत्वन्धकारैः कृतेदमान्ध्यं, तमोवशात् किमपि न दृश्यत इति भावः। अन्येनापि गोपालेन स्वगोसहस्रेण मिश्रिताः परेषामपि गावो नीयन्त इति॥ ३५॥

ध्वान्तस्येति। हे वामोरु अतिसुन्दरोरु ध्वान्तस्य विचारणायां तमःस्वरूपनिरूपणे विषये वैशेषिकं मतं षट्पदार्थसाधर्म्यवैधर्म्यनिरूपणात्मकं काणाददर्शनं चारु सदुपपत्तिकं नत्वन्यदिति मे मतं सम्मतं। खलु यस्मात् कारणात् सम्प्रदायविदः तद्दर्शनं वैशेषिकं शास्त्रमौलूकमाहुर्वदन्ति। अत एव तमसस्तत्त्वनिरूपणाय अनारोपितस्वरूपनिरूपणाय चमं समर्थमुलू-

औलूकमाहुः खलु दर्शनं तत्
क्षमं तमस्तत्त्वनिरूपणाय ॥ ३६ ॥

कस्य घूकस्य सम्बन्धि, दृश्यते अनेनेति दर्शनं, चारु सदुपपत्तिकं न त्वन्यदिति मे मतं सम्मतं। खलु यस्मात् कारणात् तद्दर्शनं वैशेषिकं शास्त्रमौलूकमाहुर्वदन्ति। वैशेषिकमप्युलूकापर... काणादमुनिना प्रोक्तमित्यौलूकदर्शनं, ततश्चैतदपि तम... निरूपणाय समर्थमिति युक्तमित्यर्थ इति शब्दच्छलं। वैशे[षि]कदर्शने च किमिदं तमो भावरूपं, अभावरूपं वेति सन्देहे भासामभाव एव तम इति सूत्राविरोधेन व्योमशिवाचार्य्यादयः षट्पदार्थवैधर्म्येणाभावरूपमेव तमो न्यरूपयन्। श्रीधरश्च व्योम्न्यारोपितं भूरूपमेव तम इति निर्वर्ण्य भाभावे सत्येव तमःप्रतीतिर्भाभाव एव तम इत्युक्तमिति सूत्रविरोधं पर्य्यहार्षुः। एतदसहमानाः श्रीमदुदयनाचार्य्यादयः पुनर्भासामभावमेव तमस्त्वेन निरनैषुः, यस्मात्तदौलूकं दर्शनं वैशेषिकशास्त्रं तमस्तत्त्वनिरूपणाय क्षममाहुरिति वाऽन्वयः। महत्यन्धकारे सत्यपि घटादिपदार्थं को वा पश्यतीति ध्वान्तविचारणायां क्रियमाणायां घूकनेत्रमेव चारु सर्व्वेभ्योऽप्यधिकमिति मे मतं पुनः पुनः सम्मतमित्यर्थः। उलूकनेत्रमेव महान्धकारे घटादिविलोकयितुं समर्थं, अन्यदीयनेत्राणां त्वान्ध्यमेव जातमिति भावः। यतो वैशेषिकं घटादीन् विशेषान्वेति तादृशं महान्धकारे घूकनेत्रमेव घटादीन् भेदेन जानाति न त्वन्यदीयं नेत्रं, तस्मात् तदेव चार्व्विति। तत्र

म्लानिस्पृशः स्पर्शनिषेधभूमेः
सेयं त्रिशङ्कोरिव सम्पदस्य।
न किञ्चिदन्यत् प्रति कौशिकीये
दृशौ विहाय प्रियमातनोति ॥ ३७ ॥

वृद्धसमस्त्यर्थमुक्तराद्धं। उलूकवृत्त्या कणानत्तीति कणादस्यौलूक इति नाम तेन प्रोक्तत्वादौलूकं। वामं मध्ये प्रतीपे च द्रविणे चातिसुन्दरे, इति विश्वः। वामोरु संहितशफेत्यादिना (पा० ४।१।७०) ऊङ् नदीत्वाद्ध्रस्वः। औलूकं तेन प्रोक्तं (पा० ४।३।१०१) इत्यण् पक्षे तस्येदमिति च (पा० ४।३।१२०)॥ ३६ ॥

म्लानीति। म्लानिस्पृशः कालिमस्पर्शिनः श्यामस्याथ च वैडालत्वान्मालिन्ययुक्तस्य निःश्रीकस्य तथाऽभावरूपत्वात् स्पर्शगुणनिषेधस्य भूमेः स्थानस्याथ च चाण्डालत्वादेवास्पृश्यस्यास्य तमसः राज्ञस्त्रिशङ्कोरिव सेयं प्रसिद्धा प्रत्यक्षेण दृश्यमाना च सम्पद् बाहुल्येन स्वरूपलाभोऽथ च राज्यसमृद्धिः कौशिकीये औलूकेऽथ च वैश्वामित्रदृशौ नेत्रे विहायान्यत् किञ्चित्प्रति अपरं किमपि वस्तु लक्षीकृत्य प्रियं हितं नातनोति, किन्तु तदीय एव नेत्रे लक्षीकृत्य हितं करोति। अन्यत्प्रति किञ्चिदल्पमपि प्रियं नातनोतीति वा। अन्धकारे ह्युलूकनेत्र एव पदार्थान् पश्यत इति तत्सम्पत्तयोः प्रिया। त्रिशङ्कोस्तु सम्पद्विश्वामित्रस्यैव नेत्रयोः प्रिया नान्यस्य। एतदुपाख्यानं रामायणादौ प्रसिद्धं। कौशिकीये वृद्धाच्छः (पा० ४।२।११४) ॥ ३७ ॥

मूर्द्धाभिषिक्तः खलु यो ग्रहाणां
तद्भासमास्कन्दितऋक्षशोभाम् ।

मूर्द्धेति । यो रविर्नवानां ग्रहाणां मध्ये खलु निश्चितं मूर्द्धाभिषिक्तो राजा, उलूकानां लोकः सङ्घः तस्य रवेर्भया दीप्त्या समास्कन्दिता नितरां पराभूता ऋक्षशोभा नक्षत्रकान्तिर्यस्मिन् तत्तथा स्फुटं उपलब्धानि अन्यजनेन दृष्टानि घटादिस्वरूपाणि यस्मिंस्तादृशमपि दिवा कर्म्मभूतं दिनमन्धकारमेवावलोकत, अपश्यत् दिने तस्य दर्शनाशक्तेः दिनमन्धकारूपत्वेनैव मेन इत्यर्थः । तथा व्यक्तं लब्धानि घटादिरूप यत्र तादृशमन्धकारमेवालोकमपश्यद्दर्शनमकारिप्रकाशत्वेनैव मेने, अर्थाद्रात्राविtyर्थः । अन्धकारं स्फुटलब्धरूपमित्युक्त्या योज्यं तेन तामसा विपरीतदृश एव भवन्तीति व्यज्यते । एवंविधमन्धकारञ्च स्फुटमतिप्रसिद्धं शुक्लभास्वरात्मकं लब्धं रूपं येन तादृशमालोकमेवापश्यत् । कृष्णरूपमपि तमः शुक्लभास्वरालोकत्वेनापश्यदिति विरुद्धमित्यर्थः । अथ च यो ग्रहराजः सूर्य्यः, आक्रान्तनक्षत्रलक्ष्मीकान्तद्भासं सूर्य्यदीप्तिमेवायमुलूकलोको दिवा दिनेऽन्धकारमपश्यत्, रात्रौ चान्धकारमालोकमपश्यत्, दिने सूर्यालोक एव तमो रात्रौ च तम एव सूर्यालोक इति ददर्शेत्यर्थः । कीदृशीं तद्भासं कीदृगन्धकारं स्फुटमुपलब्धानि घटादिरूपाणि यस्यामन्यजनेन तादृशीं स्फुटं सञ्जातस्वरूपलाभञ्चेत्यन्धकारस्य नपुंसकत्वान्नपुंसकैकशेषैकवद्भावेन वा व्या-

दिवाऽन्धकारं स्फुटलक्ष्मरूप-
मालोकतालोकमनूकलोकः ॥ ३८ ॥
दिने मम द्वेषिणि कीदृगेषां
प्रचार इत्याकलनाय चारैः ।

लक्ष्येयं सूर्य्यदीप्त्याऽसमास्कन्दिताऽपराभूता नक्षत्रलक्ष्मीर्यत्र तं, अन्धकारविशेषणं वा । रात्रौ सूर्य्यदीप्तेरभावादतिरस्कृतनक्षत्रशोभमित्यर्थः । सूर्य्यदीप्तेरेव समास्कन्दनसामर्थ्यात् तमसैव रात्रौ यत् तिरस्करणं तेनैव नक्षत्रशोभा यस्मिन्निति वा, इत्यादिव्याख्यानानि ज्ञातव्यानि । लक्ष्मीमिति पाठे नदीत्वेऽपि समासान्तविधेरनित्यत्वात् कबभावः । मूर्द्धाभिषिक्तो राजन्यः, अन्धकारोऽस्त्रियाम्इत्यमरः ॥ ३८ ॥

दिन इति । अन्धकार इत्याकलनाय मामस्येन ज्ञानार्थं प्रतिवस्तुलग्नाः पदार्थमात्रसम्बद्धाः प्रतिच्छाया एव चारैः गूढार्थवेदिकाभिश्चारनारीर्विधाय चारपदं ताभ्यो दत्त्वा दिनं प्रति सम्प्रेष्य समागतास्ताः तत्रत्यवृत्तान्तं प्रष्टुमिव पुनः प्रावेशयत्, निजमैकस्थमित्यर्थात् । इति किं । ममान्धकारस्य द्वेषिणि मामसहमाने दिने विषये एषां वस्तूनां कीदृक् प्रचारो विचरणं स्वेच्छादिव्यवहारश्चेति । दिवा प्रतिपदार्थसम्बद्धाः छाया एव रात्रौ समागत्य मिलिता निजस्वामिनमन्धकारं प्राविशन् । रात्रौ हि प्रकाशाभावे छाया अन्धकारेण सहैकीभवतीति तत्सम्बन्धादेव महानन्धकारः प्रतीयत इति भावः । एतेन

छाया विधाय प्रतिवस्तुलग्नाः
प्रावेशयत् प्रष्टुमिवान्धकारः ॥ ३९ ॥
ध्वान्तस्य तेन क्रियमाणयेत्थं
द्विषः शशी वर्णनयाऽथ रुष्टः।
उद्यन्नुपाश्लोकि जपारुणश्री-
र्नराधिपेनानुनयेच्छयेव ॥ ४० ॥

प्रतिच्छायाऽपि तम एवेति वर्णितं। अन्योऽपि रात्रौ लोकस्थि-तिं ज्ञातुकामः स्त्रीणां सर्व्वत्र प्रवेष्टुं शक्यत्वात् चारनारीः सम्प्रेष्य तत्रत्यवृत्तान्तं विचार्य्य समागतास्ताः प्रष्टुमात्मसन्निधं प्रवेशयति। छाया एव चारीः प्रतिवस्तुलग्ना विधायेति वा। चारपदं दत्ता यद्दिनं प्रत्येव प्रेषयामास, अत एव ताः दिने प्रतिवस्तुलग्ना दृश्यन्त इति वा। चारी पुंयोगान्ङीष् ॥ ३८ ॥

इदानीं चन्द्रोदयं वर्णयितुमुपक्रमते। ध्वान्तस्येति। ते नराधिपेन नलेनेत्थं क्रियमाणया द्विषः शत्रुभूतस्य ध्वान्तस्य वर्णनया रुष्टः क्रुद्ध इव जपाकुसुमवदरुणा श्रीर्यस्य स उदयन् उदयं प्राप्नुवन् शशी तेनैव राज्ञा अथानन्तरं अनुनयेच्छयेव प्रसादनवाञ्छयेवोपाश्लोकि श्लोकैस्तोतुमारब्धि। अन्योऽपि वैरि-वर्णनया रुष्टः सन् अरुणो भवति, तत्परिहारार्थमुदितः सन् वर्णकेन प्रसादनार्थं स्तूयत इति प्रतीयमानोत्प्रेक्षा। इव शब्द-स्योभयत्र योजना वा। उपाश्लोकि सत्येति (पा० ३।१।२५) णिजन्तात् कर्म्मणि चिण् ॥ ४० ॥

पश्याावृतोऽप्येष निमेषमद्रे-
रधित्यकाभूमितिरस्करिण्या।
प्रवर्षति प्रेयसि चन्द्रिकाभि-
श्चकोरचञ्चूचुलुकान् प्रतीन्दुः॥ ४१॥
ध्वान्ते द्रुमान्तानभिसारिकास्त्वं
शङ्कस्व सङ्केतनिकेतमाप्ताः।

पश्येति। हे प्रेयसि प्राणप्रिये एष इन्दुश्चन्द्रिकाभिश्चकोराणां चन्द्रिकारूपदमृतपायिनां पक्षिणां चञ्चू एव चुलुकास्तान् प्रति पूरयित्वा प्रकर्षेण वर्षति सुधामित्यर्थात्। यावता चकोरचञ्चूपूरणं भवति तावत्प्रमाणं वर्षतीत्यर्थः। त्वं पश्य। किम्भूतः। अद्रेरुदयाचलस्याधित्यकाभूम्यार्ध्वशिखरेणैव तिरस्करिण्या जवनिकया निमेषलक्षणमत्यल्पकालमावृतोऽपि सन् सम्पूर्णानुदितोऽपि प्रथमचन्द्रिकाभिरेव चकोराणामानन्दं करोति किं पुनरुदितः सन्निति भावः। अन्योऽप्युपकारी दूरस्थोऽप्युदयोन्मुखोऽन्येषामुपकरोति॥ ४१॥

ध्वान्त इति। हे प्रिये त्वं चन्द्रोदयात् पूर्व्वं ध्वान्ते सति द्रुमान्तान्, तरुनिकटदेशानेव वृक्षाधोभागानेव सम्भोगार्थं कामुकदत्तसङ्केतनिकेतं प्राप्ताः ता अभिसारिकाः स्वैरिणीः शङ्कस्व सम्भावय। तथा इदानीं चन्द्रोदये सति वृक्षाधोभागवर्त्तिन्याश्छायाच्छलादुज्झितं पूर्व्वधृतं तमोऽनुकूलं चेलं वस्त्रं याभिस्तादृशीः सतीः सवर्णत्वाज्ज्योत्स्नानुकूलैश्चन्द्रिकानुगुणैर्धवलतरैर्दुकू-

छायाच्छलादुज्झितनीलचेला
ज्योत्स्नानुकूलैस्खलिता दुकूलैः ॥ ४२ ॥
त्वदास्यलक्ष्मीमुकुरं चकोरैः
स्वकौमुदीमादयमानमिन्दुः।

लैरपलक्षिताः सतोऽस्खलिताः सम्भोगं कृत्वा स्वगृहं प्रति पुनः परावृत्तास्त्वं सम्भावय। तमसि मत्येव केनापि न ज्ञातव्यमिति बुद्धा नीलं वस्त्रं परिधाय सङ्केतस्थानमागताः, चन्द्रोदये पुनर्नीलवस्त्रपरिधाने पूर्व्वोद्गीत्या तत् तत्रैव विहाय श्वेतं दुकूलं सवर्णत्वात् परिधाय केनापि न ज्ञाताः। नीलचोला इति पाठे चोलः कूर्पासः ॥ ४२ ॥

त्वदिति। हे रम्भातरुपीवरोरु रम्भातरुवदतिपीवरौ ऊरू यस्यास्तत्सम्बुद्धिः त्वं निशायामिन्दीवरं नीलोत्पलं तद्वत्सारुभा यस्यास्तया दृशा ऊरु सादरमिन्दुं पिव विलोकय। किम्भूतं। तवास्यलक्ष्म्याः मुखशोभायाः अवलोकनार्थं मुकुरं दर्पणमिव तथा चकोरैः प्रयोज्यैः स्वकौमुदीमादयमानं निजकौमुदीं चकोरान् पाययमानं। उदिते चन्द्रे चकोराः सानन्दा जाताः नीलोत्पलानि च विकसितानीति भावः। एतेनेन्दोः परोपकारित्वं सूचितं। विकसितेन्दीवरतुल्यया दृशा पिवेत्यनेन चन्द्रोदये हीन्दीवरं विकसति त्वं चैवम्भूतया दृशा यदा चन्द्रमवलोकयिष्यसि तदा जनस्त्वद्दृशं चन्द्रावलोकनविकसितमिन्दीवरमेवैतदिति ज्ञास्यतीति सूचितं। दिवासङ्कोचादसादृश्य-

दृशा निशेन्दीवरचारुभासा
पिबोरु रम्भातरुपीवरोरु ॥ ४३ ॥
असंशयं सागरभागुदस्थात्
पृथ्वीधरादेव मथः पुराऽयं।
अमुष्य यस्मादधुनाऽपि सिन्धौ
स्थितस्य शैलादुदयं प्रतीमः ॥ ४४ ॥

मिति। इन्दीवरस्य विकसितत्वद्योतनार्थं निशापदं। चकोरैः गतिबुद्धीति (पा० १।४।५२) कर्म्मत्वप्राप्तावपि, आदिखाद्योर्न (पा० १।४।५२।वा० ४२) इति प्रतिषेधात् कर्त्तरि तृतीया। आदयमानं निगरणार्थत्वात् परस्मैपदप्राप्तावपि अदेः प्रतिषेधो वक्तव्यः (पा० १।३।८७।वा० १) इति निषेधात्, णिचश्चेति (पा० १।३।७४) तङ् ॥ ४३ ॥

असंशयमिति। पुरा पूर्व्वं सागरभाक् समुद्रगर्भस्थोऽयं चन्द्रः मथो दण्डभूतात् पृथ्वीधरात् पर्व्वतान्मन्दरादेव हेतोरुदस्थादुत्पन्न इत्यसंशयं निश्चितं पुराणादौ यदेवं श्रूयते तत् सत्यमित्यर्थः। पुरा उदस्थात् प्रथमसम्भवावसरे तस्मादेव समुत्थित इति वा। तत्र हेतुमाह, यस्माद्धेतोरधुनाऽपि सम्भवान्तरावसरेऽपि सिन्धौ स्थितस्य सागरगर्भस्थस्याप्यमुष्य चन्द्रस्य शैलादुदयाचलादेवोदयमुत्पत्तिं प्रतीमो जानीमः। प्रत्यहं सागरस्थस्याप्यस्याचलोत्पत्तिशीलत्वरूपलिङ्गदर्शनात् समुद्रम-

निजानुजेनातिथितामुपेतः
प्राचीपतेर्वाहनवारणेन ।
सिन्दूरसान्द्रे किमकारि मूर्द्धि
तेनारुणश्रीरयमुज्जिहीते ॥ ४५ ॥
यत् प्रीतिमद्भिर्वदनैः स्वसाम्या-
दचुम्बि नाकाधिपनायिकानां ।

थेन प्रथममस्मवावमरेऽप्ययमचलादेवोत्पन्न इति निश्चितम इत्यर्थः । उदयाचलशिखरं चन्द्रोऽतिक्रामतीति भावः ॥ ४४ ॥

निजेति । निजानुजेन एकस्मात् सिन्धोरुत्पन्नतया अस्मा-च्चन्द्रात् पश्चाज्जातेन कनीयसा भ्रात्रा प्राचीपतेरिन्द्रस्य वाहन-वारणेन प्राच्यां स्थितेनैरावतेनातिथितामुपेतः प्राप्तः प्राच्या-मुदितत्वात् तत्सविधं प्राप्तःसन्नयं चन्द्रोऽग्रजत्वात् सिन्दूरेण सान्द्रे मूर्द्धि अकारि कृतः किं । गौरवान्नमस्कारपूर्व्वं शिरस्यारोपितः किमित्यर्थः । तेन सान्द्रसिन्दूरशिरःस्थापनेन हेतुना लग्नसि-न्दूरवशादयमरुणश्रीरारक्तशोभ उज्जिहीते, उदयते । उज्जि-हीते किमिति वा । उदयंश्चन्द्रः सिन्दूररक्तो दृश्यत इत्यर्थः ॥ ४५ ॥

यदिति । वृत्तत्वादिगुणयोगेन स्वसाम्यात् प्रीतिमद्भिः नाकाधिपस्येन्द्रस्य नायिकानां वदनैर्यस्मात् स्वसविधमागत एष चन्द्रोऽचुम्बि तस्माद्धेतोस्तस्माच्चुम्बनाद्वा तदीयानां देवेन्द्रना-यिकानामधरेषु न्यस्तो यावोऽलक्तकस्तस्य योगात् सम्बन्धा-

ततस्तदीयाधरयावयोगा-
दुदेति बिम्बारुणबिम्ब एषः ॥ ४६ ॥
विलोमिताङ्कोत्किरणाद्दृढ-
दृगादिना दृश्यविलोचनादि ।

द्रुतेः बिम्बवत् पक्वबिम्बीफलवदरुणं बिम्बं मण्डलं यस्य तादृश उदेति । अन्योऽपि समानः सख्यमविधमागतः सन् सख्या प्रीत्या चुम्ब्यते । मुखैरिति बहुवचनेन तत्र प्रदेशे युगपदेव चुम्बनाद्बहुलयावकयोगात् सकलस्यापि चन्द्रबिम्बस्य रक्तत्वं युक्तमिति सूचितम् ॥ ४६ ॥

विलोमितेति । विधिः विधुना चन्द्रेणैव काञ्चनस्य सञ्चकेन बिम्बकेन कृत्वा वधूनामतिरमणीयमाननं विधत्ते किं । किम्भूतेन । विलोमितः पराङ्मुखः कृतः स्वप्रभया जितोऽङ्कः कलङ्को येन एतादृशादुत्कृष्टादतितेजस्विनः किरणाद्रुतोर्द्रुतो दृस्तर्क्यः दृगादिर्नेत्राद्यवयवो यस्य, अथ च विपरीतीकृतानामङ्कानां नेत्रादिनिर्माणार्थं निम्नोन्नतांशविरचितस्थानानामुत्किरणं सद्घट्टनं तस्माद्रुतोः, साक्षादलक्ष्यनेत्रकर्णनासिकाद्यवयवेन, आननञ्च साक्षाद्दृश्या विलोचनादयो नासाकर्णाद्यवयवा यस्य तादृशं, तस्मिन् ब्रह्मा स्त्रीमुखं चन्द्ररूपेण सहाराष्ट्रभाषया ठसा इत्याख्येन स्वर्णस्य सञ्चकेण निर्ममे, सञ्चके हि निष्पाद्यस्य वस्तुनो निम्नोन्नतभागा विपरीता एवोत्कीर्यन्ते तत्र च नेत्राद्यवयवा दुर्ज्ञेया भवन्ति, भवन्निर्मितमुखादौ च दृश्या भवन्ति तस्मादेवं

विधिर्विधत्ते विधुना वधूनां
किमाननं काञ्चनसञ्चकेन ॥ ४७ ॥
अनेन वेधा विपरीतरूप-
विनिर्मिताङ्कोत्किरणाङ्ककेन।
त्वदाननं दृश्यदृगाद्यलक्ष्य-
दृगादिनैवाकृत सञ्चकेन ॥ ४८ ॥
अस्याः सुराधीशदिशः पुराऽऽसी-
द्यदम्बरं पीतमिदं रजन्या।

तर्क इत्यर्थः। उदितमात्रश्चन्द्रोऽल्पतमसुवर्णसञ्चकवद्रक्तो दृश्यत इति भावः। उत्तमं सुवर्णं रक्तवर्णं भवति। आननमिति जात्येकवचनं ॥ ४७ ॥

अनेनेति। वेधा विपरीतरूपं यथा तथा विनिर्मितमुक्तविधमङ्कोत्किरणं यत्र तादृशमङ्कं यस्य तेन तथाऽलक्ष्यदृगादिना अनेन चन्द्रेणैव सञ्चकेन दृश्यं सुन्दरमथच प्रत्यक्षदर्शनयोग्यं दृगादि यस्य तादृशं त्वदाननमकृत त्वदाननमेव कृतं, नलन्यानमिति वा, अयमेवात्र श्लोके विशेषः। अयं श्लोकः क्षेपकः ॥ ४८ ॥

अस्या इति। हे भैमि अस्याः सुराधीशस्येन्द्रस्य दिशः यदम्बरं गगनं वस्त्रञ्च पुरा चन्द्रोदयात् पूर्वं रजन्या रात्र्या हरिद्रया च पीतं तमोव्याप्तत्वादृश्यं पीतवर्णं वा आसीत् तेन गगनेन वस्त्रेण वा अधुना चन्द्रोदये चन्द्रांशूनां चूर्णैः क्षाल-

चन्द्रांशुचूर्णव्यतिचुम्बितेन
तेनाधुना नूनमलोहितायि॥ ४९ ॥
तानीव गत्वा पितृलोकमेन-
मरञ्जयन् यानि स जामदग्न्यः।
छित्त्वा शिरांस्यापि सहस्रबाहो-
र्विस्राणि विश्राणितवान् पितृभ्यः॥ ५० ॥

सूक्ष्मतेजोलवैः करैभिर्व्यतिचुम्बितेनातितरां स्पृष्टेन सता चन्द्रांशुवच्छुभ्रतरेण चूर्णेन ताम्बूलमाधनचूर्णद्रव्येण स्पृष्टेन सता नूनमलोहितायि, आरक्तीभूतं। यत् तमसा पूर्वं नीलमभूत तदेवेदानीमुद्यच्चन्द्रलोहितकरसंस्पर्शाद्रक्तं जातमित्यर्थः। हरिद्रया पीतवर्णं वस्त्रं चूर्णेन युक्तं सद् रक्तं भवति। देवेन्द्रस्त्रियाश्च वस्त्राणि नानावर्णयुक्तानि। चन्द्रांशव एव चूर्णमिति वा। अलोहितायि लोहितादिडाज्भ्य इति (पा० ३।१।१३) क्यषन्ताद्भावे चिण्॥४९॥

तानीति। सोऽतिवीरो जामदग्न्यः सहस्रबाहोः शिरश्छित्त्वा विस्राणि आमगन्धीनि यान्यस्राणि रक्तानि पितृभ्यः जमदग्न्यादिभ्यो विश्राणितवान् दत्तवान्, यै रक्तैः प्रतिज्ञातं पितृतर्पणं कृतवान्, तान्येव रक्तानि सम्प्रत्यात् पितृलोकं गत्वा प्राप्य पितृलोकाधीशमेनं चन्द्रमरञ्जयन्, रक्तं चक्रुरिव। "चन्द्रो वै पितृलोकः" इति श्रुतेः। चन्द्रो रक्तवर्णो दृश्यत इति भावः। परशुरामः सहस्रार्जुनं हत्वा तदीयै रक्तैः पितृतर्पणं कृतवानितीतिहासः। विस्रं स्यादामगन्धि यदित्यमरः॥ ५०॥

अकर्णनासस्त्रपते मुखं ते
पश्यन्न सीतास्यमिवाभिरामं।
रक्तोस्रवर्षी वत लक्ष्मणाभि-
भूतः शशी शूर्पनखामुखाभः॥ ५१॥
आदत्त दीप्रं मणिमम्बरस्य
दत्त्वा यदस्मै खलु सायधूर्त्तः।

अकर्णेति। हे प्रिये शशी सीतास्यमिवाभिरामं कर्णादिकृत-शोभनं ते मुखं पश्यन् न त्रपते लज्जते, वत चित्रं। किम्भूतः। न विद्यते कर्णनासं स्वभावादेव यस्य सः। तथा रक्ता आरक्ता उस्राः किरणास्तद्वर्षणशीलः रक्तः शोणश्चासौ किरणवर्षी च तादृशो वा। तथा लक्ष्मणा कलङ्केन अभिभूत आक्रान्तमध्योऽत एव शूर्पनखाया रावणभगिन्या मुखवदाभा यस्य सः, तद्वदनतुल्यः, एषु लज्जाकारणेषु सत्स्वपि न लज्जते तच्चित्रमित्यर्थः। त्वन्मुखं पश्यन्नप्युदयत्येव स्वम्प्रकाशयति च तस्मादेव न लज्जते इत्यपि चित्रमेव। शूर्पनखामुखमपि लक्ष्मणेन पराभूतं छिन्नकर्णना-सत्वात् रुधिरवर्षि सत् राममभिलक्षीकृत्य वर्त्तमानमत एवा-तिभयरहितस्य सीतामुखं पश्यदपि न लज्जते तदनन्तरमपि प्रौढिवादप्रदर्शनात्। अभिशब्दस्यावृत्तिः कार्य्या। लक्ष्मशब्दो नान्तः, पक्षेऽकारान्तः॥ ५१॥

आदत्तेति। हे भैमि सायङ्कालरूपो धूर्त्तो यत् रज्यन् उदयकाले रक्तीभवन्तुषारद्युतिश्चन्द्र एव लेपवशाद्रज्यत् कूट-

रज्यत्तुषारद्युतिकूटहेम
तत् पाण्डु जातं रजतं क्षणेन॥ ५२॥
बालेन नक्तं समयेन मुक्तं
रौप्यं लसड्डिम्बमिवेन्दुबिम्बं।

हेम कृत्रिमं सुवर्णमस्मै गगनाय मूल्यरूपेण दत्त्वा दीप्तं प्रकाशमानमम्बरस्य मणिं सूर्य्यमादत्त जग्राह तदलीकं हेम क्षणमात्रेण पाण्डु शुभ्रं रजतं खलु रूप्यमिव जातं। धूर्त्तो हि रूप्यं लेपादिभिरुपलिप्तं सुवर्णीकृत्य ददाति, वस्त्वान्तरस्थमपि प्रशस्तदीप्तिकं रत्नञ्च गृह्णाति। उपयामन्तरमतिक्रान्तकियत्कालत्वाद्रक्तिमानं परित्यज्य चन्द्रो रूप्यवद्धवलो जात इति भावः। घञन्तोऽत्र सायशब्दः सायंशब्दसमर्थनार्थः॥ ५२॥

बालेनेति। हे प्रिये रौप्यं रजतं रजतमयं लसद् विलसमानं डिम्बं बालक्रीडासाधनं भ्रमरकमिवेन्दुबिम्बं कर्त्तृ भ्रमिक्रमाद्भ्रमणपरिपाट्याऽय च ऊर्द्धदेशगमनक्रमणेन उज्झिता त्यक्ता या पट्टसूत्रस्य नेत्रं दोरकं तल्लता आवृत्तिर्वेष्टनं तद्रूपं, अथ च पट्टसूत्रजालिकावस्त्रावरणं येन तं शोणिमानं रक्तिमानं मुञ्चति। किम्भूतमुभयं। नक्तसमयरूपेण बालेनाथ च बालेन प्रदोषरूपेण रात्रिसमयेन मुक्तं भ्रामणार्थं करात् क्षिप्तमासनं, अथ च उद्गीर्णं जनितोदयं। शिशुक्रीडासाधनं हि भ्रमरकं काष्ठमयं भवति। ईश्वराणां च डिम्बं सम्पत्त्यतिशयाद्राजतं पट्टसूत्रवलितदोरकसंयमनात् तत्सम्बन्धजातं रक्तिमानं मुञ्चति।

भ्रमिक्रमादुज्भितपट्टसूत्र-
मेचावृतिं मुञ्चति शोणिमानं ॥ ५३ ॥
ताराचरैर्यामसिते कठिन्या
निशाऽलिखद् व्योम्नि तमःप्रशस्तिं।

तथेदं चन्द्रविम्बमपीत्यर्थः। इदानीं चन्द्रो धवलो जा[illegible] इति भावः। मेचावृतेरिति पाठे भ्रमिक्रमाद्धेतोरुज्भित[illegible]पट्टसूत्र-मेचावृतिर्यच तादृशात् भ्रमिक्रमाद्धेतोरिति वा। डिम्बं ल-डिम्बमिति वा गौडदेशभाषायां भ्रमरकस्य सञ्ज्ञा। महाराष्ट्र-भाषायां कान्यकुब्जभाषायाञ्च भ्रमरा इति सञ्ज्ञा। रौप्यं सम्बन्धे विकारे वा अण्। मेचं मन्थगुणे वस्त्र इत्यभिधाना-न्मेचशब्दो यद्यपि मन्थवेष्टनगुणे मुख्यस्तथाऽप्यत्र गुणमात्रपर इति ज्ञेयं ॥ ५३ ॥

तारेति। निशाऽसिते श्यामे व्योम्नि गगन एव कज्जला-दिलिप्तश्यामलपट्टिकायां कठिन्याः शुभ्रधातुविशेषस्य सम्बि-भिस्ताराचरैः शुभ्रैरचरैरिव नक्षत्ररूपैरचरैः कृत्वा यां तमः-प्रशस्तिं तमोवर्णनश्लोकादिलिपिमलिखत्, ताराचरैः उपल-चितां तमःप्रशस्तिं रात्रिः कठिन्याऽलिखदिति वा, तां लिपिं विलुप्य प्रोञ्छ्याल्पयतः परिमेयताराचरं कुर्व्वतो हिमांशोर-रूपोऽपि करे किरणेऽथ च पाणौ पाण्डुरिमा जातः। प्ररूढ-किरणे हि चन्द्रे नक्षत्राणामल्पता भवतीति खटिकालिखि-ताचराणि मार्ज्जयतस्तारस्कोऽपि करः खटिकासङ्गाद्धवलो

विलुप्य नामल्पयतोऽरुणोऽपि
जातः करे पाण्डुरिमा हिमांशोः ॥ ५४ ॥
सितो यदाऽत्रैष तदाऽन्यदेशे
चकास्ति रज्यच्छविरुज्जिहानः।
तदित्थमेतस्य निधेः कलानां
को वेद वा रागविरागतत्त्वं ॥ ५५ ॥

भवतीति। तमसि नक्षत्राणि बहून्युज्ज्वलतराणि च दृष्टानि, चन्द्रे तूदितेऽल्पानि निःप्रभाणि च जातानि, चन्द्रश्च धवलो जात इति भावः ॥ ५४ ॥

सित इति। एष चन्द्रो यदा यस्मिन् कालेऽत्र देशे सितो धवलश्चकास्ति तदा तस्मिन्नेव कालेऽन्यदेशे रज्यच्छवी रक्तकान्तिरुज्जिहानः उदयन् शोभते। एवमत्रोदयन् रक्तोऽन्यत्र च श्वेत इत्यपि सामर्थ्यात् लभ्यं, एतद्देशस्थं प्रति इदानीं सितो दृश्यते द्वीपान्तरस्थं प्रति तूदयन्निदानीमेव दृश्यते यस्मात् तस्मात् कलानां निधेः पूर्णस्य चन्द्रस्य रागविरागयोर्लोहितत्वालोहितत्वयोस्तत्त्वं याथात्म्यमित्थममुनाऽमुकप्रकारेण को वा वेद, अपि तु कोऽपि निश्चेतुं न शक्नोतीत्यर्थः। उदयास्तमययोरतात्त्विकत्वाद्व्यवहितस्य यत्र यदा प्रथमदर्शनं तदा तत्रोदय इति दूरस्थस्य रक्तत्वप्रत्ययः क्रमसामीप्यात् तु धावल्यप्रत्यय इति तत्त्वं। अन्यस्यापि चतुःषष्टिकलाभिज्ञस्यानुरागाननुरागयोर्याथात्म्यं कुत्रानुरक्तः कुत्र वा नेति कोऽपि न जानाति ॥ ५५ ॥

काश्मीरजैरश्मिभिरौपसन्ध्यै-
र्मृष्टं धृतध्वान्तकुरङ्गनाभि।
चन्द्रांशुना चन्दनचारुणाऽङ्गं
क्रमात् समालम्भि दिगङ्गनाभिः ॥ ५६ ॥
विधिस्तुषारर्तुदिनानि कर्त्तं
कर्त्तं विनिर्म्माति तदन्तभिन्नैः।

काश्मीरजैरिति। दिग्भिरेवाङ्गनाभिः सन्ध्यायाः समीपं उपसन्ध्यं तत्र जातैररुणैः रश्मिभिरेव काश्मीरजैः कुङ्कुमैः कृत्वा मृष्टं पूर्व्वं कृतोद्वर्त्तनं ततः सन्ध्यायामपगतायां धृता ध्वान्तरूपा मृगनाभिः कस्तूरी येन तादृशमङ्गं, क्रमात् कस्तूरीलेपनानन्तरं चन्द्रांशुनैव चन्दनेषु मध्ये चारुणोत्तमेन चन्दनेन कृत्वा समालम्भि, अलेपि। अन्या अपि अङ्गनाः कुङ्कुमादिक्रमेणाङ्गमनुलिम्पन्ति, चन्दनधवलैश्चन्द्रकरैः सर्व्वा अपि दिशो वितमस्काः कृता इति भावः। औपसन्ध्यैः सामीप्येऽव्ययीभावाद्भवार्थेऽण्। ५६॥

विधिरिति। विधिः तुषारर्त्तोः शिशिरर्त्तोर्दिनानि कर्त्तं कर्त्तं छित्त्वा तेषां दिनानामन्तभिन्नैः मध्यसम्बन्धिभिः सारभूतैः शकलैः शुभ्रैः खण्डैः कृत्वा ज्योत्स्नीर्निशा विनिर्म्माति न चेदेवं नाङ्गीक्रियते यदि तदेमाश्चन्द्रिकायुक्ता रात्रयः तत्प्रतिमाः तैर्दिनैस्तुल्याः शीतलत्वप्रकाशत्वाभ्यां तत्सदृश्यः कथं। तानि च दिनानि वामनानि न्यूनपरिमाणानि न्यूनशीलत्वादिगुणानि

ज्योत्स्नीर्न चेत् तत्प्रतिमा इमा वा
कथं कथं तानि च वामनानि ॥ ५७ ॥
इत्युक्तिशेषे स वधूं बभाषे
सूक्तिश्रुतासक्तिनिबद्धमौनां।

कथं वा, अपि तु दिनवामनतारात्रिदीर्घताऽन्यथानुपपत्तेः शिशिरतोर्दिनापेक्षया च ज्यौत्स्नीनामतितमां शीतलप्रकाशत्वानुपपत्तेश्च। शिशिरर्तुदिनानि छित्त्वैव तत्सारभूतैश्च शकलैश्चन्द्रिकान्विता रात्रयो ब्रह्मणा वर्द्धिता इत्यर्थः। चन्द्रचन्द्रिकया रात्रिः शीतला धवलतरा च कृतेति भावः। कर्त्तं कर्त्तं कृती छेदन इत्यस्मादाभीक्ष्ण्ये नमुल् द्विर्वचनञ्च। ज्योत्स्नी ज्योत्स्नायस्यामस्तीत्यर्थे ज्योत्स्नातमिस्रेति (पा०५।२।११४) साधुकृतात् ज्योत्स्नाशब्दादण्प्रकरणे ज्योत्स्नादिभ्यः उपसङ्ख्यानमित्यर्थे अणि (पा०५।२।१०३।वा०१) ङीप्॥ ५७॥

इतीति। स नलः इत्युक्तिशेषे एव चन्द्रवर्णनावसाने सूक्तीनां प्रसादादिगुणयुक्तानां शोभनवचनानां श्रुते श्रवणे विषये आसक्त्या रसातिशयात् तदेकताननतया बद्धं स्वीकृतं मौनं यया तां तूष्णीम्भावमास्थितां वधूं भैमीं प्रति इदं बभाषे। इति किं। हे प्रेयसि इन्दौ विषये तवेयं मूकस्येव मुद्रा वाङ्निरोधरीतिः का किंकारणिका, त्वमपि किमिति न चन्द्रवर्णयसीत्यर्थः। मौने स्वयमेव हेतुमुत्प्रेक्षते। मुखस्य चन्द्रकृतवदनसाम्यस्याभ्यसूया सौर्द्धा तज्जन्यान्महतोऽनुशयात् मनोद्वेषादिव स्वस्पर्द्धा-

मुखाभ्यसूयानुशयादिवेन्दौ
केयं तव प्रेयसि मूकमुद्रा ॥ ५८ ॥

शृङ्गारभृङ्गारसुधाकरेण
वर्णस्रजाऽनूपय कर्णकूपौ ।
त्वच्चारुवाणीरसवेणितीरे
तृणानुकारः खलु कोपकारः ॥ ५९ ॥

कारिणो हि वर्णने अन्येन क्रियमाणे अन्योऽपि कोपात् तूष्णीं तिष्ठति नानुमोदते स्वयञ्च न तं वर्णयति, तथा त्वन्मुखस्पर्द्धाकरणे सञ्जातकोपादिवेन्दुं न वर्णयसि नानुमोदसे च किमिति प्रश्नः। नलसूक्तिश्रवणादरकृतं मौनं कोपादिवेन्दुत्प्रेक्षितं ॥ ५८ ॥

शृङ्गारेति। हे प्रिये त्वं शृङ्गारसम्बन्धी भृङ्गारः स्वर्णकलशः तद्रूपेण सुधाकरेण चन्द्रेण हेतुना वर्णस्रजा कृत्वा मम कर्णकूपौ अनूपय जलपूर्णौ कुरु, वर्णस्रजः सरसत्वात् कर्णकूपयोर्जलपूर्णत्वकरणं युक्तं। अथ च शृङ्गारसम्बन्धिसुवर्णकलशरूपस्य भवन्मुखस्य सम्बन्धि यत्पीयूषं तस्याकरेण खनिभूतया सरसया वर्णस्रजा कर्णकूपावनूपय। खलु यस्मात् कोषकार इक्षुविशेषः तव चारुवाण्या वक्रोक्त्यादिरूपाया वाचः सम्बन्धिनः शृङ्गारादयो रसास्तेषां वेणिः प्रवाहः तस्यास्तीरे समुद्यत् यत्तृणं तस्यानुकारः तत्सदृशः। अतिस्वादुरसोऽपीक्षुविशेषो यदीयसरसवाणीतीरतृणमनुकरोति न तु समो जातः, तां वाणीं श्रावय

अत्रैव वाणीमधुना तवापि
श्रोतुं समीहे मधुनः सनाभिं ।
इति प्रियप्रेरितया तयाऽथ
प्रस्तोतुमारम्भि शशिप्रशस्तिः ॥ ६० ॥

पूरं विधुर्वर्द्धयितुं पयोधेः
शङ्केऽयमेणाङ्कमणिं कियन्ति ।
पयांसि दोग्धि प्रियविप्रयोगात्
सशोककोकीनयने कियन्ति ॥ ६१ ॥

चन्द्रं वर्णयेति भावः। कोषकाराद्या इत्नुविशेषा इति चोरस्वामी। अनूपयं अनूपशब्दात् तत्करोतीति (पा० ३।१।२६। वा० १) णिचि लोट् ॥ ५८ ॥

अत्रैवेति। प्रियेण इति प्रेरितया तया भैम्या अथानन्तरं शशिनः प्रशस्तिर्माहात्म्यं प्रस्तोतुमारम्भि, आरब्धा। इति किं। हे भैमि अहमत्रैव चन्द्रवर्णन एव विषये मधुनोऽमृतस्य सनाभिं तुल्यां तवापि वाणीमधुना श्रोतुं समीहे, इच्छामीति ॥ ६० ॥

पूरमिति। हे प्रिय अयं विधुः पयोधेः पूरमागन्तुकजलप्रवाहं वर्द्धयितुमेणाङ्कमणिं चन्द्रकान्तं कियन्ति पयांसि दोग्धि तस्माद् गृह्णाति, तथा प्रियस्य चक्रवाकस्य विप्रयोगात् सशोकायाः कोक्या नयने अपि कियन्ति जलानि दोग्धि, ताभ्यामपि सकाशाद् गृह्णातीत्यहं शङ्के मन्ये, इति भैमी प्रियमवदत्।

ज्योत्स्नामयं रात्रिकलिन्दकन्या-
पूरानुकारेऽपसृतेऽन्धकारे ।
परिस्फुरन्निर्मलदीप्तिदीपं
व्यक्तायते सैकतमन्तरीपं ॥ ६२ ॥
हासत्विषेवाखिलकैरवाणां
विश्वं विशङ्केऽजनि दुग्धमुग्धं ।

उदिते चन्द्रे सागरपूरो वृद्धिं प्राप्तश्चन्द्रकान्ताः स्रवन्ति चक्रवाकी च भृशं रोदितीति भावः। दुहिर्द्विकर्मा ॥ ६१ ॥

ज्योत्स्नेति। हे प्राणेश तमोऽन्धकारेऽतिश्यामा रात्रिरेव कलिन्दकन्या यमुना तस्याः पूर आगन्तुकातिनीलजलप्रवाहस्तदनुकारे तत्सदृशे तद्वदतिकृष्णेऽन्धकारेऽपसृते सति परिस्फुरन्ती निर्मला दीप्तिर्यस्य प्रकाशमानश्चासौ धवलद्युतिश्च तादृशो वा यश्चन्द्रः स एव दीपो यत्र तादृशं चन्द्रिकारूपमेकतं धवलतरवालुकामयं रात्रियमुनाया एव जलमध्यस्थितमन्तरीपं व्यक्तायते स्फुटमिव भवति प्रकटं दृश्यते। पूरावसरेऽस्फुटमपीदानीं स्फुटीभवतीति शङ्के। चन्द्रचन्द्रिकया सकलं धवलीकृतमिति भावः। व्यक्तायते, व्यक्तमिव भवतीत्यर्थे कर्त्तुः क्यङीति (पा० ३।१।११) क्यङ्। अव्यक्तं व्यक्तं भवतीत्यर्थः। सैकतं, सिकताशर्कराभ्याञ्च (पा० ५।२।१०४) इत्यस्त्यर्थेऽण् ॥ ६२ ॥

हासेति। अखिलकैरवाणां सकलकुमुदानां हासत्विषेव विकासदीप्त्येव विश्वं सकलं जगत् दुग्धवन्मुग्धं शीतलं धवलञ्चा-

यतो दिवा बद्धमुखेषु तेषु
स्थितेऽपि चन्द्रे न तथा चकास्ति ॥ ६३ ॥
मृत्युञ्जयस्यैष वसन् जटायां
न क्षीयते तद्भयदूरमृत्युः ।

जनि जातं न तु चन्द्रेणेत्यहं विशङ्के विशेषेण मन्ये । यतो हेतो-र्दिवा तेषु सकलकैरवेषु बद्धमुखेषु सङ्कुचितेष्वविकस्वरेषु सत्सु चन्द्रे स्थिते विद्यमानेऽपि सकलकुमुदविकासाभावात् सकलं जगत् तथा रात्राविव शीतलधवलतया न चकास्ति तस्मादिदं जगत् कुमुदहासमत्विषैव शीतलं धवलञ्च कृतं न तु चन्द्रेणे-त्यर्थः । कुमुदवत् दुग्धवच्च शीतला धवला चन्द्रिकाऽस्तीति भावः ॥ ६३ ॥

मृत्युमिति । मृत्युञ्जयस्य मृत्युञ्जितवतः शिवस्य जटायां वसन् एष चन्द्रः षोडशांशभृता न क्षीयते, न अल्पपरिमाणो भवति । कलामात्रस्वरूपेणैव तत्र सदा वसंस्ततोऽपि न्यूनपरि-माणो न भवतीत्यर्थः । अथ च न क्षीयते॰ न क्षीयते यस्मात् तस्मात् मृत्युञ्जयात् सकाशाद्भयेन दूरे मृत्युर्मरणहेतुर्देवता यस्य सः, मृत्युञ्जयजटाजूटनिवासान्मृत्युना स्प्रष्टुमपि न शक्यते तस्मान्न क्षीयतेऽयमित्यर्थः । तर्हि तत्र वसन् वर्द्धते किं नेत्या-शङ्क्याह । वर्द्धते च न उपचितोऽपि न भवतीत्यर्थः । यतः स्वस्य सुधया आप्तो जीवर्द्धितन्यं यैस्तानि स्वजो मुण्डानि भूष-णीभूतशिरोमालायाः शिरःकपालानि तान्येव राहवस्तेभ्य

न वर्द्धते च स्वसुधाप्तजीव-
सङ्घुण्डराहूद्भवभीरतीव ॥ ६४ ॥
त्विषं चकोराय सुधां सुराय
कलामपि स्वावयवं हराय ।
ददज्जयत्येष समस्तमस्य
कल्पद्रुमभ्रातुरथाल्पमेतत् ॥ ६५ ॥

उद्भवा समुत्पन्ना भीर्यस्य, कथं, अतीव, नितरां भीत इत्यर्थः । मज्जीवमुण्डेषु बहवो राहव एवैते इति धिया भिया न वर्द्धते। भीतो हि सौस्थ्याभावात् कृशतर एव भवति, अयच पूर्वस्य राहोः सकाशाद्भयमतः कारणाद्भयान्न चीयते न च वर्द्धत इत्येककल एव शिवशिरश्चन्द्र इत्यर्थः । एतेन चन्द्रस्य षोडशी कला वर्णिता । शिवशिरसि वर्त्तमानत्वादस्य माहात्म्यमपि वर्णितं । मृत्युञ्जयेति सञ्ज्ञायां भृतवृजीति (पा० ३।२।४६) खश्, अरुर्द्विषेति (पा० ६।३।६७) मुम् ॥ ६४ ॥

त्विषमिति । एष चन्द्रो जयति सर्व्वोत्कर्षेण प्रकाशते यतः । किम्भूतः । चकोराय स्वावयवं त्विषं निजांशभूतां चन्द्रिकां ददत्, तथा सुराय अग्न्यादिदेवेभ्यो निजांशभूतां सुधां ददत्, तथा हराय निजांशभूतां कलामपि ददत्, अथाऽपि अस्य चन्द्रस्यैतत् समस्तं परोपकारकरणमल्पमेवातिचमत्कारि न भवति, यतः समुद्रोत्पन्नत्वात् कल्पद्रुमस्य भ्रातुः । कल्पद्रुमस्तु कल्पितं सर्व्वं सर्व्वेभ्यो ददाति, अयन्तु न तथेत्यल्पमेवेत्यर्थः ।

अङ्कैणनाभेर्विषकृष्णकण्ठः
सुधाप्तशुद्धिः कटभस्मपाण्डुः ।
अर्हन्नपीन्दोर्निजमौलिधाना-
न्मृडः कलामर्हति षोडशीं न ॥ ६६ ॥

एवंविधः परोपकारी न कोऽपीति भावः। चकोराय सुगायेति जात्यैकवचनं ॥ ६५ ॥

अङ्केति। मृडः शिवो निजमौलौ धारणात् स्थापनाद्धेतोः षोडशीं कलामर्हन् प्राप्नुवन्, अथ च पूजयन्नपि षोडशीं कलां नार्हति न प्राप्नोति, न पूजयति वा। निजशिरसि धारणादेव तस्याः प्राप्तिः पूजा च सम्भावनीया, अतितरां पूज्यते स्वशिरसि धार्य्यते च। तथा चैतस्य षोडशीं कलां मृडः प्राप्नुवन्, पूजयन्, अपि च तां प्राप्नोतीति विरोधपरिहारो यतः। किम्भूतस्येन्दोः, किम्भूतस्य मृडः। अङ्कभूतो य एणो हरिणस्तद्युक्ता नाभिर्मध्यभागो यस्य, अथचाङ्करूपा कलङ्करूपा एणनाभिः कस्तूरी यत्र। मृडस्तु विषेण कृष्णकण्ठः तथा सुधयाऽमृतेनाप्ता शुद्धिर्धावल्यं येन, मृडस्तु कटभस्मना चिताभस्मना पाण्डुः तस्माच्चन्द्रस्याल्पमपि साम्यं शिवो न प्राप्नोति। किञ्च चन्द्राद्धिकश्चेच्छिवोऽभविष्यत् तर्हि तदीयकलां मौलौ नाधारयिष्यत्, सा तु मौलौ धृता तेन, तस्माच्चन्द्र एव शिवादधिक इत्यर्थः। शुभस्याशुभस्य च महदन्तरमिति भावः। षोडशीमपि कलां नार्हतीत्यनेन पूर्णचन्द्रं नार्हतीति वाच्यं, इत्यपि

पुष्पायुधस्यास्थिभिरर्द्धदग्धैः
सितासितश्रीरघटि द्विजेन्द्रः।
स्मरारिणा मूर्द्धनि यद्धृतोऽपि
तनोति तत्तौष्टिकपौष्टिकानि॥ ६७॥

मृगस्य लोभात् खलु सिंहिकायाः
सूनुर्मृगाङ्कं कवलीकरोति।

सूचितं। हरस्यापकर्षे विषं चिताभस्म च हेतुः। चन्द्रोत्कर्षे मृगमदोऽमृतञ्च॥ ६६॥

पुष्पेति। ब्रह्मणा द्विजेन्द्रः पुष्पायुधस्य कामस्यार्द्धदग्धैरस्थिभिः कृत्वाऽघटि निर्मितः, अत एव सितासितश्रीः, उपान्तधवलमध्यश्यामलकान्तिभिः स्मरास्थिभिरेव निर्मित इत्यत्र हेतुमाह। स्मरारिणा मूर्द्धनि धृतोऽपि अथ च कृतसम्मानोऽपि तस्य स्मरस्यैव तौष्टिकानि हर्षकारीणि पौष्टिकानि अभिवृद्धिकारीणि च यद्यस्मात् तनोति, कामारिणा पूज्यमानोऽपि कामहितमेव यस्मात् करोति, तस्मात् तदस्थिभिरेव घटित इत्यर्थः। एतादृक्कामोद्दीपकं किमपि नास्तीति भावः। अस्थिभिरिवेति प्रतीयमानोत्प्रेक्षा। अन्याश्रितोऽपि तदीयशत्रुर्हितं यः करोति स तदस्थिभिर्घटित इति लौकिकयुक्तिः। तौष्टिकपौष्टिकानि, प्रयोजनमिति (पा० ५।१।१०९) ठञ्॥ ६७॥

मृगस्येति। सिंहिकायाः सुतो राहुः मृगाङ्कं यत् कवलीकरोति तदङ्कमृगस्य लोभात खलु ग्रासाभिलाषादिव सिंहि-

स्वस्यापि दानादमुमङ्कसुप्तं
नौज्झन्मुदा तेन च मुच्यते ऽसौ ॥ ६८ ॥

सुधाभुजो यत् परिपीय शून्य-
मेतं वितन्वन्ति तदर्हमेव ।
पुरा निपीयास्य पिताऽपि सिन्धु-
रकारि तुच्छः कलशोद्भवेन ॥ ६९ ॥

कायाः सुतः सिंहो मृगैरङ्कितं स्थलं मृगग्रासाभिलाषादेव स्वाधीनं करोति । तर्हि किमयं मुञ्चतीत्यत आह । अङ्कसुप्तं मध्यवर्त्तिनमथ चोत्सङ्गे विश्वासात् सुखेन निद्रितममुं मृगं स्वस्यापि दानाद्राहुकृतदन्तखण्डनादपि नौज्झत्, नात्यजत्, अथ च स्वशरीरस्यापि वितरणान्नात्यजत्, अयं चन्द्रस्तेन राहुणा तेन पुण्येन च हेतुना मुदा शरणागतरक्षणनिमित्तहर्षेण हत्वा मुच्यते त्यज्यते । अन्योऽपि शरणागतं मृगं जिघांसोः सिंहाद्रक्षितमात्मानमपि ददानो हि तेन पुण्येन सिंहान्मुच्यते, अत एव स्वस्यापि दानादङ्कसुप्तममुं यतो नामुञ्चत् तेन हेतुनाऽयं विमुच्यते, अर्थाद्राहुणेत्यर्थः ॥ ६८ ॥

सुधेति । सुधाभुजो देवा एनं चन्द्रं परिपीय साकल्येन पीत्वा तुच्छं रिक्तं यद्वितन्वन्ति कुर्व्वन्ति तदर्हं, उचितमेव । यतो ऽस्य पिता सिन्धुरपि कलशोद्भवेन अगस्त्येन पुरा निपीय तुच्छो रिक्तोऽकारि तस्मात् कुलक्रमागततुच्छत्वमित्यर्थः ।

चतुर्दिगन्तीं परिपूरयन्ती
ज्योत्स्नैव कृत्स्ना सुरसिन्धुबन्धुः ।
क्षीरोदपूरोदरवासनाश-
वैरस्यमेतस्य निरस्यतीयं ॥ ७० ॥
पुत्री विधोस्ताण्डविकाऽस्तु सिन्धो-
राश्या चकोरस्य दृशोर्वयस्या ।

एतस्य पूर्व्वेऽपि परोपकारनिरता तस्मादयमपि तथैवेति भावः ।
कलशादुत्पन्नेनापि सागरस्य पानमित्याश्चर्य्यं ॥ ६९ ॥

चतुरिति । चतुर्णां दिगन्तानां समाहारस्तां चतुर्दिक्प्रान्तानित्यर्थः । तां परिपूरयन्ती सामस्त्येन व्याप्नुवती । तथा श्वैत्यात् सुरसिन्धोर्मन्दाकिन्या बन्धुः सदृशी । तथा कृत्स्ना पूर्णा इयं ज्योत्स्ना एका क्षीरोदरपूरोदरे वासः स्थितिः तस्य हानाद्बहुकालं परित्यागाद्धेतोरेतस्य चन्द्रस्य वैरस्यं क्षीरसागरविरहजनितं दुःखं निरस्यति नाशयति । असौ चन्द्रिकायामेव क्षीरसागरबुध्या पितृवियोगदुःखं परित्यजतीत्यर्थः । सकलदिगन्तव्यापिधवलचन्द्रिकामध्यवर्त्ती चन्द्रः क्षीरसागरमध्यस्थ इव शोभत इति भावः । गङ्गावद्दुग्धवच्चेयं कौमुदीति भावः । चतुर्दिगन्ती । समाहारे द्विगोर्ङीप् ॥ ७० ॥

पुत्रीति । इयं चन्द्रिका यद्यपि चन्द्रात् प्रसूतत्वाद्विधोः पुत्री अस्तु, सिन्धोः समुद्रस्य ताण्डविका नृत्योपदेशिकाऽपि नटयित्री अस्तु । चन्द्रिकया हि सिन्धुरुल्लास्यते सा च तस्य नप्त्री

तथाऽपि सेयं कुमुदस्य काऽपि
ब्रवीति नामैव हि कौमुदीति ॥ ७१ ॥
ज्यौत्स्नापयःक्ष्मातटवास्तुवस्तु-
च्छायाच्छलच्छिद्रभरा धरायां।

भवति, यद्वा इयं विधोः पुत्री सिन्धोस्ताण्डविका भवतु, तथा चकोरस्यापि पेया भवतु, सकललोकस्य दृशोः प्रेमपात्रतया वयस्या सखी भवतु, तथाऽपि सेयं चन्द्रिका कुमुदस्य काऽप्यनिर्व्वचनीया सम्बन्धिनी भवतु, पूर्व्वनिर्दिष्टसर्व्वापेक्षया कुमुदस्यैव निरतिशयानन्दकारित्वात् केनाप्यनिर्व्वचनीयेन सम्बन्धिनी भवत्वित्यर्थः। हि यस्मात् कौमुदीति नामैव कर्त्तृ ब्रवीति सर्व्वेषां तत्सम्बन्धसम्भवेऽपि कुमुदानामियं कौमुदीति तस्येदमिति सम्बन्धेऽणि कुमुदानामेव प्रीत्यतिशयेन सम्बन्धं वदतीत्यर्थः। कौमुदीति नामैव हि स्पष्टं ब्रवीतीति च चन्द्रिकया सर्व्वेषामप्यानन्दः कृतः, कुमुदानान्तु विशेषत इति भावः। कार्य्येण कारणानुमानं। ताण्डविका, सर्व्वाङ्गसञ्चालनात्मनृत्यवाचकात् ताण्डवशब्दात् तत्करोतीति (पा० ३।१।२६।वा० १) ण्यन्ताट्ठक्। अर्घमर्हति दण्डादित्वात् यत्। अर्घ्येति च पाठः ॥ ७१ ॥

ज्योत्स्नेति। शुभ्रांशोश्चन्द्रस्य शुभ्रांशा धवलभागास्ते कराः किरणास्तु धरायां भूम्यां कलङ्कस्य नीलीभिः प्रभाभिर्मिश्रा मिश्रा कान्तिर्येषां ते कलङ्कनीलकान्तिच्छुरिता इव विभान्ति। यतो ज्योत्स्नैव पयो जलं दुग्धं वा यस्मिंस्तादृशं

शुभ्रांशुशुभ्राश्शकराः कलङ्क-
नीलप्रभामिश्रनिभा विभान्ति॥ ७२॥
कियान् यथाऽनेन वियद्विभाग-
स्तमोनिरासाद्विशदीकृतोऽयं।

स्थातटं दुग्धधवलचन्द्रिकाधवलीकृतभूतलं तदेव वास्तु वसतिगृहं येषां तानि वस्तूनि वृक्षादिपदार्थास्तेषां छाया छलं येषां तादृशानि छिद्राणि प्रकाशेन रिक्तत्वादिस्थानि पदार्थप्रतिच्छायारूपाणि तानि धरन्तीति तादृशाः। चन्द्रिकाधवलिताः पदार्थाश्चन्द्ररश्मय इव वृक्षादिप्रतिच्छायाश्चन्द्रकलङ्कनीलरश्मय एवेति धरायामपि निपतिताश्चन्द्रकिरणा नीलधवला एव शोभन्त इत्यर्थः। अन्यस्य करा हस्ताः कलङ्कवन्नीलस्य नीलमणेः प्रभया मिश्रकान्तयो नीलमणियुक्ताङ्गुलीयकप्रभामिश्रा विभान्ति। शुभ्रांशुशुभ्रांश्विति पाठेऽप्यंशुर्लेशे रवे रश्माविव्यभिधानादंशुशब्दस्य लेशवाचित्वात् स एवार्थः। ज्योत्स्नैव पयो जलं तस्य स्था भूमिः तस्यास्तटं तदेव वास्तु निवासस्थानं येषां तेषां वस्तूनां छायाव्याजेन छिद्राणि धरन्तीति वा॥ ७२॥

कियानिति। उदितमात्रेणानेन चन्द्रेण तमोनिरासाद्धेतोः कियान् किञ्चिन्मात्रोऽयं वियद्विभागः पूर्व्वाकाशदेशो यथा विशदीकृतः तथा चन्द्रकिरणैरुद्भासिताभिर्वृद्धिं प्रापिताभिर्लावणसैन्धवीभिरद्भिः कियानयं वियद्विभागः शितिः श्यामो

अङ्किस्तथा लावणसैन्धवीभि-
रुद्भासिताभिः शितिरप्यकारि ॥ ७३ ॥
गुणौ पयोधेर्निजकारणस्य
न हानिवृद्धी कथमेतु चन्द्रः।
चिरेण सोऽयं भजते तु यत् ते
न नित्यमम्भोधिरिवात्र चित्रं ॥ ७४ ॥

ऽप्यकारि। अप्रौढप्रभे चन्द्रे पूर्व्वाकाशदेशस्तिमिरनिरासाक्षु-
वलो भवति ततो निरस्तस्य च तमसः प्रतीच्यां घनीभूतत्वात्
पश्चिमाकाशदेशः श्यामलो भवतीति तत्रैवमुत्प्रेक्षा। समुद्रजलस्य
नीलं पूर्व्वाकाशदेशं एव नीलैः समुद्रजलैः पुनर्नीलोऽप्यकारीति
वा। लावणसैन्धवी, लवणसिन्धोरिमास्तस्येदं (पा० ४।३।१२०)
इत्यणि हृद्भगेति (पा० ७।३।१९) उभयपदवृद्धिः ॥ ७३ ॥

गुणाविति। चन्द्रो निजकारणस्य पयोधेर्हानिवृद्धिरूपौ
गुणौ कथमेतु प्राप्नोतु, अपि तु कार्य्यगुणानां कारणगुणपूर्व्व-
कत्वनियमादवश्यमपचयोपचयौ चन्द्रं प्राप्नुत इति युक्तमेवैतत्त्र
न किञ्चिच्चित्रमित्यर्थः। तर्हि कुत्र चित्रमित्याशङ्क्याह। सोऽयं
चन्द्रस्ते हानिवृद्धी यच्चिरेण पक्षान्तपरिमितेन बहुना कालेन
भजते न तु अम्भोधिरिव नित्यं प्रत्यहं भजतेऽत्र विषयं चित्र-
माश्चर्य्यं। समुद्रो यथा प्रत्यहं हानिवृद्धी भजते तथा पुनोऽपि
चन्द्रो नेत्याश्चर्य्यमित्यर्थः ॥ ७४ ॥

आदर्शदृश्यत्वमपि श्रितोऽय-
मादर्शदृश्यां न बिभर्त्ति मूर्त्तिं ।
त्रिनेत्रभूरप्ययमत्रिनेत्रा-
दुत्पादमासादयति स्म चित्रं ॥ ७५ ॥

आदर्शेति । अयं चन्द्र आदर्शवद्दृश्यत्वं दृश्यत्वा[illegible] रमणीयत्वं श्रितो भजमानोऽपि आदर्शवद् दृश्यां रमणीयां मूर्त्तिं न बिभर्त्ति चित्रं । यो ह्यादर्शवद् दृश्यो भवति स एवादर्शवद् दृश्यां मूर्त्तिं न बिभर्त्ति तद्दृश्यो न भवतीति विरोधादाश्चर्यमित्यर्थः । अथ च दर्पणवद्दृश्यत्वं श्रितोऽप्यादर्शं दर्शमभिव्याप्य दृश्याममावास्यायां दर्शनयोग्यां मूर्त्तिं न बिभर्त्ति, इदानीं पूर्णत्वेन दृश्यमानोऽपि दर्शे लेशेनापि न दृश्यत इत्यर्थः, इति विरोधपरिहारः । दर्पणवद्दृश्यत्वं श्रितोऽपि आदर्शं दर्शं मर्य्यादीकृत्य कृष्णचतुर्द्दशीमभिव्याप्य दृश्यां मूर्त्तिं न बिभर्त्ति, अपि तु तावत्पर्यन्तं दृश्यो भवत्येवेति वा । तथाऽयं चन्द्रः, त्रिनेत्राद्भवति यस्मादृशस्त्रिनेत्रादुत्पन्नोऽपि,न त्रिनेत्रोऽत्रिनेत्रस्तस्मात्त्रिनेत्रव्यतिरिक्तात् सकाशादुत्पादमुत्पत्तिमासादयति स्म प्रापेत्यपि चित्रं । त्रिनेत्रादुत्पन्नोऽपि त्रिनेत्रादुत्पन्नो न भवतीत्याश्चर्यमित्यर्थः । अथ च त्रिनेत्रादुत्पन्नोऽप्यत्रेर्नेत्रादुत्पत्तिमापेत्येतदपि विरुद्धं । अथ च त्रिनेत्रो भूर्वसतिस्थानं यस्य तादृशः, तथाऽत्रेर्मुनेर्नेत्राच्चित्रमाश्चर्य्यरूपमुत्पादं प्रापेति विरोधपरिहारः । सहजसौन्दर्य्यमाश्चर्यमाहात्म्यं, कुलस्य माहात्म्यज्ञानेन चन्द्रस्य वर्णितं । चन्द्रस्यात्रिनेत्रसमुद्भवत्वं पुराणप्रसिद्धम् ॥ ७५ ॥

इज्येव देवव्रजभोज्यवृद्धिः
शुद्धा सुधादीधितिमण्डलीयं ।
हिंसां यथा सैव तथाऽङ्गमेषा
कलङ्कमेकं मलिनं बिभर्त्ति ॥ ७६ ॥
एकः पिपासुः प्रवहानिलस्य
च्युतो रथाद्वाहनरङ्कुरेषः ।

इज्येति । देवानां व्रजैः समूहैर्भोज्या पेया वृद्धिः समृद्धिर्यस्याः सा शुद्धा धवला इयं सुधादीधितेरमृतकरस्य मण्डली इज्येव याग इव शोभत इति शेषः । इज्याऽपि देवव्रजभोज्यचरुपुरोडाशादिसमृद्धिशुद्धा पवित्रा च भवति । तथैषा चन्द्रमण्डली कलङ्काख्यमेकं मध्यवर्त्तिनमङ्गमवयवं मलिनाकारं तथा बिभर्त्ति । यथा सैवेज्यैव पूर्व्वोक्तगुणविशिष्टा सत्यपि एकां हिंसां पशुहिंसात्मकमङ्गं कर्म्मसाधनं मलिनं पातकहेतुभूतं बिभर्त्ति । परोपकारशोलायाः सर्व्वात्मना शुद्धाया अपि चन्द्रमण्डल्या दैवादेकमङ्गं मलिनं जातमित्यर्थः । यागे हि हिंसामात्रमेव मालिन्यं । मुधाऽङ्गमिति पाठे कलङ्करूपमेकमङ्गं मलिनं मुधा वृथैव बिभर्त्ति, शुद्धाया मालिन्ययोगस्यानौचित्यादित्यर्थः । शुद्धस्यापि श्रौतधर्म्मस्य साङ्ख्यैर्दोषारोपणान्मालिन्यं मुधैवेत्यर्थः । इज्या व्रजयजोः (पा० ३।३।९८) इति क्यप् ॥ ७६ ॥

एक इति । एष मृगाङ्को दृश्यमानः प्रसिद्ध एकः पिपासुः तृष्णाक्रान्तः सप्तवायुस्कन्धमध्यवर्त्तिनः प्रवाहाख्यस्यानिलस्य

अस्त्यम्बरेऽनम्बुनि लेलिहास्यः
पिबन्नमुष्यामृतबिन्दुवृन्दं ॥ ७७ ॥
अस्मिन् शिशौ न स्थित एव रङ्कु-
र्यूनि प्रियाभिर्विहितोपदाऽयं ।

मृगवाहनस्य गगनचारिणो रथच्युतो वाहनभूतो रङ्कुर्मृगोऽनम्बुनि निर्जलेऽम्बरे लेलिहास्यो नितरां पौनःपुन्येन वा स्वादनकारि मुखं यस्य तादृशो भवन्नमुष्य चन्द्रस्यामृतबिन्दुवृन्दं पिबन् यन्नस्ति। तृष्णाक्रान्तो रथं परित्यज्य पतितो निर्जलेऽपि गगने चन्द्रामृतबिन्दुमास्वादयन् वायुवाहनमृग एवायं, न तु कश्चित् कलङ्कमृगो नामेत्यर्थः। अस्तीति वर्त्तमानप्रत्ययेनामृतास्वादनेन चन्द्रं परित्यज्य गन्तुमशक्तोऽधुनाऽपि वर्त्तत इति सूचितम्। एवमन्योऽपि तृष्णाक्रान्तो निर्जले देशे प्रस्रवणादेः पतज्जलबिन्दुवृन्दं पिबन्ननुपशान्तपिपासो लेलिहास्यः संस्तत्रैव चिरं तिष्ठति। सप्तवायुस्कन्धाः पुराणप्रसिद्धाः। लेलिहेति नितरां पुनः पुनर्वा लेढीत्यर्थे यङि पचाद्यचि यङोऽचिचेति (पा० २।४।७४) यङो लुक् ॥ ७७ ॥

अस्मिन्निति। शिशौ बाले एककलात्मकेऽस्मिंश्चन्द्रे रङ्कुर्मृगो न स्थितो नासीदेव तस्यां दशायामदर्शनात्, किन्तु प्रियाभिरोषधीभिर्यूनि तरुणे पूर्णावयवेऽस्मिंश्चन्द्रेऽयं रङ्कुरुपदेव विहिता प्रेषिता। कीदृशी। अरण्ये भवः सन्दिश्यते प्रस्थाप्यते सन्देशस्तद्रूपा। अरण्यभवानां सन्देशरूपा वा। वयं भवत्प्रिया निर्जने वने

आरण्यसन्देश इवौषधीभि-
रङ्के स शङ्के विधिना न्यधायि ॥ ७८ ॥
अस्यैव सेवार्थमुपागताना-
मास्वादयन् पल्लवमोषधीनां।
धयन्नमुष्यैव सुधाजलानि
सुखं वसत्येष कलङ्करङ्कुः ॥ ७९ ॥

मृगैः सह वसामस्त्वं तु स्वर्गे विजयी सुखेन वर्त्तस इति गूढार्थोपलम्भसूचिकेति यावत्। अनन्तरं विधुना प्रेयसीसन्देशरूप स रङ्कुरङ्के मध्येऽथ चोत्सङ्गे प्रियाप्रेमभरेण न्यधायि, स्थापित इत्यहं शङ्के। अन्याऽपि प्रिया तरुणं प्रियं प्रति कञ्चित् सन्देशमुपदारूपेण प्रेषयति, स च तत् हृदयादौ धारयति। ओषध्यो हि वनवासिन्यः तदनुरूपमेव सन्देशं मृगं स्वप्रिये चन्द्रे प्रेषितवत्यः। आरण्यसन्देश इवायमुपदा प्रहितेति वा। यदेति पाठे यदाप्रभृति प्रेषितस्तदाप्रभृति तारुण्यदशायां चन्द्रेणायमङ्के न्यधायि, न तु पूर्व्वमित्यर्थः। आरण्येति भवार्थेऽण्॥ ७८॥

अस्येति। एष कलङ्करङ्कुर्विरहपीडितत्वादस्यैव चन्द्रस्य सेवार्थमुपगतानामोषधीनां पल्लवमास्वादयन्, तथाऽमुष्यैव सुधारूपाणि जलानि धयन् पिबन् सुखमनायासलब्धतृप्तिरिव वसति, आहारलोभादत्रैव वसतीत्यर्थः। अन्योऽपि मृगो जलकिशलययुक्ते देशे सुखेन वसति कदाचिदपि न त्यजति। पल्लवं जात्येकवचनं ॥ ७९ ॥

रुद्रेषुविद्रावितमार्त्तमारा-
त्तारामृगं व्योमनि वीक्ष्य बिभ्यत्।
मन्येऽयमन्यः शरणं विवेश
मत्वेशचूडामणिमिन्दुमेणः॥ ८०॥
पृष्ठेऽपि किं तिष्ठति नाथ नाथ-
रङ्कुर्विधोरङ्क इवेति शङ्का।

रुद्रेति। दक्षयज्ञे वीरभद्रावतारस्य रुद्रस्येषुणा विद्रावितं, अत एवार्त्तं ताराकृपं मृगं व्योमनि आरात् समीपे दूरे वा वीक्ष्य बिभ्यत् अस्वअयमन्योऽपरो मृग इन्दुमीशस्य चूडामणिं मत्वा शरणं विवेश, शिवेन शिरसि स्थापितत्वादयं मान्य इत्येत-दाश्रयेण रुद्राद्भयं रक्षिष्यत्येवेत्याशयेनान्यो मृगस्सम्यं शरणं प्रविष्ट इत्यर्थः, इत्यहं मन्ये। अन्यः सजातीयं कस्माच्चिद्भीतं दृष्ट्वा स्वयमपि भीतःसन् कमपि शरणं याति। गत्वेत्यपिपाठ। तारामृगस्य रुद्रेषु द्रावणं काशीखण्डादौ ज्ञातव्यं॥ ८ ॥

पृष्ठ इति। हे नाथ विधोरङ्क इव यथा चन्द्रस्योत्सङ्गे कल-ङ्कमृगो वर्त्तते तथा रङ्कुः पृष्ठेऽपि पश्चाद्भागेऽपि किं तिष्ठ-ति, अथ न तिष्ठति इति नवाशङ्का चेद्वर्त्तत इति शेषः, तर्हि त्वं तत्त्वाय याथार्थ्यज्ञानार्थं स्वे निजे सुखे एव विषये तिष्ठस्व निजमुखमेव निर्णयं पृच्छेत्यर्थः। अस्वत्कुखं दैरथे समानशो-भाभिलाषाद्द्विरथसम्बन्धिनि द्वन्द्वयुद्धेऽस्य त्वन्मुखाद्भज्यमान-त्वात पलायमानस्य चन्द्रस्य पृष्ठं पश्चाद्भागमपश्यत् तस्मात् तत

तत्त्वाय तिष्ठस्व मुखे स्वं एव
यद्दैरथे पृष्ठमपश्यदस्य ॥ ८१ ॥
उत्तानमेवास्य वलक्षकुक्षिं
देवस्य युक्तिः शशमङ्कमाह ।
तेनाधिकं देवगवेष्वपि स्यां
श्रद्धालुरुत्तानगतौ श्रुतायां ॥ ८२ ॥

स्वमुखमेव निर्व्यहत्वेन पृष्ठमित्यर्थः । त्वन्मुखचन्द्रादधिकमिति भङ्ग्या नलमुखवर्णनं कृतं । तत्त्वाय तत्त्वं ज्ञातुं क्रियार्थोपपदेति (पा० २।३।१४) तादर्थ्यमात्रे वा चतुर्थी । तिष्ठस्व स्थेयाख्यायां तङ् । स्वं वैकल्पिकत्वात् स्मिन्नभावः ॥ ८१ ॥

उत्तानमिति । युक्तिरर्थापत्तिरनुमानं वाऽस्य देवस्य चन्द्रस्य मध्यवर्त्तिनमङ्कं कलङ्करूपं शशमुत्तानं स्वर्गसम्मुखम-स्मदादिदृश्यमानपृष्ठभागमाह ब्रूते यतो वलक्षकुक्षिं धवलोदरं । यद्ययं शशकोऽस्मत्सम्मुखोदरोऽनुत्तानो भविष्यत् तर्हि मध्यवर्त्तिशशकोदरस्य धवलत्वाच्चन्द्रमध्यभागोऽपि धवलोऽभविष्यत्, न च तथा दृश्यते, किन्तु मलिनः, तस्मादुत्तान एव शशकश्चन्द्रेऽस्तीति युक्तिराहेत्यर्थः । तेन चन्द्रशशकनिष्ठितोत्तानत्वेनैव हेतुनाऽहं देवगवेष्वपि सुरभीप्रभृतिषु विषये वेदे श्रुतायामुत्तानगतौ सुरलोकसम्मुखचरणतया गमने विषये पूर्व्वापेक्षयाऽधिकमतितरां श्रद्धालुरास्तिक्ययुक्ता स्यां "उत्ताना वै देवगवाश्चरन्ति" इति श्रुतिर्न्यायोपपन्नार्थतया सत्यैवेत्यह-

दूरस्थितैर्वस्तुनि रक्तनीले
विलोक्यते केवलनीलिमा यत्।
शशस्य तिष्ठन्नपि पृष्ठलोम्नां
तन्नः परोक्षः खलु रागभागः ॥ ८३ ॥
भङ्क्त्वाप्रभुर्व्याकरणस्य दर्प-
म्पदप्रयोगाध्वनि लोक एषः।

मिदानीमधिकं मन्य इत्यर्थः। देवगवेषु गारतद्धितलुकीति (पा० ५।४।९२) टच्। देवगवीष्विति पाठे टित्वात् ङीप् ॥ ८२ ॥

उक्तरीत्योत्तानगतौ सिद्धायामपि शशकस्य रक्तपृष्ठत्वान्नी लत्वेन प्रतीतिः कथमित्यत आह। दूरेति। दूरस्थितैर्द्रष्टृ रक्तनीले मिश्रितोभयवर्णे वस्तुनि केवलत्यक्तरागभागो नीलिमैव यद्यस्माद्विलोक्यते तत् तस्मात् कारणाच्छशस्य पृष्ठव र्त्तिरोम्णां तिष्ठन्नपि रागभागो रक्तिमांशो नोऽस्माकमतिदू रस्थितानां खलु निश्चितं परोक्षो दृग्गोचरो न भवति, किन्तु नीलिमैव दृश्यत इत्यर्थः। तिष्ठन् वर्त्तमानोऽपि परोक्ष इति विरोधाभासः। दूरस्थत्वान्न दृश्यत इति तत्परिहारः। खलू त्प्रेक्षायां वा ॥ ८३ ॥

भङ्क्त्वेति। एष कविलोकः पदानां सुप्तिङन्तानां प्रयो गाध्वनि विषये व्याकरणस्य प्रकृतिप्रत्ययविभागपूर्वं शब्दव्युत्पा दकस्य शास्त्रस्य मदधीन एव सकलशब्दप्रयोग इति

श्रृङ्गी यदस्यास्ति शशी ततोऽय-
मेवं मृगोऽस्यास्ति मृगीति नोक्तः ॥ ८४ ॥

यावन्तमिन्दुं प्रतिपत् प्रसूते
प्रासावि तावानयमब्धिनाऽपि।

दर्पं गर्वं, यदा लक्षणया वैयाकरणस्य व्याकरणाधीन एव सकलशब्दप्रयोग इति गर्व्वं भङ्क्तुं त्याजयितुं प्रभुः समर्थः। यस्मात् हेतोरयं चन्द्रः शृङ्गोऽस्यास्तीति ततो हेतोः शशी यथोक्तः, लोकेनेति शेषः। एवममुनैव प्रकारेण मृगोऽस्यास्तीति मृगीति नोक्तः। शृङ्गोऽस्यास्तीति मतुबर्थेऽत इनिठनौ (पा० ५।२।११५) इतीनौ यथायं शृङ्गीत्युच्यते तथा तेनैव सूत्रेण मृगोऽस्यास्तीत्यत्र इनः प्राप्तौ सत्यामपि मृगीति नोक्तः, तस्मादतिव्याप्त्यादिदोषाद् व्याकरणमूल एव लोकप्रयोग इति नियमो न युक्तः किन्तु कृत्तद्धितसमासानामभिधानं नियामकमिति। लक्ष्यमुद्दिश्य लक्षणप्रवृत्तिर्न तु लक्षणमुद्दिश्य लक्ष्यप्रवृत्तिरिति, तस्मात् प्रयोगमूलं व्याकरणमिति व्याकरणात् लोक एव प्रयोग एव बलीयानिति भावः। अप्रस्तुतप्रशंसा ॥ ८४ ॥

यावन्तमिति। प्रतिपद् यावन्तं यत्प्रमाणमेककलमिन्दुं प्रसूते, अब्धिनाऽपि तावांस्तत्प्रमाण एककल एवायं प्रासावि न तु पूर्ण इत्यर्थः। एतत् कथं ज्ञातमित्यत आह। तत्कालं तस्मिन् काले समुद्रादुत्पत्तेरवसर एव ईशेन मूर्द्धि

तत्कालमीशेन धृतस्य मूर्ध्नि
विधारणीयस्त्वमिहास्ति लिङ्गं ॥ ८५ ॥
आरोप्यते चेदिह केतकत्व-
मिन्दौ दलाकारकलाकलापे।
तत् संवदत्यङ्कमृगस्य नाभि-
कस्तूरिका सौरभवासनाभिः ॥ ८६ ॥

धृतस्य विधारणीयत्वं नितरां कार्य्यमेवेत्येककलत्वे लिङ्गं ज्ञापकमनुमापको हेतुरस्ति। यदि समुद्रेण सम्पूर्णोऽयमजनयिष्यत् तर्हि शिवेनापि तदानीमेव शिरसि तावानेवाधास्यत्, न तु तथा, तस्मात् प्रतिपदा एककलप्रसूतः तावान् समुद्रेणापीति। प्रतिपदुत्पन्नोऽप्ययमेककलत्वादेव न दृश्यत इति भावः ॥ ८५ ॥

आरोप्यत इति। केतकत्वमिह इन्दौ चेद् यदि आरोप्यते किम्भूते दलाकारः केतकीपत्रसदृशो धवलः कलानां कलापः समूहो यस्य तस्मिन् केतकदलवच्छुभ्रकलापत्वाच्चन्द्रः केतकमेवेति यदि रूप्येत तत् तर्हि अङ्कमृगस्य मृगत्वेन नाभिकस्तूरिका कर्त्री आरोपितं तत्केतकत्वं कर्म्मभूतं सौरभवासनाभिः कृत्वा संवदति। चन्द्रे केतकत्वं युक्तमित्यनुमन्यत इत्यर्थः। नाभिरिति पाठे, अङ्कमृगस्य नाभिः कर्त्री कस्तूरिकासम्बन्धीभिः सौरभवासनाभिः कृत्वा संवदतीति वा। केतक्यां कस्तूरीपरिमलो वर्त्तते, चन्द्रे च कलङ्कमृगनाभिरूपा कस्तूरी वर्त्तते, तस्माच्चन्द्रे केतकत्वमारोपयितुं युक्तमित्यर्थः।

आसीद् यथाज्योतिषमेव गोलः
शशी समक्षं चिपिटस्ततोऽभूत्।
स्वर्भानुदंष्ट्रायुगयन्त्रकृष्ट-
पीयूषपिण्याकदशावशेषः ॥ ८७ ॥

तत्केतकत्वमङ्कमृगस्य नाभिकस्तूरिकायाः परिमलस्य वामनाभिः मङ्क्षणैः कृत्वा संवदति युक्त्या संवादं प्राप्नोत्येति वा। ताभिरिति पाठे, अतिप्रसिद्धाभिर्वामनाभिरित्यर्थः ॥ ८६ ॥

आसीदिति। एष शशी यथाज्योतिषं गर्गादिप्रणीतग्रहगणितशास्त्रानतिक्रमेण गोलो नारिकेलफलवद्वर्त्तुलोपरितनभाग एव पूर्व्वमासीत्, तर्हीदानीं कथमन्यथा दृश्यत इत्याशङ्क्याह। ततोऽनन्तरं कालक्रमेण स्वर्भानो राहोरूर्द्धाधोभागस्थितदंष्ट्रायुगमेव यन्त्रं निष्पीडनचक्रं तेन कृष्टं निष्कृष्य गृहीतं पीयूषममृतं यस्य यस्माद्वा स चासौ पिण्याकदशा गृहीतरसनीरसतिलादिपिण्डीमात्ररूपोऽवशेष उद्धृतो भागो यस्य एवम्भूतः सन् चिपिटः पर्यटप्रायोऽभूदिति समक्षमिदानीं प्रत्यक्षेणानुभूयत एवेत्यर्थः। ज्योतिरधिकृत्य कृतो ग्रन्थो ज्योतिषं, अधिकृत्य कृते ग्रन्थे (पा० ४।३।८७) इत्यण्। ततो यथार्थेऽव्ययीभावः। ज्योतिःशास्त्रे त्रयोदशाङ्गुलश्चन्द्रः षोडशाङ्गुलसूर्य्यस्याधोभागस्थो जलपूर्णकाचकूपिकाप्रायो यथोदितस्तथैव पूर्व्वमासीदित्युक्तं ॥ ८७ ॥

असावसाम्यादितनोः सखा नो
कर्पूरमिन्दुः खलु तस्य मित्रं।
दग्धौ हि तौ द्वावपि पूर्व्वरूपाद्
यद्वीर्य्यवत्तामधिकां दधाते ॥ ८८ ॥

असाविति। असौ चन्द्रो वितनोरनङ्गस्य सखा नो भवति। कुतः। असाम्यादसादृश्यात्। "विवाहमैत्रवैराणि भवन्ति समशीलयोः" इति शास्त्रादनयोः साङ्गानङ्गयोः सादृश्याभावान् मैत्री न सङ्गच्छत इत्यर्थः। तर्हि अनयोर्लोकप्रसिद्धा मैत्री कथमित्यत आह। खलु निश्चितं कर्पूरापरनामैवेन्दुस्तस्यानङ्गस्य मित्रं तावतैव लोकप्रसिद्धिविरोधाभाव इत्यर्थः। तत्र हेतुमाह। यत् यस्मात् तौ द्वावपि कामकर्पूरौ दग्धौ सन्तौ पूर्व्वरूपाद्दग्धदशायाः सकाशादधिकां वीर्य्यवत्तां हि स्फुटं दधाते। पक्वो हि कर्पूरो वीर्य्यवत्तरो भवति। कामोऽपि दाहानन्तरं अधिकं वीर्य्यवान् अनुभूयते। तदुक्तं,

"कर्पूर इव दग्धोऽपि शक्तिमान् यो जने जने।
नमोऽस्त्ववार्यवीर्य्याय तस्मै कुसुमधन्वने"॥

इति। तस्मात् कामकर्पूरयोर्मैत्री युक्ता। घनसारश्चन्द्रसञ्ज्ञ इतिघण्टुः। कर्पूरमस्त्रियामित्यमरवचनात् कर्पूरशब्दो नपुंसकोऽपि ॥ ८८ ॥

स्थाने विधोर्वा मदनस्य सख्यं
स शम्भुनेत्रे ज्वलति प्रलीनः ।
अयं लयं गच्छति दर्शभाजि
भास्वन्मये चक्षुषि चादिपुंसः ॥ ८९ ॥

नेत्रारविन्दत्वमगान्मृगाङ्कः
पुरा पुराणस्य यदेष पुंसः ।

स्थान इति । वाऽथवा विधोर्मदनस्य सख्यं स्थाने युक्तमेवेत्यर्थः । तत्रायं हेतुः । स कामः ज्वलति दीप्यमाने शम्भुनेत्रे प्रलीनः प्रकर्षेण लीन एकतां गतः प्रलयं गतो विनष्ट इत्यर्थः । अयं चन्द्रश्च दर्शभाजि दर्शनं दर्शसञ्ज्ञापारयुक्तेऽथ चामावास्यां गते भास्वन्मये सूर्य्यरूपे आदिपुंसो विष्णोश्चक्षुषि लयमेकतां गच्छति । दर्शे हि चन्द्रः सूर्य्यं गच्छति अत एव दर्शस्य सूर्येन्दुसङ्गम इति नाम । सूर्य्यो विष्णोर्दक्षिणचक्षुः, तथा च तुल्ययोर्हरिहरयोर्नेत्रयोर्द्वयोरपि चन्द्रकामयोः प्रलीनत्वाद्दर्शे चन्द्रस्याप्यनङ्गतया च समशीलत्वादुचितैव मैत्रीत्यर्थः । तथा च कामस्य चन्द्रसखितामिर्षिष्ठुर्मर्ष्यैवमुक्तेति भावः ॥ ८९ ॥

नेत्रेति । पुरा पूर्वं यदा यस्मिन् काले एष मृगाङ्कः पुराणस्य पुंसः श्रीविष्णोर्नेत्रारविन्दत्वं नयनकमलत्वमगात्, तदानीं तस्मिन् कालेऽस्य विष्णुनेत्रारविन्दभूतस्यास्य चन्द्रस्यायमङ्कः कलङ्क एव कनीनिकाया इन्दीन्दिरस्य भ्रमरस्य सुन्दरमगात् प्रायात् । अदादिति पाठे, अयं श्रीविष्णुरस्य चन्द्रस्याङ्के

अस्याङ्क एवायमगात् तदानीं
कनीनिकेन्दीन्दिरसुन्दरत्वं ॥ ९० ॥
देवेन तेनैष च काश्यपिश्च
साम्यं समीक्ष्योभयपक्षभाजौ।
द्विजाधिराजौ हरिणाश्रितौ च
युक्तं नियुक्तौ नयनक्रियायां ॥ ९१ ॥

विषये कनीनिकेन्दीन्दिरसुन्दरत्वमदात्। नेत्रे हि कनीनिकया भाव्यं, अरविन्दे च भ्रमरेण, तथा चास्य नेत्रारविन्दरूपत्वा-दङ्कमेवोभयं श्रीविष्णुः कृतवानित्यर्थः। अङ्क एव कनीनिका कर्त्री भ्रमरेण सुन्दरत्वमस्यादादिति वा। इन्दीन्दिरालिषट्-चरणचञ्चरीकालिनो द्विरेफाः स्युरिति हलायुधः ॥ ९० ॥

देवेनेति। तेन देवेन श्रीविष्णुनैव चन्द्रः काश्यपिर्गरुडश्चैतौ द्वावपि साम्यं समानधर्मतां समीक्ष्य तुल्यायां नयनक्रियायां क्रमेण नेत्रव्यापारे वाहनव्यापारे च यन्नियुक्तौ तद् युक्तमुचि-तमित्यर्थः। चावन्योन्यसमुच्चये। साम्यमेवाह। उभयपक्षौ शुक्ल-पक्षकृष्णपक्षौ भजति चन्द्रः। गरुडस्तु द्वौ पक्षौ हृद्यौ भजति। तादृशौ द्वावपि। तथा द्विजानां ब्राह्मणानां राजा चन्द्रः। गरुडस्तु पक्षिणां राजा तादृशौ। तथा हरिणेन कलङ्कमृगे-णाश्रितश्चन्द्रः। गरुडस्तु हरिणा विष्णुना वहनार्थमाश्रितः। तादृशौ। एवमुभयोः साम्यात् समे एव व्यापारे नियुक्तौ। तदुचितं कृतमिति भावः। काश्यपिः। वाक्रादित्वादिञ् ॥ ९१ ॥

यैरन्वमायि ज्वलनस्तुषारे
सरोजिनीदाहविकारहेतोः।
तदीयधूमौघतया हिमांशौ
शङ्के कलङ्कोऽपि समर्थितस्तैः॥ ८२॥
स्वेदस्य धाराभिरिवापगाभि-
र्व्याप्ता जगद्भारपरिश्रमार्त्ता।
छायापदेशाद्वसुधा निमज्ज्य
सुधाम्बुधावुज्झति खेदमत्र॥ ८३॥

यैरिति। यैः पण्डितैः सरोजिन्या दाहरूपाद्विकाराद्धेतोः तुषारे हिमे ज्वलनोऽग्निरन्वमायि, तुषारः साग्निर्भवितुमर्हति सम्बन्धे सति दाहकारित्वात् साग्निप्रदेशवत् तप्तोदकवदिति हिमे विषये वह्निरनुमित इत्यर्थः, तैः पण्डितैर्हिमांशौ तुषारमये चन्द्रे वर्त्तमानः कलङ्कोऽपि तदीयधूमौघतया हिमाग्निसम्बन्धिधूमसमूहरूपत्वेन समर्थित इत्यहं शङ्के। वह्नौ हि धूमेन भाव्यं चन्द्रस्य तुषारमयत्वादुक्तरीत्या वह्निमान्, तथा च कलङ्को धूमसमूह एवेति तैः समर्थितमित्यहं सम्भावयामीत्यर्थः॥ ८२॥

स्वेदस्येति। वसुधा छायापदेशात् स्वीयप्रतिबिम्बव्याजेन सुधाम्बुधावत्र चन्द्रे निमज्ज्यान्तःप्रविश्य खेदं जगद्भारपरिश्रमपीडामुज्झतीव। किम्भूता। जगद्भारवहननिमित्तः परिश्रमः तेनार्त्ता नितरां पीडीताऽत एव स्वेदस्य धाराभिरिवापगा-

ममानुमैवं बहुकालनीली-
निपातनीलः खलु हेमशैलः।
इन्दोर्जगच्छायमयेऽन्यथाऽङ्के
पीतो विभागः प्रतिविम्बितः स्यात्॥ ९४॥

भिर्व्याप्ता समन्तात् पूरिता। अमृतसमुद्रनिमज्जने हि खेदो गच्छत्येव यस्याश्च तत्तन्नदीरूपः खेदः तस्याः श्रमहरणे सुधासमुद्र एव उचितः। एतेन कलङ्कस्य मृगशशभूच्छायप्रभृतिमतभेदा वर्णिताः॥ ९३॥

ममेति। हेमशैलो मेरुः खलु निश्चितं सर्गमारभ्याद्ययावदतिकालेन बहुना कालेन कृत्वा नीलीनिपातः श्यामिकालगनं तेन कृत्वा नीलो बहुकालीनत्वान्नीलसम्बन्धान्नीलवर्णः स जात एवम्प्रकारा ममानुमाऽनुमानमेवमहं सम्भावयामीत्यर्थः। अन्यथा यदि स्वर्णाचलः कालभूयस्त्वेन न नीलीभूतः किन्तु हेममयत्वात् पीत एव स्यात्, तर्हि इन्दोर्जगच्छायमये जगत्प्रतिविम्बभूते कलङ्करूपे प्रतीकेऽवयवे मेरोः पीतोऽपि भागः प्रतिविम्बितः स्यात् पीतोंऽशो दृश्येत, तस्मात् स्वर्णाचलो नील एव जातस्तथा च सकलाया अपि भूमेर्नीलवर्णत्वात् तत्प्रतिविम्बरूपः कलङ्कोऽपि नील एव युक्त इत्यर्थः। जगच्छायेति विभाषासेनेति (पा० २।४।२५) षण्डत्वं॥ ९४॥

माऽवापदुन्निद्रसरोजपूजा-
श्रियं शशी पद्मनिमीलितेजाः ।
अलिद्वयेनैव निजाङ्करङ्को-
रलङ्कृतस्तामयमेति मन्ये ॥ ९५ ॥
य एष जागर्त्ति शशः शशाङ्के
बुधो विधत्ते क इवात्र चित्रं ।
अन्तः किलैतत पितुरम्बुराशे-
रासीत् तुरङ्गोऽपि मतङ्गजोऽपि ॥ ९६ ॥

मेति। शशी उन्निद्रैर्विकसितैः सरोजैः कृता या पूजा तज्ज-नितां श्रियं माऽवापत् मा स्म लभत यतः पद्मनिमीलि कमल-सङ्कोचकं तेजो यस्य सः। विकसितानामपि कमलानां पूजार्थं चन्द्रसविधे क्रियमाणानां चन्द्रतेजसां सङ्कोचस्यैव सम्भवादुन्निद्र-सरोजपूजाश्रियं कथं प्राप्नोति। प्रकारान्तरेण प्राप्नोतीत्याह निजाङ्कभूतस्य रङ्कोर्मृगस्याक्षिद्वयेनैवालङ्कृतोऽयं चन्द्रः तामु-न्निद्रपूजाश्रियमेति प्राप्नोति, तन्नयनयोरुन्निद्रकमलकुपलादि-त्यहं मन्ये। अङ्कमृगनेत्राभ्यां कृत्वाऽयं चन्द्रो विकसितकमलाभ्यां पूजामिव शोभां प्राप्नोतीति भावः, इति वा ॥ ९५ ॥

य इति। य एष प्रत्यक्षदृश्यः शशः शशाङ्के जागर्त्ति स्फुरति, अत्र विषये क इव बुधश्चित्रमाश्चर्यं विधत्ते, अपि तु न कोऽपि। किल यस्मादेतत्पितुरम्बुराशेरन्तर्मध्ये उच्चैःश्रवसञ्ज्ञकस्तुर-ङ्गोऽप्यासीदैरावताख्यो मतङ्गजोऽप्यासीत् । यदीयपितुर्मध्ये

गौरे प्रिये भातितमां तमिस्रा
ज्योत्स्नी च नीले दयिता यदस्मिन्।
शोभातिलोभादुभयोस्तयोर्वा
सितासितां मूर्त्तिमयं बिभर्त्ति ॥ ९७ ॥
वर्षातपानावरणं चिराय
काष्ठौघमालम्ब्य समुत्थितेषु।

ऽश्वगजादिकं भवति तदीयपुत्रमध्ये श्रमाचमभवे किमाश्चर्य्यमित्यर्थः ॥ ९६ ॥

गौर इति। तमिस्रा तमोबहुलाऽस्य दयिता रात्रिर्गौरे प्रिये चन्द्रे विषये भातितमां, तथा ज्योत्स्नी च चन्द्रिकायुक्ता धवलाऽस्य दयिता रात्रिर्नीले प्राणेशेऽस्मिन् चन्द्रे नितरां शोभते भिन्नवर्णे हि शोभेत इत्यर्थः। तस्माद्धेतोस्तयोस्तमिस्राज्योत्स्न्योरुभयोरपि विषये स्वस्य शोभाप्राप्तेर्विलोभादभिलाषात् तयोरेव पत्न्योर्वा शोभाप्राप्तिस्तदभिलाषाद्धवलश्यामलसम्बन्धात् तमिस्राज्योत्स्न्योः शोभया भवितव्यमित्यर्थः। अयं चन्द्रः सितासितां धवलां श्यामलाञ्च मूर्त्तिं कायं बिभर्त्तीव। वा इवार्थे। शोभातिलोभादिवेत्यन्वयः। नीलभागे ज्योत्स्नीं प्रियां धारयितुं, धवले च तामसीमिति यथासङ्ख्यं ॥ ९७ ॥

वर्षेति। अहं बालेषु तनुषु अविकसितेषु चेह प्रत्यक्षदृश्येषु (तारासु नक्षत्रेष्वेव) कवकेषु छत्राकेषु मध्ये चिरकालात्पक्वत्वादिकस्वरीभूतं विकसितमतिस्थूलमेकच्छत्राकमेव चन्द्र-

बालेषु ताराकवकेष्विवैकं
विकस्वरीभूतमवैमि चन्द्रं ॥ ९८ ॥
दिनावसाने तरणेरकस्मा-
न्निमज्जनाद्विश्वविलोचनानि ।
अस्य प्रसादादुडुपस्य नक्तं
तमोविपद्वीपवतीन्तरन्ति ॥ ९९ ॥

मवैमि मन्ये। किम्भूतेषु ताराकवकेषु। चिराय बहुकालं वर्षा-र्त्ता आतपे ग्रीष्मर्त्तौ च वर्षेषु जलवृष्टिषु आतपेषूष्णेषु च सत्सु अनावरणमनाच्छादितं काष्ठीघन्दिकममूहमेव दाहममूहमा-लम्ब्य समुत्थितेषूत्पन्नेषु, वर्षाकाले स्नानाहतेषु जलक्लिन्नितेषु पश्चादुष्णतप्तेषु च। काष्ठेषु सूक्ष्मस्थूलानि छत्राकानि भवन्ति तथा च तारा अल्पकवकानि भवन्ति, चन्द्रस्तु स्थूलकवकमिवे-त्युत्प्रेक्षा ॥ ९८ ॥

दिनेति। विश्वस्य जगतो विलोचनानि दिनावसाने तरणेः सूर्य्यस्याकस्मादसम्भावितहेतोर्निमज्जनात् प्रतीचीसागरनीर-प्रवेशाद्धेतोर्नक्तं रात्रौ तमोनिमित्तां स्खलनादिरूपां विपद-मेव द्वीपवतीं महानदीमस्योडुपस्य चन्द्रस्य प्रकाशरूपात् प्रसा-दात् तरन्ति, चन्द्रेण तमो निरस्य सर्व्वं प्रकाशितमिति भावः। अन्येऽपि रात्रौ तरणेर्नौकाया अकस्मान्मज्जनाद्धेतोर्विपद्रूपा-मापन्नदीमुडुपस्याकस्मादागतस्याल्पस्य यानपात्रस्य प्रसादात् तरन्ति ॥ ९९ ॥

किं नाक्ष्णि नोऽपि क्षणिकोऽणुकोऽयं
भानोऽस्ति तेजोमयबिन्दुरिन्दुः।
अत्रेस्तु नेत्रे घटते यदासौ-
न्मासेन नाशी महतो महीयान्॥ १००॥
त्रातुं पतिन्नैषधयः स्वशक्त्या
मन्त्रेण विप्रा क्षयिणं न शेकुः।

किमिति। नोऽस्माकममहतां पामराणामपि अक्ष्णि नेत्रे विषये तेजोमयः तेजोरूपो बिन्दुरेवायमिन्दुरङ्गुल्या नयनप्रान्तचिपिटीकरणे धवलवर्त्तुलाकारेण भानः शोभमानः किं नास्ति अपि त्वस्मदादिनेत्रेऽपीन्दुर्वर्त्तत एव। अणुकोऽल्पीयांस्तथा क्षणिकः क्षणमात्रावस्थायी यावच्चिपिटीकरणमेव दृश्यत इत्यर्थः। तर्ह्यस्माच्चन्द्रात् तस्य वैलक्षण्यं कथमित्यत आह। अत्रेर्मुनेर्नेत्रे तु पुनस्तेजोमयबिन्दुरयमिन्दुर्महीयानितरापेक्षया नितरां महापरिमाण आसीत्। तथा मासेन कृत्वा नाशी मासावसानप्राप्तविनाशश्चाभूदिति यत् तद्घटते, एतद्युज्यत इत्यर्थः। यतो महतो महानुभावस्य। सर्व्वं हि महतां महदिति न्यायेन महतोऽत्रेर्नेत्रतेजोमयबिन्दुरप्ययमिन्दुर्महापरिमाणश्चिरकालस्थायी चेत्यस्मन्नेत्रतेजोमयबिन्दोरिन्दोर्वैलक्षण्यं युक्तमेवेति भावः। अणुकः, अल्प इति (पा० ५।३।८५) कन्। नाशी, अस्त्यर्थे इनिः॥ १००॥

त्रातुमिति। मृतसञ्जीविन्यादय ओषधयः स्वशक्त्या स्वसा-

एनं पयोधिर्मणिभिर्नु पुत्रं
सुधा प्रभावैर्न निजाश्रयं वा ॥ १०१ ॥
मृषा निशानाथमहः सुधा वा
हरेदसौ वा न जराविनाशी।

मर्थ्येन निजरसवीर्य्यविपाकाभ्यां कृत्वा ओषधीशत्वात् पतिमेनं चन्द्रं क्षयिणं प्रतिदिनं कलाक्षयवन्तमथ च क्षयरोगिणं मन्त्रं त्रातुं रक्षितुं न शेकुः। तथा विप्रा द्विजराजत्वान्निजं स्वामिनं क्षयिणं मन्त्रेण श्रुतिसामर्थ्येन कृत्वा रक्षितुं न शेकुः। तथा पयोधिरपि पुत्रं क्षयिणमेनं मणिभिरनेकप्रभावैरन्तरङ्गै रत्नैः कृत्वा रक्षितुं न शशाकेति वचनपरिणामः। तथा सुधाऽपि स्वाधारभूतं क्षयिणमेनमजरामरत्वजनकैः प्रभावैः कृत्वा त्रातुं न शशाक, वा समुच्चये। ओषध्यादयः स्वशक्त्यादिरक्षणसाधनं सत्यपि पतित्वात् प्रभुत्वात् पुत्रत्वान्निजाश्रयत्वाच्च क्षयाद्रक्षितुमर्हमप्येनं रक्षितुं समर्था न बभूवुरिति विशेषोक्त्या पूर्व्वकर्म्मजो रोगो महानुभावैरप्यपनेतुं न शक्यत इति व्यज्यते। अचिन्त्यो हि मणिमन्त्रौषधीनां प्रभाव इति ओषध्यादीनां सामर्थ्यं प्रसिद्धं ॥ १०१ ॥

मृषेति। निशानाथस्य चन्द्रस्य महः तेजः सुधा वा पीयूषरूपमेवेति लोकवादो मृषा असत्य एव भवेत्। वा अथ वा यदि चन्द्रतेजः सुधेवेति लोकप्रवादः सत्य एव तर्ह्यसौ चन्द्रतेजोरूपा सुधा जराविनाशी जरामरणे न हरेद्विनाशयेत् चन्द्रतेजः सुधा नैवेत्यङ्गीकार्य्यं। अथ चेतद्रूपा सुधाऽपि जरा-

पीत्वा कथं नाऽपरथा चकोरा
विधोर्मरीचीनजरामराः स्युः ॥ १०२ ॥
वाणीभिराभिः परिपक्रिमाभि-
र्नरेन्द्रमानन्दजडञ्चकार।
मुहूर्त्तमाश्चर्य्यरसेन भैमी
हैमीव वृष्टिस्तिमितञ्च तं सा ॥ १०३ ॥

मरणे नाशयतीत्यङ्गीकार्य्यमित्यर्थः। अपरथाऽन्यथा यदि चन्द्रतेजः सुधेति प्रवादः सत्यस्तद्रूपा सुधा जरामरणे विनाशयेत् तर्हि चकोराख्याः पक्षिणो विधोर्मरीचीन् पीत्वाऽपि कथं किमिति नाजरामराः स्युर्जरामरणरहिता भवेयुः। चन्द्रतेजःसुधात्वे एतस्याश्च सुधाया जरामरणविनाशे सामर्थ्यसद्भावे तत्पाने चकोरैरप्यजरामरैर्भाव्यं, न च ते तथा, तस्मात् तत्तेजसः सुधात्वं वा मृषा भवेत्। सुधाभूतस्यापि जरामरणापहारे सामर्थ्यं नास्तीत्येतदङ्गीकर्त्तव्यं, तथा सुधाप्रभावैर्न निजाश्रयं वेति पूर्व्वाशङ्काशमसमाधानमित्याशयः। अजरामरौ स्युरिति पाठे च्विः ॥ १०२ ॥

वाणीभिरिति। सा भैमी आभिः पूर्व्वोक्ताभिः परिपाकेन निर्वृत्ताभिः परिणतकविप्रकृतित्वा प्रसादादिगुणयुक्ताभिर्वाणीभिः कृत्वा तं नरेन्द्रमानन्दजडं हर्षपरवशञ्चकार। तथा मुहूर्त्तमद्भुताश्रयत्वात्तदाश्चर्य्येण रसेनाद्य च तद्रूपेण जलेन हैमीतुषारवर्षिणी वृष्टिरिव भैमी स्तिमितमतिस्नेहात् प्रा-

इतो मुखाद्वागियमाविरासीत्
पीयूषधारामधुरेति जल्पन्।
अचुम्बदस्याः स मुखेन्दुबिम्बं
संवावदूकश्रियमम्बुजानाम् ॥ १०४ ॥

सत्यमं वाऽयमार्द्रं चकार हिमदृष्टिर्यथा अन्यं जडमार्द्रं च करोति तथायमपि आनन्दजडं मातिस्नेहं च चकारेत्यर्थः। परिपक्तिमाभिः छित्वाभिरुक्तोऽर्थे क्तिः, क्तेर्मम् ॥ १०३ ॥

इत इति। इत्येवं जल्पन्, वदन्, स नलोऽम्बुजानां संवावदूका नितरां संवादिनी श्रीर्यस्य तादृशं कमलतुल्यशोभमस्या मुखेन्दुबिम्बमचुम्बत्, चन्द्रकमलतुल्यं भैमीमुखं प्रीत्यतिशयादचुम्बदित्यर्थः। इति किं। हे भैमि, इयमुक्तप्रकारा पीयूषधारावन्मधुरा वागितः प्रत्यक्षदृश्यात्त्वन्मुखादाविरासीन्निःसृतेति। इत इत्यनेन सामीप्याभिनयकारिणा करेण भैमीमुखं चिबुके धृतमिति ध्वन्यते। मुखस्येन्दुबिम्बत्वेन च पीयूषधारासम्बन्धोचितो सूच्यते। तथा च पीयूषधारया मधुरेत्यपि व्याख्येयं। संवावदूकेत्यादिना च भैम्याः पद्मिनीत्वं प्रसिद्धं। चन्द्रबिम्बस्य कमलैः सह विसंवादो विरोधित्वात्। एतन्मुखचन्द्रबिम्बस्य तु कमलैः सह संवादः कमलशोभासम्भावादित्यर्थः। प्रसिद्धचन्द्रबिम्बादेतन्मुखचन्द्रबिम्बमधिकमिति सूच्यते। अत्यर्थं संवदति संवावदूका यङ्लुकोऽयं शैल्या वर्त्तते ॥ १०४ ॥

प्रियेण साऽथ प्रियमेवमुक्ता
विदर्भभूमीपतिवंशमुक्ता।
स्मितांशुजालं विततान तारा
दिवः स्फुरन्तीव कृतावतारा ॥ १०५ ॥
स्ववर्णना न स्वयमर्हतीति
नियुज्य मां त्वन्मुखमिन्द्ररूपं।

प्रियेणेति। प्रियेण 'इतो मुखादित्यादिपूर्वोक्तरूपं प्रियवचनमुक्ता भाषिता विदर्भभूमीपतेर्वंशेन कुलेन मुक्ता जनिता, तथा स्फुरन्ती दीप्यमानकान्तिः शोभासा सा भैमी, अथ नलवचनानन्तरं स्मितांशुजालं विततान, तदेव नलाय प्रीतिदानमिव ददावित्यर्थः। केव। दिवः सकाशात् क्षीणपुण्यतया स्वेच्छया वा कृतावतारा भूलोकमागता रोहिणी तारेव। स्फुरन्ती किरणजालं विततारेति उत्प्रेक्षा, उपमा वा। वंशः कुलमेव वंशो वेणुस्तत्र जाता देवधार्य्या मुक्ता मौक्तिकरूपा। कृतावतारेत्यत्र तरणं तारः, ऋदोरप् (पा० ३।३।५७)। तदस्मात् प्रज्ञादित्वात् स्वार्थेऽणि, पश्चादवशब्देन सह सुपा (पा० २।१।४) इति समासः ॥ १०५ ॥

स्वेति। सा धरातुरासाहं भूमीन्द्रमित्याह स्म। इति किं। हे प्रिय, इन्द्ररूपं त्वन्मुखमितिहेतोश्चन्द्ररूपत्वेनात्मस्तुतौ मां नियुज्याज्ञाप्य शशिनः प्रशस्तौ वर्णनविषयेऽत्युदास्तेऽतितरामुदासीनो भवति, एतत्स्थाने युक्तं। हेतुमेवाह। इति किं "सतामेत-

स्थानेऽत्युदात्ते शशिनः प्रशस्तौ
धरातुरासाहमिति स्म साऽऽह ॥ १०६ ॥
तयेरितः प्राणसमः सुमुख्या
गिरं परीहासरसोत्किरां सः।
भूलोकसारः स्मितभाक् तुषार-
भानुम्भणिष्यन् सुभगाम्बभाण ॥ १०७ ॥

दकर्त्तव्यं परनिन्दाऽऽत्मनः स्तुतिः" इत्यादिवचनात् स्वयमात्मनैव स्ववर्णना आत्मनस्तुतिर्नार्हति न युक्तेति। इयत्पर्यन्तं मया चन्द्रो वर्णित इदानीं त्वया वर्णनीयस्तूष्णींभावो युक्त इत्याशयेन भैमी चन्द्रस्तुतौ तं सोत्प्रासं प्रावर्त्तयदिति भावः। तुरासाहमित्यत्र द्वतीयसर्गे धरातुरासाहेत्येतच्छ्लोकस्थाऽऽशङ्का स्मातव्या। तत्रोत्तरं। इन्दुरूपं त्वन्मुखं चन्द्ररूपात्मस्तुतौ मां नियुङ्क्ते शशिनः प्रशस्तौ अत्युदात्ते साऽहं धरावदतुराऽनुत्तानवेगा वा पृथ्वीवद् गम्भीरेत्यर्थः। अर्थात् तमाह स्मेति ज्ञातव्यं ॥ १०६ ॥

तयेति। स भूलोके सारः श्रेष्ठतमो नलः स्मितवाक् तुषारभानुं चन्द्रं भणिष्यन् वर्णयिष्यन् सन् सुभगां सौभाग्यवतीं भैमीं बभाण। किम्भूतः। तया सुमुख्या भैम्या परीहासरसस्योत्किरामुद्भावयित्रीं गिरमीरित उक्तः। तथा प्राणसमोऽतिप्रेयान्, तथा चन्द्रवर्णने प्रेरितः सन् परीहासरसोत्किरां गिरं बभाणेति वा। उत्किरां, इगुपधेति (पा॰ ३।१।१३५) कः, पूर्व्वेण षष्ठीसमासः। भणिष्यन् हेतौ लृटः शता ॥ १०७ ॥

तवानने जातचरीं निपीय
गीतिन्तदाकर्षनलोलुपोऽयं।
हातुं न जातु स्पृहयत्यवैमि
विधुं मृगस्त्वद्वदनभ्रमेण॥ १०८॥
इन्दोर्भ्रमेणोपगमाय योग्ये
जिह्वा तवास्ये विधुवास्तुमन्तं।

तवेति। हे प्रिये, अयं मृगः तवानने जातचरीं भूतपूर्वां गीतिं स्वरमाधुरीं निपीय सादरमाकर्ण्य इदानीमपि तस्या भङ्गीतेराकर्णनाय लोलुपोऽतितरां लुब्धोऽतिमादृश्यात् त्वद्वदनभ्रमेण विधुं हातुं जातु कदाचिदपि न स्पृहयतीत्यहमवैमि। मृगा हि गानप्रिया भवन्तीति चन्द्रं त्वन्मुखभ्रान्त्या त्यक्तुं नेच्छतीत्यहं शङ्के इत्यर्थः। जातचरी भूतपूर्वे चरट् (पा० ५।३।५३) लोलुपः यङन्तात् पचाद्यचि, यङोचि चेति (पा० २।४।७३) यङो लुक्॥ १०८॥

इन्दोरिति। अतिसादृश्यादिन्दुरेवेदमिति इन्दोर्भ्रमेण मृगस्योपगमाय योग्ये प्राप्तुमर्हे तवास्ये वर्त्तमाना जिह्वा कर्त्री गीत्या वर्णस्वरमाधुर्या कृत्वा विधुरूपं वास्तु वसतिगृहं तद्विद्यते यस्य तं विधुवास्तुमन्तं चन्द्रमध्यस्थमपि मृगं कर्षति। गितेर्मधुरतरत्वान्मृगस्य च प्रियगानत्वात् स्वसमीपमानयतीत्यर्थः। तदाकर्षणसाधनमुत्प्रेक्षते, वत्स्यता आगमिष्यता मृगस्य वासार्थं बन्धनं करिष्यता, नेत्रद्वयेन पाशीबभूवे किं, तद्रूपया बन्धन-

गीत्या मृगं कर्षति वल्गना किं
पाशीबभूवे नयनद्वयेन ॥ १०९ ॥
आप्यायनाद्वा रुचिभिः सुधांशोः
शैत्यात्तमःकाननजन्मनो वा।
यावन्निशायामथ घर्मदुःस्थ-
स्तावद् व्रजत्यह्नि न शब्दपान्थः ॥ ११० ॥

रज्ज्वा समाकर्षतीत्यर्थः। अन्याऽपि शबरी गीत्या मृगमाकृष्य पाशेन बध्नाति। भवन्मुखं निष्कलङ्कममृताधिकगीतियुक्तञ्च। चन्द्रस्तु सकलङ्क इति भावः। चन्द्रवर्णनावसरेऽपि मध्ये मध्ये भैमीमुखवर्णना अनुरागातिशयसूचनार्था। अयं श्लोकः क्षेपक इति केचित्॥ १०९॥

गगनस्थाऽपि मृगा भैमीमुखगीतिं कथमशृणोदित्याशङ्क्याह। आप्यायनादिति। शब्दरूपः पान्थो नित्यपथिको निशायां यावद् व्रजति तावदथ पश्चात् साकल्येन वाऽह्नि न गच्छति यस्माद्दिने घर्मेणातपेन दुःस्थः सन्तप्तः, तस्माद्दिनेऽल्पमेव गच्छतीत्यर्थः। रात्रौ दूरगमने हेतुमाह। सुधांशोरमृतरूपाभी रुचिभिराप्यायनादुज्जीवितबलत्वाद्वा तम एव काननं वनं तस्माज्जन्म यस्य गाढान्धकारजाताच्छैत्याद्वा तत्र तमोऽभावे तमसः सम्भवादौष्ण्याभावाच्छैत्यं। अत एव रात्रौ बहु गच्छति दिने चौष्ण्येन श्रान्त इव बहु न गच्छति। शब्दा हि स्वभावादतिदूरेऽपि श्रूयन्ते दिवा तु न तथा। पथिकोऽपि रात्रौ

दूरेऽपि तत्तावकगानपाना-
लब्धावधिः स्वादुरसोपभोगे।
अवज्ञयैव क्षिपति क्षपायाः
पतिः खलु स्वान्यमृतानि भासः॥ १११॥

अस्मिन्न विस्मापयतेऽयमस्मा-
श्चक्षुर्बभूवैष यदादिपुंसः।

शैत्याद् दूरं गच्छति, दिने चाल्पं। दूरश्रवणप्रतिपादकोऽयं श्लोकः॥ ११०॥

दूरेऽपीति। हे प्रिये खलु निश्चितं क्षपायाः पतिश्चन्द्रो भासश्चन्द्रिका एव स्वान्यमृतानि क्षिपति, अधो मुञ्चति। किम्भूतः दूरेऽपि अतितरां देशव्यवधानेऽपि तत्प्रसिद्धं मधुरतरं तावकं गानं तस्य पानात् सादरश्रवणाद्धेतोः स्वादुरसोपभोगे माधुर्यातिशयानुभवे विषये लब्धावधिः प्राप्तमर्यादः। उत्प्रेक्षते अवज्ञयैव अनुभूतभवद्गीतमाधुर्य्यापेक्षयाऽन्यमाधुर्यं तयाऽवमाननयैवेत्यर्थः। अयं श्लोको भिन्न एव न तु युग्मं॥ १११॥

अस्मिन्निति। हे तन्वि एष चन्द्र आदिपुंसः श्रीविष्णोर्यद्यस्मात् चक्षुर्बभूवेत्यस्मिन्नेत्रीभवने विषयेऽयं नेत्रभूतश्चन्द्रोऽस्मान्न विस्मापयते आश्चर्य्यं न प्रापयति। अत्रार्थेऽस्माकमाश्चर्य्यं न भवतीत्यर्थः। किल यस्माद्धेतोरत्रिनेत्रादुदितस्योत्पन्नस्यास्य तच्चक्षुर्भवनं कुलानुरूपं कुलोचितं स्वरूपं नेत्ररूपात् कारणाज्जातस्य नेत्रीभवनमुचितमेव तस्मादस्य पुराणपुरुषनेत्रीभवने न कि-

तदत्रिनेत्रादुदितस्य तन्वि
कुलानुरूपं किल रूपमस्य ॥ ११२ ॥
आभिर्मृगेन्द्रोदरि कौमुदीभिः
क्षीरस्य धाराभिरिव क्षणेन।
अक्षालि नीलीरुचिरम्बरस्था
तमोमयीयं रजनीरजक्या ॥ ११३ ॥

स्विदस्माकं चित्रमित्यर्थः। विस्मापयते णित्वं स्मयतेः (पा० ६।१।५७) इत्यात्वं, भीस्मोर्हेतुभये (पा० १।३।६८) इति तङ्। अस्माज्जनान्तरापेक्षया बहुत्वं ॥ ११२ ॥

आभिरिति। हे मृगेन्द्रोदरवत् कृशमुदरं यस्यास्तत्सम्बुद्धिः रजन्येव रजकी तया क्षीरस्य दुग्धस्य धाराभिरेव दृश्यमानाभिर्धवलतराभिः कौमुदीभिः कृत्वाऽम्बरस्था तमोमयीयं नीली कज्जलवत् कालीरुचिः क्षणमात्रेणाक्षालि निरस्ता। रजक्या वसनस्था काली कान्तिर्दुग्धधाराभिः क्षणेन क्षाल्यते। तदुक्तं कलाकोशे।

तैलं घृतेन तक्रेणाज्यं जलैर्दुग्धेन कज्जलं।
नाशयेदम्बरस्थं तु मलं क्षारेण सोमणा ॥ इति ॥

चन्द्रिकादिभिर्गगनं निर्मलीकृतमिति भावः। मृगेन्द्रोदरी (पा० ४।१।५५) नासिकोदरेति ङीष्। ओषधी प्राणिवाचित्वाभावान्नोलीति ङीप्समर्थनीयः। रजकी स्त्रुमः षित्वाङ्ङीप् ॥ ११३ ॥

पयोमुचां मेचकिमानमुच्चै-
रुच्चाटयामास ऋतुः शरद्या ।
अतारि वामोरु तयाऽपि किञ्चि-
न्न प्रोञ्छितुं लाञ्छनकालिमाऽस्य ॥ ११४ ॥

एकादशैकादशरुद्रमौली-
नस्तं यतो यान्ति कलाः किमस्य ।
प्रविश्य शेषाश्च भवन्ति पञ्च
पञ्चेषुतूणीमिषवोऽर्द्धचन्द्राः ॥ ११५ ॥

पय इति । हे वामोरु या शरत् ऋतुः पयोमुचां मेघानां वर्षाकालीनमुच्चकैरतिशयितमपि मेचकीमानं कालिमानमुच्चाटयामास । तया कालिमापनयने दृष्टसामर्थ्यया शरदा यस्य चन्द्रस्य लाञ्छनरूपः कालिमा किञ्चिदल्पमपि प्रोञ्छितुं स्फोटयितुं नापारि । शरदृक्के चन्द्रे मलिमः कलङ्कोऽतितरां शोभत इति भावः । मेचकिमानं वर्णवाचित्वादिमनिच् ॥ ११४ ॥

एकेति । अस्तं यतो गच्छतोऽस्य चन्द्रस्यैकादश कला एकादशानां रुद्राणां मौलीन् प्रतियान्ति, किल गच्छन्तीव । शेषाः पञ्च कलास्तु पुनः पञ्चेषोः कामस्य तूणीमल्पमिषुधिं प्रविश्यार्द्धचन्द्राकारत्वादर्द्धचन्द्राख्या इषवो भवन्ति, विनाशसमयेऽप्ययं परोपकारनिरत इति ध्वन्यते । तूणी अल्पत्वविवक्षया स्त्रीत्वे गौरादित्वाङ्ङीष् ॥ ११५ ॥

निरन्तरत्वेन विधाय तन्वि
ताराप्रसहस्राणि यदि क्रियेत ।
सुधांशुरन्यः स कलङ्कमुक्त-
स्तदा त्वदास्यश्रियमाश्रयेत ॥ ११६ ॥

यत् पद्ममादित्सु तवाननीयां
कुरङ्गलक्ष्मा च मृगाक्षि लक्ष्मीं ।
एकार्थलिप्साकृत एव शङ्के
शशाङ्कपङ्केरुहयोर्विरोधः ॥ ११७ ॥

निरन्तरेति । हे तन्वि ताराणां नक्षत्राणां सहस्राणि निरन्तरत्वेनान्योन्यसम्बन्धतया विधायैकीकृत्य यदि अन्यः सुधांशुः क्रियेत, निर्मीयेत, तदा तर्हि स चन्द्रस्ताराणामकलङ्कत्वात् तन्मयत्वाच्च कलङ्केन मुक्तः सन् त्वदास्यस्य श्रियं शोभामाश्रयेत। क्रियानियतेरविवक्षितत्वाद्भाभावः ॥ ११६ ॥

यदिति । हे मृगाक्षि यत् पद्मं तवाननीयां मुखसम्बन्धिनीं लक्ष्मीमादित्सु ग्रहीतुकामं कुरङ्गलक्ष्मा चन्द्रश्च तव मुखशोभां ग्रहीतुकामः तयोः शशाङ्कपङ्केरुहयोरेव विरोधः स त्वन्मुखशोभालक्षण एकोऽर्थस्तस्य लिप्साकृतः प्राप्तिवाञ्छानिमित्त एवेत्यहं शङ्के । एकद्रव्याभिलाषित्वेन विरोधः सुप्रसिद्धः । चन्द्रपद्मयोरपि विरोधः प्रसिद्ध एव । चन्द्रपद्माभ्यां सकाशात् ते मुखमधिकमिति भावः । आदित्सु, चन्द्रपक्षे लिङ्गविपरिणामः । लक्ष्मीं, न लोकेति (पा० २।३।६९) षष्ठीनिषेधः ॥ ११७ ॥

लब्धं न लेखप्रभुणाऽपि पातुं
पीत्वा मुखेन्दोरधरामृतन्ते।
निपीय देवैर्विवशीकृतायां
घृणां विधोरस्य दधे सुधायां॥ ११८॥

एनं स बिभ्रद्विधुमुत्तमाङ्गे
गिरीन्द्रपुत्रीपतिरोषधीशं।
अश्नाति घोरं विषमब्धिजन्म
धत्ते भुजङ्गञ्च विमुक्तशङ्कः॥ ११९॥

लब्धमिति। हे प्रिये, अहं सर्व्वैरपि देवैर्विवशीकृतायां निःशेषं पीत्वा भुक्तशेषीकृतायामस्य विधोश्चन्द्रस्य सुधायां घृणां जुगुप्सां दधे धारयामि। किं कृत्वा। लेखानां देवानां प्रभुणेन्द्रेणापि पातुं न लब्धं, कृतप्रयत्नस्यापि तस्यावरणात् तेन दुष्प्रापं, केनाप्यनुच्छिष्टमित्यर्थः। ते मुखेन्दोरधररूपममृतं निपीय पीत्वा। चन्द्रसुधायाः सकाशात् त्वदधरामृतं स्वादुतरमिति भावः। अन्योऽप्युच्छिष्टभोजने जुगुप्सां धारयतीत्यर्थः॥११८॥

एनमिति। स गिरीन्द्रपुत्रीपतिः शम्भुरेनमोषधीशं विधुमुत्तमाङ्गे शिरसि बिभ्रद्धारयन् सन्, अब्धिजन्म समुद्रोत्पन्नं घोरं दारुणमपि विषमश्नाति, मुक्तशङ्को भुजङ्गं सर्पं वासुकिञ्च धत्ते। शम्भोरप्युपकारकत्वेन पूज्यः श्रेष्ठोऽयमिति भावः। ओषधिस्वामिनोऽस्य शिरसि धारणादेव निःशङ्कं विषं भक्षयति सर्पांश्च धारयतीत्युत्प्रेक्षा। भुजङ्गं जात्यभिप्रायेणैकवचनं॥११९॥

नास्य द्विजेन्द्रस्य बभूव पश्य
दारान् गुरोर्यातवतोऽपि पातः।
प्रवृत्तयोऽप्यात्ममयप्रकाशान्
नघ्नन्ति न घ्नन्तिमदेहमाप्तान्॥ १२०॥

नेति। हे प्रिये द्विजेन्द्रस्यास्य चन्द्रस्यास्य गुरोर्बृहस्पतेर्दारान् भार्य्यां यातवतोऽपि गुरुतल्पगामिनोऽपीत्यर्थः पातः स्वर्गाद् भ्रंशः, अथ च पातित्यं न बभूव पश्य। चित्रमेतद्विलोकयेत्यर्थः। अथ वा युक्तमेतत्। प्रवृत्तयो धर्म्माधर्म्महेतुकर्म्मारम्भा अपि आत्ममय आत्मस्वरूपमेव प्रकाशो येषां तान् प्रकाशान्तरनिरपेक्षान् प्रकाशस्वरूपान्, अथ च परमात्मैव प्रकाशो येषां तान् परमात्मस्वरूपातिरिक्तप्रकाशानभिज्ञान् स्वप्रकाशात्मवादिनो ब्रह्मज्ञानिनोऽन्तिमदेहं तेजोरूपशरीरं पूर्णतां वा प्राप्तान्, अथ चानन्तरभाविमोक्षत्वात् प्रवीणशरीरप्रवाहापेक्षया शेषशरीरं प्राप्तान् जीवन्मुक्तान् पुरुषान् हि यस्मात् नघ्नन्ति शुभाशुभफलसम्बन्धेन न संबध्नन्तीत्यर्थः। तेषां तेजोविशेषेण प्रत्यवायो न विद्यत इति प्रामाणिकवचनात् तेजोरूपस्यास्य चन्द्रस्य पातो नाभूदिति युक्तमेव, नात्र चित्रमिति भावः। चन्द्रोऽप्यात्ममयप्रकाशः, अन्तिमदेहं सम्पूर्णतां प्राप्तः॥ १२०॥

स्वधाकृतं यत् तनयैः पितृभ्यः
श्रद्धापवित्रं तिलमिश्रमम्भः ।
चन्द्रं पितृस्थानतयोपतस्थे
तदङ्करोचिः खचिता सुधेव ॥ १२१ ॥

पश्योच्चसौधस्थितिसौख्यलक्ष्ये
त्वं केलिकुल्याम्बुनि बिम्बमिन्दोः ।
चिरं निमज्ज्येह सतः प्रियस्य
भ्रमेण यच्चुम्बति राजहंसी ॥ १२२ ॥

स्वधेति । तनयैः पुत्रैः श्रद्धया परलोकास्तित्वबुद्ध्या वितीर्णत्वात् पवित्रं कृष्णतिलैर्मिश्रं मिश्रितं पितृभ्यः स्वधाकृतं यदम्भः पितृस्थानतया "चन्द्रो वै पितृलोकः" इति श्रुतेः । पितृलोकतया चन्द्रमुपतस्थे चन्द्रेण सङ्गतमभूदित्यर्थः । तत् कृष्णतिलमिश्रजलमेवाङ्कस्य कलङ्कस्य या रोचिः कान्तिः तया खचिता मिश्रिता सुधा पीयूषं । कृष्णतिला एव कलङ्कास्तत्संसृष्टं जलमेव पीयूषं न त्वन्यः, कलङ्को न चान्यत् पीयूषमित्यर्थः । श्रद्धेति पितृलोकप्राप्तौ हेतुगर्भविशेषणं । उपतस्थे सङ्गतकरणे तङ् ॥ १२१ ॥

पश्येति । हे प्रिये त्वमुच्चसौधस्थित्या कृत्वा सौख्येन निरन्तरायं लक्ष्ये दृश्ये केलिकुल्याया अम्बुनि तदिन्दोर्बिम्बं पश्य । तत् किं । राजहंसी इह कुल्याजले निमज्ज्य चिरं सतोऽन्तर्वर्त्तमानस्य प्रियस्य राजहंसस्य भ्रमेण यच्चन्द्रबिम्बं चुम्बति । सौख्यं स्वार्थे सुखिनो भाव इति भावे वा ष्यञ् । सौस्थ्येति पाठे

सौवर्गवर्गैरमृतं निपीय
कृतोऽह्नि तुच्छः शशलाञ्छनोऽयं।
पूर्णोऽमृतानां निशि तेऽत्र नद्यां
मग्नः पुनः स्यात् प्रतिमाच्छलेन॥१२३॥
समं समेते शशिनः करेण
प्रसूनपाणाविह कैरविण्याः।

सूक्ष्मलेन लक्ष्ये। उच्चतरदेशस्थितं प्रत्यधोदेशस्थितं वस्तु सूक्ष्मं प्रतिभातीत्यर्थः॥१२२॥

सौवर्गेति। स्वर्गे भवा सौवर्गा देवास्तेषां वर्गैर्वृन्दैरमृतं निपीयाह्नि तुच्छो रिक्तः कृतोऽयं शशलाञ्छनो निशि ते तवात्र क्रीडानद्यां प्रतिमाच्छलेन प्रतिविम्बव्याजेन मग्नः सन् पुनरमृतानां जलैरथ च पीयूषैः पूर्णः स्यात्, भवेदित्यहं सम्भावयामीत्यर्थः। एतेन नदीजलस्यामृतत्वं सूचितं। अह्नि तुच्छः कृतोऽपि पुनः क्रमेणामृतैः पूर्णः सन् रात्रौ तत्र क्रीडानद्यां प्रतिमाव्याजेन मग्नः पुनः पानभयादिव पलाय्य निलीनः स्यादित्यहं शङ्क इति वा। पूर्णोऽमृतानां तृप्यर्थत्वात् करणे षष्ठी॥१२३॥

सममिति। इह तव क्रीडानद्यां कैरविण्याः कुमुदिन्याः प्रसूनरूपे पाणौ शशिनः करेण रश्मिनाऽथ च पाणिना समं सह समेते सङ्गते सति मधु पुष्परस एव जलं यस्य तस्य त्यागजलस्य कन्यादानसम्बन्धिसङ्कल्पोदकस्याभिषेकः कर्त्ताऽनयोस्र-

विवाहलीलामनयोरिवाह
मधुच्छलत्यागजलाभिषेकः ॥ १२४ ॥

विकासिनीलायतपुष्पनेत्रा
मृगीयमिन्दीवरिणी वनस्था ।
विलोकते कान्तमिहोपरिष्टा-
न्मृगन्तदेषाऽऽननचन्द्रभाजं ॥ १२५ ॥

न्द्रकुमुदिन्योर्विवाहलीलामाहेव सूचयतीव। चन्द्रकरस्पर्शमा-त्रेण कुमुदानि विकसितानि मकरन्दपूर्णानि च जातानीति भावः। विवाहे उभयोः पाणिमेलनं, पाणौ दानजलाभिषे-कोऽपि भवति॥ १२४ ॥

विकासीति। हे प्रिये इह तव केलिमयां वनस्था जलनि-वासिनी अथ च काननस्था, तथा विकासि नीलमायतं विस्तृतञ्च पुष्पमेव नेत्रं यस्यास्तत्पुष्पनेत्रा चेयं प्रत्यक्षदृश्या इन्दीवरिणी यस्मान्मृगी वनस्थत्वाद्विकासिनीलायतपुष्पनेत्रत्वाच्च हरिणी तत्तस्मादिन्दीवरिणीरूपा मृगी आननमिव यश्चन्द्रः साम-र्थ्यात् त्वदाननतुल्यो यश्चन्द्रस्तद्भाजं तत्स्थं कान्तं सुन्दरमथ च तुल्यजातीयं स्वप्रियं मृगमुपरिष्टाद्विलोकते। विकसितकुसु-मनेत्राणि ऊर्द्ध्वप्रसारितानि दृश्यन्ते तर्हि प्रायेण चन्द्रस्थमुपरि वर्त्तमानं निजभर्त्तारं मृगं मृगी पश्यतीत्यर्थः। त्वदाननमेव यश्चन्द्रस्तत्स्थं चन्द्रत्वादनुमेयमृगमुपरिष्टात् पश्यति। त्वं प्रा-सादोपरि वर्त्तसे, इयञ्चाधोदेशे वर्त्तते नवेति पदच्छेदं कृत्वा

तपस्यतामम्बुनि कैरवाणां
समाधिभङ्गे विबुधाङ्गनायाः ।
अवैमि रात्रेरमृताधरोष्ठं
मुखं मयूखस्मितचारु चन्द्रं ॥ १२६ ॥

चन्द्रभाजं निजप्राणेशं मृगमुपरिष्टान्न पश्यतीति न किन्तु पश्यत्येवेति व्याख्येयं । वनस्था मृगी हि नीलायतनेत्रा मती स्वकान्तं मृगमितस्ततो विलोकयतीत्यर्थः । शशमित्यपपाठः । मृगपर एव वा व्याख्येयं ॥ १२५ ॥

तपस्यतामिति । हे प्रिये, अम्बुनि सदा निवासात् तत्र तपस्यतां कैरवाणां कुमुदानां समाधेर्दिवासङ्कोचस्यैव ध्यानस्य भङ्गे त्याजने विषये निमित्ते वा विबुधाङ्गनाया अप्सरोरूपाया रात्रेश्चन्द्रं मुखमेवाहमवैमि मन्ये । किम्भूतं मुखं । अमृतमेवाधरोष्ठं यस्याः, अथ चामृततुल्योऽधरोष्ठं यस्य यद्वाऽमृतमधरं यस्मात् पीयूषादधिकरस ओष्ठो यस्य, तथा मयूखा एव स्मितं । अथ च तत्समाधिभङ्गादेव चन्द्रकरवदुज्ज्वलं यत् स्मितं तेन वा चारु । चन्द्रविशेषणे लिङ्गविपरिणामः । देवाङ्गनानामप्येवंविधं मुखं रात्रौ जले तपस्यतां दुष्करं तपश्चरतामपि मुनीनां समाधिभङ्गं करोति । तपस्यतामिति तपश्चरन्तीत्यर्थे कर्मणो रोमन्थतपोभ्यामिति (पा० ३।१।१५) क्यङ्, तपसः परस्मैपदञ्चेति शता ॥ १२६ ॥

अल्पाङ्कपङ्का विधुमण्डलीयं
पीयूषनीरा सरसी स्मरस्य ।
पानात् सुधा नाम जलेऽप्यमृत्यु
चिह्नं बिभर्त्यत्रभवं स मीनं ॥ १२७ ॥

तारास्थिभूषा शशिजह्नुजाभृ-
च्चन्द्रांशुपांशुच्छुरितद्युतिर्द्यौः ।
छायापथास्कन्नफणीन्द्रहारा
खं मूर्त्तिमाह स्फुटमष्टमूर्त्तेः ॥ १२८ ॥

अल्पेति । अल्पोऽङ्क एव पङ्को यस्यां, तथा पीयूषमेव नीरं यस्यां सेयं विधुमण्डली स्मरस्य सरसी विशालं सर एव, अत एव स स्मरोऽत्रभवमस्यां चन्द्रसरस्यां समुत्पन्नं सुधानामेतदीयामृतपानीयजले अन्तरहितेऽपि स्थले जलाभावेऽपि वाऽमृत्यु मरणरहितं मीनं चिह्नमथ च सुधासरोजातत्वादनुमापकं लिङ्गं बिभर्त्ति । मीना हि जलाद्वहिर्भूता म्रियन्त एव, अयन्तु न म्रियते तस्माच्चन्द्रीमृतसरसीभवत्वात् सदामृतपानाज्जलाभावेऽपि मृत्युरहित इति सर्व्वं युक्तमित्यर्थः ॥ १२७ ॥

तारेति । द्यौः स्वमात्मानमष्टमूर्त्तेर्हरस्य मूर्त्तिं शरीरं स्फुटं व्यक्तमाह ब्रवीति, यतः तारा एवास्थीनि तद्रूपा भूषा यस्याः, तथा शशिनमेव जह्नुजां गङ्गां बिभर्त्तीति तद्भृत्, तथा चन्द्रांशव एव पांशवो भस्मानि तैः छुरिता कृताङ्गरागा द्युतिर्यस्याः सा, तथा छायापथा गगने दण्डाकारा दक्षिणोत्तरस्थाः

एकैव तारा मुनिलोचनस्य
जाता किलैतज्जनकस्य तस्य ।
ताताधिका सम्पदभूदियं तु
सप्तान्विता विंशतिरस्य ताराः ॥ १२९ ॥
मृगाक्षि यन्मण्डलमेतदिन्दोः
स्मरस्य तत्पाण्डुरमातपत्रं ।

धवला रेखा कृता यस्य छायापथरूपः फणीन्द्रो वासुकिः स एव मुक्ताहारो यस्याः सा हरमूर्त्तिरप्युक्तविशेषणविशिष्टा, धौरन्तरादृशीति मूर्त्त्यन्तरापेक्षया व्यक्तमेव नैशस्य मूर्त्तिर्गगनं कथयतीवेत्यर्थः ॥ १२८ ॥

एकेति । एतस्य चन्द्रस्य जनकस्य तस्य प्रसिद्धस्यात्रिमुनेर्लोचनस्य तारा कनीनिका किलैकैव जाताऽभूत् किल पुराणादौ । अस्य तत्पुत्रस्य तु पुनरियं दृश्यमाना सम्पत् तातात्त्रिलपितुरत्रिनेत्रात् सकाशादधिका, यद्यस्मादस्य ताराः कनीनिका अथ च नक्षत्राणि सप्तभिरन्विता विंशतिरभूदिति फलं । पितुः सकाशादधिकसम्पत्तिमत्वात् सभाग्योऽयमिति भावः । "सप्तविंशतिमिन्दवे" इति दक्षः सप्तविंशतिकन्या अश्विन्यादिकाश्चन्द्राय ददाविति पुराणं ॥ १२९ ॥

मृगाक्षीति । हे मृगाक्षि हरिणीनेत्रे यदेतत् प्रत्यक्षदृश्यमिन्दोर्मण्डलं, तत् स्मरस्य पाण्डुरं श्वेतं साम्राज्यसूचकमातपत्रमेव । श्वेतच्छत्रदर्शने सति सम्राजो यथा भवन्ति पूर्णधवल-

यः पूर्णिमानन्तरमस्य भङ्गः
स छत्रभङ्गः खलु मन्मथस्य ॥ १३० ॥
दशाननेनापि जगन्ति जित्वा
योऽयं पुराऽपारि न जातु जेतुं ।
ग्लानिर्विधोर्मानिनि सङ्गतेयं
तस्य त्वदेकाननिर्जितस्य ॥ १३१ ॥

चन्द्रमण्डलस्य चोद्दीपकत्वात् तद्दर्शने सर्व्वेऽपि कामस्य वश्या भवन्ति तस्मादेतत् कामस्य श्वेतातपत्रमेवेति भावः। यश्च पूर्णिमानन्तरमेतस्य छत्रभूतस्येन्दुमण्डलस्य भङ्गो मोटनं कलाच-यश्च स मन्मथस्य छत्रभङ्गः खलु, छत्रस्य मोटनं राज्यक्षयं सूचयति। कृष्णपक्षे चोद्दीपकमित्रचन्द्रक्षये कामः क्षीण एव तस्मात् कृष्णपक्षे योऽस्य भङ्गः स कामस्य छत्रभङ्ग इव सएव वेति भावः। खलूत्प्रेक्षायां, निश्चये वा ॥ १३० ॥

दशेति। दिग्विजयोद्यतेन दशाननेनापि जगन्ति जित्वा-ऽपि योऽयं चन्द्रः पुरा पूर्व्वं जातु कदाचिदपि जेतुं नापारि हे मानिनि स्वमुखस्पर्द्धिनं चन्द्रमसहमाने नैमित्तस्यास्य विधो-रियं प्रत्यक्षदृश्यकलङ्करूपा ग्लानिर्लज्जा सङ्गता लग्ना, अयच युक्तैव। यतस्त्वएवैकेनाननेन नितरां जितस्य। यो हि दशाननेन दशभिरपि मुखैर्जेतुं नाशकि तस्य स्त्रियास्तवैकेन मुखेन निर्जि-तत्वे लज्जया मालिन्यमुचितमेवेत्यर्थः। त्वन्मुखमेतस्मादधिक-मिति भावः। लज्जया ग्लानिर्भवतीति प्रतीयमानोत्प्रेक्षा।

दृष्टा निजां तावदियन्त्यहानि
जयन्नयं पूर्व्वदशां शशाङ्कः ।
पूर्णस्त्वदास्येन तुलां गतस्ते-
दनन्तरं द्रक्ष्यसि भङ्गमस्य ॥ १३२ ॥
सत्त्राणि रामः परिभूय रामात्
सत्त्राद्यथाऽभज्यत स द्विजेन्द्रः ।

रावणस्तन्त्रं जेतुं प्रवृत्तस्तुषाराग्निना दह्यमानः कम्पमानतनुः तमजित्वैव परावृत्त इति उत्तरकाण्डे कथा ॥ १३१ ॥

दृष्ट इति । अयं शशाङ्क इयन्त्येतावन्ति अहानि शुक्लपक्ष-दिनानि तावदवधीकृत्य निजां पूर्व्वदशां पूर्व्वपूर्व्वदिनावस्थां जयन् निकाममुत्तरोत्तरदिनेषु कलावृद्ध्याऽधिकीभवंस्त्वया दृष्टः, इयन्ति दिनानि जयंस्तावज्जयन्नेव दृष्ट इत्यवधारणार्थो वा तावच्छब्दः, अनयैव परिपाट्या पूर्णबिम्बोऽयं त्वदास्येन सह तुल्यं साम्यमथ च तौलनकाष्ठं गत आकठमुत्तमाङ्गनन्तरं निकटं त्वमेव श्वः प्रभृत्येवास्य भङ्गं पराजयं कलाक्षयञ्च द्रक्ष्यसि, उ-त्तमेन सह स्पर्द्धमानो हि भङ्गं प्राप्नोत्येव । तुलाधिरोहणेन हि हीनस्य पराजयः सर्व्वैर्दृश्यते । अहानि अत्यन्तसंयोगे द्वितीया । त्वदास्येनेति तुल्यार्थैरतुलोपमाभ्यामिति (पा० २।३।७२) नि-षेधेऽपि सह योगे तृतीया । तथा च कालिदासमन्तुलां यदा-रोहति दन्तवाससेत्यादि ॥ १३२ ॥

सत्त्राणीति । द्विजेन्द्रो ब्राह्मणश्रेष्ठस्त्वात् भार्गवप्रसिद्धपराक्र-

तथैव पद्मानभिभूय सर्व्वा-
स्त्वदास्यपद्मात् परिभूतिमेति ॥ १३३ ॥
अन्तः सलक्ष्मीक्रियते सुधांशो
रूपेण पश्ये हरिणेन पश्य।

सो रामः परशुरामः सर्व्वाणि क्षत्राणि परिभूयापि क्षत्रादेव रामाद्दाशरथेः सकाशात् यथाभज्यत पराभवं प्राप तथा तेनैव प्रकारेण एषोऽपि द्विजराजः सर्व्वान् पद्मानभिभूय सङ्कोचकरणात् पराभूयापि त्वदक्त्रपद्मात् सकाशात् परिभूतिं पराभवमेति सकलक्षत्रियाधिक्यं यथा श्रीरामस्य तथा सर्व्वपद्माधिक्यं त्वन्मुखपद्मस्येति भावः। वा पुंसि पद्ममित्यमरः ॥ १३३ ॥

अन्तरिति। हे पश्ये चन्द्रदर्शनप्रवृत्ते भैमि हरिणेन पाण्डुरेण रूपेण वर्णेन कर्त्रा शुधांशोरन्तः प्रान्तभागः पूर्व्वमश्रीकोऽपीदानीं सलक्ष्मीक्रियते सलक्ष्मीकः क्रियते त्वं पश्य। अथ च चन्द्रस्य मध्यं हरिणेन मृगेन कर्त्रा रूपेण स्वीयनीलवर्णेन कृत्वा असलक्ष्म सलक्ष्म क्रियते सलक्ष्मीक्रियते सकलङ्कं क्रियत इत्यर्थः। पश्य एष स नल इत्यमुना प्रकारेणास्य चन्द्रस्यान्तं पर्य्यन्तभागं कदाचिदीक्षमाणां भैमीमदर्शत्, दर्शयामास कदाचिच्चान्तर्मध्यभागं दर्शयामास। अङ्गुल्यादिना चन्द्रस्येतनी लप्रान्तमध्यभागप्रदर्शनपूर्व्वश्लिष्टपदैस्तया सह क्रीडां चकारे भाव इति मध्ये कवेरुक्तिः। हरिणः पाण्डुरः पाण्डुरित्यमरः अन्त इत्यकारान्तमेकत्र अन्तरित्यव्ययमपरत्र मध्यवाचि। त

इत्येष भैमीमदर्शद्दृश्यं
कदाचिदन्त्तं स कदाचिदन्तः ॥ १३४ ॥
सागराम्बुनिविलोचनोदरा-
द्यद्द्वयादजनि तेन किं द्विजः ।
एवमेव च भवन्नयं द्विजः
पर्य्यवस्यति विधुः किमत्रिजः ॥ १३५ ॥

न्मीशब्दस्य समासान्तविधेरनित्यत्वात् कबभावे समन्मीशब्दाचिः । पक्षे सन्नाशब्दाचिः । पश्य पाघ्राध्मेत्यादिना (पा० ७। ३।७८) कर्त्तर्य्येव शः । दृशेर्बुध्यर्थत्वादिति बुद्धीति (पा० १।४। ५७) अणौ कर्त्तुर्णौ कर्मत्वाद्भैमीमिति द्वितीया ॥ १३४ ॥

सागरादिति । अयं चन्द्रः सागराम्बुनिविलोचनोदराभेत-द्रूपाद्द्वयात् सकाशाद् यद्यस्मादजनि, उत्पन्नस्तेन कारणेन द्वाभ्यां जातत्वाद् द्विजः किं, एवमेव चानयैव रीत्या द्वाभ्यां जातत्वादेव द्विजो भवन्नप्ययं विधुरत्रेर्मुनेर्जातः किं कथं पर्य्यवस्यति, द्वाभ्यां जातत्वे सत्यपि अत्रिमुनेरेव जात इति तात्पर्य्यवृत्त्या कथमुच्यत इत्यर्थः । अथ चैवमेव यथा अनेन प्रकारेण द्विजत्वं तथैवात्रिमुनिजो भवन्नयं द्विजः पर्य्यवस्यति । किं द्वाभ्यां जातत्वात् यथा द्विज उच्यते तथा द्विजादत्रिमुनेर्जातत्वादपि द्विज उच्यते, द्विजोत्पन्नो हि द्विज एव भवतीत्यर्थः । अथ च द्वाभ्यां जातत्वाद्द्विजोभवन्नेवं न त्रिभ्यो जात इत्यत्रिज इति तात्पर्य्यवृत्त्या कत्थते । यो हि द्वाभ्यां जायते स त्रिजो न

तारविहारभुवि चन्द्रमयीं चकार
यन्मण्डलीं हिमभुवं मृगनाभिवासां।
तेनैव तन्वि सुकृतेन मते जिनस्य
स्वर्लोकलोकतिलकत्वमवाप धाता॥ १३६॥

भवति, एवमेवायमत्रिजः कथ्यते किमित्यर्थः। द्विजस्त्रिजो न भवत्येव ॥ १३५ ॥

तारेति। हे तन्वि कृशाङ्गि धाता ताराणां नक्षत्राणां विहारभुवि गगने चन्द्रमयीं मण्डलीं बिम्बं जिनस्य पुराणपुरुषस्य श्रीविष्णोर्मते ऽनुमतौ सत्यां तदादिष्टः सन् यच्चकार निर्म्ममे तेनैव सुकृतेन शोभनेन लोकोत्तरव्यापारेण कृत्वा स्वर्लोकः स्वर्गभुवनं तत्सम्बन्धिनां लोकानां सुराणां मध्ये तिलकत्वं श्रैष्ठ्यमाप। किम्भूतां मण्डलीं। हिमस्य तुषारस्य भुवं स्थानभूतामतिशीतलां, तथा मृगस्य नाभौ मध्ये वासो यस्यास्तां, यस्या मध्ये मृगोऽस्तीति यावत्। तादृशीं। अन्येषां सुराणामेतादृग्व्यापारकरणे सामर्थ्याभावात् ब्रह्मैव श्रेष्ठोऽभूदित्यर्थः। अथ च ताराया बुद्धदेव्या विहारस्थाने हिमभुवं शीतलां शुभ्रत्वाद्धिमाचलरूपां वा, तथा मृगनाभेः कस्तूर्याः वासः परिमलोऽवस्थानं वा यस्यां तां कस्तूरीमिश्रितां चन्द्रमयीं कर्पूरमयीं कर्पूरराशिं यच्चकार तेनैव पुण्येन जिनमते बौद्धदर्शने, ब्रह्मा सुरश्रेष्ठत्वमधत्त। बौद्धा हि बुद्धदेवप्रासादे यस्तत्पूजार्थं कस्तूरीराशिं करोति स लोकमध्ये श्रेष्ठो भवतीति स्वदर्शने प्रत्यप

इन्दुं मुखाद्बहुतृणं तव यद्गृणन्ति
नैनं मृगस्त्यजति तन्मृगतृष्णयेव।
अत्येति मोहमहिमा न हिमांशुबिम्ब-
लक्ष्मीविडम्बिमुखि वृत्तिषु पामरेषु॥ १३७॥

दयम्। ब्रह्मा चैवमकृत तस्मादेव सर्वश्रेष्ठो जात इत्यर्थः। नेनै-
वेति पाठे उत्प्रेक्षा। बृहद्देव्यां मता तारा॥ १३६॥

इन्दुमिति। हे हिमांशुबिम्बस्य लक्ष्म्याः शोभाया विडम्बि
स्वस्मान् न्यूनत्वात् परिहासकारि ततोऽप्यधिकशोभं मुखं यस्या-
स्तादृशि भैमि पण्डिता इन्दुं तव मुखात् सकाशात् लक्ष्म्यसम-
पेत्य वा बहुतृणमीषदसमाप्तं तृणं तृणत्वमपि यस्य पूर्णसम-
स्पन्नं तृणादपि निःसारमिति यावत्। अथ च बह्वधिकं तृणं
यस्मात् तृणादपि निःसारं यद्यस्मात् गृणन्ति, तत्तस्मादेतास्मृग
एनं चन्द्रं मृगसम्बन्धिन्या तृष्णया कामसलक्षणकत्वेन भिन्ना-
र्थेनैवाथ वा चन्द्रे प्रयुक्तस्य बहुतृणशब्दस्य बहुवतम् तृणस्य
बहूनि तृणानि यस्मिंस्तादृशमित्येव रूपार्थग्रहणरूपया भ्रा-
न्त्यैव न त्यजति। मृगो हि बहु च तृणं बहुतृणं देशं वा न
मुञ्चति। नन्वनुभवे सत्यप्यसमारं कथं भ्रान्तिवाहुल्यमित्याश-
ङ्क्यार्थान्तरन्यासमाह। पामरेषु पशुसम्बन्धिनीषु वृत्तिषु व्याप-
रेषु विषये मोहमहिमा भ्रान्तिबाहुल्यं नात्येति, बहुकालातिक्रमे नापयाति। पशवो हि सर्वदा मूढा एवेत्यथापि मृगस्य
भ्रान्तिर्नापयाति तस्मादेनं न त्यजतीति युक्तमित्यर्थः। मुखात्

स्वर्भानुना प्रसभपानविभीषिकाभि-
र्दुःखाकृतैनमवधूय सुधा सुधांशुं
स्वं निह्नुते सितिमचिह्नममुष्य रागै-
स्ताम्बूलताम्रमवलम्ब्य तवाधरोष्ठं ॥ १३८ ॥

तुब्लोपे पञ्चमी। बहुत्वमीषदसमाप्तौ विभाषासुपो बहु-
जिति (पा०।६।३।७४) बहुच् ॥ १३७ ॥

स्वर्भानुरिति। हे प्रिये सुधा एनं सुधांशुमवधूय त्यक्त्वा-
तवाधरोष्ठमवलम्ब्यामुष्य रक्तस्योष्ठस्य रागै रक्तवर्णैः कृत्वा सि-
तस्य भावः सितिमा धावल्यमेव चिह्नं यस्य तादृशं धवलरूप-
मपि स्वमात्मानं निह्नुते पुनः स्वर्भानुपानभिया तिरो दधाति।
यतः स्वर्भानुना वारंवारं प्रसभपानेन विभीषिकाभिर्भयोत्पा-
दनैः कृत्वा दुःखाकृता प्रातिलोम्याचरणोत्पादितदुःखा। कि-
म्भूतमधरोष्ठं। प्रसिद्धस्य ताम्बूलस्येव ताम्रो वर्णो यस्य ताम्बू-
लेनैव वा ताम्रं रक्तवर्णं। पुना राहुपानभिया त्वदधरमेव स्था-
नान्तरमाश्रित्य रूपान्तरेणात्मानं गोपायतीत्यर्थः। अन्योऽपि
सभयं स्थानं हित्वा स्थानान्तरमाश्रित्य तत्रापि रूपान्तरं
धृत्वा स्वं निह्नुते। सुधया चन्द्रस्य परित्यागात् त्वन्मुखाश्रयणात्
त्वन्मुखं चन्द्रादधिकमिति भावः। ताम्बूलताम्रमित्युक्तरीत्योप-
मोत्प्रेक्षा वा। दुःखाकृता दुःखात् प्रातिलोम्ये इति (पा०५।
४।६४) डाच् ॥ ११८ ॥

हर्य्यक्षीभवतः कुरङ्गमुदरे प्रक्षिप्य यद्वा शशं
जातस्फीततनोरमुष्य हरिता शक्रस्य पत्न्या हरेः।

हर्य्यक्षीति। हे प्रिये मतभेदेन कलङ्करूपं कुरङ्गं यद्वा शशमुदरे मध्ये प्रक्षिप्य जाता स्फीता पूर्णा तनुर्यस्य हरेः सिंहस्य पत्न्या हरिता प्राच्या दिशा सुतस्य तत्रोदितस्य पूर्णस्यात एव हरेः श्रीविषयीभावमाप्तोभवतः। यद्वा सञ्जातपूर्णशरीरस्य मृगं यद्वा शशं कलङ्कं मध्ये निक्षिप्य मध्यस्थितकलङ्कस्य कर्णिकातुल्यत्वात् श्रीविषयीभावमनक्षीभवतोऽमुष्य चन्द्रस्य त्वद्वदनाम्बुजात् सकाशाद्भङ्गः पराजयोऽजनि तदेकाकिनः सर्व्वदा असहायादेकस्मात् पद्मात्, न त्वन्यस्मात् कमलात्, न त्वन्यैः पद्मैरयं पराजीयते प्रत्युतायमेव पद्मानि पराजयतीत्यर्थः। अथ वाऽम्बुजतुल्यात् त्वद्वदनादेव पद्मादथ च पद्मसङ्ख्याकात् त्वद्वदनरूपादम्बुजाद् यदस्य भङ्गो जातस्तदेकाकिनोऽसहायस्य स्यात्, भवेत्, बहुभिरेकः पराजीयत इति युक्तमेवेत्यर्थः। यः सिंहिकायाः सुतो राहुः स पुनरेकोऽन्योऽस्य प्रतिभटः प्रतिमल्लः पराभावुको राहुरेव सं त्वन्य इति। सम्प्रतीति पाठे, अस्य पुनरसकः भटः प्रतिभटः सिंहिकायाः सुतः स्यादेकाकिनोऽस्य त्वम्बुजपद्मः प्रतिद्वन्द्वी न भवति अतुल्यत्वात्, किन्त्वेकाकी राहुरेवास्य प्रतिभटो युक्त इत्यर्थः। किञ्च स्वबन्धुभूताद्वारणस्यान्यः पराजय इति महदस्य कष्टं प्राप्तमित्यर्थः। अथ च हरिद्वर्णया हरेः सिंहस्य पत्न्या सिंहिकया प्रसूतस्य तथा मृगं शशं वा यं कञ्चन पशुं जठरं निक्षिप्य

भङ्गस्त्वद्वदनाम्बुजादजनि यत् पद्मात्तदेकाकिनः

स्यादेकः पुनरस्य स प्रतिभटो यः सिंहिकायाः सुतः॥१३९॥

यत्पूजां नयनद्वयोत्पलमयीं वेधा व्यधात् पद्मभू-

र्वाक्पारीणरुचिः स चेन्मुखमयं पद्मः प्रिये तावकं ।

भञ्जयित्वा स्थितस्यात एव मञ्जातपुष्टशरीरस्यात एव हर्य्यक्षी-भवतः सिंहतां प्राप्नुवतोऽस्य त्वन्मुखाद् यः पराजयोऽजनि स एकाकिनः केवलात् पद्मादम्बुजादेव पराजयः। सिंहस्य गजाङ्कुशो यथा तद्वदेतन्मुखच्छिद्रमित्यर्थः। अथ च पद्मभङ्गाकादेकस्य पराजयः। सिंहोऽप्येको बहुभङ्गैः पराजीयत एवेत्यर्थः। अथ च पद्माच्छरभादष्टपदादेव भङ्गः सिंहस्य केवलमष्टपदादेव भङ्गः,पद्मचन्द्राभ्यां सकाशात् त्वन्मुखमधिकमिति भावः। हर्य्यक्षः केसरी हरीत्यमरः। गजाञ्शरभाः पद्मा इत्यनेकार्थभाजः। प्रथमपक्षे हर्य्यक्षिशब्दार्च्चिः, द्वितीयपक्षे हर्य्यक्षशब्दादेव॥१३९॥

यदिति। हे प्रिये वेधा नयनद्वयमेवोत्पलं तन्मयीं तद्रूपां तदुचितां यस्य पद्मस्य पूजां व्यधात्, व्यरचयत्। यतोऽसौ श्रीविष्णोर्नाभौ वर्त्तमानात् पद्माद्भवतीति पद्मभूः। स हि स्वजनकस्य पद्मस्य पितृभक्त्या नेत्रद्वयेनैव नीलोत्पलयुगेन महतीं पूजामकृतेति भावः। वाक्पारीणा वाचः परतीरे भवा वाचा वर्णयितुमशक्या रुचिर्यस्य सोऽयं पद्मश्चेत् तावकं मुखं स एव भवन्मुखरूपो जात इत्यर्थः। अनन्तरं ब्रह्मणा स्वपितृबुद्ध्या नेत्र-

कः शीतांशुरसौ तदा मखमृगव्याधोत्तमाङ्गस्थल-
स्थास्नुस्वस्तटिनीतटावनिवनीवानीरवासी बकः ॥ १४० ॥

नीलोत्पलाभ्यां कृतपूजनत्वादत्र तवे मुखे नीलोत्पलं दृश्यत इत्यर्थ इति चेत् तर्हि असौ शीतांशुः को नाम, अपि तु न कश्चित्, त्वन्मुखस्य पुरस्तादयं कः, स्मरणार्होऽपि नेत्यर्थः। तर्हि असौ क इति चेत् तत्राह। अयं बकः। किम्भूतः मखो दक्षमख एव मृगस्तस्य व्याधो हरस्तस्योत्तमाङ्गं शिरस्तदेव स्थलं स्थास्नुः स्थितिशीला स्वस्तटिनी गङ्गा तस्यास्तटावन्यां तीरभूम्यां या वनी महदल्पं वा यत् काननं तत्र ये वानीरा वेतसास्तन्मध्यवासी। चन्द्रस्य हरजटाजूटवासीति प्रसिद्धं। वाक्पारीणरुचिरिति ब्रह्मविशेषणं वा। अत्र यदपत्यस्य ब्रह्मणोऽपि सौन्दर्यं वागगोचरमस्ति पितुः पद्मस्य सौन्दर्यं मनसाऽपि गोचरो न भवतीत्यर्थः। त्वन्मुखस्य चन्द्रस्य च महदन्तरं साम्यसम्भावनाऽपि नास्तीति भावः। एतेन चन्द्रादिसुन्दरवृन्दं ब्रह्मणा सृष्टं, भवदीयमुखपद्मं तु ब्रह्मणोऽपि प्रसूत्वात् सर्वाधिकमिति सूचितं। मखमृगेत्यादिना चन्द्रस्यातिदैन्यं सूचितं, त्वन्मुखसाम्यप्राप्त्यर्थं तपश्चरणं सूचितं। अन्योऽपि विशिष्टवस्तुप्राप्तये शिवस्थानयुक्तनदीतीरवानीरवासी तपस्यति। नदीतीरवानीरवासित्वं बकजातिः। वाक्पारीणा, भवार्थे रा-ष्ट्रावारपाराद् घखौ (पा० ४।२।८३ वा० १) इत्यत्रापि विगृहीतादपीति वचनात् खः ॥ १४० ॥

जातं शातक्रतव्यां हरिति विहरतः काकतालीयमस्या-
मश्यामत्वैकमत्यस्थितसकलकलानिर्म्मितेर्निर्म्मलस्य ।
इन्दोरिन्दीवराभं बलविजयिगजग्रामणीगण्डपिण्ड-
द्वन्द्वापादानदानद्रवलवगलनादङ्कमङ्के विशङ्के ॥ १४१ ॥

जातमिति । अहं इन्दोरङ्के बलविजयिन इन्द्रस्य गजग्रामणोर्हस्तिषु मध्ये प्रधानं प्राच्यामेव वर्त्तमानो य ऐरावतस्तस्य गण्डयोः कपोलयोः पिण्डयोः शिरःस्थितकुम्भस्थलयोश्च ये द्वे द्वन्द्वे गण्डद्वन्द्वं पिण्डद्वन्द्वञ्च ते एवापादानं निर्गमनस्थानं येषां ते च ते दानद्रवलवा मदजललेशास्च तेषां गलनात् सम्पर्कात् काकतालीयमाकस्मिकं दैवसिद्धमिन्दीवराभं नीलोत्पलतुल्यं जातमेकं कलङ्कं विशङ्के मन्ये । किम्भूतस्येन्दोः । अस्यामङ्गुलीनिर्दिष्टायां पुरोदृष्टायां शतक्रतोरियं शातक्रतवी तस्यां हरिति दिशि विहरत उद्गच्छतः, तयाऽश्यामत्वे विषये ऐकमत्यं सर्व्वसंवादस्तेन तत्र वा स्थिताभिर्वर्त्तमानाभिः सकलाभिः पञ्चदशभिरपि कलाभिः कृत्वा निर्म्मितिर्यस्य, अश्यामत्वैकमत्येन स्थिता सकलकलानिर्म्मितिर्यस्य तादृशस्य वा । अत एव निर्म्मलस्य प्रत्येकं कलानां धावल्यस्य दृष्टत्वाद्धवलसकलकलानिर्म्मितत्वात् कारणधावल्याद्धवलस्य, अश्यामत्वैकमत्येन स्थिता याः सकलाः कलास्ताभिर्या निर्म्मितिस्तस्या वा हेतोर्धवलस्य पूर्व्वकारणधावल्यात् सकलोऽप्ययं धवल एवाभूत्, पश्चात् तु पूर्व्वदिग्भ्रमणवशात् तत्रैव भ्रमत ऐरावतस्य कपोलकुम्भस्थलगलन्मदजलं दैववशा-

अंशं षोडशमामनन्ति रजनीभर्त्तुः कला वृत्तय-
न्त्येनं पञ्चदशैव ताः प्रतिपदाद्याराकवर्द्धिष्णवः।

मग्नं तेनायं मन्ये कालः प्रतिभातीत्यर्थः। तालतरुतले यदैव काकस्य उपवेशनं तदैव दैवात् काकस्योपरि तालफलपात इति काकतालमिव काकतालीयं समासान्ताच्छः। निर्म्मितः पञ्चे हेतौ पञ्चमी॥ १४१॥

अंशमिति। हे प्रिये लोका रजनीभर्त्तुः षोडशमंशं कलामामनन्ति सत्यं कथयन्ति, तास्तु पोडशांशरूपाः प्रतिपत्, आदिर्यस्मिन् कर्म्मणि राकां पूर्णिमामभिव्याप्य वर्द्धिष्णवः प्रतितिथि एकैकाभिवृद्ध्या वर्द्धमानाः पञ्चदशसङ्ख्याका एव कला एनं चन्द्रं वृत्तयन्ति वर्त्तुलं कुर्व्वन्ति तिथिसङ्ख्यासाम्यात् पूर्णमण्डलं कुर्व्वन्तीत्यर्थः। या पुनः कला षोडशी तिथिवृत् उद्धृता प्रयोजनाभावाच्चन्द्रादुद्धिष्कृता सा षोडशी कला शेषा पञ्चदशकलाभ्योऽवशिष्टा सती, यद्वा षोडशीं तिथिं विना प्रयोजनाभावाद्याऽवशिष्टा, सा निष्प्रयोजनत्वाद्‌धृता चन्द्रादुद्धि-र्निष्काशिता सती हरालङ्कृतिः शिवशिरोभूषणं जाता किं, चन्द्रे प्रयोजनाभावाद्धरालङ्कृतिरभवत् किमित्यर्थः। अहं तस्याश्चोद्धृतायाः षोडश्याः कलायाः सम्बन्धिकं नभोनीलिम्ना सह वर्त्तमानं स्थानस्य पूर्व्वावस्थितः सम्बन्धि बिलं विवरं तत्कलानवस्थितत्या हत्वा शून्यं नीलं नभोभागमेवह चन्द्रमण्डलमध्ये कलङ्कं पश्यामि किं, मध्यवर्त्तिनीलं तत् स्थानं बिलमेवाहं कलङ्कत्वेन शङ्के इत्यर्थः। शेषशब्दस्याभिधेयलिङ्गत्वं पूर्व्वमेव दर्शितं।

या शेषः पुनरुद्धृता तिथिमृते सा किं चराऽलङ्कृति-
स्तस्याःस्थानविलं कलङ्कमिह किं पश्यामि सश्यामिकं॥१४२॥
ज्योत्स्नामादयते चकोरशिशुना द्राघीयसी लोचने
लिप्सुर्मूलमिवोपजीवितुमिनः सन्तर्पणात्मीकृतात्।

पूर्णे राका निशाकर इत्यमरः। कृत्तयन्ति तत्करोतीति (पा० ३।१।२६ वा०१) णिच्। वर्द्धिष्णवः, अलङ्कृञिति (पा० ३।२।१३६) इष्णुच्। तिथिमृते ऋतेन पाशमिति वत्। श्यामिकेति मनोज्ञादेराकृतिगणत्वाद्भावे वुञ् ॥ १४२ ॥

ज्योत्स्नामिति। हे मुग्धे सुन्दरि त्वदक्षां कृत्तत्वादिगुणैः समानमपि नयनश्रियाऽपि कृत्वाऽनधिकं समानमेव, विधित्सुरत एव स्वस्य द्राघीयसी अतिदीर्घे लोचने लिप्सुर्लब्धुमिच्छुर्विधु-श्चकोरशिशुना प्रयोज्येन स्वीयां ज्योत्स्नामादयते भक्षयति। तत्रोत्प्रेक्षते। चन्द्रिकामृतपानकृतसम्यक्तर्पणेनात्मीकृतात् स्ववशीकृतादितश्चकोरबालकात् सकाशान्मूलं स्वचन्द्रिकापानहेतुभूतमेतदीयातिदीर्घनेत्रद्वयमध्येषु उपजीवितुमादातुमिव। यद्वा किञ्चित् स्वचन्द्रिकां पाययित्वा ततो नेत्रद्वयलक्ष्मीप्राप्त्या मूलं चन्द्रिकारूपमूलधनं वर्द्धयितुमिव। अन्योऽप्युत्तमर्णोऽधमर्णस्य किञ्चिद्दत्त्वा तं वशीकृत्योत्तममिष्टं वस्तु ततो गृह्णाति तथा अयं चन्द्र आदृत आदरयुक्तः सन्नङ्के मध्येऽयचोत्सङ्गे रङ्कुञ्च करोति, उत्सङ्गधारणेन लालयतीत्यर्थः। किमर्थमित्याशङ्क्याह। तन्मूलभूतमतिविशालं तदीयनयनयुगलं परिग्रहीतुमिव मंक्षु क-

अङ्के रङ्कुमयं करोति च परिभ्रष्टुं न्मदेवाहत-
स्त्वद्वक्त्रं नयनश्रियाऽप्यनधिकं मुग्धे विधिस्तुर्विधुः ॥ १४३ ॥
लावण्येन तवास्यमेव वक्रुना नत्पात्रमात्रस्पृशा
चन्द्रः प्रोञ्छनलब्धनार्द्धमलिनेनारम्भि शेषेण तु।

र्तुमेव। त्वन्मुखसाम्यनिमित्तरमणीयनेत्रद्वयं सम्पादनीयं। चन्द्र-
श्चकोरहरिणौ वञ्चयतीत्यर्थः। चन्द्रादुत्कृष्टं त्वन्मुखमिति भावः।
परिप्रष्टुमिति पाठे, एतन्नेत्ररामणीयकप्राप्त्युपायं प्रष्टुमिवेत्यर्थः।
शिशुः सुप्रतार्य्य इति सूचयितुं शिशुपदं। आदयते, अदं निगर-
णार्थत्वेऽप्यदेः प्रतिषेधो वक्तव्यः (पा० १।३।८७वा० १) इति वक्तव्या-
न्निगरणादिपरस्मैपदाभावे णिचश्चेति (पा० १।३।७४) तङ्। शि-
शुना आदिखाद्योर्नेति (पा० १।४।५२वा० १) अणौ कर्मत्वाभावः।
द्राघीयसी अतिशायने इयसुनि प्रियस्थिरेति (पा० ६।४।१५७)
द्राघादेशः,स्त्रिपुर्विधिस्तुरिति च नलोकेति षष्ठीनिषेधः॥१४३॥

लावण्येति। हे प्रिये वक्रुना कश्चित् पात्रे सञ्चितेनाखिलेन
लावण्येन कृत्वा तवास्यमेवारम्भि निर्मितं, चन्द्रस्तु पुनः तस्य
लावण्यस्याधारपात्रं स्पृशतीति स्पृक् तेन लावण्यस्यानपात्रमात्र-
लग्नेनात एव प्रोञ्छनेन पात्रनिघर्षणेन कृत्वा लब्धता उपार्जि-
तत्वं तेनार्द्धं कियत् खण्डं मलिनं यस्य तेन किञ्चिन्मलिनेन शे-
षेण भवन्मुखनिर्म्माणावशिष्टेनांशेन कृत्वाऽऽरम्भि निर्म्मितः। अत
एव शेषमण्डलोऽयं शोभत इत्यर्थः। शेषेण तु निर्म्मित इति वा।
विधिना एतत्त्वन्मुखमृगाङ्कलक्षणद्वयं निर्म्माय स्रष्टा अपु पाणी

निर्माय दयमेतदस्य विधिना पाणी खलु क्षालितौ
तल्लेशैरधुनाऽपि नीरनिलयैरम्भोजमारभ्यते ॥ १४४ ॥
लावण्येन तवाखिलेन वदनं तत्पात्रमात्रस्पृशा
चन्द्रः प्रोञ्छनलब्धतार्द्धमलिनेनारम्भि शेषेण यः।

प्रक्षालितौ खलु, लावण्यलेपकृतजलक्षालनाविव, तस्मात् तस्य क्षालनतो मिलितलावण्यलेपस्य लेशैरल्पैरंशैरेव कर्तृभिरधुनाऽपि नीरनिलयैर्जलस्थायिभिः सद्भिरम्भोजमारभ्यते, निर्मीयते, कमलनिर्माणे ब्रह्मणः कोऽपि प्रयासो नेत्यर्थः। कमलाच्चन्द्रोऽधिकस्तस्मादपि त्वन्मुखलावण्यं साकल्येन निर्मितत्वादधिकमिति भावः। अम्भोजं जात्येकवचनं ॥ १४४ ॥

लावण्येति। अखिलेन लावण्येन तव वदनमारम्भि न भवद्वदनकामनीयवर्णना चिन्ताऽपि दूरे तिष्ठतु, अशक्यत्वादित्यर्थः। उक्तरीत्या तत्पात्रमात्रस्पृशा प्रोञ्छनलब्धतार्द्धमलिनेन शेषेण यश्चन्द्रो विधिना निरमायि तस्य लेखाऽपि लावण्यनिर्मितस्य चन्द्रस्य षोडशांशरूपकलामात्रत्वादेव निष्कलङ्कत्वात् सुषमया परमशोभया कृत्वा अहंकृत्या अस्यापि त्वयाऽहमेव रमणीयेति दर्पमवलम्ब्य शम्भोः शिखामणिः शिरोभूषणमभूत्, शिवशिरोऽध्यारोहत्। अन्यदपि सदर्पमुत्तमशिरोऽधिरोहति। अब्जं कुमुदं कर्तृ यद्यस्मात् तस्य चन्द्रस्य पदं प्रतिबिम्बस्थानं जलमस्पृशत्, अतः श्रियः सद्माभूत्, चन्द्रकरस्पर्शादेव हि कुमुदं सश्रीकं भवति पद्मश्च श्रियः पद्माभूत्

यल्लेखाऽपि शिखामणिः सुषुमयाऽहं क्षत्य शम्भोरभू-
दब्जं तस्य पदं यदस्पृशदतः पद्मञ्च सद्म श्रियः ॥ १४५ ॥
सपीतेः सम्प्रीतेरजनि रजनीशः परिषदा
परीतस्ताराणां दिनमणिमणिग्रावमणिकः ।

जलस्य चन्द्रकिरणस्पर्शात् पद्मस्य तत्रोत्पन्नत्वादर्कसामलात् कुमुदमाहचर्याच्च पद्ममपि लक्ष्म्याः स्थानमभूत। यद्वा पद्मश्चातः कुमुदाद्धेतोः श्रियः सद्माभूत्, अब्जत्वजातियोगात् कुमुदाधारजलयोगाच्च कुमुदादेव परम्परया पद्मानां लक्ष्मीगृहत्वमभूदित्यर्थः। यद्वा या लेखा शम्भोः शिखामणिरभूत् तस्य शिखामणिभूतस्य चन्द्रस्य पदं स्थानं शिवमस्तकपूजासमये यस्मात् कुमुदं पद्मञ्चास्पृशत्, अतस्तदुभयं श्रियः सद्माभूत्, चन्द्रस्य बद्धशिरःसम्बन्धादुभयं श्रीगृहमभूदित्यर्थः। यद्वा तस्य शम्भोः पदं चरणं पूजावशाद्यस्मात् कुमुदं पद्मञ्चास्पृशत् तस्मादुभयं श्रीसद्माभूत्। तस्य लावण्यस्थानं विधिहस्तलावण्यलेपशाल्मनजन्म यस्मात कुमुदं पद्मञ्चास्पृशत, यद्वा पद्ममेवास्पृशत्, यतोऽब्जं तस्मात् कुमुदं पद्मञ्च पद्ममेव वा श्रीसद्माभूदिति वा। त्वन्मुखलावण्यलेशपरम्परासंस्पर्शप्राप्तशोभानि चन्द्रादीनीति। त्वन्मुखलावण्यं वाङ्मनसगोचरं न भवतीति भावः। अर्थान्तरस्य स्पष्टत्वात् पूर्वार्द्धस्य त्वर्थान्तरप्रतिपादनार्थमनुवादत्वान्नायं श्लोकः पुनरुक्तः। अहमिति विभक्तिप्रतिरूपकमव्ययं ॥ १४५ ॥

सपीतेरिति। हे प्रिये सम्प्रीतेस्ताराणामन्योऽन्यं संसर्गा

प्रिये पश्योत्प्रेक्षाकविभिरभिधानाय सुशकः
सुधामभ्युद्धर्त्तुं धृतशशकनीलाश्मचषकः ॥ १४६ ॥

प्रीतिः सौहार्दं तस्माद्धेतोर्या सपीतिः सहपानं, सुहृदो हि सह-पानं कुर्व्वन्ति, तस्माद्धेतोः, यद्वा सहपानाद्धेतोर्या सम्यक् प्रीती इत्यभिवृद्धिस्तस्माद्धेतोस्ताराणां परिषदा मण्डलेन परीतः सम-न्ताद् व्याप्य रजनीशो दिनमणिमणिः सूर्य्यकान्तमणि[illegible] ग्रावा शिला तेन घटितोऽतिधवलः स्थूलः पेयद्रव्याधारभूतो मणिकोऽलिञ्जर एवाजनि, सम्भूतः । विधिना तारापरिषदा वा व्यरचि इति पश्य । कीदृशः । सादृश्येन वस्त्वन्तरसम्भाव-नारूपायामुत्प्रेक्षायां विषये कविभिर्विशिष्टसम्भावनाचतुरैः श्रीहर्षादिभिर्महाकविभिस्तारापरिषदैव सुधामभ्युद्धर्त्तुं धृतो यो मध्यस्थितः शशकः कलङ्कः स एव नीलाश्मा नीलमणिस्तेन घटितं चषकं पानपात्रं यस्मिन्नेवम्भूत इवायमिति अभिधा-नाय वर्णयितुं सुशकः सुखेन शक्यः । चन्द्रो धावल्यात् पीयूष-पूर्णः सूर्य्यकान्तमणिक इव, कलङ्कश्च नीलमणिघटितं चषकमिव दृश्यते तत् पश्येत्यर्थः । यथा मणिकोदकांद्युद्धरणाय मणिक-मुखे चषकः स्थाप्यते तथा ताराभिः परस्परं मिलित्वा सुधा-पानं कर्त्तुं परिवेष्टितस्य सुधापूरितस्यास्यापि चन्द्रमणिकस्य मुखे सुधोद्धरणाय शशनामनीलमणिचषको निक्षिप्त इत्युत्प्रे-क्षितुं शक्यत इत्यर्थः । चषकोऽस्त्री पानपात्रमित्यमरः । सपीतिः, वोपसर्जनस्येति (पा० ६।३।८२) वा । सहस्य इति (पा० ६।३।

आस्यं शीतमयूखमण्डलगुणानाकृष्य ते निर्म्मितं
शङ्के सुन्दरि शर्व्वरीपरिवृढस्तेनैष दोषाकरः ।
आदायेन्दुमृगादपीह निहिते पश्यामि सारे दृशौ
त्वद्वक्त्रे सति वा विधौ धृतिमयं दध्यादनन्धः कुतः ॥१४७॥

७८) योगविभागाद्वा समस्य सः । कविभिः खलर्थयोगान्न षष्ठी ।
सूचक इति खल् ॥ १४६ ॥

आस्यमिति । हे सुन्दरि विधिना शीतमयूखस्य मण्डलं बिम्बं तस्य वृत्तत्वाह्लादकत्वादिगुणानाकृष्य गृहीत्वा ते आस्यं यतो निर्म्मितं तेन गुणगणोत्कर्षेण हेतुना शर्व्वर्य्याः परिवृढः प्रभुश्चन्द्रो दोषाणामाकर उत्पत्तिस्थानं न तु दोषा रात्रिस्तत्कारित्वाद्दोषाकर इत्यहं शङ्के । तथा अहं इन्दोर्मृगात् सकाशात् सारे दृशावादाय अतिश्रेष्ठे नेत्रे गृहीत्वा इह भवन्मुखे निहिते स्थापिते इत्यहं शङ्के । तेन कुतो ज्ञानमित्यत आह सुन्दरतरे त्वद्वक्त्रे आगृहके सति अनन्धश्चक्षुष्मानुभयतारतम्यविचारचतुरोऽयं मृगो विधौ चन्द्रे धृतिं स्थितिमथ च समीचीनाधारपरितोषं कुतो वा दध्याद्धारयेदपि तु न कथञ्चित्, तस्मान्नेत्रोद्धरणादन्धत्वेनैव त्वन्मुखरामणीयकादर्शनादन्यत्र गन्तुमशक्तोऽस्य त्वन्मुखं त्यक्त्वाऽत्रैवायं स्थित इत्यर्थः । त्वन्मुखं चन्द्राधिकं । नेत्रे च मृगनेत्राभ्यामधिके इति भावः । सारमिति क्वचित् पाठः ॥ १४७ ॥

शुचिरुचिमुडुगणमगणनमममुमति
कलयसि कृशतनु न गगनतटमनु।
प्रतिनिशशशितलविगलदमृतभृत-
रविरथहयचयखुरविलकुलमिव ॥ १४८ ॥
उपनतमुडुपुष्पजातमास्ते
भवतु जनः परिचारकस्तवायं।

शुचीति। हे कृशतनु त्वं गगनतटं नभःस्थलमनु लक्षीकृत्य शुचिरुचिं श्वेतकान्तिं, तथा बहुलादगणनं सङ्ख्यातुमशक्यममुमङ्गुल्या निर्देश्यं प्रत्यक्षगम्यमुडुगणं प्रतिनिशं रात्रौ शशितलाच्चन्द्राधोभागाद्विगलता स्रवताऽमृतेन भृतं पूर्णं रविरथस्य हयचयस्य खुराणां यानि विलानि न्यासस्थानविवराणि तेषां कुलं वृन्दमिव नातिशयेन कलयसि, अपि तु तदिवातितरां जानीहीत्यर्थः। प्रतिनिशं चन्द्राद्गलता धवलेनामृतेन पूर्णाः सूर्याश्वखुरगर्त्ता इव तारकाः शोभन्त इति भावः। गगनतटं कर्म्मप्रवचनीययोगे द्वितीया। प्रतिनिशं वीप्सायामव्ययीभावः। सर्व्वं लघु ॥ १४८ ॥

उपनतमिति। हे प्रिये रक्तो भौमः शनिः कृष्णो गुरुः पीतः सितः कविरित्यादिज्योतिःशास्त्रादिप्रामाण्यान्नानावर्णाकृतीन्युडूनि नक्षत्राण्येव पुष्पजातमुपनतं सम्पन्नमास्ते। अयं मल्लक्षणो जनः प्रारब्धकामदेवपूजायास्तव परिचारकश्चन्दनाद्युपचारोपनायकोऽथ च सम्भोगकारी भवतु, त्वं तिलैस्तिलकितः सञ्जा-

निम्नतिलकितपर्प्पटाभमिन्दुं
वितर निवेद्यमुपास्व पञ्चबाणं ॥ १४९ ॥
स्वर्भानुप्रतिवारपारणमिलद्दन्तौघयन्त्रोद्भव-
श्वभ्रालीपनयालुदोधिनिसुधासारस्तुषारद्युतिः ।

ततिलकस्तिलैरेव वा तिलकवान् कृतो यः पर्प्पटः शालितण्डु-
लपिष्टरचितस्त्रिपिटस्तिलशष्कुलीसञ्ज्ञ उपदंशविशेषस्तद्वदाभा
यस्य तत्तुल्यं सकलङ्कमध्यत्वादिविशिष्टपर्प्पटसदृशमिन्दुमेव नि-
वेद्य कामाय वितर, एवं पञ्चबाणं कामदेवमुपास्व पूजय। अ-
न्योऽपि देवपूजकः पुष्पादिसामग्र्या देवं पूजयति, कश्चित् परि-
चारकोऽपि तस्य भवति, एवमत्रापि सर्व्वाणि नक्षत्राण्युदितानि,
कामोद्दीपकश्चन्द्रोऽप्युदितः, सुरताकार्य्यकारी निषिद्धः सन्ध्या-
समयोऽतिक्रान्तस्तस्मात् काममुपास्व सुरतेच्छुरस्मीति भावः।
पञ्चबाण इत्यनेन कामस्यातिपीडाकारित्वं सूच्यते। सामान्य-
मित्यभिधानाज्जातशब्दः सामान्यवाची पुष्पमात्रे पर्य्यवस्यति।
तिलकितेति तारकादित्वात् तत्करोतीति वा (पा० ३।१।२१
वा० १) एन्तान्निष्ठा ॥ १४८ ॥

इदानीं काव्यसमाप्तिं चिकीर्षुः श्रीहर्षो नायकमुखेनाशिष-
माशास्ते। स्वर्भानुरिति। हे प्रिये देवः प्रकाशमानस्तुषारद्यु-
तिर्हिमकरोऽथ च हिमकर एव देवो वर्त्तमानो पूजाश्च कुर्व्वतां
नोऽस्मदादीनामावयोर्वा तुष्टये परमानन्दायास्तु। किम्भूतः। स्व-
र्भानो राहोः प्रतिवारं पौनःपुन्येन यत् पारणं चन्द्रस्यैव ग्रसनं

पुष्पेष्वासनतत्प्रियापरिणयानन्दाभिषेकोत्सवे
देवः प्राप्तसहस्रधारकलशश्रीरस्तु नस्तुष्टये ॥ १५० ॥

तेन तत्र वा मिलन् संलग्नो यो दन्तौघस्तद्रूपं यत्सं छिद्रक
साधनं तस्मादुद्भवो यस्याः सा स्वभाली दन्तदंशनकर्तनि परम्परा तया तस्याः सकाशाद्वा पतयालुः पतनशीला दीधितिसुधा किरणामृतं तद्रूपः सारः श्रेष्ठो भागो यस्य दीधितिसुधाया वा। यद्वा दीधितिसुधाया आसारो धारासम्पातो दीधितिसुधारूपो वा आसारो यस्य स अत एव पुष्पेष्वासनस्य पुष्पधनुषस्तत्प्रियाया रतेश्च परिणयानन्दो विवाहरूप आनन्दस्तत्सम्बन्धिन्यभिषेकोत्सवे महाभिषेकार्थं प्राप्ता सहस्रधारस्य सहस्रच्छिद्रगलज्जलधारस्य कलशस्येव श्रीः शोभा येन सः। महोत्सवे हि सहस्रधारेण सुवर्णकलशेन महाभिषेकः क्रियते तथा च राहुदन्तक्षतच्छिद्रपरम्परागलदमृतधारश्चन्द्रो गलज्जलधारसहस्रच्छिद्रसुवर्णकलश इव शोभमानः पूर्वोक्तवर्णनयोक्तविधलक्षतपूजया च सुरतप्रवृत्तयोरावयोरुद्दीपकतया परमानन्दं कुर्यादिति भावः। एतेन तत्समयोचितरतिकामविवाहोत्सवाभिधानेन चन्द्रोऽस्तु नस्तुष्टये इत्यनेन च विलासिना नलेन स्वनिर्वर्त्यद्वितीयपुरुषार्थपयोधिपीयूषरसास्वादनलालसोऽभिव्यज्यते। सुधाधार इत्यपि पाठे दीधितिसुधाया धारा यस्य सुधाया आधार इति वा, आनन्दपदेन तुष्टयेऽस्त्वित्याशिषा च ग्रन्थसमाप्तिं द्योतयति। महाभारतादौ वर्णितस्याप्युत्तरनलच-

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यं।
द्वाविंशो नवसाहसाङ्कचरिते चम्पूकृतोऽयं महा-
काव्ये तस्य कृतौ नलीयचरिते सर्गो निसर्गोज्ज्वलः॥१५१॥
यथा यूनस्तद्वत् परमरमणीयाऽपि रमणी
कुमाराणामन्तःकरणहरणं नैव कुरुते।

रित्रस्य नीरसत्वान्नायकानुदयवर्णने रसभङ्गसद्भावाच्च काव्यस्य च सहृदयहृदयाह्लादनफलत्वाच्चोत्तरचरित्रं श्रीहर्षेण न वर्णितमित्यादि ज्ञातव्यं। न इति पचेऽस्मदोर्द्वयोश्चेति (पा॰१। २।५८) द्वित्वेऽपि बहुवचनं॥१५०॥

श्रीहर्षमिति। पूर्वार्द्धार्थः स्पष्टः। द्वाविंशतः पूरणः सर्गो गतः समाप्तिं प्राप। किम्भूतस्य श्रीहर्षस्य। नवो यः साहसाङ्को नाम राजा तस्य चरिते विषये चम्पूं गद्यपद्यमयीं कथां करो-तीति कृत् तस्य विनिर्मितवतः सोऽपि ग्रन्थो येन कृत इति सूच्यते। नृपसाहसाङ्केति पाठे नृपस्यापि साहसाङ्कस्य तस्य गौडेन्द्रस्य चरिते विषये, चम्पूकृतो भोजराजस्य विक्रमार्कस्य वेति केचित्। द्वाविंश इति पूरणे डटि टिलोपः॥१५१॥

यथेति। यथा परमरमणीयाऽपि रमणी यूनस्तरुणस्य कामि-नोऽन्तःकरणं कुरुते तद्वत् तथा कुमाराणां बालिशानां नीर-सानां नामात्रेण 'परमपुरुषार्थप्राप्तिमभिमन्यमानानामननुभूतकाम-सुखानां चित्तं स्ववशं नैव कुरुते, अपि तु न काऽपि, तथेयं का-

मदुक्तिश्चेदन्तर्मदयति सुधीभूय सुधियः
किमस्या नाम स्यादरसपुरुषानादरभरैः ॥ १५२ ॥
दिशि दिशि गिरिग्रावाणः स्वां वमन्तु सरस्वतीं
तुलयतु मिथस्तामापातस्फुरद्ध्वनिडम्बराम्।

व्यरचनारूपा परमरमणीया मदुक्तिरपि श्रवणमननादिवशात् सुधीभूय, अमृतत्वं प्राप्य सुधियः सकलदर्शनरहस्यवेदिनोऽतिसरसस्य पण्डितस्य चेतश्चेद्यदि मदयति आनन्दयति तर्ह्यस्याः सुधियोऽत्यादृताया मदुक्तेररसानां नीरसानां सर्व्वथैवासंस्पृष्टरसशब्दानामपि चलदुपलप्रायाणामक्षणाद्यपुच्छपशूनां पुरुषाणामनादरभरैस्तत्कृतावज्ञासमूहैः किं नाम स्यात्, अपि तु न किञ्चिदप्यस्यास्तैरपकर्त्तुं शक्यते। सुधीभिरादरे कृते सति नीरसैरकृते वाऽप्यादरे न किञ्चिदित्यर्थः। सुधीभिरादृतत्वात् सकलगुणपूर्णातिसरसेयं मदुक्तिरिति भावः। मदुक्तेः सुधारूपत्वाभावात् चेदानन्तरञ्च सरसत्वप्रतीतेः सुधात्वात्। सुधीभूयेति च्विः। सुधिय इति जात्यभिप्रायेणैकेनापि सुधाया आदरे कृते महद्गौरवं, बहुभिरप्यज्ञैरनादरेषु कृतेष्वपि न किञ्चिद् लाघवमित्यभिप्रायेण वा। यून इति प्रतियोगिन एकवचनान्तत्वाच्चैकवचनं। कवेः स्वग्रन्थमुद्दिश्येयमुक्तिः ॥१५२॥

कविरर्थान्तरोक्त्या स्वीयामुक्तिं वर्णयति। दिशीति। गिरिग्रावाणोऽद्रिपाषाणाः दिशि दिशि स्वां निजां सरस्वतीं नदीं अन्तर्गतजलप्रस्रवणां वमन्तु मुञ्चन्तु, आपातेन समन्तादूर्द्ध्वदे-

स परमपरः क्षीरोदन्वान् यदीयमुदीर्य्यते
मथितुरमृतं खेदच्छेदि प्रमोदनमोदनं ॥ १५३ ॥

शादधःपतनेन स्फुरन् प्रकाशमानो ध्वनिडम्बरः शब्दाडम्बरो यस्याः ताञ्च नदीं मिथस्तुलयतु, अन्यनद्या समीकरोतु जन इत्यर्थः। अथ वाऽऽपाते प्रथमारम्भ एव स्फुरद्ध्वनिडम्बरां स्फुरत्प्रपातघोषां तां जनो मिथस्तुलयतु, उभयथाख्यानेऽपि परिणामे तु स नदी न च तस्याः शब्दाडम्बरश्चिरन्तन इत्यर्थः। स क्षीरोदन्वान् परं केवलमपरो न विद्यते पर उत्कर्षो यस्मादत्युत्कृष्टोऽथ वाऽन्य एव यतो यस्य क्षीरोदस्येदं यदीयममृतमेतादृशमुदीर्य्यते उत्पद्यते। कीदृशं। मथितुर्देवादेः खेदच्छेदि मथनजनितक्लेशापहं। तथा प्रमोदनं नितरामानन्ददायि, तथा मोदनं भक्षमास्वाद्य सिद्धान्नरूपं, अथ चैवम्भूतं परमुत्कृष्टममृतं यदीयमुदीर्य्यते स क्षीरोदन्वानपरः परोऽन्यो नास्ति किन्त्वेक एव। अथ च प्रसिद्धिं सर्व्वदेशेषु गिरिवाणां विषये पाषाणतुल्या जडा अन्ये कवयः स्वीयां वाणीमुद्गिरन्तु, आपातेन प्रतिभामात्रेण स्फुरन् ध्वन्याख्यकाव्यविशेषस्याडम्बरो यस्यां प्रथमारम्भ एव स्फुरन् शब्दाडम्बरोऽनुप्रासो यत्र वा तां वाणीं मिथोऽन्योऽन्यं जनः समीकरोतु तस्य कवेरुद्गिरस्यैवास्य च तस्यैवेत्येव तुलयतु। आपात इति विसर्जनीयान्तपाठे। आपातः प्रतिभासः तां तुलयत्वित्यर्थः। एवंविधं परं काव्यामृतं यदीयमुत्पद्यते स क्षीरसमुद्रतुल्यः श्रीहर्षकविः, अपरो नास्ति किन्त्वेक एव, अन्ये कवयः पर्व्वतपाषाणतुल्याः, अहं

ग्रन्थग्रन्थिरिह क्वचित् क्वचिदपि न्यासि प्रयत्नान्मया
प्राज्ञंमन्यमना हठेन पठितो माऽस्मिन् खलः खेलतु।

क्षीरार्थस्तु क्षीरसमुद्रतुल्य इत्यर्थः। यथा क्षीरसागरो नीरार्थिनोऽपि नीरमात्रस्थाने क्षीरेण तर्पयति लक्ष्मीकौस्तुभामृतादिभिः परमानन्ददायिभिः कृतार्थयति, मदीयकाव्यविचारकस्यैव खेदच्छेदि प्रमोदनवचनामृतमुत्पद्यते नान्यकाव्यविचारकस्येत्यन्ये ग्रावतुल्या क्षीरोदतुल्यस्त्वाहमिति भावः॥१...

इदानीं प्रसादरूपमुख्यगुणाभावादतिदुर्बोधत्वाद ...र्थमिति ये वदन्ति तच्छङ्कामपनुदन् खलदर्पदलनार्थं गुरुसम्प्रदायेन विना दुर्बोधमित्यतिगाम्भीर्यप्रतिपादनार्थञ्च बुद्धिपूर्व्वमेव मयेदं काव्यं तत्र दुर्बोधं व्यरचीत्याह। ग्रन्थेति। आत्मानं प्राज्ञं मन्यते प्राज्ञंमन्यं मनो यस्यैवंविधोऽस्मिन् काव्ये हठेन स्वीयप्रज्ञाबलेन पठितमस्यास्ती पठितीदंकाव्यस्य पाठकः खलो मा खेलतु किमत्रास्ति अश्रुतमेव व्याकर्त्तुं शक्यते इत्यवज्ञापूर्व्वं दर्पाभिव्यक्तिं माकार्षीदित्येवमर्थः। इह काव्ये क्वचित् क्वचिदपि तत्र तत्र स्थले मया प्रयत्नाद् बुद्धिपूर्व्वं ग्रन्थग्रन्थिर्ग्रथ्यमानशब्दार्थकुटिलिकाऽन्यासि विन्यस्ता खलमुखभङ्गार्थं बुद्धिपूर्व्वं मयेदं काव्यं दुर्बोधं व्यरचि न तु प्रसन्नकाव्यकरणाशक्तेरित्यर्थः। क्वचित् क्वचिदपीत्यनेन तत्र प्रसन्नताऽप्यस्तीति न काव्यलक्षणहानिरिति सूच्यते। सज्जनस्य तु ग्रन्थविवेचनोपायमाह। श्रद्धेति। श्रद्धया गुरौ दैवतैकबुद्ध्या राद्धेन पूजितेन

अद्वाराद्वगुरुस्तथोक्ततद्दढग्रन्थिः समासादय
त्वेतत्काव्यरसोर्म्मिमज्जनसुखव्यासज्जनं सज्जनः ॥ १५४ ॥
ताम्बूलद्वयमासनञ्च लभते यः कान्यकुब्जेश्वराद्
यः साक्षात् कुरुते समाधिषु परं ब्रह्म प्रमोदार्णवं।

गुरुणा पूर्व्वमस्मथा अपि ग्रथाः कृता व्याख्यया सुबोधाः कृता। दृढाः स्वरूपतो दुर्बोधा ग्रन्थयोऽस्मै स गुरुसम्प्रदायात्तगतार्थोऽत एव दर्पराहित्यात् सज्जनः साधुरेतत्काव्यस्य रसोर्म्मिरमृतलहरी तस्यां मज्जनं तज्जनितसुखेषु विशेषेण आसमन्ताद्भावेन च मज्जनमवस्थानं समासादयतु प्राप्नोतु, गुरुपरम्परयाऽपि विना एकस्यापि पद्यस्यार्थो बोद्धुं न शक्यते तस्माद् गुरुपरम्परया एवाध्येयमिदं काव्यमित्यर्थः। यश्चेदं गुरुपरम्परया अधीते स सततं सुखी भवति इति महाकविस्तस्याशिषं ददाति। अस्मिन् पठितोत्यस्य च विषयस्येति कर्म्मणि सप्तमी। आराद्धेति राधेरनुदात्तत्वादिडभावः ॥ १५४ ॥

इदानीं पण्डितानन्दजननद्वारा स्वकृतेरभ्युदयमाशास्ते। ताम्बूलेति। यः कान्यकुब्जेश्वरात् सकाशात् सकलपण्डिताधिकव्यञ्जनं ताम्बूलद्वयं विद्वद्योग्यमासनञ्च लभते। न केवलं राजपूज्य एव किन्तु यः समाधिषु अष्टाङ्गयोगेषु ध्यानेषु वा विषये प्रमोदार्णवं परमानन्दस्वरूपं परं वागाद्यगोचरं ब्रह्म साक्षात्कुरुते। न परं पूर्व्वोक्तगुणविशिष्टो ब्रह्म विदेव किन्तु यदीयं काव्यं मधुवर्षि, अतिसरसत्वादमृतवर्षि। न परं पूर्व्वोक्तगुणविशि-

यत्काव्यं मधुवर्षि धर्षितपरास्तर्केषु यस्योक्तयः
श्रीश्रीहर्षकवेः कृतिः कृतिमुदे तस्याभ्युदीयादियं ॥ १५[illegible]

ष्टोऽतिमधुरो महाकविरेव, किन्तु तर्कशास्त्रेष्वपि यस्योक्तयः धर्षिताः पराभूताः परे प्रतिवादिनो याभिस्तादृश्यः। तस्य विद्वच्चकचूडामणेः श्रीहर्षकवेरियं काव्यरचनारूपा कृतिः सुकृतिनां सुधियां मुदे आनन्दायाभ्युदीयात्, कृतिनामानन्दं कुर्व्वती सती आकल्पमतिवृद्धिं प्राप्नुयादित्याशीः। सर्व्वत्र यच्छब्दनिर्व्वाहो गुण एव। अभ्युदीयादिति इण् गतावित्यस्य रूपं ॥ १५५ ॥

सन्तः सन्तु परप्रयोजनकृतः कल्पद्रुमन्तः सदा
यस्मिन्नेव पथि प्रवर्त्तनपराः सत्कीर्त्तयस्तापरे।
अन्ये निःस्पृहणाश्रितश्रुतिपथा दीव्यन्तु भव्याशयाः
काकन्तः कलहप्रियाः खलजना नश्यन्तु जीवन्तु वा ॥

वासनामस्य रामस्य किङ्करस्य जगत्पतेः।
न चेत्पूरय कल्पेश कल्पते तव किङ्करः ॥

इति श्रीवेदरकरोपनामकश्रीमन्नरसिंहपण्डितात्मजनारायणकृते उत्तरनैषधीयप्रकाशे द्वाविंशतितमः सर्गः ॥ २२ ॥

समाप्तोऽयं ग्रन्थः ॥

---